ननु वेदार्थविबोधे विध्यभावाद् बोधसाधनं व्याख्यानं व्यर्थमिति चेत्; न, अध्ययनविधेर्बोधपर्यवसायित्वात् ।[1] एतच्च भट्टगुरुमतानुसारिभिर्बहुधा प्रपञ्चितम् । आम्नायते च—

(i) 'यदधीतमविज्ञातं[2] निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥'

(ii) 'स्थाणुरयं भारहारः किलाभूत् अधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥'[3]

(iii) 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'[4] इति ।

एवं तर्हि ज्ञानस्य पृथग् विधानादध्ययनं पाठमात्रमिति चेत्, अस्तु नाम, वर्णयन्त्येवमेव शाङ्करदर्शनानुसारिणः ।

क्रतुविधिव्यतिरेकेणानुष्ठानान्यथानुपपत्त्या वेदार्थज्ञानस्य प्रापितत्वान्नैतद् विधेयमिति चेत्, तर्हि तद्विधिबलाद् वेदनमात्रेण स्वतन्त्रं किञ्चिदपूर्वमस्तु । श्रूयते ह्यनुष्ठानज्ञानयोः स्वतन्त्रं पृथक् फलम्—

'सर्वं पाप्मानं तरति, तरति ब्रह्महत्यां, योऽश्वमेधेन यजते य उ चैनमेवं वेद' ।[5]
इति ।

अल्पप्रयाससाध्येन वेदनेन तत्सिद्धौ बह्वायाससाध्यमनुष्ठानं व्यर्थं स्यादिति चेत्, न; तरणीयाया ब्रह्महत्याया मानसिक-कायिकत्वादिभेदेन तारतम्योपपत्तेः । मनसा सङ्कल्पिता, वाचाऽभ्यनुज्ञाता परहस्तेन कारिता स्वयं कृता, पुनः पुनः कृता चेत्येवं तारतम्येनावस्थिता ब्रह्महत्याऽनेकविधा । अतस्तरणमप्यनेकविधम्, यथा स्वर्गो बहुविधस्तद्वत् । 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत',

---

१. अध्ययनविधिश्चैषः—

'यस्तित्याज सखिविदं न तस्य वाच्यपि भागोऽस्ति ।
यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम् ॥ इति ।
( ऋ० सं० १०.७१.६ ) ।

'अग्निं वै जातं' 'सुकृतस्य पन्थामिति' तस्मात् 'स्वाध्यायोऽध्येतव्य' इति च तै० आ० २.१५ ।

२. मुद्रितसंहिताभाष्यभूमिकायां निरुक्ते च ( १.६.१ ) 'यद्गृहीत' एष एव पाठः । पातञ्जलमहाभाष्यस्य पस्पशाह्निके तु 'यदधीत' इति ।

३. निरु० १.६ । 'वचनद्वयं शाखान्तरगतम्' इति ऋ० सं० सा० भा० भूमिकायाम् ।

४. पा० महा० पस्पशाह्निके चोद्धृतमिदं वचनम् ।

५. तै० सं० ५.३.१२.२ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'ज्योतिष्टोमेन स्वर्गकामो यजेत',[1] इत्यादावुच्चावचकर्मणामेकविधफलासम्भवात् स्वर्गो बहुधोऽभ्युपगन्तव्यः। तथा ब्रह्महत्यादिपापनिवृत्तेरपि बहुविधत्वात् वेदनेनापि काचित् ब्रह्महत्या निवर्तत इति योग्यतानुसारेण कल्पताम्। किञ्च तत्तद्विधिसमीपे 'य एवं वेद'—इति वचनानि वेदनफलं[2] ब्रुवते। तान्यर्थवाद रूपाणीति चेत्, अस्तु नाम। सहामह एवैतमपराधं तेषां वचनानां विधेयार्थप्रशंसापरत्वात्। तर्हि 'यत्परः शब्दः स शब्दार्थः', इति न्यायेन स्वार्थे प्रामाण्यं नास्तीति चेत्, न। महातात्पर्यस्य विधेय-विषयत्वेऽप्यवान्तरतात्पर्यस्य स्वार्थविषयतानिवारणात्। 'ग्रावाणः प्लवन्ते' इत्यर्थवा-दस्यापि स्वार्थे प्रामाण्यं प्रसज्येतेति चेत्, न प्रमाणान्तरबाधितत्वात्। 'द्विः संवत्सरस्य सस्यं पच्यते'[3] इत्याद्यर्थवादस्य तु बाधाभावेऽप्यनुवादत्वान्न स्वार्थे प्रामाण्यम्। वेदनफलवचनानि तु नानुवादकानि नापि बाध्यानि। तस्मादर्थवादत्वेऽप्यस्तेषां स्वार्थे प्रामाण्यम्। अन्यथा मन्त्रार्थवादादिभ्यो देवादीनां विग्रहादिमत्त्वं न सिध्येत्।

अत एवोक्तम्—

विरोधे गुणवादः स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥[4] इति।

किं बहुना। विद्यत एवावश्यं वेदनमात्रादपूर्वम्। अतो वेदनाय वेदो व्याख्यायेते।

तस्य च वेदस्य भागद्वयं कल्पसूत्रकारैरुदाहृतम्—'मन्त्रब्राह्मणयोर्वेदनामधेयम्'[5]—इति। तत्र मन्त्र विषया विचाराः[6] संहिताव्याख्याने द्रष्टव्याः, ब्राह्मणलक्षणं तु द्वितीयाध्यायस्य प्रथमपादे विचारितम्—

'नाऽस्त्येतद्ब्राह्मणेत्यत्र लक्षणं विद्यतेऽथवा।
नाऽस्तीयन्तो वेदभागा इति क्लृप्तेरभावतः॥
मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः।
अन्यद् ब्राह्मणमित्येतद् भवेद् ब्राह्मणलक्षणम्॥'[7] इति।

चातुर्मास्येष्विदमाम्नायते—'एतद् ब्राह्मणान्येव पञ्च हवींषि'[8]—इति। तत्र ब्राह्मणस्य लक्षणं नास्ति, कुतः? वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वन्यभागेषु च वाच्यलक्षणस्याव्याप्त्यतिव्याप्त्योः शोधयितुमशक्यत्वादिति चेत्, न; भागद्वयानङ्गी-कारेण मन्त्रव्यतिरिक्तो भागो ब्राह्मणमिति लक्षणस्य निर्दोषत्वात्।

---

१. द्र० तै० ब्रा० २.१। २. 'वेदनादेव फलम्' इति वा पाठः। ३. तै० सं० ५.१.७.३
४. मीमांसार्थसंग्रहे चोद्धृतमिदं वचनं व्याख्यातं च सोदाहरणम्।
५. आप० य० परि० सू० ३४। ६. मन्त्रविचाराः इति वा पाठः।
७. जै० न्या० वि० २. १. ८. २४, २५। ८. तै० ब्रा० १.६.४.३; ७.१.१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ननु ब्रह्मयज्ञप्रकरणे मन्त्रब्राह्मणव्यतिरिक्ता इतिहासादयो भागा आम्नायन्ते,—'यद् ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीः।'[१] इति ? मैवम्; विप्रपरिव्राजकन्यायेन ब्राह्मणाद्यवान्तरभेदानामेवेतिहासादीनां पृथगभिधानात्। 'देवासुराः संयत्ता आसन्'[२] इत्यादय इतिहासाः। 'इदं वा अग्ने नैव किञ्चनासीन्न द्यौरासीत्'[३] इत्यादिकं जगतः प्रागनवस्थानमुपक्रम्य सर्गप्रतिपादकं वाक्यजातं पुराणम्। कल्पस्तु आरुणकेतुकचयनप्रकरणे समाम्नायते—'इति मन्त्राः कल्पोऽत ऊर्ध्वं यदि बलिं हरेत्'[४] इति। अग्निचयने—'यमगाथाभिः परिगायति'[५] इति विहिता मन्त्रविशेषा गाथाः। मनुष्यवृत्तान्तप्रतिपादिका ऋचो नाराशंस्यः।[६] तस्मात् मन्त्र-ब्राह्मणव्यतिरिक्तवेदभागाभावान्मन्त्रव्यतिरिक्तं ब्राह्मणमित्येतल्लक्षणं सुस्थितम्॥

तस्य लक्षणस्य 'अग्निर्वै देवानामवमः'[७] इत्यादिग्रन्थे विद्यमानत्वाद् इदं ब्राह्मणम्। तच्चेश्वरानुग्रहाद् इतरायाः पुत्रेण लब्धत्वाद् ऐतरेयकमित्युच्यते। महर्षीणां तत्तद्वेदभागलाभः स्मर्यते,—

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा॥'[८]—इति

प्रकृतस्य तु ब्राह्मणस्य ऐतरेयकत्वे सम्प्रदायविद एतामाख्यायिकामाचक्षते—'कस्य चित् खलु महर्षेर्बह्व्यः पत्नयो विद्यन्ते स्म। तासां मध्ये कस्याश्चिदितरेति नामधेयम्। तस्या इतरायाः पुत्रो महिदासाख्यः कुमारः। एतच्चारण्यकाण्डे समाम्नायते—'एतद्ध स्म वै तद्विद्वान् महिदास ऐतरेयः'[९]—इति तदीयस्य तु पितुर्भार्यान्तरपुत्रेष्वेव स्नेहातिशयः; न तु महिदासे। ततः कस्याञ्चिद् यज्ञसभायां स महिदासमवज्ञाय यान् पुत्रान् स्वोत्सङ्गे स्थापयामास। तदानीं खिन्न-वदनं महिदासमवगत्येतराख्या तन्माता 'स्वकीयकुलदेवतां भूमिमनुसस्मार। सा च भूमिर्देवता दिव्यमूर्तिधरा सती यज्ञसभायां समागत्य महिदासाय दिव्यं सिंहासनं दत्त्वा तत्रैनमुपवेश्य सर्वेष्वपि कुमारेषु पाण्डित्याधिक्यमवगमयैतद्ब्राह्मणप्रतिभासनरूपं वरं ददौ। तदनुग्रहात् तस्य महिदासस्य मनसा 'अग्निर्वै देवानामवमः'[१०] इत्यादिकं 'स्तृणुते'[११]—इत्यन्तं चत्वारिंशदध्यायोपेतं ब्राह्मणं प्रादुरभूत्। तत ऊर्ध्वम्—'अथ

---

१. तै० आ० २.९। २. तै० सं० १.५.१.१। ३. तै० सं० २.२.९.१।
४. तै० आ०१.२६.१। ५. तै० सं० ५.१.८.२। ६. ऐ० आ० २.९.२ भाष्ये तूदाहृतम्—'होता यक्षन्नराशंसम् (वा० सं० २१. ३१) इति।
७. ऐ० ब्रा० १.१.१। ८. महाभा० १२. २१०. १९।
९. ऐ० आ० २.१.८.२। १०. ऐ० ब्रा० १.१.१। ११. ऐ० ब्रा० ८.५.५।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

महाव्रतम्'[1] इत्यादिकम्—'आचार्याः'[2] इत्यन्तमारण्यकत्वरूपं च ब्राह्मणमाविरभूत्'[3]—इति ।

तस्यैतरेयस्य प्रादुर्भूते चत्वारिंशदध्यायोपेते ब्राह्मणे चतुःसंस्थो ज्योतिष्टोमः प्रथमं विधीयते ।[4] यावत् । ततो गवामयनम्[5] तत आदित्यानामयनम्[6] ततोऽङ्गिरसामयनम् ।[7] ततो द्वादशाहः[8] ततोऽन्यत्सर्वम् ।[9] प्रासङ्गिकमिति द्रष्टव्यम् । गोष्टोमायुष्टोमादिषु सोमयागेषु ज्योतिष्टोमस्य[10] प्राथम्यमुक्तम्[11]—'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः'—इति श्रुतेः ।[12] तस्य ज्योतिष्टोमस्य सप्तसंस्थोपेतस्य[13] अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रश्चेत्येताश्चतस्रः संस्थाः

---

१. ऐ० आ० १.१.१.१ । २. ऐ० आ० ३. २. ६. ९ ।

३. अहो चित्रमेतत् ? महानाम्न्याख्यमन्त्रात्मकस्य चतुर्थारण्यकस्यैतरेयत्वेन कथं न ग्रहणं कृतमिति ? तद्भाष्यशेषे तूक्तमिदम्—तदिदं नवसंख्यानामृचां पुरीषपदानाञ्च प्रतिपादकं ग्रन्थजातं यद्यपि कर्मकाण्डे पठितुं युक्तं तथाप्यरण्ये एवाध्येतव्यमित्यभिप्रेत्य चतुर्थारण्यकत्वेनात्र पठितम्'—इति ( ऐ० आ० ४.१.१ पृ० २७४) ।

४. ऐ० ब्रा० अ० १-१७ ख० ५ यावत् । तत्रापि प्रथमाध्याये दीक्षणीयेष्टिः, द्वितीये प्रायणीयेष्टिः उदयनेष्टिश्च, तृतीये आतिथ्येष्ट्यादयः, चतुर्थेऽभिष्टवादयः, पञ्चमे सोमक्रयाद्या इत्येवमुत्तरत्र बोध्यम् ।

५. अ० १७, ख० ६, अ० १८ ख० ३ । ६. अ० १८ ख० ३–८ ।

७. अ० १८ ख० ३–८ । गवामयनमादित्यानामयनमङ्गिरसामयनं चैते संवत्सरसत्रविशेषाः । ८. अ० १९–२४ ।

९. अ० २५–४० । अग्निहोत्रादिकम्, पञ्चङ्गविभागादिकम्, राजयज्ञे स्तोत्रशास्त्रयोर्विशेषादिकञ्चेति यावत् ।

१०. "अथ यदेनमूर्ध्वं सन्तं ज्योतिर्भूतमस्तुवंस्तस्मात् ज्योतिः-स्तोमं सन्तं ज्योतिष्टोमित्याचक्षते"—इति ऐ० ब्रा० ३.४.५ । ज्योतिष्टोमशब्देन सोमयागोऽभिधीयते ।

११. ज्योतिष्टोमं प्रथममुपयन्त्यस्मिन्नेव तेन लोके प्रतितिष्ठन्ति गोष्टोमं द्वितीयमुपयन्त्यन्तरिक्ष एव तेन प्रतितिष्ठन्त्यायुष्टोमं तृतीयमुपयन्त्यमुष्मिन्नेव तेन लोके प्रतितिष्ठन्ति"—इति तै० सं० ७.४.११.१ । ज्योतिष्टोमपद्धतिस्तु का० श्रौ० सू० ७-११ अध्यायेषु द्रष्टव्या ।

१२. एष वाव प्रथमो यज्ञानां य एतेनानिष्ट्वाथान्येन यजेत गर्त्तपत्यमेव तज्जीयते वा प्र वा मीयते' इति ता०ब्रा० १६.१ । 'एष प्रथमः सोमः । षडुत्तरे'—इति का० श्रौ० सू० १०.९.२५.२७ ।

१३. अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति संस्थाः'—इति आश्व० श्रौ० ६.११.१ । सर्वे सोमयागाः संस्थया सप्तविधा एवेत्यर्थः'—इति च तत्र तट्टीकोपसंहारः । तदेवं सोमसम्पाद्य एक एव ज्योतिष्टोमः अग्निष्टोमाद्याख्यः सप्तविधः । तद्यथा—अग्निष्टोमसाम्ना यज्ञायज्ञीयाख्येन यज्ञसमाप्तिर्यत्र सोऽयमग्निष्टोमः; तत्रैवाग्निष्टोमे राजन्यस्य षोडशिनं गृह्णीयादिति आग्निमारुतादूर्ध्वं षोडशिग्रहस्य स्तुतशस्त्रे यदा भवतस्तदा सोऽत्यग्निष्टोम इत्युच्यते । एवमुक्थ्यादयश्च ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अत्रानुक्रमेण वक्ष्यन्ते ।[1] तस्मिन्नपि चतुष्टये अग्निष्टोमः प्रकृतिः;[2] कृत्स्नस्यानुष्ठेयस्य तस्मिन्नग्निष्टोमे प्रत्यक्षश्रुत्यैवोपदिष्टत्वात् । 'प्रकर्षेण क्रियते साकल्येनानुष्ठेयमुपदिश्यते यस्यां सा प्रकृतिः'—इति हि तच्छब्दव्युत्पत्तिः । उक्थ्यादयस्तु विकृतयः; विशेषस्यैव तत्र प्रत्यक्षोपदेशेन सम्पादितत्वात् । अवशिष्टं तु सर्वमनुष्ठेयं 'प्रकृतिवद् विकृतिः कर्त्तव्या'—इति न्यायेनैव सम्पाद्यते ।[3] अत एवोपजीव्यत्वादग्निष्टोम एवादौ वक्तव्यः ॥

यद्यपि तस्याग्निष्टोमस्य प्रक्रमेऽवश्यमृत्विग्वरणं वक्तव्यम्; 'सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयानृत्विजो वृणीत,—इत्यापस्तम्बेनाभिधानात्[4] तथापि ऋग्वेदस्य होतृवक्तव्यप्रतिपादकत्वात् ।[5] ऋत्विग्वरणस्य तु हौत्रत्वाभावात् तदुपेक्ष्येहेष्टिरादौ विधीयते ।[6]

ऋग्वेदस्य हौत्रत्वं समाख्याबलात् तृतीयाध्यायस्य तृतीयपादे विचारितम्—

'वेदत्रयोक्तधर्माणामृत्विग्भिः सङ्गतस्त्रिभिः ।
अनियत्या नियत्या वाऽनियतिर्वाऽनिरूपणात् ॥
हौत्रत्वादिसमाख्यानं नियतेर्गमकं स्वतः ।
निर्बाधं चान्यतश्च तेनात्र विनियोजकम् ॥'[7]

---

१. तत्राग्निष्टोमः प्रथमाध्यायादि पञ्चदशाध्यायीयचतुर्थखण्डान्तं यावदुक्तः, पञ्चदशाध्यायीयान्तखण्डयोरुक्थ्यः, षोडशाध्यायीयादिचतुःखण्डेषु षोडशी, ततः पञ्चमषष्ठखण्डयोः सप्तदशाध्यायीयाद्यखण्डपञ्चके चातिरात्र इति विवेकः । 'एतद्वा अग्निष्टोमं प्रथममुपयन्त्यथोक्थ्यमथ षोडशिनमथातिरात्रमनुपूर्वम्''—इति तै० सं० ७.४.१०.१ ।

२. "अग्निष्टोम एकाहानां प्रकृतिः"—इति च आप० य० परि० सू० १४१ ।

३. न प्रकृतावूहो विद्यते । विकृतौ यथार्थमूहः"—इति आप० य० परि० सू० १३३, १३४ । अति देशोहबाधाभ्युच्चयरूपः प्रकृतिविकृतिविचारस्तु जैमिनिदर्शने सप्तमाष्टमनवमदशमाध्यायेषु विशेषतः कृतो द्रष्टव्यः ।

४. आप० श्रौ० १०.१.१ ।

५. तथाहि—"ऋग्वेदेनैव हौत्रमकुर्वत यजुर्वेदेनाध्वर्यवं सामवेदेनोद्गीथम्"—इति शत० ब्रा० ११.५.८.४ । "तदाहुर्महावदा३ः यदृचैव हौत्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवति । अथ केन ब्रह्मत्वं क्रियत इति ? त्रय्या विद्ययेति ब्रूयात्"—इति चेहोपरिष्टात् ५.५.८ । एवमापस्तम्बोऽप्याह—"ऋग्वेदेन होता करोति, सामवेदेनोद्गाता, यजुर्वेदेनाध्वर्युः, सर्वैर्ब्रह्मा, वचनाद् विप्रतिषेधाद् वान्यः कुर्यात्"—इति आप० य० परि० सू० १९-२३ ।

६. इष्टिः=दीक्षणीयेष्टिः । दीक्षणीयार्थस्त्वग्रे ( ऐ० ब्रा० १.४.४ ) द्रष्टव्यः ।

७. जै० न्या० वि० ३.३.६.१३ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

याज्यापुरोनुवाक्यादयो धर्मा ऋग्वेदे प्रोक्ताः, दोहननिर्वापादयो यजुर्वेदे, आज्यस्तोत्रपृष्ठस्तोत्रादयः सामवेदे, तत्रस्थैवैते धर्मा इति नियामकस्यदुर्निरूपत्वाद् येन केनाप्यृत्विजा यः कोऽपि धर्म इच्छया सङ्गच्छत इति चेत्, मैवम्; हौत्रमाध्वर्यवमौद्गात्रमिति समाख्यानेन नियतिर्बोध्यते; न च समाख्यानस्य बाधकं किञ्चित् पश्यामः। तस्मादबोधकत्वबाधितत्वयोरप्रामाण्यकारणयोरभावाच्छ्रुतिलिङ्गादिपञ्चकवत् प्रमाणेन[1] समाख्यानेन धर्मा व्यवस्थाप्यन्ते।

नन्विष्टेरप्यध्वर्युकर्तृकत्वाद्यजुर्वेदे कर्तव्यता; न त्वत्रेति चेत्, सत्यम्। तथापीष्टिगतयोर्याज्यानुवाक्ययोर्हौत्रत्वेनात्र वक्तव्यत्वादिष्टेरनुक्तौ याज्यानुवाक्ये कुत्रत्ये इति विशेषसम्बन्धस्य ज्ञातुमशक्यत्वात् तदवबोधाय प्रथममिष्टिर्विधातव्या॥

॥ इति सायणकृता भाष्य-भूमिका ॥

---

१. तथा च जैमिनिदर्शनसूत्रम्—"श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवायेपारदौर्बल्यमर्थविप्रकर्षात्"—इति ३.३.१४।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# ऐतरेयब्राह्मणम्

## प्रथमपञ्चिकायाः प्रथमाध्यायस्य

### प्रथमः खण्डः

अतस्तामिष्टिं विधातुं तद्देवतारूपमग्निं विष्णुं चाऽऽदौ प्रशंसति—

**ॐ अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः ॥**

योऽयमग्निरस्ति, सोऽयं देवतामध्ये अवमः प्रथमो द्रष्टव्यः । यस्तु 'विष्णुः' सोऽयं 'परमः' उत्तमः । वैशब्द उक्तार्थे मन्त्रप्रसिद्धिद्योतनार्थः । 'अग्निर्मुखं प्रथमो देवतानां संगतानामुत्तमो विष्णुरासीत्' इति हि मन्त्र आम्नायते ।[1] यद्वा वैशब्द उपपत्तिप्रसिद्ध्यर्थः । उपपत्तिश्चैवं योजनीया । यद्यपि देवशब्दः साधारणत्वात् सर्वदेवतावाची तथाऽप्यत्र प्रकरणबलादग्निष्टोमाङ्गेषु शस्त्रेषु प्रतीयमानाः प्रधानदेवता विवक्ष्यन्ते । शस्त्राणि च द्वादश ।[2] तेष्वाज्यशस्त्रं प्रथमम्, तस्मिंश्च 'भूरग्निर्ज्योतिः' इत्यग्निराम्नातः ।[3] आग्निमारुतं शस्त्रमन्तिमम्, तस्मिन् 'विष्णोर्नु कम्' इति विष्णुराम्नातः ।[4] एवमग्निष्टोमसंस्थायां शस्त्रपाठापेक्षमग्नेः प्राथम्यं विष्णोरुत्तमत्वं च । यद्वा, सर्वासु संस्थासूक्तन्यायेनाग्नेः प्राथम्यं विष्णोरुत्तमत्वम्, अन्तिमसंस्थायामाप्तोर्यामाख्यायां त्रयस्त्रिंशत् स्तोत्रशस्त्रोपेतायामन्तिमं स्तोत्रं शस्त्रं च वैष्णवमिति तदपेक्षया द्रष्टव्यम् । यद्वा, प्रथमायां दीक्षणीयेष्टावग्निरिज्यते । अन्तिमायामुदवसानीयेष्टौ वैष्णवी पूर्णाहुतिर्वाजसनेयिभिराम्नाता । सर्वथाऽपि स्तोतव्यान् यष्टव्यांश्च देवानपेक्ष्याग्नेः प्राथम्यं विष्णोरुत्तमत्वं च युक्तम् । तदन्तरेण तयोः प्रथमोत्तमयोरग्नाविष्ण्वोर्मध्ये तत्तच्छस्त्रप्रतिपाद्याः 'अन्याः' इन्द्रवाय्वादयः 'सर्वाः' प्रधानदेवता वर्तन्ते । तस्मात् सर्वदेवतानामुभयतो रक्षकवदवस्थितावग्नाविष्णू प्रशस्तावित्यर्थः ।

---

१. इयमेवर्क् आग्नावैष्णवस्य हविषो याज्या इति वक्ष्यति [४ खं०] ।

२. तत्र आज्यशस्त्रं २. ५. ५-९, प्रउगशस्त्रं ३. १. १-४, मरुत्वतीयं शस्त्रं ३. २. ४-१०, निष्केवल्यं शस्त्रं ११-१३, आग्निमारुतं शस्त्रं ३. ३. ९-१४ । एवमच्छावाकशस्त्रादीन्यपि ।

३. 'आग्नेयं होताज्यं शंसति'—इत्यादि २. ५. ५ ।

४. 'विष्णोर्नु कं वीर्याणि प्रवोचम् [ऋ० १०. १५४. १] इति वैष्णवीं शंसति' इति ३. ३. १४ । 'आग्निमारुते शस्त्रे वैश्वानरीयेण सूक्तेन प्रतिपद्यते'—इति नि० ७. ६. ४ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नमामि विष्णुं विधियज्ञरूपं वाणीं च सत्रेषु यजुःस्वरूपाम् ।
त्रैविद्यवृद्धान् विदुषो गुरूंश्च पद्माभिधं मिश्रपदद्वयं च ॥ १ ॥

महिदासैतरेयस्य ब्राह्मणस्य च साम्प्रतम् ।
आलोक्य तस्य कर्मत्वं विचार्य च पुनः पुनः ॥ २ ॥

हिन्दीटीकामिमां रम्यां 'सरला'न्वर्थनामिकाम् ।
करोति स्पष्टबोधार्थं मालवीयः सुधाकरः ॥ ३ ॥

[सोमयागनिरूपण] —

देवताओं के मध्य अग्नि का सबसे आदि का और विष्णु का सबसे अन्त का स्थान है। उन दोनों [अग्नि और विष्णु] के मध्य अन्य [इन्द्र, वायु आदि] सभी प्रधान देवताओं का स्थान है।

सौमिकेषु यष्टव्यासु स्तोतव्यासु च सर्वासु देवतास्वग्नाविष्णू प्रशस्य तद्देवताकामिष्टिं विधत्ते—

आग्नावैष्णवं पुरोळाशं निर्वपन्ति दीक्षणीयमेकादशकपालम् ॥

अग्निश्च विष्णुश्चाग्नाविष्णू तावुभौ परस्परव्यासक्तौ यस्य पुरोडाशस्यैका देवता सोऽयमाग्नावैष्णवः।[1] यथोक्त देवतां प्रति हविष्ट्वेन प्रदेयद्रव्यरूपः पक्वः पिष्टपिण्डः पुरोडाश इत्युच्यते।[2] डकारस्यात्र ळकारः, एतच्छाखाध्ययनसंप्रदायेन प्रापितः।[3] शकटावस्थापितव्रीहिसङ्घान्निष्कृष्य मुष्टिचतुष्टयपरिमितानां व्रीहीणां शूर्पे प्रक्षेपो निर्वापः। तत्पूर्वको यागोऽत्र निर्वापेणोपलक्ष्यते। आग्नावैष्णवं पुरोडाशमिति सामानाधिकरण्येनावगतस्य द्रव्यदेवतासम्बन्धस्य यागमन्तरेणानुपपन्नत्वात्। सति तु यागे सम्बन्ध उपपद्यते।

---

१. 'सास्य देवता'—इति पा० सू० ४. २. २४।

२. पुरोडाशपाकादिप्रकारस्तु आपस्तम्बीयश्रौतसूत्रे [ १. २२–२५ ] आद्यप्रश्नीयसप्तमाष्टमपटलयोः कात्यायनीयश्रौतसूत्रे २. ४. ५ च द्रष्टव्यः। "अतुङ्गमनूपाकृतिं कर्मस्येव प्रतिकृतिमश्वसफमात्रं करोति, यावन्तं वा मन्यते आप० श्रौ० १. २५. ४–५]" इति सूत्राभ्यां पुरोडाशस्वरूपं चाधिगम्यम्। 'पुरोडाशमेव कूर्मं भूत्वा सर्पन्तम्'—इति च शत० ब्रा० १. ६. २. ३। तैत्तिरीयब्राह्मणीये पौरोडाशिके काण्डे [३. २. ४–८] च।

३. तथाहि—"द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो ळकारः"—इति ऋक्प्राति०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"उद्दिश्य देवतां द्रव्यत्यागो यागोऽभिधीयते ॥"

इति यागलक्षणस्य पूर्वाचार्यैरुक्तत्वात् । निर्वपन्तीत्ययं शब्दो न वर्तमानार्थः । किंतु विध्यर्थः । स च लकारो लिङर्थे लेडिति[1] सूत्रेण विध्यर्थो द्रष्टव्यः । एवं च सति शाखान्तरेण संवादो भवति । तथा च तैत्तिरीया विस्पष्टं विधिमामनन्ति—'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः'[2] इति । तत्रैकप्रयोगापेक्षमेकवचनम् । अत्र तु बहुप्रयोगगतं सत्रगतं वा यजमानबहुत्वमपेक्ष्य निर्वपन्तीति बहुवचनम् । यद्वा, छान्दसो वचनव्यत्ययः ।[3] सोमयागे प्रवृत्तस्य यजमानस्य संस्कारो दीक्षणम्, तस्य च संस्कारस्य हेतुः कर्मविशेषो दीक्षणीयाशब्दवाच्यः । तस्य च कर्मविशेषस्य वाचकेन शब्देन तत्कर्मसाधनमुपलक्ष्यते । ततो दीक्षणीयाख्यकर्मसाधनं पुरोडाशमिति सामानाधिकरण्यमुपपन्नम् । एकादशसु कपालेषु संस्कृतः पुरोडाश एकादशकपालः ।[4] तेषु हि पुरोडाशः श्रप्यते ।[5]

**दीक्षणीया इष्टि में अग्नि एवं विष्णु को ग्यारह कपालों वाला पुरोडाश अर्पित करना चाहिए ।**

अत्र प्रथमोत्तमयोरग्नाविष्णवोः पुरोडाशदेवतात्वे फलितं दर्शयति—

**सर्वाभ्य एवैनं तद्देवताभ्योऽनन्तरायं निर्वपन्ति ॥**

'तत्' तेनाऽऽग्नावैष्णवत्वेन तयोरग्नाविष्णवोर्मध्यवर्तिनीनां सौमिकीनां सर्वासां देवतानामुपलक्षितत्वाद् 'अनन्तरायं' निरवशेषं काचिदपि देवताऽविशिष्टा यथा न भवति तथैनं पुरोडाशं यजमानाः निर्वपन्त्येव । अनेन निर्वापेण सर्वा देवतास्तृप्यन्तीत्यर्थः । यथा वैयाकरणाः प्रत्याहारेष्वाद्यन्तयोर्वर्णयोर्ग्रहणेन मध्यपातिनां सर्वेषां वर्णानां ग्रहण-

---

१. पा० सू० ३. ४. ७ । २. तै० सं० ५. ५. १. ४ ।

३. 'व्यत्ययो बहुलम्'—इति पा० सू० ३. १. ८५ ।

४. 'संस्कृतं भक्ष्याः'—इति पा० सू० ४. २. १६ ।

५. एकादश कपालस्थापनप्रकारस्त्वेवम्—पूर्वं मध्यममुपदधाति, ततः पुरस्तात् तृतीयम्, मध्यमाद् दक्षिणं चतुर्थम्, चतुर्थात् पूर्वमेकस्य कपालस्यान्तरालं परिशिष्य पञ्चमम्, चतुर्थपञ्चमयोरन्तराले षष्ठम्, चतुर्थस्य पश्चात् सप्तमम्, तस्य पश्चादष्टमम् सर्वेभ्य उत्तरतो नवमदशमैकादशानि प्राक्संस्थानि । किं च पुरोडाशस्य कूर्माकारोक्त्या वृत्ताकारत्वप्रसिद्धेः यावत्कपालं प्रथनविधेश्च तदर्थकपालचितेरपि अर्थाद् वृत्ताकारत्वम् । कपालानि तु घर्षणाद्युपायेन तथा करणीयानि यथा च कपालचितिक्षेत्रं वृत्तं सम्पूर्येत ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मिच्छन्ति ।[1] न्यायस्तदीय एवं व्यवह्रियते—'तन्मध्यपतितस्तग्रहणेन गृह्यते' इति ।[2] यथा वा लोके भुञ्जानानामेकपङ्क्तावुपविष्टानामाद्यन्तयोर्ब्राह्मणयोः परितोषेण मध्यवर्तिनः सर्वे परितुष्टा इति निश्चितम्, तथेदं द्रष्टव्यम् ॥

**सभी देवताओं को इस प्रकार से अर्पित करना चाहिए कि कोई देवता छुटने न पाएँ।**

नन्वग्नाविष्ण्वोरेव निर्वापे सम्बन्धः श्रूयते, न तु मध्यवर्तिदेवतानाम्, तत्कथं तासां तृप्तिरित्याशङ्क्य तत्सिद्ध्यर्थं तयोरेव सर्वदेवतान्तर्भावं दर्शयति—

अग्निर्वै सर्वा देवता विष्णुः सर्वा देवताः ॥

अग्नेः सर्वदेवतारूपत्वे श्रुत्यन्तरप्रसिद्धिद्योतनार्थो वै-शब्दः । तथा च तैत्तिरीयाः पौरोडाशिके काण्डे[3] समामनन्ति—"ते देवा अग्नौ तनूः सन्यदधत तस्मादाहुः 'अग्निः सर्वा देवताः' इति" ।[4] सौमिकेऽपि काण्डे[5] श्रूयते—'देवासुराः संयत्ता आसन् ते देवा विभ्यतोऽग्निं प्राविशन् तस्मादाहुः 'अग्निः सर्वा देवताः' इति"—इति ।[6] विष्लृ व्याप्तावित्यस्माद्धातोरुत्पन्नो विष्णुशब्दः ।[7] व्याप्तिश्च सर्वजगदुपादानकारणत्वेन सर्वात्मकत्वादुपपद्यते । अत एव स्मरन्ति—'भूतानि विष्णुर्भुवनानि विष्णुः' इति ॥

**क्योंकि अग्नि ही सब देवता हैं। विष्णु ही सब देवता हैं।**

सर्वदेवतात्मकत्वेनाग्नाविष्णू प्रशस्य प्रकारान्तरेण पुनः प्रशंसति—

एते वै यज्ञस्यान्त्ये तन्वौ यदग्निश्च विष्णुश्च तद्यदाग्नावैष्णवं पुरोळाशं निर्वपन्त्यत एव तद्देवानृध्नुवन्ति ॥

---

१. तथा चैतत् पाणिनीयं सूत्रम्—"आदिरन्त्येन सहेता" इति पा० सू० १.१.७१ ।

२. 'येन विधिस्तदन्तस्य' इति पाणिनीयसूत्रस्य [१.१.७२] पतञ्जलिकृते महाभाष्ये पठितैषा परिभाषा, परिभाषेन्दु-शेखरे च व्याख्याता [८९] ।

३. संहितायाः प्रथमकाण्डीयः प्रथमप्रपाठकः समग्र एवेष्टिकाण्ड उच्यते, तत्रैवान्त्यांशः पौरोडाशिक इत्यपि । ब्राह्मणस्य तृतीयकाण्डीयो द्वितीयप्रपाठकश्च तस्यैव शेषः ।

४. तै० ब्रा० ३.२.८.१० ।

५. संहितायाः प्रथमकाण्डीयं द्वितीयादि प्रपाठकत्रयं सौमिकं काण्डम् । षष्ठकाण्डं च तद्ब्राह्मणम् । तत्राप्यवान्तरकाण्डानि नव । तदुक्तमनुक्रमण्याम्—"अध्वरप्रभृति त्रीणितद्विधिर्वाजपेयकौ । सवाः शुक्रियकाण्डे च नवेन्दोरिति धारणा"—इति । तथा च अध्वरकाण्डम्, ग्रहकाण्डम्, दक्षिणाकाण्डम्, तत्त्रयविधिकाण्डम्, वाजपेयमन्त्रकाण्डम्, वाजपेयविधिकाण्डम्, सवकाण्डम्, शुक्रियमन्त्रकाण्डम्, शुक्रियविधिकाण्डम् चेति नवकाण्डात्मकं सौमिकं काण्डम् ।

६. तै० सं० ६.२.२ ।

७. निघ० ३.१७.१२; ४.२.३८ । निरु० ५.२.३; १२.२.७.८ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अग्निश्च विष्णुश्चेत्यनयोर्देवतयोर्यच्छरीरद्वयमस्ति, 'एते' उभौ 'तन्वौ' यज्ञस्यान्त्ये सोमयागस्याऽऽदावन्ते च वर्तमाने। आद्या चान्त्या चेति विवक्षायामेकशेषेणान्त्ये इति भवति। यथा माता च पिता चेत्यत्र पितराविस्येकशेषः, तद्वत्। आद्यन्तवर्तित्वं चाग्निर्वै देवानामवम' इत्यत्रैवोपपादितम्।[1] तत्तथा सत्याद्यन्तवर्तित्वे सति तादृशदेवताकं 'पुरोडाशं निर्वपन्तीति यदस्ति तत्तेन यथोक्तनिर्वपेणान्ततो यागस्याऽऽदावन्ते च देवान् सर्वानृध्नुवन्त्येव परिचरन्त्येव। तमेतं सार्थवादं दीक्षणीयेष्टिविधिं तैत्तिरीयाः अपि विस्पष्टमामनन्ति—'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणोऽग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चाऽऽरभतेऽग्निरवमो देवानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता एवोभयतः परिगृह्य यजमानोऽवरुन्धे' इति।[2]

अग्नि और विष्णु देवता के यह जो दो शरीर हैं वह दोनों ही यज्ञ के दोनों किनारे हैं अर्थात् सोमयाग के आदि और अन्त में रहने वाले हैं।

इदानीं यथोक्तविधौ ब्रह्मवादिचोद्यमुद्भावयति—

तदाहुर्यदेकादशकपालः पुरोळाशो द्वावग्नाविष्णू कैनयोस्तत्र क्लृप्तिः, का विभक्तिरिति ॥

'तत्' तत्र कपालसख्यायां ब्रह्मवादिन आहुश्चोदयन्ति। एकादशसु कपालेषु संस्कृतः पुरोडाश एकमेव द्रव्यम्, तस्य भोक्तारौ 'द्वौ' देवौ। अनयोर्द्वयोः समप्रधानत्वेन विषमांशस्यायुक्तत्वात् 'तत्र' द्रव्ये का क्लृप्तिर्विभागकल्पना निमित्तं किं स्यात्? 'का विभक्तिः' निमित्तविशेषाभावे नैमित्तिको विभागविशेषः कथं घटेत? 'इति' शब्दश्चोद्यसमाप्त्यर्थः ॥

यह जो अग्नि एवं विष्णु को पुरोडाश अर्पित करते हैं वह दोनों ओर से यज्ञ के देवताओं की परिचर्या करते हैं। [ अब प्रश्न है कि ] जो [ यह कहा गया है कि ] ग्यारह कपालों वाला पुरोडाश होना चाहिए, तब अग्नि एवं विष्णु दो ही तो देवता हैं, फिर दोनों में बांटने का [ =क्लृप्तिः ] क्रम क्या होना चाहिए और विभाग कैसे होना चाहिए?

ब्रह्मवादिष्वेव मध्ये अभिज्ञानां चोद्यपरिहारमुद्भावयति—

अष्टाकपाल आग्नेयः, अष्टाक्षरा वै गायत्री, गायत्रमग्नेश्छन्दः, त्रिकपालो वैष्णवः, त्रिर्हीदं विष्णुर्व्यक्रमत, सैनयोस्तत्र क्लृप्तिः सा विभक्तिः ॥

---

१. द्र० १२ पृष्ठे।

२. तै० सं० ५.५.१.४।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अष्टसु कपालेषु संस्कृतः पुरोडाशभागोऽग्नेः संबन्धी। स च संबन्धश्छन्दोद्वारा द्रष्टव्यः। गायत्र्याख्यं छन्दोऽग्नेः संबन्धि तयोरग्निगायत्र्योः प्रजापतिमुखजन्यत्व-साम्यात्। एतच्च मुखजन्यत्वं तैत्तिरीयाः सप्तमकाण्डे पठन्ति—'प्रजापतिरकामयत प्रजायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवताऽन्वसृज्यत गायत्रीच्छन्दः'[1] इति। तस्याश्च गायत्र्याः पादाक्षरेष्वष्टत्वं संख्या दृश्यते। सोऽयं यथोक्तपुरोडाशभागस्याग्नेश्च संबन्धः। त्रिषु कपालेषु संस्कृतः पुरोडाशभागो विष्णोः संबन्धी। 'हि' यस्मात् कारणाद् विष्णुरिदं सर्वं जगत्त्रिर्व्यक्रमत त्रिरावृत्तेन स्वकीयपादविक्षेपेण व्याप्तवान्। तथा च मन्त्र आम्नायते—'इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्'[2] इति 'त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः'[3] इति च। 'सा' यथोक्ताऽष्टत्वसंख्या त्रित्वसंख्या चैनयोर्देवयोस्तत्र पुरोडाशे क्लृप्तिर्विभागकल्पनाहेतुः। तदनुसारेण विभक्तिस्तादृशो विभागोऽवगन्तव्यः॥

**उत्तर यह है कि आठ कपालों से सम्बद्ध भाग अग्नि-देवता के लिए है। गायत्री [छन्द के एक चरण में] आठ अक्षर होते हैं, और गायत्री ही अग्नि का छन्द है। तीन कपाल विष्णु के लिए हैं, क्योंकि विष्णु ने इस सृष्टि को तीन पदों में नापा। इनके बाँटने का क्रम यही है।**

इत्थं सार्थवादेन विधिवाक्येन दीक्षणीयेष्टिं विधाय तस्यामेवेष्टौ प्रतिष्ठाकामस्य पुरोडाशमपोह्य द्रव्यान्तरं विधत्ते—

घृते चरुं निर्वपेत योऽप्रतिष्ठितो मन्येत॥ इति।

पुत्रादिप्रजया गवादिपशुभिश्च रहितत्वमप्रतिष्ठितत्वं तादृशोऽहमिति मन्यमानो यजमानः प्रतिष्ठार्थं घृतेन तण्डुलैश्चरुं निष्पादयेत्॥

**जो अपने को अप्रतिष्ठित समझे अर्थात् जो अपने को पुत्रादि रूप प्रजा और गवादि रूप पशु से रहित माने वह [ प्रतिष्ठार्थं ] घृत-युक्त चरु को अर्पित करे।**

अप्रतिष्ठितत्वस्याऽऽत्यन्तिकदोषत्वं दर्शयति—

अस्यां वाव स न प्रतितिष्ठति यो न प्रतितिष्ठति॥ इति।

'यो' यजमानः प्रजापशुरूपया प्रतिष्ठया वर्जितः 'सोऽस्यां वाव' कृत्स्नायामप्येतस्यां भूमौ 'न प्रतितिष्ठति' श्लाघ्यो न भवति। तस्मादप्रतिष्ठा परिहर्तव्येत्यर्थः॥

**जो [ यजमान प्रजा व पशु रूप ] प्रतिष्ठा से रहित है वह इस पृथ्वी पर प्रशंसित नहीं होता [ इसलिए अप्रतिष्ठा का परिहरण करना चाहिए ]।**

---

१. तै० सं० ७.१.१.४।　　२. ऋ० १.२२.१७।　　३. ऋ० १.२२.१८।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

घृतचरुणा तत्परिहारं दर्शयति—

**तद्यद्घृतं तत्स्त्रियै पयः, ये तण्डुलास्ते पुंसस्तन्मिथुनं मिथुनेनैवैनं तत्प्रजया पशुभिः प्रजनयति प्रजात्यै ॥ इति ।**

तत्तत्र घृतपक्वे चरौ यद्घृतमस्ति तत्स्त्रियै[1] पयः स्त्रियाः शोणितम् । द्रवत्वसाम्येन पयः शब्दः शोणितमुपलक्षयति । विलीनस्य घृतस्येषद्रक्तत्वसाम्येन योषिद्वीर्यत्वमुपचर्यते । चरौ ये तण्डुलाः सन्ति ते पुंसो रेत इति शेषः । श्वेतत्वं त्वत्र साम्यम् । तद्घृततण्डुलोभयात्मकं चरुद्रव्यं मिथुनसदृशं तत्तस्मात् कारणान्मिथुनरूपेणैव चरुद्रव्येणैवैनं यजमानं पुत्रादिप्रजया गवादिपशुभिश्च प्रजनयति प्रवर्धयति । तस्मादिदं चरुद्रव्यं प्रजात्यै प्रजननाय प्रतिष्ठारूपाय संपद्यत इत्यर्थः ॥

**[घृत-पक्व चरु में] यह जो घृत है वह स्त्री का दुग्ध है [अर्थात् स्त्री के वीर्यत्व का इसमें उपचरण होता है] और जो [चरु में] चावल हैं वह पुरुष का [वीर्य] है। इस प्रकार वह [घृत व तण्डुल उभयात्मक चरु] मिथुन सदृश है। इसीलिए मिथुनरूप से ही चरु द्रव्य इस यजमान को पुत्रादि प्रजा व गवादि पशु से समृद्ध करता है। इसलिए यह चरु द्रव्य प्रतिष्ठारूप प्रजनन के लिए है।**

चरोः प्रतिष्ठाहेतुत्ववेदनं प्रशंसति—

**प्रजायते प्रजया पशुभिर्य एवं वेद ॥ इति ।**

तावेतौ पुरोडाशचरुपक्षावापस्तम्बेन दर्शितौ—'दीक्षणीयायास्तन्त्रं प्रक्रमयति । आग्नावैष्णवमेकादशकपालं निर्वपत्याग्नावैष्णवं वा घृते चरुं, पुरोडाशो ब्रह्मवर्चसकामस्य, घृते चरुः प्रजाकामस्य पशुकामस्य वाऽऽदित्यं घृते चरुं द्वितीयं प्रजाकामस्य पशुकामस्यैके समामनन्ति'[2] इति ॥

**जो इस रहस्य को समझता है वह प्रजा और पशुओं से युक्त हो जाता है।**

उक्ताया दीक्षणीयेष्टेः कालं विधत्ते—

**आरब्धयज्ञो वा एष आरब्धदेवतो यो दर्शपूर्णमासाभ्यां यजत आमावास्येन वा हविषेष्ट्वा पौर्णमासेन वा तस्मिन्नेव हविषि तस्मिन् बर्हिषि दीक्षेतैषा एका दीक्षा ॥ इति ।**

यः पुमान् दर्शपूर्णमासाभ्यां यजते तेन सर्वोऽपि यज्ञः प्रारब्धः सर्वस्य तदपेक्षितत्वात् । सोमयागस्य दर्शपूर्णमासविकृतित्वाभावेऽप्यङ्गादीनां दीक्षणीयाप्रायणीयादीनामिष्टीनां तद्विकृतित्वादस्ति तदपेक्षा । अग्निहोत्रस्य तदङ्गानां च तन्निरपेक्षत्वेऽप्याहवनीयाद्यग्निसापेक्षत्वादग्नीनां च पवमानेष्टिसाध्यत्वादिष्टीनां दर्शपूर्णमासविकृति-

---

१. 'षष्ठ्यर्थे चतुर्थीति वाच्यम्' इति पा० सू० २.३.६२ वा० १ ।

२. आप० श्रौ० १०.४.२.३ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वादस्ति परम्परया तदपेक्षाऽतस्तदनुष्ठानेन सर्वस्यापि यज्ञस्य प्रारम्भः सिध्यति। यद्यपि यज्ञारम्भेणैव तदीयदेवतानां पूजयितुमारम्भः सिद्ध एव तथाऽपि प्राधान्यख्यापनार्थमारब्धदेवत इति पुनर्देवताभिधानम्। यस्माद्दर्शपूर्णमासयाजिना सर्वोऽपि यज्ञ आरब्धप्रायोऽत एव देवतानां पूजाऽप्यारब्धप्राया तस्मादारब्धस्य सोमयागस्यानुष्ठेयत्वाद्दर्शपूर्णमासानुष्ठानादूर्ध्वं दीक्षेत दीक्षणीयेष्टिं कुर्यात्। अमावास्याकाले कर्तव्यं हविरामावास्यं[1] तद्वत् पौर्णमासं च। हविःशब्दोऽत्र यज्ञमुपलक्षयति। वाशब्दौ समुच्चयार्थौ। अमावास्यादिसंबन्धिना पौर्णमासीसंबन्धिना च यज्ञेनेष्ट्वा दीक्षेत। उक्तार्थ एव तस्मिन्नित्यादिना प्रपञ्च्यते। हविःशब्दवद् बर्हिःशब्दोऽपि यज्ञोपलक्षकः। तस्मिन्नामावास्याख्ये हविषि यज्ञे तस्मिन् पौर्णमासाख्ये बर्हिषि यज्ञेऽनुष्ठिते सति पश्चादेव दीक्षेत। तदाह आश्वलायनः—'दर्शपूर्णमासाभ्यामिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेन'[2] इति। यजेतेति शेषः। इष्टिराग्रयणेष्टिः।[3] पशुर्निरूढपशुबन्धः।[4] आपस्तम्बोऽप्याह—'अथ दर्शपूर्णमासावारभते। ताभ्यां संवत्सरमिष्ट्वा सोमेन पशुना वा यजते'[5] इति। एतच्छब्दादुत्तर उकारोऽपिशब्दपर्यायः। एषाऽप्येका दीक्षा। एवमुक्ते सत्यन्याऽपि काचिद्दीक्षाऽस्तीति सूचितं भवति। अत एवाऽऽश्वलायन इष्टिपूर्वत्वं सोमपूर्वत्वं चेत्युभौ पक्षावुदाजहार—'ऊर्ध्वं दर्शपूर्णमासाभ्यां यथोपपत्त्येके प्रागपि सोमेनैके'[6] इति। उपपत्तिर्द्रव्यादिसंपत्तिस्तामनतिक्रम्येति यथोपपत्ति। दर्शपूर्णमासाभ्यामूर्ध्वं द्रव्यादिसंपत्तौ सत्यां सोमेन यजेतेति केषांचिन्मतं ताभ्यां प्रागपि संपत्तौ सोमपानमित्यपरेषां मतम्। तैत्तिरीयाश्चेष्टिपूर्वत्वमभिप्रेत्य वसन्तादिकालविशेषेष्वाधानमाम्नाय पुनः सोमपूर्वत्वमभिप्रेत्य कालनियममन्तरेणाऽऽधानमामनन्ति—'अथो खलु यदैवैनं यज्ञ उपनमेत्। अथाऽऽदधीत सैवास्यर्धिः'[7] इति। आपस्तम्बोऽपीदमेव सोमाधानमभिप्रेत्य वसन्तादिकालविशेषप्रतीक्षां वारयति—'नर्तून् सूर्क्षेन्न नक्षत्रम्'[8] इति। तस्मात् पक्षद्वयम्॥

---

१. 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इति पा०सू० ४.३.१६। २. आश्व०श्रौ० ४.१.१।

३. 'आग्रयणमैन्द्राग्नमग्रपाकस्य व्रीहीणां यवानां च' का० श्रौ० ४.६। 'आग्रयणं व्रीहिश्यामाकयवानाम्' आश्व० श्रौ० २.९.१। "य आहिताग्निराग्रयणेनानिष्ट्वा नवान्नं प्राश्नीयात् तस्य का प्रायश्चित्तिः" ऐ० ब्रा० ७.२.९। 'आग्रयणेष्ट्या यजते'—इति च शत० ब्रा० २.४.३.१।

४. का० श्रौ० षष्ठाध्यायो द्रष्टव्यः। तै० ब्रा० २.२.२.३; ३.६.३।

५. आप० श्रौ० ५.२३.२। कात्यायनोऽप्याह—दर्शपूर्णमासाभ्यामिष्ट्वाऽन्येन यजेतेति श्रुतेः—इति ७.१.१।

६. आश्व० श्रौ० ४.१.२। ७. तै० ब्रा० १.१.२.८।

८. आप० श्रौ० ५.३.२१। "अथ नक्षत्राणि; कृत्तिकासु ब्राह्मण आदधीत...वसन्तो ब्राह्मणस्य...सोमेन यक्ष्यमाणो नर्तुं सूर्क्षेन्न नक्षत्रम्" इति तत्र पाठः। न सूर्क्षेत्=नाद्रियेत—इति तट्टीका रौद्रदत्ती। 'सोमेन यक्ष्यमाणो नर्तुं पृच्छेन्न नक्षत्रम्'—इति आश्व० श्रौ० २.१.१५।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[अब उसी दीक्षणीया इष्टि के काल का विधान करते हैं]—

जो [यजमान] दर्श और पूर्णमास का यजन करता है वह यज्ञ का प्रारम्भ करने वाला और देवों [की पूजा] का आरम्भ करने वाला होता है। उसी अमावास्या सम्बन्धी हवि अर्थात् यज्ञ के और उसी पौर्णमासी सम्बन्धी यज्ञ के [=बर्हिषि, अनुष्ठित होने पर दीक्षणीया इष्टि करनी चाहिए। यह भी एक दीक्षा [अर्थात् इष्टि] है। यहाँ 'हवि' और 'बर्हि' शब्द यज्ञ को उपलक्षित करते हैं।]

चोदकप्राप्तां पञ्चदशसंख्याम्[1] अपवदितुं संख्यान्तरं विधत्ते—

**सप्तदश सामिधेनीरनुब्रूयात्** ॥ इति।

'प्र वो वाजा अभिद्यव'[2] इत्याद्या एकादशसंख्याका[3] ऋचो वह्निसमिन्धनहेतुत्वात् सामिधेन्य इत्युच्यन्ते।[4] तासु 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति[5] वचनात्ताः पञ्चदश संपद्यन्ते। प्रकृतावेव विहितासु पञ्चदशस्वृक्षु चोदकप्राप्तासु ये समिध्यमान-समिद्धवत्यौ द्वे ऋचौ[6] तयोर्मध्ये धाय्याभिधेये ऋचौ प्रक्षेप्तव्ये।[7] तथाच आश्वलायनः—'दीक्षणीयायां धाय्ये विराजौ'[8] इति। तत्र 'पृथुपाजा अमर्त्यो'[9] इत्येका

---

१. तथाहि प्रकृतौ 'पञ्चदश सामिधेनीरन्वाह'—इति तै० सं० २.५.८.२।

२. ऋ० ३.२७.१।

३. यद्यपि मूले द्वादशपठितास्तथाप्यन्तयोः पुरुषभेदेन विकल्पितत्वात् एकादशैव।

४. पा० सू० ४.३.१२०. वा० १०। 'समिन्धे सामिधेनीभिर्होता तस्मात् सामिधेन्यो नाम'—इति शत० ब्रा० १.३.५.१। तासामुत्पत्तिस्त्वेवमाम्नायते—"ऋषेर्ऋषेर्वा एता निर्मिता यत्सामिधेन्यः"—इति तै० सं० २.५.७.५। भिन्नेभ्यः ऋषिभ्यः प्रवर्त्तितास्ताः सामिधेन्यः'—इति च तत्र भाष्ये सायणः।

५. तै० सं० २.५.७.१।

६. समिध्यमाना ऋक् [तै० ब्रा० ३.५.२] नवमसामिधेनी ऋ० ३.२७.४। समिद्धवती ऋक् तु [तै० ब्रा० १.३.५.२] दशमसामिधेनी - ऋ० ५.२८.१। तथा चाश्वलायनः "अथ सामिधेन्यः'—इत्युपक्रम्याह—'समिध्यमानो अध्वरे समिद्धो अग्न आहुतेति"—इति आश्व० श्रौ० १.२.७।

७. सामिधेन्य ऋच एकादशैव। तासु प्रथमस्या अन्तिमायाश्च त्रिस्त्रिः पाठेन पञ्चदश-सङ्ख्या पूरणीया भवति। सप्तदशसंख्यायाः पूरणीयत्वे तु पृथुपाजेत्याद्यपरर्गं द्वयस्य तासु प्रक्षेपोऽपि विधीयते। एवमेकविंशतित्वे सम्पादनीये षण्णामप्यृचां प्रक्षेपणीयता विहिता। ताः प्रक्षेपणीयर्चं एव धाय्या उच्यन्ते [ऐ० ब्रा० ३.२.७]। तत्र धाय्ययोर्धाय्यानां वा प्रक्षेपस्तु समिध्यमान-समिद्धवत्योर्मध्ये एव भवति। ते च ऋचौ सामिधेनीषु दशम्येकादश्यौ।

८. आश्व० श्रौ० ४.२.१। ९. ऋ० ३.२७.५।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'तं सबाधो यतस्रुचः'[1] इति द्वितीया। एतच्च प्रयोगसंग्रहकारेणोदाहृतम्—'अथ दीक्षणीयायां धाय्ये भवतः शोचिष्केशस्तमीमहे पृथुपाजास्तं सबाधः' इति। 'अग्नये समिध्यमानायानुब्रूहि'[2] इत्येवमध्वर्युणा प्रेषितो होता[3] सामिधेनीः सप्तदशानुब्रूयात् ॥

[उस होता को] सत्रह सामिधेनियों का पाठ करना चाहिए। [सामिधेनी ऋचा= १५ सामिधेनी और २ धाय्या मिलकर १७ सामिधेनी ऋचाएँ होती है। यह पन्द्रह वस्तुतः ११ हो है। प्रथम और अन्तिम मन्त्र के तीन-तीन बार पढ़े जाने से १५ हो जाती हैं। ये १७ सामिधेनी इस प्रकार हैं—(१) प्र वो वाजा ( ऋ० ३. २७ १ ), (२) इसी की आवृत्ति, (३) पुनरावृत्ति, (४) अग्न आ याहि ( ऋ० ६. १६. १० ), (५) तं त्वा (ऋ० ६. १६. ११), (६) स नः पृथु (ऋ० ६. १६. १२), (७) ईळेन्यो ( ऋ० ३. २७. १३ ), (८) वृषो अग्निः ( ऋ० ३. २७. १४ ), वृषणं त्वा ( ऋ० ३. २७ १५ ), (१०) अग्निं दूतम् ( ऋ० १. १२. १ ), (११) समिध्यमानो (ऋ० ३. २७. ४, (१२) समिद्धो (ऋ० ५. २८. ५), (१३) आ जुहोता (ऋ० ५ २८. ६, (१४) इसी की आवृत्ति, (१५) पुनरावृत्ति। ११ वीं ऋचा समिध्यवान है और १२ वीं ऋचा 'समिद्धवती' है। इन्हीं दो के बीच में धाय्या का पाठ होता है। ये दो धाय्या है—१. पृथुपाजा ( ऋ० ३. २७ ५, और २. तं सबाधो ( ऋ० ३. २७. ६ )]।

तामेतां संख्यां प्रशंसति—

**सप्तदशो वै प्रजापतिर्द्वादश मासाः पञ्चर्तवो हेमन्तशिशिरयोः समानेन तावान् संवत्सरः संवत्सरः प्रजापतिः ॥ इति।**

सप्तदश चावयवा यस्य प्रजापतेः सोऽयं सप्तदशस्तस्मिन्नर्थे वैशब्दोक्तप्रसिद्धिर्द्वादशे-त्यादिना स्पष्टीक्रियते। चैत्राद्या मासा द्वादश प्रसिद्धाः। यद्यपि षड् वा ऋतव[4] इति श्रुत्यन्तराल्लोकप्रसिद्धेश्च वसन्ताद्याः षट्संख्याकास्तथाऽपि शीतत्वसाम्येन हेमन्त-शिशिरावेकीकृत्य पञ्चसंख्योच्यते। द्वादशभिर्मासैस्तन्मेलनात्मकपञ्चर्तुभिश्च यावान्कालो भवति तावान्कालः संवत्सर इत्युच्यते। स च संवत्सरस्तत्तदृतूचितवर्षादिनिष्पादनेन प्रजानां पालकत्वात् प्रजापतिस्तदीयत्वेन सप्तदशसंख्या प्रशस्तेत्यर्थः ॥

क्योंकि प्रजापति सत्रह हैं। बारह महीने और पाँच ऋतुएँ है। हेमन्त और शिशिर दोनों के समान होने से [उन्हें एकीकृत करके पाँच ऋतुएँ कही गई हैं] इतना काल संवत्सर [= वर्ष] का होता है और [प्रजा का पालन करने से] संवत्सर प्रजापति है।

---

१. ऋ० ३.२७.६।　　　२. शत० ब्रा० १.३.५.२।

३. "अग्नये समिध्यमानायानुब्रूहीति संप्रेष्यति"—इति आप० श्रौ० २.१२.१। 'होतेति० शेषः' इति, ब्रूहीत्युकारः प्लावयितव्यः'—इति च तट्टीका। 'ब्रूहिप्रेष्य-श्रौषड्वौषडावहानमादेः'—इति च पा० सू० ८.२.९१।

४. ऐ० ब्रा० ३.१.६।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सप्तदशसंख्यावेदनं प्रशंसति—

**प्रजापत्यायतनाभिरेवाऽऽभी राध्नोति य एवं वेद ॥ १ ॥**

संवत्सरात्मकः प्रजापतिरायतनमाश्रयो यासां सामिधेनीनां ताः प्रजापत्यायतनास्तदीयसंख्योपेतत्वात्तदायतनत्वं तादृशीभिराभिः सामिधेनीभिर्वेदिता राध्नोति समृद्धो भवति । सति वेदने तदनुष्ठानप्रवृत्तेः फलप्राप्तिसमृद्धिरुपपद्यते ।

**अत्र मीमांसोदाह्रियते** । पञ्चमाध्यायस्य चतुर्थपादे द्वयं चिन्तितम्—

"दर्शादीष्ट्वा सोमयागः क्रमोऽयं नियतो न वा ।
उक्तेराद्यो न सोमस्याऽऽधानानन्तरताश्रुतेः" ॥[1]

दर्शपूर्णमासाविष्ट्वा सोमेन यजेतेति[2] क्त्वाप्रत्ययेनावगम्यमानः क्रमो नियतः इति चेत्, मैवम् । 'सोमेन यक्ष्यमाणोऽग्नीनादधीत' इत्याधानानन्तरताया अपि श्रवणात् ।[3] तस्मादिष्टिसोमयोः पौर्वापर्यं न नियतम् ॥

"विप्रस्य सोमपूर्वत्वं नियतं वा न वाऽग्रिमः ।
उत्कर्षतो मैवमग्नीषोमीयस्यैव तच्छ्रुतेः" ॥

'इष्टिपूर्वत्वं सोमपूर्वत्वं च विकल्पितम्' इति यदुक्तं तत्र ब्राह्मणस्य सोमपूर्वत्वं नियतम् । कुतः, उत्कर्षश्रवणात् । 'आग्नेयो वै ब्राह्मणो देवतया । स सोमेनेष्ट्वाऽग्नीषोमीयो भवति । यदेवादः पौर्णमासं हविः, तत्तर्ह्यनुनिर्वपेत् । तर्हि स उभयदेवतो भवति'[4] इति । अस्यायमर्थः—'प्रजापतेर्मुखादग्निर्ब्राह्मणश्चेत्युभावुत्पन्नौ ।'[5] ततो ब्राह्मणस्याग्निरेक एव देवतेत्याग्नेय एव ब्राह्मणः । न तु सौम्यः, सोमस्य तद्देवतात्वाभावात् । यदा स ब्राह्मणः सोमेन यजेत तदा सोमोऽप्यस्य देवतेत्यग्नीषोमीयो भवति । तस्याग्नीषोमीयस्य ब्राह्मणस्यानुरूपं पौर्णमासमग्नीषोमीयपुरोडाशरूपं हविः सोमादूर्ध्वमनुनिर्वपेत् । तदा स ब्राह्मणो देवताद्वयसंबन्धी भवति' इति । यद्यप्यत्र कर्मान्तरं किंचिद् विधीयते—इति कश्चिन् मन्यते, तथाऽपि 'पौर्णमासं हविः' इति विस्पष्टप्रत्यभिज्ञानान्न कर्मान्तरं किन्तु दर्शपूर्णमासयोः सोमादूर्ध्वमुत्कर्षः । तस्माद् विप्रस्य सोमपूर्वत्वमेव नियतमिति प्राप्ते, ब्रूमः नात्र दर्शशब्दः पूर्णमासशब्दो वा कश्चिद् यागवाची श्रूयते । पौर्णमासमित्येतत्तद्धितान्तं हविर्विशेषणत्वेनोपन्यस्यते ।[6] तच्च हविरग्नीषोमीयपुरोडाशरूपमिति देवताद्वयेन संस्तवादवगम्यते । तस्मादेकस्यैव हविष उत्कर्षः, न तु कृत्स्नयोर्दर्शपूर्णमासयोः । तथा सति ब्राह्मणस्यैकस्मिन्नेवाग्नीषोमीयपुरोडाशे सोमपूर्वत्वनियमः । इतरत्र क्षत्रियवैश्ययोरिवास्यापीष्टिपूर्वत्वसोमपूर्वत्वे विकल्प्येते ॥

---

१. जै० वि० न्या० ५.४.९–१० अधि ३ ।    २. तै० सं० २.५.६ ।
३. यः सोमेन यक्ष्यमाणोऽग्नीनादधीत, नर्तुं स प्रतीक्षेन्न नक्षत्रम्—इति तत्पूर्णपाठः ।
४. तै० सं० ५.५.१ ।    ५. तै० सं० ७.१.२.४ ।
६. 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्'—इति पा० सू० ४.३.१६ पौर्णमासं हविरिदमेषामपि' इति स्फुटम् तै० ब्रा० ३.७.४.४ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तृतीयाध्यायस्य षष्ठे पादे चिन्तितम्—

"सामिधेनीः सप्तदश प्रकृतौ विकृतावुत ।
पूर्ववत्प्रकृतौ पाञ्चदश्येनैतद् विकल्प्यते ॥
विकृतौ साप्तदश्यं स्यात् प्रकृतौ प्रक्रियाबलात् ।
पाञ्चदश्यावरुद्धत्वादाकाङ्क्षाया निवृत्तता ॥"[१]

अनारभ्य श्रूयते—'सप्तदश सामिधेनीरनुब्रूयात्'[२] इति । 'प्र वो वाजा' इत्याद्या अग्निसमिन्धनार्था ऋचः सामिधेन्यः ।[३] तासां साप्तदश्यं पूर्वन्यायेन प्रकृतिगतम्, यदि प्रकृतौ 'पञ्चदश सामिधेनीरन्वाहेति'[४] विधिः स्यात् तर्हि पाञ्चदश्यसाप्तदश्ये विकल्पेयातामिति प्राप्ते, ब्रूमः—विकृतावेव साप्तदश्य निविशते प्रकृतौ पाञ्चदश्यावरुद्धायां सामिधेनीनां संख्याकाङ्क्षाया अभावात् । न च पाञ्चदश्यसाप्तदश्यवाक्ययोः समानबलत्वादवरोधाभावः—इति शङ्कनीयं पाञ्चदश्ये प्रकरणानुग्रहस्याधिकत्वात् । तस्मान्मित्रविन्दाध्वरकल्पादिविकृतौ साप्तदश्यमवतिष्ठते ।[५] न चात्र पूर्वन्यायोऽस्ति, साप्तदश्यस्य चोदकप्राप्त्यभावेन पुनर्विधानदोषाभावात् ।

"साप्तदश्यं तु वैश्यस्य विकृतौ प्रकृतावुत ।
पूर्ववच्चेन्न संकोचान्नित्यनैमित्तिकोक्तितः ॥
गोदोहनेन प्रणयेत्कामीत्येतदुदाहरत् ।
भाष्यकारस्तदप्यस्तु न्यायस्यात्र समत्वतः ॥"[६]

'सप्तदशानुब्रूयाद् वैश्यस्य' इति[७] स्थितं वैश्यनिमित्तकं साप्तदश्यं पूर्वन्यायेन विकृतिगतमिति चेत्, मैवम् । नैमित्तिकेनानेन वचनेन प्रकृतिगतस्य नित्यस्य पाञ्चदश्यस्य वैश्यव्यतिरिक्तविषयतया संकोचनीयत्वात् । नित्यं सामान्यरूपतया सावकाशत्वेन दुर्बलम् । नैमित्तिकं तु विशेषरूपत्वनिरवकाशत्वाभ्यां प्रबलम् । तस्माद् वैश्यनिमित्तकं साप्तदश्यं प्रकृताववतिष्ठते ।

अत्र [८]भाष्यकारोऽन्यदुदाजहार—चमसेनापः प्रणयेद् गोदोहनेन पशुकामस्येति । तत्र प्रकृतेश्चमसेनावरुद्धत्वाद् गोदोहनं विकृताविति पूर्वः पक्षः । कामनानिमित्तकेन गोदोहनेन नित्यस्य चमसस्य निष्कामविषयतया संकोचनीयत्वाद् प्रकृतावेव गोदोहनमिति राद्धान्तः ।

---

१. जै० न्या० वि० ३.६.९.३–४ । २. द्र० पूर्वं पृ० २० पं० ८ ।
३. तै० ब्रा० ३.५.२.१–१२ । ४. तै० सं० २.५.८.२ ।
५. मित्रविन्देष्टिः वाजसनेयके श्रूयते । शत० ब्रा० ११.४.३.२० । सांख्या० श्रौ० ३.७.१ । का०श्रौ० ५.१२.१ । अध्वरकल्पस्तु हविर्यज्ञविशेषः । सोऽपि वाजसनेयके एव । शत० ब्रा० १.१.४.७; ६.६.१.४ ।
६. जै० न्या० वि० ३.६.१०.५–६ । ७. तै० सं० २.५.१.२ ।
८. मीमांसाभाष्यकारः शबरस्वामी । जै० सू० ३. अ० ६ पा० १० सू० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दशमाध्यायस्याष्टमपादे चिन्तितम्—

"सामिधेनीसाप्तदश्यं वैमृधादावपूर्वगीः ।
संहृतिर्वोपकारस्य क्लृप्त्याऽऽद्योऽस्त्वाज्यभागवत् ॥
सामिधेन्यश्चोदकाप्ताः साप्तदश्यं तु वैमृधे ।
पुनर्वाक्येन संहार्यमनारभ्योक्तिचोदितम्" ॥"[1]

अनारभ्य किंचिदाम्नायते—'सप्तदश सामिधेनीरनुब्रूयात्'[2] इति । तथा वैमृधे[3]ऽध्वरकल्पायां, पशौ चातुर्मास्येषु, मित्रविन्दायामाग्रयणेष्ट्यादौ च पुनः साप्तदश्यं विहितम् । यद्यप्यनारभ्याधीतानां प्रकृतिगामित्वं न्याय्यं तथाऽपि श्रुतेन पाञ्चदश्येनावरुद्धत्वाद् विकृतिष्वेव निविशते । तथा सति वैमृधादिषु विकृतिष्वनारभ्यवादप्राप्ताः सप्तदश सामिधेन्यः प्राकरणिकेन विधिना पुनर्विधीयमाना गृहमेधीयाज्यभागवत्क्लृप्तोपकारत्वेनेतिकर्तव्यताकाङ्क्षां पूरयन्त्यश्चोदकं लोपयन्त्यो वैमृधादेरपूर्वकर्मतां गमयन्ति । साप्तदश्यं त्वनारभ्यवादप्राप्तमनूद्यत इति प्राप्ते, ब्रूमः वैमृधादिषु सामिधेन्य आज्यभागवन्न विधियन्ते, किन्तु चोदकप्राप्ता अनूद्य साप्तदश्यं विधीयते । तच्च साप्तदश्यं वैमृधादि प्रकरणेष्वाम्नातैर्विधिभिः कासुचिदेव विकृतिषु प्राप्तमनारभ्यवादेन तु सर्वासु विकृतिषु तत्रानारभ्यवादो विलम्बते प्रथमं विधेयस्य साप्तदश्यस्य सामिधेनीसंबन्धमवबोध्य । तत्संबन्धान्यथानुपपत्त्या क्रतुप्रवेशं परिकल्प्य प्रकृतौ पाञ्चदश्यपराहतत्वेन विकृतिषु सर्वासु निवेशः क्रियत इति विलम्बः । प्राकरणिकैर्विधिभिः सामिधेनीसंबन्ध एव बोधनीयः । विकृतौ तद्विशेषे च प्रवेशो न कल्पनीयः प्रत्यक्षप्रकरणपाठेनैव तत्सिद्धेः । तत्र साप्तदश्यस्य वैमृधादिविकृतिविशेषसंबन्धे सहसा प्रतिपन्ने सति तद्विरोधात् सर्वप्रकृतिसंबन्धो न कल्पयितुं शक्यः । अनारभ्यवादस्तु चोदकप्राप्तस्य पाञ्चदश्यस्य बाधकः । सर्वथाऽपि चतुर्धाकरणवदुपसंहारो न त्वाज्यभागवदपूर्वं कर्म ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्यस्य प्रथमाध्याये प्रथमः खण्डः ॥ १ ॥

जो इस प्रकार [रहस्य को] जानता है, वह [संवत्सरात्मक] प्रजापति के आयतन स्वरूप अर्थात् आश्रयभूत सामिधेनियों से समृद्धि को प्राप्त करता है ।

॥ प्रथम अध्याय में प्रथम खण्ड की हिन्दी समाप्त ॥ १ ॥

---

१. जै० न्या० वि० १०.८–९.१७–१९ । २. द्र० पूर्व पृ० २० पं० ४ ।
३. वैमृधेष्टिः तै० सं० २.५.२.४ । शत० ब्रा० ९.५.२.५ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ द्वितीयः खण्डः

दीक्षणीयेष्टिं निरूप्य तत्प्रशंसार्थमिष्टिशब्दनिर्वचनं दर्शयति—

**यज्ञो वै देवेभ्य उदक्रामत् तमिष्टिभिः प्रैषमैच्छन्यदिष्टिभिः प्रैषमैच्छं-स्तदिष्टीनामिष्टित्वं तमन्वविन्दन् ॥ इति ।**

ज्योतिष्टोमाभिमानी यज्ञपुरुषः केनापि निमित्तेनापरक्तो देवेभ्योऽपक्रान्तवान् । तं यज्ञं देवा दीक्षणीयाप्रायणीयादिभिरिष्टिभिः प्रैषमन्वेष्टुमैच्छन् । इच्छन्ति यज्ञमाभिरितीष्टिशब्दव्युत्पत्तिः । यजतिधातोरिष्टिशब्दः सर्वत्र प्रसिद्धः ।[1] अत्र त्विच्छतिधातोरिति विशेषः ।[2] अन्विष्य तं यज्ञमनुक्रमेण लब्धवन्तः ।

[अब इष्टि शब्द का निर्वचन करते हैं|—यज्ञ देवों के पास से चला गया। उस [यज्ञ] को दीक्षणीया और प्रायणीयादि इष्टियों द्वारा उन्होंने खोजना चाहा। इष्टियों का इष्टित्व इसलिए है कि उन्होंने इनके द्वारा यज्ञ को खोजने की इच्छा की। उन्होंने उस [यज्ञ] को पा लिया।

तल्लाभवेदनं प्रशंसति—

**अनुवित्तयज्ञो राध्नोति य एवं वेद ॥ इति ।**

वेदिता तदनुष्ठानेन लब्धयज्ञः फलेन समृद्धो भवति ॥

जो इस रहस्य को जानता है वह [उसके अनुष्ठान से] यज्ञ को पाकर फल से समृद्धि को प्राप्त करता है।

पुनरपि दीक्षणीयादीष्टिप्रशंसार्थं तास्विष्टिषु विद्यमानानामाहुतीनां वाचकं शब्दं निर्वक्ति—

**आहूतयो वै नामैता यदाहुतय एताभिर्वै देवान् यजमानो ह्वयति तदाहुतीनामाहूतित्वम् ॥ इति ।**

आहुतय इत्युकारेण ह्रस्वेनाऽऽहूतय इत्येवं दीर्घेण युक्तं द्रष्टव्यम् । ह्वयत्याभिरिति तद्व्युत्पत्तिः । जुहोतिधातोरुत्पन्नः शब्दः पूर्वं प्रसिद्धः ।[3] अयं तु ह्वयतिधातोरुत्पन्न इति विशेषः ॥[4]

---

१. 'श्रुयजीषिस्तुभ्यः करणे'—इति पा० सू० ३.३.९४ वा० १। अमरकोष ३.४.४१।
२. 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' इति पा० सू० ३.३.९६।
३. 'तृन्विधावृत्विक्षु चानुपसर्गस्येति वक्तव्यम्' इति पा० सू० ३.२.१३५ वा० १। 'नप्तृनेष्टृव'—इतिउणा० २५२। 'जुहोतेत्यौर्णवाभः'—इति निरु० ७.१५।
४ ह्वातव्यः'—इति, 'होतारं ह्वातारम्'—इति च निरु० ४.४.५; ७.१५।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वस्तुतः [दीर्घ ऊ वाले] 'आहूति' [=बुलाना] को [ह्रस्व उ वाला] 'आहुति' कहते हैं। क्योंकि इसके द्वारा यजमान देवताओं को बुलाते हैं। यही आहुतियों का आहूतित्व है।

इष्टीराहुतीश्च मिलित्वा प्रकारान्तरेण प्रशंसति—

**ऊतयः खलु वै ता नाम याभिर्देवा यजमानस्य हवमायन्ति, ये वै पन्थानो याः स्रुतयस्ता वा ऊतयस्त उ एवैतत्स्वर्गयाणा यजमानस्य भवन्ति ॥ इति।**

हूयन्ते देवा अस्मिन्निति हवोऽत्र सोमयागो याभिरिष्टिभिस्तत्र ताभिराहुतिभिश्च निमित्तभूताभिर्देवा यजमानस्य यज्ञमागच्छन्ति ता इष्टय आहूतयश्चोतय इत्येतन्नाम प्रतिपद्यन्ते। खलुशब्दो वैशब्दश्च प्रसिद्धयर्थः। अवन्ति रक्षन्तीत्यवतेर्धातोरूतिशब्दः प्रसिद्धः। आयन्त्यागच्छन्ति याभिरित्याङ्पूर्वस्यायतिधातोर्वा वर्णविकारेणोतिशब्दः। यद्वा तस्मादेव धातोः स्वर्गप्रापकत्वाभिप्रायेण शब्दो व्युत्पाद्यते।[1] ये केचित् पन्थान इष्टिरूपाः स्वर्गस्य प्रौढमार्गाः सन्ति याश्च स्रुतयस्तन्मार्गावयवरूपा आहुतयः सन्ति ता द्विविधा ऊतय इत्युच्यन्ते। त उ एवैतत्त एवैते द्विविधा अपि मार्गा यजमानस्य स्वर्ग-याणाः स्वर्गप्रापका भवन्ति ॥

[इष्टि और आहुतियाँ मिलकर] ये ऊतियाँ [=रास्ते] हैं, क्योंकि इन्हीं के द्वारा देवता यजमान के बुलाने पर आते हैं। जो कोई भी [इष्टि रूप स्वर्ग के] मार्ग हैं और जो [उस मार्ग को अवयव रूप] आहुतियाँ हैं ये द्विविध रास्ते ऊतियाँ कही गई हैं। इस प्रकार निश्चय ही वे यजमान की स्वर्ग प्रापक [अर्थात् स्वर्ग तक पहुँचने की मार्गस्वरूप] होती हैं [प्रस्तुत स्थल पर 'आहुति' अर्थात् होम और 'आहूति' अर्थात् आह्वान है। दोनों शब्दों की समानता दिखलाई गई है अर्थात् हवन में आहुति देना मानों देवों को बुलाना है]।

पुनरपीष्टिप्रशंसार्थं तदङ्गभूतयोर्याज्यानुवाक्ययोर्वक्तरि प्रयुज्यमानं होतृशब्दं निर्वक्तुं ब्रह्मवादिनां प्रश्नमवतारयति—

**तदाहुर्यदन्यो जुहोत्यथ योऽनु चाऽऽह यजति च कस्मात् तं होतेत्या-चक्षत इति ॥ इति।**

तत्तास्विष्टिषु किंचिच्चोद्यमाहुः। यद्यस्मात् कारणाद्धोतुरन्योऽध्वर्युर्जुहोति तस्मात् तत्कारणात् तद्धातुनिष्पन्नो होतृशब्दस्तस्याध्वर्योर्युक्तः। याज्ञिकास्तु तमध्वर्युं होतेति नाऽऽचक्षते। अथ यः पुमान् अनु चाऽऽह पुरोनुवाक्यां चानुब्रूते यजति च याज्यां च पठति तं पुमांसमनुवक्तेति यष्टेति चानभिधाय कस्मात् कारणाद्धोतेत्याचक्षते। इति-शब्दः प्रश्नसमाप्त्यर्थः ॥

1. 'ऊतिः' निघ० ४.२.१५; 'ऊतिरवनात्'—इति च निरु० ५.१.३।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[होतृ शब्द के निर्वचन के लिए प्रश्न करते हैं कि—] जब आहुति देने वाला [होता से] दूसरा अर्थात् 'अध्वर्यु' कहलाता है तो अनुवाक्या एवं याज्या [मन्त्रों] के पढ़ने वाले को [यष्टा न कहकर] 'होता' नाम से क्यों पुकारा जाता है ?

अभिज्ञानामभिप्रेतं प्रश्नस्योत्तरं दर्शयति—

**यद्वाव स तत्र यथाभाजनं देवता अमुमावहामुमावहेत्यावाहयति तदेव होतुर्होतृत्वं होता भवति ॥ इति ।**

'यद्वाव' यस्मादेव कारणाद्याज्यानुवाक्ययोर्वक्ता स पुमांस्तत्र यागे यथाभाजनं यथास्थानं सर्वा देवता आवाहयति–अमुमग्निमावह, अमुं सोममावहेति[1] तदेव तस्मादेव कारणाद्याज्ञिकप्रसिद्धस्य होतुस्तन्नाम संपन्नम् । अत्र ण्यन्तस्य वहधातोश्छान्दस्या प्रक्रियया होतृशब्दनिष्पत्तिर्न तु जुहोतिधातोस्तस्माद्धोमकर्तृत्वाभावेऽप्यावाहयितृत्वसद्भावाद्धोतृत्वमुपपन्नमित्ययं याज्यानुवाक्ययोर्वक्ताऽपि होता भवत्येव ॥

[उत्तर देते हैं कि] क्योंकि वह सभी देवताओं को यथास्थान यह कहकर बुलाता है कि 'अमुक [अग्नि] को बुलाओ', 'अमुक [सोम] को बुलाओ' । इसीलिए 'होता' का होतृत्व होने से 'होता' यह नाम निष्पन्न है ।

होतृत्ववेदनं प्रशंसति—

**होतेत्येनमाचक्षते य एवं वेद ॥ २ ॥ इति ।**

याज्ञिका एनं वेदितारं होतारं मुख्यो होतेति कथयन्ति । हौत्रे कर्मणि कुशलो भवतीत्यर्थः ॥[2]

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्यस्य प्रथमाध्याये द्वितीयः खण्डः ॥ २ ॥

[याज्ञिक लोग] इस प्रकार जानने वाले उस [आह्वाता] को 'होता' इस नाम से पुकारते हैं ।

॥ प्रथम अध्याय में द्वितीय खण्ड की हिन्दी समाप्त ॥ २ ॥

---

## अथ तृतीयः खण्डः

इत्थमिष्ट्याहूत्यूतिहोतृशब्दानां निर्वचनेन दीक्षणीयेष्टिं प्रशस्य तयेष्ट्या दीक्षितस्य संस्कारविशेषान् विधातुं प्रस्तौति—

**पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्ति ॥ इति ।**

---

१. "अग्निमग्न आवह । सोममावह । अग्निमावह" इत्यादयः तै० ब्रा० ३.५.३-२ ।

२. 'तस्य धर्म्यम्' 'अण् महिष्यादिभ्यः'–इति पा० सू० ४.४.४७,४८ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यं यजमानं दीक्षणीयेष्टचा दीक्षितं कुर्वन्ति तं यजमानं पुरा मातापितरौ कंचित्-कालं गर्भं कृतवन्तौ पुनरप्येनमिदानीमृत्विजो यज्ञकाले गर्भं कुर्वन्ति गर्भवदसौ संस्कारैः पालनीय इत्यर्थः ॥

जिस [यजमान] को [दीक्षणीया इष्टि से] दीक्षित करते हैं, ऋत्विज् उसको मानो फिर से [यज्ञकाल में] गर्भ रूप करते हैं, [अर्थात् गर्भ के समान संस्कारों द्वारा यजमान पालनीय है] ।

एकं संस्कारं विधत्ते—

**अद्भिरभिषिञ्चन्ति ॥** इति ।

अप्सु स्नपयन्तीत्यर्थः । एतदेवाभिप्रेत्य तैत्तिरीया यजमानस्य वपनादूर्ध्वं स्नान-मामनन्ति –'अङ्गिरसः सुवर्गं लोकं यन्तोऽप्सु दीक्षातपसी[1] प्रावेशयन् । अप्सु स्नाति साक्षादेव दीक्षातपसी अवरुन्धे'[2] इति । यजमानस्य स्नानकर्तृत्वेऽपि ऋत्विजां स्नाप-यितृत्वमभिप्रेत्याभिषिञ्चन्तीत्युक्तम् ॥

जल से अभिषेक करते हैं ।

उक्तानामपां प्रशंसामाह—

**रेतो वा आपः सरेतसमेवैनं तत्कृत्वा दीक्षयन्ति ॥** इति ।

कार्यकारणयोरभेदादपां रेतस्त्वं वैराजदेहगताद्रेतस आप उत्पन्नाः । तथा चाऽऽ-रण्यके सृष्टिप्रकरणे समाम्नायते—'शिश्नाद्रेतो रेतस आपः'[3] इति । यद्वा, मनुष्यादि-शरीरगतं रेतोमूत्रादिकमपां कार्यम् । तच्च गर्भोपनिषद्याम्नातम्—'अस्मिन् पञ्चात्मके शरीरे यत्कठिनं सा पृथिवी यद्द्रवं तदापः' इति । तत्तेनाभिषेचनेनैनं यजमानं सरेतसं पुत्रोत्पादनसमर्थं कृत्वा संस्कुर्वन्ति ॥

[जल की प्रशंसा करते हैं कि] जल वीर्य है इसलिए इस अभिषेचन से इस [यजमान] को मानो वीर्यवान् बनाकर अर्थात् पुत्रोत्पादन समर्थ करके संस्कृत करते हैं ।

संस्कारान्तरं विधत्ते—

**नवनीतेनाभ्यञ्जन्ति ॥** इति ।

सर्वस्मिन्नपि शरीरेऽनुलेपयन्तीत्यर्थः ॥

नवनीत से अर्थात् ताजे मक्खन से सम्पूर्ण शरीर में अनुलेप करते हैं ।

---

१. 'मुण्डनादिसंस्कारो दीक्षा, आहारादिनियमस्तपः; अप्सु स्नानेन तदुभयमव्यवधा-नेन प्राप्नोति–इति च तद्भाष्यं सायणीयम् । २. तै० सं० ६.१.१ २ ।
३. ऐ० आ० २.४.१.६ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नवनीतस्य गर्भस्थानीययजमानयोग्यतां दर्शयति—

**आज्यं वै देवानां, सुरभि घृतं मनुष्याणाम्, आयुतं पितॄणां, नवनीतं गर्भाणां तद्यन्नवनीतेनाभ्यञ्जन्ति स्वेनैवैनं तद्भागधेयेन समर्धयन्ति ॥** इति ।

आज्यघृतयोर्भेदः पूर्वाचार्यैरुदाहृतः—"सर्पिर्विलीनमाज्यं स्याद् घनीभूतं घृतं विदुः"[1] इति । ईषद्विलीनमायुतं सुरभि योग्यं प्रियमित्यर्थः । घृतायुतनवनीतेष्वप्येतत्पदमनुवर्तते । ननु तैत्तिरीया घृतस्य देवप्रियत्वमामनन्ति—'घृतं देवानां मस्तु पितॄणां निष्पक्वं मनुष्याणाम्' इति ।[2] ईषद्विलीनं मस्तु । निःशेषेण विलीनं निष्पक्वम् ।[3] नायं दोष उभयत्र नवनीतप्रशंसारूपार्थवादत्वेन घृताज्ययोर्व्यत्ययेन पाठेऽपि विरोधाभावात् । तथा सति नवनीतस्य गर्भयोग्यत्वे सति यदि नवनीतेनाभ्यङ्गं कुर्युस्तदानीमेनं यजमानं स्वोचितेनैव भागेन समृद्धं कुर्वन्ति ॥

**'आज्य' देवताओं के लिए होता है, सुरभि युक्त 'घृत' मनुष्यों के लिए होता है, 'आयुत' पितरों के लिए होता है और 'नवनीत' [=ताजा मक्खन] गर्भस्थ जीवों के लिए होता है। [घी के ये चार प्रकार बताए गए हैं। इनमें १. 'आज्य' पिघले घी को, २. घृत जमे हुए घी को, ३. आयुत आधे पिघले घी को कहते हैं; और ४. नवनीत, इससे ही ये तीन घी बनते हैं]। इसलिए नवनीत से जो अनुलेपन किया जाता है उसका तात्पर्य यह है कि उस यजमान को उसके ही उचित भाग के द्वारा समृद्ध करते हैं।**

नेत्रयोरञ्जनेन संस्कारं विधत्ते—

**आञ्जन्त्येनम् ॥** इति ।

**इस [यजमान की दोनों आँखों] में अञ्जन लगाते हैं।**

अक्ष्णोर्दृष्टिप्रसादहेतुत्वेनाञ्जनं प्रशंसति—

**तेजो वा एतदक्ष्योर्यदाञ्जनं सतेजसमेवैनं तत्कृत्वा दीक्षयन्ति ॥** इति ।

आञ्जनस्याक्षितेजस्त्वं लोके प्रसिद्धम् । तत्प्रकारविशेषः शाखान्तरे 'दक्षिणं पूर्वमाङ्क्ते'[4] इत्यादिना विहितः ।

---

१. 'विलीनार्धमायुतं तु नवनीतो यतो घृतम्' इत्याहुः ।

२. सं० ६.१.१.४ ।

३. नवनीतस्य पाकजन्यास्तिस्रोऽवस्थाः;—पक्वम्, ईषत्पक्वम्, निःशेषपक्वं च । द्रव्यन्तरप्रक्षेपेण सुरभि निःशेषपक्वम् । अत एव बह्वृचाः पठन्ति—'आज्यं वै देवानाम्'—इति तै० ब्रा० १.१.३—इति तत्रैव सा० भा० ।

४. तै० सं० ६.१.१.५,६ । तद्यथा—'दक्षिणं पूर्वमाङ्क्ते; सव्यं हि·········कुतः सतूलत्वनियमः'—इत्यादि तत्र । सा० भा० शत० ब्राह्मणेऽपि "अथाक्ष्यावनक्ति"—इत्यादि ३.१.३.१०–१७ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अञ्जन इन दोनों आँखों का तेज है। इस प्रकार जो अञ्जन लगाते हैं उसका तात्पर्य यह है कि उस [यजमान] को तेजोयुक्त करके दीक्षित करते हैं।

संस्कारान्तरे विधत्ते—

एकविंशत्या दर्भपिञ्जूलैः पावयन्ति ।। इति ।

दर्भपिञ्जूलशब्देन कुशसंघा उच्यन्ते। तैरेकविंशतिसंख्याकैर्यजमानं मार्जयित्वा शुद्धं कुर्युः ।।[1]

कुश के इक्कीस मुट्ठों से [दर्भ पिञ्जूल अर्थात् कुश के संघात से इस यजमान को मार्जन करके] शुद्ध करते हैं।

यद्यप्यसावभिषेकेणैव शुद्धस्तथाऽप्यतिशयेन शुद्धिरित्येत्रमभिप्रायं दर्शयति—

शुद्धमेवैनं तत्पूतं दीक्षयन्ति ।। इति ।

पूर्वमपि शुद्धमेव सन्तमेनं यजमानं पुनरपि तत्तेन कुशसङ्घमार्जनेन पूतं कृत्वा संस्कुर्वन्ति। यद्यपि शाखान्तरे[2]—'द्वाभ्यां पावयति अहोरात्राभ्यामेवैनं पावयति त्रिभिः पावयति' इत्यादिना संख्यान्तरविषया बहवः पक्षा उन्यस्तास्तथाऽप्येते सर्व एकविंशत्यन्तर्भावादवयुत्यानुवादरूपाः प्रशंसार्थाः। अत एव तत्रान्तिमे पर्याय एकविंशत्या पावयतीत्युपसंहारः कृतः ।।[3]

पहले ही से शुद्ध यजमान को फिर से जो शुद्ध करते हैं उससे उसे पवित्र करके दीक्षित करते हैं।

उक्तैः संस्कारैः संस्कृतस्य दीक्षितस्य प्राचीनवंशाख्यशालाप्रवेशं विधत्ते—

दीक्षितविमितं प्रपादयन्ति ।। इति ।

दीक्षितस्य प्रवेशार्थं विशेषेण निर्मितः प्राचीनवंशो दीक्षितविमितस्तं प्रवेशयेयुः ।।

दीक्षित पुरुष के लिए विशेष रूप से निर्मित स्थान [—दीक्षित विमित] पर उसे ले जाते हैं।

पूर्वत्र दीक्षितस्य गर्भत्वाभिधानादौचित्येन प्राचीनवंशं योनित्वेन प्रशंसति—

योनिर्वा एषा दीक्षितस्य यद्दीक्षितविमितं योनिमेवैनं तत्स्वां प्रपादयन्ति ।। इति ।

प्राचीनवंशस्य योनित्वोपचारात् तत्तेन प्राचीनवंशप्रवेशेन स्वकीययोनिप्रवेशः संपाद्यते। सोऽयं प्रवेशः शाखान्तरे विस्पष्टमाम्नायते—'बहिः पावयित्वाऽन्तः प्रपादयति

---

१. तु० आप० श्रौ० १०.७.५। 'अथैनमुत्तरेण बहिः प्राग्वंशाद् दर्भपिञ्जूलैः पावयति'।
२. तै० सं० ६.१.१.७,८। तन्मन्त्रा अपि तत्रैव पुरस्तात् १.२.१।
३. द्वाभ्याम्, त्रिभिः, पञ्चभिः, षड्भिः, सप्तभिः, नवभिः, एकविंशत्या।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मनुष्यलोक एवैनं पावयित्वा पूतं देवलोकं प्रणयति'[1] इति । आपस्तम्बोऽप्याह—'आग्ने देवास ईमह इति पूर्वया द्वारा प्राग्वंशं प्रविश्य'[2] इति ॥

जो दीक्षितनिमित है यह दीक्षित पुरुष की योनि [=उत्पत्ति स्थान] है। दीक्षित पुरुष के लिए नियतस्थान में जो ले जाते हैं मानो वह उसे उसकी ही योनि में ले जाते हैं।

तस्य दीक्षितस्य कंचिन्नियमं विधत्ते—

**तस्माद् ध्रुवाद्योनेरास्ते च चरति च ॥** इति ।

अत्र तिस्रः पञ्चम्यः सप्तम्यर्थे द्रष्टव्याः । तस्मिन् दीक्षितार्थं निर्मितदेवयजनाख्ये स्थिरस्थाने स दीक्षित उपवेशनं संचरणं च कुर्यात् ।

इसलिए वह उस ध्रुव योनि [स्थिर स्थान] में बैठता है, और फिर चलता है।

विहितमर्थं प्रशंसति—

**तस्माद् ध्रुवाद्योनेर्गर्भा धीयन्ते च प्र च जायन्ते ॥** इति ।

यस्माद् गर्भस्थानीयस्य दीक्षितस्य स्थिरे देवयजनस्थाने योनिरूप उपवेशनं संचरणं च तस्माल्लोकेऽपि स्थिरे योनिमध्ये नवसंख्याकान् मासान् गर्भा धार्यन्ते, तस्मादेव स्थिराद्योनिमध्यादुत्पद्यन्ते ॥

इसीलिए [गर्भ स्थानीय दीक्षित को योनिरूपी स्थिर देवयजनस्थान में ले जाते हैं और संचरण कराते हैं क्योंकि] लोक में गर्भ योनियों में सुरक्षित रक्खे जाते हैं और वहाँ से उत्पन्न होते हैं।

तस्य दीक्षितस्य देवयजनाद् बहिर्निर्गमनं निषेधति—

**तस्माद् दीक्षितं नान्यत्र दीक्षितविमितादादित्योऽभ्युदियाद्वाऽभ्यस्तमियाद्वाऽपि वाऽभ्याश्रावयेयुः ॥** इति ।

यस्माद् दीक्षितस्योपवेशनसंचरणयोर्देवयजनमेव स्थानं तस्मात् कारणाद् दीक्षितविमिताद् देवयजनदेशादन्यत्र बहिर्देशे दीक्षितमभिलक्ष्याऽऽदित्यो नोदियान्नास्तमियाच्च । किंचर्त्विजो यं बहिरवस्थितं दीक्षितमभिलक्ष्याऽऽश्रावणादिकं न कुर्युः ।[3] यद्यपि ध्रुवाद्योनेरास्ते चरतिविधानादेवायमर्थः सिद्धस्तथाऽपि मलमूत्रविसर्गाद्यावश्यककार्यार्थं कदाचिद् बहिर्निर्गमनमभ्युपगम्य तत्र विशेषाभिधानमेतत् । कालान्तरे कथंचिद् गमनेऽप्युदयास्तमयाश्रवणादिकालेषु सर्वथा न निर्गच्छेदित्यर्थः । तदेतद् दृष्टान्तपुरःसरं शाखान्तरे[4] प्रपञ्चितम्—'गर्भो वा एष यद्दीक्षितो योनिर्दीक्षितविमितं यद्दीक्षितो दीक्षितविमितात् प्रवसेद् यथा योनेर्गर्भः स्कन्दति तादृगेव तत्र प्रवस्तव्यमात्मनो गोपीथाय'[5] इति ॥

---

१. तै० सं० ६.१.२.१ ।  २. आप० श्रौ० १०.८.१ ।

३. तु० आश्व० श्रौ० १२.८, आप० श्रौ० १०.१५.५ ।

४. तै० सं० ६.२.५.४ ।  ५. द्र० शत० ब्रा० ३.२.१ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इसलिए दीक्षित-स्थान के बाहर अन्य स्थान पर दीक्षित पुरुष को अभिलक्षित करके सूर्य न तो उदय हो और न ही अस्त हों। [अर्थात् बाहर जाना तो दूर रहा] उसको अभिलक्षित करके ऋत्विज् वार्तालाप भी न करें।

संस्कारान्तरं विधत्ते—

**वाससा प्रोर्णुवन्ति ॥ इति ।**

ऋत्विजो यजमानं वस्त्रेणाऽऽच्छादयेयुः ॥

[ऋत्विज् यजमान को] वस्त्र से आच्छादित करते हैं।

गर्भस्थानीयं दीक्षितं प्रत्यौचित्येन वस्त्रस्योल्वत्वं दर्शयति—

**उल्बं वा एतद्दीक्षितस्य यद्वास उल्बेनैवैनं तत् प्रोर्णुवन्ति ॥ इति ।**

उल्बशब्देन गर्भस्याभ्यन्तरं चर्म सर्ववेष्टनमुच्यते । अयमर्थः शाखान्तरे स्पष्टीकृतः—'गर्भो वा एष यद्दीक्षित उल्बं वासः प्रोर्णुते तस्माद् गर्भाः प्रावृता जायन्ते'[1] इति ॥

[गर्भस्थानीय दीक्षित पुरुष के प्रति वस्त्र का औचित्य यह है कि गर्भ के आभ्यन्तर चर्म को 'उल्ब' कहते हैं अतः] दीक्षित पुरुष का यह जो वस्त्र है वह उल्ब ही है, वह मानो उल्ब से ही इसे वेष्टित करते हैं।

वाससो बहिर्वेष्टनान्तरं विधत्ते—

**कृष्णाजिनमुत्तरं भवति ॥ इति ।**

[वस्त्र के] ऊपर कृष्णाजिन अर्थात् काले मृग का चर्म लपेटते हैं।

बहिर्वेष्टनत्वसाम्येन कृष्णाजिनस्य जरायुरूपत्वं दर्शयति—

**उत्तरं वा उल्बाज्जरायु[2] जरायुणैवैनं तत् प्रोर्णुवन्ति ॥ इति ।**

उल्ब के ऊपर जरायु होता है, इस प्रकार वे उसको मानो जरायु से ही आच्छादित करते हैं।

संस्कारान्तरं विधत्ते—

**मुष्टी कुरुते ॥ इति ।**

यजमानो हस्तयोर्मुष्टिं कुर्यात् । तत्प्रकार आपस्तम्बेन स्पष्टमभिहितः—'अथाङ्गुलीर्न्यञ्चति । स्वाहा यज्ञं मनसेति द्वे स्वाहा दिव इति द्वे स्वाहा पृथिव्या इति द्वे स्वाहोरोरन्तरिक्षादिति द्वे स्वाहा यज्ञं वातादारभ इति मुष्टीकरोति'[3] इति ॥

---

१. तै० सं० ६.१.३.२ ।

२. येनावेष्टितो जायते गर्भस्तदुल्बं भवति । यत् पुनर्गर्भावरणं गर्भाशय एव तिष्ठति तज्जरायुर्भवति' इति गोविन्दस्वामी ।

३. आप० श्रौ० १०.११.३.४ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**[यजमान को दोनों हाथ की] मुट्ठी बाँधना चाहिए।**

गर्भसाम्येन यज्ञस्य सर्वदेवतानां च धारणेन प्रशंसति—

**मुष्टी वै कृत्वा गर्भोऽन्तः शेते, मुष्टी कृत्वा कुमारो जायते, तद्यन्मुष्टी कुरुते यज्ञं चैव तत्सर्वाश्च देवता मुष्टयोः कुरुते ॥ इति।**

गर्भस्य मुष्टीद्वये शास्त्रप्रसिद्धयर्थो वैशब्दः। जायमानस्य मुष्टिद्वयं लोके प्रसिद्धम्। मुष्टिमध्ये यज्ञधारणं शाखान्तरेऽप्याम्नातम्—'मुष्टी करोति वाचं यच्छति यज्ञस्य धृत्यै'[1] इति ॥

**क्योंकि गर्भ [योनि के] अन्दर मुट्ठी बाँधे हुए ही सोता है और मुट्ठी बाँधकर ही बच्चा जन्म भी लेता है। यह जो वह मुट्ठी बाँधता है, मानो अपने दोनों हाथों में वह यज्ञ एवं सभी देवताओं को मुट्ठी में ले लेता है।**

प्रकारान्तरेण मुष्टिद्वयं प्रशंसति—

**तदाहुर्न पूर्वदीक्षिणः संसवोऽस्ति, परिगृहीतो वा एतस्य यज्ञः, परिगृहीता देवता नैतस्याऽऽर्तिरस्त्यपरदीक्षिण एव यथा तथेति ॥ इति।**

तत्तत्र मुष्ट्योः करणे ब्रह्मवादिनः कंचिद्गुणमाहुः। द्वयोर्बहूनां वा यजमानानां संभूय सोमाभिषवः 'संसवः'। स च महान् दोषस्तस्मिन्नेव देशे तस्मिन्नेव काले मत्सरग्रस्तैर्यजमानैः प्रवर्तितत्वात्। नद्या वा पर्वतेन वा व्यवधानरहितयोः समीपवर्तिनोः परस्परमन्त्रध्वनिसवनयोग्ययोर्देशयोः स्पर्धमानाभ्यां यजमानाभ्यां प्रवर्तितौ यौ सोमयागौ तयोरयं संसवाख्यो दोषः। तथा च सूत्रकार आह—'संसवोऽनन्तर्हितेषु नद्या वा पर्वतेन वा'[2] इति। सोऽयं दोषः पूर्वदीक्षिणो नास्ति। एकस्मिन्नेव दिवसे द्वयोर्यजमानयोर्मध्ये यः पूर्वं दीक्षणीयेष्टिं करोति स पूर्वदीक्षी। एतस्य मुष्ट्योर्मध्ये यज्ञः परिगृहीतः सर्वाश्च देवताः परिगृहीताः। तदानीमितरसंबन्धिनो यज्ञस्याप्रवृत्तत्वेन तत्र गच्छाम इत्येवं यज्ञस्य देवतानां वाऽऽलोचनाभावात्। पश्चाद् दीक्षणीयेष्टिं कुर्वाणस्यापरदीक्षितस्य यज्ञो देवताश्च सुलभा न भवन्ति पूर्वमन्येन यजमानेनावरुद्धत्वात्। तस्माद् अपरदीक्षिण आर्तियो विनाशो यथाऽस्ति तथा पूर्वदीक्षिण आर्तिर्नैवास्ति। 'संवेशाय त्वोपवेशाय त्वा' इत्यादिमन्त्रेण येयं संसवप्रायश्चित्ताहुतिः[3] सेयमपरदीक्षिणैव कर्तव्या न पूर्वदीक्षिणेत्यर्थः। इतिशब्दो ब्रह्मवादिवचनसमाप्त्यर्थः ॥

**इसलिए ब्रह्मवादियों के द्वारा कहा जाता है कि जो पुरुष पहले दीक्षित होता है उसकी मुट्ठी में यज्ञ होता है और उसकी मुट्ठी में देवता होते हैं और उसे संसवदोष भी नहीं लगता [अर्थात् दो या अधिक यजमानों का एक स्थान पर सोमाभिषव करना**

---

१. तै० सं० ६.१.४.३।  २. आश्व० श्रौ० ६.६.११।

३. तत्र संवेशाय त्वेत्यादयः पञ्च मन्त्राः तै० सं० ३.१७.१।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'संसव' कहलाता है और यह दोष है क्योंकि एक ही स्थान पर ईर्ष्यावशात् यजमान उसमें प्रवर्तित होते हैं। इसलिए बाद में दीक्षणीया इष्टि करने वाले को जैसा दुःख होता है वैसा पूर्व दीक्षित यजमान को नहीं होता।]

यदेतत् कृष्णाजिनवेष्टनं विहितं तस्यावभृथगमनात् प्रागेवोन्मोचनं विधत्ते—

**उन्मुच्य कृष्णाजिनमवभृथमभ्यवैति, तस्मान्मुक्ता गर्भा जरायोर्जायन्ते ॥ इति ।**

योनिस्थानीयाद् देवयजनदेशान्निर्गत्यावभृथगमनं गर्भरूपस्य दीक्षितस्य जन्मस्थानीयं जन्म च लोके जरायुरूपवेष्टने छिन्ने सति पश्चात् संपद्यते। तस्मादत्रापि जरायुस्थानीयं कृष्णाजिनमुन्मुच्य जन्मस्थानीयमवभृथदेशगमनं कुर्यात् ॥

अब वह कृष्णाजिन को उतार कर अवभृथ [=स्नान] के लिए जाता है। [योनि-स्थानीय देवयजन प्रदेश से निकलकर स्नान के लिए जाना गर्भरूप दीक्षित यजमान का मानो जन्म होना है।] क्योंकि लोक में बच्चे इसी प्रकार जरायु से बाहर निकल कर जन्म लेते हैं।

कृष्णाजिनवद्वाससोऽपि प्रसक्तमुन्मोचनं वारयति—

**सहैव वाससाऽभ्यवैति, तस्मात् सहैवोल्बेन कुमारो जायते ॥ ३ ॥**

उल्बाख्यस्याभ्यन्तरवेष्टनस्य जन्मकालेऽप्यनिवृत्तिदर्शनादुल्बस्थानीयवस्त्रस्यावभृथ-गमनकालेऽप्यनुवृत्तिर्द्रष्टव्या ॥

अथ मीमांसा। पञ्चमाध्यायस्य तृतीयपादे[1] चिन्तितम्—

"इष्टिदण्डादिभिर्दीक्षा किंवेष्टचैवोक्तितोऽग्रिमः।
युक्तः संस्कार इष्टचैव दण्डादेर्व्यञ्जकत्वतः" ॥

ज्योतिष्टोमे श्रूयते—'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः'[2] इति। अन्यदपि श्रुतम्—'दण्डेन दीक्षयति कृष्णाजिनेन दीक्षयति'[3] इति। अत्रेष्टिवद्दण्डादीनामपि साधनत्वविधानात् सर्वैरियं दीक्षेति चेत्, मैवम्। इष्टेः क्रियारूपत्वात् संस्कारहेतुत्वं युक्तं दण्डादयस्तु द्रव्यरूपा न पुरुषं संस्कर्तुं प्रभवन्ति। न चैवं दण्डादिवैयर्थ्यं दीक्षितोऽयमित्यभिव्यक्तिरूपस्य दृष्टप्रयोजनस्य सद्भावात् तस्मादिष्टचैव दीक्षा सिध्यति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेय-
ब्राह्मणभाष्यस्य प्रथमाध्याये तृतीयः खण्डः ॥ ३ ॥

वह यजमान वस्त्र के साथ ही [लपेटे हुए] स्नान करता है। क्योंकि [लोक में भी] उल्ब के सहित ही बच्चे जन्म लेते हैं।

॥ इस प्रकार प्रथम अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

---

१. जै० न्या० वि० ५.३.११.२९।
२. तै० सं० ५.६.१.४। ३. तै० सं० ६.१.३.२।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ चतुर्थः खण्डः

विवक्षितस्य हौत्रस्योपोद्घातत्वेन दीक्षणीयेष्टिं विधाय तां च बहुधा प्रशस्य प्रसङ्गाद् दीक्षितसंस्कारा विहिताः ।

अथ विवक्षितं हौत्रं विधत्ते—

**'त्वमग्ने सप्रथा असि' 'सोम यास्ते मयोभुव' इत्याज्यभागयोः पुरोनुवाक्ये अनुब्रूयाद्यः पूर्वमनीजानः स्यात् तस्मै ॥ इति ।**

यो यजमान इतः पूर्वं सोमयागं न कृतवानिदानीं क्रियमाण एव प्रथमः प्रयोगस्तस्मै यजमानाय तदर्थं दीक्षणीयेष्टौ प्रथमस्याऽऽज्यभागस्य 'त्वमग्ने'[1] इति पुरोनुवाक्या । द्वितीयस्य 'सोम यास्ते'[2] इति पुरोनुवाक्या । तदुभयमध्वर्युणा प्रेषितो होताऽनुब्रूयात्[3] ॥

जिस यजमान ने पहले कभी सोमयाग नहीं किया है उसके लिए [दीक्षणीयेष्टि के बाद] 'त्वमग्ने' आदि प्रथम आज्यभाग की पुरोनुवाक्या को और 'सोम यास्ते' आदि द्वितीय आज्यभाग की पुरोनुवाक्या को [अध्वर्यु द्वारा प्रेषित 'होता' को] बोलना चाहिए ।

उक्तस्य प्रथममन्त्रस्य प्रथमप्रयोगानुकूल्यं दर्शयति—

**त्वया यज्ञं वितन्वत इति यज्ञमेवास्मा एतद् वितनोति ॥ इति ।**

तस्मिन् मन्त्रे त्वयेत्यादिस्तृतीयः पादः[4] तस्यायमर्थः—हे अग्ने, क्रियमाणमस्मद्यज्ञमिममृत्विजस्त्वया त्वत्प्रसादेन वितन्वते विस्तारयन्तीति । एतदेतेन मन्त्रवचनेनास्मै यजमानाय यज्ञं वितनोत्येव पूर्वमविस्तारितमपि यज्ञमिदानीं विस्तारयन्त्येव ॥

'हे अग्नि ! तुम्हारे प्रसाद से ऋत्विज् यज्ञ का विस्तार करते हैं' आदि इस मन्त्र के द्वारा इस यजमान के लिए यज्ञ का विस्तार करता है ।

अधिकारिविशेषेण प्रकारान्तरं विधत्ते—

**'अग्निः प्रत्नेन मन्मना', 'सोम' गीर्भिष्ट्वा वयम्' इति यः पूर्वमीजानः स्यात् तस्मै ॥ इति ।**

---

१. ऋ० ५.१३.४ । २. ऋ० १.९१.९ ।

३. आश्व० श्रौ०–'प्रेषितो जपति' १.१.२७ 'द्वे द्वे तु याज्यानुवाक्ये' २.१.७ । देवतलक्षणा याज्यानुवाक्याः' २.१४.१८ ।

४. पूर्णपाठस्त्वेवम्–"त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वितन्वते"—इति ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यो यजमानः पूर्वं सोमयागं कृतवांस्तस्मै यजमानार्थं पुनः सोमयागप्रयोगे दीक्षणीयेष्टौ 'अग्निः प्रत्नेन'[1] इति प्रथमस्याऽऽज्यभागस्य पुरोनुवाक्या । सोम गीर्भिरिति[2] द्वितीयस्य ॥[3]

जो यजमान पहले सोमयाग कर चुका है उसके लिए 'अग्निः प्रत्नेन' आदि प्रथम [आज्यभाग की] पुरोनुवाक्या का और 'सोम गीर्भिष्ट्वा' आदि द्वितीय [आज्यभाग की] पुरोनुवाक्या का पाठ 'होता' को करना चाहिए ।

तत्र प्रथम मन्त्रस्य पुनः प्रयोगानुकूल्यं दर्शयति—

**प्रत्नमिति पूर्वं कर्माभिवदति ॥** इति ।

तस्मिन् मन्त्रे यत्प्रत्नमिति पदं तेन पदेन पूर्वमनुष्ठितं सोमयागाख्यं कर्माभिधीयते । "पुराणे प्रतनप्रत्नपुरातनचिरंतनाः"[4] इति प्रत्नशब्दस्याभिधानकारैः पुरातनपर्यायत्वाभिधानात् ॥

[प्रथम मन्त्र में] 'प्रत्नम्' शब्द से पूर्व-अनुष्ठित [सोमयाग नामक] कर्म का अभिधान है ।

ईजानादीजानभेदेन व्यवस्थितं यन्मन्त्रचतुष्टयमुक्तं सोऽयं पूर्वः पक्ष इत्यभिप्रेत्य दूषयति—

**तत्तन्नाऽऽदृत्यम् ॥** इति ।

तत्र दीक्षणीयेष्टिगतयोराज्यभागयोस्त्वमग्न इत्यादिकमनुब्रूयादिति यन्मतमस्ति तन्मतं नाऽऽदरणीयम् ॥

किन्तु यह मत आदरणीय नहीं है [अर्थात् उन मन्त्रों को छोड़ा भी जा सकता है] ।

किं तर्ह्यादरणीयमित्याशङ्क्याऽऽह—

**'अग्निर्वृत्राणि जङ्घनत्', 'त्वं सोमासि सत्पतिः' इति वार्त्रघ्नावेव कुर्यात् ॥** इति ।

वृत्रं शत्रुं हन्तीति वृत्रहा । वृत्रघ्नः संबन्धिनौ मन्त्रौ वार्त्रघ्नौ । वृत्राणि जङ्घनदिति तल्लिङ्गात् तत्संबन्धित्वम् । अग्निर्वृत्राणीति[5] प्रथमस्याऽऽज्यभागस्य पुरोनुवाक्या त्वं सोमासीति[6] द्वितीयस्य ॥[7]

इनके स्थान पर वृत्रघ्न सम्बन्धी 'अग्निर्वृत्राणि' आदि और 'त्वं सोमासि' आदि दो मन्त्रों का पाठ करना चाहिए ।

---

१. ऋ० ८.४४.१२ । २. ऋ० १.९१.११ ।
३. आश्व० श्रौ० १.५.३५ । तै० ब्रा० ३.५.६.४,५; तै० सं० २.६.२ ।
४. अमरकोश ३.१.७७ । ५. ऋ० ६.१६.३४ । ६. ऋ० १.९१.५ ।
७. आश्व० श्रौ० १.५.२९ । तै० ब्रा० ३.५.६.१,२; तै० सं० २.६.२ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एतयोर्मन्त्रयोरानुकूल्यं दर्शयति—

**वृत्रं वा एष हन्ति यं यज्ञ उपनमति तस्माद् वार्त्रघ्नावेव कर्तव्यौ ॥इति ।**

यं यजमानं यज्ञ उपनमति सोमयागे प्रेरयति एष यजमानो वृत्रं पापरूपं शत्रुं हन्त्येव तस्मात् कारणाद् वृत्रहत्यासंबन्धिनावेव मन्त्रौ कर्तव्यौ । यथा प्रथममन्त्रे वृत्राणि जङ्घनदिति लिङ्गमस्ति तथा द्वितीयेऽपि त्वं राजोत वृत्रहेति लिङ्गं विद्यते । तस्मादुभयोरपि तत्संबन्धित्वं पूर्वोक्तयोस्तु पक्षयोर्वितन्वते प्रत्नमित्यानुकूल्यलिङ्गं प्रथमयोरेव मन्त्रयोर्दृश्यते न तूत्तरयोस्तस्मात् तन्नाऽऽदरणीयमिति दूषयित्वोभयलिङ्गसद्भावादयं पक्षः स्वीकृतः ॥

**क्योंकि जिस यजमान को सोमयाग में प्रेरित करता है यह [यजमान] वृत्र अर्थात् पापरूप शत्रु का वध करता है इसलिए वृत्र-हत्या सम्बन्धी दो मन्त्रों का ही प्रयोग करना चाहिए ।**

आज्यभागरूपेऽङ्गकर्मणि पुरोनुवाक्यायुग्मं विधाय प्रधानकर्मणि हविषि याज्यानुवाक्ये विधत्ते—

**अग्निर्मुखं प्रथमो देवतानामग्निश्च विष्णो तप उत्तमं मह इत्याग्नावैष्णवस्य हविषो याज्यानुवाक्ये भवतः ॥ इति ।**

प्रथमनिर्दिष्टत्वादग्निर्मुखमित्येषा[1] पुरोनुवाक्या पश्चान्निर्दिष्टत्वादग्निश्चेति[2] याज्या ।[3] यद्यप्यर्थानुसारेणानुवाक्यायाज्ये भवत[4] इति विधातव्यं तथाऽप्यल्पाच्तरमिति व्याकरणसूत्रानुसारेण[5] याज्याशब्दस्य पूर्वनिपातो द्रष्टव्यः ॥

**[आज्यभागरूप अङ्ग कर्म में पुरोनुवाक्या के विधान के बाद अब प्रधान कर्म में हवि की याज्या और अनुवाक्या का विधान करते हैं]—'अग्निर्मुखम्' इत्यादि और 'अग्निश्च विष्णो' इत्यादि अग्नि और विष्णु की हवि की क्रमशः पुरोनुवाक्या और याज्या**

---

१. तै० सं० २.४.३.३ ।

२. तै० सं० २.४.३.४ । ऋचावेतेऽन्यशाखीये गम्येते; आश्वलायनेन हि प्रपठ्य विहिते [श्रौ० ४.२.३] । तैत्तिरीय पाठस्तु किञ्चिद् भिन्न एवेति ।

३. 'सर्वेषामग्रेऽग्रेऽनुवाक्यास्ततो याज्याः'—इति आश्व० श्रौ० ३.७.३ ।

४. याज्यानुवाक्ययोर्लक्षणं दर्शयति—'पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति; जातानेव'''। उपरिष्टाल्लक्ष्मा याज्या; जनिष्यमाणानेव इति तै० सं० २.६.२.३ । मन्त्रप्रतिपाद्याया देवताया नामधेयं लक्ष्म । तद्यस्यामृचि पूर्वार्द्धे विद्यते सा पुरोऽनुवाक्या; तन्नाम यस्यामुत्तरार्द्धे विद्यते सा याज्या । तद्यथा—अग्निर्मूर्द्धा । अनुवाक्यातिष्ठन्नन्वाह; आसीनो याज्यां यजति'—इति च शत० ब्रा० १.४.२.१८,१९ । ५. पा० सू० २.२.३४ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हैं। [यह दो मन्त्र ऋग्वेद में नहीं हैं। इनका पूर्णरूप आश्वलायन श्रौतसूत्र ४. २. ३ में इस प्रकार है—

अग्निर्मुखं प्रथमो देवतानां संगतानामुत्तमो विष्णुरासीत्।
यजमानाय परिगृह्य देवान् दीक्षयेदं हविरागच्छतं नः॥ १॥
अग्निश्च विष्णो तप उत्तमं महो दीक्षापालाय वन तं हि शक्रा।
विश्वैर्देवैर्यज्ञियैः संविदानौ दीक्षामस्मै यजमानाय धत्तम्॥ २॥]

तयोर्ऋचोः कर्मानुकूल्यं दर्शयति—

**आग्नावैष्णव्यौ रूपसमृद्धे एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति॥ इति।**

अग्निश्च विष्णुश्च ययोर्ऋचोः प्रतिपाद्ये देवते भवतस्ते उभे ऋचावाग्नावैष्णव्यौ।[1] ते च कर्मानुकूल्येन रूपेण समृद्धे। न च रूपसमृद्धवैयर्थ्यं शङ्कनीयम्। कर्मणो यदङ्गं रूपसमृद्धं भवत्येतदेव यज्ञस्याङ्गेषु समृद्धं संपूर्णं न तु तस्मिन्किंचिदपि वैकल्यमस्ति। केयं रूपसमृद्धिरिति चेत्? पठ्यमानेयमृगनुष्ठीयमानं कर्माभिवदति साकल्येन ब्रवीतीति यदस्ति, एषैव रूपसमृद्धिः॥

इन दोनों ऋचाओं में [जो प्रतिपाद्य देवता हैं वे दोनों ही] अग्नि और विष्णु रूप से समृद्ध हैं अर्थात् अनुकूल कर्म से समृद्ध हैं जो यज्ञ अपने रूप में समृद्ध हैं अर्थात् अपने अङ्गों से सम्पूर्ण है वही यज्ञ को समृद्धि है। जो कर्म जैसा किया जाने वाला है वैसा मन्त्र के द्वारा वर्णित है। यही रूप-समृद्धि है।

मन्त्रप्रतिपाद्यदेवताप्रशंसाद्वारेण पुनरपि मन्त्रौ प्रशंसति—

**अग्निश्च ह वै विष्णुश्च देवानां दीक्षापालौ, तौ दीक्षाया ईशाते, तद्यदाग्नावैष्णवं हविर्भवति यौ दीक्षाया ईशाते तौ प्रीतौ दीक्षां प्रयच्छतां यौ दीक्षयितारौ तौ दीक्षयेतामिति॥ इति।**

योऽयमग्निः सर्वेषां देवानां प्रथमो यश्च विष्णुः सर्वेषामुत्तमस्तावुभौ देवानां मध्ये दीक्षाख्यस्य च व्रतस्य पालयितारौ तावुभौ दीक्षाया ईशाते स्वामिनौ भवतस्तस्मात्तयोर्दीक्षापालकत्वं युक्तम्। तथा सति यद्यग्नाविष्णुदेवताकं हविर्दीक्षणीयेष्टौ भवति तदानीं यौ दीक्षायाः स्वामिनौ देवौ तौ प्रीतौ यजमानाय दीक्षां प्रयच्छताम्। उक्तस्यैव व्याख्यानं यौ दीक्षयितारावित्यादिकम्। इतिशब्दोऽभिप्रायपरामर्शार्थः।[2]

---

१. 'विमुक्तादिभ्योऽण्', 'देवताद्वन्द्वे च', 'इद्वृद्धौ', 'इद्वृद्धौ' विष्णोः प्रतिषेधः'— इति पा० सू० ५.२.६१; ७.३.२१; ६.३.२८; वा० १।

२. 'इतिकरणोऽर्थनिर्देशार्थः'—इत्यादि पात० भा० १.१.६ आह्निके द्रष्टव्यम्। ऋ० प्राति० १.१९.२। अमरकोश ३.३.२४५। हे० अने० को० ७.२१,२२।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अनेनाभिप्रायेणाऽग्नावैष्णवं हविः क्रियते। तस्मान्मन्त्रप्रतिपाद्यावग्नाविष्णू प्रशस्तावित्यर्थः ॥

[जो यह अग्नि सभी देवों में प्रथम हैं और जो यह विष्णु सभी में उत्तम हैं वह] अग्नि और विष्णु देवताओं के मध्य दीक्षा नामक व्रत के पालन करने वाले हैं। [क्योंकि] वे दोनों दीक्षा के स्वामी हैं, इसलिए जो यह अग्नि और विष्णु के लिए हवि होती है, जो दोनों दीक्षा के स्वामी देव हैं वे दोनों प्रसन्न होकर [यजमान के लिए] दीक्षा प्रदान कर देते हैं। जो दोनों दीक्षा देने वाले हैं वे दोनों [इसीलिए] दीक्षा देवें।

अनेनाभिप्रायेण मन्त्रगतं छन्दः प्रशंसति—

**त्रिष्टुभौ भवतः सेन्द्रियत्वाय ॥ ४ ॥** इति।

त्रिष्टुप्छन्दस इन्द्रियसाधनत्वेनेन्द्रियरूपत्वं श्रुत्यन्तरे श्रुतम्—'इन्द्रियं वै त्रिष्टुप्'[1] इति। अतो मन्त्रगतं छन्दो यजमानस्य सेन्द्रियत्वाय भवति ॥

**अथ मीमांसा।** द्वादशाध्यायस्य चतुर्थपादे चिन्तितम्—

"पुरोनुवाक्यया याज्या विकल्प्या वा समुच्चिता।
पुरेवाऽऽद्यः समाख्यानाद् वचनाच्च समुच्चयः ॥"[2]

देवताप्रकाशनकार्यस्यैकत्वाद् याज्ययोर्यथा विकल्पः, तथैवैकयुग्मगतयोरिति चेत् नैवम्। पुरोनुवाक्येति समाख्याया उत्तरकालीनयाज्यामन्तरेणानुपपत्तेः। किंच 'पुरोनुवाक्यामनूच्य याज्यया जुहोति' इति प्रत्यक्षवचनेन देवतोपलक्षणहविःप्रकाशनकार्यभेदोक्तिपुरःसरं साहित्यं विधीयते।[3] तस्मात् समुच्चयः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये
प्रथमाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

त्रिष्टुप् छन्दस्क वे दोनों मन्त्र [यजमान को] इन्द्रिय [अर्थात् शक्ति] से युक्त करने वाले होते हैं।

॥ इस प्रकार प्रथम अध्याय में चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

---

१. तै० ब्रा० १.७.९.२। तत्र तु त्रिष्टुगिति पाठः। 'गायत्री पुरोऽनुवाक्या भवति, त्रिष्टुग् याज्या'—इति ( तै० सं० २.६.२.५ ) च तद्विधायकं वचनम्।

२. जै० न्या० वि० १२.४.४।

३. पुरोऽनुवाक्या देवतास्मरणार्था भवति, याज्या तु हविःप्रदानार्था। तथाहीयं शतपथश्रुतिः 'ह्वयति वाऽनुवाक्यया; प्रयच्छति याज्यया'—इति शत० ब्रा० १.७.२.१७। अत एवाश्वलायनेन च सूत्रितम्—'सर्वेषामग्रेऽग्रेऽनुवाक्यास्ततो याज्या'—इति ३.७.३।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ पञ्चमः खण्डः

प्रधानस्य हविषो याज्यानुवाक्ये विधाय स्विष्टकृद्रूपस्य यागस्य फलविशेषाय च्छन्दोविशेषयुक्ते याज्यानुवाक्ये विधातुकामः प्रथमं द्वे ऋचौ विधत्ते—

**गायत्र्यौ स्विष्टकृतः संयाज्ये कुर्वीत तेजस्कामो ब्रह्मवर्चसकामः ॥ इति ।**

'स हव्यवाळमर्त्यं'[1] इत्येका गायत्री । 'अग्निर्होता पुरोहित'[2] इत्यपरा गायत्री । ते उभे स्विष्टकृद्यागस्य[3] संयाज्ये कुर्यात् । कीदृशोऽधिकारी ? तेजः शरीरकान्तिः । ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिः । तदुभयकामोऽत्राधिकारी । संयाज्याशब्दार्थमाश्वलायन आह—'स्विष्टकृतः संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात्'[4] इति स्विष्टकृत्संबधिन्यौ याज्यानुवाक्ये इत्यर्थः ॥

**[स्विष्टकृत् यागसम्बन्धी याज्यानुवाक्या का विधान करते हैं]-तेज की कामना वाले और ब्रह्मवर्चस [श्रुताध्ययन सम्पत्ति] की कामना वाले [यजमान] को दो गायत्री मन्त्रों का पुरोनुवाक्या और याज्या के रूप में पाठ करना चाहिए ।**

गायत्र्या उक्तफलसाधनत्वमुपपादयति—

**तेजो वै ब्रह्मवर्चसं गायत्री ॥ इति ।**

'तत्सवितुर्वरेण्यम्'[5] इत्यस्यामृचि यद्गायत्रीछन्दस्तस्य तेजोब्रह्मवर्चससाधनत्वेन तद्रूपत्वं लोके प्रसिद्धम् । स्नानधौतवस्त्रदर्भतिलकधारणपुरःसरं गायत्रीं जपतो ब्राह्मणस्य देहे काचिदाकारशोभा दृश्यते तदिदं तेजः । स च जपिता वेदमधीते तदर्थं च शृणोति तदिदं ब्रह्मवर्चसम् ॥

**गायत्री तेज और ब्रह्मवर्चस वाली है [अर्थात् गायत्री मन्त्र तेज और ब्रह्मवर्चस के साधन के रूप में लोक में प्रसिद्ध है] ।**

वेदनपुरःसरमनुष्ठातुः फलं दर्शयति—

**तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् गायत्र्यौ कुरुते ॥ इति ।**

यद्यपि विधिवाक्येऽनुष्ठानमात्रात्फलमुक्तं तथाऽपि वेदनपूर्वकानुष्ठाने तस्मिन्नेव फले कश्चिदतिशयो द्रष्टव्यः ॥

**जो इस प्रकार जानकर दो गायत्री मन्त्रों का प्रयोग करता है वह तेजस्वी और ब्रह्मवर्चस से युक्त हो जाता है ।**

---

१. ऋ० सं० ३. ११. २ । २. ऋ० सं० ३. ११. १ ।

३. 'स्विष्टकृद्यागानुमन्त्रणम्' तै० सं० १. ६. २. ४ । तद्ब्राह्मणम्, तन्निर्वचनसूत्रको मन्त्रश्च सायणभाष्ये स्विष्टकृद्यागविधिस्तु द्र० तै० सं० २. ६. ६. ५ । तद्विचारास्तु द्र० जै० न्या० वि० ३. ४. १९. ३५; पुनः ३६, ३७, ततः ४. १. २८-३२ ।

४. श्रौ० सू० २. १. २१ । ५. ऋ० सं० ३.६२.१० ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

फलान्तराय च्छन्दोन्तरं विधत्ते—

**उष्णिहौ वाऽऽयुष्कामः कुर्वीत ॥ इति ।**

'अग्ने वाजस्य गोमत'[1] इत्येकोष्णिक् । 'स इधानो वसुष्कविः'[2] इत्यपरा । ते उभे शतसंवत्सरपर्यन्तायुष्कामः कुर्वीत ॥

**अथवा आयु की कामना वाले [यजमान] को दो उष्णिक् छन्दस्क ऋचाओं का पाठ करना चाहिए ।**

गायत्र्या अप्यक्षरचतुष्टयेनोष्णिक्छन्दसोऽधिकत्वाद्[3] आयुर्वृद्धिहेतुत्वं युक्तमित्यभिप्रेत्योष्णिगायुषोरभेदमाह—

**आयुर्वा उष्णिक् ॥ इति ।**

**उष्णिक् छन्द आयु ही है । [क्योंकि गायत्री से ज्यादा अक्षर हैं अतः आयु की वृद्धि के लिए यह उपयुक्त है] ।**

पूर्ववद् वेदनं प्रशंसति—

**सर्वमायुरेति य एवं विद्वानुष्णिहौ कुरुते ॥ इति ।**

**जो इस प्रकार जानकर दो उष्णिक् छन्दस्क मन्त्रों का प्रयोग करता है वह पूर्ण आयु को [अर्थात् वेद प्रतिपादित सौ वर्ष पर्यन्त आयु को] प्राप्त करता है ।**

फलान्तराय च्छन्दोन्तरं विधत्ते—

**अनुष्टुभौ स्वर्गकामः कुर्वीत ॥ इति ।**

'त्वमग्ने वसून्' इति द्वे[4] अनुष्टुभौ ॥

**स्वर्ग की कामना वाले यजमान को दो अनुष्टुप् छन्दस्क मन्त्रों का प्रयोग करना चाहिए ।**

अनुष्टुभोः स्वर्गहेतुत्वमुपपादयति—

**द्वयोर्वा अनुष्टुभोश्चतुःषष्टिरक्षराणि त्रय इम ऊर्ध्वा एकविंशा लोका एकविंशत्यैकविंशत्यैवेमाँल्लोकान् रोहति स्वर्ग एव लोके चतुःषष्टितमेन प्रतितिष्ठति ॥ इति ।**

श्रुत्यन्तरे[5] 'द्वात्रिंशदक्षराऽनुष्टुप्' इत्यभिधानाद् द्वयोरनुष्टुभोर्मिलित्वा चतुःषष्टिसंख्याकान्यक्षराणि संपद्यन्ते ।[6] इमे पृथिव्यन्तरिक्षस्वर्गरूपा एकैकस्मादूर्ध्वत्वेन वर्तमानाः

१. ऋ० सं० १. ७९. ४ । २. ऋ० सं० १. ७९. ५ ।

३. तथाचेदं पिङ्गलसूत्रम्—'चतुरश्चतुरः प्राजापत्यायाः' इति—३.११ ।

४. ऋ० सं० १. ४५. १, २ । ५. तै० स० २.५.१०.३ ।

६. अनुष्टुब्ननुष्टोभनात् । 'गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभति । इति च ब्राह्मणम् (दै० ब्रा० ३)—इति निरु० ७.१२ । 'द्वात्रिंशदक्षरानुष्टुप् चत्वारोऽष्टाक्षराः समाः' ऋक्प्राति० १६. ३७ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रत्येकमेकविंशत्यवयवसमूहरूपा लोकास्त्रयो विद्यन्ते। तेष्वेकैकं लोकमेकैकाक्षरगतयैकविंशतिसंख्यया यजमान आरोहति। अन्तिमेन चतुःषष्टितमेनाक्षरेण तृतीये स्वर्ग एव लोके यजमानः प्रतितिष्ठति स्थिरोऽवतिष्ठते ॥

दो अनुष्टुभ् मन्त्रों में चौसठ अक्षर होते हैं। ये तीन [ पृथ्वी, अन्तरिक्ष, स्वर्ग रूप ] लोक एक के ऊपर दूसरा वर्तमान रहकर प्रत्येक इक्कीस-इक्कीस अवयव का संघातरूप होता है। एक-एक अक्षर-गत एक-एक लोक को इक्कीस संख्या से यजमान आरोहण करता है और अन्तिम चौसठवें अक्षर से यजमान तृतीय स्वर्ग लोक में ही प्रतिष्ठित होता है।

वेदनं प्रशंसति—

प्रतितिष्ठति य एवं विद्वाननुष्टुभौ कुरुते ॥ इति।

जो इस प्रकार जानकर दो अनुष्टुभ् छन्दस्क मन्त्रों का प्रयोग करता है वह प्रतिष्ठित होता है।

फलान्तराय च्छन्दोन्तरं विधत्ते—

बृहत्यौ श्रीकामो यशस्कामः कुर्वीत ॥ इति।

श्रीर्धनधान्यादिसंपत्तिः। यशः सत्कुलदानादिजन्या कीर्तिः। एना वो अग्निमिति द्वे[1] ['उदस्य शोचिरस्थात्'[2]—इति] बृहत्यौ। श्रीयशसोः कारणत्वेन ॥

[धनधान्यादि सम्पत्तिरूप] श्री की कामना वाले और यश की कामना वाले यजमान को दो बृहती छन्दस्क मन्त्रों का प्रयोग करना चाहिए।

बृहत्यास्तदुभयरूपत्वं दर्शयति—

श्रीर्वै यशश्छन्दसां बृहती ॥ इति।

गायत्र्यादीनां छन्दसां मध्ये या बृहती सैव श्रीरूपा यशोरूपा च। सर्वेषां छन्दसां पशुसंपादनमात्सर्ये सति बृहत्या विजयमाम्नायाः पशुरूपत्वाच्छ्रीरूपत्वम्। तथा च तैत्तिरीया आमनन्ति—'छन्दांसि पशुष्वाजिमयुस्तान्बृहत्युदजयत्तस्माद् बार्हताः पशव उच्यन्ते'[3] इति। इतरच्छन्दोभिराश्रितत्वादपि श्रीरूपत्वं त एवाऽऽमनन्ति—'यानि च च्छन्दाꣳस्यत्यरिच्यन्त। यानि च नोदभवन्। तानि निर्वीर्याणि हीनान्यमन्यन्त। साऽब्रवीद् बृहतीम्। मामेव भूत्वा मामुपसꣳश्रयत्'[4] इति। मध्यं ह्येषामङ्गानामात्मा मध्यं छन्दसां बृहतीति मध्यत्वेन प्रशंसनाद्यशोरूपत्वमपि द्रष्टव्यम् ॥

[गायत्री आदि] छन्दों के मध्य जो बृहती है वही श्रीरूप और यशोरूप है।

---

१. ऋ० सं० ७.१६.१। २. ऋ० सं० ७.१६.३।
३. सं० ५.३.२.३,४। ४. तै० ब्रा० १.५.१२.३.।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदनं प्रशंसति—

श्रियमेव यश आत्मन् धत्ते य एवं विद्वान् बृहत्यौ कुरुते ।। इति ।

एवकारः श्रीयशसोः समुच्चयार्थः ।।

जो इस प्रकार जानकर बृहती छन्दों वाले दो मन्त्रों का प्रयोग करता है वह अपने में श्री और यश को धारण करता है ।

अहीनसत्राद्युत्तरयज्ञप्राप्तिकामस्य च्छन्दोन्तरं विधत्ते—

पङ्क्ती यज्ञकामः कुर्वीत ।। इति ।

अग्निं तं मन्य इति द्वे[1] पङ्क्ती ।।

यज्ञ की कामना वाले यजमान को पङ्क्ति छन्दों वाले दो मन्त्रों का प्रयोग करना चाहिए ।

यज्ञस्य पङ्क्तिसंबन्धित्वं दर्शयति—

पाङ्क्तो वै यज्ञः ।। इति ।

वैशब्दो वक्ष्यमाणबहुविधपाङ्क्तत्वप्रसिद्धिप्रदर्शनार्थः ।।

यज्ञ पङ्क्ति वाला अर्थात् पाँच अङ्गों वाला है ।

वेदनं प्रशंसति—

उपैनं यज्ञो नमति य एवं विद्वान् पङ्क्ती कुरुते ।। इति ।

जो इस प्रकार जानकर दो पङ्क्ति छन्दस्क मन्त्रों का प्रयोग करता है उसके प्रति यज्ञ झुकता है ।

वीर्यप्राप्त्यर्थं छन्दोन्तरं विधत्ते—

त्रिष्टुभौ वीर्यकामः कुर्वीत ।। इति ।

द्वे विरूपे चरत इति द्वे[2] त्रिष्टुभौ ।।

वीर्य की कामना वाले [यजमान] को दो त्रिष्टुभ् छन्दस्क मन्त्रों का प्रयोग करना चाहिए ।

त्रिष्टुप्छन्दसो वीर्यसाधनत्वेन तद्रूपत्वं दर्शयति—

ओजो वा इन्द्रियं वीर्यं त्रिष्टुप् ।। इति ।

वीर्यं शरीरबलम् । तच्चौजस इन्द्रियस्य चोपलक्षणम् । ओजो बलहेतुरष्टमो धातुः ।[3] इन्द्रियं चक्षुरादिपाटवम् ।।

---

१. ऋ० सं० ५.६.१–२ । २. ऋ० सं० १.९५.१–२ ।

३. निघ० २.९.१ । अमरकोष ३.३.२३३ । छा० उप० ३.१३.५ । 'ओजस्तेजसि धातूनामवष्टम्भप्रकाशयोः । बले च दीप्तौ च'–इति विश्वः ३.१९ । रघु० ५.३७ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वस्तुतः त्रिष्टुप् छन्द वीर्य [=शरीर का बल], इन्द्रिय [चक्षु आदि की पटुता] और ओज [बल का हेतु आठवाँ धातु] है।

वेदनं प्रशंसति—

ओजस्वीन्द्रियवान् वीर्यवान् भवति य एवं विद्वांस्त्रिष्टुभौ कुरुते ॥इति।

जो इस प्रकार जानकर त्रिष्टुभ् छन्दस्क दो मन्त्रों का प्रयोग करता है वह ओजस्वी, इन्द्रियवान् और वीर्यवान् होता है।

गवादिपशुप्राप्तये छन्दोन्तरं विधत्ते—

जगत्यौ पशुकामः कुर्वीत ॥ इति।

'जनस्य गोपा' इति द्वे[1] जगत्यौ ॥

पशु की कामना वाले [ यजमान ] को दो जगती छन्दस्क मन्त्रों का प्रयोग करना चाहिए।

पशूनां जगतीछन्दःसाध्यत्वेन तत्संबन्धं दर्शयति—

जागता वै पशवः ॥ इति।

पशु जगती छन्द से सम्बद्ध हैं।

वेदनं प्रशंसति—

पशुमान् भवति य एवं विद्वाञ्जगत्यौ कुरुते ॥ इति।

जो इस प्रकार जानता हुआ जगती छन्दस्क दो मन्त्रों का प्रयोग करता है वह पशुओं से युक्त होता है।

अत्तुं योग्यमन्नं कामयमानस्य च्छन्दोन्तरं विधत्ते—

विराजावन्नाद्यकामः कुर्वीत ॥ इति।

'प्रेद्धो अग्न' 'इमो अग्न' इति द्वे[2] विराजौ ॥[3]

अन्न की कामना वाले [यजमान] को दो विराज् छन्दों का प्रयोग करना चाहिए।

अन्नस्य विराजनहेतुत्वेन विराड्रूपत्वमाह—

अन्नं वै विराट् ॥ इति।

विराट् छन्द ही अन्न है।

तदेव स्पष्टयति—

तस्माद्यस्यैवेह भूयिष्ठमन्नं भवति स एव भूयिष्ठं लोके विराजति तद्विराजो विराट्त्वम् ॥ इति।

---

१. ऋ० सं० ५.११.१–२।    २. ऋ० सं० ७.१.३,१८।

३. 'प्रेद्धो अग्न' 'इमो अग्न' इति संयाज्ये विराजावित्युक्त एते प्रतीयात्' आश्व० श्रौ० २.१ ३०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यस्मादन्नस्य विराजनहेतुत्वं तस्मात् कारणादिह लोके यस्यैव पुरुषस्यान्नं प्रभूतं भवति स एव जनमध्येऽत्यन्तं शोभते तस्माद् विराजत्यनेनेति व्युत्पत्त्या विराट्शब्दो निष्पन्नः ॥

**इसलिए इस [लोक] में जिसके पास अन्न बहुत होता है, वही इस संसार में अधिक विराजता है। 'विराज्' इस नाम का यही हेतु है।**

वेदनं प्रशंसति—

वि स्वेषु राजति, श्रेष्ठः स्वानां भवति य एवं वेद ॥ ५ ॥ इति।

यः पुमान् विराजो महिमानं वेत्ति स पुमान् स्वकीयेषु ज्ञातिषु मध्ये विशेषेण राजति लौकिकसामर्थ्येन शोभते। तथा स्वीयानां ज्ञातीनां मध्ये वृत्तविद्याविनयादिभिः श्रेष्ठो भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेय-ब्राह्मणभाष्ये प्रथमाध्याये पञ्चमः खण्डः ॥ ५ ॥

**जो इस प्रकार जानता है वह स्वकीय [बन्धु बान्धवों] के मध्य विशेष रूप से [अर्थात् लौकिक सामर्थ्य से] शोभित होता है, तथा ज्ञाति-जन के मध्य [विद्या एवं विनय आदि के द्वारा] श्रेष्ठ हो जाती है।**

**॥ इस प्रकार प्रथम अध्याय में पञ्चम खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥**

---

## अथ षष्ठः खण्डः

काम्ये संयाज्ये नानाविधे विधाय नित्ये संयाज्ये विधातुं विराट्छन्दः प्रशंसति —

अथो पञ्चवीर्यं वा एतच्छन्दो यद्विराट् ॥ इति।

अथो काम्यसंयाज्याकथनानन्तरं नित्ये संयाज्ये कथ्येते इति शेषः। विराडाख्यं यच्छन्दोऽस्ति एतच्छन्दः पञ्चविधवीर्योपेतत्वेन प्रसिद्धम् ॥

**[काम्यसंयाज्या के कथन के बाद] अब [दो नित्य संयाज्या बतलाते हैं] विराट् नामक जो छन्द है वह पाँच प्रकार की शक्तियों से युक्त है।**

तदेव विस्पष्टयति—

यत्त्रिपदा तेनोष्णिहागायत्र्यौ यदस्या एकादशाक्षराणि पदानि तेन त्रिष्टुब् यत्त्रयस्त्रिंशदक्षरा तेनानुष्टुभ्, न वा एकेनाक्षरेण च्छन्दांसि वियन्ति न द्वाभ्यां, यद्विराट् तत्पञ्चमम ॥ इति।

यस्मात्कारणादियं विराट् पादत्रयोपेता तेन कारणेनोष्णिग्रूपा गायत्रीरूपा च भवति तयोरपि पादत्रयोपेतत्वेन समत्वादतस्तयोरुभयोर्वीर्यं विराज्यस्ति। यस्मात्-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कारणादस्या विराजः पादा एकादशाक्षरोपेतास्तेन कारणेनेयं त्रिष्टुब्रूपा भवति तदीयं वीर्यं प्राप्नोति। यस्मात्कारणादियं त्रयस्त्रिंशदक्षरोपेता तेन कारणेनानुष्टुब्रूपा तदीयं वीर्यं प्राप्नोति। यद्यप्यनुष्टुब् द्वात्रिंशदक्षरा तथाऽप्येकेनाक्षरेण न्यूनेनाधिकेन वा छन्दांसि नैव नश्यन्ति। तथा द्वाभ्यामक्षराभ्यां न्यूनाभ्यामधिकाभ्यां वा न नश्यन्ति। "एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः" इति न्यायात्। ननु त्रिंशदक्षरा विराडिति श्रूयते तत्र 'प्रेद्धो अग्ने'[1] इत्यस्यामृचि एकोनत्रिंशदक्षराणि 'इमो अग्ने'[2] इत्यस्यामृचि द्वात्रिंशदक्षराण्यतस्तयोर्न विराट्त्वमिति चेत्, मैवम्। न वा एकेनाक्षरेणेति वाक्येनैव परिहृतत्वात्[3]। यस्माद् त्रिराट् तस्मादेतदीयं पञ्चमं वीर्यमस्ति॥

क्योंकि विराट् में तीन पाद होते हैं अतः यह उष्णिक् और गायत्री के समान होता है। क्योंकि विराज् के पाद ग्यारह अक्षरों के होते हैं अतः यह त्रिष्टुप् के समान होता है; क्योंकि इसमें तैंतिस अक्षर होते हैं अतः यह अनुष्टुप् के समान होता है। [यद्यपि अनुष्टुप् छन्द बत्तीस अक्षरों का होता है तथापि] एक अक्षर से न्यून या अधिक होने से छन्द नहीं बदलता है अथवा दो अक्षर से न्यून या अधिक होने पर भी छन्द नहीं बदलता है। [ऐसा इसलिए कहा गया है क्योंकि 'प्रेद्धो अग्ने' और 'इमो अग्ने' इन दो विराट् छन्दों में क्रमशः २९ और ३२ अक्षर हैं] जो विराट् है वही पाँचवीं शक्ति है।

एवंविधविराड्वेदनं प्रशंसति—

**सर्वेषां छन्दसां वीर्यमवरुन्धे, सर्वेषां छन्दसां वीर्यमश्नुते, सर्वेषां छन्दसां सायुज्यं सरूपतां सलोकतामश्नुतेऽन्नादोऽन्नपतिर्भवत्यश्नुते प्रजयाऽन्नाद्यं य एवं विद्वान् विराजौ कुरुते॥** इति।

गायत्र्युष्णिक्त्रिष्टुबनुष्टुब्विराड्रूपाणां सर्वेषां छन्दसां यत्सामर्थ्यमस्ति तदयं वेदिताऽवरुन्धेऽभिमुखी करोति। कृत्वा चाश्नुते प्राप्नोति। तथा सर्वच्छन्दोभिमानिदेवानां सायुज्यं सहभावं सरूपतां समानरूपत्वं सलोकतामेकस्थाननिवासं च प्राप्नोति। अन्नादोऽन्नभक्षणसमर्थो नीरोगः। अन्नपतिर्बह्वन्नस्वामी भवति न केवलं स्वयमेव किंतु स्वकीयया पुत्रादिप्रजया सहान्नाद्यमश्नुते॥

जो इस प्रकार जानते हुए दो विराट् छन्दस्क मन्त्रों का प्रयोग करता है वह सभी छन्दों की शक्ति को अपनी ओर अभिमुख कर लेता है, सभी छन्दों की सामर्थ्य को प्राप्त

---

१. ऋ० सं० ७.१.३। २. ऋ० सं० ७.१.१८।

३. वस्तुतः त्रिंशदक्षरैव विराट् सर्ववेदप्रसिद्धा; तथा ह्याम्नातं तैत्तिरीयैः स्फुटम्—'त्रिंशदक्षरा विराट्'—इति तै० सं० २.५.१०.३। 'विराजो दिशः'—इति (४.५) च वैदिकच्छन्दःसूत्रं तदनुगतम्। इह त्वाद्याया एकाक्षरन्यूनत्वेन छन्दःशास्त्रमते निचृदिति विशेषणान्वितं विराट्त्वम्, अपरायास्तु स्वराड्विशेषणान्वितमित्यभिप्रायः। पि० ६.१९,२०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कर लेता है। सब छन्दों के सायुज्य, सरूपता और सलोकता को [एक स्थान में वास] प्राप्त कर लेता है। अन्न भक्षण में समर्थ होता है अर्थात् स्वस्थ हो जाता है। अन्नों का स्वामी हो जाता है; प्रजा और अन्न को पा लेता है।

इत्थं छन्दः प्रशस्येदानीं विधत्ते—

**तस्माद् विराजावेव कर्तव्ये ॥** इति।

यस्माद् विराजो ह्युक्तमहिमाऽस्ति तस्मादित्यर्थः ॥

इसलिए विराट् छन्दस्क दो मन्त्रों का ही प्रयोग करना चाहिए।

तयोः प्रतीकद्वयं दर्शयति—

**प्रेद्धो अग्न इमो अग्न इत्येते ॥** इति।

इत्थं दीक्षणीयेष्टौ स्विष्टकृतः संयाज्ये विधाय दीक्षितस्य सत्यवदनं विधत्ते—

'प्रेद्धो अग्ने' और 'इमो अग्ने' ये दो मन्त्र विराट् छन्द में हैं।[१]

**ऋतं वाव दीक्षा सत्यं दीक्षा तस्माद्दीक्षितेन सत्यमेव वदितव्यम् ॥**इति।

मनसा यथा वस्तुचिन्तनमृतशब्दाभिधेयं वाचा यथावस्तुकथनं सत्यशब्दाभिधेयं तदुभयात्मिका दीक्षा तद्वैकल्ये विनश्यति। यस्मादेवं तस्माद्दीक्षितेन सत्यमेव वदितव्यं न तु किंचिदप्यनृतं वदेत् ॥[१]

[इस प्रकार दीक्षणीया इष्टि में स्विष्टकृत् की दो संयाज्या का विधान करके दीक्षित यजमान के सत्यभाषी होने का विधान करते हैं]—दीक्षा ऋत है, दीक्षा सत्य है, [अर्थात् ऋत शब्द का अर्थ है मन से वस्तु का यथार्थ चिन्तन करना और सत्य शब्द का अर्थ है वाणी से वस्तु का यथार्थ कथन। दीक्षा तदुभयात्मक है] इसलिए दीक्षित यजमान को सत्य ही कहना चाहिए। [अनृत नहीं बोलना चाहिए]।

---

१. 'मानसमर्थतथात्वम् ऋतम्। वाचिकमर्थतथात्वं सत्यम्। तदुभयहेतुका दीक्षा भवति। तद्धेतुत्वात् ताच्छब्द्यम्। तस्माद् दीक्षितेन सत्यमेव वदितव्यम् इति मनः पूर्वरूपं वागुत्तररूपम्' इति मनोऽप्यतथ्यं मनुष्याणां किं पुनर्वागिति प्रतिपादनार्थम् ऋतत्वमन्तरेण वाचः सत्यत्वाभावात् सत्यग्रहणमेवं कृतं न त्वनृतं ज्ञातव्यम्' इति भट्टभास्करः।

'यथार्थवादित्वम् ऋतम्। यथादृष्टार्थवादित्वं सत्यम्। अनयोर्दीक्षास्थित्यर्थत्वाद् दीक्षासामानाधिकरण्यम्। तत्र यथार्थवादित्वस्यानुष्ठातुमशक्यत्वाद् यथादृष्टार्थवादित्वमेव विदधाति—तस्माद् दीक्षितेनेति'—इति गोविन्दस्वामी।

२. तु० शत० ब्रा० १.१.१.४ : सत्यम् इव देवा अनृतं मनुष्याः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तदशक्याभिधानमित्यभिप्रेत्यानुजिघृक्षया प्रकारान्तरं विधातुं प्रस्तौति—

**अथो खल्वाहुः कोऽर्हति मनुष्यः सर्वं सत्यं वदितुं, सत्यसंहिता वै देवा अनृतसंहिता मनुष्या इति ॥** इति ।

प्रकारान्तरप्रारम्भार्थोऽयमथोशब्दः । ब्रह्मवादिन एवमाहुः खलु मनुष्यः को नाम सर्वं वाक्यं सत्यं वदितुमर्हति न कश्चिदपि तथा कर्तुं शक्नोति । देवा एव सत्यसंहिताः सत्ये तात्पर्यवन्तः । मनुष्यास्तु प्रायेणानृते तात्पर्ययुक्ताः । इतिशब्दो ब्रह्मवादिवचनसमाप्त्यर्थः ॥

**ब्रह्मवादी ऐसा कहते हैं कि कौन मनुष्य सभी सत्य वाक्य बोलने में समर्थ है ? सत्य से युक्त तो देवता ही होते हैं और मनुष्य अनृत से युक्त होते हैं ।**[२]

इदानीं सत्यवदनफलसिद्धचर्थं प्रकारान्तरं विधत्ते—

**विचक्षणवतीं वाचं वदेत् ॥** इति ।

विचक्षणेत्यक्षरचतुष्टयात्मकोऽयं मन्त्रस्तद्युक्तं वाक्यं प्रयुञ्जीत । देवदत्त विचक्षण गामानय यज्ञदत्त विचक्षण गां बधानेत्येवं तत्प्रयोगः । यदाहाऽऽपस्तम्बः—'चनसित विचक्षण इति नामधेयान्तेषु दधाति, चनसितेति ब्राह्मणं, विचक्षणेति राजन्यवैश्यौ'[१] इति॥

**'विचक्षण' से युक्त वाक्य का कथन करना चाहिए ।**

विचक्षणेति मन्त्रस्य सत्यवदनपूर्तिहेतुत्वं प्रतिपादयति—

**चक्षुर्वै विचक्षणं वि ह्येनेन पश्यतीति ॥** इति ।

चक्षुरिन्द्रियमेव विचक्षणशब्दवाच्यं तदेव स्पष्टीक्रियते । चक्षिङ्दर्शन इत्यस्माद्धातोरयं शब्दो निष्पन्नः । तथा सति विशेषेण वस्तुतत्त्वमेनेनाऽऽचष्टे पश्यतीति विचक्षणं नेत्रम् । तस्माच्चक्षुर्विचक्षणमिति पर्यायौ । उक्तनिर्वचनप्रदर्शनार्थं इतिशब्दः ॥

**चक्षु इन्द्रिय ही विचक्षण है क्योंकि इसी से [वस्तु के तत्त्व को] देखता है ।**

अस्त्वेवं तयोः पर्यायत्वं कथमेतावता सत्यसंपूर्तिसिद्धिरित्याशङ्क्याऽऽह—

**एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुः ॥** इति ।

प्रत्यक्षानुमानादिप्रमाणानां[२] मध्ये प्रत्यक्षप्रमितिसाधनं यच्चक्षुरिन्द्रियमस्ति एतदेव मनुष्येषु सर्वेषु सत्यं निहितं यथावस्तुज्ञानसाधनत्वेनाभिमतं तस्माच्चक्षुष्पर्यायविचक्षणशब्दप्रयोगेण सत्यसंपूर्तिर्भवति ॥

---

१. आप० श्रौ०सू० १०.१२.७,८ । "चनसितं विचक्षणमिति च प्रातिपदिकनिर्देशः । न विभक्तिर्विवक्षिता । एतद्दर्शयति—'चनसितेति ब्राह्मणम्'—आमन्त्रयेतेति शेषः । आमन्त्रयेतेत्येव भारद्वाजः । तद्यथा—देवदत्त चनसित, मित्रपाल विचक्षण ।" इति तट्टीका । 'विचक्षण-चनसिनवतीं वाचम्' इति कात्या०श्रौ० ७.५.७ ।

२. 'स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम्'—इति तै० आर० १.२.१ । 'तदेतत् स्मृत्यादिचतुष्टयमवगतिकारणभूतं (धर्मस्य) प्रमाणम्—इति तद्भाष्यम् सा० । 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'—इति गौ० सू० १.१.३ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[प्रत्यक्ष प्रमाण का साधन] जो चक्षु इन्द्रिय है यही सभी मनुष्यों के बीच सत्य निहित है।

अन्वयव्यतिरेकाभ्यां चक्षुषो यथावस्तुदर्शनसाधनत्वं साधयति—

**तस्मादाचक्षाणमाहुरद्रागिति स यद्यदर्शमित्याहाथास्य श्रद्दधति यद्यु वै स्वयं पश्यति न बहूनां चनान्येषां श्रद्दधाति ॥ इति ।**

यस्माच्चक्षुषस्तत्त्वदर्शनहेतुत्वं मनुष्याणामभिप्रेतं तस्माल्लोके सभायामागत्य कांचिद्वार्तामाचक्षाणं पुरुषं प्रति सभ्या एवमाहुरद्रागिति किंत्वेवमेवाद्राक्षीरित्यर्थः । स च पुरुषो यद्यहमेवाद्राक्षमिति ब्रूयात्तदाऽस्य वचनं सत्यमिति सभ्याः सर्वे श्रद्दधति विश्वासं कुर्वन्ति । तदिदमेकमुदाहरणम् । 'यद्यु वा' इत्ययं निपातसमूह उदाहरणान्तर-प्रदर्शनार्थः । अथवा कश्चित् पुमान् स्वयमेव चक्षुषा स्कन्धमूलाद्युपेतं स्थाणुं पश्यति । अन्ये बहवः पुरुषा दूरवर्तिनोऽपश्यन्तः पुरुषोऽयमित्याचक्षते । चनशब्दोऽपिशब्दार्थः । बहूनामप्यन्येषां वचनमयं पुरुषो न श्रद्दधाति किंतु स्वकीयं चाक्षुषं दर्शनमेव श्रद्दधाति । वाजसनेयिनोऽप्यामनन्ति—'द्वौ विवदमानावेवाऽऽयातावहमदर्शमहमश्रौषमिति य एवं ब्रूयादहमदर्शमिति, तस्मा एव श्रद्दध्याम'[1] इति । तैत्तिरीयाश्चाऽऽमनन्ति— 'अनृतं वै वाचा वदति । अनृतं मनसा ध्यायति । चक्षुर्वै सत्यम् । अद्रागित्याह । अहमदर्शमिति । तत्सत्यम्'[2] इति ॥

इसीलिए कहने वाले से मनुष्य कहते हैं 'क्या तुमने देखा है?' यदि वह कहता है कि 'मैंने देखा है' तो वे उस पर विश्वास करते हैं; अथवा यदि कोई पुरुष स्वयं ही देखता है तो वह बहुत से भी अन्य पुरुषों का विश्वास नहीं करता है।

तथाविधचक्षुःपर्यायस्य विचक्षणशब्दस्य सत्यसंपूर्तिहेतुत्वमुपपाद्य पूर्वोक्तं विधि-मुपसंहरति—

**तस्माद् विचक्षणवतीमेव वाचं वदेत् सत्योत्तरा हैवास्य वागुदिता भवति भवति ॥ ६ ॥ इति ।**

॥ इत्यैतरेयब्राह्मणे प्रथमपञ्चिकायां प्रथमोऽध्यायः ॥ १ ॥

---

१. शत० ब्रा० १.३.१.२७ । चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति स आहा-द्राक्षमिति तत् सत्यं भवति'—इति च पुनस्तत्रैवोपरिष्टात् १४.६.१०.९ = बृ० उप० ४.१.४ ।

२. तै० ब्रा० १.१.४.२ । 'नानृतं वदेत्'—इति ( तै० सं० २.५.५.६ ) विधौ विचा-रितं च मीमांसायाम् जै० सू० ३.४.१२,१३ । तदधिकरणं चोद्धृतं सव्याख्यानं तत्रैव तैत्तिरीयसंहिताभाष्ये सायणेन 'अनृतं न वदेदेषः पुंधर्मो वानुवादगीः— इत्यादि जै० न्या० वि० ३.४.४ ।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'अस्य' विचक्षणशब्दोपेतवचनवादिनो[1] या वागस्ति सा सत्योत्तरा स्वरूपेणानृताऽपि विचक्षणेतिमन्त्रसामर्थ्येन सत्यभूयिष्ठैव भवति। अनृतदोषो न स्पृशतीत्यर्थः।[2] भवतिशब्दस्याऽभ्यासोऽध्यायसमाप्त्यर्थः ॥[3]

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये प्रथमपञ्चिकायां प्रथमाध्याये षष्ठः खण्डः ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधर-माधवाचार्यादेशतोसायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश-नामभाष्ये ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायाः प्रथमोध्यायः ॥ १ ॥

**इसलिए 'विचक्षण' शब्द से युक्त वाणी ही बोले। तब इसकी [सत्य से इतर भी] वाणी सत्य ही हो जाती है [भवति शब्द की आवृत्ति अध्याय की समाप्ति की सूचक है]।**

**॥ इस प्रकार ऐतरेय ब्राह्मण की प्रथमपञ्चिका के प्रथम अध्याय की हिन्दी पूर्ण हुई ॥ १ ॥**

---

१. सामाश्रमीमते तु 'विलक्षणवतीमेव वाचं वदेत्' इत्यस्य वचनस्य हि दृष्टविषयमात्रकथन-विधानेऽदृष्टविषयकथननिषेधे च तात्पर्यम्। विचक्षणेतिमन्त्रयुक्तमिथ्याकथनोऽपि न दोषः इति नाभिप्रेतो ब्राह्मणकृत इति। चनसितविक्षणान्वितनामधेयग्रहणस्य विधानं तु इतः पृथक् ( आप० श्रौ० १०.१३.७,८; कात्या० श्रौ ७.५ ७। लाट्या० श्रौ० ३.३ १४ ) दीक्षितधर्मान्तरमिति दिक्।

२. 'सत्यस्य चक्षुषो वाचकस्य विचक्षणशब्दस्य मन्त्रस्थानीयस्य प्रयोगेण परस्य सत्यस्य वस्तुनः स्मरणात् सत्योत्तरैव वागनेनोदिता भवति। सत्यप्यसत्यवदने तेन दोषेण न लिप्यते। यद्वा परवस्तुस्मरणमहिम्ना क्वचिदप्यसत्यवाङ् नोत्पद्यते' —इति भट्टभास्करः।

३. दीक्षणीयेष्टिरेव सर्वेष्टिरेवमूलम्। वक्ष्यति हि 'दीक्षणीयेष्टिस्तायते तामेवानु याः काश्चेष्टयस्ताः सर्वा अग्निष्टोममपियन्ति'—इति ( ३.४.२ ) सैषा प्रथमेष्टिः शत० ब्रा० ३ ये काण्डे प्रथमाध्यायतो द्वितीयाध्यायीय-द्वितीयब्राह्मणान्तं यावच्छ्रूयते; तैत्तिरीये सांहितिकब्राह्मणे च ६.१.१-४। एवं—आश्व० श्रौ० ४.२. १-१७। आप० श्रौ० १०.४-२०। कात्या० श्रौ० ७.१म कण्डिकातः ५म कण्डिकाया द्वादशसूत्रं यावत्। अपि तत्रान्त्यकण्डिकायाः सप्तमसूत्रस्य वृत्तौ याज्ञिकदेवेन दीक्षितधर्माश्च कतिचिद् सङ्गृह्य प्रदर्शिताः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ द्वितीयोऽध्यायः

प्रथमे दीक्षणीयेष्टिस्तत्स्तुतिस्तत्र संस्कृतिः।
याज्यानुवाक्ये संयाज्याः सत्योक्तिश्चेति वर्णिता ॥ १ ॥

अथ प्रायणीयादिकं[1] विधातुं द्वितीयोऽध्याय आरभ्यते। तत्राऽऽदौ प्रायणीयशब्दार्थं वदति—

**स्वर्गं वा एतेन लोकमुपप्रयन्ति यत्प्रायणीयस्तत्प्रायणीयस्य प्रायणीयत्वम् ॥ इति।**

प्रायणीयाख्यो यः कर्मविशेषोऽस्त्येतेन यजमानाः स्वर्गं लोकं सामीप्येन प्राप्नुवन्ति। तस्मात् प्रयन्त्यनेनेति व्युत्पत्त्या तत्प्रायणीयनाम संपन्नम् ॥

[ प्रायणीय इष्टि ]—

i.७ [ii.१] 'प्रायणीय' नामक कर्म विशेष को जो यजमान करता है उसके द्वारा वह स्वर्गलोक के सामीप्य को प्राप्त करता है। इसीलिए [इस सामीप्य प्राप्ति के साधक होने के कारण] इसको प्रायणीय नाम से अभिहित करते हैं।

अथ विधास्यमानौ प्रायणीयोदयनीयाख्यौ कर्मविशेषौ स्तस्तौ सह प्रशंसति—

**प्राणो वै प्रायणीय उदान उदयनीयः समानो होता भवति; समानौ हि प्राणोदानौ; प्राणानां क्लृप्त्यै प्राणानां प्रतिप्रज्ञात्यै ॥ इति।**

प्राणवायोः प्रायणीयकर्मणश्च प्रशब्दसाम्यादभेदः। उदानवायोरुदयनीयकर्मणश्चोच्छब्दसाम्यादभेदः। किंच प्रायणीयोदयनीययोः कर्मणोर्याज्यानुवाक्यादिप्रयोगार्थमेक एव होता भवति। प्राणोदानवायू चैकदेहवर्तित्वादेकेन होत्राऽनुष्ठेयाभ्यां कर्मभ्यां समानावतो वायुविशेषयोश्चाभेदः।[2] तच्च कर्मद्वयानुष्ठानं प्राणवायूनां क्लृप्त्यै स्वस्वव्यापारसामर्थ्याय भवति। तथा प्राणवायूनां प्रत्येकमयं प्राणोऽयमुदान इत्यादिविशेषस्य प्रज्ञानाय भवति। तस्मात् कर्मद्वयं प्रशस्तमित्यर्थः[3] ॥

---

१. 'दीक्षान्ते प्रायणीयम्' का० श्रौ० ७.५.१३। 'दीक्षान्ते राजक्रयः। तदहः प्रायणीयेष्टिः' आश्व० श्रौ० ४.२.१८; ३.१। दीक्षाहःसु परिसमाप्तेषु अनन्तरं यदहः, तस्मिन्नहनि राजक्रयः कर्तव्यः; सोमः क्रेतव्य इत्यर्थः। यस्मिन्नहनि सोमः क्रेष्यते, तदहः प्रायणीयानामेष्टिः कार्या'—इति तट्टीका गा० ना०।

२. प्राणन्ति जीवितुमारभन्तेऽनेनेति प्राणः। प्रयन्ति स्वर्गं गन्तुं प्रारभन्तेऽनेनेति प्रायणीयः। एवं व्युत्पत्त्यादिसाम्यात् प्राणस्थानीयः प्रायणीयः। तथा उदनन्ति ऊर्ध्वं जीवन्त्यनेनेत्युदानः। उद्यन्ति ऊर्ध्वं स्वर्गं यन्ति प्राप्नुवन्त्यनेनेत्युदयनीयः। एवं व्युत्पत्त्यादिसाम्याद् उदानस्थानीय उदयनीयः। यस्मादेवं तस्मात् प्रायणीयोदयनीययोः समान एक एव होता भवति'—इति भट्टभास्करः।

३. द्वे शीर्षे प्रायणीयोदयनीये (यज्ञस्य) इति निरु० १३.१.७। 'शिरो वै यज्ञस्यातिथ्यं बाहू प्रायणीयोदयनीयौ' शत० ब्रा० ३.२.३.२०। आतिथ्येष्टिं तृतीयाऽध्याये वक्ष्यति।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रायणीय [श्वास] प्राण है और उदयनीय उदान [=निःश्वास] है [इन दोनों कर्मों में याज्या और अनुवाक्या के प्रयोगार्थ एक ही] 'होता' समान है; क्योंकि प्राण और उदान [वायुविशेष होने से] समान हो हैं [वस्तुतः] प्राणवायु तो कार्यक्षमता के लिए होती है और वह [प्राण-उदान में भेद] ज्ञान के लिए होती है। [इस प्रकार दीक्षणीय इष्टि का सर्वप्रथम उल्लेख किया गया। यह मात्र यज्ञ को तैय्यारी थी। वस्तुतः प्रायणीय से तात्पर्य है आरम्भ की' और उदयनीय से 'अन्त की'। जब यज्ञ आरम्भ हुआ तो आरम्भ की इष्टि प्रायणीय हुई और अन्त की इष्टि उदयनीय हुई। इस तरह दोनों मिलकर यज्ञ को पूरा करती हैं]।

अथ देवताविशेषविधानायाऽऽख्यायिकामुपक्रमते—

यज्ञो वै देवेभ्य उपक्रामत् ते देवा न किंचनाशक्नुवन्। कर्तुं न प्राजानं-स्तेऽब्रुवन्नदितिं त्वयेमं यज्ञं प्रजानामेति सा तथेत्यब्रवीत् सा वै वो वरं वृणा[1] इति, वृणीष्वेति; सैतमेव वरमवृणीत मत्प्रायणा यज्ञाः सन्तु मदुदयना इति तथेति तस्मादादित्यश्चरुः प्रायणीयो भवत्यादित्य[2] उदयनीयो वरवृतो ह्यस्याः॥ इति।

योऽयं यज्ञः सोमयागाभिमानी पुरुषः सोऽयं केनापि निमित्तेनापरक्तः सन् देव-सकाशादुत्क्रम्य गतवान्। यज्ञ पुरुषे गते सति ते देवाः किमपि यज्ञाङ्गं कर्तुं शक्ति-रहितास्तदभिज्ञानरहिताश्चाभवन्। ततस्ते सर्वे समागत्यादितिं प्रार्थितवन्तो हेऽदिते त्वत्प्रसादेन वयमिमं यज्ञं कर्तुं ज्ञातुं च शक्ता भूयास्मेति। ततोऽदितिरङ्गीकृत्य ज्ञाप-यितुमुक्ता चरुरूपेणैतं वरमवृणीत ये सोमयागास्ते सर्वे मत्प्रायणा मदुपक्रमा मदुदयना मदवसानाश्च सन्त्विति तस्य वरस्य देवैरङ्गीकृतत्वात् प्रायणीयः प्रारम्भकालीनेष्टिगत-श्चरुरदितिदेवताकः कर्तव्य उदयनीयः समाप्तिकालिनोऽपि चरुरदितिदेवताकः कर्तव्यः[3]। यस्मादस्या अदितेस्तादृशश्चरुर्वरेण प्रार्थितस्तस्मात्तथाऽनुष्ठानं युक्तम्।[4] तमिममर्थं तैत्तिरीयाश्चाऽऽमनन्ति—'देवा वै देवयजनमध्यवसाय दिशो न प्राजानंस्तेऽन्योन्यमुपा-धावंस्त्वया प्रजानाम त्वयेति तेऽदित्या समध्रियन्त त्वया प्रजानामेति साऽब्रवीद् वरं

---

१. वृङः कर्मण्यच्, वरणीयम्। वृणै, इट्, 'एत ऐ'—इति पा० सू० ३.४.९३।
२. 'दित्यदित्या०'—पा० सू० ४.१.८५ इत्यनेन अदितेर्ण्यः।
३. तदेवं प्रायणीयेष्टचा सोमयाग आरभ्यते, उदयनीयेष्टचा च स समाप्यते इति व्यक्तम्।
४. अदितिदेवता, 'अदितिरदीना देवमाता'—इत्यादिना, 'अदितिर्दाक्षायणिः'—इत्यादिना ४.४.२; ११.३.२ च निरुक्ते व्याख्याता। द्र० तै० आर० १.८.२१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वृणै मत्प्रायणा एव वो यज्ञा मदुदयना आसन्निति तस्मादादित्यः प्रायणीयो यज्ञानामादित्य उदयनीयः'[1] इति ॥ १

यज्ञ [सोमयाग का अभिमानी पुरुष किसी कारण से उपरक्त होकर] देवों के पास से चला गया। वे देव कुछ भी न कर सके और वे जान भी नहीं सके [अर्थात् यज्ञ को करने और उसे जानने में अशक्त हो गए]। उन्होंने अदिति से प्रार्थना की—'तुम्हारे प्रसाद से हम यज्ञ को जानने में समर्थ होवें'। उसने कहा—'अच्छा, किन्तु मैं तुमसे एक वर का वरण करती हूँ'। [उन्होंने कहा]—वरण करो। उसने यही वर माँगा कि 'यज्ञ मुझसे ही आरम्भ हों और मुझसे ही समाप्त हों।' [उन्होंने कहा] 'ऐसा ही होगा।' इसलिए प्रायणीय [आरम्भ को] इष्टि में अदिति के लिए प्रथमतः चरु होता है और उदयनीय [अन्त को] इष्टि में भी अदिति के लिए चरु होता है; क्योंकि यही वर उसने माँगा था।

अदितेर्वरान्तरं दर्शयति—

**'अथो एतं वरमवृणीत मयैव प्राचीं दिशं प्रजानाथाग्निना दक्षिणां सोमेन प्रतीचीं सवित्रोदीचीमिति ॥ इति ।**

अथो अपि चेत्यर्थः। मयेत्यादिना वरः प्रपञ्च्यते। हे देवा यूयमिदं देवयजनं समीचीनमित्येवं बहुधा विचारयन्तस्तदर्थं बहुषु देशेषु पर्यटन्तो दिग्भ्रमं प्राप्य प्राच्यादिदिशं न ज्ञातवन्तोऽतो भवतां दिग्विशेषज्ञापनायाहमग्निः सोमः सविता चेत्येते चत्वारश्चतुर्षु देशेष्ववस्थिताः। तथा सति यत्राहमस्मि सा प्राची दिगित्येव मयैव प्राचीं दिशं बुध्यध्वम्। एवमग्न्यादिभिर्दक्षिणादयस्तिस्रो दिशो बोद्धव्याः। इत्येष द्वितीयो वरः। एते देवा अनेन चरुणा तत्र यष्टुं योग्या इति तात्पर्यार्थः ॥[2]

उसने यह और भी वर माँगा कि 'मेरे ही द्वारा तुम सब प्राची दिशा को जानो, अग्नि के द्वारा दक्षिण दिशा को, सोम के द्वारा पश्चिम को और सविता के द्वारा उत्तर दिशा को जानो।'

तत्र प्रथमं यागं विधत्ते—

**पथ्यां यजति ॥ इति ।**

पथ्येति देवताया नामधेयम्।[3] यद्यपि शाखान्तरे—'पथ्यां स्वस्तिं यजति प्राचीं-

---

१. तै० सं० ६.१.५.१ । २. अस्याः श्रुतेर्दिगुपदेशे एव वा स्यात् तात्पर्यम् ।

३. 'पथ्या स्वस्तिः'—पन्था अन्तरिक्षम्, तन्निवासात्'—इति, तन्निगमगत—'देवगोपा'—इत्येतत्पदस्य व्याख्यानाय च पुनः 'देवी गोप्त्री, देवान् गोपायत्विति देवा एनां गोपायन्त्विति वा—इति च निरु० ११.१३ । 'देवाः—माध्यमिका द्युस्थाना वा रश्मयः'—इति च तट्टीका । तदित्थमन्तरिक्षस्थिता कल्याणसत्ता एव 'पथ्या-स्वस्ति' इति, अवगम्यते ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मेव तया दिशं प्रजानाति'[1] इति पथ्या स्वस्तिरित्येतावन्नामधेयमाम्नातं तथाऽपि भीम-शब्दवन्नामैकदेशेनात्र व्यवहारः । ननु पूर्वत्र मयैव प्राचीं दिशं प्रजानाथेत्यदितेर्वाक्य-माम्नातमिह तु पथ्यां यजतीत्युक्तौ पूर्वापरविरोध इति चेन्नायं दोषः । अदितिदेवताया एव पथ्याख्यं मूर्त्यन्तरमिति वक्तुं शक्यत्वात् ।

**वह [होता] 'पथ्या' नामक देवता विशेष का यजन करता है ।[2]**

उक्तं विधिमनूद्य प्रशंसति—

**यत्पथ्यां यजति तस्मादसौ पुर उदेति [3]पश्चाऽस्तमेति पथ्यां ह्येषोऽनु-संचरति ॥ इति ।**

यद्यस्मात् कारणात् पूर्वस्यां दिश्यवस्थितां पथ्यां देवतां यजति तस्मात् कारणादसा-वादित्यः पुरः पूर्वस्यां दिश्युदेति पश्चात् पश्चिमायां दिश्यस्तमेति । हि यस्मात्कारणादेष आदित्यः पथ्याख्यां देवतामनुसृत्य संचरति तस्मात्पूर्वापरयोरुदयास्तमयावुपपन्नौ । न च पूर्वदिशः पथ्यासंबन्धेऽपि पश्चिमदिशः स नास्तीति वाच्यम् । उदयनीयायां पश्चिम-दिशि पथ्याया यक्ष्यमाणत्वात् । द्वयोर्दिशोस्तत्संबन्धे सति आदित्यस्य तदनुसचारो युक्तः ।

**क्योंकि [पूर्व दिशा में अवस्थित] पथ्या देवता का यजन करता है इसलिए यह आदित्य पूर्व दिशा में उदित होता है और पश्चिम दिशा में अस्त होता है ।**

दक्षिणदिग्वर्तिनोऽग्नेर्यागं विधत्ते—

**अग्निं यजति ॥ इति ।**

**वह अग्नि का यजन करता है ।[4]**

तं विधिमनूद्य प्रशंसति—

**यदग्निं यजति तस्माद्दक्षिणतोऽग्र ओषधयः पच्यमाना आयन्त्याग्नेय्यो ह्योषधयः ॥ इति ।**

---

१. तै० सं० ६.१.५.२ । द्र० 'पथ्या स्वस्तिरग्निः सोमः सवितादितिः' आश्व० श्रौ० ४.३.२; द्र० आश्व० श्रौ० ६.१४.३ ।
'अदितेरेव खल्ववस्थान्तरम्, उषोलक्षणं पथ्यास्वस्तिरुच्यते । पथि साध्वी पथ्या शोभनविभूतिहेतुः प्रजानां स्वस्तिः । यत्र चोषा उदेति सा प्राची भवति'—इति भट्टभास्करः ।

२. ऋ० १०.६३.१५, १६ इति याज्यानुवाक्या ।

३. 'पश्च पश्चा च छन्दसि'—इति पा० सू० ५.३.३३ । इत्यनेन पश्चादर्थे निपातितः ।

४. ऋ० १.१८९.१; १०.२.३ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यस्मादत्र देवानां दिग्विशेषज्ञापनाय दक्षिणस्यां दिश्यवस्थितमग्निं यजति तस्मात् कारणाद्विन्ध्यपर्वतस्य दक्षिणभागे व्रीह्याद्योषधयोऽग्रे पच्यमाना आयन्ति तत्तत्स्वामिगृहेष्वागच्छन्ति । विन्ध्यस्योत्तरभागे यवगोधूमचणकादिधान्यप्राचुर्यम् । तानि च धान्यानि माघफाल्गुनयोः पच्यन्त इति पश्चाद्भावीनि । दक्षिणदिग्भागे तु यवादिप्राचुर्याभावात् । प्राचुर्याणि च व्रीह्यादीनीति कार्तिकमार्गशीर्षयोः पच्यमानत्वादग्रे पाकोऽभिहितः । हि यस्मात्कारणादोषधय आग्नेय्य आसां पाकस्याग्न्यधीनत्वात् । यथौदनरूपेण वाह्यपाकोऽग्न्यधीन एवं बीजरूपेण सस्यपाकोऽपि तदन्तर्वर्त्यग्न्यधीन इति द्रष्टव्यम् । तस्मादग्निसंबन्धिन्यां दक्षिणस्यां दिश्यग्रे पाको युक्तः ।

**क्योंकि [दक्षिण दिशा में अवस्थित] अग्नि का यजन करता है इसलिए दक्षिण में पहले पकी औषधियाँ आती हैं क्योंकि ओषधियाँ अग्नि से संबन्ध रखती हैं [अर्थात् धान्य आदि का पकना तो अग्नि के अधीन है] ।**

पश्चिमदिश्यवस्थितस्य सोमस्य यागं विधत्ते—

**सोमं यजति ।। इति ।**

**वह सोम का यजन करता है ।**[1]

तं विधिमनूद्य प्रशंसति—

**यत्सोमं यजति तस्मात् प्रतीच्योऽप्यापो बह्व्यः स्यन्दन्ते सौम्या ह्यापः ।। इति ।**[2]

यस्मादापः सोमसंबन्धिन्यः सोमस्यामृतकिरणत्वात्, तस्माद् बह्व्य आपः प्रतीच्योऽपि प्रत्यङ्मुख्योऽपि सत्यः स्यन्दन्ते । पश्चिमसमुद्रसमीपे प्रवहन्तीनां नदीनां पश्चिमाभिमुखत्वदर्शनात् । सोमस्यात्र पश्चिमदिश्यवस्थितत्वेन तदीयानामपां तन्मुखत्वं युक्तम् ।

**क्योंकि वह [अमृत-किरण वाले] सोम का यजन करता है इसलिए अनेक नदियाँ पश्चिम [समुद्र] की ओर ही बहती हैं, क्योंकि जल सोम से सम्बन्धित हैं ।**

उत्तरदिश्यवस्थितस्य सवितुर्यागं विधत्ते—

**सवितारं यजति, ।। इति ।**

**वह सविता का यजन करता है ।**[3]

---

१. ऋ० १.९१.१,४ ।

२. (i) अपां सौम्यत्वं सोमस्य वृष्टिहेतुतया । वृष्टिहेतुत्वं च सूर्यरश्मित्वात् सोमस्य । तथाहि श्रुतिः—'सुषुम्नः सूर्यरश्मिः'—इति गोविन्दस्वामी । (ii) 'सोममण्डलप्रभवत्वात् सर्वासामपाम्' इति भट्टभास्करः । (iii) इदमर्थे 'सोमाट्ट्यण्' पा० सू० ४.२.३० ।

३. ऋ० १०.८२.७,९ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तं विधिमनूद्य प्रशंसति—

**यत्सवितारं यजति तस्मादुत्तरतः पश्चादयं भूयिष्ठं पवमानः पवते सवितृप्रसूतो ह्येष एतत्पवते ॥ इति ।**

सविता प्रेरको देवः सोऽत्र यस्मादुत्तरस्यां दिश्यवतिष्ठते तस्मात्तेन सवित्रा प्रेरितो वायुरुत्तरपश्चिमयोरन्तरालवर्तिन्यां वायव्यां दिशि भूयिष्ठं पवतेऽत्यधिकं संचरति ।

**क्योंकि वह [प्रेरक देव] सविता का यजन करता है इसलिए [सविता से प्रेरित] वायु अधिकतर उत्तर पश्चिम को [अन्तराल को] दिशाओं से बहता है । यह सविता को प्रेरणा से ही बहता है ।**

ऊर्ध्वदिग्वर्तिन्या अदितेर्यागं विधत्ते—

**उत्तमामदितिं यजति ॥ इति ।**

उत्तमां मूर्धावस्थितामित्यर्थः । अत एव **तैत्तिरीया** आमनन्ति—'पथ्यां स्वस्तिमयजन्प्राचीमेव तया दिशं प्रजानन्नग्निना दक्षिणां सोमेन प्रतीचीं सवित्रोदीचीमदित्योर्ध्वाम्'[1] इति ।

**"ऊर्ध्व दिशा में अवस्थित अदिति का यजन करता है ।[2]**

उक्तं विधिमनूद्य प्रशंसति—

**यदुत्तमामदितिं यजति तस्मादसाविमां वृष्ट्याऽभ्युनत्त्यभिजिघ्रति ॥ इति ।**

यस्मादूर्ध्वदिग्वर्तिनां तस्मादूर्ध्वदिग्वर्तिनां द्यौरिमामधोवर्तिनीं स्वकीयया वृष्ट्याऽभ्युनत्ति सर्वतः क्लेदयति । पुनरपि घर्मकालेऽभिजिघ्रति भूमिगतं रसमाभिमुख्येनाऽऽदत्ते । अत्र पथ्यादीनां चतसृणां देवतानामाज्येन यागः । अदितेस्तु चरुणेति द्रष्टव्यम् । तदाह **आपस्तम्बः**—'चतुर आज्यभागान् प्रतिदिशं यजति पथ्यां स्वस्तिं पुरस्तादग्निं दक्षिणतः सोमं पश्चात् सवितारमुत्तरतो मध्येऽदितिं हविषा'[3] इति ॥

**क्योंकि ऊर्ध्ववर्ती दिशा में अवस्थित अदिति का यजन करता है । इसलिए यह [द्यो] इस [पृथ्वी] को वर्षा से सींचता है, और [ग्रीष्म में भूमिगत रस को सोख लिया है]**

यथोक्तदेवतागतां संख्यां प्रशंसति—

**पञ्च देवता यजति पाङ्क्तो यज्ञः सर्वा दिशः कल्पन्ते कल्पते यज्ञोऽपि ॥ इति ।**

---

१. तै० सं० ६.१.५.२ । २. ऋ० १०.६३.१०; अथर्व० ७.६.२ ।
३. आप० श्रौ० १०.२१.११ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पथ्याद्यदित्यन्ताः पञ्च देवता यज्ञस्य पञ्चसंख्यायोगात् पाङ्क्तत्वं बहुधा वक्ष्यतेऽतो यज्ञे देवताविषया पञ्चसंख्या युक्ता। दिशोऽपि प्राच्याद्या ऊर्ध्वान्ताः पञ्चसंख्याकाः। अतो देवतागतपञ्चसंख्यया गताः सर्वा दिशः कल्पन्ते समर्था भवन्ति। पूर्वमविज्ञाताः सत्यो ज्ञाता भवन्तीत्यर्थः। यज्ञोऽप्यनया कल्पते स्वप्रयोजनसमर्थो भवति॥

इस प्रकार वह पांच देवताओं का यजन करता है। [पथ्या, अग्नि, सोम सविता और अदिति इन पाँच देवता से युक्त होने के कारण] यज्ञ पाँच संख्या से युक्त कहा गया है। सभी दिशाएँ [प्राची से लेकर ऊर्ध्व पर्यन्त] पाँच संख्या से व्यवस्थित हैं। इस तरह [स्वप्रयोजनसमर्थ] यज्ञ भी व्यवस्थित है।

वेदनं प्रशंसति—

**तस्यै जनतायै कल्पते यत्रैवं विद्वान् होता भवति॥ ७॥** इति।

यत्र यस्यां जनतायां याज्ञिकजनसमूहे होता प्रायणीयदेवतानां वेदिता भवति तस्यां जनतायामयं होता स्वप्रयोजनसमर्थो भवति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मण-
भाष्यस्य द्वितीयाध्याये प्रथमः खण्डः॥ १॥ [७]

जिस याज्ञिक जनसमूह में 'होता' इस प्रकार प्रायणीय देवताओं का जानने वाला होता है उस जनसमूह के लिए 'होता' स्वप्रयोजनसमर्थ होता है॥ ७॥

॥ इस प्रकार द्वितीय अध्याय में प्रथम खण्ड की हिन्दी पूर्ण हुई॥

## अथ द्वितीयः खण्डः

प्रायणीयेष्टिं विधाय तत्र प्रयाजानां काम्यप्रकारविशेषं विधत्ते—

**यस्तेजो ब्रह्मवर्चसमिच्छेत् प्रयाजाहुतिभिः प्राङ्स इयात्, तेजो वै ब्रह्मवर्चसं प्राची दिक्॥** इति।

'समिधो यजति' तनूनपातं यजतीत्यादिना विहिताः पञ्च प्रयाजाहुतयः।[1] तासां प्रकृतावनुष्ठानप्रकार आपस्तम्बेन दर्शितः—'पञ्च प्रयाजान् प्राचो यजति। प्रतिदिशं वा समिधः पुरस्तात्तनूनपातं दक्षिणत इडः पश्चाद्बर्हिरुत्तरतः स्वाहाकारं मध्ये' इति।[2] स प्रकारोऽत्र चोदकप्राप्तस्तमपोद्य शरीरकान्तिश्रुताध्ययनसंपत्तिं च कामयमानस्य प्रकारान्तरं विधीयते। यः पुमांस्तेजो ब्रह्मवर्चसमिच्छेत् स पुमान् प्रयाजाहुतिभिः प्राङि-यात्। प्रागपवर्गास्ता आचरेदित्यर्थः। आदित्योदयेन प्राच्यास्तेजस्त्वं तदाभिमुख्येन गायत्रीजपानुष्ठानाद् ब्रह्मवर्चसत्वं च॥

---

१. समिधो यजति......हेमन्तमेवावरुन्धे'—इति तै० सं० २.६.१.१। तन्मन्त्राः तै० ब्रा० ३.५.५ द्रष्टव्याः। २. आप० श्रौ० २.१७.१.२।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

i. ८ [ii. २] जो तेज और ब्रह्मवर्चस की कामना करे वह पूर्व की ओर जाकर प्रयाज आहुतियों को देवे। क्योंकि पूर्व की दिशा तेज और ब्रह्मवर्चस वाली है।

वेदनं प्रशंसति—

तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् प्राङेति ।। इति ।

जो इस प्रकार जानकर पूर्व दिशा की ओर जाता है [और प्रयाजआहुतियों को देता है] वह तेजस्वी और ब्रह्मवर्चस्वी हो जाता है।

अन्नाद्यकामस्य दक्षिणापवर्गत्वं विधत्ते—

योऽन्नाद्यमिच्छेत् प्रयाजाहुतिभिर्दक्षिणा स इयादन्नादो वा एषोऽन्नपतिर्यदग्निः ।। इति ।

दक्षिणस्यां दिश्यवस्थितो योऽग्निः सोऽग्निरन्नादः । भक्षितस्यान्नस्योदराग्निना जीर्यमाणत्वात् सस्येष्ववस्थाय व्रीह्यादिपाकहेतुत्वात् स्थाल्यादिष्ववस्थायौदनपाकहेतुत्वादन्नपतित्वम् । अतोऽन्नकामस्य दक्षिणापवर्गत्वं युक्तम् ।।

जो अन्न की इच्छा करे, वह दक्षिण की ओर जाकर प्रयाज आहुतियाँ दे; क्योंकि अग्नि अन्न का भक्षण करने वाला है और अन्न का स्वामी है।

वेदनं प्रशंसति—

अन्नादोऽन्नपतिर्भवत्यश्नुते प्रजयाऽन्नाद्य य एवं विद्वान् दक्षिणैति ।। इति ।

जो इस प्रकार जानकर दक्षिण दिशा की ओर जाता है और [प्रयाज आहुति देता है], वह अन्न का भक्षण करने वाला और अन्न का स्वामी हो जाता है और प्रजा एवं अन्न से युक्त हो जाता है।

पशुकामस्य प्रत्यगपवर्गत्वं विधत्ते—

यः पशूनिच्छेत् प्रयाजाहुतिभिः प्रत्यङ् स इयात् पशवो वा एते यदापः ।। इति ।

प्रत्यग्दिश्यवस्थितस्य सोमस्य संबन्धिन्य आप इति पूर्वमुक्तं तासां चापां पानद्वारेण तृणोत्पादनद्वारेण वा पशूपकारित्वात् पशुत्वमतः पशुकामस्य तथाविधप्रत्यगपवर्गत्वं युक्तम् ।।

जिसे पशुओं की कामना हो उसे प्रयाज आहुतियों के साथ पश्चिम की ओर जाना चाहिए। [सोम-संबन्धी] ये जो जल हैं वह पशु हैं।

वेदनं प्रशंसति—

पशुमान् भवति य एवं विद्वान् प्रत्यङ्ङेति ।। इति ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जो इस प्रकार जानकर [प्रयाज आहुतियों के साथ] पश्चिम को ओर जाता है वह पशुओं से युक्त हो जाता है ।

अहीनाद्युत्तरक्रतुषु सोमपानं कामयमानस्योत्तरापवर्गत्वं विधत्ते—

यः सोमपीथमिच्छेत् प्रया ।ाहुतिभिरुदङ् स इयादुत्त ।ा ह वै सोमो राजा ॥ इति ।

यः सोमवल्लीरूपो राजमानत्वेन राजा तस्योत्तरस्यां दिशि प्रभूतत्वात् तद्रूपत्वमतः सोमपानद्वाराऽस्योत्तरापवर्गत्वं युक्तम् ॥

जिसे सोमपान की कामना हो उसे प्रयाज आहुतियों के साथ उत्तर दिशा को ओर जाना चाहिए । क्योंकि यह जो सोमवल्लीरूप राजा है वह [उत्तर में हो उत्पन्न होने के कारण] उत्तर दिशा ही है ।

वेदनं प्रशंसति—

प्र सोमपीथमाप्नोति य एवं विद्वानुदङ्ङेति ॥ इति ।

जो इस प्रकार जानकर [प्रयाज आहुतियों के साथ] उत्तर दिशा की ओर जाता है वह सोम के पान को प्राप्त करता है ।

स्वर्गकामस्य ऽऽहवनीये प्रयाजहोमविधिमर्थवादेनोन्नयति—

स्वर्ग्यैवोर्ध्वा दिक्सर्वासु दिक्षु राध्नोति ॥ इति ।

येयमूर्ध्वा दिक्स्वर्गाय हितैव तस्मात् स्वर्गकाम ऊर्ध्वां दिशं भावयन्नाहवनीय-मध्ये प्रयाजान् यजेतेत्यर्थः । यथा स्वर्गं प्राप्नोति तथा सर्वासु दिक्षु स समृद्धश्च भवत्यतः समृद्धिकामो मध्ये यजेतेत्यवगन्तव्यम् ॥

ऊपर की दिशा स्वर्ग के लिए हितकर है [जो ऊपर की दिशा की ओर प्रयाज आहुति देता है] वह सब दिशाओं को प्राप्त कर लेता है ।

वेदनं प्रशंसति—

सम्यञ्चो वा इमे लोकाः सम्यञ्चोऽस्मा इमे लोकाः श्रियै दीध्यति य एवं वेद ॥ इति ।

इमे भूरादयस्त्रयो लोकास्ते सम्यञ्चः स्वोचितभोगप्रदा अतो य एवमाहवनीयमध्ये होमं वेदास्मै यजमानाय भूरादय इमे लोकाः सम्यञ्चः स्वस्वोचितभोगप्रदाः सन्तः श्रियै धनधान्यादिसम्पदे दीद्यति प्रकाशन्ते ॥

ये [भू आदि तीन] लोक एक दूसरे के उन्मुख हैं । जो इस प्रकार जानता है उसके लिए परस्पर सम्मुख ये लोक [स्वोचित भोग प्रदान करने वाले धन-धान्यादि] सम्पत्ति के लिए प्रकाशित होते हैं ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्थं काम्यान् प्रयाजहोमप्रकारान् विधाय पूर्वोक्तप्रायणीयदेवताः क्रमेण स्तोतुं प्रथमदेवतां प्रशंसति—

**पथ्यां यजति तत्पथ्यां यजति वाचमेव तद्यज्ञमुखे संभरति ॥ इति ।**

पथ्याभिधां देवतां यजतीति पूर्वोक्तविधिरत्र स्मारितः प्रयाजविधिभिर्व्यवहितत्वात् । स्तोतव्यस्य स्मारणमपेक्षितम् । स्मारितस्य स्तुतावन्वेतुं पुनरनुवादः । पथ्यायागेन यज्ञमुखे सोमयागप्रारम्भे वाचमेव मन्त्ररूपां संभरति संपादयति । यतो यज्ञानुष्ठानरूपाय मार्गाय हिता पथ्या मन्त्ररूपा वाक्तादृश्यतः पथ्यायाग एव वाक्संपादनम् ॥

[वह यजमान] पथ्या नामक देवता का यजन करता है यह जो पथ्या का याज्या मन्त्रों से यजन करता है वह [मन्त्र रूप] वाणी को [सोम] याग के प्रारम्भ में रखता है ।

अग्न्यादिकाश्चतस्रो देवताः प्रशंसति —

**प्राणापानावग्नीषोमौ प्रसवाय सविताप्रतिष्ठित्या अदितिः ॥ इति ।**

मुखनासिकाभ्यो बहिः संचरन्नुच्छ्वासरूपो वायुः प्राणः । स ह्यौष्ण्यं शरीरे जनयति । ततोऽग्नेः प्राणरूपत्वं प्रतिनिकृत्य मुखनासिकाभ्यामन्तः संचरन् वायुरपानः । स च शरीरे शैत्यं जनयतीति निश्वासस्य सोमरूपत्वम् । सविता देवः प्रसवाय यज्ञकर्मणि प्रेरणायोपयुज्यते । अदितिर्भूमिः प्रतिष्ठित्यै स्थिरावस्थानायोपयुज्यते ॥

अग्नि और सोम प्राण [उच्छ्वास] और अपान [निःश्वास] हैं । सवितादेव [यज्ञ कर्म में] प्रेरणा देने के लिए हैं, और अदिति [भूमि में] स्थिर अवस्थान के लिए हैं ।

पुनरपि प्रकारान्तरेण प्रथमां देवतां स्तौति—

**पथ्यामेव यजति यत्पथ्यामेव यजति वाचैव तद्यज्ञं पन्थामपि नयति ॥ इति ।**

अत्रैवकारः पूर्वोक्तस्तुतिविशेषः । तस्यायमर्थः—देवतान्तरं परित्यज्य प्रथमतः पथ्यामेव यजति । ईदृशं यजनं यदस्ति तत्तेन यजनेन मन्त्ररूपया वाचैव च क्रियमाणं यज्ञं वैकल्यपरिहारेण समीचीनमनुष्ठानमार्गं प्रापयति देवतान्तरस्य प्रथमयागे तु नैतत् संभवतीति ॥

[अन्य देवताओं को छोड़कर] वह प्रथमतः पथ्या देवता का ही यजन करता है यह जो पथ्या का ही यजन करता है वस्तुतः वह इस मन्त्ररूप वाणी से यज्ञ को पथ में अर्थात् समीचीन अनुष्ठान मार्ग पर ले जाता है ।

द्वितीयाद्यां देवतां प्रशंसति—

**चक्षुषी एवाग्नीषोमौ प्रसवाय सविता प्रतिष्ठित्या अदितिः ॥ इति ।**

अग्निषोमयोस्तेजस्वित्वाद् दिग्विशेषज्ञानहेतुत्वाच्चक्षुरिन्द्रियरूपत्वम् । चतुर्थपञ्चमदेवतयोस्तु पूर्वोक्तस्तुतिरेव समीचीनेत्यभिप्रेत्य पुनस्तत्पाठः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अग्नि और सोम चक्षु-इन्द्रियरूप हैं। सविता देव प्रेरणा के लिए हैं और अदिति अवस्थापन के लिए हैं।

अग्नीषोमयोश्चक्षुःस्वरूपत्वे कोऽतिशय इत्याशङ्क्याऽऽह—

**चक्षुषा वै देवा यज्ञं प्राजानंश्चक्षुषा वा एतत्प्रज्ञायते यदप्रज्ञेयं तस्मादपि मुग्धश्चरित्वा यदैवानुष्ठ्या चक्षुषा प्रजानात्यथ प्रजानाति ॥** इति।

देवाः पुरा यज्ञपुरुष उत्क्रान्ते सत्यन्विष्य चक्षुषैव प्रज्ञातवन्तः। लोकेऽपि यद्वस्तु सहसा प्रज्ञातुमशक्यं तदेतच्चक्षुषैव प्रज्ञायते। तस्मादित्यादिना तदेवोदाह्रियते। यस्माद् दुर्ज्ञेयमपि चक्षुषा ज्ञातुं शक्यं तस्मादेव कारणाल्लोके मुग्धो दिङ्मोहं प्राप्तः पुरुषो वनेषु बहुधा चरित्वा 'यदैव' यस्मिन्नेव कालेऽनुष्ठ्या[1] केनापि प्रयत्नविशेषेण पर्वतारोहणादिरूपेण सूर्योदयादिरूपं दिग्विशेषलिङ्गं चक्षुषा प्रजानाति। अथ तदानीमेव ग्रामादिमार्गं प्रजानाति। तस्माच्चक्षुःस्वरूपाभ्यामग्नीषोमाभ्यां दिग्विशेषज्ञानं युक्तम् ॥

चक्षु-इन्द्रिय के द्वारा ही देवताओं ने यज्ञ को पहचाना। जो अज्ञेय वस्तु है उसे भी चक्षु से ही जाना जाता है। इसलिए दिङ्मोह को प्राप्त पुरुष वन में भ्रमित होने पर भी चक्षु-इन्द्रिय से ही जब जिस समय प्रयत्नविशेष के द्वारा दिक्विशेष को जान लेता है तभी वस्तुतः [ग्राम के मार्ग को] जानता है।

अथादितेः प्रतिष्ठाहेतुत्वं प्रपञ्चयति—

**यद्वै तद्देवा यज्ञं प्राजानन्नस्यां वाव तत्प्राजानन्नस्यां समभरन्नस्यै वै यज्ञस्तायतेऽस्यै क्रियतेऽस्यै संभ्रियत इयं ह्यदितिस्तदुत्तमामदितिं यजति यदुत्तमामदितिं यजति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै ॥८॥** इति।

पूर्वत्र चक्षुषा वै देवा यज्ञं प्राजानन्निति यदुक्तं तत्प्रज्ञानं यद्वै यस्मिन्नेव काले संपन्नं तत्तस्मिन् कालेऽस्यां वाव प्राजानन् भूमावेव यज्ञपुरुषं प्रज्ञातवन्तः। ततोऽस्यां भूमौ समभरन्यज्ञसाधनानि संपादितवन्तः। अस्यै वा अस्यामेव भूमौ यज्ञस्तायते विस्तीर्यते। न केवलं यज्ञस्यैव भूमिराधारः किंतु लौकिकं कृष्यादिकमप्यस्यां क्रियते तत्साधनमप्यस्यां संपाद्यते। न च भूमेः प्राशस्त्ये सत्यदितेः किमायातमिति वाच्यम्। हि यस्मादियं भूमिरदितिः। तत् तस्माददितिमुत्तमां चरमदेवतां यजति। ईदृशं यजनं यदस्ति तत्क्रियमाणस्य यज्ञस्यादितिद्वारा देवेषु प्रज्ञानाय संपद्यते। तच्च देवप्रज्ञानं यजमानस्य स्वर्गलोकावगमाय भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्यस्य द्वितीयाध्याये द्वितीयः खण्डः ॥ २ ॥ [८]

---

१. शतपथव्याख्यायाम् 'अनुष्ठ्या = अनुक्रमेण'—इत्याह हरिस्वामी (१.४.२.१७; ५.१.६)। सायणेन तूक्तं तत्राऽपि 'अनुष्ठ्या=अनुष्ठानेन'—इति (२.१.२.१२)। वस्तुतो वेदेषु अनुष्ठी-अनुष्ठु-अनुष्ठा-अनुष्ठान-शब्दाः समानार्था इत्येव गम्यते। तत्रानुष्ठीशब्दस्य तृतीयैकवचने रूपमनुष्ठ्येति, अनुष्ठु-शब्दस्यानुष्ठुयेति (ऋ० सं० ४.४.१४) च।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चक्षु से देवताओं ने जो यज्ञ को जाना वह इसी पृथ्वी पर जाना, और इसी पृथ्वी पर यज्ञ के साधनों को इकट्ठा किया। इसी भूमि पर यज्ञ का विस्तार किया जाता है। [यज्ञ का ही आधार भूमि नहीं है अपितु] इसी पर [कृषि] की जाती है इसी पर उसके साधनों को इकट्ठा किया जाता है, क्योंकि यह [भूमि ही] अदिति है। इसलिए अन्त में अदिति का ही यजन करते हैं। इस प्रकार जो अदिति का चरमरूप से यजन किया जाता है वह अन्विति द्वारा देवों में क्रियमाण यज्ञ की पहचान के लिए होता है, और वह स्वर्गलोक के अवगम के लिए होता है।

॥ इस प्रकार द्वितीय अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

प्रायणीयेष्टौ काम्यान् प्रयाजप्रकारान् विधाय देवताश्च प्रशस्य तासां देवतानां संबन्धिन्यौ याज्यानुवाक्ये क्रमेणाभिसंधातुं प्रस्तौति—

देवविशः कल्पयितव्या इत्याहुस्ताः कल्पमाना अनु मनुष्यविशः कल्पन्त इति सर्वा विशः कल्पन्ते कल्पते यज्ञोपि ॥ इति।

विश इत्ययं शब्दः प्रजामात्रवाची वैश्यजातिविशेषवाचि वा। सन्ति हि देवेष्वपि जातिविशेषाः। अग्निर्बृहस्पतिश्च देवेषु ब्राह्मणौ। 'अग्ने महाँ असि ब्राह्मणभारत'[1]। 'ब्रह्म वै देवानां बृहस्पतिः' इति श्रुतेः।[2] क्षत्रियादिजातयस्तु सृष्टिप्रकरणे वाजसनेयिभिः स्पष्टमेवाऽऽम्नाताः—'तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवताक्षत्त्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' इति। 'स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वे देवा मरुतः' इति। 'तमथ शौद्रं वर्णमसृजत पूषणम्' इति।[3] एवमादित्यो वै दैवं क्षत्त्रमित्यादिकमुदाहार्यम्।[4] एवं सति देवेषु विशो वैश्यजातिरूपाः प्रजा मरुदादयो याः सन्ति ता अस्मिन् यागे कल्पयितव्याः संपादयितव्या इत्येवं ब्रह्मवादिन आहुः। कल्पमानाः संपन्नास्ता देवविशोऽनुसृत्य मनुष्यविशोऽपि तदनुग्रहात् संपद्यन्त इत्येवं दैव्यो मानुष्यश्च सर्वा विशो यजमानस्य संपद्यन्ते। तासु संपन्नासु द्रव्यलाभाद्यज्ञोऽपि कल्पते स्वप्रयोजनसमर्थो भवति॥

---

१. तै० ब्रा० ३.५.३। तै० सं० २.५.९.१ तथा शत० ब्रा० १.४.२.२ व्याख्यानं द्रष्टव्यम्।

२. तै० सं० २.२.९.१। 'ब्रह्म हि ब्राह्मणः' शत० ब्रा० ५.१.१.११; १३.१.५.३।

३. शत० ब्रा० १४.४.२.२३–२५ =बृ० उप० १.४.११–१५।

४. उपरिष्टादिहैव ७.४.२।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

i. ९ [ii. ३] देवताओं में विश् अर्थात् मरुत् आदि प्रजा जो हैं उनकी इस याग में कल्पना करनी चाहिए—ऐसा ब्रह्मवादी कहते हैं। इस प्रकार याग में सम्पन्न हुए देव-विश् अर्थात् देवताओं को प्रजा का अनुसरण करके मनुष्यों की प्रजा भी उनके अनुग्रह से सम्पादित होती है। इस प्रकार [दैवी और मानुषी] सभी प्रजा यजमान को होती हैं। उन के सम्पादित होने पर [द्रव्य लाभ से] यज्ञ भी सम्पादित होता है।

एतद्वेदनं प्रशंसति—

**तस्यै जनतायै कल्पते यत्रैवं विद्वान् होता भवति ॥ इति ।**

पूर्ववद् व्याख्येयम् ।[1]

इस प्रकार जानने वाला 'होता' नामक ऋत्विज् जहाँ होता है वहाँ उन मनुष्यों के लिए [भी यज्ञ] कल्पित होता है।

प्रथमं देवतायाः पुरोनुवाक्यां विधत्ते—

**स्वस्ति नः पथ्यासु धन्वस्वित्यन्वाह ॥ इति ।**

स एष प्रथमपादः कृत्स्नाया ऋचः प्रतीकग्रहणार्थः ।[2]

हे मरुतो ! मरुदेश रूपी मार्गों में हमारा जल प्रदान के द्वारा कल्याण करो।

अस्यामृचि देवविशां वाचकं मरुच्छब्दं दर्शयितुमवशिष्टं पादत्रयं पठति—

**स्वस्त्यप्सु वृजने स्वर्वति । स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातनेति ॥ इति ।**

इतिशब्दो मन्त्रसमाप्त्यर्थः । मन्त्रस्यायमर्थः—हे मरुतो ! नोऽस्माकं धन्वसु पथ्यासु मरुदेशरूपेषु मार्गेषु स्वस्ति दधातन जलप्रदानेन क्षेमं कुरुत । किंच सतीष्वप्यप्सु वृजने वर्जिते जनशून्ये स्वर्वति स्वर्गयुक्ते मार्गे स्वस्ति दधातन । यथा पुत्रकृथेषु पुत्रोत्पत्तिकरणेषु योनिषु कलत्रेषु नोऽस्माकं स्वस्ति दधातन तथा राये धनाय स्वस्त्यस्तु ।[3]

जल में और जनशून्य स्वर्गयुक्त मार्ग में हमारा कल्याण करो। पुत्रोत्पादक स्त्रियों में हमारा कल्याण करो [अर्थात् गर्भ न गिरने पावें] और धन-लाभ के लिए हमारा मङ्गल करो।

अस्यामृचि मरुच्छब्दः कथमेतावता विशां कल्पनमित्याह—

**मरुतो वै देवानां विशः, ता एवैतद्यज्ञमुखेऽचीक्लृपत् ॥ इति ।**

एतदेतेन मरुच्छब्दोपेतमन्त्रपाठेन यज्ञमुखे यज्ञप्रारम्भरूपे कर्मणि ता देवानां विशोऽचीक्लृपत् कल्पितवान् भवति ।

१. द्र० पूर्वपृष्ठ ५७ ।
२. तथा च सूत्रम्—'ऋचं पादग्रहणे'—इति आश्व० श्रौ० १.१.१७ ।
३. ऋ० १०.६३.१५ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मरुत् देवताओं की प्रजा हैं। यज्ञ के आरम्भ में [होता इस मन्त्र से उन [मरुतों] को ही तैयार करता है।

छन्दोबाहुल्यमभिधाय प्रशंसति—

सर्वैश्छन्दोभिर्यजेदित्याहुः; सर्वैर्वै छन्दोभिरिष्ट्वा देवाः स्वर्गं लोकमजयंस्तथैवैतद्यजमानः, सर्वैश्छन्दोभिरिष्ट्वा स्वर्गं लोकं जयति ॥ इति।

स्पष्टोऽर्थः ॥

ब्रह्मवादी कहते हैं कि सभी छन्दों के द्वारा यजन करना चाहिए; सभी छन्दों के द्वारा यजन करके देवताओं ने स्वर्ग लोक को जीत लिया। इसी प्रकार सभी छन्दों के द्वारा यजन करते हुए यजमान स्वर्ग लोक को जीत लेता है।

मन्त्रविशेषान् मन्त्रच्छन्दांसि च पञ्चानां देवानां क्रमेणोदाहरति—

स्वस्ति नः पथ्यासु धन्वसु स्वस्तिरिद्धि प्रपथे श्रेष्ठेति पथ्यायाः स्वस्तेस्त्रिष्टुभावग्ने नय सुपथा राये अस्माना देवानामपि पन्थामगन्मेत्यग्नेस्त्रिष्टुभौ; त्वं सोम प्रचिकितो मनीषा या ते धामानि दिवि या पृथिव्यामिति सोमस्य त्रिष्टुभावा विश्वदेवं सत्पतिं य इमा विश्वा जातानीति सवितुर्गायत्र्यौ सुत्रामाणं पृथिवीं द्यामनेहसं महीमू षु मातरं सुव्रतानामित्यदितेर्जगत्यौ ॥ इति।

'स्वस्ति नः'[1] इत्यनुवाक्या। स्वस्तिरिद्धीति[2] याज्या। अग्ने नयेत्यनुवाक्या।[3] आ देवानामिति[4] याज्या। त्वं सोमेत्यनुवाक्या।[5] या ते धामानीति[6] याज्या। आ विश्वदेवमित्यनुवाक्या।[7] य इमेति[8] याज्या। सुत्रामाणम्'[9] इत्यनुवाक्या। महीमू ष्विति[10] याज्या।

'स्वस्ति नः पथ्यासु' और 'स्वस्तिरिद्धि' यह दो मन्त्र मार्ग में कल्याण के लिए हैं, जो त्रिष्टुप् छन्द में निबद्ध हैं। अग्ने नय' और 'आ देवनामपि' यह दो मन्त्र अग्नि के यजन के लिए हैं जो त्रिष्टुप् छन्द में निबद्ध हैं। 'त्वं सोम' और याते धामानि' यह दोनों सोम के मन्त्र भी त्रिष्टुप् छन्द में निबद्ध हैं। 'आ विश्वदेवम्' और 'य इमा' यह दोनों सविता देवता के मन्त्र गायत्री छन्द में निबद्ध हैं। 'सुत्रामाणम्' और 'महीमू षु मातरं' यह दोनों अदिति के मन्त्र जगती छन्द में हैं।

---

१. ऋ० सं० १०.६३.१५। २. ऋ० सं० १०.६३.१६। ३. ऋ० सं० १ १८९ १।
४. ऋ० सं० १०.२.३। ५. ऋ० सं० १.९१.१। ६. ऋ० सं० १.९१.४।
७. ऋ० सं० ५.८२.७। ८. ऋ० सं० ५.८२.९। ९. ऋ० सं० १०.६३ १०।
१०. वा० सं० २१ ५। आश्व० श्रौ० ४.३.२। कात्या० श्रौ० १९.७.१६।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नन्वत्र त्रीण्येव च्छन्दांस्युक्तानि न तु सर्वाणीत्याशङ्क्याऽऽह—

एतानि वाव सर्वाणि च्छन्दांसि गायत्रं त्रैष्टुभं जागतमन्वन्यान्येतानि हि यज्ञे प्रतमामिव क्रियन्ते ॥ इति ।

मुख्यानि सर्वाणि च्छन्दांसि त्रीण्येव । इतराणि तु मुख्यान्यनुसृत्य वर्तन्ते । मुख्यत्वमेवैतानि हीत्यादिना स्पष्टीक्रियते । हि यस्मात्कारणादेतानि त्रीणि यज्ञे प्रतमामिव क्रियन्तेऽत्यन्तप्राचुर्येणैव प्रयुज्यते ततो मुख्यत्वम् ।

गायत्री, त्रिष्टुप्, और जगती सभी छन्दों में मुख्य ये तीन ही छन्द हैं, दूसरे छन्द तो इनके अनुयायी हैं । [यह मुख्य इसीलिए हैं] क्योंकि यज्ञ में इन्हीं का प्रयोग प्रचुरता से किया जाता है ।

एतद् वेदनं प्रशंसति—

एतैर्ह वा अस्य च्छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टं भवति य एवं वेद ॥ ९ ॥ इति ।

स्पष्टोऽर्थः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मण-भाष्यस्य द्वितीयाध्याये तृतीयः खण्डः ॥ ३ ॥ [९]

अतः जो इस प्रकार समझकर इन छन्दों के द्वारा यजन करता है वह मानो सभी छन्दों द्वारा यजन करता है ।

॥ इस प्रकार द्वितीय अध्याय में तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

पञ्चानां देवतानां क्रमेण याज्यानुवाक्ये उदाहृते अथ संयाज्ये वक्तव्ये तत्राऽऽदौ तावदुदाहृता याज्यानुवाक्याः प्रशंसति—

ता वा एताः प्रवत्यो नेतृमत्यः पथिमत्यः स्वस्तिमत्य एतस्य हविषो याज्यानुवाक्या एताभिर्वा इष्ट्वा देवाः स्वर्गं लोकमजयंस्तथैवैतद् यजमान एताभिरिष्ट्वा स्वर्गं लोकं जयति ॥ इति ।

स्वस्ति नः पथ्यास्वित्याद्या महीमू षु मातरमित्यन्ता दशर्चो याः पूर्वमुदाहृतास्ता एवैताः प्रशब्द-नेतृशब्द-पथिशब्द-स्वस्तिशब्दवत्यः । तत्र प्रशब्दः स्वस्तिरिद्धि प्रपथे त्वं सोम प्रचिकित इत्यत्र श्रूयते । नेतृशब्दोऽग्ने नयेत्यत्र श्रूयते । नयतिधातोः कर्तुस्तत्रावगमात् । पथिशब्दोऽग्ने नय सुपथा, आ देवानामपि पन्थामित्यत्र श्रूयते । स्वस्तिशब्दः



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वस्ति नः पथ्यासु स्वस्तिरिद्धीत्यत्र श्रूयते। तथा सति च्छत्रिन्यायेन सर्वा अप्येता ऋचः प्रादिभिः शब्दैर्युक्ता इति वक्तुं शक्याः। एवं सत्युत्कर्षद्योतकैरेतैः शब्दैर्युक्ता एता ऋचः प्रायणीयेष्टिगतस्य हविषो याज्यानुवाक्याः प्रशस्ता भवन्ति। एताभिर्वा इत्यादेरर्थो विस्पष्टः॥

i १० [ ii.४ ] [प्रायणीय इष्टि के] हवि के ये याज्या एवं अनुवाक्या-मन्त्र 'प्र', 'नेतृ', 'पथि' और 'स्वस्ति' शब्द से युक्त हैं। [उत्कर्ष के द्योतक शब्दों वाले] इन मन्त्रों से यजन करके देवताओं ने स्वर्गलोक को जीत लिया। इसी प्रकार यजमान भी इन्हीं मन्त्रों से यजन करके स्वर्गलोक को जीत लेता है।

प्रथमायामृचि चतुर्थं पादमादाय तत्रत्यस्य मरुच्छब्दस्यान्वयव्यतिरेकाभ्यां तात्पर्यं दर्शयति—

तासु पदमस्ति स्वस्ति राये मरुतो दधातनेति मरुतो ह वै देवविशोऽन्तरिक्षभाजनास्तेभ्यो ह यो निवेद्यः स्वर्गं लोकमेतीश्वरा हैनं नि वा रोद्धोर्वि वा मथितोः, स यदाह स्वस्ति राये मरुतो दधातनेति तं मरुद्भ्यो देवविड्भ्यो यजमानं निवेदयेति न हैं वा एनं मरुतो देवविशः स्वर्गं लोकं यन्तं निरुन्धते न विमथ्नते॥ इति।

तासु पूर्वोक्तास्वृक्षु पदं पादस्तस्मिन् पादे प्रोक्ता मरुतो देवानां वैश्या अन्तरिक्षे निवसन्ति।[1] एनं यजमानं नि वा रोद्धोः[2] स्वर्गमनं निरोद्धुं वा वि वा मथितः[3] विशेषेण मथितुमालोडयितुं विनाशयितुं वा ते मरुत ईश्वराः[4] समर्थाः सोऽयं व्यतिरेकः। बाधस्यात्रोपन्यस्तत्वात्। स यदाहेत्यादिरन्वयः। उक्तबाधसमाधानस्य तत्रोपन्यासात्। यदि होता 'स्वस्ति राय' इत्यादिपादं पठेत् तदानीं मरुद्भ्यो यजमानं निवेदयति। ततो मरुतः स्वर्गं लोकं गच्छन्तं यजमानं नैव निरुन्धते नापि विमथ्नते नापि विनाशयन्ति॥

उन [पूर्वोक्त ऋचाओं] में एक पाद [=पद] है 'हे मरुतों, हमको कल्याणकारी धन दो।' वस्तुतः मरुत् देवताओं की प्रजा हैं जो अन्तरिक्ष लोक में रहते हैं, जो कोई उनसे बिना बताए या निवेदन किए बिना स्वर्गलोक को जाता है वे उसे रोकने में अथवा उसका विनाश करने में समर्थ हैं। वह [होता] जो यह कहता है कि 'हे मरुतों हमको कल्याणकारी धन दो' वह ऐसा कहकर यजमान का देवताओं की प्रजा उन मरुतों के साथ निवेदन [परिचय] कराता है। तब स्वर्गलोक को जाने वाले इस यजमान को देवताओं की प्रजा वे मरुत् न तो रोकते हैं और न तो विनष्ट ही करते हैं।

---

१. 'अथातो मध्यस्थाना देवगणाः। तेषां मरुतः प्रथमागामिनो भवन्ति'—इत्यादि निरु० ११.१३। ते च रुद्रपुत्राः ऋ० सं० १.८६ १; १.३९.४। सा० भा०।
२. ३, ४. 'ईश्वरे तोसुन्-कसुनौ' पा० सू० ३.४.१३।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदनं प्रशंसति –

**स्वस्ति हैनमत्यर्जन्ति स्वर्गं लोकमभि य एवं वेद ॥** इति ।

स्वर्गमभिलक्ष्य जिगमिषुमेनं वेदितारं स्वस्ति क्षेमो यथा भवति तथा मरुतोऽतिशयेन प्रापयन्ति ॥

जो इस प्रकार जानता है वह स्वर्गलोक को लक्ष्य करके क्षेम का मार्ग प्राप्त कर लेता है ।

इत्थमुक्ताः प्रधानहविषो याज्यानुवाक्याः प्रशस्य संयाज्ये विधत्ते—

**विराजावेतस्य हविषः स्विष्टकृतः संयाज्ये स्यातां ये त्रयस्त्रिंशदक्षरे ।।** इति ।

विराट्छन्दस्कानां बहूनां विद्यमानत्वात् त्रयस्त्रिंशदक्षरशब्देन ते ऋचौ विशेष्येते ॥

इस [प्रायणीय इष्टि] की स्विष्टकृत् आहुति के लिए तैंतिस अक्षरों वाले दो संयाज्य मन्त्र विराट् छन्द में होना चाहिए ।

तयोर्ऋचोः प्रथमपादावुदाहरति—

'सेदग्निरग्नीँरत्यस्त्वन्यान्' 'सेदग्निर्यो वनुष्यतो निपातीत्येते ।।'[1] इति ।

ये दो मन्त्र 'सेदग्निरग्नीं' और 'सेदग्निर्यो' आदि हैं ।

विराजौ प्रशंसति—

**विराड्भ्यां वा इष्ट्वा देवाः स्वर्गं लोकमजयंस्तथैवैतद् यजमानो विराड्भ्यामिष्ट्वा स्वर्गं लोकं जयति ।।** इति ।

तथैवैतदिति दार्ष्टान्तिकप्रतिज्ञा 'यजमानः' इत्यादिकं तद्विवरणम् ॥

वस्तुतः इन दो विराट् मन्त्रों के द्वारा यजन करके देवताओं ने स्वर्गलोक को जीत लिया । इसी प्रकार यजमान भी दो विराट् मन्त्रों के द्वारा यजन करके स्वर्गलोक को जीत लेता है ।

ऋचोरवस्थितामक्षरसंख्यां प्रशंसति—

**ते त्रयस्त्रिंशदक्षरे भवतस्त्रयस्त्रिंशद्वै देवा अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्याः प्रजापतिश्च वषट्कारश्च तत्प्रथमे यज्ञमुखे देवता अक्षरभाजः करोत्यक्षरेणाक्षरेणैव तद्देवतां प्रीणाति, देवपात्रेणैव तद्देवतास्तर्पयति ।। १० ।।** इति ।

वषट्कारो देवताविशेषः । तत्तथा सति देवतानामक्षराणां च संख्यासाम्ये सति । यज्ञमुखं यज्ञोपक्रमः । स च सुत्यादिने प्रातरनुवाकादिना भविष्यति । तदपेक्षया

---

१. ऋ० सं० ७.१.१४,१५ । आश्व० श्रौ० ४.३.२ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रायणीयेष्टिः प्रथमं यज्ञमुखम् । तस्मिन् यज्ञमुखे वस्वादिकाः सर्वदेवतासंख्यासाम्यादक्षर-भाजः करोति । तत्तेन देवतानामक्षरप्रापणेनैकैकां देवतामेकैकेनाक्षरेण तोषयति । देवानां पात्रं फलमेकैकमक्षरं तेनैव पात्रेण तत्तदानीं देवतास्तर्पयति प्रीणातीत्यस्यैव विवरणमेतत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मण-भाष्यस्य द्वितीयाध्याये चतुर्थः खण्ड ॥ ४ ॥ [१०]

वे तैंतिस अक्षर वाले होते हैं। तैंतिस ही देवता भी हैं—आठ वसु, ग्यारह रुद्र, बारह आदित्य, प्रजापति और वषट्कार। इस प्रकार यज्ञ के बिलकुल प्रारम्भ में ही वह [होता] मन्त्र के तैंतिस अक्षरों में [वसु आदि] देवताओं को [संख्या साम्य के द्वारा] सम्मिलित कर लेता है; क्योंकि, एक-एक अक्षर से ही एक-एक देवता को वह प्रसन्न करता है। देवताओं के लिए पात्र [रूपी अक्षर] के द्वारा मानो वह उस समय देवताओं को तृप्त करता है।

॥ इस प्रकार द्वितीय अध्याय में चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

संयाज्ये विधाय प्रयाजानूयाजविषये किंचिद्विशेषविधानं पूर्वपक्षत्वेन शाखान्तरीय-मतमुपन्यस्यते—

**प्रयाजवदननुयाजं कर्तव्यं प्रायणीयमित्याहुर्हीनमिव वा एतदीङ्खितमिव यत्प्रायणीयस्यानुयाजा इति ॥ इति ।**

प्रायणीयेष्टेर्दर्शपूर्णमासविकृतित्वाच्चोदकेन प्रयाजा अनूयाजाश्च प्राप्ताः 'समिधो अग्न आज्यस्येत्याद्या मन्त्रसाध्या ये प्रयाजाः[1] देवं बर्हिरित्याद्या मन्त्रसाध्यास्त्रयोऽनू-याजाः[2] प्रायणीयाख्यं कर्म प्रयाजोपेतमनूयाजवर्जितं[3] कर्तव्यमिति शाखान्तरीया आहुः[4]। तत्रैषा युक्तिः प्रायणीयस्यानूयाजा इति यदस्ति तदेतद्धीनमिव वै तस्यैव

१. तै० ब्रा० ३.५.५.१-५ । २. तै० ब्रा० ३.५ ९.१-३ ।

३. अनुयाजमिति दीर्घमध्यपाठस्तैत्तिरीयाणाम्, बह्वृचां तु अनुयाजमिति ह्रस्वमध्य एव; वक्ष्यति चैतदनुपदं स्वयं भाष्यकारोऽपि ( पृ० ७० )। परमदृष्टेषु सर्वेष्वे-वैतरेयभाष्येषु दीर्घमध्यः, तदत्र लिपिकारप्रमादप्रवाह एव हेतुर्गम्यते ।

४. तथाहि-शत० ब्रा० "तदिळन्तं भवति, नानुयाजान् यजन्ति"—इत्यादि "तस्मादि-ळान्तं भवति, नानुयाजान् यजन्ति"—इत्यन्तम् ( ३.४.१.२६ ) । तथा कात्या० 'उत्तरं वा प्रकृत्यनुग्रहानुयाजप्रतिषेधाभ्याम्' ( ७.५.२४ ) इति ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

व्याख्यानमीङ्खितमिवेति विलम्बितमित्यर्थः[1]। अनूयाजेष्विज्यमानेषु कर्मणि विलम्बो भवेत् तस्मान्न यष्टव्या अनूयाजाः। इतिशब्दः पूर्वपक्षसमाप्त्यर्थः। यथा प्रायणीये कर्मण्यनूयाजा वर्ज्यन्ते, तथैवोदयनीये कर्मणि प्रयाजा वर्जनीया इति पूर्वपक्षाभिप्रायः। तमेतं तैत्तिरीया विस्पष्टमामनन्ति—'प्रयाजवदननूयाजं प्रायणीयं कार्यमनूयाजवदप्रयाजमुदयनीयम्'[2] इति॥

i.११ [ii.५]—कुछ लोगों का कथन है कि प्रयाज [यज्ञ के प्रारम्भ में दी जाने वाली] आहुतियों से ही, बिना अनुयाज [यज्ञ के अन्त में दी जाने वाली] आहुतियों के, प्रायणीय इष्टि होनी चाहिए। क्योंकि प्रायणीय इष्टि के अनुयाज में विलम्ब होने से हीनता है।

स्वोक्तं पूर्वपक्षं निराचष्टे--

तत्तन्नाऽऽदृत्यं प्रयाजवदेवानुयाजवत् कर्तव्यम्॥ इति।

तस्मिन् प्रायणीये कर्मणि तत्कर्मानुयाजवर्जनरूपं नाऽऽदरणीयम्।

किन्तु उस प्रायणीय इष्टि में अनुयाजवर्जित कर्म आदरणीय नहीं है। प्रयाज और अनुयाज दोनों ही से युक्त प्रायणीय इष्टि करनी चाहिए।

वर्जने बाधमुपन्यस्यति—

प्राणा वै प्रयाजाः, प्रजाऽनुयाजा, यत्प्रयाजानन्तरियात् प्राणांस्तद्यजमानस्यान्तरियाद्, यदनुयाजानन्तरियात् प्रजां तद्यजमानस्यान्तरियात्॥ इति।

प्रथमशब्दसामान्यात् प्रथमभावित्वाद् वा प्रयाजा यजमानस्य प्राणरूपाः। पश्चाद्भावित्वादनुयाजाः पुत्रादिरूपाः। यदा प्रयाजा वर्ज्यन्ते तदा यजमानसंबन्धिनां प्राणानामन्तरायो विच्छेदः स्यात्। अनुयाजवर्जने पुत्रादिविच्छेदः। अयमेव पूर्वपक्षबाधस्तैत्तिरीयैराम्नातः—'तत्तथा न कार्यमात्मा वै प्रयाजाः प्रजाऽनूयाजा यत्प्रयाजानन्तरियादात्मानमन्तरियाद् यदनूयाजानन्तरियात् प्रजामन्तरियात्'[3] इति। यद्यपि प्रायणीये प्रयाजवर्जनमप्रसक्तं तथाऽप्युदयनीये तैत्तिरीयोपन्यस्तं प्रयाजवर्जनमभिप्रेत्याऽयं बाधोपन्यासः॥

---

१. 'हीनं लुप्तम्, ईङ्खितं चलितम्। यदा अनूयाजा अपि क्रियन्ते तदा खल्वग्निष्टोमाख्यं प्रधानकर्म विलम्बितानुष्ठानमभवत्। हीनमिव भवति। लुप्तं प्रधानकर्म यद् गुणकर्मसु विस्तारः क्रियते इत्येव हीनमिव मन्तव्यम्। तथा चलितं न्यूनं प्रधानकर्म यत् तद्धित्वागुणकर्मसु श्रद्धां कुर्वन्ति इत्येव चलितमिव मन्तव्यम्'—इति भट्टभास्करः।

२. तै० सं० ६.१.५.३।        ३. तै० सं० ६.१.५.४।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रयाज [आहुतियाँ यजमान के] प्राण हैं और अनुयाज [पुत्रादि रूप] प्रजा हैं। यदि वह प्रयाज को छोड़ता है तो मानो यजमान के प्राणों को वह छोड़ देता है और यदि अनुयाज को छोड़ता है तो मानो वह यजमान की प्रजा को छोड़ देता है।

इत्थं पूर्वपक्षे बाधमुपन्यस्य चोदकैः प्राप्तस्योभयानुष्ठानस्य प्रतिप्रसवरूपं सिद्धान्तं विधत्ते -

तस्मात् प्रयाजवदेवानुयाजवत् कर्तव्यम् ॥ इति।

यस्मादन्यतरत्यागे बाधस्तस्मादित्यर्थः। तैत्तिरीया अप्येतदामनन्ति—'प्रयाजवदेवानूयाजवत्प्रायणीयं कार्यं प्रयाजवदनूयाजवदुदयनीयम्'[1] इति। अत्र सर्वत्रैतरेयपाठेऽनुयाज इति ह्रस्व उकारः। तैत्तिरीयपाठे दीर्घ इति विवेकः ॥

इसलिए इस इष्टि का प्रयाज और अनुयाज दोनों से यजन करना चाहिए।

चोदकप्राप्तान् पत्नीसंयाजान् समिष्टयजुश्च निषेधति—

पत्नीर्न संयाजयेत् संस्थितयजुर्न जुहुयात्[2] ॥ इति।

उसे पत्नी-संयाज [Joint sacrifices for the wives] का यजन [देवताओं के साथ] नहीं करना चाहिए और संस्थित यजुः का भी यजन नहीं करना चाहिए।

ततः किमित्यपेक्षायामाह—

तावतैव यज्ञोऽसंस्थितः ॥ इति।

---

१. तै० सं० ६.१.५.५।

२. (i) पत्न्यनुष्ठेयाश्चत्वारो यागाः पत्नीसंयाजा उच्यन्ते। (कात्या० १०. ८. १०)। चतस्रो देवता यजति···पत्नीं स्वगा करोति (शत० ब्रा० १.७. .६–१५)। तैत्तिरीयकेऽपि –'सोमं यजति' इत्यादि 'आज्येन पत्नीसंयाजाः'—(तै० सं० २. ६. १०) तन्मन्त्रादिविधयस्तु तद्ब्राह्मणे ३.५.१२.१३। जै० सू० चैतन्मूलकमधिकरणमेकमारचितम् (१३.३.२०–अधि १०) (ii) पत्नीस्तु न संयाजयेत्— इति आप० श्रौ० १०.२१.१४।

अथ समिष्टयजुर्जुहोति···(शत० ब्रा० १.७.३.२५–२७) तथा तैत्तिरीयकेऽपि सं० ६.६.२.१। एतद् विधानं च तत्पुरस्तादेव श्रुतं द्रष्टव्यम् (२.६.१०) तत्रैवेदमप्युक्तं सायणेन—'देवा गातुविदः' इत्ययं मन्त्रः (वा० सं० ८.२१) इष्टिसम्पूर्तिकारित्वात् समिष्टयजुरित्युच्यते। स च मन्त्र आध्वर्यवकाण्डे समाम्नातो व्याख्यातश्च'—इति। तत्र चाध्वर्यवे (तै० सं० १.१.४४) समिष्टयजुर्होमो निरूपितः। 'नव समिष्टयजूंषि जुहोति'—इत्यादि शत० ब्रा० ४.४.४.१ द्रष्टव्यम्। 'समिन्द्रेण' इति (वा० स० ८.१५)। द्र० कात्या० श्रौ० १०.८.११।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तदानीं यज्ञस्य समाप्तत्वादुत्तरकालीनं सोमक्रयादिकं न प्रवर्तेत। एतेषामननुष्ठानमात्रेण यज्ञोऽसमाप्तो भवति। तत उत्तरानुष्ठानं निर्बाधं प्रवर्तते ॥

इतने ही अनुष्ठान से यज्ञ पूरा नहीं होता।

कंचिद्विशेषं विधत्ते—

**प्रायणीयस्य निष्कासं निदध्यात् तमुदयनीयेनाभिनिर्वपेद् यज्ञस्य संतत्यै यज्ञस्याऽव्यवच्छेदाय ॥ इति।**

भाण्डगतो लेपरूपो हविःशेषो निष्कासः। प्रायणीयकर्मसंबन्धिनं निष्कासं कस्मिंश्चित्पात्रे स्थापयेत्। ततः सुत्यादिने[1] सोमयागस्यावसान उदयनीयेष्टिगतेन हविषा सह तं निष्कासं समभिनिर्वपेत्। एवं सति प्रायणीयशेषस्यानुवर्तनात् सोमयागः संततो भवति न तु तस्य विच्छेदः प्राप्नोति। तैत्तिरीयाश्चाऽऽमनन्ति—'प्रायणीयस्य निष्कास उदयनीयमभिनिर्वपति सैव सा यज्ञस्य सन्ततिः'[2] इति ॥

[सोम] याग की संतति अर्थात् उसे जारी रखने के लिए और यज्ञ में अविच्छिन्नता के लिए प्रायणीय-इष्टि का शेष भाग [निष्कासित हविःशेष] उदयनीय-इष्टि के हविर्भाग में मिलाने के लिए रख लेना चाहिए।

प्रकारान्तरमाह—

**अथो खलु यस्यामेव स्थाल्यां प्रायणीयं निर्वपेत् तस्यामुदयनीयं निर्वपेत्[3] तावतैव यज्ञः संततोऽव्यवच्छिन्नो भवति ॥ इति।**

नात्र निष्कासोऽपेक्षितः किंतु स्थाल्येकत्वमात्रेण यज्ञस्य संततत्वाद् व्यवच्छेदराहित्यं सिध्यति। सातत्यव्यवच्छेदराहित्ययोरर्थत एकत्वेऽप्यन्वयव्यतिरेकरूपत्वेन पृथगुपन्यासः।

अथवा, [हविःशेष का निष्कासन अपेक्षित नहीं है, यज्ञ बीच में न टूटे इसका दूसरा मार्ग यह है कि] जिस थाली में प्रायणीय-इष्टि [के पुरोडाश] का निर्वपन करता है उसी [थाली] में उदयनीय-इष्टि [के पुरोडाश] का भी निर्वपन करना चाहिए। उसी से यज्ञ की सातत्यता और अविच्छिन्नता होती है।

अथ प्रायणीयोदयनीयेष्ट्योर्याज्यानुवाक्याव्यत्यासं विधातुं प्रस्तौति—

**अमुष्मिन् वा एतेन लोके राध्नुवन्ति नास्मिन्नित्याहुर्यत्प्रायणीयमिति प्रायणीयमिति निर्वपन्ति प्रायणीयमिति चरन्ति प्रयन्त्येवास्माल्लोकाद् यजमाना इति ॥ इति।**

---

१. सुत्यालक्षणमिहैव चतुर्थाध्यायान्ते वक्ष्यति भाष्यकारः—'यस्यां क्रियायां सोमः सूयते अभिषूयते, सा सुत्या'—इति। तथा च सुत्यादिने इत्यस्य अभिषवक्रियादिवसे इत्यर्थः।　　२. तै० सं० ६.१.५.५।

३. 'तस्यामेव स्थाल्यामनिष्कासितायां श्रपयति' इति आप० श्रौ० १३.२३.२।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रायणीयमिति निर्वपन्ति प्रायणीयमिति चरन्ति ब्रह्मवादिनः कंचिद्दोषमाहुः। प्रायणीयमित्येवं विधिनोपेतं यत्कार्यमस्ति एतेन कर्मणा यजमानाः स्वर्गलोक एव समृद्धिं प्राप्नुवन्ति नास्मिँल्लोके। कथमिति चेत्। प्रायणीयमित्येतन्नाम मनसा कृत्वा निर्वपन्ति। चरणकालेऽपि तथैव चरन्ति। चरणमाहुतिप्रक्षेपः। तस्य च नाम्नोऽयमर्थः। अनेन कर्मणा यजमाना अस्माल्लोकात् प्रयन्त्येव न त्वस्मिँल्लोके कचित्कालं प्रतितिष्ठन्ति। तस्मात् प्रायणीयनाम संपन्नमिति। श्रौत इतिशब्दो ब्रह्मवाद्युद्भावितदोषसमाप्त्यर्थः॥

ब्रह्मवादियों का कथन है कि इससे यजमान स्वर्गलोक में ही समृद्धि को प्राप्त करते हैं इस लोक में नहीं। जब वे 'प्रायणीयम्' 'प्रायणीयम्' इस नाम को मन में रखकर निर्वपन करते हैं और 'प्रायणीयम्' कहकर आहुति देते हैं तो वे यजमान इस लोक से प्रयाण ही कर जाते हैं।

अथ तद्दोषसमाधानं विधत्ते—

**अविद्ययैव तदाहुर्व्यतिषजेद् याज्यानुवाक्याः॥ इति।**

अज्ञानेनैव ब्रह्मवादिनस्तद्वचनमाहुः। न त्वत्र तदुक्तदोषोऽस्ति। तद्दोषानुदयाय स्वस्ति नः पथ्यास्वित्यारभ्य महीमू षु मातरमित्यन्तानां[1] याज्यानुवाक्यानां व्यतिषङ्गं कुर्यात्॥[2]

किन्तु ब्रह्मवादियों का यह कथन अज्ञान के ही कारण है। [प्रायणीय और उदयनीय इष्टियों के याज्या एवं अनुवाक्या मन्त्रों में इस प्रकार] उलट-फेर होना चाहिए कि—

तमेव व्यतिषङ्गं विस्पष्टयति—

**याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः कुर्याद् या, उदयनीयस्य पुरोनुवाक्यास्ताः प्रायणीयस्य याज्याः कुर्याद्, तद्व्यतिषजत्युभयोर्लोकयोर्ऋद्ध्या उभयोर्लोकयोः प्रतिष्ठित्या, उभयोर्लोकयोर्ऋध्नोत्युभयोर्लोकयोः प्रतितिष्ठति॥ इति।**

तत्तेन याः प्रायणीयस्येत्युक्तप्रकारेण व्यतिषङ्गः संपद्यते। स च लोकद्वये भोग्यवस्तुसमृद्धयै स्थैर्येणावस्थानाय भवति। तथाऽनुष्ठानेन यजमानो लोकद्वये समृद्धः प्रतिष्ठितश्च भवति। यथोक्तदोषसमाधाने तैत्तिरीया आमनन्ति—'याः प्रायणीयस्य याज्यास्ता उदयनीयस्य कुर्यात् पराङमुं लोकमारोहेत् प्रमायुकः स्याद्याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः करोत्यस्मिन्नेव लोके प्रतितिष्ठति'[3] इति॥

---

१. इतःपरस्तात् ६४ पृष्ठे द्रष्टव्यम्।
२. विपरीताश्च याज्यानुवाक्या' आश्व श्रौ० ६.१४.४।
३. तै० सं० ६.१.५।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जो प्रायणीय इष्टि की पुरोनुवाक्या है उसे उदयनीय इष्टि की याज्या करनी चाहिए, और जो उदयनीय की पुरोनुवाक्या है उसे प्रायणीय की याज्या करनी चाहिए। दोनों लोकों में समृद्धि के लिए और दोनों लोकों में प्रतिष्ठा के लिए यह उलट-फेर [होता] करता है। [अतः ऐसा करके] दोनों लोकों में वह समृद्धि को प्राप्त करता है और दोनों लोकों में वह प्रतिष्ठा को प्राप्त करता है।

व्यतिषङ्गवेदनं प्रशंसति—

प्रतितिष्ठति य एव वेद ॥ इति।

जो इस प्रकार जानता है वह स्थिर अवस्था को प्राप्त करता है।

योऽयं प्रथमखण्डे[1] प्रायणीयोदयनीययोरदितिदेवताकश्चरुर्विहितस्तमिमं प्रशंसति —

आदित्यश्चरुः प्रायणीयो भवत्यादित्य उदयनीयो यज्ञस्य धृत्यै यज्ञस्य बर्सनद्धयै यज्ञस्याप्रस्रंसाय ॥ इति।

सोमयागस्याऽऽदौ प्रायणीयेष्टिः। अन्ते चोदनीयेष्टिस्तयोरुभयोरयमदितिदेवताकश्चरुः। सोऽयं तस्य यज्ञस्य धारणाय मण्याकारो ग्रन्थिविशेषः।[2] तस्य बन्धनं तत्सिद्धयर्थमुभयत्राऽऽदित्यचरुकरणम्। बन्धनस्थानीयेन चरुणा यज्ञस्य धारणं सिध्यति। सति च धारणे यज्ञाङ्गं किंचिदपि स्रस्तं लुप्तं न भवति। ततो यज्ञस्याप्रस्रंसायोभयतश्चरुः।

[प्रथम खण्ड में विहित अदिति के चरु की प्रशंसा करते हैं]—प्रायणीय इष्टि में अदिति के लिए चरु होता है। उदयनीय इष्टि में भी अदिति के लिए जो चरु होता है वह दोनों ओर से यज्ञ के धारणार्थ और यज्ञ की ग्रन्थि को बाँधने के लिए होता है, जिससे कि यज्ञाङ्ग किसी भी प्रकार खिसक न जाय। [मणि के आकार की ग्रन्थि विशेष 'बर्स' कही जाती है]।

अत्र दृष्टान्तमाह—

तद्यथैवाद इति ह स्माऽऽह तेजन्या उभयतोऽन्तयोरप्रस्रंसाय बर्सौ नह्यत्येवमेवैतद्यज्ञस्योभयतोऽन्तयोरप्रस्रंसाय बर्सौ नह्यति यदादित्यश्चरुः प्रायणीयो भवत्यादित्य उदयनीयः ॥ इति।

अदो वक्ष्यमाणं निदर्शनं यथा भवति तथा दार्ष्टान्तिकमित्येवं कश्चिद् ब्रह्मवाद्याह स्म तेजन्या इत्यादिना। तावेव दृष्टान्तदार्ष्टान्तिकौ स्पष्टीक्रियेते। तेजनी रज्जुस्तस्या

---

१. इतः परस्तात् ५२ पृष्ठे द्रष्टव्यम्।

२. बर्सेन बन्धनेन रज्ज्वादिना नर्द्धिः बर्सनर्द्धिः। यथा वंशादिकं रज्ज्वादिनोभयोरन्तयोर्बध्यते एवमेकया देवतया उभयोरन्तयोर्यज्ञो बध्यते'—इति भट्टभास्करः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उभयोरन्तयोरप्रस्रंसाय विश्लेषनिवारणाय लौकिकः पुरुषो बसॉं नह्यति मण्याकारौ ग्रन्थी बध्नाति। एवमेव चरुद्वयं यदस्ति तदेतद् यज्ञस्योपक्रमोपसंहाररूपयोरुभयोरन्तयोरशैथिल्याय मण्याकारबन्धनस्थानीयं भवति ॥

ब्रह्मवादी ऐसा कहते हैं कि यह कहा हुआ निदर्शन उसी प्रकार है जैसे किसी रज्जु के दोनों सिरों को बाँधने से वह रज्जु हाथ से खिसकने नहीं पाती, उसी प्रकार यज्ञ के दोनों किनारों को प्रसंसन से बचाने के लिए गाँठ बाँधता है। इस प्रकार जो अदिति के लिए प्रायणीय इष्टि में चरु होता है और जो उदयनीय इष्टि में अदिति के लिए चरु होता [वह यज्ञ को बाँधने के लिए होता है]।

येयं प्रायणीये पथ्याख्या प्रथमा देवताऽस्ति, उदयनीये तस्या उत्तमात्वमर्थवादेनोन्नयति—

**पथ्ययैवेतः स्वस्त्या प्रयन्ति पथ्यां स्वस्तिमभ्युद्यन्ति स्वस्त्येवेतः प्रयन्ति स्वस्त्युद्यन्ति स्वस्त्युद्यन्ति ॥ ११ ॥ इति।**

इति 'ऐतरेयब्राह्मणे' प्रथमपञ्चिकायां द्वितीयोऽध्यायः ॥ २ ॥

इतःशब्दः षष्ठ्यर्थे वर्तते। आसामाज्यहविष्कानां देवतानां मध्ये पथ्ययैव स्वस्त्यैतच्छब्दद्वयाभिहितयैव देवतया प्रयन्ति प्रारभन्ते प्रायणीये तां देवतां प्रथमं यजन्तीत्यर्थः। पथ्यां स्वस्तिमभिशब्दद्वयाभिहितां देवतामभिलक्ष्योद्यन्ति समापयन्ति। उदयनीये तां देवतामुत्तमां यजन्तीत्यर्थः। स्वस्त्याख्याया देवताया आद्यन्तयोर्योगे सति यजमाना 'इतः'अस्मिन् कर्मणि[1] स्वस्त्येव क्षेम एव यथा भवति तथा प्रयन्ति प्रारभन्ते। तथा स्वस्त्युद्यन्ति क्षेमेण समापयन्ति। अभ्यासोऽध्यायसमाप्त्यर्थः ॥

अथ मीमांसा। एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

"प्रायणीयस्य निष्कासे यो निर्वापोऽर्थकर्म तत् ॥
निष्कासप्रतिपत्तिर्वोदयनीयस्य संस्कृतिः ॥ २१ ॥
उताऽऽद्यः पूर्ववन्मैवं मुख्यस्य प्रकृतत्वतः ॥
मध्योऽस्तु नोपयोक्तव्यसंस्कारस्य गुरुत्वतः ॥[2] २२ ॥

ज्योतिष्टोमे श्रूयते—'प्रायणीयस्य निष्कास उदयनीयमभिनिर्वपति' इति।[3] अत्र पूर्वन्यायेन निष्कासद्रव्यकमुदयनीयसमानधर्मकमन्यदर्थकर्मेत्याद्यः पक्षः। मुख्यस्योदयनीयस्य प्रकृतत्वाद् भिन्नप्रकरणाम्नातावभृथधर्मातिदेशवदुदयनीयस्य धर्मातिदेशस्याप्यसंभवान्नार्थकर्मत्वम्। यदि तर्हि निष्कासप्रतिपत्तिरिति मध्यमः पक्षोऽस्तु।

---

१. 'इतो लोकाद्' इति भट्टभास्करगोविन्दस्वामिनौ।
२. जै० न्या० वि० ११.२.१६.६३–६६।
३. तै० सं० ६.१.५.५।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सोऽपीत्थं न संभवति, उपयुक्तसंस्कारादुपयोक्ष्यमाणसंस्कारस्य गरीयस्त्वात्। तस्माद् उदयनीयस्य संस्कारः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये प्रथमपञ्चिकायां द्वितीयाध्याये पञ्चमः खण्डः ॥ ५ ॥ [ ११ ]

वेदार्थस्यप्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकवीरबुक्कभूपालसाम्राज्यधुरंधर-माधवाचार्यादिशतो सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश-नामभाष्ये ऐतरेयब्राह्मणस्य द्वितीयोऽध्यायः ॥ २ ॥

[इन देवताओं के मध्य] 'पथ्या स्वस्ति'—इससे वे प्रारम्भ करते हैं और पथ्या स्वस्ति' में वे समाप्त करते हैं। इस कर्म में यजमान क्षेम के साथ ही प्रारम्भ करते हैं, और क्षेम के साथ ही समाप्त भी करते हैं।

॥ इस प्रकार ऐतरेयब्राह्मण की प्रथमपञ्चिका के दूसरे अध्याय की हिन्दी पूर्ण हुई ॥ २ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ तृतीयोऽध्यायः

प्रायणीया तदङ्गं च देवतादिकमीरितम् ।
तथैवोदयनीया च तद्विशेषाश्च वर्णिताः ॥[1] १ ॥

अथ सोमप्रवहणाङ्गमन्त्रादयो वक्तव्याः । तत्राऽऽदौ सोमक्रयणस्य दिशं विधत्ते—

**प्राच्यां वै दिशि देवाः सोमं राजानमक्रीणंस्तस्मात् प्राच्यां दिशि क्रीयते ॥ इति ।**

प्राचीनवंशात् पूर्वस्यां दिशि देवैः पुरा सोमस्य क्रीतत्वादृत्विग्भिरपि तथा सोमः क्रेतव्य इत्यर्थः ।[2]

i.१२ [iii.१] [प्राचीन वंश से] पूर्व दिशा में देवताओं ने सोम-राजा को खरीदा, इसलिए यह पूर्व दिशा में ही खरीदा जाता है ।

प्रसङ्गात् सोमविक्रयिणः प्रत्यवायं दर्शयति—

**तं त्रयोदशान् मासादक्रीणंस्तस्मात् त्रयोदशो मासो नानुविद्यते, न वै सोमविक्रय्यनुविद्यते पापो हि सोमविक्रयी ॥ इति ।**

पुरा संवत्सरस्य त्रयोदश मासाः सन्ति नेदानीम् । देवास्त्रयोदशस्य मासस्याभिमानिनः पुरुषात् तं सोमं क्रीतवन्तः । यस्मात् तदभिमानी पुरुषः सोमविक्रयी तस्माल्लोके तदीयस्त्रयोदशमासो नानुविद्यते शुभकर्मानुकूलो नास्ति । मेषादिसंक्रान्त्यादिरहितत्वान् मलमास इत्यभिप्रेत्य तस्मिन् मासे शिष्टाः शुभकर्माणि वर्जयन्ति । अत एवेदानीमपि सोमविक्रयी शिष्टाचारस्यानुकूलो नैव विद्यते । सोमविक्रयिणः पापरूपत्वे श्रुत्यन्तर प्रसिद्धिद्योतनार्थो हिशब्दः । अत एव श्रुत्यन्तरे तद्विषयो मन्त्र

---

१. द्वितीयाध्यायार्थसङ्ग्रहश्लोक एषः । तत्र पञ्चसु खण्डेसु क्रमात् १—प्रायणीयेष्टिः, २—प्रयाजाहुतिरूपं प्रायणीयाङ्गकर्म, ३—प्रायणीयदेवतादिकम्, ४—उदयनीयानुष्ठेयविशेषाश्चेति पञ्चार्था उपदिष्टा इत्यर्थः ।

२. सोमक्रयाख्यायिकादिकं तु पञ्चमे वक्ष्यति; सोमक्रयप्रकारादयस्त्वाध्वर्यवेषु विशेषतः श्रुताः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एवं व्याख्यायते—'अस्मे ज्योतिः सोमविक्रयिणि तम[1] इत्याह। ज्योतिरेव यजमाने दधाति। तमः सोमविक्रयिणमर्पयति'[2] इति।[3] अत्र तमःशब्दः पापवाची।

[सोम-क्रय, अग्नि-मथन, आतिथ्य-इष्टि]—

देवताओं ने तेरहवें महीने से उस [सोम] को खरीदा था। इसलिए तेरहवाँ महीना [=मलमास] शुभ कर्म के अनुकूल नहीं है। सोम बेचने वाला भी शिष्टाचार के अनुकूल नहीं होता। इसलिए सोमविक्रयी पापी है।

क्रयादूर्ध्वं प्राचीनवंशं प्रति नीयमाने सोमे पठितव्यानामृचामष्टसंख्यामादौ प्रशंसति—

**तस्य क्रीतस्य मनुष्यानभ्युपावर्तमानस्य दिशो वीर्याणीन्द्रियाणि व्युदसीदंस्तान्येकयर्चाऽवारुरुत्सन्त तानि नाशक्नुवंस्तानि द्वाभ्यां तानि तिसृभिस्तानि चतसृभिस्तानि पञ्चभिस्तानि षड्भिस्तानि सप्तभिर्नैवावारुन्धत तान्यष्टाभिरवारुन्धताष्टाभिराश्नुवत यदष्टाभिरवारुन्धताष्टाभिराश्नुवत तदष्टानामष्टत्वम्॥ इति।**

क्रीतः सोमो यदा मनुष्यान् यजमानादीनभिलक्ष्यागच्छति तदानीं तस्य सोमस्य दिगादीनि व्युदसीदन् विशेषेणोत्सन्नान्यभवन्। दिक्शब्देनाधिष्ठानमुपलक्ष्यते। सोमं नेतुं यदधिष्ठानं यच्च वीर्यं सोमनिष्ठं बलप्रदानसामर्थ्यं यच्चेन्द्रियचक्षुरादिपाटवहेतुत्वं तत्सर्वं विनष्टम्। तदानीं ते यजमाना ये मनुष्यास्तानि दिगादीन्येकयर्चाऽवरोद्धुं स्वाधीनं कर्तुमैच्छन्। ततस्तान्यवरोद्धुं नाशक्नुवन्। एवं द्वित्वादिसप्तपर्यन्तया मन्त्रसंख्यया नैवावरोधं कृतवन्तः। अष्टसंख्यया त्ववरोधं कृतवन्तः। अष्टसंख्यया त्ववरोधं कृत्वा तानि दिगादीनि प्राप्तवन्तः। अष्टसंख्यया तस्मादवरुध्यन्त। एभिर्नश्यन्तेऽश्नुवत एभिरिति वा व्युत्पत्त्याऽष्टशब्दो निष्पन्नः॥

उस खरीदे गए सोम के यजमान आदि मनुष्यों के पास आने पर उसका वीर्य अर्थात् बल प्रदान सामर्थ्य और चक्षु आदि इन्द्रियों की पटुता सभी दिशाओं में व्याप्त हो गई

---

१. तै० सं० १.२.७। २. तै० सं ६.१.१०.४।

३. 'अस्मे ज्योतिः'—इत्येकः, 'सोमविक्रयिणि तमः'—इत्यपरः, तैत्तिरीयके श्रूयते। सं० १.२.७। तयोरेव व्याख्यानायेदं ब्राह्मणम्। तत्राद्यस्य विनियोग एवं प्रोक्त आपस्तम्बेन 'अस्मे ज्योतिरिति शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति—इत्यादि (१०.२६.११), द्वितीयस्य चैवम्—'कृष्णामूर्णास्तुकामद्भिः क्लेदयित्वेदमहं सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामीत्युपग्रथ्य तया सोमविक्रयिणं विध्यति सोमविक्रयिणि तम इति'—इति (१४)। 'अविलोमभिर्निर्मितस्तन्तुः, ऊर्णास्तुका'—इति तै० सा० भा०।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अर्थात् विनष्ट हो गई। उन यजमानों ने एक ऋचा के द्वारा उनको अपने अधीन करने की चेष्टा की। परन्तु उसे रोकने में वह समर्थ न हो सके। इस प्रकार उनको दो, तीन, चार, पाँच; छः और सात मन्त्रों से भी न रोक सके, किन्तु आठ मन्त्रों से उन्होंने उनको रोका। इस प्रकार आठ मन्त्रों से उसे प्राप्त किया, इसीलिए आठ यह नाम निष्पन्न हुआ ['अश्' धातु से 'अष्ट' बनता है जिसका अर्थ प्राप्त करना है]।

एतद् वेदनं प्रशंसति—

**अश्नुते यद्यत्कामयते य एवं वेद ॥** इति।

तत्काम्यमश्नुत इति योज्यम्।

जो इस प्रकार जानता है वह इच्छानुसार वस्तु को प्राप्त करता है।

इदानीमष्टसंख्यां विधत्ते—

**तस्मादेतेषु कर्मँस्वष्टावष्टावनूच्यन्त इन्द्रियाणां वीर्याणामवरुद्ध्यै ॥ १२ ॥** इति।

इदानीं प्रस्तुतं सोमप्रवहणाख्यं[1] यत्कर्म तत्र करिष्यमाणं कर्मान्तरं तथाविधेषु प्रत्येकमष्टावष्टावृचो होताऽनुब्रूयात्। तथाऽष्टसंख्ययेन्द्रियाणि वीर्याणि चावरुद्धानि भवन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मण-भाष्ये तृतीयाध्याये प्रथमः खण्डः ॥ १ ॥ [१२]

इसीलिए इन कर्मों में वीर्य और इन्द्रियों की सामर्थ्य को प्राप्त करने के लिए आठ-आठ ऋचाओं का पाठ होता को करना चाहिए।

॥ इस प्रकार तृतीय अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ द्वितीयः खण्डः

मन्त्रगतां संख्यां विधाय तन्मन्त्रान् विधातुमादौ प्रैषमन्त्रं विधत्ते—

**सोमाय क्रीताय प्रोह्यमाणायानुब्रू३हीत्याहाध्वर्युः ॥** इति।

यः सोमः क्रीतः स क्रयदेशात् प्राचीनवंशं प्रति प्रोह्यते नीयते तदर्थमनुकूला ऋचो हे होतरनुक्रमेण ब्रू३हि। तमेवं प्रैषमन्त्रमध्वर्युः पठेत्।

i १३ [iii २] अब अध्वर्यु [होता से प्रैष मन्त्र] कहता है 'खरीदे हुए और [प्राचीन वंश के पास] लाए गए सोम के लिए उसके अनुकूल ऋचा का पाठ करो।'

---

१. तत्र सोमप्रवहण्यो नामाष्टौ ऋच उत्तरस्मिन्नेव खण्डे विधास्यन्ते।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ होतुः प्रथमामृचं विधत्ते—

भद्रादभि श्रेयः प्रेहीत्यन्वाह ।। इति ।

सेयमृक्तैत्तिरीयशाखायामेवमाम्नाता[1]—

'भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुर एता ते अस्तु ।

अथेमवस्य वर आ पृथिव्या आरे शत्रून् कृणुहि सर्ववीरः'[2] ।। इति ।

तस्यायमर्थः—हे सोम भद्रान् मङ्गलाद् भूलोकरूपात् तस्मात् क्रयदेशाच्छ्रेयः श्रेष्ठं स्वर्गलोकस्थानीयं प्राचीनवंशदेशमभिलक्ष्य प्रेहि प्रकर्षेण गच्छ। तथा गच्छतस्ते बृहस्पतिः पुर एता पुरतो गन्ताऽस्तु । अथ गमनादूर्ध्वं पृथिव्याः संबन्धिन्या समन्ताद् वरे श्रेष्ठे देवयजन ईमवस्येदं तवावस्थानयोग्यं स्थानं निश्चिनु । सर्वेभ्यो वीरः शूरस्त्वं शत्रून् पापरूपान् यज्ञविद्वेषिण आरे कृणुहि दूरे कुरु निराकुर्वित्यर्थः ।।

'भद्रादभि' आदि मन्त्र का वह पाठ करता है ।

तस्यामृचि प्रथमपादं व्याचष्टे—

अयं वाव लोको भद्रस्तस्मादसावेव लोकः श्रेयान् स्वर्गमेव तल्लोकं यजमानं गमयति ।। इति ।

तत्तेन प्रथमपादपाठेन । स्पष्टमन्यत् ।।

यह लोक भद्र हैं अतः [ऋक्गत् 'भद्र' शब्द का अर्थ हैं] इस लोक से स्वर्गलोक श्रेष्ठ है । वस्तुतः इस प्रकार उस [प्रथम पाद के पाठ] के द्वारा [होता] यजमान को स्वर्गलोक भेजता है ।

द्वितीयपादमनूद्य व्याचष्टे—

बृहस्पतिः पुर एता ते अस्त्वित्याह ब्रह्म वै बृहस्पतिर्ब्रह्मैवास्मा एतत्पुरोगवमकर्न वै ब्रह्मण्वद्रिष्यति ।। इति ।

बृहस्पतेर्ब्रह्मत्वं ब्राह्मणजातिमत्त्वं 'ब्रह्म वै देवानां बृहस्पतिः' इत्यादिश्रुत्यन्तरे[3] प्रसिद्धम् । एतदेतेन द्वितीयपादपाठेनास्मै यजमानार्थं ब्रह्मैव ब्राह्मणमेव पुरोगवं पुरोगन्तारमकः करोति । ब्रह्मण्वद् ब्राह्मणसहायोपेतं कर्म न वै रिष्यति सर्वथा नाशं न प्राप्नोति ।।

---

१. न तु स्वशाखीयेति यावत् । अत एवाश्वलायनेन प्रपठ्य विहितः, न तु प्रतीकग्रहणमात्रेणेति द्रष्टव्यम् ( आश्व० श्रौ० ४.४.२ ) । एषा शैली कल्पसूत्रकाराणां प्रायः सर्वत्रैव ।

२. तै० सं० १.२.३.३ ।

३. तै० सं० २.२.९.१ । इहाप्युपरिष्टात् 'ब्रह्म वै बृहस्पतिः, क्षत्रं सोम आसीत्' इति २.५.६ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'बृहस्पति देव तुम्हारा पथ प्रदर्शक होवे।' ब्रह्म ही बृहस्पति है। ['बृहस्पतिः' आदि] इस [द्वितीय पाद के पाठ] के द्वारा [होता यजमान के लिए] ब्रह्म को पथ प्रदर्शक बनाता है। वस्तुतः इस प्रकार ब्राह्मण को सहायता से युक्त कर्म सर्वनाश को प्राप्त नहीं होता है।

तृतीयपादमनूद्य व्याचष्टे—

**अथेमवस्ये वर आ पृथिव्या इति देवयजनं वै वरं पृथिव्यै देवयजन एवैनं तदवसाययत्यारे शत्रून् कृणुहि सर्ववीर इति द्विषन्तमेवास्मै तत्पाप्मानं भ्रातृव्यमपबाधतेऽधरं पादयति ॥ इति ।**

देवयजनाख्यस्य यागदेशस्य पृथिवीसंबन्धिश्रेष्ठस्थानत्वात् तत्रैवैनं सोमं तत्तेन तृतीयपादपाठेनास्मै यजमानाय द्वेषं कुर्वन्तं पापरूपं शत्रुमपबाधते। अधरं पादयतीति। निकृष्टं पदं प्रापयतीत्यर्थः ॥

'पृथ्वी के वरणीय स्थान में इसको स्थापित करो।' 'देव-यजन' नामक यागदेश ही पृथ्वी का वरणीय [=श्रेष्ठ] स्थान है। उस देव यजन प्रदेश में ही इस [सोम] को उस [तृतीय पाद के पाठ] के द्वारा स्थापित करता है। 'अपनी सम्पूर्ण शक्ति से [देव यजन प्रदेश से राक्षसादि] शत्रुओं को दूर करो' इस [चौथे पाद के पाठ के] द्वारा द्वेष करने वाले पाप रूप शत्रु को [होता यजमान से] दूर करता है, और उसको निकृष्ट स्थान दिलाता है।

होत्राऽनुवक्तव्या द्वितीयाद्यास्तिस्र ऋचो विधत्ते—

**सोम यास्ते मयोभुव इति तृचं सौम्यं गायत्रमन्वाह सोमे राजनि प्रोह्यमाणे स्वयैवैनं तद्देवतया स्वेन च्छन्दसा समर्धयति ॥ इति ।**

तिसृणामृचां संघातस्तृचः[1] स च सोमदेवताको गायत्रीछन्दस्कश्च सोमानयनकाले तं तृचमनुब्रूयात्।[2] तत्तेनानुवचनेन स्वात्मरूपया देवतया स्वकीयच्छन्दसा चैनं सोमं समृद्धं करोति। अत्र नीयमानद्रव्यविशेषः सोमो मन्त्रदेवताऽप्यसावेव तस्मात् स्वात्मरूपत्वं गायत्री द्युलोकात् सोममानीतवतीति तैत्तिरीयाः कद्रूश्चेत्यनुवाके समामनन्ति।[3] तस्माच्छन्दसः स्वकीयत्वम् ॥

'सोम यास्ते' आदि इस सोम-देवताक गायत्री छन्दस्क तृच का सोम के लाने के समय होता] पाठ करे। इस प्रकार लाए जाने वाले सोम राजा को वह उसी के देवता के द्वारा और उसी के छन्द के द्वारा समृद्ध करता है।

---

१. 'ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि'—इति पा० सू० ६.१.३४ वा १।
२ स च तृचः ऋ० सं० १ ९१.९–११। आश्वलायनेनाप्यत्र विहितः (४.४.४)।
३. तै० सं० ६ १.६.१। तथा शतपथेऽपि द्रष्टव्यम्—'दिवि वै सोम आसीत्'—इत्यादिः ३.२.४।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पञ्चमीमृचं विधत्ते—

**सर्वे नन्दन्ति यशसाऽऽगतेनेत्यन्वाह ॥ इति ।**

सा च संहितायामेवमाम्नाता—

सर्वे नन्दन्ति यशसाऽऽगतेन सभासाहेन सख्या सखायः ।

किल्बिषस्पृत् पितुषणिर्ह्येषामरं हितो भवति वाजिनाय[1] ॥ इति ।

तस्या ऋचोऽयमर्थः—सर्वे सखायो यजमानप्रभृतयः 'सख्या' सोमरूपेण नन्दन्ति तुष्यन्ति । कीदृशेन सख्या । 'यशसा' यशोहेतुना । आगतेन समीपं प्राप्तेन । 'सभासाहेन' विद्वत्सभां विद्याप्रसङ्गेन सहतेऽभिभवति सभासहस्तादृशेन । स तादृशः सोमरूपः सखैषामृत्विग्यजमानानां 'किल्बिषस्पृत्' किल्बिषात् पापात् स्पृणोति पालयति किल्बिषस्पृत् । पितुशब्दोऽन्नवाची ।[2] तस्य सनिर्दानं येन सोमेन लभ्यते सोऽयं 'पितुषणिः' । सोमस्य पापनिवारकत्वमन्नप्रदानेन सर्वशास्त्रप्रसिद्धिद्योतनार्थो हि-शब्दः । तथाऽयं सोमो वाजिनशब्दाभिधेयेन्द्रियाय वीर्याय वाऽरं हितोऽलमत्यन्तंहितो भवतीति ॥

**'सभी [यजमान प्रभृति] यश रूप समीप में प्राप्त सोम से संतुष्ट होते हैं ।' होता इसका पाठ करता है ।**

तस्या ऋचः प्रथमं पादं व्याचष्टे—

**यशो वै सोमो राजा सर्वो ह वा एतेन क्रीयमाणेन नन्दति यश्च यज्ञे लप्स्यमानो भवति यश्च न ॥ इति ।**

यशःकारणात् सोमस्य यशस्त्वम् । यः पुमानृत्विग् भूत्वा यज्ञे धनं लप्स्यते यश्च द्रष्टुमागतो न तु धनार्थी सर्वोऽप्यसौ[3] सोमक्रयणं दृष्ट्वा तुष्यति ॥

**सोम राजा ही 'यश' है । [जो पुरुष ऋत्विज होकर] यज्ञ में धन प्राप्त करने वाले हैं अथवा जो [धन प्राप्त करने वाले] नहीं हैं [मात्र देखने के लिए आए हैं] वे सभी इस सोम के क्रय को देखकर प्रसन्न होते हैं ।**

द्वितीयपादमनूद्य व्याचष्टे—

**सभासाहेन सख्या सखाय इत्येष वै ब्राह्मणानां सभासाहः सखा यत्सोमो राजा ॥ इति ।**

---

१. ऋ० १०.७१.१० ।

२. पितुरित्यन्ननाम; पातेर्वा; पिबतेर्वा प्यायतेर्वा'—इत्यादि निरु० ९.२४ ।

३. यश्च यज्ञं भागं लभते देवतात्वेन कर्तृत्वेन वा यश्च न लभते स सर्वः—इति गोविन्दस्वामी ।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

योऽयं राजमानः सोमः सोऽयं ब्राह्मणसभामभिभवति । सर्वे ब्राह्मणाः सोमाधीना भवन्तीत्यर्थः ॥

'सोम ब्राह्मण सभा में प्राधान्य को प्राप्त करता है'—इस द्वितीय पाद का पाठ करता है। यह जो सोम राजा है वह ब्राह्मणों की सभा में अभिभूत करने वाला सखा है, अर्थात् सभी ब्राह्मण सोम के अधीन होते हैं।

तृतीयपादे प्रथमं पदमनूद्य व्याचष्टे—

किल्बिषस्पृदित्येष उ एव किल्बिषस्पृत्,[1] ॥ इति ।

योऽयं सोमोऽस्ति एष उ एव किल्बिषात् [स्पृणोति] पालयति सर्वकामहेतोः सोमयागस्य पापक्षयायानुष्ठातुं शक्यत्वात् ॥

'यज्ञ के द्वारा दोष दूर होता है'—इस तृतीय पाद का पाठ करता है। जो यह [सोम] है वही पापों से रक्षा करता है।

यज्ञानुष्ठाने च प्रवृत्तानामृत्विग्यजमानानां कः किल्बिषप्रसङ्ग इत्याशङ्क्याऽऽह—

यो वै भवति यः श्रेष्ठतामश्नुते स किल्बिषं भवति ॥ इति ।

यः पुमान् प्रौढे यज्ञे प्रवृत्तो भवति तत्रापि यः श्रेष्ठतां प्रयोगपाटवाभिमानमश्नुते प्राप्नोति स तादृशः पुरुषः कर्मसमाप्तिव्यग्रतया पण्डितंमन्यत्वेन वाग्वैकल्यं कुर्वन् कल्बिषं भवति पापं प्राप्नोति ॥

जो [पुरुष प्रौढ़ यज्ञ में प्रवृत्त] होता है वहाँ भी जो श्रेष्ठता [प्रयोग में पटुता के अभिमान] को प्राप्त कर लेता है वह [पुरुष कर्म की समाप्ति की व्यग्रता में ठीक-ठीक मन्त्र का उच्चारण न करता हुआ] दोषी होता है।

तमेतं पापप्रसङ्गं विस्पष्टयति—

तस्मादाहुर्माऽनुवोचो मा प्रचारीः किल्बिषं नु मा यातयन्निति ॥ इति ।

यस्मादृत्विजां किल्बिषं संभाव्यते तस्माद्यजमाना एवमाहुर्हे होतस्त्वं माऽनुवोचोऽन्यचित्तः सन् पुरोनुवाक्यां मा पठ । हेऽध्वर्यो मा प्रचारीर्व्यग्रतया प्रचारमन्यथाऽनुष्ठानं मा कार्षीः । नु क्षिप्रं कुर्वन्तो भवन्तः किल्बिषं मा यातयन्मा प्राप्नुवन्तः । इतिशब्दो यजमानानामुक्तिसमाप्तौ । इत्थं संभावितात् कल्बिषात् सोमः पालयति ॥

इसीलिए [दोष की संभावना से जल्दी न करने के लिए यजमान] कहते हैं 'कि [हे होता अन्यमनस्कता में पुरोनुवाक्या का] पाठ मत करो। हे अध्वर्यु ! व्यग्रता में अनुष्ठान न करो, जिससे जल्दीबाजी में वाग्वैकल्य रूप दोष न हो जाय।

---

१. किल्बिषस्पृक् किल्बिषो यजमानः विपरीतलक्षणया अकिल्बिषः । अन्धः सहस्राक्ष इतिवत् । तं स्पृशतीति सोमः किल्बिषस्पृक्—इति गोविन्दस्वामी ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तृतीयपादे द्वितीयपदमनूद्य व्याचष्टे—

पितुषणिरित्यन्नं वै पितु, दक्षिणा वै पितु, तामेनेन सनोत्यन्नसनिमेवैनं तत्करोति ॥ इति ।

अन्नवाची पितुशब्दो लब्धव्यत्वसाम्याद्दक्षिणामप्युपलक्षयति । तां दक्षिणामेतेन सोमेन निमित्तभूतेन सनोति ऋत्विग्भ्यो ददाति । तत्तेन पितुशब्दपाठेनैनं सोममन्नसनिमन्नदाननिमित्तभूतमेव करोति ॥

ऋक्गत 'पितुषणिः' इस शब्द में 'पितु' का अर्थ है 'अन्न' । [लब्धसाम्य के कारण] 'पितु' शब्द दक्षिणा का भी उपलक्षक है । [यजमान ऋत्विजों को सोमयाग कराने के निमित्त से] उनको दक्षिणा देता है । उसी ['पितु' शब्द के पाठ] के द्वारा सोम रूप अन्न के दान का निमित्तभूत ही करता है ।

चतुर्थं पादमनूद्य तत्र वाजिनशब्दं व्याचष्टे—

अरं हितो भवति वाजिनायेतीन्द्रियं वै वीर्यं वाजिनम् ॥ इति ।

'अरं हितो' आदि में इन्द्रियों की शक्ति ही 'वाजिन्' शब्द का अर्थ है ।

वेदनं प्रशंसति—

आजरसं हास्मिन्वाजिनं नापच्छिद्यते य एवं वेद ॥ इति ।

जरासमाप्तिपर्यन्तं वेदितुरिन्द्रियवीर्ययोरपच्छेदो न भवति ॥

जो इस प्रकार जानता है वृद्धावस्था की समाप्तिपर्यन्त भी उसके इन्द्रियों की शक्ति क्षीण नहीं होती है ।

षष्ठीमृचं विधत्ते—

आगन् देव इत्यन्वाह ॥ इति ।

स च मन्त्रः संहितायामाम्नातः—

'आगन् देव ऋतुभिर्वर्धतु क्षयं दधातु नः सविता सुप्रजामिषम् ।

स नः क्षपाभिरहभिश्च जिन्वतु प्रजावन्तं रयिमस्मे समिन्वतु'[1] ॥ इति ।

तस्यायमर्थः—सोमो 'देव' आगन्निह कर्मण्यागच्छतु । आगत्य च 'ऋतुभिः' सह 'क्षयं' निवासस्थानं 'वर्धतु' वृद्धिं प्रापयतु । नोऽस्माकं 'सविता' प्रेरकः स देवः 'सुप्रजां' शोभनापत्यमिषमन्नं च 'दधातु' संपादयतु । स देवो नोऽस्मान् क्षपाभिरात्रिभिरहोभिश्च 'जिन्वतु' प्रीणयतु । तथा प्रजोपेतं धनमस्मे समिन्वत्वस्मासु सम्यक् प्रापयत्विति ॥

'आगन् देव' [वह सोम देव यहाँ आवे] आदि मन्त्र का पाठ करना चाहिए ।

---

१ ऋ० ४ ५३.७ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**विशेष**—सवितृ-देवताक सूक्त में पठित होने के कारण ऋग्वेद में देव का अर्थ 'सविता' किया गया है।

अस्या ऋचः प्रथमपादे पूर्वभागं व्याचष्टे—

आगतो हि स तर्हि भवति ॥ इति ।

तर्हि तस्मिन् क्रयोत्तरकाले स सोम आगतो भवतीति प्रसिद्धम् ॥

['आगन् देवः' का अर्थ है] 'उस [क्रय] के बाद वह सोम आ गया है।'

उत्तरभागमनूद्य व्याचष्टे—

ऋतुभिर्वर्धतु क्षयमित्यृतवो वै सोमस्य राज्ञो राजभ्रातरो यथा मनुष्यस्य तैरेवैनं तत्सहाऽऽगमयति ॥ इति ।

यथा लोके कस्यचिन्मनुष्यस्य भ्रातरोऽपि मनुष्यजातीयास्तथा राजजातीयस्य सोमस्य भ्रातरोऽपि राजजातीयाः । तत्तेन मन्त्रभागपाठेन तैर्ऋतुभिर्भ्रातृभिः सहैनं सोममस्मिन् कर्मण्यागमयति ॥

'ऋतुओं के साथ घर को समृद्ध करें।' यहाँ 'ऋतुएँ' सोम राजा को राजभ्राता हैं; जैसे एक मनुष्य का [भाई भी मनुष्य ही होता है वैसे ही राजकीय सोम का भाई भी राजकीय ही है]। उस [मन्त्रभाग के पाठ] के द्वारा [होता मानो] उन [ऋतुओं के भाइयों] के साथ इस [सोम को इस कर्म में] ले आता है।

द्वितीयपादमनूद्य व्याचष्टे—

दधातु नः सविता सुप्रजामिषमित्याशिषमाशास्ते ॥ इति ।

आशासनीयोपेक्षणीयः प्रजादिपदार्थं आशीस्तामनेन पादपाठेनाऽऽशास्ते ॥

'सविता देव हमको सुन्दर सन्तान और अन्न से युक्त करें।' इस [द्वितीय पाद के पाठ] के द्वारा वह अपनी आशंसा व्यक्त करता है।

तृतीयपादमनूद्य व्याचष्टे—

'स नः क्षपाभिरहभिश्च जिन्वतु' इत्यहानि वा अहानि रात्रयः क्षपा अहोरात्रैरेवास्मा एतामाशिषमाशास्ते, 'प्रजावन्तं रयिमस्मे समिन्वतु' इत्याशिषमेवाऽऽशास्ते ॥ इति ।

लोकप्रसिद्धान्यहान्येवात्र मन्त्रोक्तान्यहानि । अहोभिरिति वक्तव्ये वर्णविकारेणाहभिरित्युक्तत्वात् ।[1] शब्दान्तरभ्रमं व्युदसितुमिदं व्याख्यानम् । एवमत्र व्याख्यातव्यः पदविशेषो नास्ति किंत्वाशीः प्रार्थनरूपं तात्पर्यमेवेत्यभिप्रेत्यैवकारः प्रयुक्तः ॥

---

1. 'कालहलचस्वरकर्तृयङाञ्च व्यत्ययमिच्छति'—इति पा० सू० ३.१.८५ वा० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वे ही देव दिन और रात [सर्वदा] हमें [धन आदि से] प्रसन्न करें।' [यहाँ लोक प्रसिद्ध] दिन ही दिन है, रात्रि ही रात्रि है वस्तुतः उसके लिए वह रात-दिन [सर्वदा] इस आशीर्वाद को कामना करता है। 'वह हमको सन्तानयुक्त धन प्रदान करें।' इस चतुर्थ पाद में भी आशीर्वाद की कामना करता है।

सप्तमीमृचं विधत्ते—

या ते धामानि हविषा यजन्तीत्यन्वाह ॥ इति।

सेयमृक्संहितायामाम्नाता—

या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम्।

गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यान्[1] ॥ इति।

[तस्यायमर्थः]—हे सोम ते तव धामानि यान्युत्तरवेद्यादिस्थानानि यजमाना हविषा यजन्ति ते तव ता विश्वा तानि सर्वाणि स्थानानि व्याप्येति शेषः। ततो भवान् यज्ञं 'परिभूरस्तु' परितः प्राप्तवान् भवतु। किंच। त्वं गयस्फानो गयानामस्मदीयानां गवां वर्धयिता प्रतरणः प्रतारयिता सर्वापदुत्तारणहेतुः सुवीरः शोभनपुत्रपौत्रादिप्रदो भवेति शेषः। हे सोमावीरहाऽस्मदीयानां वीरपुरुषाणां हननमकुर्वाणो दुर्यानस्मदीयगृहान् प्रति प्रचर प्रकर्षेण गच्छ।

'हे सोम! हव्य द्वारा यजमान जो तुम्हारे उत्तरवेदि आदि स्थानों में यजन करते हैं।' इस ऋचा का पाठ होता करता है।

अत्र प्रथमपादस्य स्पष्टार्थत्वबुद्धया व्याख्यानमुपेक्ष्य द्वितीयपादमपि स्पष्टार्थाभिप्रायेणैव पठति—

ता ते विश्वा परिभूरस्तु[2] यज्ञम् ॥ इति।

'तुम्हारे वे [गुण] समस्त स्थानों में व्याप्त होवें।' उसके बाद आप यज्ञ को प्राप्त होवें।'

तृतीयपादमनूद्य व्याचष्टे—

गयस्फानः प्रतरणः सुवीर इति गवां नः स्फावयिता प्रतारयितैधीत्येव तदाह ॥ इति।

स्फावयिता वर्धयिता।

---

१. ऋ० १.९१.१९।

२. द्र० 'व्यत्ययो बहुलम्'—इति पा० सू० ३.१.८५ इत्यनेन लिङ्गवचनव्यत्ययौ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'तुम हमारी गायों को बढ़ाने वाले और सभी आपत्तियों से पार करने वाले शोभन पुत्र-पौत्रादि प्रदाता होओ।' यहाँ 'गयस्फानः' का अर्थ है हमारी गायों को बढ़ाने वाले होओ— इस प्रकार वह होता पाठ करता है।

विशेष— यहाँ गय का अर्थ ऐ० ब्रा० के अनुसार 'गाय' है। किन्तु ऋ० संहिता में सायण ने गय इति गृहस्य धनस्य च नामधेयम्। तेषां स्फायिता वर्धयिता किया है।

चतुर्थपादमनूद्य व्याचष्टे—

अवीरहा प्रचरा सोम दुर्यानिति गृहा वै दुर्या बिभ्यति वै सोमाद्राज्ञ आयतो यजमानस्य गृहाः, स यदेतामन्वाह शान्त्यैवैनं तच्छमयति सोऽस्य शान्तो न प्रजां न पशून् हिनस्ति ॥ इति।

आयत आगच्छतः सोमाद्राज्ञो यजमानस्य गृहा गृहवर्तिनो वीरपुरुषाः केनापि परिचर्यावैकल्येन राजा कोपं करिष्यतीति मत्वा तस्मात् सर्वे बिभ्यति तदानीं स होता यद्येतामवीरहेतिपदयुक्तामृचमन्वाह तत्तेनानुवचनेन शान्त्या शान्तिहेतुभूतया सुवीर-पदोक्त्यैवैनं राजानं शमयति शान्तं करोति। स च राजा शान्तः सन्नस्य यजमानस्य पुत्रादिकां प्रजां गवादिपशूंश्च न हिनस्ति॥

'हे सोम! हमारे वीर-पुरुषों का हनन न करते हुए हमारे घरों के प्रति आओ।'— यहाँ 'दुर्यान्' का अर्थ 'घर' है।[1] आए हुए सोम-राजा से यजमान के घर के लोग [परिचर्या में त्रुटि से राजा कहीं कुपित न हो जायँ इसलिए] डरते हैं। [उस समय] वह [होता] जो इस चतुर्थ चरण युक्त ऋचा का पाठ करता है उससे वह शान्तिहेतुभूत 'सुवीर' पद कहकर सोम-राजा को शान्त करता है। जिससे कि वह शान्त हुआ सोम-राजा न तो पुत्रादि प्रजा की और न तो पशुओं की हिंसा करें।

अष्टमीमृचं विधत्ते —

इमां धियं शिक्षमाणस्य देवेति वारुण्या परिदधाति॥ इति।

इयमृग्वरुणदेवताका तया परिदधाति। अनुवचनं समापयेदित्यर्थः।

सेयमृक्संहितायामेवमाम्नाता—

इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सं शिशाधि।

ययाऽति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेम'[2] ॥ इति।

तस्यायमर्थः—हे वरुण देवेमां धियं यज्ञानुष्ठानविषयां बुद्धिं शिक्षमाणस्याभ्यस्यतो यजमानस्य क्रतुं यज्ञविषयं वीर्यं दक्षं कौशलं यज्ञविषयप्रज्ञानं संशिशाधि सम्यगुपदिश।

---

१. तु० 'गृहा वै दुर्याः'—इति। तै० सं० ६.२.९.१।
२. ऋ० ८.४२.३।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यया वाग्रूपया नावा विश्वा दुरिता सर्वाणि पापान्यतितरेम । तादृशीं सुतर्माणं सुष्ठु-तरणहेतुं वाग्रूपां नावमधिरुहेमाऽऽधिक्येनाऽऽरोहणं कुर्म इति ।

हे वरुण देव इस [यज्ञानुष्ठान विषयक] बुद्धि को अभ्यास करने वाले यजमान के बल को [और कौशल को सम्यक् रूप से उपदिष्ट करो]' इस वरुणदेवताक ऋचा से होता उपसंहार [=परिदधाति] करता है [अर्थात् अनुवचन की समाप्ति करता है] ।

वारुण्या समापने कारणमाह—

**वरुणदेवत्यो वा एष तावद्यावदुपनद्धो यावत्परिश्रितानि प्रपद्यते स्वयैवैनं तद्देवतया स्वेन च्छन्दसा समर्धयति ॥ इति ।**

यावत्कालं सोम उपनद्धो वस्त्रादिना बद्धः स्याद्यावच्च परिश्रितानि प्राचीनवंशादि-स्थानानि प्रतिपद्यते तावदेष सोमो वरुणदेवताको बन्धनस्य वरुणपाशाधीनत्वाद्[१] आवरणस्यापि वरुणाधीनत्वात्[२] । तत्तथा सति वारुण्या परिदधानो होता स्वयैव सोमसंबन्धिन्यैव देवतया स्वेन संबन्धिना छन्दसा तमेनं सोमं समृद्धं करोति[३] । ऋच-स्त्रिष्टुप्छन्दः । सा च त्रिष्टुप्, सोममाहर्तुं द्युलोके गत्वा दक्षिणां तपश्चाऽऽहृतवती । तथा च शाखान्तरे श्रूयते—'सा दक्षिणाभिश्च तपसा चाऽऽगच्छत्'[४] इति । तस्मादिदं छन्दः सोमस्य स्वकीयम् ।

क्योंकि उसका देवता वरुण है । जब तक [सोम कपड़े में] बंधा रहता है और [प्राचीनवंश आदि यज्ञशाला के अग्रभाग में] लाया जाता है तब-तक [यह सोम वरुण-पाश के अधीन होता है] । अतः इस ऋचा से उपसंहार करके वह सोम को उसी के देवता और उसी के छन्द के द्वारा समृद्ध करता है ।

प्रथमपादे शिक्षमाणस्येति पदं व्याचष्टे—

**शिक्षमाणस्य देवेति शिक्षते वा एष यो यजते ॥ इति ।**

पुनः पुनरभ्यासः शिक्षा यजनशीलस्य सोऽस्ति ।

'शिक्षमाणस्य देव' इस स्थल में पुनः पुनः अभ्यास ही शिक्षा है । जो यजन करता है वही सीखने वाला है ।

द्वितीयपादमनूद्य व्याचष्टे—

**क्रतुं दक्षं वरुण संशिशाधीति वीर्यं प्रज्ञानं वरुण संशिशाधीत्येव तदाह ॥ इति ।**

---

१. उदुत्तमं वरुण पाशम् ( ऋ० १.२४.१५ ) इत्यादि च तत्र मन्त्रलिङ्गम् ।

२. 'वरुणो वृणोतीति सतः'—इति निरु० १०.३ ।

३. 'वारुणो वै क्रीतः सोम उपनद्धः'—इत्यादि, वारुण्यर्चा परिचरति स्वयैवैनं देवतया परिचरतीत्यन्तम् ब्राह्मणम् तै० सं० ६.१.११ ) एतदीयमन्त्रास्तु १.२.७–९ ।

४. तै० सं० ६.१.६.२ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'हे वरुण तुम यज्ञ विषयक वीर्य और यज्ञ विषयक प्रकृष्ट ज्ञान हमें दो।' 'क्रतुं दक्षं वरुण संशिशाधि' से यही कहता है।

द्वितीयार्धमनूद्य व्याचष्टे—

ययाऽति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेमेति यज्ञो वै सुतर्मा नौः, कृष्णाजिनं वै सुतर्मा नौर्वाग्वै सुतर्मा नौर्वाचमेव तदारुह्य तया स्वर्गं लोकमभि संतरति ॥ इति।

यत्र यज्ञस्य वा कृष्णाजिनस्य वा प्रस्तावस्तत्र तत्परत्वेन सुतर्मशब्दो व्याख्येयः। इह तु मन्त्ररूपा वाग्विवक्षिता। तत्तेन मन्त्रपाठेन वाग्रूपामेव नावमारुह्य तया नावा स्वर्गमभिलक्ष्य सम्यक् स्वर्गं तरति।

'जिस वाक्-रूप नाव से समस्त पापों को हम पार कर लें वैसी अच्छी प्रकार से तरने योग्य वाक् रूप नाव पर हम चढ़ें'। यहाँ सुष्ठुतरणयोग्य नाव [=सुतर्मा नौः] यज्ञ ही है, सुष्ठु तरण योग्य नाव कालामृग-चर्म है और सुष्ठुतरण योग्य नाव वाणी ही है। [किन्तु इन तीनों अर्थों में] वाणी रूप उस नाव पर ही चढ़कर उस नाव से स्वर्ग को सम्यक् रूप से पार कर जाता है।

उक्ताः सर्वा ऋचः प्रशंसति—

ता एता अष्टावन्वाह रूपसमृद्धाः ॥ इति।

विवक्षितार्थप्रतिपादकेन रूपेण समृद्धाः[1]।

इन आठ मन्त्रों का होता पाठ करता है जो [विवक्षित अर्थ के प्रतिपादक होने से] रूप समृद्ध हैं अर्थात् अपने रूप में परिपूर्ण हैं।

तामेव समृद्धिं विशदयति—

एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति ॥ इति।

पूर्ववद् व्याख्येयम्।[2]

यही यज्ञ की समृद्धि है कि जो यज्ञ अपने रूप में समृद्ध है अर्थात् अपने अङ्ग-प्रत्यङ्ग से परिपूर्ण है। कर्म जैसा किया जाने वाला है वैसा ही मन्त्रों के द्वारा वर्णित जो सम्पूर्ण कर्म है [यही रूप-समृद्धि है]।

---

१. एता एवाष्टावृचः सोमप्रवहण्य उच्यन्ते। आश्वलायनेन तु विहिता विशेषतः (आश्व० श्रौ० ४.४.१, ४, ६); तथा कात्यायनेनापि ७.९.३२–३४। तत्र सोमस्योपोत्थानादिमन्त्रास्तु तै० सं० १.२.८ अनु०। तद्ब्राह्मणं च ६.१.११ अनु०।

२. द्र० इतःपरस्तात् ३८ पृष्ठे।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

आद्यन्तयोर्ऋचोरावृत्तिं विधत्ते—

तासां त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ॥ इति ।

उन [आठ मन्त्रों] में से प्रथम ['भद्रादभि श्रेयः' आदि] ऋचा का और अन्तिम ['इमां धियं' आदि] ऋचा का तीन तीन बार पाठ करना चाहिए ।

आवृत्तिसहितानामृचां संख्यां प्रशंसति—

ता द्वादश संपद्यन्ते, द्वादश वै मासाः संवत्सरः, संवत्सरः प्रजापतिः ॥ इति ।

इस प्रकार यह [मन्त्र] बारह हो जाते हैं। बारह महीने ही वर्ष में होते हैं : संवत्सर ही प्रजापति है ।

वेदनं प्रशंसति—

प्रजापत्यायतनाभिरेवाऽऽभी राध्नोति य एवं वेद ॥ इति ।

जो इस प्रकार जानता है वह प्रजापति रूप आयतन के द्वारा साफल्य को प्राप्त करता है ।

आवृत्तिं प्रशंसति—

त्रिः प्रथमां त्रिरुत्तमामन्वाह यज्ञस्यैव तद्बसौ नह्यति स्थेम्ने बलायाविस्रंसाय ॥ १३ ॥ इति ।

तत्तेनाऽऽवर्तनेन वर्सौ रज्ज्वा उभयोरन्तयोः स्थितौ मण्याकारौ ग्रन्थी तद्वदत्रापि नह्यति बध्नाति । तच्च बन्धनं स्थेम्ने स्थैर्याय भवति । तस्यैवान्वयव्यतिरेकाभ्यां व्याख्यानं प्राबल्यमविस्रंसनं च ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयाध्याये द्वितीयः खण्डः ॥ २ ॥ [१३]

प्रथम और अन्तिम मन्त्र को तीन-तीन बार पढ़ता है, वस्तुतः ऐसा करके वह मानो यज्ञ के दोनों किनारों को कसकर बाँधता है जिससे कि वह फिसल न जाय और उसकी स्थिरता एवं शक्ति बनी रह जाय ।

॥ इस प्रकार तृतीय अध्याय में द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

———

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ तृतीयः खण्डः

सोमप्रवहणीमृचो विधाय सोमस्य शकटादवरोहणं विधत्ते—

**अन्यतरोऽनड्वान्युक्तः स्यादन्यतरो विमुक्तोऽथ राजानमुपावहरेयुः ।। इति।**

क्रयदेशे सोमं शकटे प्रक्षिप्य प्राचीनवंशसमीपे समानीय शकटबद्धयोरनडुहोर्मध्ये कंचिदनड्वाहं विमुच्येतरमनवमुच्य राजानं शकटादधस्तादृत्विज उपावहरेयुः । युक्तः शकटे बद्धो विमुक्तः शकटाद्वियोजितः ।।

i . १४ [iii . ३] [क्रय देश में सोम को गाड़ी में रखकर प्राचीनवंश के समीप लाई जाने वाली गाड़ी में बंधे हुए दो बैलों में से] किसी एक को जुता रहने देना चाहिए और किसी एक को खोल देना चाहिए, तब सोम राजा को गाड़ी से उतारना चाहिए ।

उभयोरनडुहोर्विमोचने दोषमुपन्यस्यति—

**यदुभयोर्विमुक्तयोरुपावहरेयुः पितृदेवत्यं राजानं कुर्युः ।। इति ।**

राज्ञः सोमस्य पितृभिः स्वीकृतत्वादयं सामो देवयोग्यो न भवेत् ।।

यदि दोनों बैलों को खोलकर सोम राजा को उतारते हैं तो वे सोम को पितृदेवताक बनाते हैं [अतः वह सोम देव योग्य नहीं रह जाता] ।

उभयोरनडुहोः शकटयोगेऽपि दोषमाह—

**यद्युक्तयोरयोगक्षेमः प्रजा विन्देत्ताः प्रजाः परिप्लवेरन् ।। इति ।**

अप्राप्तस्य धनादेः संपादनं योगः । प्राप्तस्य रक्षणं क्षेमः । योगसहितः क्षेमो योगक्षेमस्तदभावः प्रजाः पुत्रादिका विन्देल्लभेत् प्राप्नुयात् ।।

यदि वे दोनों को जुता रखकर ही उतारते हैं तो प्रजा में योग [धनादि की प्राप्ति] और क्षेम [उसकी रक्षा, का अभाव हो जाता है, प्रजा तितर-बितर हो जाती है ।

**योऽनड्वान् विमुक्तस्तच्छालासदां प्रजानां रूपं यो युक्तस्तच्च क्रियाणां, ते ये युक्तेऽन्ये विमुक्तेऽन्य उपावहरन्त्युभावेव ते क्षेमयोगौ कल्पयन्ति ।। इति ।**

योऽनड्वान् विमुक्तस्तदेतच्छालासदां गृहावस्थितानां प्रजानां पुत्रादीनां रूपम् । योऽनड्वानधस्ताच्छकटे युक्तस्तच्च क्रियाणां लौकिकानां वैदिकानां च रूपम् । यद्वा चक्रमस्यास्तीति चक्रि शकटं तेन चक्रिणा यान्तीति शकटमारुह्य गच्छन्त्यः प्रजाश्चक्रियास्तासां रूपम् । एवं सति ते ये यजमानानां मध्ये ये केचिद्बुद्धिमन्तो यजमाना अन्ये युक्त एकस्मिन्ननडुहि शकटबद्धेऽन्ये विमुक्त इतरस्मिन्ननडुहि शकटाद्वियोजिते सति

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सोममुपावहरन्ति ते बुद्धिमन्त उभावेव क्षेमं योगं च संपादयन्ति। तमिममर्थं तैत्तिरीयाश्चाऽऽमनन्ति—'यदुभौ विमुच्याऽऽतिथ्यं गृह्णीयाद्यज्ञं विच्छिन्द्यादुभावविमुच्य यथाऽनागतायाऽऽतिथ्यं क्रियते तादृगेव तद्विमुक्तोऽन्योऽनड्वान्भवत्यविमुक्तोऽन्योऽथाऽऽतिथ्यं गृह्णाति यज्ञस्य संतत्यै[1]" इति। नन्वेकत्र सोमावरोहणकाल उच्यते इतरत्राऽऽतिथ्येष्टिकाल इति न समानविषयत्वमिति चेन्न। उभयोरेककालीनत्वात्॥

विमुक्त बैल गृहावस्थित पुत्रादि प्रजा रूप है और जो जुता हुआ बैल है वह [लौकिक एवं वैदिक] क्रियाओं का रूप है। वे जो एक बैल को खोलकर और एक को जुता हुआ रखकर सोम को उतारते हैं वे क्षेम एवं योग दोनों का ही सम्पादन करते हैं अर्थात् प्राप्त करते हैं।

अथाऽऽख्यायिकामुखेन सोमोपावहरणस्यैशानीं दिशं विधत्ते—

देवासुरा वा एषु लोकेषु समयतन्त, त एतस्यां प्राच्यां दिश्ययतन्त, तांस्ततोऽसुरा अजयंस्ते दक्षिणस्यां दिश्ययतन्त, तांस्ततोऽसुरा अजयंस्ते प्रतीच्यां दिश्ययतन्त, तांस्ततोसुरा अजयंस्त उदीच्यां दिश्ययतन्त, तांस्ततोऽसुरा अजयंस्त उदीच्यां प्राच्यां दिश्ययतन्त, ते ततो न पराजयन्त सैषा दिगपराजिता तस्मादेतस्यां दिशि यतेत वा यातयेद्वेश्वरो हानृणाकर्तोः॥ इति।

समयतन्त सङ्ग्राममकुर्वन्। प्राच्यादिषु चतुर्षु दिक्षु देवानां पराजय आसीत्। ऐशान्यां दिशि नास्ति पराजयः। तस्मात्तस्यां दिशि सोमोपावहरणाय यतेत प्रयत्नं कुर्याद्वा यातयेत्प्रयत्नं कारयेद्वा। एवमेव वैकल्यराहित्यं कर्तुं प्रभुर्भवति। अथवा सोमस्य राज्ञो विजयित्वेनोत्तरत्र प्रशंसां कर्तुं देवासुरा वा इत्यादिना लौकिकस्य राज्ञ ऐशान्यां दिशि स्वकीयभृत्यप्रेरणं प्रतिपादितम्॥

देवताओं और असुरों ने इन लोकों में संग्राम किया। उन्होंने पूर्व दिशा में लड़ाई की। वहाँ से असुर जीत गये। उन्होंने दक्षिण दिशा में लड़ाई की। वहाँ से असुर जीत गये। उन्होंने पश्चिम दिशा में लड़ाई की। वहाँ से असुर जीत गए। उन्होंने उत्तर दिशा में लड़ाई की। वहाँ से असुर जीत गये। उन्होंने उत्तर-पूर्व की दिशा में लड़ाई की। वहाँ से वे [असुर] नहीं जीत सके। वही अपराजित दिशा है। इसलिए इस दिशा में प्रयत्न करे या प्रयत्न करावे, क्योंकि इससे वह ऋण-मुक्त होने में सक्षम हो जाता है।

---

१. तै० सं० ६.२.१.१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इदानीं सोमस्य जयहेतुत्वं दर्शयति—

**ते देवा अब्रुवन्नराजतया वै नो जयन्ति, राजानं करवामहा इति, तथेति, ते सोमं राजानमकुर्वंस्ते सोमेन राज्ञा सर्वा दिशोऽजयन्नेष वै सोमराजा यो यजते, प्राचि तिष्ठत्यादधति, तेन प्राचीं दिशं जयति, तं दक्षिणा परिवहन्ति, तेन दक्षिणां दिशं जयति, तं प्रत्यञ्चमावर्तयन्ति, तेन प्रतीचीं दिशं जयति, तमुदीचस्तिष्ठत, उपावहरन्ति, तेनोदीचीं दिशं जयति ॥ इति ।**

ते देवाः परस्परमेवमब्रुवन्, अस्माकं राजाभावात् प्राच्यादिदिक्षु पराजय आसीदसुराणां जय आसीत् । ततो राजानं संपादयाम इति विचार्य सोममेव राजानं कृत्वा प्राच्यादिदिक्षु जयं प्राप्ताः । एवं सति यो यजमानः सोमयागं करोति, एष एव सोमराजा । सोमो राजा यस्येति बहुव्रीहिः । अतः सोमाख्यस्वामिनः प्रचारादयं यजमानः सर्वत्र जयति । तत्कथमिति चेत्तदुच्यते । सोमवाहनार्थे शकटे प्राचि तिष्ठति प्राङ्मुखेऽवस्थिते सत्यृत्विजस्तत्र सोममादधति प्रक्षिपन्ति तेन सोमसंबन्धिशकटस्य प्राङ्मुखत्वेन यजमानः प्राच्यां दिशि जयं प्राप्नोति । शकटस्थितं सोमं दक्षिणा परिवहन्ति शकटं दक्षिणाभिमुखत्वेन पर्यावृत्य वहन्ति तेन दक्षिणस्यां दिशि जयः । ततः शकटं प्राङ्मुखमावर्तयन्ति तेन प्रतीच्यां दिशि जयः । तमुदीचस्तिष्ठत उदङ्मुखत्वेनावस्थिताच्छकटात्तं सोममुपावहरन्ति तेनोदङ्मुखत्वेनोदीच्यां दिशि जयः । एवं सोमराजप्रसादाद् यजमानः सर्वा दिशो जयति । अत्रार्थवादेन विधय उन्नेयाः ।[1] प्राङ्मुखे शकटे सोममादध्युः । ततो दक्षिणाभिमुखत्वेन परिवहेयुः । ततः प्रत्यङ्मुखत्वेनाऽऽवर्तयेयुः । तत उदङ्मुखाच्छकटात् सोममुपावहरेयुरिति । एतत्सर्वमभिप्रेत्याऽऽपस्तम्बः संजग्राह— 'प्रच्यवस्व भवस्पते इति प्राञ्चोऽभिप्रयाय प्रदक्षिणमावर्तन्ते' इति 'अग्रेण प्राग्वंशं प्रागीषमुदगीषं वा शकटमवस्थाप्य[2]' इति ॥

उन देवों ने [परस्पर] कहा—हम लोगों का राजा न होने के कारण असुर हमको जीत लेते हैं । इसलिए हम लोग अपना राजा बनावें । सभी ने कहा—ऐसा ही हो । उन्होंने सोम को अपना राजा बनाया । उन्होंने सोम राजा की सहायता से सभी दिशाएँ जीत लीं । इस प्रकार जो यजमान सोमयाग करता है वहीं सोम राजा है । जब सोम

---

१. विधेयास्त्विह चत्वारः; त एव प्रदर्श्यन्ते 'प्राङ्मुख' इत्यादिना ।
२. आप० श्रौ० १०.२९.१–११ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

लाया जाता है तब पूर्वाभिमुखावस्थित गाड़ी पर सोम रखते हैं। इससे वह यजमान पूर्व दिशा को जीत लेता है। वे उस [गाड़ी] को दक्षिण की ओर मोड़ते हैं। इससे वह दक्षिण दिशा को जीत लेता है। वे उसको पश्चिम को ओर मोड़ते हैं। इससे वह पश्चिम दिशा को जीत लेता है। उसको उत्तर दिशा को ओर खड़ा करते हैं। तभी वे उस सोम को उतार लेते हैं। इससे वह उत्तर दिशा को जीत लेता है।

वेदनं प्रशंसति—

सोमेन राज्ञा सर्वा दिशो जयति य एवं वेद ॥ १४ ॥ इति।

अत्र शब्दादेव श्रुतस्यापि सर्वा दिशो जयतीति वाक्यस्य द्विरावृत्तिः कर्तव्या।

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेय-
ब्राह्मणभाष्ये तृतीयाध्याये तृतीयः खण्डः ॥ ३ ॥ [१४]

जो इस प्रकार जानता है वह सोम राजा को सहायता से सभी दिशाओं को जीत लेता है।

इस प्रकार तृतीय अध्याय में तृतीय खण्ड को हिन्दी पूर्ण हुई ॥ ३ ॥

---

## अथ चतुर्थः खण्डः

सोमोपावहरणं विधायाऽऽतिथ्येष्टिरूपं कर्म विधत्ते—

हविरातिथ्यं निरुप्यते सोमे राजन्यागते ॥ इति।

प्राचीनवंशसमीपं सोमे राजनि समागते सति तस्यातिथिरूपत्वात् तदीयमातिथ्याख्य-कर्मसंबन्धि हविर्निर्वपेत्। यद्यप्यस्य हविषोऽतिथिर्देवता न भवति विष्णुदेवताया वक्ष्यमाणत्वात् तथाऽपि सोमस्यातिथिरूपस्योपचाराय क्रियमाणत्वादातिथ्यमिति कर्मनाम युक्तम् ॥

[सोम का आतिथ्य]

i . १५ [iii . ४] सोम राजा के [प्राचीन वंश के समीप] आने पर [उसके आतिथ्य के लिए] आतिथ्य नामक कर्म सम्बन्धी हवि का निर्वपन करना चाहिए।

एतमेवाभिप्रायं विस्पष्टयति—

सोमो वै राजा यजमानस्य गृहानागच्छति तस्मा एतद्धविरातिथ्यं निरुप्यते। तदातिथ्यस्याऽऽतिथ्यत्वम् ॥ इति।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तिथिविशेषमनपेक्ष्य भोजनार्थं कस्यचिद्गृहं प्रत्यकस्माद्यः समागतः सोऽतिथिः। सोमोऽपि तथाविधत्वादतिथिरित्युच्यते। तत्संबन्धित्वादातिथ्यमिति नामधेयम्[1] ॥

सोम राजा का आगमन यजमान के घरों में होता है। इसलिए वस्तुतः उसको आतिथ्य हवि दी जाती है इसीलिए इसको आतिथ्य हवि कहते हैं।

हविर्विशेषं विधत्ते--

**नवकपालो भवति, नव वै प्राणाः, प्राणानां क्लृप्त्यै प्राणानां प्रतिप्रज्ञात्यै ॥ इति।**

नवसु कपालेषु संस्कृतः पुरोडाशो नवकपालः। पुरुषस्य शिरोगतेषु सप्तसु च्छिद्रेषु वर्तमानाः सप्त प्राणाः। अधोभागावस्थितयोर्वर्तमानौ द्वौ। एवं नवसंख्याकाः प्राणाः। तथा चान्यत्र श्रूयते—'सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ' इति। एवं सति कपालगता नवसंख्या प्राणानां क्लृप्त्यै स्वव्यापारसामर्थ्याय भवति। सामर्थ्ये च प्राणोऽयमीदृश इति सर्वैः प्राणाः प्रज्ञाता भवन्ति ॥

नौ कपालों में [बनाया गया पुरोडाश] होता है, वस्तुतः प्राण नौ ही हैं, अर्थात् सात शिरोभाग में और दो अधोभाग में कुल नौ इन्द्रियाँ हैं। [इस प्रकार नौ कपाल] प्राणों के स्व-व्यापार सामर्थ्य के लिए और प्राणों के प्रज्ञान के लिए होते हैं।

द्रव्यं विधाय देवतां विधत्ते—

**वैष्णवो भवति, विष्णुर्वै यज्ञः, स्वयैवैनं तद्देवतया स्वेन च्छन्दसा समर्धयति ॥ इति।**

विष्णुर्देवता यस्य पुरोडाशस्य सोऽयं वैष्णवः। विष्णोर्व्यापित्वात् सर्वयज्ञस्वरूपत्वम् तथा सत्यातिथ्येष्टेरपि यज्ञत्वाद्विष्णुः स्वकीया देवता भवति। तया देवतयैनं समृद्धं करोति। यद्यप्यत्र मन्त्राविहितत्वात्तच्छन्दो न प्रकृतं तथापि यज्ञस्य विहितत्वाद्या-ज्यानुवाक्ययोरवश्यंभावेन च्छन्दोऽर्थसिद्धम्। तेन स्वकीयेन च्छन्दसा यज्ञं समृद्धं करोति। ते च याज्यानुवाक्ये आश्वलायनेन दर्शिते—'इदं विष्णुर्विचक्रमे' 'तदस्य प्रिय-

---

१. (i) "अथ यस्मादातिथ्यं नाम। अतिथिर्वा एष एतस्यागच्छति यत् सोमः क्रीतस्तस्मा एतद् यथा राज्ञे वा ब्राह्मणाय वा महोक्षं वा महाजं वा पचेत्, तदह मानुषं हविर्देवानामेवमस्मा एतदातिथ्यं करोति। तदाहुः—पूर्वोऽतीत्य गृह्णीयादिति यत्र वा अर्हन्तमागतं नापचायन्ति क्रुध्यति वै स तत्र तथा ह्यपचितो भवति"—इत्यादि श० ब्रा० ३.३.२.२,३।

(ii) 'क्रीतं सोमं शकटे संस्थाप्य प्राचीनवंशं प्रति आनीयमानेऽभिमुखे यामिष्टिं निर्वपति, सेयमातिथ्या'—इति मी० अधि० टी० ४.२.१४।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मभि पाथो अश्याम्'[1] इति । तयोश्च गायत्रीत्रिष्टुप् चेति च्छन्दोद्वयम् । तेन च्छन्दोद्वयेनास्य यज्ञस्य समृद्धिः ॥

विष्णु-देवताक पुरोडाश होता है, क्योंकि विष्णु ही यज्ञ है। इस प्रकार वह [यजमान] उसीके देवता और उसीके छन्द के द्वारा समृद्ध करता है।

अत्र शाखान्तरोक्तानग्नेरातिथ्यमसि विष्णवे त्वेत्यादिकांश्च निर्वापमन्त्रान् हृदि[2] निधाय तत्प्रशंसारूपमर्थवादं दर्शयति —

सर्वाणि वाव च्छन्दांसि च पृष्ठानि च सोमं राजानं क्रीतमन्वायन्ति । यावन्तः खलु वै राजानमनुयन्ति तेभ्यः सर्वेभ्य आतिथ्यं क्रियते ॥ इति ।

गायत्री त्रिष्टुबित्यादीनि सर्वच्छन्दांसि बृहद्रथंतरवैरूपादिसामसाध्यानि पृष्ठस्तोत्राणि । तदुभयाभिमानिनो देवा अनुचराः सन्तो राजानमनु यजमानगृहं प्रत्यागच्छन्ति । अतो राज्ञा सहाऽऽगतेभ्यः सर्वेभ्यः सहाऽऽतिथ्यं कर्तव्यम् । तथा सत्यग्नेरातिथ्यमसीत्यादिमन्त्रैः[3] सर्वेषामनुचराणां गायत्र्यादीनां तृप्तिर्भवतीत्यर्थः । तथा च तैत्तिरीया आमनन्ति—'यावद्भिर्वै राजाऽनुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते छन्दांसि खलु वै सोमस्य राज्ञोऽनुचराण्यग्नेरातिथ्यमसि विष्णवे त्वेत्याह गायत्र्या एवैतेन करोति सोमस्याऽऽतिथ्यमसि विष्णवे त्वेत्याह त्रिष्टुभ एवैतेन करोति' इत्यादि[4] । अत्राऽऽतिथ्येष्टिमध्येऽग्निमन्थनमापस्तम्ब आह—'चतुर्होत्रातिथ्यमासाद्य संभारयजूंषि व्याचष्टे । यजमानं वाचयतीत्येके । पशुवन्निर्मंथ्यः सामिधेन्यश्च'[5] इति । आश्वलायनोऽप्याह—'आतिथ्येलान्ता तस्यामग्निमन्थनम्'[6] इति ।

जब सोम राजा खरीदा जाता है तो सभी गायत्री आदि छन्द और [बृहद् रथन्तर आदि सोम रूप] पृष्ठ नामक स्तोत्र [के अभिमानी देव अनुचर होकर यजमान के घर] उसके पीछे-पीछे आते हैं अतः राजा के साथ में आए हुए जितने भी हैं उन सभी का आतिथ्य किया जाता है।

तदिदमग्निमन्थनं विधत्ते—

अग्निं मन्थन्ति सोमे राजन्यागते । तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन् वाऽर्हत्युक्षाणं वा वेहतं वा क्षदन्त एवमेवास्मा एतत्क्षदन्ते यदग्निं मन्थन्त्यग्निर्हि देवानां पशुः ॥ १५ ॥ इति ।

लोके यथैवादोऽतिथिसत्करणं तथैव सोमस्यापि तत्सत्करणं द्रष्टव्यम् । तदिती

---

१. आश्व० श्रौ० ४.५.३ । ऋ० सं० १.२२.१७; १.१५४.५ ।

२. तै० सं० १.२.१०.१–५ ।

३. तै० सं० ६.२.१.१ ।

४. अग्नेरातिथ्यमसीति पञ्च निर्वापमन्त्राः तै० सं० प्रथमे काण्डे ( १.२.१०.१–५ ) श्रुताः, षष्ठे (६.२.१.२) च ते व्याख्याताः, आपस्तम्बेन विहिताश्च 'अग्नेरातिथ्यमसीत्येतैः प्रतिमन्त्रम्'–इति ( १०.३०.८ ) ।

५. आप० श्रौ० १०.३१.१०–१२ ।

६. आश्व० श्रौ० ४.५.१,२ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दृष्टान्तदार्ष्टान्तिकौ मनुष्यराज इत्यादिना स्पष्टीक्रियेते[1]। महति मनुष्यभूपतौ वाऽन्यस्मिंश्चिद्विद्यावृत्तादिसंपन्नत्वेनार्हति पूज्ये महति ब्राह्मणेऽब्राह्मणे वा[2] गृहं प्रत्यागते सत्यतिथिसत्कारार्थं शास्त्रकुशलाः शिष्टाः कंचिदुक्षाणं वृषभं वा 'वेहतं' गर्भघातिनीं वृद्धां गां वा 'क्षदन्ते' हिंसन्ति। अयं सत्कारः स्मृतिषु प्रसिद्धो युगान्तरधर्मो द्रष्टव्यः[3]। एवमेवात्रापि, 'अग्निं मन्थन्ति' इति यदस्ति, 'एतदस्मै' सोमायातिथिसत्कारार्थं 'क्षदन्ते' अग्नेर्देवपशुत्वात्। यथाऽनड्वान् हव्यं वहति; तथाऽग्निरपि हव्यं वहति तस्मादग्नेः पशुसाम्यम्।

अत्र मीमांसा। सप्तमाध्याये तृतीयपादे चिन्तितम्—

"वैष्णवे त्रिकपाले वैष्णवान्नवकपालतः।
धर्मातिदेशः स्यान्नो वा विद्यतेऽत्राग्निहोत्रवत्॥ १४॥
श्रुत्या वैष्णवशब्दोऽयं देवताया विधायकः।
स गौणवृत्तिमाश्रित्य धर्मान्नातिदिशत्यतः[4]॥ १५॥

आतिथ्येष्टौ वैष्णवो नवकपालो विहितः। तत्र श्रुतौ वैष्णवशब्दो राजसूयगते वैष्णवे त्रिकपाले प्रयुज्यमानोऽग्निहोत्रशब्दवन्नवकपालधर्माननतिदिशतीति पूर्वः पक्षः। विष्णुर्देवता यस्येति विग्रहे विहिततद्धितप्रत्ययो[5] देवतामभिधत्ते, न तु धर्मान्। तस्मान्नातिदिशति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये प्रथमपञ्चिकायां तृतीयाध्याये चतुर्थः खण्ड॥ ४॥ [१५]

सोम राजा के आ जाने पर अग्नि का मन्थन [=जलाना] किया जाता है। जिस प्रकार लोक में मनुष्यों के राजा जब आते हैं अथवा अन्य महान् पुरुष जब आते हैं तो अतिथि सत्कार के लिए एक वृषभ का अथवा एक गर्भघातक [=बाँझ] वृद्ध गाय का वध करते हैं, उसी प्रकार यहाँ भी अग्नि का जो मथन करते हैं वह पशु वध के समान हैं क्योंकि अग्नि देवताओं का पशु है [जैसे बैल हव्य का वहन करता है वैसे ही अग्नि भी हव्य का वहन करता है]।

॥ इस प्रकार तृतीय अध्याय में चतुर्थ खण्ड को हिन्दी पूर्ण हुई॥ ४॥

---

१. शतपथे च श्रुतमेवमेव ( द्र० ९४ पृष्ठे टि० १ )।
२. 'षडर्घ्या भवन्ति। आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रियोऽतिथिरिति—' इति गो० गृह्य० ३.१०.२२,२३।
३. शत० ब्रा० ३.४.१.२। गो० गृह्य० ४.१०.१। 'महोक्षं वा महाजं श्रोत्रियायोपकल्पयेत्'—इति याज्ञ० सं० १.१.९। 'दाशगोघ्नौ सम्प्रदाने'—इति पा० सू० ३.४ ७३। 'गोघ्नोऽतिथि' सि० कौ०।
४. जै० न्या० मा० वि० ७.३.६.१७।
५. 'सास्य देवता'—इति पा० सू० ४.२.२४।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ पञ्चमः खण्डः

अग्निमन्थनं विधाय तत्रत्या ऋचो विधातुं प्रैषमन्त्रं विधत्ते—

**अग्नये मथ्यमानायानुब्रूहीत्याहाध्वर्युः ॥** इति ।

i. १६ [iii. ५] 'मथ्यमान-अग्नि के लिए मन्त्र का पाठ करो'—इस प्रकार अध्वर्यु होता से कहता है।

तत्र प्रथमामृचं विधत्ते—

**अभि त्वा देव सवितरिति सावित्रीमन्वाह ॥** इति ।

सविता देवता गायत्र्या ऋचः, सा सावित्री । अत्र च, अभि त्वा देव सवितरिति सविता मन्त्रदेवत्वेन श्रूयते तस्मादियमृक्सावित्री[1] ॥

होता 'अभि त्वा देव सवितः' आदि सविता-देवताक ऋचा का पाठ करता है।

अत्र प्रैषानुवचनमन्त्रयोर्वैयधिकरण्यरूपं चोद्यमुद्भावयति—

**तदाहुर्यदग्नये मथ्यमानायानुवाचाऽऽहाथ कस्मात्सावित्रीमन्वाहेति ॥** इति ।

तत्तत्र ब्रह्मवादिनश्चोद्यमाहुः । यद्यस्मात्कारणादध्वर्युरग्नये मथ्यमानायेत्यग्नयेऽनुकूलया वाचा प्रैषमन्त्रमाह तत्तस्मात्कारणादाग्नेयी होत्राऽनुवक्तव्या तां परित्यज्याथानन्तरं कस्मात्कारणाद्धोता सावित्रीमृचमनुब्रूते । इतिशब्दश्चोद्यसमाप्त्यर्थः ॥

यहाँ ब्रह्मवादी कहते हैं कि जब [अध्वर्यु ने] मथ्यमान अग्नि के लिए अनुवचन किया था तो [अग्नि-देवताक ऋचा का पाठ होना चाहिए था तो उसे छोड़कर सविता-देवताक ऋचा का पाठ वह क्यों करता है ?

तस्य चोद्यस्योत्तरमाह—

**सविता वै प्रसवानामीशे । सवितृप्रसूता एवैनं तन्मन्थन्ति तस्मात्सावित्रीमन्वाह ॥** इति ।

योऽयं सविता देवः स एव प्रसवानां कर्मस्वनुज्ञानामीशे स्वामी भवति । तथा सति तत्तेन मन्त्रपाठेन सवित्राऽनुज्ञाता एव सन्त एनमग्निं मन्थन्ति । तस्मात्कारणात्सावित्रीमृचमनुब्रूयात् ॥

क्योंकि सविता देव ही कर्मों में अनुज्ञा के स्वामी हैं। इस मन्त्र पाठ के द्वारा सविता की प्रेरणा से ही इस अग्नि का मथन करते हैं, इसीलिए सविता-देवताक ऋचा का पाठ करते हैं।

---

१. ऋ० १.२४.३ ।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

द्वितीयामृचं विधत्ते—

**मही द्यौः पृथिवी च न इति द्यावापृथिवीयामन्वाह[1] ॥ इति ।**

द्यौश्च पृथिवी च देवते यस्या ऋचः सेयं द्यावापृथिवीया ।

होता 'मही द्यौः पृथिवी च नः' आदि द्यावापृथिवी-देवताक ऋचा का पाठ करता है ।

अत्रापि पूर्ववच्चोद्यपरिहारौ दर्शयति—

**तदाहुर्यदग्नये मथ्यमानायानुवाचाऽऽहाथ कस्माद्द्यावापृथिवीयामन्वाहेति, द्यावापृथिवीभ्यां वा एतं जातं देवाः पर्यगृह्णंस्ताभ्यामेवाद्यापि परिगृहीतस्तस्माद्द्यावापृथिवीयामन्वाह ॥ इति ।**

पुरा कदाचिद्देवा उत्पन्नमग्निं द्यावापृथिवीभ्यां परिगृहीतवन्तः । अद्यापि ताभ्यामेव परिगृहीतो दृश्यते । पावकोऽग्निर्भूम्या परिगृहीतः प्रकाशकसूर्यरूपोऽग्निर्दिवा परिगृहीतः । तस्मादग्निपरिग्रहाय द्यावापृथिवीदेवताकाया ऋचोऽनुवचनं युक्तम् ॥

यहाँ ब्रह्मवादी कहते हैं कि जब [अध्वर्यु ने] मथ्यमान अग्नि के लिए अनुवचन किया था तो द्यावापृथिवी-देवताक ऋचा का पाठ वह क्यों करता है ? वस्तुतः जब अग्नि उत्पन्न हुआ तब देवताओं ने उसे द्यौ और पृथिवी के बीच में पकड़ा, और आज भी इन दोनों के बीच में पकड़ रक्खा है । इसीलिए द्यावापृथिवी-देवताक ऋचा का वह पाठ करता ।

तृतीयाद्यास्तिस्र ऋचो विधत्ते—

**त्वामग्ने पुष्करादधीति[2] तृचमाग्नेयं गायत्रमन्वाहाग्नौ मथ्यमाने । स्वयैवैनं तद्देवतया स्वेन च्छन्दसा समर्धयति ॥ इति ।**

अस्य तृचस्याग्निदेवताकत्वेन वैयधिकरण्यचोद्यानुदयात् स्वयैवेत्यादिना प्रशंसैव क्रियते । गायत्रीछन्दोऽग्नेः स्वकीयमुभयोः प्रजापतिमुखजन्यत्वात् ।[3]

अग्नि मन्थन के समय 'त्वामग्ने पुष्करादधि' आदि अग्नि-देवताक एवं गायत्री छन्दस्क तृच का पाठ करता है । इस प्रकार वह यजमान उसी के देवता और उसी के छन्द के द्वारा इसको समृद्ध करता है ।

प्रथमायऽमृचि द्वितीयपादमनूद्य प्रशंसति—

**अथर्वा निरमन्थतेति रूपसमृद्धमेतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति ॥ इति ।**

---

१. ऋ० १.२२.१३ । २. ऋ० ६.१६.१३–१५ । ३. द्र० १७ पृष्ठे ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अथर्वाख्य ऋषिर्निःशेषेण मन्थनं कृतवानित्युच्यते । तदेतद्वचनमग्निमन्थनस्याऽऽनुकूल्येन रूपेण समृद्धम् ।

'अथर्वा नामक ऋषि ने निःशेष रूप से अग्नि का मन्थन किया'—[ऋक्गत इस वचन की अनुकूलता के द्वारा] अग्नि-मथन रूप यह कर्म रूप से समृद्ध है। जो यज्ञ अपने रूप में समृद्ध है वही यज्ञ की समृद्धि है। जो कर्म जैसा किया जाने वाला है वैसा मन्त्र के द्वारा वर्णित होना ही रूप-समृद्धि है।

इत्थमुक्तास्वग्निमन्थनास्वृक्षु पञ्चस्वनूक्तासु षष्ठप्रभृतीनामृचामनुवचनात् पूर्वं नैमित्तिकाः काश्चिदृचो विधत्ते—

स यदि न जायेत यदि चिरं जायेत राक्षोघ्न्यो गायत्र्योऽनूच्याः ।। इति ।

पञ्चानामृचामनुवचने सति तस्मिन् काले यदि सोऽग्निर्नोत्पद्येत तत उत्पत्तिलिङ्गं धूमादिरूपं यदि न दृश्येत दृश्यमानेऽपि वा लिङ्गे यदि सहसा नोत्पद्यते किंतु विलम्बेन तदानीं सहसा तदुत्पत्त्यर्थं रक्षोहननलिङ्गोपेता गायत्रीछन्दस्का ऋचोऽनुब्रूयात् ।

वह अग्नि यदि न उत्पन्न हो अथवा [धूम के दृश्यमान होने पर भी] यदि विलम्ब से उत्पन्न हो तो [तदुत्पत्त्यर्थं] रक्षोहनन और गायत्रीछन्दस्क ऋचा का पाठ करना चाहिए।

प्रतीकग्रहणेन ता ऋचो दर्शयति—

अग्ने हंसिन्य१त्रिणमित्येताः ।। इति ।

अग्ने हंसीत्यादिके सूक्ते[1] नवर्चो विद्यन्ते । एता रक्षोहननलिङ्गकाः ।[2]

तासामनुवचने प्रयोजनमाह—

रक्षसामपहत्यै ।। इति ।

राक्षसों के हनन के लिए 'अग्ने हंसि न्य१त्रिणम्' इत्यादि ये [नौ ऋचाएँ पढ़ी जाती हैं]।

कः प्रसङ्गो रक्षसामित्याशङ्क्याऽऽह—

रक्षांसि वा एनं तर्ह्यालभन्ते यर्हि न जायते यर्हि चिरं जायते ।। इति ।

यस्मिन् काले मथ्यमानस्य वह्नेः सर्वथाऽनुत्पत्तिर्विलम्बो वा भवेत्तदानीमेवं वह्निं रक्षांस्येवाऽऽलभन्ते संस्पृशन्ति प्रतिबध्नन्तीत्यर्थः । ततो रक्षोहननाय ता ऋचः पठनीयाः ।।

---

१. ऋ० सं० १०.११८.१–९ ।

२. तथा चानुक्रम्यते—'अग्ने हंस्युरुक्षय आमहीयव आग्नेयं राक्षोघ्नं गायत्रं तु'—इति । आश्वलायनेनापि सूत्रितम्—अजायमाने त्वेतस्मिन्नेवावसानेऽग्ने हंसिन्य-त्रिणमिति सूक्तमावपेत' इति श्रौ० २.१६.३,४ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

क्योंकि जब अग्नि उत्पन्न नहीं होता या विलम्ब से प्रकट होता है तो राक्षस उसे पकड़ लेते हैं ।

नैमित्तिका ऋचो विधाय प्रकृतामेव षष्ठीमृचं विधत्ते—

स यद्येकस्यामेवानूक्तायां जायेत यदि द्वयोरथोत ब्रुवन्तु जन्तव इति जाताय जातवतीमभिरूपामनुब्रूयात् ॥ इति ।

राक्षोघ्नीनामृचां मध्ये यद्येकस्यामेव पठितायां स वह्निर्जायेत यदि वा द्वयोः पठितयोरुत्पद्येत । एवं तृतीयादीनामुपलक्षणम् । अथेदानीमुत्पत्तिक्षण एव, उत ब्रुवन्त्वित्येताम्[1] 'अनुब्रूयात्' । सा च जातायाभिरूपा जातस्याग्नेरनुकूला । तदेवाऽऽनुकूल्यं जातवतीमितिशब्देन स्पष्टीक्रियते । जातं जन्मवाचिपदं तदस्यामस्तीति जातवती तस्या ऋचो द्वितीयः पाद एवं पठ्यते—'उदग्निर्वृत्रहाऽजनि' इति । तस्मिन्नजनीति जन्मवाचकं पदमस्ति ।

[राक्षोघ्नी ऋचाओं में से] यदि एक के ही पाठ करने पर वह [अग्नि] उत्पन्न हो जाता है, अथवा दो ऋचा के पाठ से, तो अग्नि की उत्पत्ति के उपयुक्त जन्मवाचक पद से युक्त 'उत ब्रुवन्तु जन्तव' आदि ऋचा का पाठ करना चाहिए [क्योंकि 'अजनि' यह जन्मवाचक पद इस ऋचा में है] ।

अस्या ऋचोऽभिरूपत्वं प्रशंसति—

यद्यज्ञेऽभिरूपं तत्समृद्धम् ॥ इति ।

जो यज्ञ के उपयुक्त है वह यज्ञ समृद्ध [=पूर्ण] है ।

सप्तमीमृचं विधत्ते—

आ यं हस्ते न खादिनमिति ॥ इति ।

अनुब्रूयादिति शेषः । सा च संहितायां पठिता—

'आ यं हस्ते न खादिनं शिशुं जातं न बिभ्रति । विशामग्निं स्वध्वरम्'[2] ॥ इति ।

तस्या अयमर्थः—यंशब्दः प्रसिद्धवाची । नशब्द उपमार्थः । यं मन्थनेन प्रसिद्धम् 'अग्निं हस्ते न' हस्ते इव ऋत्विजः 'आ बिभ्रति' समन्ताद्धारयन्ति । तत्तदृत्विजां हस्ताभ्यां मन्थनं हस्तधारणसदृशं शिशुं जातं नेत्यनेन दृष्टान्तोऽभिधीयते । जातं शिशुमिव । यथा सद्यः समुत्पन्नं शिशुं हस्ताभ्यां धारयन्ति तद्वत् । कीदृशमग्निं विशां स्वध्वरम्, शोभनोऽध्वरो यागो यस्याग्नेः सोऽयं स्वध्वरः । विशां प्रजानामृत्विग्यजमानरूपाणामध्वरनिष्पादकम् । पुनरपि कीदृशम् । खादिनं हविरादीनां भक्षकमिति ।

'आ यं हस्ते न खादिनम्' आदि ऋचा का पाठ करना चाहिए ।

---

१. ऋ० सं० १.७४.३ । २. ऋ० सं० ६.१६.४० ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्यामृचि प्रथमपादे हस्तशब्देन विवक्षितमर्थं दर्शयति—

हस्ताभ्यां ह्येनं मन्थन्ति ॥ इति ।

हि यस्मादेनमग्निं हस्ताभ्यां मन्थन्ति तस्माद्धस्ते धारणमुपपद्यते ॥

मन्त्र में 'हस्त' पद इसलिए है क्योंकि इस [अग्नि] को हाथों से ही तो मथते हैं ।

द्वितीयपादे पूर्वभागमनूद्य तात्पर्यं दर्शयति—

शिशुं जातमिति शिशुरिव वा एष प्रथमजातो यदग्निः ॥ इति ।

योऽग्निर्मन्थनेन प्रथममुत्पन्न एष शिशुना सदृश इत्येतस्य भागस्य तात्पर्यम् ॥

मन्त्रगत 'शिशु जातम्' का अर्थ है जो अग्नि मन्थन से प्रथमतः उत्पन्न होता है वह बच्चे के जन्म लेने के ही समान है ।

द्वितीयपादस्योत्तरभागं तृतीयपादं चानुवदति—

न बिभ्रति विशामग्निं स्वध्वरमिति ॥ इति ।

अत्र नेति पदं व्याचष्टे—

यद्वै देवानां नेति तदेषामो३मिति ॥ इति ।

देवानां संबन्धिनि मन्त्रे क्वचित्क्वचिन्नेति पदं यदेवास्ति तदेषां देवप्रतिपादकानां मन्त्राणां नेति पदमोमित्येतस्मिन्नर्थे वर्तते[1] । लोके प्रतिषिद्धवाची नेति शब्दो वेदेऽङ्गीकारवाची । न ओमित्यस्य पदस्यार्थे वर्तते । तथा सति लोकवैपरीत्यस्य दृष्टत्वादुपमार्थोऽपि वक्तुं शक्यते । तदेतदुभयं निरुक्तकारेणोक्तम्—'नेति प्रतिषेधार्थीयो भाषायाम्' इति । 'उपरिष्टादुपचार उपमार्थीयः'[3] इति च । अयं च नेति शब्दः शिशुं जातं नेत्युपमेयादुपरिष्टात् प्रयुज्यते । तस्मादुपमार्थी । देवानामित्यत्र देवप्रतिपादकानां मन्त्राणां संबन्धीति व्याख्यातम् । यद्वा दकारवकारयोर्विपर्यासेन वेदानां संबन्धीति व्याख्येयम् ॥

'न बिभ्रति' आदि देव सम्बन्धी मन्त्र में कहीं कहीं 'न' पद जो होता है वह इन [देव प्रतिपादक मन्त्रों] में 'ओम्' [=अङ्गीकार करना] के अर्थ में प्रयुक्त है ।

अष्टमीमृचं विधत्ते—

प्र देवं देववीतये भरता वसुवित्तममिति प्रह्रियमाणायाभिरूपा ॥ इति ।

अनुवक्तव्येति शेषः[4] । आहवनीये प्रक्षिप्यमाणोऽयं मथितोऽग्निः प्रह्रियमाणस्तस्येयमृगनुरूपा । कथमिति चेत्तदुच्यते । देववीतये देवानां कामायाभिलाषाय वसुवित्तममति-

---

१. 'यद्वै नेत्यृचि ओमिति तत्'—इति च शत० ब्रा० १.४.१.३ ।

२. वक्ष्यति च परस्तात्—'ओमिति वै दैवं तथेति मानुषम्'—इति ऐ० ब्रा० ७.३.६ ।

३. निरु० १.४ ।

४. 'प्र देवं देववीतय इति ( ऋ० सं० ६.१६.४१ ) द्वे'—आश्व० श्रौ० २.१६.७ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शयेन हविर्लक्षणधनाभिज्ञं देवं मथितमग्निं हे ऋत्विजः प्रभरत, आहवनीये प्रहरत प्रक्षिपत । तस्मात् प्रह्रियमाणानुरूपत्वम् । अत्र 'जातायानुब्रू३हि'[1] इत्यध्वर्युणा प्रेषितो होता पूर्वोक्तामुत ब्रुवन्तु जन्तव इत्येतामनुब्रूयात् । तथा प्रह्रियमाणायानुब्रू३हीत्येवं प्रेषितः प्र देवमित्यादिकामृचं ब्रूयात् । एवमुत्तरा अपि च । तदेतत्सर्वं तैत्तिरीयाः संगृह्याऽऽमनन्ति—'अग्नये मथ्यमानायानुब्रू३हीत्याह । सावित्रीमृचमन्वाह सवितृप्रसूता एवैनं मन्थन्ति । जातायानुब्रू३हि प्रह्रियमाणायानुब्रू३हीत्याह काण्डे काण्ड एवैनं क्रियमाणे समर्धयति । गायत्री सर्वाऽन्वाह'[2] इति ॥

'देवताओं की कामना के लिए अतिशय हवि रूप धन के स्वामी देव मथित-अग्नि को हे ऋत्विजों आहवनीय अग्नि में प्रक्षिप्त करो'—यह ऋचा [आहवनीय-अग्नि कुण्ड में] प्रक्षेप के उपयुक्त है ।

प्र देवमित्यस्या ऋचः प्रह्रियमाणयाभिरूपत्वे यज्ञाङ्गसमृद्धिरूपं प्रयोजनं दर्शयति—

यद्यज्ञेऽभिरूपं तत्समृद्धम् ॥ इति ।

जो यज्ञ के उपयुक्त है वही यज्ञ समृद्ध है ।

अस्या ऋचस्तृतीयपादमनुवदति—

आ त्वे योनौ निषीदत्विति ॥ इति ।

अयं मथितोऽग्निरागत्य स्वे योनौ स्वकीयस्थान आहवनीयाख्ये नितरामुपविशत्विति पादस्यार्थः ॥

'वह आकर अपने स्थान पर बैठे' ऋक्गत इस तृतीय पाद का अर्थ है यह मथित-अग्नि आकर अपने 'आहवनीय' नामक स्थान पर निरन्तर बैठे ।

तस्मिन् पादे योनिपदं व्याचष्टे —

एष ह वा अस्य स्वो योनिर्यदग्निरग्नेः ॥ इति ।

आहवनीयाख्यो योऽग्निरस्ति, एष वा अस्य मथितस्याग्नेः स्वकीयं स्थानम् ॥

आहवनीय नामक जो अग्नि है वस्तुतः यही इस मथित-अग्नि का स्वकीय स्थान है ।

नवमीमृचं विधत्ते—

आ जातं जातवेदसीति ॥ इति ।

अनुब्रूयादिति शेषः । सा चैवं संहितायामाम्नाता—

आ जातं जातवेदसि प्रियं शिशीतातिथिम् । स्योन आ गृहपतिम्[3] ॥ इति ।

---

१. ब्रूहि प्रेष्यश्रौषड्वौषडावहानामादेः'—इति (पा० सू० ८.२.९१) प्लुतिः ।
२. तै० सं० ६.३.५ ३ । ३. ऋ० सं० ६.१६.४२ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्यायमर्थः—कीदृशमाहवनीयस्य प्रीतिहेतुमतिथिम्। इदानीमागतत्वादतिथिरूपम्। स्योने सुखकर आहवनीय आ गृहपतिमागत्य गृहस्वामित्वेन वर्तमानम्॥

'आ जातं जातवेदसि' आदि ऋचा का पाठ करना चाहिए।

तस्यामृचि प्रथमपादे पदद्वयं व्याचष्टे—

जात इतरो जातवेदाः इतरः॥ इति।

इतर इदानीं मथितोऽग्निः सद्यःसमुत्पन्नत्वाज्जात इत्युच्यते। इतरः पूर्वसिद्धाहवनीयोऽग्निरिदानीं जातमिममग्निं वेत्तीति जातवेदा इत्युच्यते।

यहाँ 'जात' का अर्थ है 'सद्यः समुत्पन्न मथित-अग्नि'। पहले से सिद्ध आहवनीय अग्नि यहाँ उत्पन्न इस अग्नि को जानता है अतः 'जातवेद' कहते हैं।

द्वितीयपादमनूद्य व्याचष्टे—

प्रियं शिशीतातिथिमित्येष ह वा अस्य प्रियोऽतिथिर्यदग्निरग्नेः॥ इति।

योऽग्निर्मन्थनेनोत्पन्न एष एवास्य पूर्वसिद्धस्याहवनीयस्याग्नेः प्रियश्चातिथिश्च।

'प्रियं शिशातातिथिम्' का अर्थ है जो अग्नि [मन्थन से उत्पन्न] है यही इस [पूर्वसिद्ध आहवनीय] अग्नि का प्रिय एवं अतिथि है।

तृतीयपादमनूद्य व्याचष्टे—

स्योन आ गृहपतिमिति शान्त्यामेवैनं तद्दधाति॥ इति।

स्योने सुखरूपे पूर्वाग्नौ स्थापनं यदस्ति तत्तेन स्थापनेन नूतनमेवमग्निं शान्त्यामेव स्थापयति। पूर्वाग्नेः सुखनिवासहेतुत्वाच्छान्तित्वम्॥

'स्योन आ गृहपतिम्' का अर्थ है 'सुखरूप पूर्व अग्नि में जो स्थापन है उस स्थापन के द्वारा इस नूतन अग्नि को शान्ति के साथ स्थापित करता है।

दशमीमृचं विधत्ते—

अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा। हव्यवाड् जुह्वास्य इत्यभिरूपा॥ इति।

अनूच्येति शेषः। अस्या अयमर्थः—अग्निनाऽऽधारभूतेनाऽऽहवनीयेनानुगृहीत इदानीं प्रहृतोऽग्निः सम्यग् दीप्यते। कीदृशोऽग्निः। कविर्विद्वानाकूताभिज्ञोऽत एव गृहपतिर्यजमानस्य गृहस्य पालकः। युवा नूतनः। देवेभ्यो हव्यं वहतीति हव्यवाट्, होमसाधनभूतः। जुहूरेवाऽऽस्यं मुखं यस्यासौ जुह्वास्यः। सेयमृक्[1] प्रह्रियमाणाग्निगुणकीर्तनात्तस्याग्नेरनुरूपा॥

---

१. ऋ० सं० १.१२.६।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'विद्वान् यजमान के गृह का पालक युवा एवं जुहूरूप मुख से देवताओं के लिए हवि ले जाने वाला यह प्रक्षिप्त अग्नि आधारभूत आहवनीय अग्नि के द्वारा सम्यक् रूप से प्रदीप्त किया जाता है' यह ऋचा कर्म के उपयुक्त है।

तदेतदानुरूप्यं प्रशंसति—

यद्यज्ञेऽभिरूपं तत्समृद्धम् ॥ इति।

जो यज्ञ के अनुकूल है वही उसकी समृद्धि है।

एकादशीमृचं विधत्ते—

त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्सतेति ॥ इति।

अनुब्रूयादिति शेषः। हे नूतनाग्ने त्वं सिद्धेनाऽऽहवनीयेनाग्निना समिध्यस इति तृतीयपादगतेन[1] पदेन योज्यम्। उभयोरग्न्योर्विद्यमानत्वात् सम्यगनुष्ठाननिर्वाहकत्वाद् वा सच्छब्दवाच्यत्वम्। 'अग्ने महाँ असि ब्राह्मणभारत'[2] इति श्रुतेर्ब्राह्मणजात्यभिमानित्वाद् विप्रत्वम् ॥

'हे नूतन अग्नि तुम आहवनीय अग्नि से प्रदीप्त किये जाते हो, ब्राह्मण ब्राह्मण के द्वारा, अच्छा अच्छे के द्वारा प्रदीप्त किया जाता है' इस ऋचा का पाठ करना चाहिए।

तदेतदुभयं विशदयति—

विप्र इतरो विप्र इतरः सन्नितरः सन्नितरः ॥ इति।

इस ऋचा में नूतन एक अग्नि एक विप्र है दूसरा अहवनीय अग्नि दूसरा विप्र है। एक नूतन अग्नि अच्छा है दूसरा आहवनीय अग्नि अच्छा है।

तृतीयपादमनूद्य व्याचष्टे—

सखा सख्या समिध्यस इत्येष ह वा अस्य स्वः सखा यदग्निरग्नेः ॥ इति।

योऽग्निराहवनीयाख्य एष एवास्याग्नेर्मथितस्य स्वकीयः सखा ॥

'सखा सख्या समिध्यसे' में जो आहवनीयाख्य अग्नि है वही इस मथित-अग्नि का अपना मित्र है।

द्वादशीमृचं विधत्ते—

तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु। स्वेषु क्षयेषु वाजिनमिति[3] ॥इति।

अनुब्रूयादिति शेषः। हे ऋत्विजस्तं नूतनमग्निं मर्जयन्त शोधयन्त। कीदृशं शोभनस्य क्रतोर्निर्वाहकम्। आजिषु सङ्ग्रामेषु पुरोयावानं पुरोगन्तारम्। स्वेषु क्षयेषु स्वकीयेषु गृहेष्वाहवनीयादिषु वाजिनमन्नवन्तं गच्छन्तं वा ॥

---

१. स एष तृतीयपादः—'सखा सख्या समिध्यसे'—इति सं० ८.४३.१४।
२. तै० ब्रा० ३.५.३।
३. सं० ८.८४.८।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'तं मर्जयन्त' आदि ऋचा का पाठ करना चाहिए। 'हे ऋत्विज ! शुभ कर्म के निर्वाहक, संग्रामों में आगे जाने वाले, अपने आहवनीयादि गृहों में अन्नवान् [अथवा जाते हुए] उस नूतन अग्नि का शोधन करो।'

क्षयशब्देनात्राऽऽहवनीयाग्निरूपगृहविवक्षां दर्शयति—

एष ह वा अस्य स्वः क्षयो यदग्निरग्नेः ॥ इति ।

यहाँ जो आहवनीय अग्नि है यही इस मथित अग्नि का अपना घर है ।

त्रयोदशीमृचं विधत्ते—

यज्ञेन यज्ञमयजन्त देवा इत्युत्तमया परिदधाति[1] ॥ इति ।

उत्तमया चानया परिदधाति, अनुवचनं समापयेत् । यदाहाऽऽश्वलायनः—'यज्ञेन यज्ञमयजन्त देवा इति परिदध्यात्' 'सर्वत्रोत्तमां परिधानीयेति विद्यात्' इति ॥[2]

'यज्ञेन' आदि अन्तिम ऋचा से अनुवचन की समाप्ति करनी चाहिए ।

उदाहृतमृचः पादं व्याचष्टे—

यज्ञेन वै तद्देवा यज्ञमयजन्त यदग्निनाऽग्निमयजन्त ते स्वर्गं लोकमायन् ॥ इति ।

अग्निना प्रह्रियमाणेन नूतनेन पूर्वसिद्धमाहवनीयाग्निमयजन्त पूजितवन्त इति यदस्ति तेन कारणेन यज्ञेन वै देवा यज्ञमयजन्तेत्युच्यते । उभौ यज्ञशब्दौ स्वकारणभूतमग्निद्वयमुपलक्षयतः । देवशब्देनेदानीं देवत्वेन वर्तमानाः पूर्वसिद्धा ऋत्विजो विवक्षिताः । ते च पूर्वमनुष्ठितेन यागेन स्वर्गलोकं प्राप्ताः ॥

जो प्रक्षिप्त नूतन अग्नि के द्वारा पूर्वसिद्ध आहवनीय अग्नि का यजन किया गया इसीलिए देवताओं ने यज्ञ द्वारा ही यज्ञ किया'—यह कहा है, और पूर्व-अनुष्ठित याग के द्वारा उन्होंने स्वर्गलोक को प्राप्त किया ।

अवशिष्टं पादत्रयं पठति—

तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवा इति ॥ इति ।

इदानीं देवत्वेन वर्तमानैः पूर्वसिद्धैर्ऋत्विग्यजमानैर्यानि ज्योतिष्टोमादीनि कर्माण्यनुष्ठितानि तानि सर्वाणि प्रथमानि धर्माण्यादिसृष्टिकालीनानि सुकृतसाधनान्यासन् । ते ह ते चानुष्ठातारो महिमानो महत्त्वोपेता नाकं सचन्त कं सुखमकं दुःखं तद्रहितो भोगो नाकस्तं संप्राप्तवन्तः । यत्र यस्मिँल्लोके पूर्वे साध्याः पूर्वसृष्टिगता यज्ञादिसाधका इदानीं यज्ञादिभिः साध्यत्वेन वर्तमाना देवाः सन्ति वर्तन्ते तं नाकं सचन्तेति पूर्वत्रान्वयः ॥

---

1. ऋ० १.१६४.५०; १०.९०.१६ । 2. आश्व० श्रौ० ३.१६.७,८ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[यजमानों के द्वारा जो ज्योतिष्टोम आदि कर्म का अनुष्ठान किया गया] वे [सभी] कर्म प्रथमतः [सृष्टि के आदिकाल में] थे। उन महत्त्वयुक्त [अनुष्ठान करने वालों] ने दुःखरहित भोग को प्राप्त किया। जिस लोक में पूर्वसृष्टिगत यज्ञादि के साधक देव हैं [उस स्वर्ग को प्राप्त किया]।

चतुर्थपादस्य तात्पर्यं दर्शयति—

छन्दांसि वै साध्या देवास्तेऽग्रेऽग्निमाऽग्निमयजन्त ते स्वर्गं लोकमायन्॥ इति।

छन्दांसि वै गायत्र्यादिच्छन्दोभिमानिन एव साध्या इदानीं जनैः पूज्या देवास्तेऽग्रे च पूर्वसृष्टावग्निना मथितेनाग्निनाऽऽहवनीयमग्निमयजन्त पूजितवन्तः। ते च तेन यागेन स्वर्गं प्राप्ताः॥

वस्तुतः गायत्री आदि छन्द [के अभिमानी देव] ही साध्य देव हैं जिन्होंने पूर्वसृष्ट-मथित अग्नि के द्वारा आहवनीय अग्नि का पूजन किया। उन्होंने [उस याग के द्वारा] स्वर्गलोक को प्राप्त किया।

न केवलं छन्दोदेवा एव चतुर्थपादे विवक्षिताः किन्त्वन्येऽपीत्याह—

आदित्याश्चैवेहाऽऽसन्नङ्गिरसश्च तेऽग्रेऽग्निनाऽग्निमयजन्त ते स्वर्गं लोकमायन्॥ इति।

इदानीमादित्यशब्देनाभिधेया देवा अङ्गिरःशब्देनाभिधेया ये चर्षयस्ते द्विविधा अपीहैवाऽऽसन्भूमावेव पूर्वसृष्टौ मनुष्यरूपेणावस्थिताः। तेऽग्र इत्यादि पूर्ववत्। तदेवं चतुर्थपादतात्पर्यद्वयमुक्तम्। यद्वा छन्दांसीत्यादिकमेव चतुर्थपादतात्पर्यम्। आदित्यादिकमितरपादतात्पर्यमिति द्रष्टव्यम्[1]॥

आदित्य और अङ्गिरा भी प्रथमतः उत्पन्न थे जिन्होंने पूर्वसृष्ट-मथित अग्नि के द्वारा आहवनीय अग्नि का यजन किया और उन्होंने स्वर्गलोक को प्राप्त किया।

येयमाहवनीयेऽग्नौ मथिताग्निप्रक्षेपलक्षणाहुतिस्तां प्रशंसति—

सैषा स्वर्ग्याहुतिर्यदग्न्याहुतिर्यदि ह वा अप्यब्राह्मणोक्तो यदि दुरुक्तोक्तो यजतेऽथ हैषाऽऽहुतिर्गच्छत्येव देवान्न पाप्मना संसृज्यते॥ इति।

अग्निरूपद्रव्याहुतिर्या विद्यते सैषा स्वर्गाय हिता।[2] 'यदि ह'त्यादिना स्वर्गत्वमेव स्पष्टीक्रियते। ब्राह्मणं विधायकं वाक्यम्, तेन प्रेरितो ब्राह्मणोक्तः, तद्विपरीतः पण्डितं-

---

१. एष मन्त्रः सायणेन संहिताभाष्ये पञ्चधा व्याख्यातः, यास्केन च स्वमते आख्यानमते चेति द्विधा व्याख्यातः (१२.४१)। आदित्यादीनामप्यर्था नैरुक्तमते विभिन्ना एव (२.६., १३.)।

२. स्वर्ग्या। 'तस्मै हितम्'—इति पा० सू० ५.१.५।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मन्यः स्वबुद्ध्यैव यत्किंचिद् योऽनुतिष्ठति सोऽयम् 'अन्नाह्मणोक्तः' । पुरुषेणान्यथाऽवबुद्धं[1] विधिवाक्यं दुरुक्तम्, तेन प्रेरितो दुरुक्तोक्तः । अथवा स्मृतिष्वब्राह्मणत्वेन प्रतिपादितो योऽस्ति सोऽयमब्राह्मणोक्तः ॥

तद्यथा—"अब्राह्मणास्तु षट्प्रोक्ता इति शातातपोऽब्रवीत् ।
आद्यस्तु राजभृत्यः स्याद्‌द्वितीयः क्रयविक्रयी ॥
तृतीयो वहुयाज्याख्यश्चतुर्थोऽश्रौतयाजकः ।
पञ्चमो ग्रामयाजी च षष्ठो ब्रह्मबन्धुः स्मृतः[2] ॥ इति ।

यद्यपि याजनाध्यापनप्रतिग्रहा ब्राह्मणस्य जीवनहेतुत्वेन विहितत्वाद्[3] अनिषिद्धास्तथाऽपि यावता जीवनं निष्पद्यते तावदेव याजनं शास्त्रेणाङ्गीकृतम् । यस्तु सत्यपि जीवने धनाधिक्यवाञ्छया याजनशीलः सोऽत्र बहुयाजी विवक्षितः । यः पुमान् श्रौतकर्मण्यधिकृतोऽनादरेण स्वयं श्रौतं नानुतिष्ठति, अन्यानपि नानुष्ठापयति किंतु स्मार्तकर्मपरः सन्ननुतिष्ठत्यनुष्ठापयति सोऽयमश्रौतयाजकः । ग्रामे नगरे च योग्यायोग्याश्च यावन्तः सन्ति, धनाभिलाषेण तावतां सर्वेषां याजको ग्रामनगरयाजी । यः पुमान् प्रातः सूर्योदयात् प्राक् सन्ध्यां नोपास्ते, सायं चास्तमयात् प्राङ्नोपास्ते, सोऽयं ब्रह्मबन्धुः । एते षडब्राह्मणत्वेन स्मृतिषूक्ताः । दुष्टान्यपवादरूपाणि वचनानि दुरुक्तानि, तैरभिशस्तो दुरुक्तोक्तः । 'अब्राह्मणोक्तो' वा 'दुरुक्तोक्तो' वा यद्यपि 'यजते' अथाऽप्येषाऽऽहवनीये हुता मथिताऽन्याहुतिर्देवान् प्राप्नोत्येव । ततो यजमानस्य पापसंसर्गो न भवति ॥

यह जो अग्नि की आहुति है वह स्वर्ग में ले जाने वाली आहुति है । यदि यजन करने वाला ब्राह्मण नहीं भी है अथवा यदि दुरुक्त अर्थात् ठीक से वचन नहीं कहे गए भी हैं, तो भी इसकी आहुति देवों तक पहुँचती ही है, यजमान का पापसंसर्ग नहीं होता ।

वेदनं प्रशंसति—

गच्छत्यस्याऽऽहुतिर्देवान्नास्याऽऽहुतिः पाप्मना संसृज्यते य एवं वेद ॥ इति ।

उक्तार्थवेदिता यद्यपि यत्किंचित्कर्म विकलमनुतिष्ठति तथाऽपि तत्सर्वं सकलं भवति ॥

---

१. 'पौरुषेयार्थविरुद्धम्' इति वा पाठः ।

२. 'अब्राह्मणास्तु षट् प्रोक्ता ऋषिणा तत्त्ववादिना । आद्यो राजभृतस्तेषां द्वितीयः क्रय-विक्रयी ॥ तृतीयः बहुयाज्यः स्याच्चतुर्थो ग्रामयाजकः । पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च । अनागतां तु यः पूर्वां सादित्यां चैव पश्चिमाम् । नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः । इति वा पाठः ।

३. षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥—इति मनु० १०.७६ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जो इस प्रकार जानता है उसकी आहुति अवश्य ही देवताओं तक पहुँच जाती है; और यजमान को पाप-संसर्ग नहीं होता अर्थात् अनुष्ठान में कुछ वैकल्य भी यदि हो जाय तो वह भी परिपूर्ण होता है।

न्यूनाधिकसंख्याभ्रमव्युदासाय विहितानामृचां संख्यां दर्शयति—

ता एतास्त्रयोदशान्वाह रूपसमृद्धाः ॥ इति।

राक्षोघ्नीनां नैमित्तिकत्वात्[1] परित्यागेनेतरास्त्रयोदशसंख्याकाः[2]। ताश्च मथ्यमानस्य जायमानस्य प्रह्रियमाणस्याऽऽहवनीयेन संसृज्यमानस्य च प्रतिपादनेनानुकूलेनैव रूपेण समृद्धाः।

[नैमित्तिक होने से राक्षोघ्नी ऋचा को छोड़कर] उन तेरह ऋचाओं का पाठ करना चाहिए, जो [मथ्यमाना, जायमान, प्रह्रियमाण और संसृज्यमान के प्रतिपादन में अनुकूल होने से] मन्त्र रूप से समृद्ध हैं।

तामेतां समृद्धिं प्रशंसति—

एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति ॥ इति।

जो यज्ञ अपने रूप में समृद्ध है वही यज्ञ की समृद्धि है। जो कर्म जैसा किया जाने वाला है वैसा मन्त्र के द्वारा वर्णित होना ही उसकी रूप-समृद्धि है।

आद्यन्तयोर्ऋचोरावृत्तिविधिमावृत्तानां संख्याप्रशंसां वेदनप्रशंसामावृत्तिप्रशंसां च दर्शयति—

तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां, ताः सप्तदश संपद्यन्ते, सप्तदशो वै प्रजापतिर्द्वादश मासाः पञ्चर्तवस्तावान् संवत्सरः, संवत्सरः प्रजापतिः, प्राजापत्यायतनाभिरेवाऽऽभी राध्नोति य एवं वेद, त्रिः प्रथमां त्रिरुत्तमामन्वाह यज्ञस्यैव तद्बर्सौ नह्यति स्थेम्ने बलायाविस्रंसाय ॥ १६ ॥ इति।

पूर्ववद्[3] व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेय ब्राह्मणभाष्ये तृतीयाध्याये पञ्चमः खण्डः ॥ ५ ॥ [ १६ ]

---

१. द्र० इतः परस्तात् पृ० ९९।

२. एतास्त्रयोदशर्चस्तैत्तिरीयसंहितायामनुक्रमेणैवैकत्राम्नाताः (३.५.११) वस्तुतोऽत्र नैमित्तिकसहिताः साकल्येनेह द्वाविंशतिः ऋचो विहिताः।

३. द्र० इतःपरस्तात् पृ० ८९।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उन [तेरह ऋचाओं] के मध्य प्रथम और अन्तिम ऋचा का तीन-तीन बार पाठ किया जाना चाहिए। इस प्रकार वे [मन्त्र] सत्रह हो जाते हैं, क्योंकि प्रजापति भी सत्रह हैं। बारह महीने, एक संवत्सर और पाँच ऋतुएँ [मिलकर सत्रह होते हैं। संवत्सर ही प्रजापति है। जो इस प्रकार जानता है वह प्रजापति रूप आयतन के द्वारा साफल्य को प्राप्त करता है। अतः प्रथम और अन्तिम मन्त्र का तीन-तीन बार पाठ करना चाहिए। वस्तुतः ऐसा करके वह मानो यज्ञ के दोनों किनारों को कसकर बाँधता है, जिससे कि वह फिसल न जाय और उसकी स्थिरता और शक्ति बनी रहे।

॥ इस प्रकार तृतीय अध्याय में पञ्चम खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

आतिथ्येष्टिमध्ये कर्तव्यमग्निमन्थनमुक्त्वा तदिष्टिशेषं विधत्ते—

समिधाऽग्निं दुवस्यताऽऽप्यायस्व समेतु त इत्याज्यभागयोः पुरोनुवाक्ये भवत आतिथ्यवत्यौ रूपसमृद्धे एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति ॥ इति।

'समिधाऽग्निम्'[1] इति प्रथमाज्यभागस्य पुरोनुवाक्या। 'आ प्यायस्व समेतु ते'[2] इति द्वितीयस्य। प्रथममन्त्रस्य द्वितीयपादे घृतैर्बोधयतातिथिमिति श्रूयमाणत्वादातिथ्यवत्यौ ॥

i १७. [ii. ६] 'समिधाग्नि' और 'आ प्यायस्व' आदि दो ऋचा दो आज्यभाग को पुरोनुवाक्या हैं। [प्रथम मन्त्र के द्वितीय पाद में 'घृतैर्बोधयतातिथिम्' है]। आतिथ्य युक्त पद होने से यह रूप से समृद्ध है। जो यज्ञ अपने रूप में समृद्ध है वही यज्ञ की समृद्धि है जो क्रिया करनी हो मन्त्र में उसका विधान होना ही रूप-समृद्धि है।

तदेतदाक्षिपति—

सैषाऽऽग्नेय्यतिथिमती न सौम्याऽतिथिमत्यस्ति यत्सौम्याऽतिथिमती स्याच्छश्वत्सा स्यात् ॥ इति।

सौम्या त्वतिथिशब्दोपेता नास्ति। आ प्यायस्वेत्यस्यामृच्यतिथिशब्दस्याश्रवणात्। यदि सौम्याऽतिथिशब्दोपेता स्यात्तदानीं शश्वदवश्यं सा सौम्या पुरोनुवाक्या भवेत्। न त्वसावतिथिमती। तस्मादातिथ्यवत्याविति द्विवचनमयुक्तमित्यर्थः ॥

यह प्रथम ऋचा अग्नि-देवताक है और 'अतिथि' शब्द से युक्त है। किन्तु वह सोम-देवताक द्वितीय ऋचा तो 'अतिथि' शब्द से युक्त नहीं है। यदि सोम-देवताक वह ऋचा अतिथि शब्द से युक्त होती तो वह अवश्य ही पुरोनुवाक्या होती [और तभी 'आतिथ्यवत्यौ' में द्विवचन युक्तियुक्त होता]।

---

१. ऋ० ८.४४.१।　　　　२. ऋ० १.९१.१६।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

आक्षेपं समाधत्ते—

[1] तत्त्वेवैषाऽतिथिमती यदापीनवती ।[1] इति ।

तुशब्द आक्षेपनिवारणार्थः । आपीनमभिवृद्धिस्तद्वाचकस्याऽऽप्यायस्वेति शब्दस्य विद्यमानत्वादियं सौम्याऽऽपीनवती । यदापीनवत्त्वमस्ति, एतदेवैतेनाऽऽपीनवत्त्वेनैवैषा सौम्याऽतिथिमती संपद्यते । आपीनवत्त्वस्यातिथ्युपलक्षकत्वात् ॥[1]

इसका 'आपीन' [=अभिवृद्धि] शब्द से युक्त होना ही 'अतिथि' शब्द से युक्त होना है । अर्थात् 'आप्यायस्व' ही अतिथि शब्द का उपलक्षक है ।

तदेवोपलक्षकत्वं विशदयति—

यदा वा अतिथिं परिवेविषत्या पीन इव वै स तर्हि भवति ॥ इति ।

तमतिथिं गृहस्वामी यदैव परिवेविषति परिवेषणेन पात्रे भोज्यप्रक्षेपणेन भोजयति तर्हि तस्मिन् भोजनोत्तरकाले सोऽतिथिरापीन इवोदरपूर्त्या वृद्धिं प्राप्त इव भवत्येव । तस्माद् वृद्धिवाचक आप्यायस्वेति शब्दोऽतिथिलक्षकः । अतो द्विवचनं पुरानुवाक्यात्वं च युक्तम् ॥

वस्तुतः अतिथि का जब सत्कार भोजन द्वारा करते हैं तो भोजनोपरान्त उदरपूर्ति के द्वारा वह मानो वृद्धि को प्राप्त करता है [इसलिए वृद्धि का वाचक 'आप्यायस्व' शब्द ही 'अतिथि' का उपलक्षक है । अतः द्विवचन का प्रयोग ठीक है] ।

आज्यभागयोर्याज्यां विधत्ते—

तयोर्जुषाणेनैव यजति ॥ इति ।

प्रकृतावाम्नातौ 'जुषाणोऽग्निराज्यस्य वेतु' । 'जुषाणः सोम आज्यस्य हविषो वेतु' इति च । तेनैव[2] मन्त्रेण यजेत । अग्निर्वृत्राणीत्यादिके प्रकृतिगते[3] पुरोनुवाक्ये चोदकप्राप्ते अपोद्य यथा समिधाऽग्निमित्यादिके विहिते[4] तद्वद्याज्यान्तरप्रसक्तिं वारयितुं विधिः ॥

'जुषाण' से आरम्भ होने वाले दो याज्य मन्त्रों से ही उन दोनों आज्य भागों का यजन करना चाहिए ।

प्रधानस्य हविषो याज्यानुवाक्ये विधत्ते—

इदं विष्णुर्वि चक्रमे तदस्य प्रियमभि पाथो अश्यामिति वैष्णव्यौ ।।इति।

१. अत एवाह चाश्वलायनः—'धाय्ये, अतिथिमन्तौ,—समिधाग्निं दुवस्यताप्यायस्व समेतु त इति' इति श्रौ० ४.५.३ ।
२. 'जुषाणः'—इतिपदयुक्तमन्त्रद्वयेनेति भावः । तौ मन्त्रौ तै०ब्रा० ३.५.६ आम्नातौ ।
३. द्र० इतः परस्तात् पृ० ३६ ।
४. द्र० इतः परस्तात् पृ० १०९ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

याज्यानुवाक्ये कुर्यादिति शेषः ।[1]

'इदं विष्णुर्वि चक्रमे' और 'तदस्य॰ प्रियमभि पाथो अश्याम्' ये दोनों विष्णु-देवताक [ऋचा याज्यानुवाक्या] हैं।

तयोर्विभागं विधत्ते—

**त्रिपदामनूच्य चतुष्पदया यजति ॥ इति ।**

इदं विष्णुः,[2] इति त्रिपदा, तां पुरोनुवाक्यारूपेणानुब्रूयात् । 'तदस्य प्रियम्'[3] इति चतुष्पदा तया यजेत । याज्यारूपेण तां पठेत् ।

'इदं विष्णुः' आदि त्रिपदा का पुरोनुवाक्या के रूप में पाठ करके 'तदस्य प्रियम्' आदि चतुष्पदा का याज्या के रूप में पाठ करना चाहिए।

ऋग्द्वयगतां पादसंख्यां प्रशंसति—

**सप्त पदानि भवन्ति; शिरो वा एतद्यज्ञस्य यदातिथ्यं, सप्त वै शीर्षन् प्राणाः शीर्षन्नेव तत्प्राणान् दधाति ॥ इति ।**

आतिथ्येष्टेर्यज्ञशिरोरूपत्वाच्छिरसि छिद्रवर्तिनां प्राणानां सप्तत्वादत्र पादसंख्यया यज्ञस्या शिरसि सप्त प्राणाः स्थापिता भवन्ति ॥

[इस प्रकार दोनों मन्त्रों में] सात पाद होते हैं। जो आतिथ्येष्टि है वह मानो इस यज्ञ का सिर है, और सिर में सात प्राण अर्थात् इन्द्रियाँ रूप छिद्र हैं। इस प्रकार इन सात पादों को पढ़कर मानों यजमान यज्ञ के सिर में सातों प्राणों को स्थापित करता है।

संयाज्ये विधत्ते—

**होतारं चित्ररथमध्वरस्य प्रप्रायमग्निर्भरतस्य शृण्व इति स्विष्टकृतः संयाज्ये भवत आतिथ्यवत्यौ रूपसमृद्धे, एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति ॥ इति ।**

'होतारम्'[4] इति पुरोनुवाक्या । 'प्रप्रायम्'[5] इति याज्या । प्रथमाया ऋचश्चतुर्थपादे श्रिया त्ववग्निमतिथिं जनानामिति श्रूयमाणत्वादातिथ्यवत्त्वम् । द्वितीयस्या अपि चतुर्थपादे द्युतानो दैव्यो अतिथिरिति ॥

'होतारम्' आदि और 'प्रप्रायम्' आदि स्विष्टकृत् हवि की पुरोनुवाक्या और याज्या हैं। [प्रथम और द्वितीय ऋचा का चौथा पाद] 'अतिथि' शब्द से युक्त होने के कारण दोनों ही ऋचा रूप से समृद्ध हैं। जो रूप की समृद्धि है वही वस्तुतः यज्ञ की समृद्धि है। जो क्रिया करनी हो मन्त्र में उसका विधान होना ही रूप-समृद्धि है।

---

१. आश्व० श्रौ० ४.५.३ । ऐ० ब्रा० ९४ पृ० ।
२. ऋ० १.२२.१७ ।　　　३. ऋ० १.१५४.५ ।
४. ऋ० १०.१.५ ।　　　५. ऋ० ७.८.४ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मन्त्रद्वयगतं छन्दः प्रशंसति—

त्रिष्टुभौ भवतः सेन्द्रियत्वाय ॥ इति ।

'इन्द्रियं वै त्रिष्टुप्'[1] इति श्रुत्यन्तरात् त्रिष्टुभ इन्द्रियहेतुत्वम् ॥

त्रिष्टुप् छन्दस्क वे दोनों मन्त्र [यजमान को] इन्द्रिय अर्थात् शक्ति से युक्त करने वाले होते हैं।

अत्रेडाभक्षणादूर्ध्वंभाविकर्तव्यमपि चोदकेन प्राप्तं, तदेतद्वारयति—

इळान्तं भवतीळान्तेन वा एतेन देवा अराध्नुवन्यदातिथ्यं, तस्मादिळान्तमेव कर्तव्यम् ॥ इति ।

पुरोडाशसंबन्धि यदेतदिडाभागभक्षणं तदन्तमेवाऽऽतिथ्येष्टिरूपं कर्म भवेत् । तावतैव समृद्धिसिद्धेः । द्विविधमिडाभक्षणम् । अनुयाजयागात् पूर्वमुत्तरकालीनं च ॥

आतिथ्येष्टि रूप कर्म इडान्त अर्थात् अन्त में यज्ञान्न के भक्षण से समाप्त होता है। इस आतिथ्येष्टि रूप इडान्त कर्म के द्वारा देवताओं ने समृद्धि को प्राप्त किया। इसलिए इस इष्टि की समाप्ति इडान्त ही करनी चाहिए।

तयोः पूर्वकालीनमत्रान्तत्वेन दर्शयितुमनुयाजान् निषेधति—

प्रयाजानेवात्र यजन्ति नानुयाजान् ॥ इति ।

[इडा भक्षण दो प्रकार से हो सकता है प्रयाज या अनुयाज अर्थात् याग के पहले या याग के बाद] इस इष्टि में प्रयाज आहुतियाँ ही दी जाती हैं; अनुयाज नहीं।

अनुयाजानां यजने दोषं प्रकटयति—

प्राणा वै प्रयाजानुयाजास्ते य इमे शीर्षन् प्राणास्ते प्रयाजा येऽवाञ्चस्तेऽनुयाजाः स योऽत्रानुयाजान् यजेद्यथेमान् प्राणानालुप्य शीर्षं धित्सेत्तादृक्तत्, ॥ इति ।

प्रशब्दसाम्यात् प्रयाजानां प्राणत्वं तदनुवर्तित्वसाम्यादनुयाजानामपि प्राणत्वम् । तथा सति ते य इमे शीर्षन् प्राणाः शिरस्यवस्थिताः श्वासादिकारिणः प्राणा ये केचित् सन्ति ये प्रयाजरूपाः प्रकृष्टसाम्यादुत्तमाङ्गवर्तित्वेन प्राणानां प्रकृष्टत्वम् । प्रयाजानां च प्रथमानुष्ठानत्वेन प्रकृष्टत्वम् । ये त्ववाञ्चो नाभेरधस्ताद् वर्तमाना अपानवाय्वादयस्तेऽनुयाजरूपा निकृष्टत्वसाम्यादपानवाय्वादीनां मध्याङ्गवर्तित्वेन निकृष्टत्वम् । अनुयाजानां पश्चाद्भावित्वे निकृष्टत्वम् । एवं सति यः पुमानत्राऽऽतिथ्येष्टावनुयाजान् यजेल्लोके कश्चिद्यथेमानवाग्देशवर्तिनोऽपानवाय्वादीनालुप्य छित्त्वा शीर्षं धित्सेत्, शिरसि स्थापयितुमिच्छेत्, तादृक्तत्, तथैव स पुमांस्तत्कर्तुमिच्छेत् । अधोदेशवर्तिप्राणस्थानीयानुयाजानां

---

१. तै० सं० २.४.११.२; ३.२.९ ३; तै० ब्रा० १.७.९.२ (द्र० ऐ० ब्रा० ३९ पृ०)।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यज्ञशिरःस्थानीयातिथ्यकर्मण्यनुष्ठानमयुक्तं तथा पुत्रादिप्रजास्थानीयानामनुयाजानां शिरःस्थानीयेऽनुष्ठानमयुक्तमित्यपि द्रष्टव्यम्।[1]

प्रयाज और अनुयाज आहुतियाँ दोनों ही प्राण हैं। वे जो सिर पर स्थित श्वास आदि प्राण हैं, वे [उत्तमाङ्गस्थ होने के कारण प्रकृष्ट होने से] प्रयाज हैं, और जो नाभि से नीचे अपान वायु है वे [निकृष्ट होने से] अनुयाज हैं। जो यहाँ अनुयाज आहुतियाँ देता है वह उसी प्रकार है मानो प्राणों का छेदन करके शिर पर उसे स्थापित करना चाहता है [अर्थात् अधोदेशवर्ती प्राणस्थानीय अनुयाजों का प्रयोग यज्ञ के शिरस्थानीय आतिथ्य कर्म के अनुष्ठान में उपयुक्त नहीं है]।

दोषान्तरमाह—

**अतिरिक्तं तत्समु वा इमे प्राणा विद्रे ये चेमे ये चेमे, ॥ इति।**

ये चेमे शिरसि योग्याः, प्राणा येऽप्यमी नीचदेशस्थिताः प्राणास्ते सर्वे समुविद्रे संभूयैकत्र शिरस्यवतिष्ठेरन्। तच्चातिरिक्तं योग्यस्थानीयादधिकं शिरोरूपमातिथ्यं कर्म चक्षुरादीनामेव प्राणानां योग्यस्थानं न त्वधोदेशवर्तनामपानादीनां तत्रावकाशोऽस्तीत्यर्थः।

[दूसरा दोष यह है कि] जो ये [शिर पर रहने योग्य हैं और जो अधोवर्ती नीच देश में अवस्थित] प्राण हैं वे सभी एकत्र होकर शिर में अवस्थित होवें। उससे अतिरिक्त [अर्थात् योग्यस्थानीय से अधिक शिरो रूप आतिथ्य कर्म चक्षु आदि इन्द्रियाँ ही योग्य-स्थान है। अधोदेशवर्ती अपान आदि] को वहाँ कोई आवश्यकता नहीं है।

नन्वनुयाजानामनुष्ठानाभावे कर्माङ्गसाकल्यलक्षणः फलविशेषो न प्राप्येतेत्याशङ्क्याऽऽह—

**तद्यदेवात्र प्रयाजान् यजन्ति नानुयाजांस्तत्र सकाम उपाप्तो योऽनुयाजेषु योऽनुयाजेषु ॥ १७ ॥**

**इत्यैतरेयब्राह्मणे प्रथमपञ्चिकायां तृतीयोऽध्यायः ॥ ३ ॥**

तत्तस्मिन्नातिथ्यकर्मणि यदि प्रयाजानेव यजन्ति न त्वनुयाजांस्तदानीमनुयाजेषु यः कामः फलविशेषः स सर्वोऽपि तत्र कर्मणि प्राप्तो भवति। यथा लोके कंचिदान्दो-

---

१. 'प्राणा वै प्रयाजा अपाना अनुयाजा इति ब्राह्मणम्'—इति निरु० ८.३.७। प्राणा वै प्रयाजाः अपाना अनुयाजास्तस्मात् प्रयाजाः प्राञ्चो हूयन्ते तद्धि प्राणरूपम् प्रत्यञ्चोऽनुजास्तदपानरूपम्—इति शत० ब्रा० ११.२.७.२७।



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

लिकादिभारं वहत्सु बहुषु मध्ये कस्यचिदशक्तौ सत्यामवशिष्टा एव वहन्ति तद्वदित्यर्थः । द्विरभ्यासोऽध्यायसमाप्त्यर्थः ॥[1]

अत्र मीमांसा । दशमाध्यायस्य सप्तमपादे चिन्तितम्—

"प्रायणीयातिथ्ययोः किं विकल्पः शंय्विडान्तयोः ।
नियमो वा विकल्पः स्यान्निषेधपरिसंख्यया ॥
शंय्विडान्तत्ववाक्याच्च नियमो विधिमात्रतः ।
नित्यानुवादो नञ्वाक्यं दोषबाहुल्यमन्यथा" ॥[2]

ज्योतिष्टोमे श्रूयते—'शंय्वन्ता प्रायणीया संतिष्ठते न पत्नीः संयाजयन्ति ।[3] इडान्ता आतिथ्याः संतिष्ठन्ते, नानुयाजान् यजति' इति[4] । प्रकृतौ यदा होता 'तच्छंयोः'[5] इति जपति[6], तदानीमध्वर्युः परिधीनग्नौ प्रक्षिपति[7] । तदाह कल्पसूत्रकारः—'अनूच्यमाने शंयुवाक आहवनीये परिधीन् प्रहरति'[8] इति । ततो हविःशेषेषु भक्षितेषु पत्नीः संयाजयन्ति, इति क्रमः । पत्नीसंयाजानामुपरि फलीकरणहोमप्रायश्चित्तहोमकपालोद्वासनैरिष्टिः समाप्यते । एवं स्थिते विकृतिरूपायाः प्रायणीयेष्टेः शंयुवाकान्तत्वम्, आतिथ्येष्टेरिडाभक्षणान्तत्वं च विकल्पितं स्यात् । कुतः, निषेधविधिवाक्याभ्यां प्रकरणद्वयप्रतीतेः । तथा हि—शंयवन्तत्वेडान्तत्वविधिनैवोपरितनपत्नीसंयाजानुयाजनिषेधे पुनर्निषेधवचनं परिसंख्यार्थम् । पत्नीसंयाजानुयाजव्यतिरिक्ते नास्ति निषेधः—इति परिसंख्या । तेन प्रकृतिवद्यथाप्राप्तं कपालोद्वासनान्तत्वमनयोरिष्ट्योः प्रतीयते । विधिवाक्येन च शंय्विडान्तत्वम्; तेन व्रीहियववद् विकल्पः । इति प्राप्ते—ब्रूमः—विधिमात्रस्यात्र प्रवृत्तेः । शंय्वन्तत्वमिडान्तत्वं च तयोः प्रतिनियतम् । पत्नीसंयाजाद्यभावस्त्वर्थसिद्धः । ततो नञ्पदयुक्तमुपरितनं प्रतिषेधवाक्यं नित्यानुवादः[9] सन्नर्थवादः अन्यथा बहवो दोषाः प्रसज्येरन् । विकल्पे तावदष्टौ

---

१. तु० शत० ब्रा० ३.४.१.१–२६ । तै० सं० ६.२.१.२; १.२.१० । आश्व० श्रौ० ४.५.१–७ । कात्या० श्रौ० ८.१.१–१८ । आप० श्रौ० १०.३०.२१ ।
२. जै० न्या० वि० १०.७.१२.३८–३९ ।
३. शत० ब्रा० ३.२.३.२३ ।
४. शत० ब्रा० ३.४.१.२.६ । आप० श्रौ० १०.२१.१३–१४; ११.१४–१५ । आश्व० श्रौ० ४.३.२; ५.१ । कात्या० श्रौ० ७.५.२२–२७; ८.१.१८ ।
५. तै० ब्रा० ३.५.११.१ ।
६. शंयुवाक मन्त्रव्याख्या तु तै० सं० २.६.१० द्रष्टव्या ।
७. 'परिधीन् परिदधाति····गन्धर्वं इति' (वा० सं० २.३)–इति कात्या० श्रौ० २.८.१ ।
८. आप० १२.६.७ ।
९. 'नित्यप्राप्तमनुवदति । यथा नान्तरिक्षे न दिवि अग्निश्चेतव्य इति'—इति शबरः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दोषाः प्रसिद्धाः,[१] परिसंख्यायां च त्रयो दोषाः[२]। विधिपरिसंख्याभ्यां वाक्यभेदोऽपरो दोषः[३]। ततः शंय्विडान्तत्वं नियतम्।

तत्रैवान्यच्चिन्तितम्—

"तत्रैव शंय्विडे पूर्वे परे वा स्वेच्छयाऽथवा।
परे एवाथवा पूर्वे एवाऽऽद्यो द्विविधश्रुतेः॥
निषेधस्यार्थवत्त्वाय परे एवानुवादगीः।
पूर्वैकवाक्यतां याति पूर्वे एवाविरोधतः॥"[४]

प्रायणीयातिथ्येयोर्निर्णीते शंय्विडे पुनः संदिह्येते। प्रकृतौ द्विविधे शंय्विडे—पत्नीसंयाजेभ्यः पुरस्तादुपरिष्टाच्च विहिते। ते चात्र चोदकप्राप्ते। तत्र द्विविधश्रुतेः—अर्थे चोदकेनातिदिष्टे सति विशेषनियामकाभावादिच्छया स्वीकार्ये, इत्येकः पक्षः। यदि प्रायणीया पूर्वशंय्वन्ता, आतिथ्या च पूर्वेडान्ता स्यात् तदानीमन्तत्वविधिनैव ताभ्यां शंय्विडाभ्यामूर्ध्वं प्राप्तानां पत्नीसंयाजानामनुयाजानां च वारितत्वात् निषेधो व्यर्थः स्यात्। परयोः शंय्विडयोरन्तत्वे तु ताभ्यां शंय्विडाभ्यां पूर्वप्राप्तानां तेषामनिवारणात्तन्निवारणाय सार्थको निषेधः। तस्मात्—परे एव शंय्विडे ग्राह्ये, इति द्वितीयः पक्षः। निषेधोऽयं नित्यानुवादः—इत्युक्तम्[५]। स च पूर्वयोः शंय्विडयोरन्तत्वेऽप्येकवाक्यतामा-

---

१. विकल्पश्च द्विविधः—व्यवस्थितः ऐच्छिकश्च। तत्र इच्छाविकल्पेऽष्टौ दोष प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पना प्रत्युज्जीवनहानिभ्यां प्रत्येकमष्टदोषता'—इति व्रीहिभिर्यजेत, 'यवैर्यजेत'—इति चैतदुदाहरणम्। कात्यायनसूत्रे तद्व्याख्यायां तद्पद्धतौ चैष विचारः कृतः (श्रौ० १.४.१३—१९)। मीमांसाया द्वादशाध्यायीयतृतीयपादे तु विकल्प विचारा बहव उपदिष्टाः; तत्र 'एकार्थस्तु विकल्पेरन्, समुच्चये ह्यावृत्तिः स्यात् प्रधानस्य' इति कृतं गुणविकल्पलक्षणम् (१२.३.१०)।

२. विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते—इति, 'श्रुतार्थस्य परित्यागादश्रुतार्थस्यकल्पनात्। प्राप्तस्य बाध इत्येवं परिसंख्या त्रिदूषणा'—इति च, एतयोरुदाहरणादीनि च मीमांसार्थसङ्ग्रहे द्रष्टव्याणि।

३. 'य एव हि श्रुतस्यार्थस्योत्सर्गे दोषः, स एवाश्रुतकल्पनायाम्'—इत्येवाहात्र शबरः।

४. जै० न्या० वि० १०.७.१३.४०—४२। ५. द्र० पूर्वं पृ० ११४।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पद्यानुवादकत्वेनोपपद्यते। असंजातविरोधिन्यौ हि पूर्वे शंख्विडे। तस्मात्—ते एव ग्राह्ये—इति राद्धान्तः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये प्रथमपञ्चिकायां तृतीयाध्याये षष्ठः खण्डः ॥ ६ ॥ [ १७ ]

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ महेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधर-माधवाचार्यदिशतो सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायाः तृतीयोऽध्यायः ॥ ३ ॥

इस प्रकार उस आतिथ्य कर्म में यदि प्रयाजों का ही यजन हो और अनुयाजों का न भी हो तब भी अनुयाज में जो कामना होती है वह सभी प्रयाज में ही यजमान को प्राप्त हो जाती है।

॥ इस प्रकार ऐतरेय ब्राह्मण की पहली पञ्चिका के तीसरे अध्याय की हिन्दी पूर्ण हुई ॥ ३ ॥

———

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ चतुर्थोऽध्यायः

## प्रथमः खण्डः

सोमप्रवाहिका अग्निमन्थनीया ऋचस्तथा ।
आतिथ्यास्तद्विशेषाश्च तृतीयाध्याय ईरिताः ॥ १ ॥

अथ प्रवर्ग्यादयो वक्तव्याः । तदर्थमादावाख्यायिकामाह—

**यज्ञो वै देवेभ्य उदक्रामन्न वोऽहमन्नं भविष्यामीति, नेति देवा अब्रुवन्नन्नमेव नो भविष्यसीति तं देवा विमेथिरे सहैभ्यो विहृतो न प्रबभूव ते होचुर्देवा न वै न इत्थं विहृतोऽलं भविष्यति हन्तेमं यज्ञं संभरामेति तथेति तं संजभ्रुः ॥ इति ।**

यज्ञशब्देनात्र प्रवर्ग्यो विवक्षितः । तदभिमानी देवः केनापि निमित्तेनापरक्तोऽन्येभ्यो देवेभ्य उत्क्रान्तवान् । हे देवा युष्माकमहमन्नं न भविष्यामीत्येवमुत्क्रमणकाले प्रोक्तवान् । ततो देवास्तदुत्क्रमणं नेति प्रतिषिध्य सर्वथा त्वमस्माकमन्नं भवेति प्रार्थितवन्तः । प्रवर्ग्याख्ये कर्मणि यद्धविस्तद्देवानामन्नं तदभिमानी च पुरुषो देवैः प्रार्थितं तदन्नत्वं नाङ्गीचकार । तमनङ्गीकुर्वाणं प्रवर्ग्यं पुरुषं देवा विमेथिरे ताडनभर्त्सनादिभिर्हिंसितवन्तः । स च प्रवर्ग्यो देवैर्विशेषेण बाधित एभ्यो देवेभ्यो न प्रबभूव प्रभूतो नाभूत, अन्नत्वेनावस्थातुं न शक्त इत्यर्थः । ततो देवाः परस्परमेवं विचारितवन्तः । एवं विहृतो विशेषेण बाधितः प्रवर्ग्यो नोऽस्माकमन्नं नैव भविष्यतीति सम्पूर्णमन्नं न भविष्यति नमिमं प्रवर्ग्याख्यं यज्ञं संभरामोचितैः साधनैः सम्यक् पोषयामेति । संपूर्तिहेतुदर्शननिमित्तजन्यहर्षद्योतनार्थो हन्तशब्दः[1] । तथेति परस्परमङ्गीकृत्य तं प्रवर्ग्यं संजभ्रुः साधनसंपादनेन सम्यक् पोषितवन्तः ।

[प्रवर्ग्य इष्टि]—

i. १८. [iv. १]—यज्ञ देवताओं के पास से यह कहकर चला गया कि मैं तुम्हारा अन्न नहीं होऊँगा । देवताओं ने कहा—नहीं, आप ही हमारे अन्न होवें । [अस्वीकृत] उस [प्रवर्ग्य] को देवताओं ने [ताडनादि से] हिंसित किया । वह [प्रवर्ग्य देव विशेष से] बाधित होकर इन देवताओं के लिए प्रभावकारी नहीं हुआ अर्थात् अन्नवान् होकर अवस्थित न हो सका । तब देवताओं ने परस्पर विचार किया । इस प्रकार विशेष रूप से

---

१. 'हन्तेत्याभिमुख्ये'—इति षड्गुरुशिष्यः, 'हन्तेत्यन्तःकरणवृत्तेरभिप्रायस्य । सूचनम् एवमभिप्रायं कृतवन्त' इत्यर्थः—इति गोविन्दस्वामी ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

बाधित [प्रवर्ग्य हम लोगों का] पर्याप्त अन्न नहीं होगा। अतः इस [प्रवर्ग्य नामक] यज्ञ का हम लोग सम्यक् रूप से सम्पादन करें। ऐसा परस्पर स्वीकार करके उस [प्रवर्ग्य] को [साधन-सम्पादन के द्वारा] देवों ने सम्यक् रूप से पोषित किया।

अथ हविरादीनां साधनानां संपादनं विधत्ते—

**तं संभृत्योचुरश्विनाविमं भिषज्यतमित्यश्विनो वै देवानां भिषजावश्विनावध्वर्यू तस्मादध्वर्यू घर्मं संभरतः॥ इति।**

देवाः प्रवर्ग्यकर्मोपयुक्तं महावीरादिसंभारं संभृत्य स्वकीयावश्विनौ प्रत्येवमूचुः—हे अश्विनाविमं प्रवर्ग्यपुरुषदेहमस्माभिर्हिंसितं युवां भिषज्यतमौषधैरेतस्य समाधानं कुरुतमिति। देवानां मध्ये भिषजावेवाश्विनौ तस्मात्तत्प्रार्थनं युक्तम्। किंच। देवानां यज्ञकर्मण्यश्विनावध्वर्यू। अत एवान्यत्र कस्यचिन्मन्त्रस्य ब्राह्मणे पठ्यते—'अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्यू आस्ताम्'[1] इति। अतोऽपि कारणादश्विनोर्यज्ञसमाधानकारणं युक्तम्। तस्मात्कारणादध्वर्यू। उभाभ्यामश्विभ्यां यज्ञशरीरं चिकित्सितं तस्मादिदानीमप्यध्वर्यू घर्मं संभरतः प्रवर्ग्यसाधनं संपादयेताम्। तदेतत् तैत्तिरीया देवा वै सत्रमासतेत्यस्मिन्ननुवाके[2] प्रवर्ग्यविषयमुपाख्यानं प्रपञ्चयन्ति। तस्मिन्नाख्याने यज्ञस्य प्रवर्ग्यरूपं शिरो धनुषः कोट्या छिन्नमित्युक्त्वा पश्चादेतदाम्नायते—'तेनाथ शीर्ष्णा यज्ञेन यजमानानाशिषोऽवारुन्धत। न सुवर्गं लोकमभ्यजयन्। ते देवा अश्विनावब्रुवन्। भिषजौ वै स्थः। इदं यज्ञस्य शिरः प्रतिधत्तमिति। तावब्रूतां वरं वृणावहै। ग्रह एव नावत्रापि गृह्यतामिति। ताभ्यामेतमाश्विनमगृह्णन्। तावेतद्यज्ञस्य शिरः प्रत्यधत्ताम्। यत्प्रवर्ग्यस्तेन स शीर्ष्णा यज्ञेन यजमाना अवाऽऽशिषोऽरुन्धत। अभि सुवर्गं लोकमजयन्। यत्प्रवर्ग्यं प्रवृणक्ति। यज्ञस्यैव तच्छिरः प्रतिदधाति'[3] इति॥

[प्रवर्ग्य कर्म के उपयुक्त] उस [महावीरादिसंभार] को एकत्रित करके अश्विनों से देवताओं ने कहा—हे अश्विनों! इस [प्रवर्ग्य पुरुष के हिंसित देह] की चिकित्सा करो। अश्विन् देवताओं के वैद्य हैं [अतः यह प्रार्थना युक्त है]। अश्विन् देवों के अध्वर्यु हैं [अतः यज्ञ के समाधान में युक्त हैं]। इसलिए दो अध्वर्यु [एक अध्वर्यु और दूसरा प्रतिप्रस्थाता] घर्म [= प्रवर्ग्य-इष्टि के साधन] को एकत्रित कर देते हैं।

प्रवर्ग्यसाधनानि संपादितवतोस्तयोरनुज्ञापनमन्त्रं प्रैषमन्त्रं च विधत्ते—

**तं संभृत्याऽऽहतुर्ब्रह्मन् प्रवर्ग्येण[4] प्रचरिष्यामो होतरभिष्टुहीति॥ १८॥**

---

१. अश्विनोर्बाहुभ्यामिति मन्त्रस्तु तैत्तिरीयाम्नाये संहितायां (१.३.१.१) तस्य ब्राह्मणमपि तत्रैवाग्रे (२.६.४.१); ब्राह्मणग्रन्थेऽपि बहुत्र (३.२.२.१; ९.१); आरण्यकेऽपि च (५.२.५)। २. तै० आ० ५.१। ३. तै० आ० ५.१.५–७।
४. प्रवर्ग्यशब्दः कर्मविशेषवचनः, प्रवृज्यतेऽस्मिन् इति।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तं प्रवर्ग्यकर्मोपयुक्तं साधनसमूहं संभृत्य संपाद्य चतुर्णामध्वर्यूणां मध्येऽध्वर्युः प्रतिप्रस्थाता चेत्येतावुभावध्वर्यू ब्रह्माणं होतारं च प्रत्येवं ब्रूयाताम् । हे ब्रह्मन् वयमृत्विज सर्वे प्रवर्ग्याख्येण कर्मणा प्रचरिष्यामोऽनुष्ठास्यामः । सोऽयमनुज्ञापनमन्त्रः[1] । हे होतस्त्वमभिष्टुहि प्रवर्ग्यस्तुतिरूपाः सर्वा ऋचः पठ । सोऽयं प्रैषमन्त्रः[2] । इतिशब्दो मन्त्रद्वयसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेय ब्राह्मणभाष्यस्य चतुर्थाध्याये प्रथमः खण्डः ॥ १ ॥ [१८]

इसको इकट्ठा करके वे [दोनों अध्वर्यु] कहते हैं—हे ब्रह्मन् ! हम [सभी ऋत्विज] प्रवर्ग्य नामक कर्म से अनुष्ठान करना चाहते हैं । हे होता ! तुम प्रवर्ग्य स्तुति रूप ऋचाओं का पाठ करो ।

## अथ द्वितीयः खण्डः

होतुरभिष्टवार्थास्वृक्षु प्रथमामृचं विधत्ते—

**'ब्रह्मजज्ञानं प्रथमं पुरस्तादिति' प्रतिपद्यते ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनं तद्भिषज्यति ॥ इति ।**

प्रतिपद्यतेऽनेन मन्त्रेण होताऽभिष्टवं प्रारभत इत्यर्थः । अस्मिन् मन्त्रे ब्रह्मशब्देन देवानां मध्ये ब्राह्मणजातिरूपो बृहस्पतिरुच्यते । तस्मादनेन मन्त्रेणोपक्रमे सति ब्रह्मणैव ब्राह्मणजात्यैवैनं प्रवर्ग्यं तदा भिषज्यति चिकित्सते ॥

i. १९ [iv. २]—होता 'ब्रह्मजज्ञानं'[3] आदि मन्त्र से अभिष्टव का प्रारम्भ करता है । इस मन्त्र में 'ब्रह्म' शब्द से [देवताओं के मध्य ब्राह्मण जाति रूपी] बृहस्पति ही कहे गये हैं । अतः [इस मन्त्र के उपक्रम से ब्राह्मण जाति के द्वारा] ब्रह्मा से ही इस प्रवर्ग्य की चिकित्सा कराते हैं ।

द्वितीयामृचं विधत्ते—

**'इयं पित्रे राष्ट्र्येत्यग्र इति वाग्वै राष्ट्री वाचमेवास्मिस्तद्दधाति ॥ इति ।**

अस्मिन् मन्त्रे तृतीयान्तो राष्ट्रीशब्दो वाचं ब्रूते । तत्तेन मन्त्रपाठेनास्मिन् प्रवर्ग्ये वाचमेव संपादयति ॥

---

१. ऋ० खिल० ३.२२; यजु० १३.३; अथर्व० ४.१.१ ।
२.३. आश्व० श्रौ० ४.६.१ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'इयं पित्रे'[1] आदि का होता पाठ करता है। इस मन्त्र में तृतीयान्त 'राष्ट्री' शब्द से वाणी को ही कहा गया है। इस प्रकार मन्त्र-पाठ के द्वारा उस [प्रवर्ग्य] में वाणी का ही संपादन करता है।

तृतीयामृचं विधत्ते—

'महान्मही अस्तभाय द्विजात' इति ब्राह्मणस्पत्या ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनं तद्भिषज्यति ॥ इति ।

अस्य मन्त्रस्य चतुर्थपादे बृहस्पतिर्देवतेति श्रूयमाणत्वाद् बृहस्पतेश्च ब्राह्मणस्वामित्वादियमृग्ब्राह्मणस्पत्या ॥

'महान् मही'[2] आदि मन्त्र का पाठ करता है। यह ब्रह्मणस्पति-देवताक ऋचा है। ब्रह्म ही बृहस्पति है। ब्रह्मा के द्वारा ही इस [प्रवर्ग्य] की चिकित्सा कराते हैं।

चतुर्थीमृचं विधत्ते—

'अभि त्यं देवं सवितारमोण्योरिति' सावित्री प्राणो वै सविता प्राणमेवास्मिंस्तद्दधाति ॥ इति ।

सवितारमिति श्रुतत्वादियमृक्सावित्री। पठनीयेति शेषः। प्राणस्य देहेन्द्रियप्रेरकत्वात् सवितृत्वम्। तत्तेन मन्त्रेणास्मिन् प्रवर्ग्ये प्राणमेव संपादयति। ता एचाश्वतस्र ऋचः शाखान्तरगता आश्वलायनेन पठिता द्रष्टव्याः[3] ॥

'अभि त्यं'[4] आदि मन्त्र का पाठ करता है। यह सवितृ-देवताक मन्त्र है। प्राण ही सविता है। इस प्रकार उस [प्रवर्ग्य] में प्राण को ही रखता है।

पञ्चमीमृचं विधत्ते—

'सं सीदस्व महाँ असीत्येवैनं समसादयन्'॥ इति ।

अनेन[5] मन्त्रेणैनं प्रवर्ग्याख्यं महावीरं खरशब्दाभिधेये संतापनस्थाने समसादयन् स्थापयेयुरित्यर्थः[6] ॥

'सं सीदस्व' आदि मन्त्र के द्वारा वे इसे स्थापित करें।

---

१. तै० आ० ४. ४. १। २. तै० आ० ४. ४. २।

३. आश्व० श्रौ० ४. ६. ३. १-४।

४. यजु० ४:२५; आश्व० श्रौ० ४.६.१-४।

५. ऋ० १. ३६. ९।

६. सं सीदस्व महाँ असीति संसाद्यमाने—इति कल्पः (आश्व० श्रौ० ४. ६. ३.)।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

षष्ठीमृचं विधत्ते—

'अञ्जन्ति यं प्रथयन्तो न विप्रा' इत्यज्यमानायाभिरूपा यद्यज्ञेऽभिरूपं तत्समृद्धम् ॥ इति ।

अस्मिन् मन्त्रे[1] अञ्जन्तीति पदस्य श्रुतत्वादाज्येनाज्यमानाय महावीराख्याय पात्राय येयमृगभिरूपा भवति[2] ।

'अञ्जन्ति' आदि मन्त्र घी लगाने के लिए उपयुक्त हैं। क्योंकि इसमें 'अञ्जन्ति' पद आया है। जो यज्ञ की क्रिया के अनुरूप है वही यज्ञ की रूप-समृद्धि है।

सप्तमीमारभ्य द्वादशपर्यन्ताः षड्ऋचो विधत्ते—

'पतङ्गमक्तमसुरस्य मायया' 'यो नः सनुत्यो अभिदासदग्ने' 'भवा नो अग्ने सुमना उपेताविति द्वे द्वे अभिरूपे यद्यज्ञेऽभिरूपं तत्समृद्धम् ॥ इति ।

पतङ्गमिति संहितायामाम्नातयोर्द्वयोः[3] प्रतीके[4]। 'यो नः सनुत्य' इति द्वयोः[5] प्रतीके[6]। 'भवा नो अग्ने' इति द्वयोः[7]। [8]एतासां सर्वासामभिष्ट्रयमानार्थप्रतिपादकत्वादभिरूपत्वम् । तच्चात्रैतास्वृक्षु बुद्धिमता योजनीयम् ॥

'पतङ्गम्' आदि 'यो नः सनुत्यः' आदि और 'भवा नो अग्ने' आदि दो-दो ऋचाएँ अभिष्टव के अनुरूप हैं। जो यज्ञ की क्रिया के अनुरूप है वही यज्ञ की समृद्धि है।

त्रयोदशीमारभ्य सप्तदशीपर्यन्ताः पञ्चर्चो विधत्ते—

'कृणुष्व पाजः प्रसितिं न पृथ्वीमिति' पञ्च[9] राक्षोघ्न्यो रक्षसामपहत्यै ॥ इति ।

'कृणुष्व पाजः' आदि पाँच राक्षोघ्नी-ऋचाएँ राक्षसों को मारने के लिए हैं।

अष्टादशीमारभ्यैकविंशत्यन्ताश्चतस्र ऋचो विधत्ते—

परि त्वा गिर्वणो गिरोऽधि द्वयोरदधा उक्थ्यं वचः शुक्रं ते अन्यद्यजतं ते अन्यदपश्यं गोपामनिपद्यमानमिति चतस्र एकपातिन्यः ॥ इति ।

---

१. ऋ० ५. ४३. ७ ।
२. 'अञ्जन्ति यं प्रथयन्तो न विप्रा इत्यज्यमाने'—इति कल्पः ४. ६. ३ ।
३. ५. ७. 'पतङ्ग ०००. उपेताविति द्वृचाः'—इति कल्पः ४. ६. ३ ।
४. ऋ० १०. १७७. १, २ । ६. ऋ० ६. ५. ४, ५ ।
८. ऋ० ३. १८. १, २ । ९. ऋ० ४. ४. १-५ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एकस्य मन्त्रस्य पातः प्रतीकमेकपातः सोऽयं यास्वृक्षु ता एकपातिन्यः ।[1] 'परि त्वा गिर्वणः'[2] इति यत्प्रतीकं तत्संहितायां क्रमेणाऽऽम्नातानां चतसृणां प्रतीकमित्याशङ्कयेत चतस्र इति ब्राह्मणेऽभिधानात्, एवम् 'अधि द्वयोः'[3] 'शुक्रं ते'[4] 'अपश्यं गोपाम्'[5] इति त्रिषु प्रतीकेषु शङ्कोदियात्, तद्व्यावृत्त्यर्थमेकपातिन्य इत्युच्यते । एकैकस्या ऋचः प्रतीकान्येतानि मिलित्वा चतस्र इति तात्पर्यार्थः ॥

'परि त्वा गिर्वणः', 'अधि द्वयोः', 'शुक्रं ते' और 'अपश्यं गोपाम्' आदि चार एकपातिनी [एक मन्त्र के प्रतीक वाली] ऋचाएँ हैं ।

संख्यान्तरभ्रमव्युदासायोक्तमन्त्रगतां संख्यां प्रशंसति—

**ता एकविंशतिर्भवन्ति ॥ इति ।**

वे सब मिलकर इक्कीस हो जाती हैं ।

तां संख्यां प्रशंसति—

**एकविंशोऽयं पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविंशस्तमिममात्मानमेकविंशं संस्कुरुते ॥ १९ ॥ इति ।**

अयं पुरुषो मनुष्यदेहो जीवनोपेतः, एकविंशतिसंख्यानामवयवानां समूहरूपत्वादेकविंश इत्युच्यते । दश हस्त्या इत्यादिना तदेव स्पष्टी क्रियते । आत्मशब्देन मध्यदेहो जीवात्मा वाऽभिधीयते । संख्यासामान्यात्तैर्मन्त्रैरात्मानमेव संस्करोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेय ब्राह्मणभाष्यस्य चतुर्थाध्याये द्वितीयः खण्डः ॥ २ ॥ [१९]

यह [देहधारी] पुरुष भी इक्कीस [अवयवों] वाला है । दस हाथ की और दस पैर की अँगुलियाँ व आत्मा [मिलकर] इक्कीस हैं । इस प्रकार [तुल्य संख्या वाले वे मन्त्र] इक्कीस अंगों वाली आत्मा का ही संस्कार करते हैं ।

## अथ तृतीयः खण्डः

अथैकसूक्तगताः काश्चिदृचो विधत्ते—

**सक्वे द्रप्सस्य धमतः समस्वरन्निति नव पावमान्यो नव वै प्राणाः प्राणानेवास्मिंस्तद्दधाति ॥ इति ।**

---

१. 'एकैकस्मिन् प्रतीके एकैकोपाया इत्यर्थः' इति गोविन्दस्वामी ।
२. ऋ० १. १०. १२ ।
३. ऋ० १. ८३. ३ ।
४. ऋ० ६. ५८. १ ।
५. ऋ० १. १६४. ३१, १०. १७७. ३ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्मिन् 'स्रक्वे द्रप्सस्येति' सूक्ते[1] पवमानदेवताका ऋचो नवसंख्याका। अतः संख्यासाम्यात्तत्पाठेनास्मिन् प्रवर्ग्याभिमानिनि पुरुषे नवच्छिद्रवर्तिनः प्राणानवस्थापयति ॥

i. २०. [iv. ३] 'स्रक्वे द्रप्सस्य' आदि नव पवमान-देवताक ऋचाएँ [सोम के शोधन में विनियुक्त] हैं। प्राण भी नौ ही हैं। इन [ऋचाओं के पाठ] के द्वारा इस [प्रवर्ग्याभिमानी-पुरुष] में वह प्राणों को ही स्थापित करता है।

अथैकामृचं विधत्ते—

'अयं वेनश्चोदयत्पृश्निगर्भा'[2] इति ॥ इति।

'अयं वेनश्चोदयत् पृश्निगर्भा' इस ऋचा का पाठ करता है।

एतन्मन्त्रगतस्य वेनशब्दस्य नाभिपरत्वमभिप्रेत्य प्रशंसति—

**वेनोऽस्माद्वा ऊर्ध्वा अन्ये प्राणा वेनन्त्यवाञ्चोऽन्ये तस्माद्वेनः प्राणो वा अयं सन्नाभेरिति तस्मान्नाभिस्तन्नाभेर्नाभित्वं प्राणवास्मिंस्तद्दधाति ॥ इति।**

शरीरमध्येऽवस्थितं नाभिं हस्तेनाभिनीय प्रदर्शयन्नयं वै वेन इत्युच्यते। तस्य नाभेर्वेनत्वं कथमिति चेदुच्यते। अस्मान्नाभेरूर्ध्वा अन्ये प्राणाश्चक्षुरादयः केचित्प्राणविशेषा वेनन्ति चरन्ति। तथा नाभेरवाञ्चोऽपानवाय्वादयः केचिद्वेनन्ति चरन्ति। तस्माद्वेनन्त्यस्मादवधिभूतान्नाभेरिति व्युत्पत्त्या वेनशब्दवाच्यो नाभिः। नाभिशब्दवाच्यत्वं कथमिति चेत्तदुच्यते। अयं नाभिः प्राणाधारत्वेन स्वयं प्राणरूपः सन्नितरानूर्ध्ववर्तिनोऽधोवर्तिनश्च प्राणानुद्दिश्य प्रत्येकं नाभेर्नभैषीरित्येवं वदन्निव मर्यादारूपत्वेनावस्थितस्तस्मादयं देहमध्यवर्ती नाभिर्भवति। नैव भीतिं कुर्वित्यभिप्रेत्य मर्यादात्वेनावस्थानमेव नाभेर्नाभिशब्दप्रवृत्तिनिमित्तम्। तस्मादयं वेन इतिमन्त्रपाठेन प्राणमेवास्मिन् प्रवर्ग्ये स्थापयति ॥

[जब इस मन्त्र का पाठ किया जाता है तब 'अयं' शब्द से होता नाभि की ओर संकेत करता है। वेन शब्द नाभि के अभिप्रेत से प्रयुक्त है। क्योंकि] इस [नाभि] से चक्षु आदि कुछ प्राण [= इन्द्रियाँ] ऊपर की ओर हैं और कुछ नीचे की ओर हैं। इसीलिए वेन शब्द का अर्थ नाभि है और यह नाभि प्राण को धारण करने के कारण स्वयं प्राण रूप है। अतः इसे नाभि कहते हैं। यही नाभि का नाभित्व है। वस्तुतः ऐसा करके होता प्रवर्ग्य में प्राण को स्थापित करता है।

अथैकत्र समाम्नातमृग्द्वयमन्यत्र समाम्नातामेकामृचं विधाय सह प्रशंसति—

**'पवित्रं ते विततं ब्रह्मणस्पते' 'तपोष्पवित्रं विततं दिवस्पदे'[3] 'वियत्पवित्रं धिषणा अतन्वतेति' पूतवन्तः प्राणास्त इमेऽवाञ्चो रेतस्यो मूत्र्यः पुरीष्या इत्येतानेवास्मिंस्तद्दधाति ॥ २० ॥ इति।**

---

१. ऋ० ९. ७३। २. ऋ० १०. १२३. १। ३. ऋ० ९.८३. १, २।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अत्र वियत्पवित्रमित्येषा शाखान्तरगता सूत्रकारेण पठिता[1]। त्रिष्वप्येतेषु मन्त्रेषु शुद्धिवाचिनः पवित्रशब्दस्य विद्यमानत्वाद् एते पूतवन्तः। यज्ञपुरुषस्य प्राणस्थानीयाः पूर्वमुदाहृता [2]मन्त्रविशेषा यज्ञपुरुषस्य नाभेरूर्ध्वभाविप्राणस्थानीयाः पवित्रं ते विततमित्याद्यास्त्रयो मन्त्रा ये सन्ति त इमे नाभेरवाच्योऽधोदेशप्राणस्थानीयास्तेषु रेतसे हित एकः प्राणो[3], मूत्राय हितोऽपरः प्राणस्तयोरुभयोर्गोलकद्वारस्यैकत्वेऽपि स्वरूपेणेन्द्रियभेदात् पृथङ्निर्देशः। द्वारान्तरसंचारी पुरीषाय हितस्तृतीयः प्राण इत्युक्तानेतानेव त्रीन् प्राणान् मन्त्रत्रयपाठेनास्मिन् प्रवर्ग्ये स्थापयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेय-
ब्राह्मणभाष्यस्य चतुर्थाध्याये तृतीयः खण्डः ॥ ३ ॥ [२०]

'पवित्रं ते विततम्', 'तपोष्पवित्रं' और 'वियत्पवित्रं धिषणा' आदि तीन [ऋचाओं में शुद्धिवाचक पवित्र शब्द होने से ये] ऋचाएँ शुद्धि करने वाली हैं। यज्ञ पुरुष के प्राणस्थानीय ये मन्त्र नाभि के अधो भाग में स्थित वीर्य, मूत्र और पुरीष के हित के लिए हैं। वस्तुतः इन तीन प्राणों को ही इन मन्त्रों के पाठ के द्वारा इस प्रवर्ग्य में वह स्थापित करता है।

## अथ चतुर्थः खण्डः

अथ सूक्तविशेषा विधातव्याः। तत्रैकोनविंशत्यृचं सूक्तं विधत्ते—

'गणानां त्वा गणपतिं हवामहे'[4] इति ब्राह्मणस्पत्यं ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनं तद्भिषज्यति ॥ इति।

तस्मिन् सूक्ते[4] प्रथमाया ऋचस्तृतीयपादे 'ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत' इति श्रूयमाणत्वादिदं सूक्तं ब्रह्मणस्पतिदेवताकम्। ब्रह्म वा इत्यादिकं पूर्ववद्[5] व्याख्येयम्।

i. २१ [iv. ४] 'गणानां त्वा' आदि सूक्त [की प्रथम ऋचा में 'ब्रह्मणस्पति' शब्द होने से] ब्रह्मणस्पति-देवताक है। ब्रह्म शब्द से [देवताओं के मध्य ब्राह्मणजाति-रूपी बृहस्पति यहाँ कहे गये हैं। [अतः इस मन्त्र के उपक्रम से] ब्रह्मा के द्वारा ही उस [प्रवर्ग्य] की चिकित्सा की जाती है।

---

१. आश्व० श्रौ० ४. ६. ३।
२. द्र० इतः पूर्वम्, पृ० १२३।
३. (रेतस्यः) 'तस्मै हितम्'—इति पा० सू० ५.१.५।
४. ऋ० २.२३।
५. द्र० इतः पूर्वम्, पृ० ११९।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तृचात्मकं सूक्तान्तरं विधत्ते—

**प्रथश्च यस्य सप्रथश्च नामेति घर्मतन्वः सतनुमेवैनं तत्सरूपं करोति ॥ इति ।**

अस्मिन् सूक्ते[1] पठिताः प्रथश्चेत्यादयस्तिस्र ऋचो घर्मतन्वः प्रवर्ग्यस्य शरीरस्थानीयास्तन्मन्त्रपाठेनैनं प्रवर्ग्यं सतनुं शरीरोपेतं करोति । सतनुमित्यस्यैव व्याख्यानं सरूपमिति । यद्वा तस्मिञ्शरीरे शोभनरूपसहितं प्रवर्ग्यं करोति ॥

**'प्रथश्च यस्य' आदि तृच घर्मतनु [ = प्रवर्ग्य का वर्तन = कड़ाही] है । इस तृच के पाठ के द्वारा होता प्रवर्ग्य को शरीर युक्त (अथवा रूपवान्) बनाता है ।**

अस्मिन् सूक्ते प्रथमाद्वितीययोर्ऋचोर्यौ चतुर्थौ पादौ तावनूद्य प्रशंसति—

**रथन्तरमाजभारा वसिष्ठः । भरद्वाजो बृहदाचक्रे अग्नेरिति बृहद्रथन्तरवन्तमेवैनं तत्करोति ॥ इति ।**

सामद्वयवाचिरथन्तरशब्दबृहच्छब्दयोरत्र श्रूयमाणत्वात् तत्पाठेन प्रवर्ग्यं सामद्वयोपेतं करोति[2] ।

**उपर्युक्त सूक्त के प्रथम ऋचा के चौथे पाद में 'रथन्तर' शब्द और द्वितीय ऋचा के चौथे पाद में 'बृहद्' शब्द होने के कारण इस तृच का पाठ करके होता प्रवर्ग्य को 'रथन्तर-साम' और 'बृहद्-साम' से युक्त करता है । [वस्तुतः रथन्तर साम के ऋषि वसिष्ठ हैं (ऋ० ७.३२.२२) और बृहद् साम के ऋषि भरद्वाज हैं (ऋ० ६.४६.१)] ।**

तृचान्तरं सूक्तात्मकं विधत्ते—

**'अपश्यं त्वा मनसा चेकितानमिति' प्रजावान् प्राजापत्यः प्रजामेवास्मिंस्तद्धाति ॥ इति ।**

एतत्सूक्तगतानां तिसृणामृचां[3] पृथग्विनियोगम् आश्वलायन आह—'अपश्यं त्वेत्येतस्याऽऽद्यया यजमानमीक्षते द्वितीयया पत्नीं तृतीययाऽऽत्मानम्'[4] इति । अस्य च सूक्तस्य ऋषिः प्रजावानित्येतन्नामकः । स च प्रजापतेः पुत्रः । तदीयपाठेन प्रजां संपादयति ॥

**प्रजापति के पुत्र प्रजावान् ऋषि द्वारा दृष्ट 'अपश्यं त्वा' आदि तृच का पाठ करके होता इस [प्रवर्ग्य] में प्रजा का सम्पादन करता है ।**

---

१. ऋ० १०.१८१ ।

२. तच्च सामद्वयं सामगानामारण्यके २.१.२१; १.१.२७ । तयोर्योन्यृचौ तु छ० आ० ३.१.५.१,२ । तयोर्विधायकवचनानि च ता० ब्रा० ७.६.६,५ ।

३. ऋ० १०.१८३.१–३ ।

४. आश्व०श्रौ० ४.६.३ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सूक्तान्तरे नवसंख्या ऋचो विधत्ते—

**का राधद्धोत्राऽऽश्विना वामिति नव विच्छन्दसस्तदेतद्यज्ञस्यान्तस्त्यं विक्षुद्रमिव वा अन्तस्त्यमणीय इव च स्थवीय इव च तस्मादेता विच्छन्दसो भवन्ति ॥ इति ।**

'का राधद्' इत्यस्मिन् सूक्ते[1] विद्यमाना ऋचो नवसंख्याकाः । ताश्च विविधेन च्छन्दसा युक्ताः । तच्च विविधत्वम् अनुक्रमणिकायाम् उक्तम्--'आद्या गायत्री द्वितीया ककुप्तृतीया-चतुर्थ्यौ काविराण्नष्टरूप्यौ पञ्चमी तनुशिरा[2] षष्ठ्यक्षरैरुष्णिग्[3] विष्टारबृहती कृतिर्विराट्[4] तिस्रो गायत्र्यः'[5] इति । यद्यप्येतद् द्वादशर्चं सूक्तं तथाऽपि नवैवर्चोऽत्रापेक्षिता इति नवे-त्युक्तम् । तदेतत्सूक्तं प्रवर्ग्याख्यस्य यज्ञस्यान्तस्त्यमुदरगतावयवस्वरूपम् । लोकेऽप्यन्तस्त्यं शरीरमध्यस्थावयवजातम् । विक्षुद्रमिव वै विविधत्वेन तारतम्येन स्वल्पमेव भवति । तद्यथा—किंचिन्मांसनाड्यादिकमणीय इव च, अत्यन्तं सूक्ष्ममेव भवति । अन्यच्च मांस-नाड्यादिकं स्थवीय इव च, अत्यन्तं स्थूलमेव भवति । यस्मादुदरगतमवयवजातमीदृशं तस्मात्तत्स्थानीया एता ऋचो विच्छन्दसो भवन्ति ॥

'का राधद्' आदि सूक्त की नौ ऋचाएँ विविध छन्दों वाली हैं । [भिन्न-भिन्न छन्दों के मन्त्र यहाँ इसलिए विनियुक्त हैं] क्योंकि इस [प्रवर्ग्याख्य] यज्ञ रूपी शरीर के उदर के अवयव [ = अन्तस्त्यम्] भिन्न-भिन्न परिमाण के, कोई छोटे, कोई बड़े होते हैं । जैसे लोक में शरीरावयव कोई मोटा, कोई पतला होता है । इसीलिए ये ऋचाएँ भिन्न-भिन्न छन्द वाली होती हैं ।

उत्तमलोकप्राप्तिहेतुत्वेन ता ऋचः प्रशंसति—

**एताभिर्हाश्विनोः कक्षीवान्प्रियं धामोपागच्छत् स परमं लोकमजयत ॥ इति ।**

---

१. ऋ० १.१२० ।

२. 'प्रथमं छन्दस्त्रिपदा गायत्री'—इति (१.६) । 'मध्यमश्चेत् ककुप्'—इति (३.२) नवकयोर्मध्ये जागतः काविराट्'—इति (४.५), 'नव वैराजत्रयोदशैर्नष्टरूपी' इति (४.६), 'एकादशिनोः परः षट्कस्तनुशिरा'—इति (३.३) च कात्यायनीयऋक्-सर्वानुक्रमण्यां परिभाषा खण्डे द्रष्टव्यः ।

३. षष्ठी-ऋक् यद्यपि पादसङ्ख्ययोष्णिक् न भवति, तथाप्यक्षरसङ्ख्ययोष्णिगित्यर्थः ।

४. 'अष्टिनोर्मध्ये दशकौ विष्टारबृहती'—इति (५.५), 'जागतावष्टकश्च कृतिः'—इति (४.३), 'दशकास्त्रयो विराडैकादशका वा'—इति (४.७) च, ऋक्सर्वा० ।

५. दशम्याद्यास्तिस्रो गायत्र्यः; परं नेह विनियोज्याः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कक्षीवानित्येतन्नामकः कश्चिदृषिः । स च 'का राधद्' इत्येताभिर्ऋग्भिर्जयं कृत्वा अश्विनोर्यत्प्रियं धाम स्थानं तत् प्राप्नोत् । ततस्ताभ्यामनुगृहीतस्ततोऽप्युत्तमं लोकं जितवान् ।।

इन्हीं ऋचाओं के द्वारा कक्षीवान् ऋषि ने अश्विनों के प्रिय धाम को प्राप्त कर लिया और उन्होंने परम लोक को जीत लिया।

एतद्वेदनं प्रशंसति—

उपाश्विनोः प्रियं धाम गच्छति जयति परमं लोकं य एवं वेद ।। इति ।

जो इस प्रकार जानता है वह अश्विनों के प्रिय धाम को प्राप्त कर लेता है और परमलोक को जीत लेता है।

पञ्चर्चं सूक्तान्तरं विधत्ते—

'आभात्यग्निरुषसामनीकमिति' सूक्तम्[1] ।। इति ।

अभिष्टवार्थं पठेदिति सर्वत्र द्रष्टव्यम् ।।

[अभिष्टव के लिए] 'आभात्यग्निः' आदि सूक्त का पाठ करता है।

प्रथमाया ऋचश्चतुर्थपादं पठित्वा तन्मुखेन सूक्तं प्रशंसति—

पीपिवांसमश्विना घर्ममच्छेत्यभिरूपं यद्यज्ञेऽभिरूपं तत्समृद्धम् ।। इति ।

हे अश्विनौ पीपिवांसमभिप्रवृद्धं घर्ममच्छं प्रवर्ग्यमभिलक्ष्येत्येवमस्मिन् पादेऽवगम्यते । एतत्सूक्तं प्रवर्ग्यस्यानुरूपम् ।।

इस सूक्त की प्रथम ऋचा का 'पीपिवांसमश्विना घर्ममच्छ' यह चतुर्थ पाद [कर्म के] अनुरूप है, [क्योंकि इसमें 'घर्म' शब्द जो प्रवर्ग्य पात्र का नाम है, श्रुत है] जो यज्ञ के अनुरूप है वही उस [यज्ञ] की समृद्धि [=सफलता] है।

सूक्तगतं छन्दः प्रशंसति—

तदु त्रैष्टुभं वीर्यं वै त्रिष्टुब्वीर्यमेवास्मिंस्तद्दधाति ।। इति ।

तदु तच्च सूक्तम् ।।

यह सूक्त त्रिष्टुप् छन्दस्क है, त्रिष्टुप् वीर्य [=शक्ति] है। इस प्रकार वह शक्ति को इस [प्रवर्ग्य पुरुष] में स्थापित करता है।

अष्टर्चं सूक्तान्तरं विधत्ते—

'ग्रावाणेव तदिदर्थं जरेथे' इति सूक्तमक्षी इव कर्णाविव नासेवेत्यङ्गसमाख्यायमेवास्मिंस्तदिन्द्रियाणि दधाति ।। इति ।

---

१. ऋ० ५.७६.१–५ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्य सूक्तस्य[1] पञ्चम्यामृचि द्वितीयपाद एवमाम्नातः—'अक्षी इव चक्षुषा यातमर्वाक्' इति । षष्ठ्यामृच्युत्तरार्धमेवमाम्नातम्—'नासेव नस्तन्वो रक्षितारा कर्णाविव सुश्रुता भूतमस्मे' इति एवं च सत्यङ्गसमाख्याऽयमेवाक्षिकर्णनासादिरूपाण्यङ्गानि पुनः पुनः कथयन्नेव तस्मिन् घर्मं इन्द्रियाणि स्थापयति ॥

'ग्रावाणेव' आदि सूक्त [की पाँचवी ऋचा] में 'अक्षी इव' आँख की तरह, [छठवीं ऋचा में] 'कर्णाविव' कान की तरह और 'नासेव' नाक की तरह—इस प्रकार अङ्गों के समाख्यान के द्वारा इन [अङ्गों] को पुनः पुनः कहते हुए उस घर्म में इन्द्रियों को स्थापित करता है।

सूक्तगतं छन्दः प्रशंसति—

तदु त्रैष्टुभं वीर्यं वै त्रिष्टुब्वीर्यमेवास्मिंस्तद्दधाति ॥ इति ।

यह सूक्त त्रिष्टुप् छन्दस्क है, त्रिष्टुप् ही शक्ति है; और इस प्रकार वह शक्ति को इस [प्रवर्ग्य पुरुष] में स्थापित करता है।

पञ्चविंशत्यृचं सूक्तान्तरं विधत्ते—

'ईळे द्यावापृथिवी पूर्वचित्तये' इति सूक्तम्[2] ॥ इति ।

'ईळे द्यावापृथिवी' आदि सूक्त का पाठ करता है।

प्रथमाया ऋचो द्वितीयपादमुदाहृत्य तद्द्वारा सूक्तं प्रशंसति—

अग्निं घर्मं सुरुचं यामन्निष्टय इत्यभिरूपं यद्यज्ञेऽभिरूपं तत्समृद्धम् ॥ इति ।

अग्निमित्यादिके द्वितीयपादे सुरुचं घर्ममिति शोभनदीप्तियुक्तः प्रवर्ग्यः पठितस्तस्मादिदं सूक्तमनुरूपम् ॥

'अग्निं घर्मं सुरुचं यामन्निष्टये' इस पाद में 'सुरुचं घर्मं' अर्थात् 'प्रवर्ग्य शोभन दीप्ति युक्त है' यह श्रुत होने से यज्ञ के अनुरूप है। जो यज्ञ के अनुरूप है वही उस यज्ञ की समृद्धि है।

तत्सूक्तगतं छन्दः प्रशंसति—

तदु जागतं जागता वै पशवः पशूनेवास्मिंस्तद्दधाति ॥ इति ।

पुरा कदाचित्सोममाहर्तुं द्युलोके गता जगती तमाहर्तुमशक्ता सती पशून् दीक्षां चाऽऽहृतवती तस्मात् पशवो जागता । एतच्च कद्रूश्चेत्यनुवाके तैत्तिरीयैः समाम्नातम्—'सा पशुभिश्च दीक्षया चाऽऽगच्छत्तस्माज्जगती छन्दसां पशव्यतमा'[3] इति । अतस्तदीयपाठेन पशून् संपादयति ॥

---

१. ऋ० २.३९.१–८। २. ऋ० १.११२.१–२५। ३. तै० सं० ६.१.६.२।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यह सूक्त जगती छन्दस्क है। पशु भी जगती के समान प्रकृति के होते हैं इस प्रकार वह इस प्रवर्ग्य पुरुष में पशुओं को सम्पादित करता है।

सूक्तगतास्वृक्षु सर्वासु विद्यमानमर्थमुपजीव्य सूक्तं प्रशंसति—

याभिरमुमावतं याभिरमुमावतमित्येतावतो ह्यत्राश्विनौ कामान् ददृशतुस्तानेवास्मिंस्तद्दधाति तैरेवैनं तत्समर्धयति ॥ इति।

अस्य सूक्तस्य प्रथमायामृचि द्वितीयार्धमेवमाम्नातम्—'याभिर्भरे कारमंशाय जिन्वथस्ताभिरू षु ऊतिभिरश्विनाऽऽगतम्' इति। तस्यायमर्थः—हे अश्विनौ युवामंशाय तन्नाम्नः पुरुषस्योपकाराय भरे युद्धे कारं विजयं कृत्वा याभिरूतिभिः पालनैरंशनामकं तं पुरुषं जिन्वथः प्रीणयथस्ताभिरू षु तादृशीभिरेवोतिभिः पालनैरागतमिह कर्मणि समागच्छतमिति। द्वितीयस्यामृचि द्वितीयार्द्धमेवमाम्नातम्—'याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु ऊतिभिरश्विनाऽऽगतम्' इति'। तस्यायमर्थः—हे अश्विनाविष्टयेऽभीष्टसिद्धयर्थं कर्मण्यनुष्ठीयमाने लौकिके वैदिके वा सर्वस्मिन् कर्मणि याभिरूतिभिर्धियः प्राणिनां बुद्धीरवथो रक्षथस्ताभिरेवोतिभिरागच्छतमिति। एवं सर्वास्वप्यृक्ष्वर्थोऽनुसंधेयः। तमर्थं सर्वं सामान्यवाचिना सर्वनामशब्देन परामृश्य श्रुतिर्याभिरित्येकेन वाक्येन संगृह्णाति याभिरूतिभिरमुमीदृशमावतं युवां रक्षितवन्ताविति। सर्वेषामृगर्थानां संग्राहिकां वीप्सामभिप्रेत्य याभिरमुमावतमिति द्विः पठ्यते। तास्वृक्षु यावन्तः कामाः श्रूयन्ते तावन्तः कामा इह कर्मण्यश्विनौ ददृशतुः कटाक्षेणानुगृहीतवन्तौ। तत्सूक्तपाठेन तानेव सर्वान् कामानस्मिन् प्रवर्ग्ये यजमाने वा संपादयति ते च कामाः समृद्धाः संपद्यन्ते ॥

'जिन रक्षाओं के द्वारा तुम दोनों ने उसको रक्षित किया' 'जिन रक्षाओं···रक्षित किया' इस प्रकार सभी ऋचाओं में जो कहा गया है उसमें जितनी आशंसा व्यक्त की गई है उतनी कामनाएँ इस कर्म में अश्विद्वय देवें। इस प्रकार इस सूक्त के पाठ के द्वारा उतनी कामनाओं को इस प्रवर्ग्य में सम्पादित करता है। इस प्रकार इन्हीं मन्त्रों के द्वारा वह उस [प्रवर्ग्य] को समृद्ध करता है।

अन्यां कांचिदृचं विधत्ते—

'अरूरुचद् उषसः पृश्निरग्रिय' इति रुचितवती; रुचमेवास्मिंस्तद्दधाति[1] ॥ इति।

अस्यामृच्यरूरुचदिति श्रुतत्वाद् रुचितमभीष्टं कान्तिर्वाऽस्यामस्तीत्यसौ रुचितवती सा पठनीया। तस्याः पूर्वोक्तसूक्ते[2] स्थानविशेष आश्वलायनेन दर्शितः—'प्रागुत्तमाया[3] अरू-

१. ऋ० ९.८३.३।
२. 'तस्याः' अरूरुचदित्येतस्याः, 'पूर्वोक्तसूक्ते' ईळेद्यावेति सूक्ते (१२८ पृ०)।
३. 'उत्तमायाः' पञ्चविंशतितमायाः अन्तिमायाः 'प्राक्' पूर्वम्; चतुर्विंशतितमाया ऊर्ध्वमिति यावत्। 'द्युभिरक्तुभिः'—इत्येषैव ऋक् ईळेद्यावेतिसूक्तस्यान्त्या।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रुचदुषसः पृश्निरग्रिय इत्यावपेतोत्तरेणार्धर्चेन पत्नीमीक्षेत'[1] इति । तन्मन्त्रपाठेन यजमाने कान्ति संपादयति ॥

[दीप्त्यर्थक 'रुच्' धातु से निष्पन्न 'अरूरुचत्' शब्द के इसमें प्रयुक्त होने से] रुचितवती [=कान्तिमती] 'अरूरुचदुषसः' इत्यादि ऋचा का पाठ करना चाहिए। इस प्रकार वह इस [प्रवर्ग्य-पुरुष] में कान्ति स्थापित करता है।

सूक्तस्यान्तिमयर्चाऽभिष्टवे पूर्वभागस्य समापनं विधत्ते—

'द्युभिरक्तुभिः परि पातमस्मानित्युत्तमया परिदधाति ॥ इति ।

पचीसवें सूक्त की अन्तिम ऋचा 'द्युभिरक्तुभिः' आदि से कर्म की समाप्ति करनी चाहिए।

तस्या ऋचोऽवशिष्टं पादत्रयमनूद्य कृत्स्नं मन्त्रतात्पर्यं दर्शयति—

'अरिष्टेभिरश्विना सौभगेभिः। तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौरित्येतैरेवैनं तत्कामैः समर्धयति ॥ इति ।

तस्या ऋचोऽयमर्थः—हे अश्विनौ द्युभिर्दीप्तिभिर्द्युलोकोचितभोगैर्वाऽक्तुभिरञ्जनसाधनद्रव्यैराज्यतैलादिभिररिष्टेभिर्हिंसापरिहारैः सौभगेभिः सर्वभोगसंपत्तिलक्षणैः सौभाग्यैश्चास्मान् पातं रक्षतम्। तत्तथा सत्यनन्तरं नोऽस्मान् मित्रावरुणादितिसमुद्रपृथिवीद्युदेवताः सर्वा अपि ममहन्तामतिशयेन पूजयन्त्विति। तन्मन्त्रपाठेनैनं यजमानमेतैरेव कामैर्द्युभिरक्तुभिरित्यादिशब्दोक्तैः फलैः समृद्धं करोति ॥

'हे अश्विनो! दीप्ति से अथवा द्युलोकोचित भोगों के द्वारा और रञ्जन के साधन घृत तैल आदि द्रव्यों से, हिंसापरिहारों के द्वारा और सौभाग्यों से मेरी रक्षा करो। तदनन्तर मित्र, वरुण, अदिति, समुद्र, पृथिवी एवं द्यु आदि सभी देवता मेरी उस प्रार्थना के अनुकूल होवें।' इस ऋचा के पाठ से यह [यजमान] इन ['द्युभिरक्तुभिः' आदि शब्दों] से अभिव्यक्त फलों के द्वारा इस प्रवर्ग्य को समृद्ध करता है।

अभिष्टवस्य[2] पूर्वभागमुपसंहरति—

इति नु पूर्वं पटलम् ॥ २१ ॥

---

१. आश्व० श्रौ० ४.६.३ ।

२. अभिष्टवनं नाम घर्मस्य संस्कारोऽभिधानरूपः। एतच्च 'घर्ममभिष्टुहि' इति सम्प्रैषादवगतम्। तत्र यत् क्रियान्तरमीक्षमाणादि तदानुषङ्गिकम्, तदपि वचनात् कर्तव्यमेव'—इति आश्वलायनवृत्तौ नारायणः। एतदभिष्टवनं च अध्वर्युप्रेषितेन होत्रा ऋगावानं यथास्यात्तथा कर्तव्यं भवति (आश्व० श्रौ० ४.६.१-३)। 'ऋचमृचमनवानमुक्त्वा प्रणुत्यावस्येत्'—इति च तत्रैव ऋगावानलक्षणम् (४.६.२)।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ब्रह्मजज्ञानमित्यारभ्य[1] पृथिवी उत द्यौरित्यन्तेनोक्तप्रकारेणाभिष्टवस्य पूर्वो भागो वर्णितः[2]। अत्र भागद्वयकल्पनमेकैकस्मिन् भागे प्रथमोत्तमयोर्ऋचोरावृत्त्यर्थम्।

अत एवोक्तम्—

"आद्यान्त्यात्रित्वसिद्ध्यर्थं पटलद्वितयं कृतम्।
अन्यथाऽभिष्टवस्यैक्यात् त्रित्वं तत्रैव वै भवेत्" ॥[3] इति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेय-ब्राह्मणभाष्ये चतुर्थाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥ [२१]

अब ['ब्रह्मजज्ञानम्' से लेकर 'पृथिवी उत' तक] अभिष्टव के पूर्व भाग के वर्णन की समाप्ति है। [यहाँ पूर्व और उत्तर भाग की कल्पना इसलिए है क्योंकि एक-एक भाग के प्रथम और अन्तिम मन्त्र की आवृत्ति की जाती है। पूर्व भाग में कुल मन्त्रों की संख्या १०७ है।][4]

॥ इस प्रकार चतुर्थ अध्याय में चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

पटलान्तरं प्रतिजानीते—

**अथोत्तरम्**[5] ॥ इति।

पटलमुच्यत इति शेषः। पटलशब्दः समूहवाची। 'समूहः पटलं न ना' इत्यभिधान-कारैरुक्तत्वात्[6]। उत्तरभागस्थो मन्त्रसमूहः कथ्यते इत्यर्थः।

i. २२ [iv. ५] अब [प्रवर्ग्य कर्म के] उत्तर भाग [में कथित मन्त्र समूह] का वर्णन प्रारम्भ होता है—

---

१. द्र० इतः पूर्वम्, पृ० ११९।
२. आश्वलायनोऽप्याह—'इति नु पूर्वं पटलम्'—इति ४.६.३।
३. ऋक्प्राति० ४.७; ६.४।
४. तु० अस्यैव ब्राह्मणभागस्य षड्गुरुशिष्यकृता व्याख्या—'ब्रह्मादिद्युभिरन्ताः स्युर्ऋचः सप्तोत्तरं शतम्।'
५. आश्वलायनोऽप्येवमेवाह 'अथोत्तरम्'—इति। अत्रापि ऋगावानं प्रयोजनीयम्; अपि च 'अनभिहिङ्कृत्य' (४.७.३) इत्यधिकम्।
६. अमरकोष ३.३.२०१।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्रैकविंशतिसंख्याका ऋचस्तत्तत्प्रतीकग्रहणेन विधत्ते—

**'उप ह्वये सुदुघां धेनुमेतां' हिं कृण्वती वसुपत्नी वसूनाम् 'अभि त्वा देव सवितः' 'समी वत्सं न मातृभिः 'सं वत्स इव मातृभिः' 'यस्ते स्तनः शशयो यो मयोभूः' 'गौरमीमेदनु वत्सं मिषन्तं' 'नमसेदुप सीदत' 'संजानाना उपसीदन्नभिज्ञु,' 'आ दशभिर्विवस्वतः' 'दुहन्ति सप्तैकां' 'समिद्धो अग्निरश्विना' 'समिद्धो अग्निर्वृषणा रतिर्दिवः' 'तदु प्रयक्षतममस्य कर्म' 'आत्मन्वन्नभो दुह्यते घृतं पय' 'उत्तिष्ठ ब्रह्मणस्पते' 'अधुक्षत्पिप्युषीमिषम्' 'उप द्रव पयसा गोधुगोषमा' 'आ सुते सिञ्चत श्रियम्' 'आ नूनमश्विनोर्ऋषिः' 'समु त्ये महतीरपः' इत्येकविंशतिरभिरूपा यद्यज्ञेऽभिरूपं तत्समृद्धम् ॥ इति ।**

विहितास्वृक्षु, 'उप ह्वये'[1] इति प्रथमा । 'हिं कृण्वति' इति द्वितीया । 'अभि त्वा'[3] इति तृतीया । 'समीवत्सम्' इति[4] चतुर्थी । 'संवत्स इव' इति[5] पञ्चमी । 'यस्ते स्तन'[6] इति षष्ठी । 'गौरमीमेद्' इति[7] सप्तमी । 'नमसेत्'[8] इत्यष्टमी । 'संजानानाः'[9] इति नवमी । 'आ दशभिः'[10] इति दशमी । 'दुहन्ति सप्तैकाम्'[11] इत्येकादशी । 'समिद्धो अग्निरश्विना'[12] इति द्वादशी । 'समिद्धो अग्निर्वृषणारतिर्दिव'[13] इति त्रयोदशी । एतदुभयं शाखान्तरगतम् आश्वलायनेन पठितम्[1-] । 'तदु प्रयक्षतम्' इति[14] चतुर्दशी । 'आत्मन्वन्निति'[15] पञ्चदशी । उत्तिष्ठेति[16] षोडशी । तस्या विनियोगम् आश्वलायन आह— "उत्तिष्ठ ब्रह्मणस्पते इत्येतामुक्त्वाऽवतिष्ठते"[17] इति । अधुक्षदिति[18] सप्तदशी । तद्विनियोगमाह—दुग्धायामधुक्षदिति । उपद्रवेत्यष्टादशी[19] । तद्विनियोगं चाऽऽह— आह्रियमाण उपद्रवेति । सेयं शाखान्तरगतत्वा आश्वलायनेन पठिता[20] । 'आ सुते'[21] इत्येकोनविंशी । आ नूनमिति[22] विंशी । अनयोर्व्यत्ययेन प्रयोगमाह—"आसिच्यमान आनूनमश्विनोर्ऋषिरिति गव्य आ सुते सिञ्चत श्रियमित्याज"[23] इति । 'समु त्ये'[24] इत्येकविंशी । तद्विनियोगं चाऽऽह—"आसिक्तयोः समु त्ये"[25] इति सेयमृचामेकविंशतिघर्मदुहो धेनोर्दोहनस्यानुरूपा । तास्वृक्षु दोहनोचितानां दृश्यमानत्वात् ॥

---

१ ऋ० १.१६४.२६ । २. ऋ० १ १६४.२७ । ३ ऋ० १ २४.३ ।
४. ऋ० ९.१०४.२ । ५. ऋ० ९.१०५.२ । ६. ऋ० १.१६४.४९ ।
७. ऋ० १.१६४.२८ । ८. ऋ० ९.११.६ । ९. ऋ० १.७२.५ ।
१०. ऋ० ८.७२.८ । ११ ऋ० ८.७२.७ । १२. अथर्व० ७.७७.२,१ ।
१३ आश्व०श्रौ० ४.७.४ । १४. ऋ० १.६२.६ । १५. ऋ० ९.७४.४ ।
१६. ऋ० १.४० १ । १७. आश्व०श्रौ० ४ ७.४ । १८. ऋ० ८ ७२ १६ ।
१९. अथर्व० ७.७७ ६ । २०. आश्व०श्रौ० ४ ७.४ । २१. ऋ० ८.७२.१३ ।
२२. ऋ० ८.९.७ । २३. आश्व० श्रौ० ४.७.४ ।
२४. ऋ० ८.७.२२ । २५. आश्व० श्रौ० ४.७.४ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

१. 'उप ह्वये', २. 'हिङ् कृण्वती', ३. 'अभि त्वा', ४. 'समीवत्सं', ५. 'संवत्स इव', ६. 'यस्ते स्तनः', ७. गौरमीमेदनु', ८. 'नमसेदुप', ९. 'संजानानाः', १०. 'आ दशभिः', ११. 'दुहन्ति', १२. 'समिद्धो अग्निरश्विना', १३. 'समिद्धो अग्निर्वृषणाः', १४. 'तदु प्रयक्षतं', १५. 'आत्मन्वन्', १६. 'उत्तिष्ठ ब्रह्मणस्पते', १७. 'अधुक्षत्', १८. 'उप द्रव', १९. 'आ सुते', २०. 'आ नूनं' और २१. 'समु त्ये'—ये इक्कीस ऋचाएँ यज्ञ के अनुरूप हैं। जो यज्ञ के अनुरूप है वही यज्ञ की समृद्धि है।

अथ षण्णामृचां प्रतीकानि क्रमेणाऽऽदाय तद्विनियोगं दर्शयति—

**'उदुष्य देवः सविता हिरण्ययेत्यनूत्तिष्ठति, 'प्रैतु ब्रह्मणस्पतिरित्यनुप्रैति, 'गन्धर्व इत्था पदमस्य रक्षतीति[1] खरमवेक्षते, 'नाके सुपर्णमुपयत्पतन्तमित्युपविशति[2] 'तप्तो वां घर्मो न क्षतिः स्वहोता' 'उभा पिबतमश्विनेति पूर्वाह्णे यजति ॥ इति।**

महावीरमादायोत्तिष्ठत्स्वन्येषु[3] होतोदुष्य देवः[4] इत्यनेन मन्त्रेणताननूत्तिष्ठेत्। तेषु गच्छत्सु 'प्रैतु ब्रह्मणस्पतिः'[5] इति मन्त्रेणानुगच्छेत्। 'खरः' प्रवृञ्जनस्थानम्। तप्तो वामित्येषा[6] शाखान्तरगतत्वात् सूत्रकारेण पठिता[7]। उभा पिबतमिति[8] स्वशाखागतौ ताभ्यामुभाभ्यां पूर्वाह्णे यजति। तदुभयं याज्यारूपेण पाठेन पठेत्। प्रवर्ग्यस्य कालद्वयेऽप्यनुष्ठेयत्वात् पूर्वाह्ण इति विशेष्यते॥

होता सभी [पुरोहितों] के पीछे खड़े होकर 'उदु ष्य देवः' आदि ऋचा का पाठ करता है, और आगे बढ़कर 'प्रैतु ब्रह्मणस्पतिः' आदि मन्त्र का पाठ करता है, तथा 'खर' [=प्रवर्ग्यपात्र रखने के चबूतरे] की ओर देखते हुए 'गन्धर्व इत्था' आदि का पाठ करता है और 'नाके सुपर्णम्' आदि मन्त्र पढ़कर बैठ जाता है। 'तप्तो वाम्' और 'उभा पिबतम्' आदि मन्त्र से पूर्वाह्ण में आहुतियाँ देता है।

विनियोगसहितं मन्त्रान्तर विधत्ते—

**अग्ने वीहीत्यनुवषट्करोति स्विष्टकृद्भाजनम् ॥ इति।**

पूर्वोक्तयोर्याज्ययोः पाठान्ते वौषडिति यदुच्चारणं सोऽयं प्रथमो वषट्कारः। तत ऊर्ध्वमग्ने वीहीत्युच्चार्य वौषडिति यत्पठनं सोऽयमनुवषट्कारः। एतं मन्त्रं

---

१. ऋ० ९. ८३. ४। २. ऋ० १०. १२३. ६।
३ तथैव सूत्रकारस्य विधानात् (आश्व० श्रौ० ४.७.४)। ४. ऋ० ६.७१.४.।
५. ऋ० १. ४०. ३। ६. अथर्व० ७. ७७. ५।
७. आश्व० श्रौ० ४. ७. ४। ८. ऋ० १. ४६. १५।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

होता पठेत् । हे अग्ने वीहि खाद भक्षयेत्यर्थः[1] । घर्मस्य यजेत्यध्वर्युणा प्रेषितो होता पूर्वोक्तं याज्याद्वयं सवषट्कारं यदा पठति तदानीमध्वर्युरश्विना घर्मं पातमिति मन्त्रेण जुहोति । पुनरप्यग्ने वीहीति होत्रा पठिते सत्यध्वर्युः स्वाहेन्द्रावडिति जुहोति । तदेतत् सर्वम् आपस्तम्ब आह—'आश्राव्य प्रत्याश्राविते संप्रेष्यति घर्मस्य यजेत्यश्विनः घर्मं पातमिति वषट्कृते जुहोति । स्वाहेन्द्रावडित्यनुवषट्कृते[2] इति । यदेतदनुवषट्कारे यजनं तदेतत्स्विष्टकृद्भाजनं स्विष्टकृत्स्थानीयमित्यर्थः ॥

'हे अग्नि भक्षण करो' इस मन्त्र का होता के द्वारा पाठ करने के पश्चात् वषट्कार करना चाहिए । यह वषट्कार स्विष्टकृद्भाजन अर्थात् स्विष्टकृत्स्थानीय है ।

यथा पूर्वाह्णे याज्यापाठस्तथाऽपराह्णकालानुष्ठानेऽपि विधत्ते—

**यदुस्रियास्वाहुतं घृतं पयोऽस्य पिबतमश्विनेत्यपराह्णे यजत्यग्ने वीहीत्यनुवषट्करोति स्विष्टकृद्भाजनम् ॥ इति ।**

'यदुस्रियास्वाहुतम्' इत्येषा शाखान्तरगतत्वाद् आश्वलायनेन पठिता[3] । अस्य पिबतमिति स्वशाखागता[4] । अन्यत् सर्वं पूर्ववत्[5] ।

'यदुस्रिया' आदि और 'अस्य पिबतम्' आदि दो मन्त्रों से अपराह्ण में आहुतियाँ देता हैं। 'अग्ने वीहि' इस मन्त्र के पाठ के बाद वषट्कार करता है । यह वषट्कार स्विष्टकृत् के स्थान में होता है ।

अत्र मुख्यस्विष्टकृद् रहितत्वात्तल्लोपमाशङ्क्य परिहरति—

**त्रयाणां ह वै हविषां स्विष्टकृतेन समवद्यन्ति सोमस्य घर्मस्य वाजिनस्येति स यदनुवषट्करोत्यग्नेरेव स्विष्टकृतोऽनन्तरित्यै ॥ इति ।**

सोमो वल्लीरसः । घर्मः प्रवर्ग्यहविः । वाजिनमामिक्षानुनिष्पादि नीरम् । एतेषां स्विष्टकृदर्थमवदानं न कुर्युः । न चैतावता तल्लोपः । स होताऽनुवषट्करोतीति यदस्ति तदेतत्स्विष्टकृन्नामकस्याग्नेरनन्तरित्यै । अन्तरायो लोपस्तन्निवृत्त्यर्थं भवति ॥

स्विष्टकृत् के लिए हवि में से तीन भाग निकालते हैं अर्थात् सोम रस का, घर्म अर्थात् प्रवर्ग्य-हवि का और मट्ठा का [भाग निकालना चाहिए] । वह जो बाद में वषट्कार करता है वह स्विष्टकृत् नामक अग्नि के लोप के निवृत्त्यर्थ है ।

अथ ब्रह्मणः शाखान्तरप्रसिद्धेन मन्त्रेण जपं विधत्ते—

**'विश्वा आशा दक्षिणासादिति' ब्रह्मा जपति ॥ इति ।**

---

१ ऋ० १०. १२३. ६ ।
२. आप० श्रौ० १५. १०. ११ ।
३. आश्व० श्रौ० ४. ७. ४ ।
४. ऋ० ८. ५. १४ ।
५. द्र० पूर्व० पृ० १३३ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इयमृगाश्वलायनेन पठिता[१] ॥

ब्रह्मा 'विश्वा आशा' आदि मन्त्र का जप करता है।

प्रासङ्गिकं ब्रह्मजपं विधाय होमादूर्ध्वं होत्रा पठनीया ऋचः सप्त विधत्ते—

**'स्वाहाकृतः शुचिर्देवेषु घर्मः, 'समुद्रादूर्मिमुदियर्ति वेनो' 'द्रप्सः समुद्रमभि यज्जिगाति। 'सखे सखायमभ्याववृत्स्व, 'ऊर्ध्व ऊ षु ण ऊतय, 'ऊर्ध्वो नः पाह्यंहसः, 'तं घेमित्था नमस्विन, इत्यभिरूपा यद्यज्ञेऽभिरूपं तत्समृद्धम् ॥ इति।**

स्वाहाकृत इत्येषा प्रथमा। सा च शाखान्तरगतत्वाद् आश्वलायनेन पठिता।[२] 'समुद्रादूर्मिमिति'[३] द्वितीया। 'द्रप्सः समुद्रमिति'[४] तृतीया। सखे सखायमिति[५] चतुर्थी। 'ऊर्ध्वं ऊ षु णः'[६] इति पञ्चमी। 'ऊर्ध्वो नः पाहीति'[७] षष्ठी। 'तं घेमित्थेति'[८] सप्तमी। घर्मप्रकाशकत्वादेता 'अभिरूपाः' ॥

१. 'स्वाहाकृतः', २. 'समुद्रादूर्मि', ३. 'द्रप्सः', ४. 'सखे सखायम्', ५. 'ऊर्ध्वं ऊ षु ण', ६. 'ऊर्ध्वो नः', ७. 'तं घेमित्था' आदि सात ऋचाओं का होता पाठ करता है। ये [घर्म की प्रकाशक होने से] यज्ञ के अनुरूप हैं; जो यज्ञ के अनुरूप है वही यज्ञ की सफलता है।

होतुरेकयर्चा प्रवर्ग्यहविःशेषभक्षणप्रतीक्षां विधत्ते—

**पावकशोचे तव हि क्षयं परीति भक्षमाकाङ्क्षते ॥ इति।**

'पावक शोचे' आदि मन्त्र पढ़कर होता प्रवर्ग्य हवि के शेष भाग के भक्षण की इच्छा करता है।

समन्त्रकं भक्षणं विधत्ते—

**हुतं हविर्मधु हविरिन्द्रतमेऽग्नावश्याम ते देव घर्म। मधुमतः पितुमतो वाजवतोऽङ्गिरस्वतो नमस्ते अस्तु मा मा हिंसीरिति घर्मस्य भक्षयति॥ इति।**

अतिशयेनायमैश्वर्यवानिन्द्रतमस्तादृशेऽग्नौ प्रवर्ग्याख्यं हविर्हुतं तच्च मधु माधुर्योपेतं हे घर्म प्रवर्ग्य देवरूप देव ते त्वदीयं हविःशेषमश्याम भक्षयेम। कीदृशस्य ते मधुमतो माधुर्योपेतस्य पितुमतोऽन्नवतोऽन्नसाधनस्य वाजवतो गतिमतः स्वर्गप्राप्तिसाधनस्य।

---

१-२. आश्व० श्रौ० ४.७.४। तु० अथर्व० ७.७३ ३। ३ ऋ० १ १२३.२।
४. ऋ० १० १२३.८। ५. ऋ० ४ १.३।
६. ऋ० १.३६.१३। ७. ऋ० १.३६.१४। ८. ऋ० ८.६९.१७।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अङ्गिरस्वतः, अङ्गिरोभिर्महर्षिभिरनुष्ठानकाले भक्षितत्वेन तद्युक्तस्य । ईदृशाय ते तुभ्यं नमोऽस्तु । मां भक्षयन्तं मा हिंसीरित्यनेन मन्त्रेण घर्मस्य शेषं भक्षयेत् । अयं मन्त्रोऽन्येषामपि भक्षयितॄणां साधारणोऽत एव तैत्तिरीयैरप्याम्नातः ॥[1]

हे प्रवर्ग्य देव ! अतिशय ऐश्वर्य युक्त अग्नि में प्रदत्त तुम्हारे माधुर्य युक्त हविःशेष का मैं भक्षण करूँ । माधुर्य युक्त, अन्नयुक्त, [स्वर्ग प्राप्ति के साधन होने से] गति युक्त तथा [अनुष्ठान काल में अङ्गिरसों से भक्षित होने से] अङ्गिरसोयुक्त हवि को हम खाएँ । इस प्रकार के तुम अग्नि को नमस्कार है । भक्षण करते हुए मुझे तुम न सताना—इस मन्त्र से घर्मशेष का भक्षण करना चाहिए ।

अथ होतुर्मन्त्रद्वयं विधत्ते—

'श्येनो न योनिं सदनं धिया कृतम्' 'आ यस्मिन् सप्त वासवा' इति संसाद्यमानायान्वाह ॥

'श्येनो न योनिमिति'[2] पूर्वा । 'आ यस्मिन् सप्तेत्यपरा । सेयं शाखान्तरगतत्वाद् आश्वलायनेन पठिता ।[3] यदा प्रवर्ग्यपात्राणि संसाद्यन्ते तदा होता मन्त्रद्वयमिदमनुब्रूयात् ॥

'श्येनो न योनिम्' और 'आ यस्मिन् सप्त' आदि दो मन्त्रों का पाठ होता प्रवर्ग्य-पात्र के नीचे रखे जाने पर करता है ।

बहुषु दिनेषु पूर्वाह्णापराह्णयोः प्रवर्ग्याख्यं कर्मानुष्ठीयते तत्रोत्तमदिनेऽपराह्णकालीने प्रवर्ग्याख्ये कांचिदृचमधिकां विधत्ते—

हविर्हविष्मो महि सद्म दैव्यमिति यदहरुत्सादयिष्यन्तो भवन्ति ॥ इति ।

यदहर्यस्मिन्नहन्युत्सादयिष्यन्तः प्रवर्ग्यमुद्वासयितुमुद्युक्ता भवन्ति तस्मिन्नहनि 'हविर्हविष्म'[4] इत्येतामृचमधिकामुपोत्तमरूपामावपेत ॥

जिस दिन प्रवर्ग्य पात्र को उठाना चाहे उस दिन 'हविर्हविष्मः' आदि ऋचा का पाठ करना चाहिए ।

अथ कयाचिदृचाऽभिष्टवस्य समाप्तिं विधत्ते—

'सूयवसाद् भगवती हि भूया'[5] इत्युत्तमया परिदधाति ॥ इति ।

अन्तिमात् प्राचीनेषु प्रवर्ग्येषु पूर्वोक्तामधिकामप्रक्षिप्यैवानया परिदध्यात् । अन्तिमे तु तां प्रक्षिप्य पश्चादनया परिदध्यात् । तदाह आश्वलायनः—'सूयवसाद्भगवती हि भूया' इति परिदध्यादुत्तमे प्रागुत्तमाया हविर्हविष्मो महि सद्म दैव्यमित्यावपेत'[6] इति ॥

---

१. तै० आ० ४.१०.११ । तत्रैव पञ्चमप्रपाठके एतन्मन्त्रस्य व्याख्यानमपि सार्थवादम् (८.४०–४५) । २. ऋ० ९.७१.६ । ३. आश्व० श्रौ० ४.७.४ । ४. ऋ० ९.८३.५ । ५. ऋ० १.१६४.४० । ६. आश्व० श्रौ० ४.७.४,५ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'सूयवसाद् भगवती' आदि अन्तिम ऋचा से कर्म की समाप्ति करनी चाहिए।

अथ पूर्वोक्तस्य प्रवर्ग्यकर्मणः प्रशंसार्थं मिथुनव्यापाराकारेण रूपकं दर्शयति—

**तदेतद् देवमिथुनं यद्घर्मः स यो घर्मस्तच्छिश्नं यौ शफौ तौ शफौ योपयमनी ते श्रोणिकपाले यत्पयस्तद्रेतस्तदिदमग्नौ देवयोन्यां प्रजनने रेतः सिच्यतेऽग्निर्वै देवयोनिः सोऽग्नेर्देवयोन्या आहुतिभ्यः संभवति ॥ इति।**

'यद्घर्मः' प्रवर्ग्याख्यं यत्कर्मास्ति 'तदेतद्देवमिथुनं' देवसंबन्धिमिथुनव्यापारः। तत्कथमिति चेत्, उच्यते—'स यो घर्मः' प्रवर्ग्यहविराश्रयभूतो महावीराख्यो मृन्मयपात्रविशेषो योऽसावस्ति[1] 'तच्छिश्नं' प्रजननेन्द्रियरूपम्। तप्तस्य महावीरस्य हस्ताभ्यां ग्रहीतुमशक्यत्वात् तद्ग्रहणसमर्थोदुम्बरकाष्ठनिर्मितौ 'शफौ' शफनामानौ विद्येते, 'तौ' प्रजननेन्द्रियस्य पार्श्ववर्तिनौ शफाविव संदृश्येते च, उदुम्बरकाष्ठाभ्यां शफनामकाभ्यां महावीरस्य मध्यमभागे धृतत्वात्। तस्याधस्तादाधारार्थमुदुम्बरकाष्ठनिर्मितोपयमनीशब्दवाच्या दर्वी 'या' विद्यते सेयं शरीरसंबन्धिनी ते 'श्रोणिकपाले' श्रोणिद्वयमध्यगतमस्थिद्वयम्। उपयमन्या एकत्वेऽप्यधस्तान्महावीरस्य कदाचिद्दक्षिणभागे कदाचिद्वामभागे तद्धारणात् कपालद्वयरूपत्वम्। महावीरगते तप्ते आज्ये प्रक्षेप्तव्यं 'यत्पयस्तद्रेतः' स्वरूपम्। 'तदिदं' रेतोरूपमाज्यमिश्रं पयोऽग्नौ देवयोनिरूपे 'प्रजनने' उत्पत्तिस्थाने 'रेतः सिच्यते' रेतोरूपेण प्रक्षिप्यते। अग्नेर्देवयोनित्वप्रसिद्धयर्थो वैशब्दः। अग्नेः कर्मण्यनुष्ठाय देवरूपेण जायमानत्वात् सा प्रसिद्धिर्द्रष्टव्या। सैव प्रसिद्धिः सोऽग्नेरित्यादिना स्पष्टी क्रियते। स यजमानो देवयोनिरूपादग्नेरनुष्ठिताभ्य आहुतिभ्यश्च देवतारूपः संभवत्युत्पद्यते।

यह जो घर्म है वह देवों का मिथुन [रूप = जोड़ा] है। यह जो घर्म पात्र [महावीर नामक मिट्टी का पात्र विशेष] है वह शिश्न [उपस्थेन्द्रिय रूप] है। उसके दो शफ [अर्थात्

---

१. तप्ते घृते पयः प्रक्षेपादिना प्रणीयते 'घर्मः' खाद्यविशेषः; स एव प्रक्षेपः प्रवृञ्जनमुच्यते; तादृशप्रवृञ्जननिबन्धनैवास्य कर्मणः समाख्या 'प्रवर्ग्य' इति। तत्र च घर्मपाकाय मृन्निर्मितिः कटाहविशेष एव महावीरः। गौण्या तु वृत्या घर्मः, प्रवर्ग्यः, महावीरः—इति त्रीण्येव पदानि समानार्थानीति विवेकः। 'यदा मृद्वराहविहतवल्मीकवपादिसम्भारैः सम्भ्रियमाणत्वदशापन्नो भवति। तदा प्रजापतिरित्येवास्य नाम, सर्वात्मना सम्भृतत्वदशापन्नस्य सम्राडिति नाम; प्रवृञ्जनदशापन्नस्य घर्म इति नाम, उद्वासनदशापन्नस्य महावीर इति नाम; एतामिर्दशाभिरवस्थात् यत् स्वरूपम्, तेन रूपेणादित्य इति नाम; स प्रवर्ग्य एवमेतानि नामान्यकुरुत'—इति तै० आ० ५.११.१ सा० भा०। तथा शत० ब्रा० १४.१.१.१०-११ एवमादिकं तु सर्वं स्तुत्यर्थं बोध्यम्।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गर्भ पात्र को उठाने के लिए उदुम्बर काष्ठ की बनी सड़सी] प्रजननेन्द्रिय के पार्श्ववर्ती दो शफ के समान हैं। [उसके नीचे आधारार्थ उदुम्बर काष्ठ से निर्मित] 'उपयमनी' नामक दर्वी जो है वह श्रोणी की अस्थिद्वय रूप है। [महावीरगत तप्त घृत में डालने वाला] जो दूध है वह वीर्य है। यहाँ वह घृत मिश्रित दूध अग्नि में अर्थात् देवयोनि रूप उत्पत्तिस्थान में वीर्य रूप से सिंचन किया जाता है; क्योंकि अग्नि वस्तुतः इन देवताओं की योनि हैं। वह [यजमान] देव-योनि [रूप अग्नि] से अनुष्ठित आहुतियों से देवता रूप होकर उत्पन्न होता है।

उक्तार्थवेदनं तद्वेदनपूर्वकमनुष्ठानं च प्रशंसति—

**ऋङ्मयो यजुर्मयः साममयो वेदमयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति य एवं वेद यश्चैवं विद्वानेतेन यज्ञक्रतुना यजते ॥ २२ ॥ इति।**

वेदशब्देनाथर्ववेदः सर्ववेदसमष्टियुक्तिर्वोच्यते। ब्रह्मशब्देन हिरण्यगर्भः। अमृतशब्देन परमात्मा। ता एकैकदेवताः सर्वाः संभूयैकीकृत्य समष्टिरूपमप्येति प्राप्नोति। वेदमात्रेण शनैस्तत्प्राप्तिर्वेदनपूर्वकानुष्ठानेन तु सहसेति विशेषो द्रष्टव्यः।[1]

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुर्थाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥ [२२]

[उत्पन्न हुआ वह यजमान] जो इस प्रकार जानता है और जो इस प्रकार जानते हुए इस यज्ञानुष्ठान से यजन करता है वह ऋग्युक्त, यजुर्युक्त, साम-युक्त और [अथर्व अथवा समस्त] वेदयुक्त, ब्रह्ममय, अमरत्व-युक्त सभी देवता का समष्टि रूप प्राप्त करता है।

॥ इस प्रकार चतुर्थ अध्याय में पञ्चम खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

प्रवर्ग्याख्यं कर्म[2] परिसमाप्योपसदाख्यं कर्म वक्तुमाख्यायिकामाह—

**देवासुरा वा एषु लोकेषु समयतन्त ते वा असुरा इमानेव लोकान् पुरोऽकुर्वत यथौजीयांसो बलीयांस एवं ते वा अयस्मयीमेवेमामकुर्वत**

---

१. 'अल्पप्रयाससाध्येन वेदनेन'—इत्यादि पूर्वोक्तं (६ पृ०) संभृत्यैवेदमुक्तम्।

२. तथा चेमनि प्रवर्ग्यकर्माणि;—शान्तिपाठः, महावीरनिर्माणम्, तत्संस्काराः, प्रैषाः, महावीरस्थापनम्, तदभिमन्त्रणम्, अभिमन्त्रितस्य तस्यावेक्षणम्, महावीरस्थे तप्ते आज्ये पयः प्रक्षेपरूपं प्रवृञ्जनम्, तथा प्रणीतस्य घर्मस्याहवनीये यागः, तच्छेषेणाग्निहोत्रहोमः, तत्रैव द्रव्यादिद्रव्यपूरणरूपमुद्वासनम्, विविधनैमित्तिकघर्मप्रायश्चित्तानि, घर्मभक्षणम्, मार्जनञ्चेति। तै० आ० ४.५। कात्या० श्रौ० २६।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

रजतामन्तरिक्षं हरिणीं दिवं ते तथेमाँल्लोकान् पुरोऽकुर्वत ते देवा अब्रुवन् पुरो वा इमेऽसुरा इमाँल्लोकानक्रत पुर इमाँल्लोकान् प्रतिकरवामहा इति तथेति ते सद एवास्याः प्रत्यकुर्वताऽऽग्नीध्रमन्तरिक्षाद्धविर्धाने दिवस्ते तथेमाँल्लोकान् पुरः प्रत्यकुर्वत ॥ इति ।

देवाश्चासुराश्च लोकत्रयविषये समयतन्त परस्परं युद्धं कृतवन्तः । तदानीमसुरा इमानेव भूरादींस्त्रींल्लोकान् पुरोऽकुर्वत प्राकारपरिवेष्टितानि नगराणि कृतवन्तः । यथा लोके महान्तो राजानोऽभ्यधिकेनौजसा शरीरशक्त्या संपन्ना अभ्यधिकेन सैन्यरूपेण बलेन च संपन्नाः प्रौढानि दुर्गाणि कुर्वन्ति, एवमेते कृतवन्तः । तत्रेमां भूमिमयस्मयीं लोहप्राकारयुक्तामकुर्वत । अन्तरिक्षं लोकं च रजतप्राकारवेष्टितां पुरीमकुर्वत । द्युलोकं हरिणीं हिरण्मयीं सुवर्णप्राकारवेष्टितां पुरीमकुर्वत । तथेत्युक्तनगरनिर्माणकृतस्योपसंहारः । तमिममर्थं सर्वं तैत्तिरीयाः संक्षिप्याऽऽमनन्ति—'तेषामसुराणां तिस्रः पुर आसन्नयस्मय्यवमाऽथ रजताऽथ हरिणी'[1] इति । ततस्ते देवा विचारयन्तः परस्परमिदमब्रुवन् । असुरा इमे भूरादीनिमाँल्लोकान् पुरो वै स्वकीयनगराण्येव कृतवन्तः । अतो वयमपीमान् भूरादींल्लोकान् पुरोऽस्मदीयनगराणि प्रतिकरवामहै, असुराणां प्रतिकूलानि संपादयाम इत्येवं विचारं परस्परमङ्गीकृत्य त्रिषु लोकेष्वसुराः क्वचिद्देशविशेषे यथा स्वकीयानि नगराणि कृतवन्तस्तथा देवा अस्याः पृथिव्याः सकाशात् सद एव प्रत्यकुर्वत । सौमिकवेद्यां प्राचीनवंशात् पूर्वभाविसदोनामकमण्डपमेवासुरप्रतिकूलमकुर्वत । अन्तरिक्षलोकादाग्नीध्रनामकं धिष्ण्यमकुर्वत[2] । द्युलोकाद्धविर्धाननामके द्वे शकटे[3] अकुर्वत । ते तथेत्यादिरुक्तार्थोपसंहारः । असुरनिर्मितपुरत्रयप्रतिकूलं सदआग्नीध्रहविर्धानरूपत्रयं कृतवन्तः । असुरैर्लोकत्रये प्रौढासु तिसृषु दुर्गरूपासु पुरीषु निर्मितासु देवाश्च स्वरक्षार्थं सदःप्रभृतीनि त्रीणि दुर्गाणि कृत्वा विजयं प्राप्ताः ।

---

१. तै० सं० ६.२.३.१ ।

२. धिष्ण्यमिति सिकतोपकीर्णानां पुरीषस्थलानां नामधेयम् । तत्र 'आग्नीध्रीयं पूर्वम्, ····षट् सदसि;—प्रत्यङ्मुखद्वारमपरेण होतुः, दक्षिणपूर्वेणौदुम्बरीं मैत्रावरुणस्य, होतृधिष्ण्यमुत्तरेण चतुरः समान्तरान् ब्राह्मणाच्छंसि-पोतृ-नेष्टृच्छावाकानाम्; आग्नीध्राद् दक्षिणं सम्प्रति वेद्यन्ते दक्षिणामुखो मार्जालीयम्'—इति ( कात्य० श्रौ० ८.६.१६—२२) अष्टौ धिष्ण्यानि विहितानि । तत्र निरूढेऽग्निप्रणयनानन्तरं चाग्नीध्रीय धिष्ण्ये एव प्रथममग्निग्रहणम्, ततो होतृधिष्ण्यादौ (कात्या० श्रौ० ९.१०.१४) ।

३. सोमरूपहविर्धारके द्वे शकटे हविर्धाने इत्युच्येते । सदोमण्डपाद् दक्षिणस्यां तयोर्मण्डपे भवतः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## उपसद

i. २३. [iv. ६] इन [तीनों] लोकों के विषय में देव और असुरों ने परस्पर युद्ध किया। उन असुरों ने इन लोकों को प्राकारपरिवेष्टित नगर बनाया जैसे लोक में शक्तिशाली राजा सैन्यरूप बल से सम्पन्न दुर्ग का निर्माण करता है। इस पृथिवी को लोहे के प्राकार से युक्त किया। अन्तरिक्ष लोक को चाँदी के प्राकार से युक्त पुरी बनाया। द्युलोक को सुवर्ण प्राकार से युक्त पुरी बनाया। इस प्रकार इन लोकों को नगर बनाया। उन देवों ने [परस्पर] कहा—इन आसुरों ने इन भूरादि लोकों को [अपना] नगर बना लिया। अतः इसी प्रकार असुरों के प्रतिकूल हम लोग भी अपने नगरों का निर्माण करें। सभी ने अङ्गीकार किया—हाँ, ऐसा ही हो। उन्होंने [लोहे के दुर्ग के] प्रतिकूल इस [पृथ्वी] से 'सदस्' नामक मण्डप का निर्माण किया [सौमिक वेदि में प्राचीनवंश नामक स्थान से पूर्व में 'सदस्' नामक स्थान होता है। उत्तरवेदि के पीछे का भाग जहाँ सोम रक्खा जाता है प्राचीन वंश है] अन्तरिक्ष से आग्नीध्र नामक अग्नि कुण्ड का निर्माण किया और द्यु से दो हविर्धान [सोमरूप हवि रखने के पात्र] बनाए। इस प्रकार उन्होंने इन सदस् आदि लोकों को असुरों के पुरों के प्रतिकूल बनाया।

तं विजयं दर्शयति—

ते देवा अब्रुवन्नुपसद उपायामोपसदा वै महापुरं जयन्तीति तथेति ते यामेव प्रथमामुपसदमुपायंस्तयैवैनानस्माँल्लोकादनुदन्त यां द्वितीयां तयाऽन्तरिक्षाद्यां तृतीयां तया दिवस्तांस्तथैभ्यो लोकेभ्योऽनुदन्त ॥ इति।

विजयार्थिनस्ते देवाः परस्परमिदमब्रुवन्। उपसदाख्यान् होमानुपायामानुतिष्ठाम। लोकेषूपसदा वै परकीयदुर्गसमीपावस्थानेन दुर्गविरोधरूपेणैव महत्या सेनया दुर्गवेष्टनेन सर्वे राजानो महतीं दुर्गरूपां पुरं जयन्ति। अतो वयमप्युपसदनहेतुभूतान् होमान् करवामेति विचार्य तिस्र उपसदो हुत्वा लोकत्रयनिर्मिताभ्यो दुर्गरूपाभ्यः पुरीभ्योऽसुरान्निःसारितवन्तः। तत्र 'या ते अग्नेऽयाशया तनूः' इत्यनेन[1] मन्त्रेण साध्योपसत्प्रथमदिनेऽनुष्ठितत्वात् प्रथमा। 'या ते अग्नेरजाःशया तनूः इत्यनेन[2] मन्त्रेण साध्या द्वितीयदिनेऽनुष्ठेयत्वाद् द्वितीया। 'या ते अग्ने हरःशयेति[3] मन्त्रेण साध्या तृतीयदिने नुष्ठेयत्वात् तृतीया।[4] युद्धेन ताः पुरीर्जेतुमशक्ता देवा उपसद्धोमैर्जितवन्तः। तथा च शाखान्तरे श्रूयते—'ते

१. वा० सं० ५.८.१। २. वा० सं० ५.८.२। ३. वा० सं० ५.८.३।

४. तैत्तिरीयसंहितायां त्वेवं पाठः—'या ते अग्नेऽयाशया रजाशया हराशया तनूर्वर्षिष्ठा-गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा—इति १.२.११,२। अत्र या ते अग्नेऽयाशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठेत्येतादृश आम्नातः, तस्मिन्नयाशयादिपदत्रयेण त्रयो मन्त्रा भवन्ति'—इत्यादि च तत्र सायणः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

देवा जेतुं नाशक्नुवन्नुपसदैवाजिगीषन्'[1] इति । लोकत्रयान्निःसारिताश्चासुरा यदा वसन्ताद्यृतुदेपाऽऽश्रणं प्राप्तास्तदा तदानीमेवैकैकस्मिन्दिने द्विर्द्विरनुष्ठेयाभिः षड्भिस्तानसुरान् वसन्ताद्यृतुदेवताभ्यो निःसारितवन्तः ॥

[विजयाभिलाषी] उन देवों ने परस्पर कहा—हम 'उपसद' नामक होम का अनुष्ठान करें; क्योंकि उपसद के द्वारा वे [अर्थात् परकीय दुर्ग के समीप महान् सेना के दुर्ग से घेरा डालकर सभी राजा] महान् दुर्गरूप पुर को जीतते हैं। उन्होंने ऐसा ही किया। जब उन्होंने प्रथम उपसद आहुति दी तो उन्होंने इसके द्वारा असुरों को इस लोक [पृथ्वी] से निकाल दिया। जब उन्होंने द्वितीय आहुति दी तो उससे अन्तरिक्ष लोक से उन्हें निकाल दिया और जब तीसरी आहुति दी तो द्यु से निकाल दिया। इस प्रकार इन लोकों से उनको निकाल दिया।

तमिममर्थं दर्शयति—

**ते वा एभ्यो लोकेभ्यो नुत्ता असुरा ऋतूनश्रयन्त ते देवा अब्रुवन्नुपसद एवोपायामेति तथेति त इमास्तिस्रः सतीरुपसदो द्विर्द्विरेकैकामुपायंस्ताः षट्समपद्यन्त षड्वा ऋतवस्तान् वा ऋतुभ्योऽनुदन्त ॥ इति ।**

इन लोकों से निकाले गये असुरों ने ऋतुओं का आश्रय ग्रहण किया। तब उन देवों ने कहा—हम 'उपसद' नामक आहुतियों को दें। उन्होंने ऐसा ही किया। यह उपसद तीन हैं; प्रत्येक का अनुष्ठान दो-दो बार उन्होंने किया। इस प्रकार वे छः हो जाते हैं। छः ही ऋतुएँ होती हैं। इस प्रकार उनको उन ऋतुओं में से निकाल दिया।

ततो मासाऽऽश्रणं प्राप्यावस्थितानामसुराणां षड्दिनेष्वनुष्ठिताभिरावृत्ताभिर्द्वादशोपसद्भिर्निःसरणं कृतं तदिदं दर्शयति—

**ते वा ऋतुभ्यो नुत्ता असुरा मासानश्रयन्त ते देवा अब्रुवन्नुपसद एवोपायामेति तथेति त इमाः षट्सतीरुपसदो द्विर्द्विरेकैकामुपायंस्ता द्वादश समपद्यन्त द्वादश वै मासास्तान् वै मासेभ्योऽनुदन्त ॥ इति ।**

मन्त्रत्रयेण दिनत्रयेऽनुष्ठेयास्तिस्रः पुनरप्यावृत्त्याऽन्यस्मिन् दिनत्रयेऽनुष्ठिताः षड्भवन्ति । एकैकस्मिन् दिने द्विरनुष्ठिता द्वादश संपद्यन्ते ।

ऋतुओं से निकाले गये उन असुरों ने मासों का आश्रय लिया। तब उन देवों ने कहा—'हम 'उपसद' नामक आहुतियाँ दें।' उन्होंने ऐसा ही किया। यह उपसद छः हैं। एक-एक का उन्होंने दो-दो बार अनुष्ठान किया। इस प्रकार वे बारह हो गये। वस्तुतः बारह ही महीने होते हैं। इस प्रकार महीनों में से भी उनको निकाल दिया। [तीन दिनों में तीन मन्त्रों से अनुष्ठेय उपसद पुनः अन्य तीन दिन अनुष्ठित

१. तै० सं० ६.२.३.१ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

होकर छः हुए। एक-एक दिन दो बार अनुष्ठान होने से बारह हुए। इसी प्रकार बारह दिनों में अनुष्ठित उपसद चौबीस होते हैं]।

अनेनैव न्यायेन द्वादशसु दिनेष्वनुष्ठिताभिश्चतुर्विंशतिभिरुपसद्भिरर्धमासदेवताभ्यो निःसारितवन्त इत्येतद्दर्शयति—

**ते वै मासेभ्यो नुत्ता असुरा अर्धमासानश्रयन्त ते देवा अब्रुवन्नुपसद एवोपायामेति तथेति त इमा द्वादश सतीरुपसदो द्विर्द्विरेकैकामुपायंस्ताश्चतुर्विंशतिः समपद्यन्त चतुर्विंशतिर्वा अर्धमासास्तान् वा अर्द्धमासेभ्योऽनुदन्त ॥** इति।

मासों से निकाले गए उन असुरों ने अर्धमास अर्थात् पक्षों का आश्रय लिया। तब उन देवों ने कहा—हम उपसद आहुतियाँ दें। उन्होंने वैसा ही किया। यह उपसद बारह हैं। एक-एक का उन्होंने दो-दो बार अनुष्ठान किया। इस प्रकार वे चौबीस हो गए। [बारह मासों में] वस्तुतः चौबीस ही पक्ष होते हैं। इस प्रकार उन पक्षों से भी उन्हें निकाल दिया।

ततोऽहोरात्रदेवौ शरणं गतानामसुराणां कालविशेषद्वयानुष्ठानेन निःसारणं दर्शयति—

**ते वा अर्द्धमासेभ्यो नुत्ता असुरा अहोरात्रे अश्रयन्त ते देवा अब्रुवन्नुपसदावेवोपायामेति तथेति ते यामेव पूर्वाह्ण उपसदमुपायंस्तयैवैनानह्नोऽनुदन्त यामपराह्णे तया रात्रेस्तांस्तथोभाभ्यामहोरात्राभ्यामन्तरायन् ॥** इति।

अन्तरायन्नन्तरितान् कृतवन्तो निःसारितवन्त इत्यर्थः ॥

पक्षों से निकाले जाकर वे असुर रात और दिन में चले गए। तब उन देवों ने कहा—'हम उपसद आहुतियाँ दें।' उन्होंने ऐसा ही किया। जो दोपहर से पहले पूर्वाह्ण में उन्होंने उपसद आहुतियाँ दीं, उससे तो असुरों को दिन में से निकाल दिया और जो आहुति दोपहर के बाद दी उससे उनको रात से निकाल दिया। इस प्रकार वे असुर रात और दिन दोनों से निकाल दिए गये।

एकैकस्मिन् दिन एकैकस्या उपसदो द्विरनुष्ठानाय कालद्वयविशेषं विधत्ते—

**तस्मात् सुपूर्वाह्ण एव पूर्वयोपसदा प्रचरितव्यं स्वपराह्णेऽपरया तावन्तमेव तद्द्विषते लोकं परिशिनष्टि ॥ २३ ॥** इति।

यस्मात् पूर्वाह्णापराह्णौ कालविशेषावहोरात्राभ्यां शत्रूणां निःसारणे हेतू तस्मात्तस्मिन्नेव कालद्वयेऽनुष्ठातव्यम्। एवं सति यावानहोरात्रयोः संधिकालस्तावन्तमेव द्विषते द्वेषिणे लोकं स्थानविशेषं परिशिनष्टि। इतरस्मात्कालान्निःसारितत्वेन सन्ध्याकाल एवासुराणां परिशिष्यते।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अत्रैकैकस्मिन् दिने द्विर्द्विरनुष्ठेया उपसदो ज्योतिष्टोमे त्रिषु दिनेष्वनुष्ठेयाः। अग्निचयने षट्सु दिनेषु। अहीनसत्रयोर्द्वादशदिनेषु। तथा च तैत्तिरीयैराम्नातम्—'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य यज्ञस्य सवीर्यत्वाय'[1] इति। तथा 'षडुपसदोऽग्नेश्चित्यस्य भवन्ति' इति श्रुत्यन्तरं द्रष्टव्यम्। आश्वलायनस्त्वेवमाह—'एकाहानां तिस्रः षड्वाऽहीनानां द्वादश चतुर्विंशतिः संवत्सर इति सत्राणाम्'[2] इति। गवामयनाख्ये संवत्सर इत्यर्थः।

अथ मीमांसा। पञ्चमाध्यायस्य तृतीयपादे चिन्तितम्—

"आवृत्तरुपसत्स्वेषा संघस्यैकैकशोऽथवा।
त्रिरध्यायं पठेत्यादाविव स्यात् समुदायगा॥
प्रथमा मध्यमाऽन्त्येति प्राकृतक्रमसिद्धये।
एकैकस्या द्विरभ्यासे षट्संख्याऽपि प्रसिध्यति[3]॥"

अग्नौ श्रूयते—'षडुपसदः' इति। तत्र चोदकप्राप्तानां तिसृणामुपसदां पूर्वन्यायेनाऽऽवृत्त्या षट्संख्या संपादनीया। सा चाऽऽवृत्तिर्दण्डकलितवत्समुदायस्य युक्ता। यथा दण्डेन भूप्रदेशं संमिमानः पुरुष आमूलाग्रं कृत्स्नं दण्डं पुनः पुनः पातयति न तु दण्डस्य प्रत्यवयवं पृथगावृत्तिं करोति। यथा वा 'त्रिवारं रुद्राध्यायं जपति' इत्यत्र कृत्स्न एवाध्याय आवर्त्यते न त्वध्यायैकदेशः। एकैकोऽनुवाकः पृथगेव त्रिः पठ्यते। तथा तिसृणामुपसदां समुदाय आवर्तनीयः—इति चेत्, मैवम्। प्राकृतक्रमबाधप्रसङ्गात्। प्रकृतौ हि दीक्षानन्तरभाविनि दिने होतव्या प्रथमोपसत्। तत ऊर्ध्वदिने द्वितीया। ततोऽप्यूर्ध्वंदिने तृतीया। ता एताः सकृदनुष्ठाय पुनरुपरितनदिनेऽनुष्ठीयमानायाः प्रथमायाः प्रथमात्वमपैति, चतुर्थीत्वमायाति। तस्मात् प्राकृतक्रमसिद्धये प्रथमां दिनद्वयेऽभ्यस्य ततो द्वितीयां द्विरभ्यस्येत् इत्येवं स्वस्थानविवृद्ध्या तासामावृत्तिः कार्या। न चाध्यायदृष्टान्तो युक्तः। अनुवाकसमुदायस्यैवाध्यायत्वाद् अध्यायस्यैव चाऽऽवृत्तिविधानात्। न त्विह समुदास्योपसत्त्वमस्ति। तस्मात्—प्रत्येकमुपसदावर्तनीया॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुर्थाध्याये षष्ठः खण्डः॥ ६॥ [२३]

इसीलिए पहली उपसद आहुति पूर्वाह्ण में ही देनी चाहिए और दूसरी अपराह्ण में। ऐसा करने से जितना रात और दिन का सन्धिकाल है उतना ही स्थानविशेष विद्वेषियों के लिए बचा रहता है।

॥ इस प्रकार चतुर्थ अध्याय में छठे खण्ड की हिन्दी पूर्ण हुई॥ ६॥

---

१ तै० सं० ६. २ ५ १। २ आश्व० श्रौ० ४. ८. १३-१६।

३ एवमेवाख्यायिकापूर्वकमुपसद्विधानं शतपथेऽपि ३. ४. ४. १-२७; तथा तैत्तिरीयकेऽपि सं० ६. २. ३. ४।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ सप्तमः खण्डः

अथोपसदः प्रशंसति—

**जितयो वै नामैता यदुपसदोऽसपत्नां वा एताभिर्देवा विजितिं व्यजयन्त ॥ इति ।**

उपसदो याः सन्त्येता जितयो वै नाम । जयहेतुत्वाज्जितय इत्येवं नाम प्रतिपद्यन्ते । जयहेतुत्वमेवासपत्नामित्यादिना स्पष्टी क्रियते । देवा एताभिरुपसद्भिरसपत्नां वैरिरहितामेव विजितिं विशिष्टं जयं व्यजयन्त विशेषेण प्राप्तवन्तः ॥

i. २४ [iv. ७] जो यह उपसद आहुतियाँ हैं इन्हें जितिय [ = विजय की हेतु] नाम से पुकारते हैं; क्योंकि देवताओं ने इन उपसद आहुतियों के द्वारा शत्रुविहीन विशिष्ट विजय को विशेष रूप से प्राप्त किया ।

वेदनं प्रशंसति—

**असपत्नां विजितिं विजयते य एवं वेद ॥ इति ।**

जो इस प्रकार जानता है वह शत्रुविहीन विजय को प्राप्त करता है ।

सामान्याकारेण वेदनं प्रशस्य पुनः पूर्वोक्तार्थवादानुक्रमेण विशेषाकारेण प्रशंसति—

**यां देवा एषु लोकेषु यामृतुषु यां मासेषु यामर्धमासेषु यामहोरात्रयोर्विजितिं व्यजयन्त तां विजितिं विजयते य एवं वेद ॥ इति ।**

जो इस प्रकार जानता है वह इन लोकों, ऋतुओं, महीनों, पक्षों तथा रात-दिन में देवों ने जो-जो विजय पाई, उन सब विजयों को प्राप्त करता है ।

अथ तानूनप्त्रस्य नाम निर्वक्तुमाख्यायिकामाह—

**ते देवा अबिभयुरस्माकं विप्रेमाणमन्विदमसुरा आभविष्यन्तीति ते व्युत्क्रम्यामन्त्रयन्ताग्निर्वसुभिरुदक्रामदिन्द्रो रुद्रैर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैः ॥ इति ।**

असुरैः सह युद्धार्थमुद्यता देवाः स्वसेनाया मध्ये परस्परमेकैकस्य सेनानीत्वलक्षणं ज्यैष्ठ्यमभ्युपगच्छन्तः परस्परविरोधिनो भूत्वाऽपसृत्याबिभयुर्मनसि भीतिं प्राप्ताः । केनाभिप्रायणेति तदुच्यते । अस्माकं विप्रेमाणमनु परस्परप्रेमराहित्यमनुवीक्ष्यासुरा इदमस्मदीयं राज्यमाभविष्यन्ति सर्वतः प्राप्स्यन्तीति । ततस्ते देवा व्युत्क्रम्य परस्परविभागेन तस्माद्देशादपसृत्य स्वसम्बन्धिभिर्मन्त्रिभिः सहामन्त्रयन्त पर्यालोचनं कृतवन्तः । ततस्तत्राग्निर्देवो वसुभिरष्टमन्त्रिभिः सहितः पृथगुदक्रामत् । एवमिन्द्रो रुद्रैः सह वरुण आदित्यैः सह बृहस्पतिर्विश्वैर्देवैः सह पृथगुदक्रामत् । अत्र चतुर्विधैव विभाग उक्तः । शाखान्तरे तु पञ्चधा । तथा चाऽऽम्नायते—'देवासुराः संयत्ता आसंस्ते देवा मिथो

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विप्रिया आसन् तेऽन्योन्यस्मै ज्यैष्ठ्यायाऽऽतिष्ठमानाः पञ्चधा व्यक्रामन्। अग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैः'[1] इति।

['तानूनप्त्र' नाम का निर्वचन–] वे देवता भयभीत हो गये कि कहीं असुरों को उनके आपसी वैमनस्य का पता न लग जाय और वह उनका राज्य प्राप्त कर लें। इसके बाद वे देव वहाँ से हटकर दलों में बँट गये और [अपने-अपने मन्त्रियों के साथ] विचार करने लगे। अग्नि आठ वसुओं के साथ चले गये और विचार करने लगे। इसी प्रकार इन्द्र रुद्रों के साथ, वरुण आदित्यों के साथ और बृहस्पति विश्वेदेवों के साथ विचार करने लगे।

एवं परस्परं विभज्यावस्थितानां देवसमूहानां पर्यालोचनपूर्वकं कृत्यं दर्शयति—

**ते तथा व्युत्क्रम्यामन्त्रयन्त तेऽब्रुवन् हन्त या एव न इमाः प्रियतमास्तन्वस्ता अस्य वरुणस्य राज्ञो गृहे संनिदधामहै ताभिरेव नः स न संगच्छातै यो न एतदतिक्रामाद्य आलुलोभयिषादिति तथेति ते वरुणस्य राज्ञो गृहे तनूः संन्यदधत ॥ इति।**

स्वकार्यहानिनिमित्तदुःखपरिहारोपायदर्शननिमित्तहर्षद्योतनार्थो हन्तशब्दः। अस्माकमत्यन्तं प्रिया याः पुत्रकलत्रादिरूपास्तन्वः सन्ति, 'ताः' सर्वा अस्य वरुणस्य राज्ञो गृहे संनिदधामहै बन्दीरूपेण स्थापयामः। तथा सति नोऽस्माकं मध्ये यः कोऽप्येतदतिक्रामादुल्लङ्घयेत्, उल्लङ्घ्य चाऽऽलुलोभयिषात् स्वपुत्रकलत्रादीनेव लोभयितुमिच्छेत्, गुप्तमनुष्यमुखेनाऽऽनेतुमिच्छेन्नोऽस्माकं मध्ये स तादृशः पुरुषस्ताभिरेव न संगच्छातै पुत्रकलत्रादिभिर्न संगच्छताम्। इत्येतं समयं सर्वेऽप्यङ्गीकृत्य वरुणगृहे स्वपुत्रादिशरीराणि स्थापितवन्तः। परस्पराविरोधे सति वयमेवासुराणामिदं लोकत्रयं साधयाम इति विचार्येमं समयं कृतवन्तः। सोऽयं शाखान्तरे स्पष्टमाम्नायते—'तेऽमन्यन्तासुरेभ्यो वा इदं भ्रातृव्येभ्यो रध्यामो यन्मिथो विप्रियाः स्मो या न इमाः प्रियास्तनुवस्ताः समवद्यामहै ताभ्यः स निर्ऋच्छाद्यो नः प्रथमोऽन्योन्यस्मै द्रुह्यात्'[2] इति॥

वे इस प्रकार अपना-अपना दल बनाकर विचार करने लगे। उन्होंने कहा—हन्त! जो यह हमारे अत्यन्त प्रिय [स्त्री पुत्रादि] शरीर हैं उन्हें इस राजा वरुण के घर में [बन्दी रूप में] रख दें। हम लोगों में से यदि कोई इसका उल्लंघन करे और [अपने स्त्री पुत्रादि को] लुब्ध करने की [अर्थात् गुप्त दूत के द्वारा लौटाने की] इच्छा करे तो वह पुरुष उन स्त्री पुत्रादि से न मिले। उन्होंने ऐसा ही किया। इस प्रकार शपथ लेकर उन्होंने राजा वरुण के गृह में अपने [स्त्री पुत्रादि] शरीरों को रख दिया।

---

१. तै० सं० ६.२.२.१। शतपथे तु मूले एव सूचितः शाखान्तरसंवादः 'एके आहुः'— इति ३.४.२.१।
२. तै० सं० ६.२.२.१।



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इदानीं निवर्चनं दर्शयति—

**ते यद्वरुणस्य राज्ञो गृहे तनूः संन्यदधत तत्तानूनप्त्रमभवत् तत्तानूनप्त्रस्य तानूनप्त्रत्वम् ॥ इति ।**

यस्माद् वरुणगृहे पुत्रादितनूरवस्थाप्य परस्परसख्यायाऽऽज्यस्पर्शनं शपथरूपं कृतवन्त इति शेषः। तस्मादिदमाज्यस्पर्शनाख्यं तानूनप्त्रं कर्माभवत्[1]। इदं च कर्माऽऽपस्तम्बेन विस्पष्टमिहितम्—'आतिथ्याया ध्रौवात्स्रुचि चमसे वा तानूनप्त्रं समवद्यति । चतुरवत्तं पञ्चावत्तं वा पतये त्वा गृह्णामीत्येतैः प्रतिमन्त्रमनाधृष्टमसीति यजमानसप्तदशा[2] ऋत्विजस्तानूनप्त्रं समवमृशन्त्यनु मे दीक्षामिति यजमान[3] इति । तनूनां पुत्रादिशरीराणां नप्त्रं न तपत ? (पतन)मतिशयितं निमित्तीकृत्य क्रियमाणत्वादस्य कर्मणस्तानूनप्त्रं नाम संपन्नम् ॥

**उन्होंने जो राजा वरुण के घर में अपने [स्त्री पुत्रादि] शरीरों को रखा वह [आज्यस्पर्शनाख्य रूप] 'तानूनप्त्र' कर्म हुआ । [उन शरीरों को रखने का नाम ही] तानूनप्त्र कर्म का 'तानूनप्त्रत्व'[=शरीरों का रक्षण] है ।**

प्रसङ्गाल्लोकव्यवहारे कंचिद्धर्मं दर्शयति—

**तस्मादाहुन सतानूनप्त्रिणे द्रोग्धव्यमिति ॥ इति ।**

यस्माद्देवाः परस्परद्रोहपरिहाराय शपथं कृतवन्तस्तस्माद् ब्रह्मवादिन एवमाहुः । सतानूनप्त्रिणे सह शपथकारिणे न द्रोग्धव्यम् । इतिशब्दस्तदुक्तिसमाप्त्यर्थः । देवसंबन्धिशपथविशेषवाचिना तानूनप्त्रशब्देन शपथमात्रमुपलक्ष्यते । बहुभिः सह क्रियामाणं तानूनप्त्रं यस्यास्ति सोऽयं सतानूनप्त्री ॥

**[क्योंकि परस्पर द्रोह की समाप्ति के लिए देवताओं ने शपथ ली] अतः ब्रह्मवादी ऐसा कहते हैं कि सतानूनप्त्री [अर्थात् शपथकारियों] के प्रति द्रोह नहीं करना चाहिए ।**

---

१. अध्वर्युप्रभृतिषोडशर्त्विजो यजमानश्च मिथो द्रोहशून्या भवन्त एकमत्या यज्ञकार्यं सम्पादयितुं घृतस्पर्शनपूर्वकं समन्त्रं यत् शपथकरणं तदेव 'तानूनप्त्रं' कर्म; परस्परेर्षाद्वेषादिशून्या एव वयं यथाविधियागकार्यसम्पादनाय यतिष्याम इत्याकारः स्वीकार इति । एवं तनूः न याति इत्यस्मिन्नर्थे तानूनप्त्रशब्दो वर्तते । तत् तानूनप्त्रं शरीररक्षणमित्यर्थः ।

२. 'अध्वर्युं प्रतिप्रस्थातारं नेष्टारमुन्नेतारमित्यध्वर्यून् ।
ब्रह्माणं ब्राह्मणाच्छंसिनमाग्नीध्रं पोतारमिति ब्रह्मणः ।
होतारं मैत्रावरुणमच्छावाकं ग्रावस्तुतमिति होतॄन् ।
उद्गातारं प्रस्तोतारं प्रतिहर्तारं सुब्रह्मण्यमित्युद्गातॄन् ।
सदस्यं सप्तदशं कौषीतकिनः समामनन्ति ।'

इति आप० श्रौ० १०.१.९–१० ।

३. आप० श्रौ० ११.१.१–३ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरति—

**तस्माद्विदमसुरा नान्वाभवन्ति ।। २४ ।। इति ।**

तस्माद्‌ तस्मादेव कारणाद्देवानां परस्परसख्यरूपादसुरा इदं लोकत्रयं नान्वाभवन्ति नैव समन्तात् प्राप्नुवन्ति । यद्यप्येतत् तानूनप्त्रं कर्मोपसद्भ्यः पूर्वमनुष्ठेयं[1] तथाऽप्युपसत्प्रयुक्तविजयप्रसङ्गेन बुद्धिस्थत्वादत्राभिहितम् ।।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्यस्य प्रथमपञ्चिकायां चतुर्थाध्याये सप्तमः खण्डः ।। ७ ।। [२४]

इसीलिए [देवों की परस्पर मित्रता के कारण] असुर इस लोकत्रय को नहीं प्राप्त कर पाते ।

।। इस प्रकार चतुर्थ अध्याय में सप्तम खण्ड की हिन्दी पूर्ण हुई ।। ७ ।।

## अथ अष्टमः खण्डः

अथाऽऽतिथ्यकर्मण्यास्तीर्णस्यैव बर्हिष उपसत्स्वनुवृत्तिं विधत्ते—

**शिरो वा एतद्यज्ञस्य यदातिथ्यं ग्रीवा उपसदः समानबर्हिषी भवतः समानं हि शिरोग्रीवम् ।। इति ।**

अथाऽऽतिथ्यकर्मणो यज्ञशिरोरूपत्वादुपसदां च ग्रीवारूपत्वात्तयोरवयवयोर्मध्ये लोके विच्छेदादर्शनादत्राप्यविच्छेदायाऽऽतिथ्योपसत्कर्मणी 'समानबर्हिषी' एकबर्हिषा युक्ते कर्तव्ये । आतिथ्यकर्मण्यास्तीर्णं बर्हिर्नाग्नौ प्रहृतम् । इडान्तत्वेन तत्र कर्मसमापनात् । तच्चाऽऽपस्तम्बेनोक्तम्—'इडान्ता संतिष्ठते, धारयन्ति ध्रौवमाज्यम्'[2] इति । शाखान्तरे च बर्हिषोऽनुवृत्तिराम्नाता—'यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य' इति ।।

i. २५ [iv. ८] आतिथ्य-इष्टि यज्ञ का सिर है और उपसद् उसकी ग्रीवा हैं । एक ही कुश पर उसका अनुष्ठान करना चाहिए क्योंकि सिर और गर्दन समान होते हैं ।

अथोपसत्सु द्रव्यदेवताविधानार्थं प्रस्तौति—

---

१. अत एव कात्यायनेन 'इडान्तं भवति'—इति (८.१.१८) आतिथ्यं समाप्य, ध्रौवग्रहणं च विधाय, शपथग्रहणं तानूनप्त्रं प्रोच्य, निह्नवादि सुब्रह्मण्याह्वानं च व्यवस्थाप्य सूत्रितम्—'प्रवर्ग्योपसदावतः'—इति (८.२.१५) । 'अतः सुब्रह्मण्याह्वानादूर्ध्वं प्रवर्ग्योपसदौ भवतः । पूर्वं प्रवर्ग्यः तत उपसदिति । उपसदिति वक्ष्यमाणाया इष्टेः संज्ञा'—इति च तट्टीका । तथैवापस्तम्बोऽप्याह (१०.३१.१५,१६; ११.१.१–१४; २.१–१२) ।

२. आप० श्रौ० १०.३१.१५,१६ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**इषु वा एतां देवाः समस्कुर्वत यदुपसदस्तस्या अग्निरनीकमासीत् सोमः शल्यो विष्णुस्तेजनं वरुणः पर्णानि तामाज्यधन्वानो व्यसृजंस्तया पुरो भिन्दन्त आयन् ॥ इति ।**

यदुपसदो या उपसद्देवता अग्न्यादिकाः सन्ति, एतामग्न्यादिरूपामिषुं वै बाणमेव देवाः समस्कुर्वत संस्कृतवन्तः, अग्न्यादीन् बाणावयवरूपेण संयोजितवन्त इत्यर्थः । योऽयमग्निः सोऽयं तस्या इषोरनीकं मुखमासीत् । पत्रयुक्ताद् बाणमूलादूर्ध्ववर्ती भागो मुखं तस्योपरि वर्तमानो लोहविशेषः शल्यं तस्य लोहस्य तीक्ष्णमग्रं तेजनम् । पर्णानि बाणमूले स्थापितानि पक्षिणां पत्राणि शल्यादिरूपेणाग्निसोमविष्णुवरुणा योजिताः । वरुणोऽत्र प्रशंसार्थमेवोपादीयते न तु देवतात्वेन तदीययोर्याज्यानुवाक्ययोरनभिधास्यमानत्वात् । अत एव शाखान्तरे वरुणं परित्यज्याग्न्यादय आम्नायन्ते—'त इषुं समस्कुर्वताग्निमनीकं सोमं शल्यं विष्णुं तेजनम्'[1] इति । तामेतामिषुं देवा आज्यधन्वानः सन्तो विसृष्टवन्तः । तया विसृष्टयेष्वा तेषामसुराणां पुरो भिन्दन्तो विदारयन्त आयन्नागच्छन् ॥

अग्नि आदि जो उपसदों के देवता हैं उन्हें देवताओं ने बाण बनाया । अग्नि उस बाण का मुख हुआ, सोम लोहे वाला भाग शल्य था, विष्णु नोक [ =तेजनम्] थे, वरुण बाण के मूल में स्थित तीर के पंख हुए । आज्य रूपी धनुर्धारी देवताओं ने उस बाण को छोड़ा और उससे असुरों के दुर्गों को तोड़ते हुए आए ।

इदानीं द्रव्यदेवत्वं विधत्ते—

**तस्मादेता आज्यहविषो भवन्ति ॥ इति ।**

यस्मादग्न्यादयो बाणरूपाः, आज्यं च धनुःस्वरूपम्, तस्मादाज्यहविष्का एता अग्न्यादिदेवता उपसत्सु भवेयुः ॥

[क्योंकि अग्नि आदि बाण-रूप हैं और आज्य धनुष-स्वरूप है] इसीलिए उपसदों में अग्न्यादि देवता के लिए आज्याहुति होती है ।

उपसदङ्गभूतं व्रतोपायनं विधत्ते—

**चतुरोऽग्रे स्तनान् व्रतमुपैत्युपसत्सु चतुःसंधिर्ह्यीषुरनीकं शल्यस्तेजनं पर्णानि ॥ इति ।**

'उपसत्सु' अनुष्ठीयमानासु, 'अग्रे' प्रथमदिने सायंकाले 'चतुरः स्तनान् व्रतमुपैति' व्रतशब्देनात्र पयःपानमुच्यते—गोश्चतुर्षु स्तनेषु यावत्पयस्तावत् पूर्वोक्तस्य बाणस्य चतुःसंधित्वादनीकाद्यवयवचतुष्टयोपेतत्वात् स्तनानां चतुःसंख्या युक्ता ॥

---

१. तै० सं० ६.२.३.१ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यजमान पहले दिन गाय के चार थनों से दूध पीने का कर्म [ = व्रत] करता है; क्योंकि उपसद् सम्बन्धी बाण के चार भाग होते हैं १. अनीक, २. शल्य, ३. तेजन और ४. पर्ण।

अनेनैव प्रकारेण द्वितीयोपसद्दिने प्रातःसायंकालयोस्तृतीयदिनस्य प्रातःकाले चैकैकन्यूनाः स्तनसंख्या विधत्ते—

**त्रीन् स्तनान् व्रतमुपैत्युपसत्सु त्रिषन्धिर्हीषुरनीकं शल्यस्तेजनं, द्वौ स्तनौ व्रतमुपैत्युपसत्सु द्विषन्धिर्हीषुः शल्यश्च ह्येव तेजनं चैकं स्तनं व्रतमुपैत्युपसत्स्वेका ह्येवेषुरित्याख्यायत एकया वीर्यं क्रियते ।। इति ।**

एतासां स्तनसंख्यानामुक्ताः कालविशेषा आपस्तम्बेनोदाहृताः—'चतुरः सायं दुह्यात्त्रीन् प्रातर्द्वौ सायमेकमुत्तमः'[1] इति ।।

द्वितीय उपसद् दिन के यजमान गाय के तीन थनों से दूध पीने का, कर्म करता है; क्योंकि उपसद्-सम्बन्धी बाण के तीन भाग होते हैं १. अनीक, २. शल्य, और ३. तेजन। दूसरे दिन सायंकाल यजमान गाय के दो थनों से दूध पीने का कर्म करता है क्योंकि उपसद् सम्बन्धी वाण के दो भाग १. शल्य और २. तेजन हैं। तीसरे दिन प्रातः-काल यजमान गाय के एक थन से दूध पीने का कर्म करता है क्योंकि उपसदों में एक ही वाण कहा जाता है और उस एक ही वाण के द्वारा पराक्रम किया जाता है।

यथोक्तं संख्याविशेषं प्रशंसति—

**परोवरीयांसो वा इमे लोका अर्वागंहीयांसः परस्तादर्वाचीरुपसद उपैत्येषामेव लोकानामभिजित्यै ।। इति ।**

इमे पृथिव्यन्तरिक्षद्युसप्तलोकाः[2] परोवरीयांसः परस्तादूर्ध्वभागे निवसन्तोऽत्यन्तं विस्तृताः। अर्वागधोभागेऽहीयांसोऽतिशयेनाणुवत्संकुचिताः। सत्यलोकादणुर्द्युलोकस्तस्मादप्यणुरन्तरिक्षलोकस्तस्मादप्यणुर्भूलोकः[3]। एवं सत्युपसदोऽपि परस्तादूर्ध्वलोकस्थानीयात् प्रथमदिनादारभ्य तत्तद्दिनान्तरदिनेषु स्तनसंख्याह्रासेनार्वाचीरुपैत्यनुतिष्ठतीति यदस्ति तदेषामेव लोकानामभिजयाय भवति ।।

ये-पृथ्वी, अन्तरिक्ष और द्यु आदि सात लोक ऊपर अत्यन्त विस्तृत हैं। नीचे ये लोक अत्यन्त संकुचित हैं। [सत्य लोक से द्युलोक छोटा है। उससे छोटा अन्तरिक्ष लोक है;

---

१. आप० श्रौ० ११.४.१०।

२, ३. पौराणिकमतेनैमौ लेखौ सायणस्य; वस्तुतस्त्रय एव लोकाः, द्युलोकनामसूर्यमण्डलात् पृथिव्या अतिक्षुद्रत्वे च श्रुतेस्तात्पर्यमितिदिक्।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

और उससे छोटा भू लोक है। इसी प्रकार परवर्ती लोक अपेक्षाकृत छोटे हैं उसी प्रकार] उपसद् भी क्रमशः न्यून होते हुए अनुष्ठित होते हैं अर्थात् [प्रथम दिन से आरम्भ करके अन्य दिनों में स्तन संख्या क्रम से घटती है] यह इन लोकों की विजय के लिए है।

अथ पूर्वाह्णापराह्णयोर्व्यवस्थिताः सामिधेनीर्विधत्ते—

'उपसद्याय मीळ्हुषे'[1] 'इमां मे अग्ने समिधमिमामुपसदं वनेः' इति, तिस्रस्तिस्रः सामिधेन्यो रूपसमृद्धा एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति ॥ इति।

उपसद्यायेत्याद्या आम्नातास्तिस्र[2] ऋचः पूर्वाह्णे सामिधेन्यः। 'इमां मे अग्ने' इत्यादिका आम्नातास्तिस्र[3] ऋचोऽपराह्णे सामिधेन्यः। मन्त्रान्तरशङ्काव्युदासेन वैशब्दार्थः कृत्स्नार्थपाठः 'उपसद्यायोपसदं वनेः' इत्युपशब्दयोगेन रूपसमृद्धिः[4] ॥

[अब पूर्वाह्ण और अपराह्ण उपसद् कर्म में सामिधेनियों का विधान करते हैं] 'उप सद्याय मीळ्हुषे' आदि तृच और 'इमां मे अग्ने समिधम्' आदि तृच का पाठ करना चाहिए। तीन-तीन सामिधेनी का पाठ करना चाहिए अर्थात् तीन पूर्वाह्ण में और तीन अपराह्ण में। यह रूप समृद्ध हैं अर्थात् अपने रूप में परिपूर्ण हैं। यही यज्ञ की समृद्धि है कि जो यज्ञ अपने रूप में समृद्ध है। कर्म जैसा किया जाने वाला है वैसा ही मन्त्रों के द्वारा वर्णित होना यही उसकी रूप समृद्धि है।

याज्यानुवाक्या विधत्ते—

जघ्निवतीर्याज्यानुवाक्याः कुर्यात् ॥ इति।

हन्तिधात्वर्थयुक्ता जघ्निवतीः ॥

याज्यानुवाक्या में जघ्निवती [अर्थात् जिसमें हन् धातु का प्रयोग हो] ऋचा का पाठ करना चाहिये।

तथाविधा ऋच उदाहरति—

'अग्निर्वृत्राणि जङ्घनद्' 'य उग्र इव शर्यहा' 'त्वं सोमासि सत्पति-र्गयस्फानो अमीवहेदं विष्णुर्वि चक्रमे त्रीणि पदा वि चक्रमे इत्येताः ॥ इति।

---

१. 'ळ्हकारतामेति स एव चास्य ढकारः सन्नूष्मणा संप्रयुक्तः'—इति ऋक् प्राति० १.५२।

२. ऋ० ७ १५. १-३। ३. ऋ० २. ६. १-३।

४ 'इमं मे अग्ने समिधम्'—इति प्रतीकवानस्त्यपरोऽपि मन्त्रः (ऋ० १०. ७०. १) परम् 'उपसदं वनेः'—इत्यंशस्य उपसद्रूपसमृद्धिहेतुभूतस्य तत्राश्रवणान्नात्र तस्य ग्रहणप्रसक्तिरिति भावः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'अग्निर्वृत्राणीति'[1] पुरोनुवाक्या। 'य उग्र इवेति'[2] याज्या। 'त्वं सोमेति'[3] पुरोनुवाक्या। 'गयस्फानः'[4] इति याज्या। 'इदं विष्णुरिति'[5] पुरोनुवाक्या। 'त्रीणि पदेति'[6] याज्या। एताश्चाग्न्यादिदेवानां क्रमेण द्रष्टव्याः॥

ये ऋचाएँ हैं—'अग्निर्वृत्राणि', 'य उग्र इव', 'त्वं सोमासि', 'गयस्फानः' और 'इदं विष्णुर्वि चक्रमे' तथा 'त्रीणि पदा विचक्रमे'।

याः पूर्वाह्णे पुरोनुवाक्या उक्तास्तासामपराह्णे याज्यात्वं तथा तत्रत्यानां याज्यानामपराह्णे पुरोनुवाक्यात्वं च विधत्ते—

**विपर्यस्ताभिरपराह्णे यजति॥ इति।**

[प्रातःकाल का क्रम यही है अर्थात् पहली तीन याज्या होंगी और बाद की तीन अनुवाक्या होंगी। किन्तु] अपराह्णकाल में क्रम उलटकर यजन करना चाहिए। [अर्थात् पिछली तीन याज्या होंगी और पहली तीन अनुवाक्या होंगी]।

यथोक्तयाज्यानुवाक्यायुक्ता उपसदः प्रशंसति—

**घ्नन्तो वा एताभिर्देवाः पुरो भिन्दन्त आयन् यदुपसदः॥ इति।**

या उक्तमन्त्रोपेता उपसदः सन्ति, एताभिर्देवा असुराणां तिस्रः पुरो विदारयन्तोऽसुरांश्च हिंसन्त आगताः॥

[इन मन्त्रों से युक्त जो उपसद् हैं] इन्हीं से असुरों के पुरों को विदीर्ण करते हुए देव आए।

उदाहृतासु याज्यानुवाक्यासु सर्वासु यदेकविधं छन्दो दृश्यते न तु विलक्षणं तदन्वयव्यतिरेकाभ्यां विशदयति—

**सच्छन्दसः कर्तव्या न विच्छन्दसः॥ इति।**

समानं छन्दो यासां ताः सच्छन्दसः। विलक्षणं छन्दो यासां ता विच्छन्दसः॥

एक ही छन्द वाली ऋचाओं का प्रयोग करना चाहिए; भिन्न-भिन्न छन्दों वाली ऋचाओं का नहीं।

वैलक्षण्ये बाधमाह—

**यद्विच्छन्दसः कुर्याद् ग्रीवासु तद्गण्डं दध्यादीश्वरो ग्लावो जनितोः॥ इति।**

---

१. ऋ० ६. १६. ३४। २. ऋ० ६ १६. ३९।
३. ऋ० १. ९१. ५। ४ ऋ० १ ९१. १२।
५. ऋ० १. २२. १७। ६. ऋ० १. २२. १८।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विलक्षणच्छन्दसामनुष्ठाने ग्रीवास्थानीयासूपसत्सु गण्डमालाख्यरोगस्थानीयं दोषं दध्याद् उत्पादयेत् । तथा सति होता यजमानस्य ग्लानिविशेषाञ्जनितोरुत्पादयितुमीश्वरः समर्थो भवेत् ॥

यदि होता भिन्न छन्दों वाली ऋचाओं का प्रयोग करे तो वह यजमान की ग्रीवा में गण्डमाला नामक रोग उत्पन्न करे । इस प्रकार होता रोग उत्पन्न करने में समर्थ है ।

अस्वपक्षे बाधमुक्त्वा स्वपक्षमुपसंहरति—

तस्मात् सच्छन्दस एव कर्तव्या न विच्छन्दसः ॥ इति ।

इसलिए उपसद् इष्टि के देवताओं का यजन सदा एक ही छन्द से करना चाहिए विभिन्न छन्दों वाले मन्त्रों से नहीं ।

उपसदामाज्यहविष्कत्वं प्रशंसति—

तदु ह स्माऽऽहोपाविर्जानश्रुतेय उपसदां किल वै तद्ब्राह्मणे यस्मादप्यश्लीलस्य श्रोत्रियस्य मुखं व्येव ज्ञायते तृप्तमिव रेभतीवेत्याज्यहविषो ह्युपसदो ग्रीवासु मुखमध्याहितं तस्माद्ध स्म तदाह ॥ इति ।

तदु ह तस्मिन्नेवोक्तार्थे कश्चिद्वृत्तान्त उच्यत इति शेषः । उपाविर्नामकः कश्चिदृषिः स तु जानश्रुतेयः, जनश्रुतायाः स्त्रिया अपत्यं स पुमानुपसदां किल वै, उपसन्नामकानां कर्मणामेव विधायके ब्राह्मणे तद्वाक्यमाह स्म । किमाहेति तदुच्यते—यस्मात्कारणादश्लीलस्यापि कुरूपस्य श्रोत्रियस्य वेदशास्त्रविदो मुखं तृप्तमिव दैन्यहीनतया तृप्तियुक्तमेव रेभतीव वेदशास्त्रपाठोपेतत्वाच्छंसन्निव व्येव ज्ञायते विशेषेणावश्यं प्रतीयते—इत्येतदृष्टेर्वचनम् । तस्य वचनस्याभिप्राय उच्यते—ग्रीवास्थानीया उपसद आज्यहविष्का अत एव शोभमानाः । लोकेऽपि शोभमानासु ग्रीवासु, अध्याहितमाश्रितं मुखं श्रोत्रियसंबन्धितृप्त्याद्युपेतं दृश्यते । तस्मात् कारणाच्छोभनग्रीवाहितमुखसाम्यमाज्यहविष्कत्वमित्यभिप्रेत्य स ऋषिस्तद्वाक्यमाह[1] ॥

अथ मीमांसा । चतुर्थाध्यायस्य द्वितीयपादे चिन्तितम्—

'यदातिथ्याबर्हिरेतदुपसत्स्वतिदेशनम् ।
साधारण्यविधिर्वाऽऽद्यस्तदीयस्योपसंहृतेः ॥
बर्हिःश्रुत्यैकताभानान्नातिदेशस्य लक्षणा ।
आतिथ्ययोपसद्भिश्च बर्हिरेतत्प्रयुज्यते ॥'[2]

---

१. वक्त्रनुक्तौ तु सर्वत्र स्वयं महिदासैतरेय एव वक्तेत्याह—इति षड्गुरुशिष्यः पृ० ७४, १६३ ।

२. जै० न्या० वि० ४.२.१४.२९–३० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ज्योतिष्टोमे श्रूयते—यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य चेति। क्रीतं सोमं शकटेऽवस्थाप्य प्राचीनवंशं प्रत्यानयनेऽभिमुखो यामिष्टिं निर्वपति सेयमातिथ्या। तत ऊर्ध्वं त्रिषु दिनेष्वनुष्ठीयमाना उपसदः। औपवसथ्ये दिनेऽनुष्ठेयः सोऽग्नीषोमीयः। तत्र आतिथ्येष्टौ विहितं यद्बर्हिस्तद्यदि तस्या इष्टेराच्छिद्योपसत्सु विधीयेत तदानीमातिथ्याविधानमनर्थकं स्यात्। यदि तत्रोपयुक्तमितरत्र विधीयते विनियुक्तविनियोगरूपो विरोधः स्यात्। तस्मादातिथ्याबर्हिषो ये धर्मा आश्ववालत्वादयस्ते धर्मा उपसत्सूपसंह्रियन्त इत्यतिदेशपरं वाक्यमिति प्राप्ते ब्रूमः—बर्हिःशब्दस्य धर्मातिदेशपरत्वे लक्षणा प्रसज्येत। श्रुत्या तु बर्हिष आतिथ्योपसदग्नीषोमीयेष्वेकत्वं प्रतिभात्यतः साधारण्यमत्र विधेयम्। आतिथ्यार्थं यद्बर्हिरुपादीयते तन्न केवलमातिथ्यार्थं किंतूपसदर्थमग्नीषोमीयार्थं चोपादेयमिति विधिवाक्यस्यार्थः। तस्मादातिथ्योपसदग्नीषोमीयास्त्रयोऽप्यस्य बर्हिषः प्रयोजकाः।

द्वादशाध्यायस्य प्रथमपादे चिन्तितम्—

"आतिथ्यादिगते बर्हिष्युक्षणादि पृथङ्न वा।
आद्योऽतन्त्रप्रसङ्गत्वान्न प्रसङ्गानिवारणात्॥"[1]

"यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्येति श्रुतं तत्र बर्हिस्त्रयाणां साधारणमिति चतुर्थे निरूपितम्।[2] तस्मिन् साधारणे बर्हिषि प्रोक्षणादिसंस्काराः प्रतिकर्म पृथगनुष्ठेयाः। कुतः? तन्त्रप्रसङ्गयोरत्रासंभवात्। न तावत्तन्त्रमस्ति, दर्शगतयागत्रयवदेककालीनत्वाभावात्। नापि प्रसङ्गः, एकस्य तन्त्रमध्येऽन्ययोरपठितत्वाद् इति प्राप्ते ब्रूमः—बर्हिष एकत्वात्सकृत्प्रोक्षणादिभिः संस्कारे पुनः प्रोक्षणाद्यपेक्षा नास्ति। ते च प्रोक्षणादयः प्राथम्यादातिथ्यायां कार्याः। तत उपसत्स्वग्नीषोमीये च प्रसङ्गसिद्धिर्न वारयितुं शक्यते"॥

॥ इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेय-
ब्राह्मणभाष्ये चतुर्थाध्यायेऽष्टमः खण्डः॥८॥ [२५]

उसी के सम्बन्ध में एक वृत्तान्त कहते हैं। जनश्रुति के लड़के उपावि नामक किसी ऋषि ने उपसदों के सम्बन्ध में ब्राह्मण में इस प्रकार कहा है—क्योंकि श्रोत्रिय का कुरूप मुख भी वेदशास्त्र के गान से युक्त होने के कारण विशेष रूप से तृप्त सा अर्थात् भरा-भरा सा लगता है। उस ऋषि ने इसलिए यह कहा है कि उपसद् में जो आज्य हवि होती है वह ग्रीवा और मुख पर [तृप्ति से युक्त होने के कारण] आश्रित होती हैं।

॥ इस प्रकार चतुर्थ अध्याय में आठवें खण्ड की हिन्दी पूर्ण हुई॥ ८॥

---

१. जै० न्या० वि० १२.१.१९.४२–४३।
२. जै० न्या० वि० ४.२.१४.३०।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ नवमः खण्डः

अथोपसत्सु प्रयाजाननुयाजांश्च निषेधति—

**देववर्म वा एतद्यत्प्रयाजाश्चानुयाजाश्चाप्रयाजमननुयाजं भवतीष्वै संशित्या अप्रतिशराय ॥ इति ।**

ये प्रयाजा ये चानुयाजाः सन्ति तदुभयं देवानां वर्म वै कवचस्थानीयम् । अत एव शाखान्तरे समामनन्ति—'यत्प्रयाजा अनूयाजा इज्यन्ते, वर्म वा एतद्यज्ञाय क्रियते, वर्म यजमानाय भ्रातृव्याभिभूत्यै'[1] इति । एवं सत्युपसदाख्यं कर्म प्रयाजानुयाजरहितं कर्तव्यं कवचस्यानुपयुक्तत्वात् । परकीयप्रहाराद् रक्षार्थं हि कवचं संपाद्यते । नात्र परप्रहारः संभवति । पूर्वोक्ताया इषोस्तीक्ष्णत्वेन सकृत् प्रयोगादेव मारितेषु शत्रुषु प्रहर्तॄणामभावात् । एवं सति यदि कवचं संपाद्यते तदानीं स्वकीयाया इषोरतीक्ष्णत्वं शङ्क्येत स्वस्य च शत्रुभिः संपादिता प्रतिहिंसा शङ्क्येत, तच्चायुक्तम् । तस्मादिष्वै संशित्यै स्वकीयस्य बाणस्य सम्यक्तीक्ष्णत्वार्थमप्रतिशराय स्वेषु शत्रुकर्तृकप्रतिहिंसायाः शङ्कापरिहारार्थं च प्रयाजानुयाजवर्जनं युक्तम् । तथा च आश्वलायन आह—'स्विष्टकृदादि लुप्यते प्रयाजा आज्यभागौ च'[2] इति । स्विष्टकृदादिष्वन्तर्भावादनुयाजलोपो युक्त एव ॥

i. २६ [iv. ९] ये जो प्रयाज और अनुयाज हैं वे दोनों ही देवताओं के कवच हैं । अतः उपसद नामक कर्म प्रयाज और अनुयाज रहित करना चाहिये जिससे बाण तीक्ष्ण हो और शत्रुकृत प्रहार से बचा जा सके । [वस्तुतः दूसरे के प्रहार से बचने के लिए कवच पहनते हैं । तीक्ष्ण बाण के प्रहार से शत्रु का नाश पहले ही हो जाता है । अतः शत्रु के अभाव में प्रतिहिंसा की कोई सम्भावना ही नहीं होती । अतः प्रयाज-अनुयाज रूप कवच की आवश्यकता ही नहीं है] ।

अत्राग्नीषोमविष्णुरूपाणां देवानां बहुत्वेनाऽऽश्रावणार्थमुत्तरस्माद्देशादाहवनीयस्य दक्षिणदेशं प्रत्यसकृदतिक्रमणं प्राप्तं तद् वारयितुमाह—

**सकृदतिक्रम्याऽऽश्रावयति यज्ञस्याभिक्रान्त्या अनपक्रमाय ॥ इति ।**

वेद्याहवनीययोर्मध्ये सकृदेवातिक्रम्य दक्षिणदिश्यवस्थितो बहुषु यागेषु प्रत्येकमाश्रावणं कुर्यात् । एवं सत्युपसद्यज्ञस्य सर्वत आक्रमणं भवति स्थैर्यं भवति । अन्यथा पुनः पुनरुत्तरस्यां दिशि गमने लब्धावसरः सन्यज्ञोऽप्यपक्रामेत्[3] । तस्मात् सकृदेवातिक्रमणं

---

१. तै० सं० २.६.१.५ ।

२. आश्व० श्रौ० ४.८.८ ।

३. अभिक्रान्त्यै अभिक्रमणाय भवति अनभिक्रान्तश्च नातिदूरं गतः । प्रयाजानुयाजानामननुष्ठाने सकृदभिक्रमणे चोपसद्यागः शीघ्रमनुष्ठितो भवतीत्यर्थः—इति गोविन्दस्वामी ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

युक्तम् । तदाहाऽऽपस्तम्बः—'ध्रौवादष्टौ जुह्वां गृह्णाति चतुर उपभृति घृतवति शब्दे जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्त उपांशुयाजवत् प्रचरति'[1] इति ॥

[वेदि और आहवनीय के बीच दक्षिण देश के प्रति कई बार उल्लङ्घन प्राप्त था उसी का वारण करते हैं कि] वेदि और आहवनीय के मध्य एक बार खड़े होकर होता मन्त्र का पाठ करता है जिससे यज्ञ पर अधिकार रहे और यज्ञ चला न जाय ।

अथ समन्त्रकं सोमाप्यायनं विधातुं प्रस्तौति—

**तदाहुः क्रूरमिव वा एतत् सोमस्य राज्ञोऽन्ते चरन्ति यदस्य घृतेनान्ते चरन्ति घृतेन हि वज्रेणेन्द्रो वृत्रमहन् ॥ इति ।**

तत्तत्र ब्रह्मवादिन एवमाहुः—सोमस्य राज्ञोऽन्ते समीपे घृतेन द्रव्येण तानूनप्त्रसंज्ञकं कर्म चरन्त्यनुतिष्ठन्तीति यदस्ति तदेतत् सोमस्य राज्ञः समीपे क्रूरमिव वै, उग्रमेव कर्म चरन्ति । हि यस्मात् कारणाद् घृतरूपेण वज्रेणेन्द्रो वृत्रं हतवान्, तस्माद् घृतकर्म क्रूरम् । तच्छाखान्तरे विस्पष्टमाम्नातम्—'घृतं खलु वै देवा वज्रं कृत्वा सोममघ्नन्नन्तिकमिव खलु वा अस्यैतच्चरन्ति यत्तानूनप्त्रेण चरन्ति'[2] इति ॥

इस सम्बन्ध में ब्रह्मवादी इस प्रकार कहते हैं—सोम राजा के समीप घृत से 'तानूनप्त्र' संज्ञक जो कर्म करते हैं वह सोम राजा के समीप क्रूरता करने के समान है; क्योंकि घृत रूप वज्र से इन्द्र ने वृत्र को मारा था ।

तस्य क्रूरकर्मणः परिहाराय विधत्ते—

**दद्यदंशुरंशुष्टे देव सोमाऽऽप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वाऽऽप्याययास्मान् सखीन् । सन्या मेधया स्वस्ति ते देव सोम सुत्यामुदृचमशीयेति राजानमाप्याययन्ति यदेवास्य तत्क्रूरमिवान्ते चरन्ति तदेवास्यैतेनाऽऽप्याययन्त्यथो एनं वर्धयन्त्येव ॥ इति ।**

यद्यस्मात्कारणात् सोमस्य राज्ञः समीपे घृतसाधनकं तानूनप्त्रं कर्म क्रूरं तत् तस्मात्कारणात् क्रौर्यपरिहारायांशुरंशुरिति मन्त्रेण सोमं राजानमाप्याययेयुः । जलेन प्रोक्षणमाप्यायनम् । एवं सति यत्क्रूरमाचरितं तत्सर्वमेतेन प्रोक्षणेनाऽऽप्याययन्ति शमयन्ति । अपि चैनं सोमं वर्धयन्त्येव । मन्त्रस्यायमर्थः—हे सोम देव, इन्द्रार्थं तत्त्वदीयोऽ-

---

१. आप० श्रौ० ११.३.९–१० ।　　　　२. तै० सं० ६.२.२.४ ।

३. तैत्तिरीयसंहितायामप्येष मन्त्रः श्रूयते (१.२.११.१), परं तत्र इमे पाठा इतो विभिन्नाः—'अंशुं शुष्टे', 'प्यायय सखीन्', 'सुत्या मशीय'—इति । 'आशिषमेवैतामाशास्ते'—इति च तद्ब्राह्मणम् (तै० सं० ६.२.२) । वाजसनेयिनाञ्च 'सुत्या मशीय'—इत्येव ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शुस्त्वदवयव आप्यायतां वर्धताम् । कीदृशायेन्द्राय ? एकधनविदे । सोमरूपं यदेकं धनं तद्वेत्ति विन्दते वेत्येकधनवित् । तस्मा एकधनविदे । तुभ्यं तदर्थमिन्द्रो वर्धतामिन्द्रार्थं च त्वं वर्धस्व । सखीनस्मान् सन्या क्षेमेण मेधया यज्ञप्रतिपादकग्रन्थधारणाशक्त्या चाऽऽप्यायय वर्धय । हे सोम देव ते स्वस्ति क्षेमोऽस्तु । यस्यां क्रियायां सोमः सूयतेऽभिषूयते सा सुत्या । उदुत्तमा समाप्तिविषयर्यस्यां सुत्यायां सेयमुदृक्तां सुत्यामुदृचमशीय प्राप्नुयां विघ्नमन्तरेण समाप्तिपर्यन्तमनुतिष्ठेयमिति[1] । श्रौत इतिशब्दो मन्त्रसमाप्त्यर्थः ॥

उस [क्रूर कर्म] के परिहार के लिए 'अंशुरंशुष्टे...अशीय' अर्थात् 'हे सोम देव ! मात्र सोम रूप धन को जानने वाले इन्द्र के लिए तुम्हारे अवयव बढ़ें । तुम्हारे लिये इन्द्र बढ़ें और तुम इन्द्र के लिए बढ़ो । मित्र के समान हमें क्षेम और मेधा [=यज्ञ प्रतिपादक ग्रन्थ-स्मरण की शक्ति] के द्वारा बढ़ाओ । हे सोम देव ! तुम्हारा कल्याण हो । सुत्या [=सोम निचोड़ने की क्रिया] के उपसंहार को प्राप्त करूँ अर्थात् कर्मसमाप्ति पर्यन्त बिना विघ्न के अनुष्ठान करूँ'—इस मन्त्र से सोम राजा पर जल छिड़कते हैं । ऐसा करने से किए गए क्रूर कर्म की शान्ति हो जाती है और [शान्ति ही नहीं अपितु] वे सोम को बढ़ाते ही हैं ।

समन्त्रकं निह्नवं विधत्ते—

**द्यावापृथिव्योर्वा एष गर्भो यत्सोमो राजा तद्यद् 'एष्टा राय एष्टा वामानि प्रेषे भगाय । ऋतमृतवादिभ्यो नमो दिवे नमः पृथिव्या' इति प्रस्तरे निह्नवते द्यावापृथिवीभ्यामेव तं नमस्कुर्वन्त्यथो एने वर्धयन्त्येव वर्धयन्त्येव ॥ २६ ॥**

॥ इत्यैतरेयब्राह्मणे प्रथमपञ्चिकायां चतुर्थोऽध्यायः ॥ ४ ॥

यः सोमो राजा, एष द्यावापृथिव्योरेव गर्भः । यद्यस्मादेवं तत्तस्माद् गर्भरक्षार्थं प्रस्तर एतन्नामके दर्भमुष्टौ निह्नुवते संप्रणयन्ति नमस्कारोपचारं कुर्युरित्यर्थः । तदेतद्-द्यावापृथिवीभ्यामित्यादिना स्पष्टी क्रियते । अपि चैने द्यावापृथिव्यौ वर्धयन्त्येव । उत्साहयुक्ते कुर्वन्त्येव । निह्नवप्रकार आपस्तम्बेन दर्शितः—'अथ निह्नवते—दक्षिणे वेद्यन्ते प्रस्तरं निधाय दक्षिणान् पाणिनुत्तानान् कृत्वा सव्यान्नीच एष्टा रायः प्रेषे भगायेति'[2] इति । अस्मादभ्युदयमिच्छतीत्येष्टा प्रस्तरः सोमो वा । देहीति पदमध्याहर्तव्यम् । हे एष्टः, इषे अन्नार्थं भगाय सौभाग्यार्थं च रायो धनानि प्रदेहि । 'यद्वा, एष्टेति प्रथमान्तं तदानीं प्रददात्वित्यध्याहारः । किंच, एष्टा वामान्यन्यानपि कामान् प्रददातु ऋतवादिभ्यः सत्यवादिभ्यो देवेभ्य ऋत्विग्यजमानेभ्यो वा । ऋतं सत्यं वदामीति शेषः । तदेव सत्यवचनं स्पष्टमुच्यते । दिवे द्युलोकदेवतायै नमोऽस्तु । पृथिव्यै

१. वा० स० ५.७.१ ।        २. आप० श्रौ० ११.१.१२ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

भूलोकदेवतायै नमोऽस्त्विति[1]। श्रौत इतिशब्दो मन्त्रसमाप्त्यर्थः। वर्धयन्त्येवेत्यभ्यासोऽध्यायसमाप्त्यर्थः ॥

अत्र मीमांसा—दशमाध्यायस्य सप्तमे पादे चिन्तितम्—

उपसत्सु निषिद्धेभ्यः शिष्टं सर्वं समाचरेत्।
यावदुक्तमुताऽऽद्योऽस्तु चोदकस्यानिवारणात् ॥
स्रौवाघारे पुनः श्रुत्या शिष्टस्य परिसंख्यया।
अपूर्वार्थत्वतो वाऽन्त्योऽनुवादः प्रतिषेधगीः ॥[2]

ज्योतिष्टोमे विहितासूपसत्सु पठ्यते—'अप्रयाजास्ता अननुयाजाः'[3] इति। तत्र निषिद्धान् प्रयाजानुयाजान् वर्जयित्वाऽवशिष्टं चोदकप्राप्तमङ्गजातं सर्वमाचरणीयमिति प्राप्ते, ब्रूमः—प्रकृतौ विहित एव स्रौवाघारः पुनरिह विधीयते। स च चोदकप्राप्तमन्यत्सर्वमङ्गजातं परिसंचष्टे। अन्यथा पुनर्विधानवैयर्थ्यात्। ननु पुनर्विधानं प्रतिप्रसवार्थमत एव श्रुतिरत्र स्रौवाघारमभावशङ्कानिराकरणपूर्वकं विदधाति—'नान्यामाहुतिं पुरस्ताज्जुहुयाद्यदन्यामाहुतिं पुरस्ताज्जुहुयादन्यन्मुखं कुर्यात् स्रुवेणाऽऽघारमाघारयति'[4] इति। अयमर्थः—स्रौवाघारः सर्वत्र यज्ञस्य मुखं तथा सति यदि कश्चिन्मन्द उपसत्प्रयोगादौ स्रौवाघारमहुत्वा तस्य स्थाने कांचिदन्यामाहुतिं जुहुयात् तदा मुखव्यत्यासेन प्रत्यवायं प्राप्नुयात्। तस्मात् स्रौवाघार आदौ कर्तव्य इति नैतद्युक्तम्। चोदकप्राप्तस्याऽऽघारस्याकस्मादभावशङ्काया अयुक्तत्वात्। तस्मात् परिसंख्यार्थ एव पुनर्विधिः। आहुत्यन्तरनिन्दा तु तच्छेषभूतोऽर्थवादः। यदि परिसंख्या साऽपि त्रिदोषेत्युच्यते तर्हि गृहमेधीयवदपूर्वं कर्मास्तु[5]। प्रयाजादिनिषेधो नित्यानुवादः। सर्वथा यावदुक्तमत्रानुष्ठेयम्'[6] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये प्रथमपञ्चिकायां चतुर्थाध्याये नवमः खण्डः ॥ ९ ॥ [२६]

---

१. वा० स० ५.७.२। तै० स० १.२.११.२।

२. जै० न्या० वि० १०.७.१४.४३,४६। ३. कात्या० श्रौ० ६.१०.२२,२३।

४. स्रुवेणाघारमाघारयति यज्ञस्य प्रज्ञात्यै—इति तै० सं० ६.२.३.३।

५. जै० न्या० वि० १०.७.९.२४–३३।

६. उपसदिष्टेरङ्गभूतानि तानूनप्त्रादीनि कर्माणि शत० ब्राह्मणे २.४ अध्याये विहितानि; तै० सं० १.२.११; ६.२.२–६; तथा कल्पसूत्रेषु च; आश्व० श्रौ० ४.५.३–८। आप० श्रौ० ११.१.१–१२। कात्या० श्रौ० ८.१.२४। तत्रैव च वृत्तौ 'अथ सौकर्याय उपसदः प्रयोग उच्यते'—इत्यादिना उपसदिष्टि प्रयोगः समन्ताद् वर्णितः। अथातिथ्येष्टौ प्रकृतिवत् कुशमयः प्रस्तरो भवति। उपसदिष्टौ तु आश्ववालः प्रस्तरः (तै० सं० ६.२.१; कात्या० श्रौ० ८.१.१३)। आश्ववालाः काशाख्या दर्भविशेषाः'—इति तत्रोक्तं सायणेनेति।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरम् ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरं-
धरमाधवाचार्यदेशतोसायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश
नामभाष्ये ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायाः चतुर्थोऽध्यायः ॥ ४ ॥

जो सोम राजा है वह द्यु और पृथिवी का गर्भ है। 'हे प्रस्तर अथवा सोम, अन्न के लिए और सौभाग्य के लिए हमें धनों को दो और अन्य कामनाओं की भी पूर्ति करो। सत्यवादी देवताओं अथवा ऋत्विज् एवं यजमान के लिए सत्य कहता हूँ। द्युलोक के देवताओं के लिए नमस्कार होवे। भूलोक के देवताओं के लिए नमस्कार होवे'—इस मन्त्र से प्रस्तर अर्थात् कुश के दो बण्डल को निह्नव [=नमस्कारोपचारपूर्वक संप्रणयन] करते हैं अर्थात् वेदि के दक्षिण किनारे पर रख देते हैं। ऐसा करके वे वस्तुतः द्यु और पृथिवी को नमस्कार करते हैं, जिससे वह दोनों को बढ़ाते हैं।

॥ इस प्रकार चतुर्थ अध्याय के नवम खण्ड की हिन्दी पूर्ण हुई ॥ ९ ॥

॥ इस प्रकार ऐतरेय ब्राह्मण की प्रथम पञ्चिका के चतुर्थ
अध्याय की हिन्दी पूर्ण हुई ॥ ४ ॥

---

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ पञ्चमोऽध्यायः

## अथ प्रथमः खण्डः

अभिष्टवोपसत्तानूनतप्त्राप्यायननिह्नवाः ।

कथिता घर्मसंभारा व्रतोपायनमेव च ॥ १ ॥

अथ सोमक्रयाद्या वक्तव्याः । तत्र क्रयं वक्तुमाख्यायिकामाह—

**सोमो वै राजा गन्धर्वेष्वासीत्तं देवाश्च ऋषयश्चाभ्यध्यायन् कथमयमस्मान् सोमो राजाऽऽगच्छेदिति सा वागब्रवीत् स्त्रीकामा वै गन्धर्वा मयैव स्त्रिया भूतया पणध्वमिति नेति देवा अब्रुवन् कथं वयं त्वदृते स्यामेति साऽब्रवीत् क्रीणीतैव यर्हि वाव वो मयाऽर्थो भविता तर्ह्येव वोऽहं पुनरागन्ताऽस्मीति तथेति तया महानग्न्या भूतया सोमं राजानमक्रीणन् ॥ इति ।**

स्वानभ्राजेत्यादिनामधारिणो गन्धर्वा द्युलोके सोमस्य रक्षकाः । तच्च शाखान्तरे मन्त्रव्याख्यानब्राह्मणे श्रूयते—'स्वानभ्राजेत्याह । एतेषाममुष्मिँल्लोके सोममरक्षन्'[1] इति । अथवा विश्वावसुप्रभृतयः सोमस्यापहन्तारो गन्धर्वाः । तदपि तत्रैव श्रुतम्—'तं सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात्स तिस्रो रात्रीः परिमुषितोऽवसत्'[2] इति । तेषु गन्धर्वेषु यः सोम आसीत्तं सोमं मित्रादयो देवा वसिष्ठादिऋषयश्च केन प्रकारेण सोमोऽस्मान् प्राप्नुयादिति विचारितवन्तः । तदानीं गन्धर्वहृदयाभिज्ञा वाग्देवी देवानब्रवीत् । गन्धर्वाः सर्वेऽपि स्त्रीलम्पटा, अहं च स्त्री भूत्वा तिष्ठाम्यतो मया पणध्वं सोममूल्यत्वेन मां गन्धर्वाणामग्रे कुरुतेति । ततो देवा अनङ्गीकृत्य त्वदृते त्वां वाचं विना वयं कथं स्याम मन्त्ररूपवाग्राहित्ये सति कर्मणामप्रवृत्तेः केन प्रकारेण वयं जीवामेति वाचमब्रुवन् । ततो वाग्देवानब्रवीत् । संदेहं मा कुरुतावश्यं मया मूल्येन क्रीणीत यदैव मया युष्माकं प्रयोजनं भविष्यति तदैवाहं पुनरपि युष्मान् प्राप्स्यामीति । ततो देवा अङ्गीकृत्य तया वाचा सोममक्रीणन् । कीदृश्या महानग्न्या । महती चासौ नग्नी च महानग्नी तया । रूपसंपत्तिविवक्षया महत्त्वमुच्यते । बाल्यविवक्षया नग्नत्वम् । भूतया तदानीमेव कुमारीरूपेण निष्पन्नया । तदेतच्छाखान्तरे स्पष्टमाम्नातम्—'ते देवा अब्रुवन्

---

१. तै० सं० ६.१.१०.५ । स्वानभ्राज'—इति मन्त्रस्तु तैत्तिरीयसंहिताम्नातः (१.२.७) ।

२. तै० सं० ६.१.६.५ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्त्रीकामा वै गन्धर्वाः स्त्रिया निष्क्रीणामेति। ते वाचं स्त्रियमेकहायनीं कृत्वा तया निरक्रीणन्'[1] इति ॥

[सोम-क्रय एवं अग्नि-प्रणयन]—

i. २७ [v. १] सोम राजा गन्धर्वों के पास थे। देवताओं और ऋषियों ने विचार किया कि यह सोम राजा हम तक कैसे आवें। [क्योंकि द्युलोक में सोमरक्षक गन्धर्वों के पास रहते हैं। उनका स्वभाव जानने वाली] वाणी ने कहा कि गन्धर्व स्त्रियों को चाहते हैं। मैं स्त्री बन जाऊँगी। तब तुम [सोम के बदले] मुझे बेच देना। देवताओं ने कहा—नहीं, हम तुम्हारे बिना अर्थात् मन्त्ररूप वाणी के बिना कैसे रहेंगे। उसने [पुनः] कहा—[सन्देह मत करो और] मुझे उनके हाथ बेच दो। यदि तुम चाहोगे तो मैं तुम्हारे पास पुनः लौट आऊँगी। उन्होंने ऐसा ही किया, और एक बहुत नग्न स्त्री अर्थात् कुमारी के रूप में उसे बेच कर सोम ले लिया।

इदानीं सोमक्रयं विधत्ते—

**तामनुकृतिमस्कन्नां वत्सतरीमाजन्ति सोमक्रयणीं तया सोमं राजानं क्रीणन्ति ॥ इति।**

तामनुकृतिं तां स्त्रीरूपां वाचमनुक्रियमाणां निष्पन्नां तत्सदृशीमित्यर्थः। अस्कन्नां वीर्यस्कदनरहितामप्राप्तयौवनां वत्सतरीमतिशयेन बालां सोमक्रयसाधनभूतां कांचिद्गामाजन्ति संपादयेयुरित्यर्थः। तया तादृश्या गवा सोमं राजानं क्रीणन्ति क्रीणीयुः। तां गां मूल्यरूपेण दत्त्वा सोमं स्वीकुर्युः ॥

उसी के अनुकरण के रूप में एक बछिया के बदले सोम राजा को खरीदा जाता है।

मूल्यत्वेन सोमविक्रयणे दत्ता या गौस्तस्याः पुनर्मूल्यान्तरदानेन स्वीकरणं विधत्ते—

**तां पुनर्निष्क्रीणीयात् पुनर्हि सा तानागच्छत्। इति।**

यस्मादियं वाग्गन्धर्वेभ्यो निष्क्रम्य पुनस्तान् देवान् प्राप्नोत् तस्मात्सोमक्रयण्याः पुनरादानं युक्तम्। वाचो वृत्तान्तः शाखान्तरे स्पष्टमाम्नातः—'सा रोहिद् रूपं कृत्वा गन्धर्वेभ्योऽपक्रम्याऽतिष्ठत्तद्रोहितो जन्म ते देवा अब्रुवन्नयं युष्मदक्रमीन्नास्मादुपावर्तते विह्वयामहा इति ब्रह्मगन्धर्वा अवदन्नगायन् देवाः सा देवान् गायन्नुपावर्तत तस्माद् गायन्तं स्त्रियः कामयन्ते'[2] इति ॥

और उस बछिया को पुनः वापिस खरीद लेते हैं, क्योंकि वह वाणी वापस आ गई थी।

---

१. तै० सं० ६.१.६.५।

२. तै० सं० ६.१.६.५, ६।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मन्त्राणां मन्द्रध्वनिं विधत्ते—

**तस्मादुपांशु वाचा चरितव्यं सोमे राजनि क्रीते गन्धर्वेषु हि तर्हि वाग्भवति साऽग्नावेव प्रणीयमाने पुनरागच्छति ।। २७ ।।** इति ।

सोमक्रयादूर्ध्वंकाले मूल्यरूपा वाग्देवी गन्धर्वेषु तिष्ठति पुनरप्यग्नौ प्रणीयमाने देवानागच्छति । यस्मादेवं तस्मात् सोमक्रयादूर्ध्वमग्निप्रणयनात् प्राग्वाचोपांशु चरितव्यम् । यथा परैर्ध्वनिर्न श्रूयते तथा मन्त्रपाठादिकं कर्तव्यमित्यर्थः ।।

अत्र मीमांसा । द्वादशाध्यायस्य चतुर्थपादे चिन्तितम्—

"क्रयणेषु विकल्पः स्यात्साहित्यं वाऽग्रिमी यतः ।
कार्यैक्यामानतेर्लाभाद्दशोक्तेश्च समुच्चयः[1] ।।"

"अजया क्रीणाति, हिरण्येन क्रीणाति, वाससा क्रीणाति"—इत्यादीनि बहूनि सोमक्रयसाधनानि द्रव्याण्यम्नातानि[2] । तेषां कार्यैक्याद्विकल्पः—इति चेन्मैवम् । बहुभिर्द्रव्यैर्विक्रेतुरानतेः सौलभ्याद् 'दशभिः क्रीणाति' इति संख्योक्तेश्च[3] समुच्चयः ।।

।। इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चमाध्यायस्य प्रथमः खण्डः ।। १ ।। [२७]

क्योंकि सोम खरीदने के बाद वाग्देवी गन्धर्वों के पास रहती है; इसलिए [सोम खरीदने के बाद अग्नि प्रणयन के पहले] मन्त्र मन में [उपांशु] बोलना चाहिए [क्योंकि] अग्निप्रणयन [अर्थात् अग्नि को उत्तर वेदि में ले जाने] के बाद वह पुनः वापस आ जाती है ।

।। इस प्रकार पञ्चम अध्याय में प्रथम खण्ड की हिन्दी पूर्ण हुई ।। १ ।।

## अथ द्वितीयः खण्डः

सोमक्रयमभिधायाग्निप्रणयनीया ऋचो विधातुमादौ प्रैषमन्त्रं विधत्ते—

**अग्नये प्रणीयमानायानुब्रूहीत्याहाध्वर्युः ।।** इति ।

---

१. जै० न्या० वि० १२.४.७.४ ।

२. तै० सं० ६.१.६–१० ।

३. तथाहि 'एकहायन्या (सोमक्रयण्या) क्रीणाति' 'अजया क्रीणाति' 'हिरण्येन क्रिणाति'— ००० तै० सं० ६.१.६–१० । द्र० आप० श्रौ० १०.२५.१५ । तै० सं० ६.१.१० सा० भा०, आप० श्रौ० १०.२६.७ । सर्वत्र चाद्या सोमक्रयणी (आरुण्यादिलक्षणा एकहायनी गौः) ग्राह्येति ।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्राचीनवंशगत आहवनीयेऽवस्थितस्याग्नेः सौमिक्यामुत्तरवेद्यां नयनं यदस्ति तदेतदत्राग्निप्रणयनं[1] तत्कुर्वन्नध्वर्युरग्नये प्रणीयमानायानुब्रूहीति प्रैषमन्त्रं होतारमुद्दिश्य पठेत्[2] ॥

i. २८ [v. २] अब अध्वर्यु [होता से प्रैष मन्त्र] कहता है 'अग्नि के [उत्तरवेदि में] ले जाने के अनुकूल मन्त्र का पाठ करो।'

तत्र होत्राऽनुवक्तव्यास्वष्टास्वृक्षु प्रथमामृचं विधत्ते—

**'प्र देवं देव्या धिया भरता जातवेदसम्। हव्या नो वक्षदानुषगिति'[3] गायत्रीं ब्राह्मणस्यानुब्रूयात् ॥ इति।**

हे ऋत्विजो जातवेदसं देवं देव्या तद्रूपप्रकाशिकया तद्भावनायुक्तया धिया प्रभरत प्रकर्षेणोत्तरवेदिं प्रति हरत नयत। अयं च जातवेदा आनुषगुत्तरवेद्यामनुषक्तः सन्नो हव्या, अस्मदीयानि हवींषि वक्षद्देवान् प्रति वहतु। इत्यृगेषा गायत्रीछन्दस्का तां ब्राह्मणस्य यजमानस्य होताऽनुब्रूयात् ॥

'हे ऋत्विज्! जातवेदस् देव को उसके रूप की प्रकाशक भावना से युक्त बुद्धि के द्वारा उत्तरवेदि के प्रति प्रकृष्ट रूप से लाओ। यह जातवेदस् नित्यप्रति हमारे हव्यों को देवताओं तक वहन करें।' ब्राह्मण यजमान हो तो होता इस गायत्री-छन्दस्क ऋचा का पाठ करे।

तदेतत्प्रशंसति—

**गायत्रो वै ब्राह्मणस्तेजो वै ब्रह्मवर्चसं गायत्री तेजसैवैनं तद्ब्रह्मवर्चसेन समर्धयति ॥ इति।**

ब्राह्मणस्य प्रजापतिमुखजन्यत्वसाम्येन गायत्रीसंबन्धः[4]। तेजो वा इत्यादिकं पूर्ववद् व्याख्येयम्[5] ॥

क्योंकि ब्राह्मण का गायत्री से सम्बन्ध है, और गायत्री तेज एवं ब्रह्मवर्चस् से युक्त है। इस प्रकार उस [यजमान] को वह तेज और ब्रह्मवर्चस् से समृद्ध करता है।

---

१. 'उक्तम् (२.१७) अग्निप्रणयनम्'—इति (३.१.७)' 'पश्वर्थं ह्यग्निप्रणयनम्, तस्य च श्वःसुत्यानिमित्तम्'—इति (१२.४.१३) सदोहविर्धानान्याग्नीध्रीयाग्नीषोमप्रणयनवसतीवरीग्रहणानि पश्वर्थानि भवन्ति, सुत्यार्थान्येके'—इति (१.२.४.१५), इत्याद्याश्वलायनीयसूत्राणि पर्यालोच्यानि। 'अत्र प्रवर्ग्यमुद्वास्य पशुबन्धवदग्निं प्रणयति'—इत्यादि आप० श्रौ० ११.५.९।

२. तथाहि कल्पसूत्रम्—पश्चाद् दार्शपौर्णमासिकाया वेदेरुपविश्य प्रेषितोऽग्निप्रणयनीयाः प्रतिपद्यते'—इति आश्व० श्रौ० २.१७.२।

३. ऋ० १०.१७६.२।

४-५. द्र० इतः पूर्वम्, ४० पृष्ठे।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

क्षत्रियस्य यजमानस्य योगेऽन्यामृचं विधत्ते—

**'इमं महे विदथ्याय शूषमिति'[1] त्रिष्टुभ राजन्यस्यानुब्रूयात् ॥ इति ।**

क्षत्रिय जाति के यजमान के होता को 'इमं महे' आदि त्रिष्टुप् छन्द वाले मन्त्र का पाठ करना चाहिये ।

तदेतत्प्रशंसति—

**त्रैष्टुभो वै राजन्य ओजो वा इन्द्रियं वीर्यं त्रिष्टुबोजसैवैनं तदि-न्द्रियेण वीर्येण समर्धयति ॥ इति ।**

त्रिष्टुब्राजन्ययोः प्रजापतिबाहुजन्यत्वेन संबन्धः । एतदपि गायत्रीब्राह्मणयोरिव सप्तमकाण्डे तैत्तिरीयैराम्नातम्—'उरसो बाहुभ्यां पञ्चदश निरमिमीत तदिन्द्रो देवताऽन्वसृजत त्रिष्टुप्छन्दो बृहत्साम राजन्यो मनुष्याणाम्'[2] इति । ओजो वा इत्यादिकं पूर्ववद्व्याख्येयम्[3] ॥

[प्रजापति के बाहु से क्षत्रियों की उत्पत्ति के साम्य के कारण] त्रिष्टुप् छन्द क्षत्रियों से सम्बन्धित है । वस्तुतः त्रिष्टुप् छन्द ओज, इन्द्रिय-शक्ति और पराक्रम वाला है । [अतः] ऐसा करके होता यजमान को ओज [बल के हेतु आठवें धातु], इन्द्रिय-बल और वीर्य [शरीर के बल] से समृद्ध करता है ।

तस्या ऋचो द्वितीयपादं पठति—

**'शश्वत्कृत्व ईड्याय प्रजभ्रुरिति' ॥ इति ।**

उक्तस्य पादद्वयस्यायमर्थः—शूषं सुखहेतुमिममग्निं महे विदथ्याय महते वेदनाय लाभाय तत्सिद्धयर्थं शश्वत्कृत्वो बहुकृत्व ईड्याय प्रजाभिः स्तुत्याय राजन्याय राजन्यस्य यागसिद्धयर्थं प्रजभ्रुः प्रकर्षेण हृतवन्त उत्तरवेद्यां नीतवन्त इति । श्रौत इतिशब्दो द्वितीयपादसमाप्त्यर्थः ॥

तत्पादपठनेन ज्ञातीनां मध्ये यजमानस्य श्रैष्ठ्यं दर्शयति—

**स्वानामेवैनं तच्छ्रैष्ठ्यं गमयति ॥ इति ।**

'सुख का हेतुभूत यह अग्नि महान् लाभ के लिए सर्वदा स्तुत्य क्षत्रिय के याग [सिद्धि] के लिए उत्तरवेदि से प्रकृष्ट रूप से लाया जाता है'—इन दो पादों के पाठ के द्वारा अपने स्वकीय बन्धु-बान्धवों में [वह होता] यजमान को श्रेष्ठ बनाता है ।

तस्या ऋच उत्तरार्धं पठति—

**'शृणोतु नो दम्येभिरनीकैः शृणोत्वग्निर्दिव्यैरजस्र' इति ॥ इति ।**

---

१. ऋ० ३.५४.१ । २. तै० सं० ७,१.१.४ । ३. द्र० इतः पूर्वम्, ४३ पृष्ठे ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दम्येभिः परकीयसेनां दमयितुमर्हैरनीकैः स्वकीयैः सैन्यैः सहायं प्रणीयमानोऽग्निर्नोऽस्मान् शृणोतु। एते यजमानाः सम्यगनुतिष्ठन्तीत्येवं स्वकीयदूतमुखादवगच्छतु। यद्वा, दमो गृहं तद्योग्यैर्दम्यैर्गृहरक्षणार्थमवस्थापितैरित्यर्थः। किंचायमग्निर्दिव्यैर्देवलोकयोग्यैर्भोगैः सहाजस्रो निरन्तरमस्मद् गृहे वर्तमानोऽस्मदीयां स्तुतिं शृणोत्विति। श्रौत इतिशब्द उत्तरार्धसमाप्त्यर्थः ॥

उक्तवेदनं प्रशंसति—

**आजरसं हास्मिन्नजस्रो दीदाय य एवं वेद ॥ इति।**

वेदितुर्जरासमाप्तिपर्यन्तमस्मिन्नेतदीये गृहेऽजस्रो नैरन्तर्येण वर्तमानोऽग्निर्दीदाय दीप्यते ॥

'अग्नि गृह में [रक्षणार्थ] विद्यमान होकर हमारे स्तोत्रों को सुनें और दिव्य भोगों के साथ निरन्तर हमारे घर में अवस्थित रहकर हमारी स्तुति को सुनें' जो इस प्रकार जानता है अग्नि उसके घर में वृद्धावस्था तक निरन्तर वर्तमान रहकर दीप्त होती रहती है।

वैश्यस्य यजमानस्यान्यामृचं विधत्ते—

**'अयमिह प्रथमो धायि धातृभिरिति'[1] जगतीं वैश्यस्यानुब्रूयात् ॥ इति।**

वैश्य जाति के यजमान के होता को 'अयमिह' आदि जगती छन्दस्क मन्त्र का पाठ करना चाहिए।

तदेतत्प्रशंसति—

**जागतो वै वैश्यो जागताः पशवः पशुभिरेवैनं तत्समर्धयति ॥ इति।**

प्रजापतिमध्यदेशजन्यत्वसाम्येन जगतीसंबन्धः। एतदपि शाखान्तरे समाम्नातम्—'मध्यतः सप्तदशं निरमिमीत तं विश्वे देवा देवता अन्वसृज्यन्त जगती छन्दो वैरूपं साम वैश्यो वै मनुष्याणाम्'[2] इति। जागता इत्यादिकं पूर्ववद्व्याख्येयम्[3] ॥

[प्रजापति के मध्य देश से उत्पन्न होने की समता के कारण] जगती छन्द वैश्यों से सम्बन्धित है और पशु जगती छन्द से सम्बन्धित हैं। अतः ऐसा करके होता उस वैश्य यजमान को पशुओं से समृद्ध करता है।

चतुर्थपादमनूद्य प्रशंसति—

**'वनेषु चित्रं विभ्वं विशे विश इत्यभिरूपा यद्यज्ञेऽभिरूपं तत्समृद्धम् ॥ इति।**

अत्र तत्तद्वैश्यवाचिनो वीप्सायुक्तस्य विशशब्दस्य श्रूयमाणत्वाद्वैश्यं प्रत्यनुरूपत्वम् ॥

---

१. ऋ० ४.७.१। २. तै० सं० ७.१.१.५। ३. द्र० इतः पूर्वम् १२८ पृ०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'वनेषु' आदि [चतुर्थ पाद में 'विश्' शब्द के होने से यह] मन्त्र [वैश्य के यज्ञ के] अनुरूप है; जो यज्ञ के अनुरूप है वह [यज्ञ] समृद्ध है।[1]

इत्थं जातिभेदेन प्रथमाया ऋचो व्यवस्थामभिधाय जातित्रयसाधारणभूतां द्वितीयामृचं विधत्ते—

**'अयमु ष्य प्र देवयुरिति[2] ॥ इति।**

सोमक्रयणकाले यद्वाच उपांशुत्वं विहितं[3] तस्यास्मिन् काले विसर्गं विधत्ते—

**अनुष्टुभि वाचं विसृजते ॥ इति।**

अयमु ष्येत्येतस्यामृच्युपांशुरूपां 'वाचं' विसृजेत्।

'अयमु ष्यः' आदि अनुष्टुप् छन्द वाले मन्त्र से [सोमक्रय के समय जिस वाणी को मन में कहने का विधान था उस] वाणी को विसर्जित करता है।

तदेतत्प्रशंसति—

**वाग्वा अनुष्टुब्वाच्येव तद्वाचं विसृजते ॥ इति।**

अयमु ष्येत्यस्या अनुष्टुप्छन्दस्कत्वादनुष्टुभो वाग्रूपत्वस्य सर्वश्रुतिप्रसिद्धत्वादनुष्टुब्रूपायां वाच्येवोपांशुध्वनिरूपां वाचं तन्मन्त्रपाठेन विसृजते[4] ॥

वस्तुतः अनुष्टुप् वाणीरूप हैं, [अतः अनुष्टुप् रूप] वाणी में [उपांशु ध्वनि रूप] वाणी को उस [मन्त्र-पाठ] के द्वारा विसर्जित करते हैं।

एतन्मन्त्रगतप्रथमपादस्य पूर्वभागमनूद्य व्याचष्टे—

**'अयमु ष्यः' इति यदाहायमु स्याऽऽगमं या पुरा गन्धर्वेष्ववात्समित्येव तद्वाक्प्रब्रूते ॥ इति।**

ब्राह्मणगतोऽयंशब्दोऽत्र स्त्रीलिङ्गत्वेन परिणेयः। तच्छब्दपर्यायस्य त्यच्छब्दस्य टावन्तस्य स्येति रूपं भवति। एवं सत्ययमु ष्यं इति मन्त्रो यदाह तत्र वाग्देवतेत्थं ब्रूते। कथमिति तदुच्यते। पुरा गन्धर्वेषु याऽहं वागवात्सं स्थिताऽस्मि स्याऽऽगमं सेयमेवाऽऽगममिदानीमागताऽस्मीति। अतो वाग्देवतयैवमुच्यमानत्वादत्रार्धर्चोऽभियुक्त इत्यर्थः ॥

'अयमु ष्यः' आदि मन्त्र में जो कहा है उसमें वाग्देवता इस प्रकार कहती है कि 'मैं जो पहले गन्धर्वों के साथ निवास करती थी अब वापस आ गई हूँ।' [अतः जब वाग्देवता स्वयं ऐसा कहती है तब यह अर्धर्च यज्ञ के अनुरूप है]।

---

१. द्र० इतः पूर्वम्, ९०० पृष्ठे।

२. ऋ० १०.१७६.३। ३. द्र० इतः पूर्वम्, १६१ पृ०।

४. आश्वलायने अग्निप्रणयनीयानामासां सर्वासामेव पाठादनन्तरं वाग्विसर्गो विहितः। तथाहि तत्सूत्रम्—'....परिधाय तस्मिन्नेवासन उपविश्य, भूर्भुवः स्वरिति वाचं विसृजेत'—इति २.१७.१०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तृतीयामृचं विधत्ते—

'अयमग्निरुरुष्यतीति'[1] ।। इति ।

अनुब्रूयादित्यनुक्तस्थलेष्वनुवर्तते ।।

'अयमग्निः' आदि ऋचा का पाठ करना चाहिये । वस्तुतः यह प्रणीयमान अग्नि इससे यंजमान की रक्षा करता है । 'यह अग्नि अपने मरणरहित [देवता रूपी] जन्म से रक्षा करता है'—इस मन्त्र के पाठ के द्वारा होता इस यजमान में देवत्व सम्पादित करता है ।

एतत्पदार्थप्रसिद्धं वैशब्देन दर्शयति—

अयं वा अग्निरुरुष्यति ।। इति ।

अयं प्रणीयमानोऽग्निर्यजमानमुरुष्यति कर्मनिष्पादनेन रक्षतीत्येतत्प्रसिद्धम् ।।

द्वितीयपादमनूद्य तात्पर्यं दर्शयति—

'अमृतादिव्र जन्मनः' इत्यमृतत्वमेवास्मिंस्तद्दधाति ।। इति ।

'अमृतात् मरणरहिताद्देवतारूपाज्जन्मनो यथा रक्षा संपद्यते । न हि मरणराहित्यादधिका रक्षा क्वचिदस्ति । तद्वदियमग्निकर्तृका रक्षेत्यर्थः । तत्तेन मन्त्रपाठेनामृतत्वमेव देवत्वमेवास्मिन् यजमाने संपादयति ।।

द्वितीयार्धमनुवदति—

'सहसश्चित् सहीयान् देवो जीवातवे कृतः' इति ।। इति ।

देवोऽग्निर्जीवातवेऽस्माकं जीवनौषधाय सहसश्चित्प्रबलादपि पुरुषात्सहीयानतिशयेन प्रबलीकृतो निष्पादित इत्युत्तरार्धस्यार्थः ।।

तमिममर्थं विस्पष्टयति—

देवो ह्येष एतज्जीवातवे कृतो यदग्निः ।। इति ।

योऽग्निरस्त्येष देव एतेनोत्तरार्धपाठेन जीवनौषधाय संपादितो भवति ।।

'अग्नि देव हमारे जीवन की रक्षा के लिए प्रबल से "भी अत्यन्त प्रबल बनाया गया है'—इस चरण के पाठ के द्वारा यहाँ जो अग्नि देव हैं वह जीवन की औषधि [= रक्षा] के लिए सम्पादित होते हैं ।

चतुर्थ्या ऋचः पूर्वार्धं पठति—

'इळायास्त्वा पदे वयं नाभा पृथिव्या अधि' इति[2] ।। इति ।

पृथिव्या नाभा भूमिस्थानात्प्रागुत्तरवेद्यां नाभिस्थानीये धिष्ण्ये हे अग्ने त्वा निधीमहीति वक्ष्यमाणपदेन संबन्धः । नाभिरेव विशेष्यते—इळायाः पद इति । इळाशब्दो गोवाची । इळाख्यां देवतां प्रकृत्य 'गौर्वा अस्यै शरीरमिति'[3] श्रुतत्वात् । इळेऽनन्ते

१. ऋ० १०.१७६.४ । २. ऋ० ३.२९.४ । ३. तै० सं० १.७२ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सरस्वतीति वाङ्नामसु श्रुतत्वात्[1]। तस्याः पदं घृतनिष्पीडनेन प्रशस्तम्, सा यत्र यत्र न्यक्रामत्ततो घृतमपीडचत[2] इति श्रुतेः। तत्पदरूपत्वविशेषेणोत्तरवेदिनाभिः प्रशस्यते। यद्वा सोमक्रयण्या गोपदपांसुरस्यां नाभौ प्रक्षिप्यत इति तत्पदरूपत्वम् ॥

हे अग्नि, भूमि स्थान से [पहले उत्तरवेदि रूप] इडा के पद नाभि रूपी स्थान में हम तुम्हें रखते हैं'।

नाभेः पदरूपत्वं विशदयति—

एतद्वा इळायास्पदं यदुत्तरवेदीनाभिः ॥ इति।

'इळायाः' आदि इस मन्त्र में 'इळायास्पदम्' से तात्पर्य है 'उत्तरवेदि की नाभि'।

तृतीयं पादमनूद्य व्याचष्टे—

जातवेदो नि धीमहीति नि धास्यन्तो ह्येनं भवन्ति ॥ इति।

एनमग्निं वेदिनाभौ निधास्यन्तः स्थापयितुमुद्युक्ता भवन्त्यृत्विजस्तस्मान्निधीमहीत्युपपन्नम् ॥

'जातवेदो निधीमहि' से तात्पर्य है 'इस अग्नि को वेदिरूप नाभि में स्थापित करने के लिए ऋत्विज् उद्यत होते हैं'।

चतुर्थं पादमनूद्य व्याचष्टे—

'अग्ने हव्याय वोळ्हवे' इति हव्यं हि वक्ष्यन् भवति ॥ इति।

हे अग्ने हविर्वोढुं त्वां निधीमहीति पूर्वत्रान्वयः। हव्यं वक्ष्यन् वोढुमुद्युक्तो भवन्नग्निस्तस्माद्वोढव इत्येतदुचितम् ॥

'अग्ने हव्याय वोळ्हवे' से तात्पर्य है 'हे अग्नि हवि वहन करने के लिए उद्युक्त तुम्हें हम रखते हैं।'

---

१. निघण्टौ पृथिवी-वाक्-अन्न-गो-नामसु आम्नातमिडा पदम् (१.१.१५; ११.३.२; ७.१३; ११.७)। निरुक्ते (८२.१०) 'तिस्रो देव्यः' भारतीळासरस्वत्यः। इळा यूथस्य माता-इत्यस्य (ऋ० ५.४१.१९) भाष्ये 'इळा' भूमिः, 'यूथस्य' गोसङ्घस्य 'माता' निर्मात्री। यद्वा 'इळा' गोरूपधरा मनोः पुत्रीत्याहुः। यद्वा 'यूथस्य' मरुद्गणस्य निर्मात्री 'इळा' माध्यमिकी वाक्—इत्याह सायणः। मनोः पुत्रीत्यैतिहासिकविवरणं तु वाजसनेयिनस्तैत्तिरीयाश्चामनन्ति (शत० ब्रा० १.८.१.७–११; तै० सं० २.६.७.१।

२. तै० सं० २.६.७.१। 'घृतपदीत्याह यदेवास्यै पदा घृतमपीडचत, तस्मादेवमाह'—इति च तै० सं० २.६.७.४। 'यदेवास्यै घृतं पदे समतिष्ठत, तस्मादाह घृतपदीति'—इति शत० ब्रा० १.८.१.२६। 'हवींषीळादेवी घृतपदी जुषन्त'—इति च ऋ० १०.७०.८; अथर्व० सं० ७.२७.१।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पञ्चम्या ऋचः पूर्वार्धं पठति—

**'अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तं प्रथमः सीद योनिमिति'[1] ॥ इति ।**

'शोभन सेनाओं से युक्त हे अग्नि तुम समस्त देवों के सहित अग्रगण्य होकर ऊर्णा [=कम्बल] युक्त [उत्तरवेदि रूप] नाभि स्थान में अवस्थित होओ—यह कहकर वह अग्नि को अन्य देवों के साथ बैठाता है ।

स्वनीक शोभनसैन्योपेत हे अग्ने विश्वेभिः सर्वैर्देवैः सह त्वं प्रथमो मुख्यः सन्नूर्णावन्तमूर्णायुक्तमुत्तरवेदिनाभिस्थानं सीद प्राप्नुहि ।

तत्पाठेनोक्तार्थसिद्धिं दर्शयति—

**विश्वैरेवैनं तद्देवैः सहाऽऽसादयति ॥ इति ।**

तृतीयचतुर्थपादौ क्रमेणानूद्य व्याचष्टे—

**'कुलायिनं घृतवन्तं सवित्रे' इति कुलायमिव ह्येतद्यज्ञे क्रियते यत्पैतुदारवाः परिधयो गुग्गुलूर्णास्तुकाः सुगन्धितेजनानीति 'यज्ञं नय यजमानाय साधु' इति यज्ञमेव तदृजुधा प्रतिष्ठापयति ॥ इति ।**

कुलायो नीडं पक्ष्यादिनिवासस्थानसदृशं तद्वानयं यज्ञो घृतवान् । तं घृतवन्तं यज्ञं सवित्रे प्रेरकायानुष्ठात्रे यजमानाय तदुपकारार्थं साधु नय सत्यं निष्पादय । तत्कुलायित्वं तृतीयपादेऽभिहितम् । तत्कुलायमिवेत्यादिना स्पष्टी क्रियते । पितुदारुः खदिरवृक्ष इत्येके । देवदारुवृक्ष इत्यन्ये । तत्संबन्धिनः पैतुदारवाः परिधयोऽस्यामुत्तरवेद्यां स्थाप्यन्ते । गुग्गुलु प्रसिद्धं धूपसाधनम् । ऊर्णास्तुका अविसंबन्धिरोमविशेषाः । सुगन्धितेजनं तृणविशेषः । यस्य मूलानि घर्मकाले पानीयमध्ये स्थाप्यन्ते । एत उत्तरवेद्यां स्थापिताः संभाराः[2] । यथा कुलायः काष्ठतृणादिभिर्निष्पाद्यते तद्वदत्र यज्ञे परिधिकाष्ठादिसद्भावात् कुलायित्वम् । यज्ञं नयेति चतुर्थपादे यद्यदुक्तं तेन यज्ञमेव तदृजुधा, ऋजुप्रकारेण प्रतिष्ठितं करोति ॥

'उस घोसले के समान और घृतवान् यज्ञ के प्रेरक अनुष्ठाता [यजमान के उपकार के लिए हे अग्नि ! सत्य रूप से निष्पादित करो]—यह कहकर जो देवदारु की लकड़ी को इस उत्तरवेदि के चारो ओर स्थापित करते हैं और जो गुग्गुलु व सुगन्धि युक्त तृण विशेष को [=सम्भवतः खसखस जिसको गर्मी में पानी में डालकर] रखते हैं, यह सब इस यज्ञ में पक्षियों के नीड़ के समान किया जाता है । 'यजमान के लिए यज्ञ को समुचित रूप से स्थापित करो'—यह कहकर यज्ञ को ही सरलता से प्रतिष्ठित करता है ।

पष्ठ्या ऋचः प्रथमं पादं पठित्वा व्याचष्टे—

---

१. ऋ० ६.१५.१६ ।

२. इमा एवाग्निसम्भारास्तैत्तिरीयसंहितायां च साख्यायिकाः समाम्नाताः (६.२.८) ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**'सीद होतः स्व उ लोके चिकित्वान्' इत्यग्निर्वै देवानां होता तस्यैष स्वो लोको यदुत्तरवेदीनाभिः[1]॥ इति ।**

हे होतर्होमनिष्पादकाग्ने चिकित्वान् विज्ञानवांस्त्वं स्व उ लोके स्वकीय एव स्थान उत्तरवेदिनाभिरूपे सीदोपविश । अग्नेर्देवहोतृत्वादुत्तरवेदिनाभेस्तदीयस्थानत्वाच्च प्रथमपादार्थं उपपन्नः ॥

'हे होमनिष्पादक अग्नि ! विज्ञानवान् तुम उत्तरवेदिरूप अपने ही स्थान में बैठो'—अग्नि देवताओं का 'होता' है, जो उत्तरवेदिरूप नाभि है वही इसका अपना स्थान है [अतः प्रथमपाद का अर्थ उपपन्न है] ।

द्वितीयपादमनूद्य तत्रत्यस्य यज्ञशब्दस्य यजमानपरत्वं दर्शयति—

**'सादया यज्ञं सुकृतस्य योनौ' इति यजमानो वै यज्ञो यजमानायैवैतामाशिषमाशास्ते ॥ इति ।**

यज्ञं यष्टारं सुकृतस्य योनौ पुण्यकर्मणां स्थाने सादय हे अग्ने स्थापय । इज्यत इति व्युत्पत्त्या यज्ञशब्दः सर्वत्र यागवाची । इह तु यजतीति व्युत्पत्त्या यष्टारमाचष्टे । अतस्तदर्थमेवाऽऽशीः प्रार्थिता भवति ॥

'हे अग्नि ! यष्टा [यजमान] को पुण्यकर्मस्थान में स्थापित करो'—इस चरण में यजमान ही यज्ञ है; अतः इससे यजमान के लिए ही आशीर्वाद की कामना की जाती है ।

उत्तरार्धमनूद्य तत्रत्यस्य वयःशब्दस्य प्राणवाचित्वं दर्शयति—

**'देवावीर्देवान् हविषा यजास्यग्ने बृहद् यजमाने वयो धाः' इति प्राणो वै वयः, प्राणमेव तद् यजमाने दधाति ॥ इति ।**

देवान्वेति कामयत इति देवावीः[2] देवप्रिय हे अग्ने त्वं देवप्रियत्वाद्देवान्हविषा यजासि पूजयसि । यजमाने वयः प्राणं बृहदधिकं यथा भवति तथा धाः, धेहि स्थापय । अत्र वयःशब्देन प्राण उपलक्ष्यते । बाल्यादिवयोविशेषहेतोरायुषो निमित्तत्वात् 'यावदस्मिञ्शरीरे प्राणो वसति तावदायुः[3]' इति श्रुतेः । तस्मादुत्तरार्धपाठेन प्राणमेव यजमाने स्थापयतीति ॥

'देवप्रिय हे अग्नि ! तुम हवि के द्वारा देवताओं की पूजा करते हो । यजमान में महान् प्राण की स्थापना करो'—यहाँ प्राण ही वयस् है अतः [उत्तरार्ध के पाठ से] यजमान में प्राण ही स्थापित करता है ।

सप्तम्या ऋचः प्रथमपादमनूद्य व्याचष्टे—

---

१. ऋ० ३.२९.८ ।

२. देवावीः देवानां भक्षणहेतो' इति गोविन्दस्वामी ।

३. कौषी० उ० ३.२ । द्र० 'प्राणो हि भूतानामायुः'—इत्यादि तै० आर० ८.३ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**'नि होता होतृषदने विदानः'[1] इत्यग्निर्वै देवानां होता तस्यैतद्धोतृषदनं यदुत्तरवेदीनाभिः ॥ इति ।**

होता होमनिष्पादकोऽग्निस्तादृशस्य स्वस्य होतुः सदने योग्यस्थान उत्तरवेदिनाभिरूपे विदानः क्रियमाणं कर्म विचारयन् । असददिति वक्ष्यमाणेनान्वयः । अग्निर्वा इत्यादिव्याख्यानं विस्पष्टम् ॥

'हे होमनिष्पादक अग्नि ! अपने उस उत्तरवेदि-नाभिरूप योग्य स्थान में बैठो'— यहाँ अग्नि ही देवताओं का 'होता' है । जो उत्तरवेदि रूप नाभि है वही इसका बैठने का योग्य स्थान है ।

द्वितीयं पादमनूद्यासददिति पदं व्याचष्टे—

**'त्वेषो दीदिवाँ असदत् सुदक्षः' इत्यासन्नो हि स तर्हि भवति ॥ इति ।**

कीदृशोऽग्निः । त्वेषः स्वयं दीप्यमानः । दीदिवानन्येषामपि दीपकः । सुदक्षः सुष्ठु कुशलः । तादृशोऽग्निरासन्नो वेदिता भवति । स तर्हि तस्मिन् प्रणयनकाले सोऽग्निर्यस्मादुत्तरवेदिनाभेरासन्नस्तस्मादसददित्युचितम् ॥

'स्वयं दीप्यमान, प्रकाशमान, कुशल अग्नि बैठा है' [इस प्रणयनकाल में] वह अग्नि क्योंकि [उत्तरवेदि रूप नाभि के] समीप होता है अतः बैठा है यह उचित है ।

तृतीयपादमनूद्य वसिष्ठशब्दार्थं दर्शयति—

**'अदब्धव्रतप्रमतिर्वसिष्ठः' इत्यग्निर्वै देवानां वसिष्ठः ॥ इति ।**

अदब्धे हिंसारहिते व्रते कर्मणि प्रकृष्टा मतिर्यस्याग्नेः सोऽयमदब्धव्रतप्रमतिः । वसिष्ठोऽतिशयेन निवासहेतुः[2] । हविर्वहनेन देवानां स्वस्वस्थाने निवासहेतुत्वादग्नेर्वसिष्ठत्वम् ॥

'हिंसारहित कर्म में प्रकृष्ट मति वाले और सर्वाधिक निवासदाता अग्नि बैठे हैं'— [हवि के वहन द्वारा] देवताओं को [अपने-अपने स्थान में] निवास प्रदान करने वाला अग्नि ही है ।

चतुर्थं पादमनूद्य व्याचष्टे—

**'सहस्रंभरः शुचिजिह्वो अग्निः' इत्येषा ह वा अस्य सहस्रंभरता यदेनमेकं सन्तं बहुधा विहरन्ति ॥ इति ।**

अयमग्निर्बहुषु धिष्ण्येषु विहृतः सन्ननेकस्वरूपभरणात् सहस्रंभरः । मन्त्रपूतहविःस्वीकारेण शुचिजिह्वः शुद्धा जिह्वा यस्यासौ शुचिजिह्वः स्वरूपेणैकमेव सन्तमग्निमृत्विजो बहुधिष्ण्येषु बहुधा विहरन्तीति यदस्ति, एषैवाग्नेः सहस्रंभरता ॥

---

१. ऋ० २.९.१ ।

२. वसेः प्रशस्यार्थादिष्ठनि टिलोपः । 'वसिष्ठो वसीयान्' इति गोविन्दस्वामी ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'सबका भरण करने वाले और पवित्र जिह्वा वाले अग्नि हैं'—यहाँ जो स्वरूपतः एक होकर भी ऋत्विजों द्वारा अनेक स्थानों में बहुत प्रकार से ले जाया जाता है यही इस अग्नि की सहस्रम्भरता है।

वेदनं प्रशंसति—

**प्र ह वै साहस्रं पोषमाप्नोति य एवं वेद ॥ इति ।**

अत्र सहस्रसंख्योपेतं पोषं गोसुवर्णादिपुष्टिं वेदिता प्राप्नोति ॥

जो इस प्रकार जानता है वह सहस्र संख्यक् [गो सुवर्णादि रूप] पुष्टि को प्राप्त करता है।

अष्टमीमृचं विधत्ते—

**'त्वं दूतस्त्वमु नः परस्पा इत्युत्तमया परिदधाति'[1] ॥ इति ।**

त्वं दूत इत्यनयाऽन्तिमयाऽग्निप्रणयनीया ऋचः समापयेत्[2]। हे अग्ने त्वं दूतोऽसि 'अग्निर्देवानां दूत आसीत्' इति श्रुतेः[3]। त्वमेव नोऽस्माकं परस्पा अतिशयेन पालयिताऽसि ॥

'हे अग्नि ! तुम [देवताओं के] दूत हो और तुम्हीं हम लोगों के अत्यन्त पालक हो'—इस अन्तिम ऋचा से [अग्नि प्रणयन रूप कर्म की] समाप्ति करनी चाहिए।

अवशिष्टं पादत्रयं पठति—

**'त्वं वस्य आ वृषभ प्रणेता। अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपाः' इति ॥ इति ।**

हे वृषभ श्रेष्ठाग्ने त्वमासमन्ताद्वस्यो निवासहेतुः प्रणेता बहुषु कर्मसु प्रेरको नोऽस्माकं तोकस्यापत्यस्य तनूनां शरीराणां च 'तने' विस्तारेऽप्रयुच्छन् प्रमादमकुर्वन् दीद्यत् प्रकाशयन्गोपा रक्षकः सन्, 'बोधि' बुध्यस्व सर्वदा चित्तेऽनुगृहाणेत्यर्थः।

हे श्रेष्ठ अग्नि ! चारों-ओर निवास प्रदाता, बहुत कर्मों में प्रेरक तुम हमारी सन्तान के शरीरों के विस्तार में प्रमाद मत करो, प्रकाशित होते हुए और रक्षक होकर सर्वदा जानो [अर्थात् अपने चित्त में अनुग्रह करो]।

उक्तार्थामृचं प्रशंसयति—

---

१. ऋ० २.९.२।

२. मूले यदस्ति 'परिदध्यात्'—इति एतस्यैव व्याख्यानं समापयेदिति। 'सर्वत्रोत्तमां परिधानीयेति विद्यात्' इति (आश्व० श्रौ० २.१६.८) कल्पशास्त्रात्।

३. तै० ब्रा० ३.५२ 'प्रवो वाजाः'—इत्याद्या याः सामिधेन्य ऋचः आम्नाताः; तत्र 'अग्निं दूतं वृणीमहे (ऋ० १.१२.१)'—इत्येषाष्टमी तस्या एव व्याख्यानपरं ब्राह्मणमाम्नातं तैत्तिरीयसंहितायाम् (२.५.८.५) 'अग्निर्देवानां दूत आसीदुशना काव्योऽसुराणाम्'—इत्यादि।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**अग्निर्वै देवानां गोपा अग्निमेव तत्सर्वतो गोप्तारं परिदत्त आत्मने च यजमानाय च यत्रैवं विद्वानेतया परिदधात्यथो संवत्सरीणामेवैतां स्वस्तिं कुरुते ॥ इति ।**

यत्र यस्मिन्कर्मणि एवमुक्तं मन्त्रमहिमानं विद्वानेतयाऽन्तिमया समापयति स होताऽग्नेर्देवरक्षकत्वमभिप्रेत्याऽऽत्मार्थं यजमानार्थं चाग्निमेव सर्वतो रक्षकं परिदत्ते स्वीकरोति । किंच । संवत्सरीणामेवास्मिन् संवत्सरे निरन्तरमेवैतां स्वस्ति क्षेमं कुरुते ॥

जिस कर्म में इस प्रकार उक्त मन्त्र की महत्ता को जानता हुआ 'होता' इस अन्तिम ऋचा से कर्म की समाप्ति करता है वह 'अग्नि देव रक्षक है' इससे अभिप्रेतित अपने लिए और यजमान के लिए भी अग्नि को ही सर्वतः रक्षक स्वीकार करता है और इस संवत्सर में निरन्तर इस कल्याण को करता है ।

न्यूनाधिकसंख्याभ्रमं व्युदसितुमाह—

**ता एता अष्टावन्वाह रूपसमृद्धाः, एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति ॥ इति ।**

प्रणीयमानस्याग्नेः प्रकाशकत्वादेतासां रूपसमृद्धिः ॥[1]

आद्यन्तयोर्ऋचोरावृत्तिं विधत्ते—

**तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां, ता द्वादश संपद्यन्ते, द्वादश वै मासाः संवत्सरः, संवत्सरः प्रजापतिः, प्रजापत्यायतनाभिरेवाऽऽभी राध्नोति य एवं वेद; त्रिः प्रथमां त्रिरुत्तमामन्वाह यज्ञस्यैव तद्बर्सौ नह्यति, स्थेम्ने बलायाविस्रंसाय ॥ २८ ॥ ॥ इति ।**

पूर्ववद्व्याख्येयम् ।[2]

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेय ब्राह्मणभाष्यस्य चतुर्थाध्याये द्वितीयः खण्डः ॥ २ ॥ [२८]

इन आठ मन्त्रों का होता पाठ करता है जो [विवक्षित अर्थ के प्रतिपादक होने से] रूप समृद्ध हैं अर्थात् अपने रूप में परिपूर्ण हैं ।

यही यज्ञ की समृद्धि है कि जो यज्ञ अपने रूप में समृद्ध है अर्थात् अपने अङ्ग-प्रत्यङ्ग से परिपूर्ण है । कर्म जैसा किया जाने वाला है वैसा ही मन्त्रों के द्वारा वर्णित होना ही रूप-समृद्धि है । उन [आठ मन्त्रों] में से प्रथम ऋचा का और अन्तिम ऋचा का तीन-तीन बार पाठ करना चाहिये । इस प्रकार यह [मन्त्र] बारह हो जाते हैं । बारह महीने ही वर्ष में होते हैं । संवत्सर ही प्रजापति हैं । जो इस प्रकार जानता है

१. एतासामष्टानामृचां पाठप्रकारादयोऽपि उपदिष्टा आश्वलायनेन २.१७.३–१० ।
२. द्र० इतः पूर्वम्, ८८ पृष्ठे ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वह प्रजापति रूप आयतन के द्वारा साफल्य को प्राप्त करता है। प्रथम और अन्तिम मन्त्र को तीन-तीन बार पढ़ता है, वस्तुतः ऐसा करके वह मानो यज्ञ के दोनों किनारों को कसकर बाँधता है जिससे कि वह फिसल न जाय और उसकी स्थिरता एवं शक्ति बनी रहे।

॥ इस प्रकार पाँचवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

अथ हविर्धानप्रवर्तनीया ऋचो विधातुमादौ प्रैषं विधत्ते—

**हविर्धानाभ्यां प्रोह्यमाणाभ्यामनुब्रूहीत्याहाध्वर्युः ॥ इति।**

हविः सोमरूपं धत्तो धारयत इति हविर्धाने द्वे शकटे। तयो स्वरूपमापस्तम्बो दर्शयति—'प्रयुक्तः पूर्वे शकटे वद्धयुगे प्रकटिशम्ये प्रक्षाल्य तयोः प्रथमग्रथितान्विस्रस्य नवान्प्रज्ञातान् कृत्वाऽग्रेण प्राग्वंशमभितः पृष्ठ्यामव्यपनयन् परिश्रिते सच्छदिषी अवस्थापयति'[1] इति। तयोर्हविर्धानयोः प्राचीनवंशस्य पुरोभागमुपक्रम्योत्तरदेशपर्यन्तं नयनं प्रवर्तनं तदपि स एवाऽऽह—'प्राची प्रेतमध्वरमित्युक्तं गृह्णन्तं प्रवर्तयन्ति,'[2] इति। तत्प्रवर्तनकालेऽध्वर्युर्होतारं प्रति हविर्धानाभ्यामित्यादिप्रैषमन्त्रं प्रब्रूयात् ॥

i. २९ [v. ३] [प्राचीनवंश से उत्तरवेदि पर] ले जाये जाने वाले दो हविर्धान के लिए मन्त्र का पाठ करो—इस प्रकार अध्वर्यु [होता से] कहता है। [हविर्धान उन गाड़ियों को कहते हैं जिन पर सोम और अन्य हविर्द्रव्य घास से ढककर रक्खे होते हैं।

होत्राऽनुवचनीयानामृचां मध्ये प्रथमामृचं विधत्ते—

**'युजे वां ब्रह्म पूर्व्यं नमोभिरित्यन्वाह[3]; ब्रह्मणा वा एते देवा अयुञ्जत यद्धविर्धाने ब्रह्मणैवैने एतद्युङ्क्ते न वै ब्रह्मण्वद्रिष्यति ॥ इति।**

हे हविर्धाने वां युवां ब्रह्म युजे ब्रह्मणा युनक्तीत्येवं मन्त्रे यदुक्तमेतत् पाठेन ब्राह्मण-मुखेनैव हविर्धाने युक्ते भवतः। पूर्वं देवैस्तथा कृतत्वात्। एतद्युक्तं ब्रह्मण्वद् ब्राह्मणोपेतं कर्म नैव विनश्यति तस्माद्युक्तोऽयं मन्त्रः ॥

'हे शकटद्वय! ब्रह्मा ने तुम्हें प्राचीनकाल में स्तुतियों से जोता था'—यह मन्त्र पढ़ता है। [इस मन्त्र में जो कहा गया है उसके पाठ से] ब्राह्मण-मुख से ही हविर्धान युक्त होते हैं क्योंकि पहले देवों ने ऐसा किया था। अतः ब्रह्मण्वद् अर्थात् ब्राह्मण से युक्त कर्म विनष्ट नहीं होता [इस प्रकार यह मन्त्र युक्ति-युक्त है]।

---

१. आप० श्रौ० ११.६.३।  २. आप० श्रौ० ११.६.११।

३. ऋ० १०.१३.१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

द्वितीयाद्यास्तिस्र ऋचो विधत्ते—

**प्रेतां यज्ञस्य शंभुवेति[1] तृचं द्यावापृथिवीयमन्वाह ॥** इति ।

मध्यमायोमृचि द्यावा नः पृथिवी इममिति श्रूयमाणत्वादयं तृचो द्यावापृथिवीयः ॥

**'प्रेताम्' आदि द्यावापृथिवी-देवताक तृच का पाठ करता है ।**

अस्य तृचस्य हविर्धानप्रतिपादकत्वाभावाद् वैयधिकरण्यमित्याक्षिप्य समाधत्ते—

**तदाहुर्यद्धविर्धानाभ्यां प्रोह्यमाणाभ्यामनुवाचाऽऽहाथ कस्मात्तृचं द्यावापृथिवीयमन्वाहेति, द्यावापृथिवी वै देवानां हविर्धाने आस्तां, ते उ एवाद्यापि हविर्धाने, ते हीदमन्तरेण सर्वं हविर्यदिदं किंच तस्मात्तृचं द्यावापृथिवीयमन्वाह ॥** इति ।

यद्यप्यत्र हविर्धानयोरनुकूलया वाचा प्रैषमाह तथाऽपि द्यावापृथिवीयस्तृचो न व्यधिकरणः पुरा द्यावापृथिव्योरेव हविर्धानत्वात् । अद्यापि द्यावापृथिव्यावेव हविर्धाने । तत्कथमिति चेदुच्यते । यस्माल्लोके यत्किचिद्धविरस्ति तदिदं सर्वं ते अन्तरेण द्यावापृथिव्योर्मध्ये वर्तते तस्माद् द्यावापृथिव्योर्हविर्धानत्वात्तदीयस्य तृचस्यानुवचनं युक्तम् ॥

**अब प्रश्न यह है कि [उत्तरवेदि पर] ले जाये जाने वाले दो हविर्धानों के लिए जब दो अनुकूल प्रैष बोले गये तो द्यावापृथिवी की तृच का पाठ क्यों होता है । क्योंकि पहले द्यावापृथिवी ही वस्तुतः देवताओं के दो हविर्धान थे और आज भी वे दोनों [द्यावापृथिवी] ही दो हविर्धान हैं क्योंकि लोक में जो कुछ हवि यहाँ दी जाती है वह सब द्यु और पृथिवी के बीच में ही दी जाती है । इसलिए [द्यावापृथिवी के हविर्धान होने के कारण] द्यावापृथिवी-देवताक तृच का अनुवचन युक्त है ।**

पञ्चमीमृचं विधत्ते—

**'यमे इव यतमाने यदैतमिति[2]; यमे इव ह्येते यतमाने प्रबाहुगितः ॥**इति।

यमशब्द एकस्या मातुरुदरे सहोत्पन्नस्य शरीरद्वयस्य वाचकः । यमे इव यथा लोके तादृश्यौ द्वे कन्यके सह वर्तते तथेमे शकटे यतमाने जगदुपकारार्थं प्रयत्नं कुर्वंती यस्मात्कारणादैतमागतवती इत्येतस्य पादस्यार्थः प्रसिद्ध इति हिशब्दो द्योतयति । युगपदुत्पन्नकन्यकाद्वयवदेवैते प्रबाहुक्परस्परसादृश्येन सहैव वर्तमाने इतः प्रचरतः । तदेतल्लोके प्रसिद्धमेव दृश्यते ॥

**'जब तुम जुड़वे के समान जाते हो'—इस पाद का तात्पर्य है कि जैसे लोक में जुड़वा बहनें साथ रहती हैं वैसे ही ये दोनों शकट जगत् के उपकार के लिए प्रयत्न करते हुए [जुड़वा के समान] परस्पर सादृश्य द्वारा साथ रहकर चलते हैं ।**

---

१. ऋ० २.४१.१९–२१ । २. ऋ० १०.१३.२ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

द्वितीयपादमनूद्य व्याचष्टे—

'प्र वां भरन् मानुषा देवयन्तः' इति देवयन्तो ह्येने मानुषाः प्रभरन्ति' ॥ इति ।

यच्छब्दस्य पूर्वपादेऽभिहितत्वात्तच्छब्दोऽस्मिन् पादेऽध्याहर्तव्यः । यस्मात्प्राण्युपकारार्थं प्रयतमाने स्थिते तस्मात्कारणाद्देवयन्तो यष्टव्यत्वेन देवानिच्छन्तो मानुषा ऋत्विग्यजमाना हे हविर्धाने वां युवां प्रभरन् प्रकर्षेण संपादयन्ति । एतत्पदार्थस्य याज्ञिकप्रसिद्धिद्योतनार्थो हिशब्दः ॥

तब देवाभिलाषी मनुष्य [ऋत्विज और यजमान] हे हविर्धान तुम्हें प्रकृष्ट रूप से सम्पादित करते हैं—यह 'प्र वां' आदि द्वितीय पाद का अर्थ है।

द्वितीयार्धमनूद्य व्याचष्टे—

'आ सीदतं स्वमु लोकं विदाने स्वासस्थे भवतमिन्दवे नः' इति सोमो वै राजेन्दुः सोमायैवैने एतद् राज्ञ आसदेऽवीक्लृपत् ॥ इति ।

हे हविर्धाने उभे युवां प्रवर्तमाने सतो स्वमु लोकं स्वकीयमेव स्थानं विदाने ज्ञातवती आसीदतं तत्र स्थितिं प्राप्नुतं नोऽस्मदीयायेन्दवे सोमाय स्वासस्थे सुशोभन आसने स्थितिं प्राप्ते भवतम् । अत्रेन्दुशब्देन सोमो राजोच्यते । अत एव तत्पाठेन सोमः राजार्थमासद आसादनायावस्थानायचीक्लृपत् कल्पितवान् भवति ॥

'हे हविर्धान ! तुम दोनों अपने स्थान पर जानते हुए बैठो और हमारे सोम के लिए शोभन स्थान ग्रहण करो'—इसमें 'इन्दु' का अर्थ है 'सोम राजा'। इस अर्धर्च के पाठ से सोम राजा के बैठने का स्थान कल्पित करता है।

षष्ठीमृचं विधत्ते—

अधि द्वयोरदधा उक्थ्यं वच इति'[1] ॥ इति ।

हविर्धानाख्ययोः शकटयोरुपरि सोमस्यावस्थानाय गृहाकारेण परितो वेष्टनमुपर्याच्छादनं यत्क्रियते तदेतदाच्छादनं छदिःशब्दवाच्यम् । तादृशे द्वे छदिषी द्वयोर्हविर्धानयोरवस्थाप्य तयोश्छदिषोरुपरि तृतीयं छदिर्हविर्धानयोरुदाहृतयोरवस्थाप्यते । तदेत् तैत्तिरीया आमनन्ति—'दण्डो वा औदुम्बरस्तृतीयस्य हविर्धानस्य वषट्कारेणाक्षमाच्छिनद्यत्तृतीयं छदिर्हविर्धानयोरुदाह्रियते तृतीयस्य हविर्धानस्यावरुध्यै'[2] इति । तदेतत्तृतीयच्छदिरवस्थापनम् । एतन्मन्त्रप्रथमपादे प्रस्तूयते । यद्द्वयोश्छदिषोरध्यदधा उपरि तृतीयं छर्दिर्निधीयते तदिदमुक्थ्यं वच उक्थ्यशस्त्रनामकं यद्यज्ञियं कर्म तद्योग्यं वचो मन्त्रपाठस्तद्रूपमिदं छदिरिति च्छदिषः प्रशंसा ॥

---

१. ऋ० १.८३.३ ।          २. तै० सं० ६.२.९.४ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'दो आच्छादनों के मध्य उक्थ्य के योग्य वाणी को रखते हैं'—इस प्रकार 'अधि द्वयः' आदि मन्त्र से दो हविर्धानों के ऊपर तीसरा आच्छादन रखते हैं। [हविर्धान नामक दो गाड़ियों पर सोम रखने के लिए गृह के आकार का चारों ओर से घेरा बना रहता है उस पर जो आच्छादन करते हैं उसको ही 'छदिः' कहते हैं]।

अस्मिन् पादे पूर्वभागस्यार्थो याज्ञिकप्रसिद्ध इत्यभिप्रेत्य हिशब्दयुक्तेन वाक्येन व्याचष्टे—

**द्वयोर्ह्येतत्तृतीयं छदिरधि निधीयते ॥ इति ।**

उत्तरभागं व्याचष्टे—

**'उक्थ्यं वच' इति यदाह यज्ञियं वै कर्मोक्थ्यं वचो यज्ञमेवैतेन समर्धयति ॥ इति ।**

उक्थ्यं वच इति यत्पदद्वयं मन्त्रो ब्रूते तेन पदद्वयेन शस्त्रपाठाख्यं यज्ञसंबन्धिकर्मोच्यते। तस्मादेतेन मन्त्रपाठेन यज्ञमेव समृद्धं करोति ॥

मन्त्र में 'उक्थ्यं वचः' ये दो पद जो कहे गये हैं उन पदद्वय के द्वारा शस्त्रपाठ नामक यज्ञ सम्बन्धी कर्म ही उक्त है। अतः इस [मन्त्र पाठ] से वह यज्ञ को ही समृद्ध करता है।

द्वितीयतृतीयपादौ पठति—

**यतस्रुचा मिथुना या सपर्यतः। असंयत्तो व्रते ते क्षेति पुष्यतीति ॥ इति ।**

यदा तृतीयं छर्दिर्निधीयते तदानीं ये हविर्धाने स्तस्ते उभे यतस्रुचा नियतस्रुग्युक्ते कृतहोमे हुतसोमे मिथुना मिथुनवत्परस्परयुक्ते सपर्यतः पूजिते भवतः। अयमर्थः—द्वयोरुपरि तृतीये छदिषि व्यवस्थापिते सति विवाहहोमादूर्ध्वं परस्परसंयुक्तौ मिथुनरूपौ स्त्रीपुरुषौ यथा पूज्येते तथा हविर्धाने हविषा पूजिते भवत इति। संपूर्वो यतिधातुः सङ्ग्रामे वर्तते। तेन क्रौर्यगुणो लक्ष्यते। संयत्तः क्रूरः। असंयत्तः शान्तः। अत्रेन्द्रसंबोधनमध्याहर्तव्यम्। हे इन्द्र शान्तोऽध्वर्युस्ते व्रते त्वदीये कर्मणि क्षेति निवसति पुष्यति तच्च कर्म पुष्टं करोति ॥

'वे दोनों हविर्धान नियतस्रुक्-युक्त होम में जोड़े के रूप से परस्पर युक्तहोकर पूजित होते हैं। हे इन्द्र! तुम्हारे कर्म में शान्त अध्वर्यु निवास करता है और उस कर्म को पुष्ट करता है।'

एतस्य तृतीयपादस्य तात्पर्यं दर्शयति—

**यदेवादः पूर्वं यत्तवत्पदमाह तदेवैतेन शान्त्या शमयति ॥ इति ।**

यत्तवत्पदवाच्यस्तृतीयः पादः। अत्र व्रतपदात् पूर्वं यदेवादो यदिदं यत्तवत्पदं यत्तशब्दोपेतं संयत्त इति पदं तेन युद्धवाचिना यत्क्रौर्यं द्योतितं तदेव क्रौर्यमेतेनासंयत्तः पुष्यतीति पदद्वयेन प्रतीतया शान्त्या होता शमयति ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[व्रत पद से] पूर्व जो 'यत्त' शब्द से युक्त संयत्त पद कहा है उसके द्वारा जो युद्ध वाचक क्रूरता घोषित की गई है उस क्रूरता को होता 'असंयत्तः' और 'पुष्यति' दो पदों से शान्त करता है।

चतुर्थपादमनूद्य व्याचष्टे—

**भद्रा शक्तिर्यजमानाय सुन्वत इत्याशिषमाशास्ते ॥** इति।

'सुन्वते' सोमाभिषवं कुर्वते यजमानाय 'भद्रा' कल्याणरूपा शक्तिर्भवत्विति शेषः। अनेन पादेन प्रार्थनीयं प्रार्थयते ॥

'सोमाभिषव करने वाले यजमान के लिए कल्याण रूप शक्ति होवे'—इस [पाद] से आशीर्वाद की प्रार्थना की जाती है।

सप्तमीमृचं विधत्ते—

**'विश्वा रूपाणि प्रति मुञ्चते कविरिति'[1] विश्वरूपामन्वाह ॥** इति।

कविर्मेधावी मन्त्रप्रतिपाद्यो देवः सविता विश्वा रूपाणि शुक्लकृष्णादीनि बहूनि रूपाण्याभरणत्वेन प्रतिमुञ्चते स्वशरीरे स्थापयति। अत्र रूपशब्दस्य विश्वशब्दस्य च विद्यमानत्वाद् इयमृग्विश्वरूपशब्दाभिधेया ॥

'मेधावी सविता शुक्ल-कृष्ण आदि विभिन्न रूपों को अपने शरीर में स्थापित करता है'—इस विश्व रूप ऋचा का पाठ करता है [इस ऋचा में 'विश्व' शब्द और 'रूप' शब्द के विद्यमान रहने से इसको 'विश्वरूप' ऋचा कहते हैं]।

तस्या अनुवचने होतुः किंचिदितिकर्तव्यतामाह—

**स रराट्यामीक्षमाणोऽनुब्रूयात् ॥** इति।

हविर्धानमण्डपस्य चिकीर्षितस्य प्राच्यां द्वारि बन्धनीया दर्भमाला रराटी। द्वितीयार्थे सप्तमी। तां दर्भमालां पश्यन्ननुब्रूयात् ॥

उसे रराटी [हविर्धानमण्डप के पूर्व द्वार पर लटकाई गई दर्भ की माला] को देखते हुए अनुवचन करना चाहिए।

अस्या ऋचो रराट्यनुरूपत्वं दर्शयति—

**विश्वमिव हि रूपं रराट्याः शुक्लमिव च कृष्णमिव च ॥** इति।

दर्भमालाया अत्यन्तशुष्कास्तृणविशेषाः शुक्ला दृश्यन्ते। अशुष्कास्तु कृष्णा अतो विश्वमिव बहुविधमिव दर्भमालायाः स्वरूपं तेन विश्वा रूपाणीत्ययं मन्त्रोऽनुकूलः ॥

क्योंकि इस रराटी [ = दर्भमाला] के [अत्यन्त सूखे तृण] सफेद जैसे और हरे तृण कृष्ण जैसे [दिखाई देते] हैं अतः बहुविध रूप की माला होने से इस मन्त्र का विश्वरूपत्व ठीक है।

---

१. ऋ० ५.८१.२।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

होतुरेतद्वेदनं प्रशंसति—

**विश्वं रूपमवरुन्ध आत्मने च यजमानाय च यत्रैवं विद्वानेतां रराट्या-मीक्षमाणोऽन्वाह ॥** इति ।

विश्वं रूपं प्रजापश्वादिविविधवस्तुस्वरूपम् ॥

जो इस प्रकार समझकर रराटी की ओर देखते हुए मन्त्र का अनुवचन करता है वह अपने लिए और यजमान के लिए [प्रजा व पशु आदि] विविध वस्तु को सम्पादित करता है।

अष्टम्याऽनुवचनसमाप्तिं विधत्ते—

**'परि त्वा गिर्वणो गिर' इत्युत्तमया परिदधाति[1] ॥** इति ।

'परि त्वा' आदि सूक्त की अन्तिम ऋचा से अनुवचन का समापन करना चाहिए।

परिधानस्य कालं विधत्ते—

**स यदैव हविर्धाने संपरिश्रिते मन्येताथ परिदध्यात् ॥** इति ।

यस्मिन्नेव काले प्रवर्तिते द्वे शकटे संपरिश्रिते स्वस्थानेऽवस्थाप्य सम्यगाच्छादिते इति स होता मन्येत तत्तदानीं समापयेत् ॥

वह होता जब यह समझ ले कि दोनों हविर्धान अपने स्थान पर रखकर सम्यक् रूप से ढँक दिए गए हैं तभी अनुवचन की समाप्ति करे।

होतुरेतद्वेदनं प्रशंसति—

**अनग्नंभावुका ह होतुश्च यजमानस्य च भार्या भवन्ति यत्रैवं विद्वानेतया हविर्धानयोः संपरिश्रितयोः परिदधाति ॥** इति ।

अनग्नंभावुका आच्छादनबाहुल्यसंपत्त्या नग्नत्वरहिताः ॥

जो इस प्रकार जानते हुए दोनों हविर्धानों के सम्यक् रूप से ढँक जाने पर मन्त्र का पाठ करता है वह [होता] अपने और यजमान के लिए नग्नत्वरहित अर्थात् ओढ़ी व कपड़े पहनी हुई स्त्रियों को सम्पादित करता है।

हविर्धानयोः परिश्रयणकालं ज्ञात्वा परिदध्यादित्युक्तं स कालः कथं ज्ञायत इत्याशङ्क्याऽऽह—

**यजुषा वा एते संपरिश्रियेते यद्धविर्धाने यजुषैवैने एतत्परिश्रयन्ति ॥** इति ।

यद्धविर्धाने ये शकटे विद्येते एते 'यजुषा वै' यजुर्मन्त्रेणैव[2] संपरिश्रिते भवतः, तदेव कथमिति ? तदुच्यते—अध्वर्यव एते हविर्धाने यजुषैव परिश्रयन्तीत्येतत्प्रसिद्धमिति

---

१. ऋ० १.१०.१२।

२. तै० सं० १.२.१३.३।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शेषः । तदेतद् आपस्तम्बो दर्शयति—'विष्णोः पृष्ठमसीति[1] । तेषु मध्यमं छदिरध्यूहति । अरत्निविस्तारं नवायामम्'[2] इति ॥

यजु-मन्त्र से ये दोनों हविर्धान सम्यक् रूप से ढँके जाते हैं। अध्वर्यु जो इन दोनों हविर्धानों को यजुष् से ही ढँकते हैं [यह प्रसिद्ध है]।

परिधानस्य कालं विधत्ते—

**तौ यदैवाध्वर्युश्च प्रतिप्रस्थाता चोभयतो मेथ्यौ निहन्यातामथ परिदध्यात् ॥ इति ।**

अध्वर्युर्दक्षिणस्य हविर्धानस्य मेथीमीषाग्रभागावस्थापनकाष्ठं स्थापयति । तदेतच्छाखान्तरे श्रूयते—'दिवो वा विष्णवुत वा पृथिव्या इत्याशीःपदयर्चा[3] दक्षिणस्य हविर्धानस्य मेथीं निहन्ति'[4] इति । उत्तरस्य तु प्रतिप्रस्थाता करोति । तदेतदुभयम् आपस्तम्बो दर्शयति—'दिवो वा विष्ण इत्यध्वर्युर्दक्षिणस्य हविर्धानस्य मेथीं[5] निहन्तीति । तस्यामीषां निनह्यति'—'एवमुत्तरस्य प्रतिप्रस्थाता विष्णोर्नुकमित्युत्तरं कर्णातर्दमनु'[6]— इति च । प्रतिप्रस्थाता विष्णोर्नु कमित्युक्त्वाऽस्य[7] हविर्धानस्य 'उत्तरं कर्णातर्दम्' अपि । तस्मिन् मेथीनिहननकाले परिदध्यात्' इति ॥

जब अध्वर्यु और प्रतिप्रस्थाता [हविर्धान के] दोनों ओर से मेथी [एक प्रकार की लकड़ी] का निहनन करें तब अनुवचन की समाप्ति करनी चाहिए।

यद्यप्ययं कालः परिश्रयणकालात् प्राचीनस्तथाऽपि तत्समीपवर्तित्वात् पूर्वविधिना सह नात्यन्तं विरोध इत्येतद्दर्शयति—

**अत्र हि ते संपरिश्रिते भवतः ॥ इति ।**

अत्र मेथीनिहननदेशे तत्समीपवर्तिनि काले परिश्रयणं क्रियते ॥

क्योंकि, तभी दोनों हविर्धान ढँके जाते हैं।

ऋक्संख्यादिकं दर्शयति—

**ता एता अष्टावन्वाह रूपसमृद्धा, एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति । तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां, ता द्वादश संपद्यन्ते, द्वादश वै मासाः संवत्सरः, संवत्सरः प्रजापतिः, प्रजापत्यायत-**

---

१. तै० सं० ६.२.९ । २. आप० श्रौ० ११.८.१ ।
३. तै० सं० १.२.१३.२ । ४. तै० सं० ६.२.९.३ ।
५. 'कर्णातदः कीलम् । तदनु तत्समीपे । मेथीमवष्टम्भनस्तम्भनम्'—इति वृत्तिः ।
६. आप० श्रौ० ११.७.३.४ । ७. तै० सं० १.२.१३.३ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**नाभिरेवाऽऽभी राध्नोति य एवं वेद, त्रिः प्रथमां त्रिरुत्तमामन्वाह यज्ञस्यैव तद्बर्सौ नह्यति, स्थेम्ने बलायाविस्रंसाय ॥ २९ ॥** इति ।

पूर्ववद्[1] व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-
भाष्ये पञ्चमाध्याये तृतीयः खण्डः ॥ ३ ॥ [२९]

उन आठ ऋचाओं का होता पाठ करता है; जो [विवक्षित अर्थ के प्रतिपादक होने से] रूप समृद्ध हैं। जो यज्ञ अपने रूप में समृद्ध है वही यज्ञ की समृद्धि है जो कर्म जैसा किया जाने वाला है वैसा ही मन्त्र के द्वारा वर्णित होना ही उसकी रूप समृद्धि है। उन [आठ ऋचाओं] के मध्य प्रथम और अन्तिम ऋचा का तीन-तीन बार पाठ करता है। इस प्रकार वे बारह हो जाते हैं; क्योंकि वर्ष में बारह महीने ही होते हैं। संवत्सर ही प्रजापति है। जो इस प्रकार जानता है वह प्रजापति रूप आयतन के द्वारा साफल्य को प्राप्त करता है। अतः प्रथम और अन्तिम मन्त्र का तीन-तीन बार पाठ करना चाहिए। वस्तुतः ऐसा करके वह मानो यज्ञ के दोनों किनारों को कसकर बाँधता है, जिससे कि वह खिसक न जाय और उसकी स्थिरता और शक्ति बनी रहे।

॥ इस प्रकार पञ्चम अध्याय में तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

अथाग्नीषोमप्रणयनीया ऋचो विधातुमादौ प्रैषमन्त्रं विधत्ते—

**अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहीत्याहाध्वर्युः ॥** इति ।

योऽयमग्निः प्राचीनवंशाख्यायाः शालाया मुखे द्वारभागे पूर्वसिद्धाहवनीयरूपेणावतिष्ठते तस्माच्छालामुखीयादग्नेः सकाशात् कियानप्याग्नीध्रीये धिष्ण्ये नेतव्यः। सोमश्च पूर्वं शालामुखीयसमीपेऽवस्थितस्तेनाग्निना सहाऽऽनीतः सन् पुनरपि हविर्धानमण्डपे नेतव्यः। तदिदमग्नीषोमप्रणयनं तदर्थं होतारं प्रत्यध्वर्युः प्रैषमन्त्रं ब्रूयात्। तदेतत् सर्वम् आपस्तम्ब आह—'शालामुखीये प्रणयनीयमिध्ममादीप्य सिकताभिरुपयम्याग्नीषोमाभ्यां

---

१. द्र० इतः पूर्वम् पृ० ८८–८९। 'शिरो वा हविर्धानम्'—इत्यादि शत० ब्रा० ३.५,३। तैत्तिरीयकेऽपि तथैव विहितम् (६.२.९–११) एतदीय मन्त्राः अपि तत्रैव श्रुताः (१.२.१३)। 'हविर्धाने प्रवर्त्तयन्ति'—इत्यादि आश्व० श्रौ० ४.९.१-९। 'प्रोक्ष्य बर्हिः'—इत्यादि आप० श्रौ० ११.६–८। 'अग्निं प्रणीय सदोहविर्धानाग्नीध्र-होतृधिष्ण्यान् यथोक्तम्'—इत्यादि च कात्या० श्रौ० ६.१०.१४।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रणीयमानाभ्यामनुब्रूहीति संप्रेष्यति'[1] इति। अग्निप्रथमाः सोमप्रथमा वा प्राचीमभिप्रव्रजन्त्याग्नीध्रीयेऽग्निं प्रतिष्ठाप्येति[2] स च सोमो जिगाति गातुविदित्यपरया द्वारा[3] हविर्धानं राजानं प्रपादयतीति[4] च ॥

[अग्नि और सोम का प्रणयन]

i. ३० [v. ४] 'अग्नि और सोम को लाने के लिए अनुकूल मन्त्र का पाठ करो'— इस प्रकार अध्वर्यु [होता से] कहता है।

अग्नीषोमप्रणयनीयास्वृक्षु प्रथमामृचं विधत्ते—

**साऽवीर्हि देव प्रथमाय पित्र इति सावित्रीमन्वाह ॥** इति।

सेयं शाखान्तरगतत्वात्[5] सूत्रकारेण पठिता[6]। तस्यास्तृतीयपादेऽस्मभ्यं सवितरिति श्रुतत्वादियं सावित्री ॥

[अग्नि-सोम-प्रणयन की प्रथम ऋचा] 'साऽवीर्हि' इत्यादि सविता-देवताक ऋचा का होता पाठ करता है।

अथ वैयधिकरण्यमाशङ्क्य समाधत्ते—

**तदाहुर्यदग्नीषोमाभ्यां प्रणीयमानाभ्यामनुवाचाऽऽहाथ कस्मात् सावित्रीमन्वाहेति सविता वै प्रसवानामीशे सवितृप्रसूता एवैनौ तत्प्रणयन्ति तस्मात् सावित्रीमन्वाह ॥** इति।

पूर्ववद् व्याख्येयम्[7]।

इस सम्बन्ध में ब्रह्मवादी कहते हैं कि जब [अध्वर्यु ने] अग्नि और सोम के प्रणयन के लिए अनुवचन किया था तो सविता-देवताक ऋचा का पाठ वह क्यों करता है? क्योंकि सविता देव ही कर्मों में अनुज्ञा के स्वामी हैं। इस मन्त्र के पाठ के द्वारा सविता की प्रेरणा से ही उन दोनों का प्रणयन करते हैं इसीलिए सविता-देवताक ऋचा का पाठ करते हैं।

द्वितीयां विधत्ते—

**'प्रैतु ब्रह्मणस्पतिरिति' ब्राह्मणस्पत्यामन्वाह[8] ॥** इति।

होता 'प्रैतु ब्रह्मणस्पतिः' इत्यादि ब्रह्मणस्पति-देवताक ऋचा का पाठ करता है।

---

१. आप० श्रौ० ११.१७.२। २. आप० श्रौ० ११.३.४।

३. 'उभयतोद्वारं हविर्धानं भवति'—इति शत० ब्रा० ३.५.३.७।

४. आप० ११.३.८। ५. अथर्व० सं० ७.१४.३।

६. तद्यथा—सवीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै।
अथास्मभ्यं सवितर्वार्याणि दिवोदिव आ सुवा भूरि पश्वः ॥
आश्व० श्रौ० ४.१०.१।

७. द्र० इतः पूर्वम्, पृ० ९७।

८. ऋ० १.४०.३। 'पत्यन्ताण्ण्यः'—इति पा० सू० ४.१.८५।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अत्रापि वैयधिकरण्यमाशङ्क्य समाधत्ते—

**तदाहुर्यदग्नीषोमाभ्यां प्रणीयमानाभ्यामनुवाचाऽऽहाथ कस्माद् ब्राह्मणस्पत्यामन्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्मैवाऽऽभ्यामेतत् पुरोगवमकर्ण वै ब्रह्मण्वद्रिष्यति ॥ इति ।**

पुरोगवं ब्राह्मणमेव पुरोगन्तारमकः करोति ब्राह्मणोपेतस्य कर्मणो विनाशाभावात् तद्युक्तम्[1] ॥

इस सम्बन्ध में ब्रह्मवादी कहते हैं कि जब उस [अध्वर्यु] ने अग्नि और सोम के प्रणयन के लिए अनुवचन किया तो ब्रह्मणस्पति-देवताक ऋचा का पाठ क्यों किया ? क्योंकि बृहस्पति ही ब्रह्म है और ऋचा का पाठ कर ब्रह्म को दोनों [अग्नि और सोम] का पुरोगन्ता अर्थात् नेता बनाता है। वस्तुतः ब्रह्मण्वत् [ब्राह्मण की सहायता से युक्त] कर्म की हानि नहीं होती।

द्वितीयपादमुपजीव्य तामृचं प्रशंसति—

**प्र देव्येतु सूनृतेति ससूनृतमेव तद्यज्ञं करोति तस्माद् ब्राह्मणस्पत्यामन्वाह ॥ इति ।**

सूनृता प्रियवचनरूपा वाग्देवी प्रैतु ब्रह्मणा सह पुरो गच्छत्विति द्वितीयपादे श्रूयते तत्पाठेन यज्ञं ससूनृतमेव प्रियवचनयुक्तमेव करोति ॥

होता 'प्र देव्येतु' अर्थात् 'प्रियवचनरूपा वाग्देवी ब्रह्मा के साथ आगे आवें' इत्यादि [द्वितीय पाद] के पाठ से यज्ञ को प्रियवचनयुक्त ही करता है। इसीलिए ब्रह्मणस्पति-देवताक ऋचा का पाठ करता है।

तृतीयाद्यास्तिस्र ऋचो विधत्ते—

**'होता देवो अमर्त्यः'[2] इति तृचमाग्नेयं गायत्रमन्वाह सोमे राजनि प्रणीयमाने ॥ इति ।**

जुहोत्यस्मिन्नग्नाविति होताऽग्निः। अतो होतृशब्दश्रवणाद् इदमाग्नेयम् ॥

सोम राजा के लाये जाते समय 'होता देवो अमर्त्यः' इत्यादि अग्नि-देवताक गायत्री छन्दस्क तृच का पाठ करता है।

आग्नेयस्य सोमप्रणयनानुकूल्यं दर्शयति—

**सोमं वै राजानं प्रणीयमानमन्तरेणैव सदो हविर्धानान्यसुरा रक्षांस्यजिघांसंस्तमग्निर्मायियाऽत्यनयत् ॥ इति ।**

यदिदं सदोनामकं मण्डपं यच्च हविर्धाननामकं मण्डपं शकटद्वयं च तान्यन्तरेण तेषां मध्येऽसुराश्च रक्षांसि च नीयमानं सोमं हन्तुमैच्छन्। तं भीतं सोममग्निः स्वकीयया

---

१. द्र० इतः पूर्वम्, पृ० ७९। २. ऋ० ३.२७.७।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मायया तानसुरांस्तानि रक्षांस्यतिक्रम्य नीतवान् । तस्मात् सोमप्रणयनेऽप्याग्नेयस्य योग्यत्वमस्ति । असुराणां रक्षसां चावान्तरजातिभेदो द्रष्टव्यः ॥

सदस् और हविर्धान के बीच में लाये जाने वाले सोम राजा को असुरों और राक्षसों ने मारना चाहा । अग्नि ने उन असुरों का अतिक्रमण करके माया से उसको लाया [अतः सोम के प्रणयन में आग्नेय ऋचा का पाठ भी युक्ति युक्त है] ।

प्रथमाया[1] ऋचो द्वितीयपादमनूद्य व्याचष्टे—

**पुरस्तादेति मायथेति मायया हि स तमत्यनयत् तस्माद्धस्याग्निं पुरस्ताद्धरन्ति ॥** इति ।

मायया सहितोऽग्निः पुरस्ताद् गच्छतीति द्वितीयपादे श्रूयते । यस्मात् सोऽग्निर्मायया शक्त्या भीतिस्थानमतिलङ्घ्य तं सोममनयत् तस्माद् तस्मादेव कारणादस्य सोमस्य पुरस्तादाग्नीध्रपर्यन्तमग्निमृत्विजो हरन्ति ॥

'माया से अग्नि आगे चलता है'—इस द्वितीय पाद में क्योंकि वह अग्नि माया-शक्ति से उस सोम को लाया इसीलिए इस [सोम] के आगे [आग्नीध्र पर्यन्त] अग्नि को ऋत्विज लाते हैं ।

षष्ठीमारभ्य चतस्र ऋचो विधत्ते—

**'उप त्वाऽग्ने दिवे दिवे' 'उप प्रियं पनिप्नतमिति तिस्रश्चैकां चान्वाह ॥** इति ।

'उप त्वाऽग्ने' इत्यादिकाः क्रमेणाऽऽम्नातास्तिस्र[2]'उप प्रियमित्येका[3] ॥

'उप त्वाऽग्ने' इत्यादि तृच और 'उप प्रियम्' इत्यादि एक ऋचा का पाठ करता है ।

उक्तस्य तृचस्योक्तायाश्चैकस्या अनुवचनमुपपादयति—

**ईश्वरौ ह वा एतौ संयन्तौ यजमानं हिंसितोर्यश्चासौ पूर्व उद्धृतो भवति यमु चैनमपरं प्रणयन्ति तद्यत्तिस्रश्चैकां चान्वाह संजानानावेवैनौ तत्संगमयति-प्रतिष्ठायामेवैनौ तत्प्रतिष्ठापयत्यात्मनश्च यजमानस्य चाहिंसायै ॥** इति ।

यश्चासावग्निः पूर्वमुद्धृतः पूर्वभावी सन्नुत्तरवेद्यामानीय स्थापितः । यमप्यपरमग्निमिदानीमाग्नीध्रधिष्ण्यं प्रति प्रणयन्ति । एतावुभावग्नी संयन्तौ ममैवाऽऽहुतिरित्येवं सङ्ग्रामं कुर्वन्तौ[4] यजमानं हिंसितोरीश्वरौ हिंसितुं समर्थौ । तथा सति यदि तिस्रश्चैकां चानुब्रूयात् तदानीमेतौ द्वावप्यग्नी संजानानावेव परस्परैकमत्ययुक्तावेव कृत्वा संगमयत्य-

---

१. यदुक्तं 'तृतीयाद्यास्तिस्र ऋचः'–इति तत्र य प्रथमा, तस्या इति भावः ।

२. ऋ० १.१.७–९ । ३. ऋ० ९.६७.२९ ।

४. 'संयन्तौ स्पर्धमानौ'–इति गोविन्दस्वामी ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न्योन्यं संयोजयति । तिसृष्वृक्षु नमो भरन्त एमसीति पूर्वोद्धृतस्याग्नेर्नमस्कारः श्रूयते । एकस्यामृच्यगन्म बिभ्रतो नम इति प्रणीयमानस्याग्नेर्नमस्कारः श्रुतस्तेन तुष्टौ परस्परद्वेषं परित्यजतः । तत्तथा सत्येतावुभावग्नी प्रतिष्ठायामेवोत्तरवेद्याग्नीध्रलक्षणस्वस्वोचितस्थान एव प्रतिष्ठापयति । तच्च होतुरात्मनश्च यजमानस्य च हिंसापरिहाराय भवति ।।

जो यह अग्नि पहले लाकर उत्तरवेदि पर स्थापित की जाती है और जो बाद में इस अग्नि को आग्नीध्र धिष्ण्य के प्रति लाते हैं। ये दोनों अग्नियाँ लड़ने वाले यजमान की हिंसा करने में समर्थ होती हैं। इसीलिए जो तीन और एक ऋचा का पाठ करते हैं तो इन दोनों अग्नि को सम्यक् रूप से परस्पर संयोजित करते हैं। ऐसा करके दोनों अग्नि को उनके [उत्तरवेदि और आग्नीध्र रूप अपने] स्थान में स्थापित करते हैं। यह स्वयं होता और यजमान की हिंसा के परिहार के लिए होता है।

दशमीमृचं विधत्ते—

**अग्ने जुषस्व प्रति हर्य तद्वचो'[1] इत्याहुत्यां हूयमानायामन्वाह ।।** इति ।

आहुतिस्तु यजुर्वेदविहिता । तयैवेत्यृचाऽऽग्नीध्रे जुहोति[2] 'सुवर्गस्य लोकस्याभिजित्यै'[3] इति । सा चाऽऽपस्तम्बेन स्पष्टीकृता—'आग्नीध्रीयेऽग्निं प्रतिष्ठाप्याग्ने नयेत्यर्धमाज्यशेषस्य जुहोति'[4] इति । तदाहुतिकाले होताऽग्ने जुषस्वेत्येतामनुब्रूयात् ।।

होता आहुति देते समय 'अग्ने जुषस्व' इत्यादि मन्त्र का पाठ करे।

तामेतां प्रशंसति—

**अग्नय एव तज्जुष्टिमाहुतिं गमयति ।।** इति ।

जुषस्वेति मन्त्रेऽभिधानादाहुतिमग्नेः प्रियं संपादयति ।।

वस्तुतः इस प्रकार [मन्त्र में उक्त 'जुषस्व' शब्द से युक्त] वह आहुति अग्नि को प्रसन्न करने के लिए होती है।

एकादशीमारभ्य तिस्र ऋचो विधत्ते—

**'सोमो जिगाति गातुविदिति'[5] तृचं सौम्यं गायत्रमन्वाह सोमे राजनि प्रणीयमाने, स्वयैवैनं तद्देवतया स्वेन च्छन्दसा समर्धयति ।।** इति ।

मन्त्रे सोमदेवताया एव प्रतिपाद्यत्वात् सोमात्मकस्येयं स्वकीयदेवता गायत्र्या सोमस्य द्युलोकादाहृतत्वात्[6] छन्दोऽपि स्वकीयम् ।।

---

१. ऋ० १.१४४.७ ।

२. 'अग्ने नय सुपथेति नयवती'—इति तत्र सायणः । सा च ऋक् ऋ० १.१८९.१; तै० सं० १.४.४३.१; वा० सं० ५.३६, ७.४३,४०.१६ ।

३. तै० सं० ६.६.१.१ ।

४. आप० श्रौ० ११.१७.४ ।

५. ऋ० ३.६२.१३–१५ ।

६. द्र० तै० ब्रा० ३.२.१.१ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'सोमो जिगाति' इत्यादि सोम-देवताक गायत्री-छन्दस्क तृच का सोम राजा के प्रणयन के समय होता पाठ करता है; वस्तुतः इस प्रकार वह उसी के देवता और उसी के छन्द के द्वारा उसे समृद्ध करता है।

अस्य तृचस्यान्तिमं पादमादाय व्याचष्टे—

**सोमः सधस्थमासददित्यासत्स्यन्हि स तर्हि भवति ॥** इति।

अयं सोमः सधस्थं हविर्धानाभ्यां सहावस्थानप्रदेशं प्राप्याऽऽसददासन्नोऽभूत्। यस्मात् स सोमस्तर्हि तत्पादपाठकाल आसत्स्यन्भवति हविर्धानदेशस्याऽऽसन्नतां करिष्यन् वर्तते तस्मात् सधस्थमासददिति युक्तम् ॥

'यह सोम [हविर्धान रूप] सहावस्थान प्रदेश को प्राप्त कर बैठता है' क्योंकि [सोम] उस [पाद के पाठ के] समय [हविर्धान-प्रदेश के] आसन्न होता हुआ अवस्थित होता है। [अतः 'सधस्थमासदत्' युक्तियुक्त है]।

अस्य तृचस्यानुवचनदेशं विधत्ते—

**तदतिक्रम्यैवानुब्रूयात् पृष्ठत एवाऽऽग्नीध्रं कृत्वा ॥** इति।

पूर्वोक्तायामाहुत्यामध्वर्युणा हूयमानायां होता तृचमुपक्रम्यानुब्रुवाणो गच्छंस्तदाग्नीध्र-स्थानमतिक्रम्यैवाऽऽग्नीध्रं पृष्ठत एव कृत्वा तं पादमनुब्रूयात्। अतिक्रम्येत्यस्यैव पृष्ठतः कृत्वेति व्याख्यानम् ॥

होता को उसका अतिक्रमण करके अर्थात् आग्नीध्र-वेदि को पीछे की ओर करके उस पाद का पाठ करना चाहिये।

चतुर्दशीमृचं विधत्ते—

**'तमस्य राजा वरुणस्तमश्विनेति'[1] वैष्णवीमन्वाह ॥** इति।

व्रजं च विष्णुरिति चतुर्थपादे श्रुतत्वात् ॥

'तमस्य राजा' इत्यादि विष्णु-देवताक ऋचा का पाठ करता है।

अवशिष्टं पादत्रयं पठति—

**क्रतुं सचन्त मारुतस्य वेधसः। दाधार दक्षमुत्तममहर्विदं व्रजं च विष्णुः सखिवाँ अपोर्णुत इति ॥** इति।

अस्या ऋचोऽयमर्थः—अस्य सोमस्योपनद्धस्य राजा स्वामी वरुणस्तं क्रतुं यागं सचत इत्यध्याहारः। अश्विना उभावश्विनौ देवौ मारुतो वायुर्वेधा ब्रह्मा च क्रतुं सचन्त समवयन्ति। मारुतस्य वेधस इति प्रथमार्थे षष्ठ्यौ। विष्णुर्देवो दक्षं देवानां तृप्तौ कुशल-मत एवोत्तममहर्विदं श्रुत्या दिनाभिज्ञं सोमं दाधार प्रणयनकाले धृतवान्। तथा विष्णुः सखिवान् सोमरूपेण सख्या युक्ततया तद्वान् व्रजं सोमस्थानं हविर्धानमपोर्णुतेऽपगताच्छादनं

---

१. ऋ० १.१५६.४।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

करोति सोमस्य प्रवेशाय द्वारं विवृणोतीत्यर्थः । विष्णुर्दाधारापोर्णुते चेति समुच्चयार्थश्चकारः ॥

इस [उपनद्ध सोम] के स्वामी वरुण उस याग की सेवा करते हैं । अश्वि-द्वय' वायु और ब्रह्मा भी यज्ञ की सेवा करते हैं । कुशल विष्णु देव ने उत्तम एवं दिनाभिज्ञ सोम को [प्रणयन काल में] धारण किया और विष्णु सोम से सख्ययुक्त हो सोमस्थान रूप हविर्धान के अच्छादन को हटाते हैं अर्थात् सोम के प्रवेश-द्वार को खोलते हैं ।

उक्तमन्त्रतात्पर्यं विस्पष्टयति—

**विष्णुर्वै देवानां द्वारपः स एवास्मा एतद्द्वारं विवृणोति ॥** इति ।

विष्णु देवों के द्वारपाल हैं । वस्तुतः इस प्रकार वह इसके लिए द्वार खोलते हैं ।

पञ्चदशीमृचं विधत्ते—

**'अन्तश्च प्रागा अदितिर्भवासीति'[1] प्रपाद्यमानेऽन्वाह ॥** इति ।

सोमे हविर्धानं प्राप्यमाणे सत्येतामृचमनुब्रूयात् ॥

'अन्तश्च' इत्यादि ऋचा का [सोम के हविर्धान के] सन्निकट होने पर होता पाठ करता है ।

षोडशीमृचं विधत्ते—

**'श्येनो न योनिं सदनं धिया कृतमित्यासन्ने'[2] ॥** इति ।

आसन्ने हविर्धानं प्रति सोमे समीपवर्तिनि सत्येतामनुब्रूयात् । नकार उपमार्थः । यथा श्येनः पक्षी तत्र तत्र संचारं कृत्वा योनिं स्वस्थानं प्राप्नोति तथा धिया यजमानर्त्विग्बुद्धया कृतं संपादितं सदनं हविर्धानं प्रति सोम एषतीति वक्ष्यमाणेन संबन्धः ॥

'जैसे श्येन पक्षी [इधर-उधर भ्रमण के पश्चात्] अपने स्थान पर जाता है उसी प्रकार [यजमान और ऋत्विज की] बुद्धि से संपादित गृह [हविर्धान को] सोम प्राप्त करता है'—इस ऋचा का पाठ होता सोम के हविर्धान के प्रति समीपस्थ होने पर करता है ।

द्वितीयपादमनुवदति—

**हिरण्ययमासदं देव एषतीति ॥** इति ।

हिरण्यं सुवर्णसदृशं कृष्णाजिनमासदमुपवेशनयोग्यं सोमो देव एषति प्राप्नोति । इषु गताविति धातुः[3] ॥

सुवर्णसदृश कृष्णाजिन के आसन पर सोम देव बैठते हैं ।

---

१. ऋ० ८.४८.२ । २. ऋ० ९.७१.६ ।

३. छन्दसि विकरण व्यत्ययः—पा० सू० ३.१.८५ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हिरण्ययशब्दं व्याचष्टे—

**हिरण्मयमिव ह वा एष एतद्देवेभ्यश्छदयति यत्कृष्णाजिनम् ॥** इति ।

हविर्धानस्य शकटस्योपरि सोमस्थापनार्थं कृष्णाजिनमास्तृणन्ति । तथा च आपस्तम्ब आह—'दक्षिणस्य हविर्धानस्य नीडे पूर्ववत् कृष्णाजिनास्तरणं राज्ञः सादनम्'[1] इति । यदेतत्कृष्णाजिनमस्ति तदेतद्धिरण्मयमिव ह वै सुवर्णनिर्मितासनमिव देवार्थमेषोऽध्वर्युश्छदयत्यास्तृणाति । तस्मान्मन्त्रे हिरण्ययमित्युपपन्नम् ॥

यह जो कृष्णाजिन है वह वस्तुतः सुवर्ण निर्मित आसन के समान है देवों के लिए [अध्वर्यु] इसे बिछाता है ।

एतन्मन्त्रविधिमुपसंहरति—

**तस्मादेतामन्वाह ॥** इति ।

यस्मादासन्नदेशस्यानुकूलेयमृक्तस्मादेतामनुब्रूयात् ॥

इसीलिए वह इस मन्त्र का पाठ करता है ।

सप्तदश्या समापनं विधत्ते—

**'अस्तभ्नाद् द्यामसुरो विश्ववेदा' इति[2] वारुण्या परिदधाति ॥** इति ।

चतुर्थपादे 'वरुणस्य व्रतानि' इति श्रवणादियं वारुणी ॥

'अस्तभ्नाद्' इत्यादि वरुण-देवताक ऋचा से अनुवचन का समापन करता है ।

तस्याः सोमसम्बन्धं दर्शयति—

**वरुणदेवत्यो वा एष तावद्यावदुपनद्धो यावत्परिश्रितानि प्रपद्यते स्वयैवैनं तद्देवतया स्वेन च्छन्दसा समर्धयति ॥** इति ।

पूर्ववद्[3] व्याख्येयम् ॥

क्योंकि उसका देवता वरुण है और जब तक सोम कपड़े में बँधा रहता है तथा [हविर्धान के निकट] लाया जाता है तब तक [यह सोम वरुण पाश के] अधीन है । अतः इस ऋचा से उपसंहार करके वह सोम को उसी के देवता और उसी के छन्द के द्वारा समृद्ध करता है ।

अथात्र नैमित्तिकमृगन्तरं विधत्ते—

**तं यद्युप वा धावेयुरभयं वेच्छेरन्नेवा वन्दस्व वरुणं बृहन्तमित्येतया परिदध्यात् ॥** इति ।

तं यजमानमितरे बन्धवो जीवार्थिनो यद्युप वा धावेयुः प्राप्नुयुः । अथवा वैरिभ्यो भीता अभयं यजमानसमीपे यदीच्छेरंस्तदानीमेवा वन्दस्व[4] इत्येतया परिदध्यात् ॥

---

१. आप० श्रौ० ११.१७.१० ।
२. ऋ० ८.४२.१ ।
३. द्र० इतः पूर्वम् पृ० ८७ ।
४. ऋ० ८.४२.२ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अन्य बन्धु यदि उस यजमान का आश्रय प्राप्त करना चाहें अथवा वैरियों से भयभीत हो यजमान के समीप में अभय की इच्छा करें तब 'एवा वन्दस्व' इत्यादि ऋचा से अनुवचन समाप्त करना चाहिये।

होतुरेतद्वेदनप्रशंसापूर्वकमेतद्विधिमुपसंहरति—

**यावद्भ्यो ह्यभयमिच्छति यावद्भ्यो ह्यभयं ध्यायति तावद्भ्यो ह्यभयं भवति यत्रैवं विद्वानेतया परिदधाति; तस्मादेवं विद्वानेतयैव परिदध्यात्** ॥ इति।

यत्र यागे यथोक्तार्थं विद्वान् होतैतया परिदध्यात् तत्र यजमानो यावद्भ्यो बन्धुभ्यो हृद्रोगपरिहाररूपमभयमिच्छत्यथवा वैरिभीतिपरिहाररूपमभयं ध्यायति तावद्भ्यः सर्वेभ्यस्तादृशमभयं भवति। तस्मादेवा वन्दस्वेत्यनयैव परिदध्यात् ॥

जिस याग में इस प्रकार जानते हुए इस ['एवा वन्दस्व' आदि ऋचा] से जो अनुवचन समाप्त करता है वह यजमान वहाँ जितने बन्धुओं के लिए [हृदयरोग के परिहार रूप] अभय की इच्छा करता है अथवा [शत्रु-भय के परिहार रूप] अभय का ध्यान करता हैं उन सभी के लिए अभय प्राप्त करता है। इसलिए इस प्रकार जानते हुए इसी ऋचा से उपसंहार करना चाहिये।

मन्त्रगतसंख्यादिकं दर्शयति—

**ता एताः सप्तदशान्वाह रूपसमृद्धा एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति। तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां, ता एकविंशतिः संपद्यन्ते, एकविंशो वै प्रजापतिर्द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः** ॥ इति।

उन सत्रह ऋचाओं का होता पाठ करता है जो [विवक्षित अर्थ के प्रतिपादक होने से] रूप-समृद्ध हैं। जो यज्ञ अपने रूप में समृद्ध है, वही यज्ञ की समृद्धि है, जो कर्म जैसा किया जाने वाला है वैसा ही मन्त्र के द्वारा वर्णित होना ही उसकी रूप-समृद्धि है। उन [सत्रह ऋचाओं] के मध्य प्रथम और अन्तिम ऋचा का तीन-तीन बार पाठ करता है। इस प्रकार वे इक्कीस हो जाती हैं, वस्तुतः प्रजापति इक्कीस होते हैं। [क्योंकि] बारह मास, पाँच ऋतुएँ, ये तीन लोक और यह आदित्य [सब मिलाकर] इक्कीस हैं।

उक्तसंख्याप्रशंसार्थमेकविंशतिसंख्यापूरण आदित्ये बहून् गुणान् दर्शयति—

**उत्तमा प्रतिष्ठा तद्दैवं क्षत्त्रं सा श्रीस्तदाधिपत्यं तद्ब्रध्नस्य विष्टपं तत्प्रजापतेरायतनं तत्स्वाराज्यम्** ॥ इति।

योऽयमादित्योऽसावुत्तमा प्रतिष्ठा। तल्लोकानां स्थैर्येणावस्थानात्। तदादित्यस्वरूपमेव दैवं क्षत्त्रं देवसम्बन्धिनी क्षत्त्रजातिः। 'आदित्यो वै दैवं क्षत्त्रम्' इत्यन्यत्राभिधानात्[1]।

---

१. ऐ० ब्रा० ७.४.२।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सा श्रीरादित्यप्राप्तिरेव भोग्यवस्तुसंपत्तिः । तदादित्यमण्डलमाधिपत्यं स्वामित्वप्रापकम् । 'आदित्य एषां भूतानामधिपतिः' इति श्रवणात् ।[1] तन्मण्डलं ब्रध्नस्याऽऽदित्यस्य विष्टपं[2] स्थानभूतम्, तदेव मण्डलं प्रजापतेरप्यायतनं स्थानम्[3] । आदित्यमण्डले प्रजापत्युपासन-स्याभिधानात् । तदेव मण्डलं स्वाराज्यं पारतन्त्र्याभावात् ।

जो [इस आदित्य का] सबसे ऊँचा स्थान है वह देवों का क्षत्र है, वह श्री है, वह आदित्य-मण्डल के स्वामित्व का प्रापक है, वह आदित्य का स्थानभूत स्वर्ग है, वही मण्डल प्रजापति निवास-स्थान है और पारतन्त्र्य के अभाव में वही मण्डल स्वाराज्य है ।

उपसंहरति—

**ऋध्नोत्येतमेवैताभिरेकविंशत्यैकविंशत्या ॥ ३० ॥ इति ।**

**॥ इत्यैतरेयब्राह्मणे प्रथमपञ्चिकायां पञ्चमोऽध्यायः ॥ ५ ॥**

एकविंशतिसंख्याभिरेताभिर्ऋग्भिरेतं यजमानं समृद्धं करोत्येव[4] । अभ्यासोऽध्याय-समाप्त्यर्थः ॥

इस प्रकार इन इक्कीस ऋचाओं से उस [यजमान] को होता समृद्ध करता है ।

॥ इस प्रकार ऐतरेय ब्राह्मण की प्रथम पञ्चिका में पाँचवें
अध्याय की हिन्दी पूर्ण हुई ॥ ५ ॥

॥ इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये
प्रथमपञ्चिकायां पञ्चमाध्याये चतुर्थः खण्डः ॥४॥ [३०]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधर
माधवाचार्यादेशतो सायणाचार्येणविरचिते माधवीये वेदार्थप्रकाश-
नामभाष्ये ऐतरेयब्राह्मणस्य कृतौ प्रथमपञ्चिकायाः
पञ्चमोऽध्यायः ॥ ५ ॥

---

१. ऐ० ब्रा० ७.४.२ ।
२. ब्रध्न आदित्याः, तस्य स्थानं त्रिविशिष्टपं विष्टप इति स्वर्गादित्ययोः साधारणनाम-त्वादिह स्वर्गार्थं परिगृहीतम्—इति गोविन्दस्वामी ।
३. प्रजापतिर्गृहस्थः प्रजोत्पादनात् साधु । गृहस्थस्याप्यादित्यायतनत्वादपवर्गावस्थायां प्रजापतेरायतनमित्युच्यते—इति गोविन्दस्वामी ।
४. द्र० आश्व० श्रौ० ४.१०.१–१३ । आप० श्रौ० ११.१७.१–१० । तै० सं० १.३.५; ६.३.२ । कात्या० श्रौ० ८.७.३,४ । शत० ब्रा० ३.३.६.९ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[अग्निर्वै षट् (१)। स्वर्गं वै पञ्च (२)। प्राच्यां वै षट् (३)। यज्ञो वै नव (४)। सोमो वै चत्वारि (५)॥ १ ॥[1]

अग्निर्वै, प्रयाजवद्, गणानां त्वा, दश ॥ १ ॥[2]]

इत्यैतरेयब्राह्मणे प्रथमपञ्चिका समाप्ता ॥ १ ॥

(पञ्चिकाङ्कः—१ । अध्यायाङ्काः—५ । खण्डाङ्काः ३० ।)

[प्रथम पञ्चिका में 'अग्निर्वै' इत्यादि छः खण्डों का प्रथम अध्याय है; 'स्वर्गं वै' इत्यादि पाँच खण्डों का द्वितीय अध्याय है 'प्राच्यां वै' इत्यादि छः खण्डों का तीसरा अध्याय है। 'यज्ञो वै' इत्यादि नौ खण्डों का चतुर्थ अध्याय है और 'सोमो वै' इत्यादि चार खण्डों का पाँचवा अध्याय है।

इस प्रकार 'अग्निर्वै' इत्यादि से आरम्भ करके खण्डों का प्रथम दशक है; 'प्रयाजवद्' इत्यादि से आरम्भ करके द्वितीय दशक है और 'गणानां त्वा' से आरम्भ करके तृतीय दशक है अर्थात् प्रथम पञ्चिका में कुल तीस खण्ड हैं।]

॥ इस प्रकार ऐतरेय ब्राह्मण की प्रथम पञ्चिका ( = पाँच अध्याय)
की हिन्दी पूर्ण हुई ॥ १ ॥

---

१. अग्निर्वै—इत्यादीनि पञ्चानामध्यायानां प्रतीकज्ञानपूर्वक-खण्डसंख्याबोधकानि वाक्यानि। तदेतत् खण्डसंग्रहणमध्यायेषु खण्डानां निक्षेपप्रक्षेपनिवन्धनन्यूनाधिक्य-वारणाय पूर्वाचार्यैः प्रोक्तमधीयते चाद्यापि स्वाध्यायवत्। अथैकदेशार्थः खण्ड-शब्दः पुन्नपुंसकलिङ्ग इति अमरकोष १.३.१६ 'प्रथमः खण्डः', 'द्वितीयः खण्डः' इत्यादि प्रयोगा, 'चत्वारि' खण्डानि इत्येवमादयः प्रयोगाश्च, निरवद्या एवेति व्यक्तमेव।

२. एतच्च खण्डदशकसग्रहणं वाक्यम्। 'अग्निर्वै'—इत्यादीनि दशकप्रतीकानि, खण्डानां प्रक्षेपनिक्षेपदोषतो रक्षणार्थं कोषानामुपरि कोषरूपाणीति शम्।

———

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ द्वितीयपञ्चिका

## तत्र

## प्रथमाध्यायस्य प्रथमः खण्डः

—:❀ऽ—

# अथ षष्ठोऽध्यायः

## प्रथमः खण्डः

राजक्रयब्राह्मणमुक्तमादौ वह्नेः प्रणीतिप्रतिपादिकाश्च ।
तथा हविर्धानविवर्तनार्था अग्नेश्च सोमस्य च या ऋचः स्युः[1] ॥

अथ षष्ठाध्यायेऽग्नीषोमीयपशुर्वक्तव्यः । तत्राऽऽदौ यूपं वक्तुमाख्यायिकामाह—

**यज्ञेन वै देवा ऊर्ध्वाः स्वर्गं लोकमायंस्तेऽबिभयुरिमं नो दृष्ट्वा मनुष्याश्च ऋषयश्चानु प्रज्ञास्यन्तीति; तं वै यूपेनैवायोपयंस्तं यद्यूपेनैवायोपयंस्तद्यूपस्य यूपत्वं; तमवाचीनाग्रं निमित्योर्ध्वा उदायंस्ततो वै मनुष्याश्च ऋषयश्च देवानां यज्ञवास्त्वभ्यायन् यज्ञस्य किंचिदेषिष्यामः प्रज्ञात्या इति; ते वै यूपमेवाविन्दन्नवाचीनाग्रं निमितं; ते विदुरनेन वै देवा यज्ञमयूयुपन्निति, तमुत्खायोर्ध्वं न्यमिन्वंस्ततो वै ते प्र यज्ञमजानन् प्र स्वर्गं लोकम् ॥** इति ।

पुरा कदाचिद्देवा ज्योतिष्टोमं यज्ञमनुष्ठाय तत्फलभूतं स्वर्गं प्राप्तास्तत्र चावस्थाय भीतिं प्राप्ताः । केनाभिप्रायेणेति स उच्यते । ये मनुष्या वर्णाश्रमधर्मप्रवृत्ता ये च ऋषयस्तपसि प्रवृत्तास्ते सर्वेऽप्यस्मदीयमिमं यज्ञं दृष्ट्वा स्वयमप्यनुष्ठायस्वर्गं समागत्यास्मान् प्रज्ञास्यन्ति ततोऽस्मत्समा भविष्यन्ति । ततस्ते देवा भीता मनुष्याणामृषीणां च व्यामोहाय तमेव स्वकीयं यज्ञं यूपस्तम्भेनैवायोपयन् मिश्रितवन्तः । अन्यथानुष्ठानरूपं भ्रममुत्पादितवन्त इत्यर्थः । यस्मात्कारणाद्यूपेनैव तं यज्ञमयोपयन्नन्यथा कृतवन्तस्तस्माद्योपनसाधनत्वाद्यूपनाम संपन्नम् । केन क्रमेण व्यामोहितवन्त इति । उच्यते—तं यूपं पूर्वमूर्ध्वाग्रं सन्तमिदानीमवाचीनाग्रमधोमुखं निमित्य निखायोर्ध्वाभिमुखा उद्गतास्तदानीं मनुष्या ऋषयश्च देवानां यज्ञवास्तु यज्ञभूमिमागत्य यज्ञस्य संबन्धि चिह्नं यत्किंचिदवगमिष्यामस्तच्च देवानुष्ठितस्य प्रज्ञात्यै संपद्यत इत्यभिप्रेत्य यज्ञभूमिं सर्वतः परीक्ष्य यज्ञचिह्नमिदमिति यूपमेवाविन्दन्नलमन्त । कीदृशं यूपमवाचीनाग्रं निमितमधो-

---

१. अथ पूर्वाध्यायार्थं संग्रह उच्यते राजक्रयेति श्लोकेन । तथा च पञ्चमाऽध्याये ये चत्वारः खण्डाः श्रुताः, तत्र क्रमेण सोमक्रयार्थाख्यायिकाकथनपूर्वको वाग्विसर्गः । अग्निप्रणयनीया ऋचः, हविर्धानप्रोह्यमाणीया ऋचः, अग्निषोमप्रणयनीया ऋचश्चेति चत्वारोऽर्था विहिता इति निष्पन्नम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मुखत्वेन निखातं ततस्ते मनुस्या ऋषयश्चैवं विदुः । कथमिति, तदुच्यते—अनेनैवाधोमुखेन यूपेन देवा अस्मद्भ्रमाय स्वकीयं यज्ञं मिश्रितवन्त इति । ततस्तमधोमुखं निखातं यूपमुत्खाय पुनरूर्ध्वाभिमुखं न्यमिन्वन्निखातवन्तः । ततो यथाशास्त्रमवस्थितेन यूपेन मनुष्या ऋषयश्च देवैरनुष्ठितं यज्ञं प्रज्ञाय स्वर्गं लोकं प्राजानन् । तं यज्ञमनुष्ठाय स्वर्गं गता इत्यर्थः । सोऽयमर्थः शाखान्तरे संगृहीतः—'यज्ञेन वै देवाः सुवर्गं लोकमायंस्तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति ते यूपेन योपयित्वा सुवर्गं लोकमायंस्तमृषयो यूपेनैवानु प्राजानंस्तद्यूपस्य यूपत्वम्'[1] इति ।

[पशु-इष्टि]—

ii. १ [vi. १] यज्ञ के द्वारा ही देवताओं ने ऊपर के स्वर्गलोक को प्राप्त किया । वे डर गये कि हमारे इस यज्ञ को देखकर [वर्णाश्रम धर्म में प्रवृत्त] मनुष्य और [तपश्चर्या में लगे हुए] ऋषिगण [भी स्वयं अनुष्ठान करके स्वर्ग लोक को प्राप्त करके] हमारे समान हो जायेंगे अतः उन देवताओं ने उस [स्वकीय यूप] को [उन लोगों को भ्रम उत्पन्न करने के लिए] यूप के द्वारा ही मिला दिया अर्थात् उनको रोक दिया । वहाँ जो यूप के द्वारा उन्हें रोका वही यूप के नाम का कारण है [अर्थात् यूप का अर्थ है वह खम्भा जिससे रोका जाय] ऊर्ध्व-लोक को जाते हुए उन देवताओं ने उस यूप के अग्र भाग को नीचे करके पृथ्वी में गाड़ दिया । तब मनुष्य और ऋषि भी देवताओं के यज्ञ करने के स्थल पर आकर 'यज्ञ सम्बन्धी चिह्न को कुछ भी जान जाऊँ' यह सोचकर [देवताओं से अनुष्ठित यज्ञ-भूमि का चारों ओर परीक्षण करके 'यह यज्ञ का चिह्न है' ऐसा कहते हुए] उन्होंने पृथ्वी में नीचे की ओर मुख करके गड़े हुए मात्र यूप को ही पाया । उन्होंने जान लिया कि इसी [अधोमुख यूप] के द्वारा देवताओं ने अपने यज्ञ को अन्यथा कर दिया [अर्थात् उलट-पुलट करके मिश्रित कर दिया] उन्होंने यूप को उखाड़ कर उसका सिरा ऊपर की ओर करके गाड़ दिया । इसके बाद शास्त्र के अनुसार अवस्थित यूप के द्वारा मनुष्य और ऋषियों ने देवताओं से अनुष्ठित यज्ञ को जानकर उस यज्ञ का अनुष्ठान करके स्वर्ग लोक को प्राप्त किया ।

इदानीं यूपनिखननं विधत्ते—

**तद्यद्यूप ऊर्ध्वो निमीयते यज्ञस्य प्रज्ञात्यै, स्वर्गस्य लोकस्यानुख्यात्यै ॥** इति ।

निमीयते निखातव्य इत्यर्थः ॥

वह जो यूप को ऊर्ध्वाभिमुख करके गाड़ा जाता है उसका प्रयोजन यही है कि यज्ञ को जानें और स्वर्ग लोक को प्राप्त करें ।

तस्य यूपस्य तक्षणेनाष्टाश्रित्वं विधीयते—

**वज्रो वा एष यद्यूपः सोऽष्टाश्रिः कर्तव्योऽष्टाश्रिर्वै, वज्रस्तं तं प्रहरति द्विषते भ्रातृव्याय वधं योऽस्य स्तृत्यस्तस्मै स्तर्तवै ॥** इति ।

---

१. तै० सं० ६.३.४.७ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यूपस्य वज्रांशत्वेन वज्रत्वम्। तच्च शाखान्तरे श्रूयते—'इन्द्रो वृत्राय वज्रं प्राहरत्स त्रेधा व्यभवत्स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीयम्'[1] इति। लोके वज्रस्याष्टकोणत्वात् तद्रूपस्य यूपस्याप्यष्टाश्रित्वं कुर्यात्। 'द्विषते भ्रातृव्याय वधं' द्वेषं कुर्वतः शत्रोर्वधहेतुः तं वज्रं तं यूपं च पुरुषः प्रहरति प्रहारार्थं प्रयुङ्क्ते। अतो वज्रवत्प्रहरणसामर्थ्याद्यूपस्याष्टाश्रित्वं युक्तम्। 'यः' शत्रुः 'अस्य' यजमानस्य 'स्तृत्यो' हिंस्यो भवति 'तस्मै स्तर्तवै' तस्य शत्रोर्हिंसार्थमिदमष्टाश्रित्वम्॥

यह यूप वज्र है, उसे आठ धारों वाला बनाना चाहिये। वज्र में आठ धारें होती हैं। द्वेष करने वाले शत्रु के वध के लिए उस [वज्र] को और उस [यूप] को वह पुरुष प्रहार के लिए प्रयोग करता है [अतः वज्र के समान यूप का भी आठ धार वाला होना युक्तियुक्त है] जो शत्रु इस यजमान का हिंस्य होता है, उस [शत्रु] के मारने के लिए [यह आठ धारों वाला होता है]।

अष्टाश्रित्वसिद्धये यूपस्य यद्वज्रत्वमुक्तं तदेव शत्रोरप्रियहेतुत्वेनोपपादयति—

**वज्रो वै यूपः स एष द्विषतो वध उद्यतस्तिष्ठति तस्माद्धाप्येतर्हि यो द्वेष्टि तस्याप्रियं भवत्यमुष्यायं यूपोऽमुष्यायं यूप इति दृष्ट्वा॥** इति।

यो यूपोऽस्ति स एव शत्रोर्वधे निमित्तभूते सति स्वयमुद्यतस्तिष्ठत्युद्योगवानवतिष्ठतेऽतो वज्रत्वम्। यस्मादेवं पुराऽऽसीत्तस्मादिदानीमपि यः शत्रुर्यजमानं द्वेष्टि तस्य शत्रोर्विरोधियजमानानां यूपस्य दर्शनेन महदप्रियं भवति। अमुष्य विरोधिनो यूप इति निश्चये सत्यप्रियं न तु यूपमात्रदर्शनेन॥

यूप वज्र है, जो इस द्वेषी-शत्रु के वध के लिए स्वयं उद्योगवान् होकर अवस्थित होता है। [क्योंकि इस प्रकार प्राचीन समय में था] अतः इस समय भी जो [शत्रु इस यजमान से] द्वेष करता है उस शत्रु के विरोधी यजमानों के यूप को देखकर कि 'यह अमुक पुरुष का यूप है' 'यह अमुक पुरुष का यूप है'—महान् अप्रिय को प्राप्त होता है।

अथ कामनाविशेषेण यूपस्य प्रकृतिभूता वृक्षविशेषा वक्तव्याः। तत्राऽऽदौ खदिरवृक्षं विधत्ते—

**खादिरं यूपं कुर्वीत स्वर्गकामः खादिरेण वै यूपेन देवाः स्वर्गं लोकमजयंस्तथैवैतद्यजमानः खादिरेण यूपेन स्वर्गं लोकं जयति॥** इति।

स्वर्ग की कामना वाले यजमान को खदिर का यूप बनाना चाहिए; वस्तुतः खदिर के यूप के द्वारा देवताओं ने स्वर्ग लोक को जीत लिया उसी प्रकार वह यजमान भी खदिर के यूप के द्वारा स्वर्ग लोक को जीत लेता है।

---

१. तै० सं० ५.२.६.२। वाजसनेयिभिस्तु तच्चतुर्धाकरणमाम्नातम्। तथाहि—इन्द्रो ह यत्र वृत्राय''''राजन्यबन्धवः'–इति शत० ब्रा० १.२.४.२।



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

फलद्वयार्थं बिल्ववृक्षं विधत्ते—

**बैल्वं यूपं कुर्वीतान्नाद्यकामः पुष्टिकामः समां समां वै बिल्वो गृभीतस्तदन्नाद्यस्य रूपमामूलाच्छाखाभिरनुचितस्तत्पुष्टेः ॥** इति ।

समां समां तस्मिंस्तस्मिन्संवत्सरे बिल्ववृक्षो गृभीतः फलैर्गृहीतः, तच्च फलग्रहणमदनयोग्यस्यान्नस्य रूपम् । बिल्वफलानि भुञ्जानैर्भक्ष्यन्ते । मूलमारभ्य शाखाभिरनुक्रमेणोपचितो बिल्ववृक्षस्तत्रोपचयनं पुष्टेः स्वरूपं तस्मात् फलद्वयं युक्तम् ॥

अन्न और पुष्टि की कामना वाले यजमान को बिल्व [=बेल] का यूप बनाना चाहिए। बिल्व पर प्रत्येक संवत्सर में फल होता है, इसलिए वह अन्न का रूप है। वह मूल से शाखा तक अनुक्रमेण बढ़ता है अतः वह पुष्टि का द्योतक है। [अतः दोनों फलों का होना इसमें युक्तियुक्त है] ।

अध्वर्योर्वेदनं प्रशंसति—

**पुष्यति प्रजां च पशूंश्च य एवं विद्वान् बैल्वं यूपं कुरुते ॥** इति ।

जो इस प्रकार जानते हुए बिल्व का यूप बनाता है वह अपनी पुत्रादि प्रजा और पशुओं को पुष्ट करता है।

लोकप्रसिद्ध्या बिल्वस्य प्रशस्ततां द्रढयति—

**यदेव बैल्वां३ बिल्वं ज्योतिरिति वा आचक्षते ॥** इति ।

अत्र किंपदमध्याहृत्य योजनीयम् । हे अध्वर्यो किमत्र वैल्वं यूपं कृतवानसि, तत्सम्यग्भवता कृतम् । बिल्ववृक्षस्वरूपं वृक्षमध्ये श्रीवृक्षनामकत्वेन लक्ष्मीस्वरूपत्वात् पूज्यत्वेन ज्योतिर्भवति । प्लुतिस्तु प्रशंसाद्योतकध्वन्यभिनयार्था[1] । यदेव यस्मादेव कारणाद् ब्रह्मवादिन एवमाचक्षते, तस्माद् वैल्वो यूपोऽतिप्रशस्त इत्यर्थः ॥

[हे अध्वर्यु! तुमने] बिल्व का यूप जो बनाया वह ठीक है क्योंकि बिल्व [वृक्ष 'श्रीवृक्ष' नाम से वृक्षों के मध्य लक्ष्मी रूप में पूजित होने से] ज्योति है—ऐसा इसीलिए ब्रह्मवादी कहते हैं।

एतद्वेदनं प्रशंसति—

**ज्योतिः स्वेषु भवति श्रेष्ठः स्वानां भवति य एवं वेद ॥** इति ।

स्वेषु ज्ञातिषु ज्योतिस्तेजस्वी श्रेष्ठः श्रुतवृत्तसंपन्नः ॥

जो इस प्रकार जानता है वह स्वजातियों में ज्योति अर्थात् तेजस्वी होता है, और स्वजाति के मध्य श्रेष्ठ होता है।

---

१. 'अनुदात्तं प्रश्नान्तभिपूजितयोः'—इति पा० सू० ८.२.१०० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पुनः फलद्वयाय वृक्षान्तरं विधत्ते—

**पालाशं यूपं कुर्वीत तेजस्कामो ब्रह्मवर्चसकामस्तेजो वै ब्रह्मवर्चसं वनस्पतीनां पलाशः ॥** इति ।

तेजः शरीरकान्तिः । ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिः । पुष्पाणामतिरक्तत्वेन पलाशस्य तेजस्त्वं परब्रह्मत्वश्रवणाद् ब्रह्मवर्चसत्वम् । तथा च शाखान्तरे श्रूयते—'देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपाशृणोत्'[1] इति । एवमादि[2] ॥

**तेज की कामना वाले और ब्रह्मवर्चस् की कामना वाले [यजमान] को पलाश का यूप बनाना चाहिए । वस्तुतः वनस्पतियों में पलाश तेज और ब्रह्मवर्चस् है ।**

अध्वर्योरेतद्वेदनं प्रशंसति—

**तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् पालाशं यूपं कुरुते ॥** इति ।

**जो इस प्रकार जानते हुए पलाश का यूप बनाता है वह तेजस्वी और ब्रह्मवर्चस्वी होता है ।**

विल्वात् पलाशं प्रशंसति—

**यदेव पालाशा३ सर्वेषां वा एष वनस्पतीनां योनिर्यत्पलाशस्तस्मात् पलाशस्यैव पलाशेनाऽऽचक्षतेऽमुष्य पलाशममुष्य पलाशमिति ॥** इति ।

हे अध्वर्यो किं पालाशं यूपं कृतवानसि तत्सम्यक्कृतमिति प्रशंसार्था प्लुतिः । किंच पलाशः सर्ववनस्पतीनां कारणभूतस्तस्माद्योनित्वात् पलाशाख्यस्यैव वृक्षस्य संबन्धिना पलाशशब्देन सर्ववृक्षाणां पत्रमाचक्षते व्यवहरन्ति । अमुष्य न्यग्रोधस्य पलाशं पत्रममुष्य चूतवृक्षस्य पलाशं पत्रमेवं सर्ववृक्षसंग्रहार्था वीप्सा । पलाशशब्दः पुंलिङ्गो वृक्षविशेषवाची । नपुंसकलिङ्गः पत्रवाची । 'पलाशः किंशुकः पर्णः' 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्'[3] इत्यभिधानकारैरुक्तत्वात् । यस्मात् प्लुतिप्रयोगो यस्माच्च सर्ववृक्षयोनित्वं तस्मात् पलाशयूपः प्रशस्त इत्यर्थः ॥[4]

**[हे अध्वर्यु ! तुमने] जो पलाश का यूप बनाया वह ठीक ही है क्योंकि यह पलाश सभी वनस्पतियों की योनि है । पलाश वृक्ष के जो पलाश अर्थात् पत्ते हैं उन पत्तों के साम्य से ही प्रत्येक वृक्ष के पत्तों को पलाश कहते हैं । इसीलिए 'यह अमुक वृक्ष का पत्ता है', 'यह अमुक वृक्ष का पत्ता है'—ऐसा व्यवहार करते हैं ।**

---

१. तै० सं० ३.५.७.२ ।

२. द्र० तै० ब्रा० १.२.१.६ । एष चाग्न्याधाने पर्णाहराय विनियुज्यते—द्र० आप० श्रौ० ५.२.४ ।

३. अमरकोष २.४.२९,१४ ।

४. यूप्या वृक्षाः पलाशखदिरबिल्वरौहीतकाः—इत्यादि आप० श्रौ० ७.१.१५,१६ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदनं प्रशंसति—

**सर्वेषां हास्य वनस्पतीनां काम उपाप्तो भवति य एवं वेद ॥ १ ॥ इति ।**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये षष्ठाध्यायस्य प्रथमः खण्डः ॥ १ ॥ (१) [३१]

**जो इस प्रकार जानता है वह सभी वनस्पतियों के सम्बन्ध में जो कामना होती है उसे प्राप्त करता है ।**

**॥ इस प्रकार षष्ठ अध्याय में प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥**

## अथ द्वितीयः खण्डः

यूपं विधाय तस्याञ्जनादिमन्त्रान् वधातुमादौ प्रैषं विधत्ते—

**अञ्ज्मो यूपमनुब्रूहीत्याहाध्वर्युः ॥ इति ।**

'यूपमञ्ज्मो' यूपस्य घृतेनाञ्जनं कुर्मः । हे होतस्तदनुरूपामृचं ब्रूहीत्येवमध्वर्युः प्रैषं ब्रूयात् । स च प्रैषो विकल्पेनाऽऽपस्तम्बेन दर्शितः—'यूपायाज्यमानायानुब्रूहीति संप्रेष्यति अंज्यमानायानुब्रूहीति, अञ्ज्मो यूपमनुब्रूहीति वा'[1] इति । एवमध्वर्युणा प्रेषितो होताऽञ्जनकाले वक्ष्यमाणा ऋचोऽनुब्रूयात् । अञ्जनं त्वापस्तम्बेन दर्शितम्—'अथैनमसंस्कृतेनाऽऽज्येन यजमानोऽग्रतः शकलेनानक्त्यैन्द्रमसीति चषालमङ्क्त्वा सुपिप्पलाभ्यस्त्वौषधीभ्य इति प्रतिमुच्य देवस्त्वा सविता मध्वाऽनक्त्विति स्रुवेण संततमविच्छिन्दन्नग्निष्ठामश्रिमनक्ति'[2] इति ॥

**ii. २ [vi. २]—[होता से] अध्वर्यु कहता है कि हम यूप में घृत चुपड़ते हैं अतः हे होता, उसके अनुरूप ऋचा का पाठ करो ।**

एतस्मिन्नञ्जनकालेऽनुवचनीयामृचं विधत्ते—

**'अञ्जन्ति त्वामध्वरे देवयन्तः'[3] इत्यन्वाह ॥ इति ।**

हे यूप त्वां देवयन्तो देवान् पूजयितुमिच्छन्त ऋत्विजोऽञ्जन्ति घृतेनाक्तं कुर्वन्ति ॥

एतत्पादार्थस्य याज्ञिकप्रसिद्धिं दर्शयति—

**अध्वरे ह्येनं देवयन्तोऽञ्जन्ति ॥ इति ।**

**'हे यूप ! देवताओं की पूजा करने की इच्छा करते हुए ऋत्विज तुम्हें घृताक्त करते हैं'—इस ऋचा का पाठ [अञ्जन के समय होता] करता है; क्योंकि यज्ञ में इस यूप को देवताओं के पूजन की इच्छा करते हुए अञ्जन करते हैं ।**

---

१. आप० श्रौ० ७.१०.१ । २. तदेव ७.१०.२,३ । ३. ऋ० ३.८.१ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

द्वितीयपादमनूद्य व्याचष्टे—

**'वनस्पते मधुना दैव्येन' इत्येतद् वै मधु दैव्यं यदाज्यम् ॥ इति ।**

हे वनस्पते यूप मधुरेण देवयोग्येनाऽऽज्येन त्वामञ्जन्तीति पूर्वत्रान्वयः ॥

'हे वनस्पति यूप ! मधुर देव योग्य [घृत] के द्वारा [तुम्हें घृताक्त करते हैं]' इस द्वितीय पाद में जो घृत है वही देवयोग्य मधु है ।

द्वितीयार्धमनूद्य व्याचष्टे—

**'यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे' इति यदि च तिष्ठासि यदि च शयासै द्रविणमेवास्मासु धत्तादित्येव तदाह ॥ इति ।**

हे यूप त्वं यदूर्ध्वाग्रः संस्तिष्ठा अवटे स्थितोऽभवः । यद्वा जगन्मातुरस्याः पृथिव्या उपस्थ उपरि क्षयो निवासस्ते शयनं स्यात् सर्वथाऽपीह कर्मणि द्रविणा धनान्यस्मदपेक्षितानि धत्तात् संपादयतु । अयमुत्तरार्धस्यार्थो यदि चेत्यादिना स्पष्टीकृतः ॥

'हे यूप ! जो तुम ऊर्ध्वाभिमुख होकर [गड्ढे में] स्थित हो, अथवा [जगत् की] माता इस भूमि के गोद में सोये हो, सर्वथा तुम इस कर्म में हमें धन दो'—इस उत्तरार्ध का अर्थ है कि 'चाहे खड़े हो, चाहे पड़े हो—हम लोगों को 'धन दो' यही उससे कहा है ।

द्वितीयामृचं विधत्ते—

**'उच्छ्रयस्व वनस्पते'[1] इत्युच्छ्रीयमाणायाभिरूपा, यद्यज्ञेऽभिरूपं तत्समृद्धम् ॥ इति ।**

हे वनस्पते त्वमुच्छ्रयस्व शयनं परित्यज्योच्छ्रितो भव । उच्छ्रयस्वेत्युक्तत्वादुच्छ्रीयमाणाय यूपायेयमृगभिरूपा । तदेतदुच्छ्रयणमापस्तम्बेन दर्शितम्—'यूपायोच्छ्रीयमाणायानुब्रूहीति संप्रेष्यत्युच्छ्रीयमाणायानुब्रूहीति वोदिवं स्तभानान्तरिक्षं पृणेत्युच्छ्रयति'[2] इति ॥

'हे वनस्पति ! तुम [शयन को छोड़कर] पृथ्वी के ऊपर उठो'—इस ऋचा में 'उच्छ्रयस्व' इस पद के होने से यूप को उठाने के लिए यह ऋचा उपयुक्त है । जो यज्ञ के अनुरूप है वही यज्ञ की समृद्धि है ।

अस्या ऋचो द्वितीयं पादमनूद्य व्याचष्टे—

**'वर्ष्मन् पृथिव्या अधि' इत्येतद्वै वर्ष्म पृथिव्यै यत्र यूपमुन्मिन्वन्ति ॥ इति ।**

पृथिव्याः संबन्धिनि वर्ष्मञ्शरीरवत्प्रधानभूतेऽस्मिन् देशेऽध्युपर्युच्छ्रयस्वेति पूर्वत्रान्वयः । ऋत्विजो यत्र वेदितत्पूर्वदेशयोरन्तराले यूपमुन्मिन्वन्त्यूर्ध्वतया निखनन्ति सोऽयं देशः पृथिव्या वर्ष्मेति ॥

---

१. ऋ० ३.८.३ ।　　२. आप० श्रौ० ७.१०.६,७ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'पृथ्वी सम्बन्धी इस प्रदेश के ऊपर तुम उठो'—इस द्वितीय पाद में कथित 'पृथ्वी का घर' वह है जहाँ ऋत्विज यूप को ऊपर करके पृथ्वी में गाड़ते हैं।

मन्त्रे तृतीयं पादमनूद्य व्याचष्टे—

**'सुमिती मीयमानो वर्चोधा यज्ञवाहसे' इत्याशिषमाशास्ते ॥** इति ।

सुमिती सुमित्या शोभनेन प्रक्षेपेण स्थापनेन मीयमानः स्थाप्यमानो यज्ञवाहसे यज्ञनिर्वाहिकाय यजमानाय वर्चोधा वर्चसां दीप्तीनां धाता संपादयिता तेन यूपो विशेष्यते । वर्चोधा इत्येतदाशीः प्रार्थना ॥

'शोभन प्रक्षेप के द्वारा स्थापित यूप यज्ञ निर्वाहक (यजमान) के लिए तेज धारण कराए ।' इस प्रकार 'सुमिती' आदि तृतीय चरण से आशीर्वाद की कामना की जाती है।

तृतीयामृचं विधत्ते—

**'समिद्धस्य श्रयमाणः पुरस्तादिति'[1] ॥** इति ।

अन्वाहेत्यनुवर्तते । अयं यूपः समिद्धस्य प्रदीप्तस्याऽऽहवनीयस्य पुरस्तात् पूर्वस्यां दिशि श्रयमाण आश्रित्य वर्तमानः ॥

'यह यूप प्रदीप्त आहवनीय के पूर्व दिशा में आश्रित होकर स्थित है।' इस प्रकार 'समिद्धस्य' आदि ऋचा का पाठ करना चाहिए।

एतत्पदार्थस्य याज्ञिकप्रसिद्धि दर्शयति—

**समिद्धस्य ह्येष एतत्पुरस्ताच्छ्रयते ॥** इति ।

अर्धमन्तर्वेद्यर्धं बहिर्वेदि यूपस्थापनादाहवनीयपूर्वदिगाश्रयणम् ॥

क्योंकि यह समिद्ध-अग्नि के सामने खड़ा रहता है।

द्वितीयपादमनूद्य व्याचष्टे—

**'ब्रह्म वन्वानो अजरं सुवीरम्' इत्याशिषमेवाऽऽशास्ते ॥** इति ।

अजरमविनाशं सुवीरं कल्याणपुत्रादिसमृद्धिकारणम् । ब्रह्म परिवृढमिदं कर्म वन्वानः संभजमानो यूपः । अजरादिशब्दैरेतस्मिन्न पादे प्रार्थनं शंसते ॥

[यह यूप] 'विनाशरहित सुन्दर वीरता युक्त ब्रह्म-तेज को देते हुए'—इस पाद से आशीर्वाद की ही प्रार्थना की गई है।

तृतीयपादमनूद्य व्याचष्टे—

**'आरे अस्मदमतिं बाधमानः' इत्यशनाया वै पाप्माऽमतिस्तामेव तदारान्नुदते यज्ञाच्च यजमानाच्च ॥** इति ।

---

१. ऋ० ३.८.२ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अमतिर्बुद्धिभ्रंशस्तामस्मद्यजमानत्विग्भ्य आरे दूरे यथा भवति तथा बाधमानो यूपः । एतत्पादगतेनामतिशब्देन क्षुधा वा पापं वाऽभिधीयते । तयोर्बुद्धिभ्रंशहेतुत्वादस्मदित्यनेन यज्ञो यजमानश्च विवक्षितः । ताभ्यां दुर्बुद्धिर्दूरे निराक्रियते ॥

'हमारी दुर्बुद्धि अर्थात् पाप को हम [यजमान और ऋत्विज] से दूर करते हुए' इस पाद में 'अमति' का अर्थ क्षुधा अथवा पाप है । वस्तुतः इस प्रकार वह यज्ञ और यजमान से उस [दुर्बुद्धि] को दूर करता है ।

चतुर्थंपादमनूद्य व्याचष्टे—

**'उच्छ्रयस्व महते सौभगायेत्याशिषमेवाऽऽशास्ते ॥ इति ।**

हे वनस्पते यजमानस्याधिकसौभाग्यसिद्ध्यर्थमुच्छ्रितो भव । अस्मिन् पाद आशीर्विस्पष्टा ॥

'हे वनस्पति ! यजमान के महान् सौभाग्य [की सिद्धि] के लिए उन्नत होओ'—इस पाद से आशीर्वाद की ही कामना की गई है ।

चतुर्थीमृचं विधत्ते—

**'ऊर्ध्वं ऊ षु ण ऊतये तिष्ठा देवो न सवितेति'[1] ॥ इति ।**

हे यूप नोऽस्माकमूतये रक्षणायोर्ध्वं ऊर्ध्वाकार एव सुतिष्ठ स्थितिं कुरु । तत्र दृष्टान्तः सविता देवो न सूर्यो देव इव स यथास्मद्रक्षणायोर्ध्वस्तिष्ठति तद्वत्त्वमपीत्यर्थः ॥

'हे यूप जैसे सूर्य देव हमारे रक्षण के लिए ऊपर स्थित हैं उसी प्रकार हमारी रक्षा के लिए तुम उन्नत होकर स्थित होओ ।' इस ऋचा का पाठ करना चाहिए ।

एतत्पूर्वार्धगतस्य नशब्दस्य निषेधार्थत्वं परित्यज्याङ्गीकारवाचित्वात्तेनात्रोपमार्थो विवक्षित इत्येतद्दर्शयति—

**यद्वै देवानां नेति तदेशामोमिति तिष्ठ देव इव सवितेत्येव तदाह ॥ इति ।**

देवानां देवप्रतिपादकमन्त्राणां० वर्णव्यत्ययेन वा वेदानां संबन्धि नेति यत्पदमस्ति तदेषां वेदानां संबन्धिनि प्रयोगे ओमित्येतस्मिन्नर्थे वर्तते । तथा सत्यङ्गीकार्यस्यार्थस्य विवक्षितत्वादत्रोपमार्थे विवक्षिते सति तिष्ठ देव इवेत्यादिवाक्यार्थो लभ्यते ॥

देव प्रतिपादक मन्त्रों में अथवा वेद में प्रयुक्त जो 'न' पद है वह ओम् अर्थात् अङ्गीकार के अर्थ में प्रयुक्त होने से 'देवो न सविता' का अर्थ 'देव इव सविता' अर्थात् 'सविता देव के समान स्थित होओ' ऐसा उससे कहा है ।

तृतीयपादमनूद्य व्याचष्टे—

**'ऊर्ध्वो वाजस्य सनितेति' वाजसनिमेवैनं तद्धनसां सनोति ॥ इति ।**

---

१. ऋ० १.३६.१३ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अयं यूप ऊर्ध्वः सन् वाजस्यान्नस्य सनिता दाता तत्तेन पादपाठेनैनं यूपं वाजसनिमेवान्नदातारमेव सनोति करोतीत्यर्थः। एतस्योपलक्षणत्वाद्धनसां सुवर्णादिदातारं च करोति ॥

'यह यूप उन्नत होकर अन्न का दाता होए'—इस पाद के पाठ से इस [यूप] को अन्न दाता बनाता है और उससे सुवर्ण आदि का दाता बनाता है।

चतुर्थपादमनूद्य व्याचष्टे—

**'यदञ्जिभिर्वाघद्भिर्विह्वयामहे' इति च्छन्दांसि वा अञ्जयो वाघतस्तैरेतद्देवान् यजमाना विह्वयन्ते मम यज्ञमागच्छत मम यज्ञमिति ॥ इति।**

यद्यस्मात् कारणादञ्जिभिः क्रत्वभिव्यक्तिकारिभिर्वाग्भिर्वाघद्भिः क्रत्वनुष्ठानभारं वहद्भिर्ऋत्विग्भिः सहिता यजमाना वयं विह्वयामहे विशेषेण देवानाह्वयामस्तस्माद्यूप त्वमूर्ध्वस्तिष्ठेति योज्यम्। अत्राञ्जिवाघच्छब्दाभ्यामृत्विग्रूपमापन्नाश्छन्दोभिमानिनो देवा उच्यन्ते। एतत्पादपाठे छन्दोभिर्नानामन्त्रैर्ऋत्विग्भिः पठ्यमानैस्तैस्तैर्यजमाना देवान् विशेषेण ह्वयन्ति। भो देवा ममैव यज्ञमागच्छतेत्येक एवमन्येऽपि। सर्वसंग्रहार्थेयं वीप्सा ॥

'क्योंकि यज्ञों में प्रयुक्त वाणी के द्वारा और [यज्ञानुष्ठान का भार वहन करने वाले] ऋत्विज व यजमान के सहित हम विशेष रूप से देवताओं का आह्वान करते हैं'—इस पाद में प्रयुक्त अञ्जि और वाघत् शब्द का अर्थ है—छन्दों के द्वारा नाना मन्त्रों से, ऋत्विजों के द्वारा पठ्यमान उन-उन ऋचाओं से हम यजमान विशेष रूप से देवताओं का आह्वान करते हैं कि 'हे देव, मेरे यज्ञ में आओ'—'मेरे यज्ञ में आओ'।

होतुरेतद्वेदनं प्रशंसति—

**यदि ह वा अपि बहव इव यजन्तेऽथ हास्य देवा यज्ञमेव[1] गच्छन्ति यत्रैवं विद्वानेतामन्वाह ॥ इति।**

यद्यप्येकस्मिन् काले बहवो यजमाना यजन्त एव यागं कुर्वन्त्येव तथाऽप्यस्यैव विदुषोऽन्नयुक्तस्यैव यजमानस्य यज्ञं प्रति देवा आगच्छन्ति ॥

यद्यपि एक ही समय में बहुत से यजमान यजन करते हैं तथापि इसी [अन्नयुक्त यजमान] के याग में देवता आते हैं; जहाँ इस प्रकार समझकर इन ऋचाओं का पाठ होता करता है।

पञ्चमीमृचं विधत्ते—

**'ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दहेति'[2] ॥ इति।**

---

१. 'यज्ञमैव' इति हाग संपादित पुस्तके पाठः स च चिन्त्यः। २. ऋ० १.३६.१४।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हे यूप, त्वमूर्ध्वः सन् केतुना प्रज्ञया नोऽस्मानंहसः पापान्निपाहि नितरां पालयात्रिणं भक्षणशीलं राक्षसादि विश्वमपि सदह समूहीकृत्य भस्मी कुरु ॥

'हे यूप, तुम उन्नत होकर प्रज्ञा के द्वारा पाप से बचाओ। सभी खाने वालों [राक्षसों] को इकट्ठा करके भस्मसात् कर दो।'

तस्य पूर्वार्धस्य तात्पर्यं दर्शयति—

**रक्षांसि वै पाप्माऽत्रिणो रक्षांसि पाप्मानं दहेत्येव तदाह ॥** इति।

यानि रक्षांसि सन्ति यश्च पाप्मा विद्यते तत्सर्वमत्रिञ्शब्देन विवक्षितम्। अत उभय-दहनं मन्त्रप्रार्थितं भवति ॥

अत्रिन् शब्द का तात्पर्य है राक्षस और पाप। अतः राक्षस और पाप दोनों का दहन मन्त्र में प्रार्थित है।

तृतीयपादमनूद्य व्याचष्टे—

**'कृधी न ऊर्ध्वाञ्चरथाय जीवसे' इति यदाह कृधी न ऊर्ध्वां च्चरणाय जीवस इत्येव तदाह ॥** इति।

चशब्दः पूर्ववाक्येण समुच्चयार्थः। अपि च हे यूप रथाय जीवसे रथारोहणपूर्वकाय जीवनाय। यद्वा चरथायेत्येकमेव पदम्। चरथं चरणमाचारस्तस्मै जीवनाय च नोऽस्मानूर्ध्वानुच्छ्रितान् कृधि कुरु, इत्यनेन पादेन मन्त्रो यदाह तत्त्र चरणस्य विवक्षितत्वादस्मदुक्तमेवार्थं मन्त्र आह ॥

हे यूप, रथारोहणपूर्वक जीवन के लिए अथवा आचार युक्त जीवन के लिए हमें उन्नत करो'—इस पाद में जो कहा है उससे 'आचरण युक्त जीवन के लिए हमें उन्नत करो'—यही तात्पर्य है।

चरथायेति शब्दमाश्रित्य तात्पर्यमभिधाय जीवस इति शब्दमाश्रित्य तद्दर्शयति—

**यदि ह वा अपि नीत इव यजमानो भवति परि हैवैनं तत्संवत्सराय ददाति ॥** इति।

यद्यपि यजमानो मृत्युना नीत एव भवति तथाऽपि तत्पादपाठेन मृत्युं परिहृत्यैनं संवत्सरायाऽऽयुष्प्रदाय कालात्मने ददाति ॥

'जीवसे' से तात्पर्य यह है कि—यद्यपि मृत्यु यजमान को ले ही जाती है तथापि उससे एक संवत्सर के लिए आयु देता है।

चतुर्थपादमनूद्य व्याचष्टे—

**'विदा देवेषु नो दुव' इत्याशिषमेवाऽऽशास्ते' ॥** इति।

नोऽस्मदीयं दुवः परिचरणं देवेषु विदा वेदय कथयेत्यर्थः। अनेन स्वकर्मणां सफलत्वं प्रार्थयते ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'हे यूप, हमारी परिचर्या को देवताओं में कहो'—इससे [अपने कर्म की सफलता रूप] आशीर्वाद की आशंसा की गई है।

षष्ठीमृचं विधत्ते—

**जातो जायते सुदिनत्वे अह्नामिति**[1] ॥ इति ।

अयं यूपो जातो नित्यप्रादुर्भूतोऽप्यह्नां दिवसानां मध्ये सुदिनत्वे यागयुक्तस्याह्नः सुदिनत्वाय जायते ॥

'यह यूप नित्यप्रादुर्भूत होकर भी दिवसों के मध्य [यागयुक्त] सुदिन के लिए उत्पन्न होता है'—इत्यादि ऋचा का पाठ करता है।

एतमेवार्थं दर्शयति—

**जातो ह्येष एतज्जायते** ॥ इति ।

एतदेतेन पादपाठेन ॥

क्योंकि उत्पन्न वह इस प्रकार उत्पन्न होता है।

द्वितीयपादमनूद्य व्याचष्टे—

**'समर्य आ विदथे वर्धमान' इति वर्धयन्त्येवैनं तत्** ॥ इति ।

समर्ये मनुष्यैर्यजमानादिभिर्युक्ते विदथे यज्ञदेश आसमन्ताद् वर्धमानो यूप आस्ते तत्पादपाठेन यूपं वर्धयन्त्येव ॥

यजमानादि मनुष्यों से युक्त यज्ञस्थल में चारों ओर से बढ़ता हुआ यूप रहता है अतः इस पाद के पाठ से इसका वर्धन ही करते हैं।

तृतीयपादमनूद्य व्याचष्टे—

**'पुनन्ति धीरा अपसो मनीषेति' पुनन्त्येवैनं तत्** ॥ इति ।

धीरा धीमन्तो यजमानादयोऽपसः कर्मणो निमित्तभूतान् मनीषा स्वकीयया मनीषया बुद्धया पुनन्ति तमिमं यूपं शोधयन्ति । तत्तेन तृतीयपादपाठेन ।

[यजमान आदि] धीमान् कर्म के निमित्तभूत अपनी बुद्धि से इस यूप का शोधन करते हैं।

चतुर्थपादमनूद्य व्याचष्टे—

**'देवया विप्र उदियर्ति वाचमिति' देवेभ्य एवैनं तन्निवेदयति** ॥ इति ।

विप्रो ब्राह्मण ऋत्विक्संघो देवया देवगामिनीं वाचं यूपस्तुतिमुदियर्ति, उद्गमयत्युच्चारयतीत्यर्थः । तत्तेन चतुर्थपादपाठेनैनं यूपं देवेभ्यः कथयति ।

[ऋत्विजों के समूह रूप] 'ब्राह्मण देवगामिनी यूपस्तुति रूप वाणी का उच्चारण करते हैं'—इस [पाद के पाठ] से इस [यूप] को देवताओं के लिए निवेदन करता है।

---

१. ऋ० ३.८.५ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सप्तम्या समापनं विधत्ते—

**'युवा सुवासाः परिवीत आगात्' इत्युत्तमया[1] परिदधाति ॥ इति ।**

उक्तास्वृक्षु येयमन्तिमा तयाऽनुवचनं समापयेद्यथा लोके सुवासाः शोभनवस्त्रोपेतो युवा यौवनयुक्तः पुरुषोऽग्रत आगच्छति, एवमयं यूपः परितो रशनया वेष्टित आगादिह कर्मण्यायातः ॥

'जैसे सुन्दर कपड़े पहनकर युवक आता है उसी प्रकार यह यूप भी रस्सी से वेष्टित होकर आता है।' इस प्रकार 'युवा सुवासाः' आदि ऋचा से अनुवचन की समाप्ति करता है।

यद्वा युवशब्देन यूपस्य प्राणरूपत्वं विवक्ष्यते तामेतां विवक्षां दर्शयति—

**प्राणो वै युवा सुवासाः सोऽयं शरीरैः परिवृतः ॥ इति ।**

कदाचिदपि जरारहितत्वात् प्राणस्य युवत्वं प्राणवेष्टनरूपत्वाच्छरीरावयवानां वस्त्ररूपत्वमीदृशप्राणरूपत्वेन यूपः प्रशस्यते ॥

[जरारहित होने के कारण] 'युवा' शब्द का अर्थ प्राण है। वह यह [प्राण वेष्टन रूप] शरीरावयवों से घिरा रहता है।

द्वितीयपादमनूद्य व्याचष्टे—

**'स उ श्रेयान् भवति जायमानः' इति श्रेयाञ्छ्रेयान् ह्येष एतद्भवति जायमानः ॥ इति ।**

ततः स उ स एव यूपो जायमानः कर्मणि निष्पाद्यमानः श्रेयान् दिने दिने प्रशस्यतरो भवति। प्रथमतश्छेदनेन प्रशस्तत्वं ततस्तक्षणेन प्रशस्तत्वमञ्जनेन ततोऽपीत्येवंविधविवक्षया श्रेयाञ्श्रेयानिति वीप्सा प्रयुक्ता ॥

'वह यूप ही कर्म में उत्पन्न होकर दिन में प्रशस्यतर होता है'—अर्थात् छेदन करके उसको छीला और अञ्जन किया जाकर वह उत्पन्न हुआ यूप श्रेष्ठ और श्रेष्ठतर होता है।

उत्तरार्धमनूद्य व्याचष्टे—

**'तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः' इति ये वा अनूचानास्ते कवयस्त एवैनं तदुन्नयन्ति ॥ इति ।**

तं यूपं धीरा बुद्धिमन्तः कवयोऽनूचानादय उन्नयन्ति स्तूयमानैर्गुणैरुच्छ्रितं कुर्वन्ति। कीदृशाः कवयः, स्वाध्यः सुष्ठ्वासमन्ताद्ध्यायतीति स्वाधीस्तस्य बहुवचनं सुधिय इत्यर्थः। मनसा स्वकीयेन देवयन्तो देवानात्मन इच्छन्तः। उक्त एवार्थो ये वाऽनूचाना इत्यादिना स्पष्टीकृतः।

---

१. ऋ० ३.८.४।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अत्र प्रथममञ्ज्मो यूपमनुब्रूहीति प्रेषितो यथाऽञ्जन्ति त्वामिति प्रथमामन्वाह तथा यूपायोच्छ्रीयमाणायानुब्रूहीति[1] प्रेषित उच्छ्रयस्वेत्याद्या ऋचः पश्चानुब्रूयात् । तथा यूपाय परिवीयमाणायानुब्रूहीति[2] प्रेषितो युवा सुवासा इत्येतामनुब्रूयात् ॥

'बुद्धिमान मेधावी मन से देवताओं की इच्छा करते हुए सुन्दर ध्यान के साथ उस यूप को उन्नत करते हैं।' इसमें जो जो अनूचान [अर्थात् विद्वान्] हैं वे ही 'कवि' शब्द से अभिहित हैं अतः वे ही उससे इसको उन्नत करते हैं।

उक्तमन्त्रसंख्यादिकं दर्शयति—

**ता एताः सप्तान्वाह रूपसमृद्धा, एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं, यत्कर्म क्रियमाणमृगभिवदति, तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां, ता एकादश संपद्यन्त, एकादशाक्षरा वै त्रिष्टुप् त्रिष्टुबिन्द्रस्य वज्र इन्द्रायतनाभिरेवाऽऽभी राध्नोति य एवं वेद, त्रिः प्रथमां त्रिरुत्तमामन्वाह; यज्ञस्यैव तद्बर्सौ नह्यति स्थेम्ने बलायाविस्रंसाय ॥ २ ॥** इति ।

त्रिष्टुभ इन्द्रस्य वज्रत्वमर्थवादान्तरे द्रष्टव्यम् ॥

अथ मीमांसा—द्वादशाध्यायस्य तृतीयपादे चिन्तितम् ।

"उद्दिवेत्युच्छ्रयस्वेति विकल्पो वा समुच्चयः ।
विकल्पः स्मारकत्वैक्यात्प्रकारान्यत्वतोऽन्तिमः[3] ॥"

यूपस्योच्छ्रयणे करण एष मन्त्रोऽध्वर्युणा पठ्यते[4]—'उद्दिवं स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृंह'[5] इति । उच्छ्रीयमाणाय यूपाय प्रेषितेन हौत्राऽयं मन्त्रः [6]पठ्यते—'उच्छ्रयस्व वनस्पते वर्ष्मन् पृथिव्या अधि'[7] इति । अनयोर्यूपोच्छ्रयणस्मारणमेकमेव कार्यं तस्माद् विकल्प इति चेत् । मैवम् । करणमन्त्रः 'उच्छ्रयणं करोमि' इत्येवं स्मारयति । हौत्रस्तु क्रियमाणमुच्छ्रयणमनुवदन्नध्वर्योः 'यूपोच्छ्रयणं कर्तव्यम्' इत्येवंविधां स्मृतिं जनयति । तत्र स्मार्यमाणस्योच्छ्रयणस्यैकत्वेऽपि कर्तव्यमित्यस्य कोरीमित्यस्य च स्मृतिप्रकारस्यान्यत्वान्न कार्यैक्यं तेन समुच्चयः ॥

तत्रैवान्यच्चिन्तितम्—

"उच्छ्रयस्व समिद्धस्येत्यादीनां किं विकल्पना ।
समुच्चयो वा कार्यैक्यादाद्योऽनुस्मृतयेऽन्तिमः ॥"

---

१. आप० श्रौ० ७.१०.६ । २. आप० श्रौ० ७.११.४ ।
३. जै० न्या० वि० १२.३.१६.३६,३८ ।
४. तथा चाध्वर्युवेदे एवं विहितः—'...... पृणेत्याहैषां लोकानां विधृत्यै' इति तै० सं० ६.३.४ । तथापस्तम्बोऽप्याह ७.१०.७ । ५. तै० सं० १ ३.६.१ ।
६. तथा चात्र होतृवेदे विहितः—'उच्छ्रयस्व वनस्पत इत्युच्छ्रीयमाणायाभिरूपा' इति (१९७ पृ०) । तथाश्वलायनोऽप्याह ३.१.९ । ७. ऋ० ३.८.३ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उच्छ्रयस्वेव[1] इत्येका 'समिद्धस्य श्रयमाणः[2] इति द्वितीया, ऊर्ध्वं ऊ षु ण[3] इति तृतीया, ऊर्ध्वो नः पाहीति[4] चतुर्थी। ता एताः क्रियमाणमनुवदन्त्यो होत्रा पठ्यन्ते। तासां यूपोच्छ्रयणकर्तव्यतास्मरणस्य कार्यस्यैकत्वाद् विकल्प इति। चेत्, मैवम्। प्रथममन्त्रेणोत्पन्नयाः स्मृतेरुत्तरोत्तरमनुस्मृतेः पृथक्प्रयोजनत्वात्। तस्मात् समुच्चयः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-भाष्ये षष्ठाध्याये द्वितीयः खण्डः ॥ २ ॥ (२)[३२]

इन सात मन्त्रों का होता पाठ करता है जो [विवक्षित अर्थ के प्रतिपादक होने से] रूप समृद्ध हैं। यही यज्ञ की समृद्धि है कि जो यज्ञ अपने रूप में समृद्ध है। कर्म जैसा किया जाने वाला है वैसा ही मन्त्रों के द्वारा वर्णित होना ही रूप समृद्धि है। उन सात मन्त्रों में से प्रथम ऋचा का और अन्तिम ऋचा का तीन-तीन बार पाठ करना चाहिए। इस प्रकार ये ग्यारह हो जाते हैं त्रिष्टुप् छन्द ग्यारह अक्षरों वाला है और त्रिष्टुप् इन्द्र का वज्र है। जो इस प्रकार जानता है वह इन्द्र रूप आयतन के द्वारा साफल्य को प्राप्त करता है। होता प्रथम और अन्तिम मन्त्र को तीन-तीन बार पढ़ता है, वस्तुतः ऐसा करके वह मानो यज्ञ के दोनों किनारों को कसकर बाँधता है जिससे कि वह फिसल न जाय और उसकी स्थिरता एवं शक्ति बनी रह जाय।

॥ इस प्रकार षष्ठ अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

यूपाञ्जनादिसंबद्धा ऋचो विधाय यूपविषयं किंचिद् विचारमवतारयति—

**तिष्ठेद् यूपाः३ अनुप्रहरे३त्, इत्याहुः ॥ इति ।**

कर्मणि समाप्ते सति पश्चादयं यूपः किं स्वस्थाने तिष्ठेत् किं वा तं यूपं वह्नौ प्रहरेदित्येवं विचारं ब्रह्मवादिन आहुः। विचारार्थं [5]प्लुतिद्वयम् ॥

ii. ३ [vi. ३] [कर्म की समाप्ति के बाद यह] यूप अपने स्थान में स्थित रहे अथवा अग्नि में डाल दिया जाय—इस प्रकार [विचार करने के लिये] ब्रह्मवादी कहते हैं।

तत्र कामनाविशेषेण स्थितिपक्षं स्वी करोति—

**तिष्ठेत् पशुकामस्य ॥ इति ।**

पशु की कामना वाले यजमान को यूप स्वस्थान में स्थित रखना चाहिए।

---

१. ऋ० ३.८.३।
२. ऋ० ३.८.२।
३. ऋ० १.३६.१३।
४. ऋ० १.३६.१४।
५. 'विचार्यमाणानाम्'—इति पा० सू० ८.२.९७।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तदेतदुपपादयितुमाख्यायिकामाह—

**देवेभ्यो वै पशवोऽन्नाद्यायाऽऽलम्भाय नातिष्ठन्त तेऽपक्रम्य प्रतिवावदतोऽतिष्ठन्नास्माननालप्स्यध्वे नास्मानिति ततो वै देवा एतं यूपं वज्रमपश्यंस्तमेभ्य उदश्रयंस्तस्माद् बिभ्यत उपावर्तन्त तमेवाद्याप्युपावृत्तास्ततो वै देवेभ्यः पशवोऽन्नाद्यायाऽऽलम्भायातिष्ठन्त ॥ ॥ इति ।**

पुरा कदाचिद्देवेभ्यो देवानामन्नाद्याय पयोदध्याद्यन्नभक्षणायाऽऽलम्भायाग्नीषोमीयवायव्यादिपश्वालम्भनकर्मणे च पशवो नातिष्ठन्त नाङ्गीकृतवन्तोऽनङ्गीकृत्य ते पशवो देवेभ्योऽपक्रम्य प्रतिवावदतः प्रत्युत्तरं पुनः पुनर्वदन्तो दूरेऽतिष्ठन् । किं तदुत्तरमिति ? तदुच्यते—हे देवा यूयं कदाचिदपि नास्मानालप्स्यध्वेऽस्मान् पशूनालब्धुं कर्मणि विशसितुं समर्था न भविष्यथ । पुनरपि नास्मानितिवाक्यावृत्तिरादरार्था । सर्वथैवास्मदालम्भो न घटिष्यते । तत्प्रत्युत्तरं श्रुत्वा देवाः पशुभीतिहेतुमेतं यूपं वज्ररूपमपश्यन् । यूपस्य वज्रत्वश्रुतिः पूर्वमेवोदाहृता[1] । तं यूपमेभ्यः पश्वर्थमुदश्रयन्, ऊर्ध्वमवस्थापयन् । तस्मादुच्छ्रिताद् यूपाद् बिभ्यतः पशवो देवानुपावर्तन्त । यस्मादेवं पूर्वं वृत्तं तस्माद् इदानीमपि यागेषु तमेव यूपमुद्दिश्य पशव उपावृत्ता दृश्यन्ते । ततो देवानां दध्याद्यन्नाय कर्मस्वालम्भाय च पशवोऽङ्गीकृतवन्तः ॥

[इस सम्बन्ध में आख्यायिका इस प्रकार है कि एक बार कभी] देवताओं को [दूध-दधि रूप] अन्न भक्षण के लिए और अग्निषोमीयपश्वालम्भन कर्म के लिए पशु खड़े नहीं रहे । वे [देवों से] दूर भागकर बार-बार प्रत्युत्तर देते हुए दूर पर जाकर खड़े हो गये कि—हे देवों तुम लोग हमें प्राप्त करने में कभी भी समर्थ नहीं होगे, हमें प्राप्त नहीं कर पाओगे । तब देवों ने इस वज्र रूप यूप को देखा और उस [यूप] को पशुओं के लिए उन्नत करके गाड़ दिया । उस उन्नत यूप से डर कर वे लौट आये । यही कारण है कि [याग में] आज भी यूप की ओर मुख करके ही पशु खड़े होते हैं । तब दधि रूप अन्न के लिए और कर्मों में आलम्भन के लिए पशु खड़े हुए ।

एतद्वेदनं यूपावस्थानं च प्रशंसति—

**तिष्ठन्तेऽस्मै पशवोऽन्नाद्यायाऽऽलम्भाय य एवं वेद यस्य चैवं विदुषो यूपस्तिष्ठति ॥ इति ।**

यस्य यजमानस्येत्यर्थः ॥

इस प्रकार जो जानता है और ऐसा जानते हुए जिस [यजमान] का यूप खड़ा रहता है उसके लिए पशु भी अन्न-भक्षण के लिए व आलम्भन के लिए खड़े रहते हैं ।

अथ फलविशेषाय प्रहरणपक्षमुपादत्ते—

**अनुप्रहरेत् स्वर्गकामस्य ॥ इति ।**

---

१. द्र० अस्यैव पृ० १९३ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कर्मसमाप्तिमनु तं यूपमग्नौ प्रक्षिपेत् ॥

स्वर्ग की कामना वाले यजमान को कर्म की समाप्ति के बाद इसे अग्नि में फेंक देना चाहिये।

तदेतदुपपादयति—

**तमु ह स्मैतं पूर्वेऽन्वेव प्रहरन्ति** ॥ इति।

पूर्वे यजमानाः स्वर्गकामाः कर्मसमाप्तिमनु तमेतं यूपं प्रहरन्त्येव ॥

पहले स्वर्ग की कामना वाले यजमान कर्मसमाप्ति के बाद ही उस यूप को अग्नि में फेंक ही देते थे।

तत्रैव युक्त्यन्तरमाह—

**यजमानो वै यूपो यजमानः प्रस्तरोऽग्निर्वै देव योनिः सोऽग्नेर्देवयोन्या आहुतिभ्यः संभूय हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेष्यतीति** ॥ इति।

योऽयं यूपोऽस्ति यश्च प्रस्तराख्यो दर्भमुष्टिस्तयोर्यजमानवत्कर्मणि मुख्यत्वाद् यजमानत्वोपचारः। अग्निश्च देवानां योनिः कारणमग्निसाध्यकर्मणो देवजन्महेतुत्वात्। एवं सति स यजमानो देवयोन्या अग्नेस्तस्मिन् हुताद् यूपादाहुतिभिश्च संभूय देवजन्म प्राप्य सुवर्णमयशरीर ऊर्ध्वाभिमुखः स्वर्गं लोकं प्राप्स्यति। तस्मात् स्वर्गकामस्य यूपप्रहरणं युक्तम् ॥

यूप ही यजमान है, प्रस्तर नामक दर्भ-मुष्टि यजमान है। अग्नि देवताओं का उत्पत्ति स्थान है। वह यजमान अग्नि की आहुतियों से देव योनि रूप अग्नि के द्वारा जन्म प्राप्त करके सुवर्णमयशरीर से ऊपर स्वर्गलोक को प्राप्त करेगा।

नन्विदानींतनैः स्वर्गकामैः क्रतोर्यूपो न प्रह्रियत इत्याशङ्क्य तेषां प्रतिनिधिं दर्शयति—

**अथ ये तेभ्योऽवर आसंस्त एतं स्वरुमपश्यन् यूपशकलं तं तस्मिन् कालेऽनुप्रहरेत् तत्र स काम उपाप्तो योऽनुप्रहरणे तत्र स काम उपाप्तो यः स्थाने** ॥ इति।

पूर्वसिद्धेभ्योऽनुष्ठातृभ्य ऋषिभ्योऽवरे ये केचिदर्वाचीना इदानींतना यजमाना आसंस्ते सर्वे यूपस्य प्रतिनिधित्वेन यूपशकलमेतं स्वरुनामकं स्वल्पं काष्ठखण्डमपश्यन्। तस्मादिदानींतनो यजमानस्तस्मिन् यूपप्रहरणकाले तं स्वरुमनुप्रहरेत्[1]। एतच्च शाखान्तरे श्रूयते—'देवा वै संस्थिते सोमे प्रस्रुचोऽहरन् प्र यूपं तेऽमन्यन्त यज्ञवेशसं वा इदं कुर्म इति ते प्रस्तरस्रुचां निष्क्रयणमपश्यन्, स्वरुं यूपस्य संस्थिते सोमे प्रस्तरं प्रहरति जुहोति स्वरुमयज्ञवेशसाय'[2] इति। तथा सति यूपप्रहरणे यः काम उक्तः स कामस्तत्र स्वरु-

१. 'अथ यस्मात् स्वरुर्नाम ? एतस्माद् वै—एषोऽपच्छिद्यते, तस्यैतत् स्वमेवारुर्भवति, तस्मात् स्वरुर्नाम'—इति शत० ब्रा० ३.७.१.२४। २. तै० सं० ६.३.४.९।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रहरणे प्राप्तो भवतीति यूपप्रतिनिधित्वेन स्वरोः प्रक्षिप्तत्वात् । यश्च यूपस्थाने पशुप्राप्तिलक्षणः काम उक्तः सोऽपि तत्र प्रक्षेपणपक्षे प्राप्तो भवति यूपस्य स्वरूपेणवस्थितत्वात् । तदेतत्स्वरुप्रहरणम् आपस्तम्बेन दर्शितम्—'जुह्वां स्वरूमवदायानूयाजान्ते जुहोति द्यां ते धूमो गच्छतु'[1] इति ।

पूर्वानुष्ठान करने वाले उन [ऋषियों] से जो अर्वाचीन थे उन सभी ने [यूप के प्रतिनिधि रूप में] यूप के स्वरु नामक इस लकड़ी के टुकड़े को देखा । इसलिए उस यूप के प्रक्षेप के समय उस स्वरु को फेंकना चाहिये । ऐसा करने से यूप के प्रक्षेप के समय जो कामना होती है वह सभी स्वरु के प्रक्षेप काल में वहाँ प्राप्त होती है और यूप के खड़े रहने में [पशु प्राप्ति रूप] जो कामना होती वह भी वहाँ प्राप्त हो जाती है [क्योंकि यूप तो अवस्थित ही है] ।

अथाग्नीषोमीयपश्वालम्भं विधत्ते—

**सर्वाभ्यो वा एष देवताभ्य आत्मानमालभते यो दीक्षतेऽग्निः सर्वा देवताः सोमः सर्वा देवताः स यदग्नीषोमीयं पशुमालभते सर्वाभ्य एव तद्देवताभ्यो यजमान आत्मानं निष्क्रीणीते ॥ इति ।**

यो यजमानो दीक्षते सोमयागे दीक्षां प्राप्नोति स यजमानः सर्वदेवतार्थमात्मानमेव पशुत्वेनाऽलब्धुमुपक्रमते । अत्र च यो ग्निर्यश्च सोमस्तावुभौ सर्वदेवतात्मकावग्नेराहुत्यधिकरणत्वेन सोमस्य च होमद्रव्यत्वेन च सर्वोपकारित्वात् । तथा सत्यग्नीषोमदेवताकपश्वालम्भनेन सर्वदेवतानां सकाशाद्यजमानः स्वात्मानं निष्क्रीणीतवान् भवति । तस्मादग्नीषोमीयः पशुरालब्धव्यः । सोऽयमर्थः श्रुत्यन्तरे संगृहीतः—'पुरा खलु वावैष मेधायाऽऽत्मानमारभ्य चरति यो दीक्षते यदग्नीषोमीयं पशुमालभत आत्मनिष्क्रयणमेवास्य'[2] इति ॥

जो यजमान सोम याग में दीक्षा प्राप्त करता है वह सभी देवताओं के लिये अपने को ही पशु रूप में आलम्भन के लिए समर्पित करता है । अग्नि ही सब देवता हैं सोम सब देवता हैं [अर्थात् जो यहाँ अग्नि और सोम है वह सर्वदेवतात्मक हैं] । वह यजमान जो अग्नि और सोम के लिए पशु का आलम्भन करता है वस्तुतः इस प्रकार वह यजमान सभी देवताओं से अपने को अर्पण करने से मुक्त कर लेता है [इसलिए अग्निषोमीय पशु का आलम्भन करना चाहिए] ।

अथ पूर्वोत्तरपक्षाभ्यां पशुशरीरस्य रूपविशेषं निश्चिनोति—

**तदाहुर्द्विरूपोऽग्नीषोमीयः कर्तव्यो द्विदेवत्यो होति, तत्तन्नाऽऽदृत्यं, पीव इव कर्तव्यः, पीवोरूपा वै पशवः कृशित इव खलु वै यजमानो भवति तद्यत् पीवा पशुर्भवति यजमानमेव तत्स्वेन मेधेन समर्धयति ॥ इति ।**

---

१. आप० श्रौ० ७.२७.४ । २. तै० सं० ६.१.११.६ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्त्राग्नीषोमीयपशौ ब्रह्मवादिनः पूर्वपक्षमाहुः। यस्मादस्य पशोरग्निश्च सोमश्चेत्येते द्वे देवते तस्मात् तदनुसारेण यः पशुर्द्विरूपः शुक्लकृष्णादिवर्णद्वयोपेतः स कर्तव्य इति तदेतद् ब्रह्मवादिमतमनादरणीयम्। किं तु पीव इव शरीरपुष्ट्या स्थूल एव पशु कर्तव्यः। लोके हि पशवः पीवोरूपा वै मेदोवृद्ध्या वै प्रायेण स्थूलरूपा एव भवन्ति। यजमानस्तु पश्वनुष्ठानदिने कृशित इवोपसद्दिनेषु स्वल्पक्षीराहारेण तदानीं कृश एव भवति। यत्तथा सति यद्ययं पशुः स्थूलो भवेत्तत्तेन पशुस्थौल्येन कृशशरीरं यजमानमेव स्वेन मेधेन स्वकीययज्ञसाधनरूपेण समृद्धं करोति॥

इस सम्बन्ध में ब्रह्मवादी जो [पूर्वपक्ष] कहते हैं कि 'अग्नि और सोम के पशु को दो रूप [शुक्ल-कृष्ण वर्ण] का होना चाहिये क्योंकि यह दो देवताओं का है'—वह [ब्रह्मवादियों का] मत आदरणीय नहीं हैं। वस्तुतः मोटे पशु का आलम्भन करना चाहिये। क्योंकि लोक में प्रायः पशु स्थूलरूप वाले होते हैं, और [पशु के अनुष्ठान के दिन थोड़ा सा दूध ही लेने के कारण] यजमान कृशगात्-सा होता है। अतः पशु यदि मोटा होता है तो यजमान को भी वह अपने यज्ञ साधन रूप से समृद्ध करता है।

पुनरपि पूर्वोत्तरपक्षाभ्यां पशुलक्षणस्य हविषः शेषभक्षणमुपपादयितुं पूर्वपक्षमाह—

**तदाहुर्नाग्नीषोमीयस्य पशोरश्नीयात् पुरुषस्य वा एषोऽश्नाति योऽग्नीषोमीयस्य पशोरश्नाति, यजमानो ह्येतेनाऽऽत्मानं निष्क्रीणीत इति॥ इति।**

तत्त्र पशौ पूर्वपक्षिण आहुरग्नीषोमीयस्य पशोर्मांसं नाश्नीयाद् यस्तद्भक्षयत्यसौ पुरुषस्य मांसमेव भक्षयति। यस्माद्यजमान एतेन पशुना स्वात्मानं निष्क्रीणीते तस्मात् तत्स्वरूपोऽयं पशुः। इतिशब्दः पूर्वपक्षसमाप्त्यर्थः॥

[पशु रूप हविःशेष के भक्षण में पूर्वपक्ष रूप से] ब्रह्मवादी कहते हैं कि अग्निषोमीय पशु का भक्षण नहीं करना चाहिए। जो अग्नि और सोम के पशु को खाता है वह पुरुष के मांस का ही भक्षण करता है; क्योंकि यजमान इस [पशु] से ही तो अपने-आपको छुड़ाता है [अतः यह पशु यजमान स्वरूप है]।

तं निराकृत्य सिद्धान्तमाह—

**तत्तन्नाऽऽदृत्यं, वार्त्रघ्नं वा एतद्धविर्यदग्नीषोमीयोऽग्नीषोमाभ्यां वा इन्द्रो वृत्रमहंस्तावेनमब्रूतामावाभ्यां वै वृत्रमवधीर्वरं ते वृणावहा इति वृणाथामिति तावेतमेव वरमवृणातां श्वः सुत्यायां पशुं स एनयोरेषोऽच्युतो वरवृतो ह्येनयोस्तस्मात्तस्याशितव्यं चैव लीप्सितव्यं च॥ ३॥ इति।**

तत्पूर्वपक्षिभिरुक्तमनादरणीयं योऽग्नीषोमीयः पशुरस्ति एतद्वार्त्रघ्नं वृत्रहत्यानिमित्तं हविः। कथमेतदिति, तदुच्यते—अग्नीषोमाभ्यां निमित्तभूताभ्यामिन्द्रो वृत्रं हतवान्।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्यार्थस्य श्रुत्यन्तरद्योतनार्थो वैशब्दः । सोऽयमर्थः श्रुत्यन्तरे 'त्वष्टा हतपुत्र' इत्यनुवाके प्रपञ्चितः । वृत्रे हते सतीन्द्रं प्रत्यग्नीषोमावेवमब्रूतां हे इन्द्र वां निमित्तं वृत्रं हतवानसि । अतो वृत्रवधस्य निमित्तभूतावावां तव सकाशाद् वरं प्रार्थयावहे । इत्युक्त्वा वरं प्रार्थितवन्तौ श्वः सुत्यायां परेद्युः सोमाभिषवे प्रसक्ते सति पूर्वदिने पशुरूपं वरं वृतवन्तौ । स एष पशुरेनयोरग्नीषोमयोरच्युतोऽवश्यं कर्तव्यः, वरेण वृतत्वात् । तस्मादेवं प्रशस्तत्वात् तस्य पशोर्मांसमशितव्यं चैव सर्वदा भक्षितव्यमेव । न केवलं भक्षणं किंतु लीप्सितव्यं च भक्षणात् पूर्वमादरेण महता लब्धुमेष्टव्यमपि । तावेतौ पूर्वोत्तरपक्षौ शाखान्तरे संगृहीतौ—'तस्मान्नाऽऽश्यं पुरुषनिष्क्रयणमथो खल्वाहुरग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति यदग्नीषोमीयं पशुमालभते वार्त्रघ्न एवास्य स तस्माद्वाऽऽश्यम्''[1] इति ।

अत्र मीमांसा—प्रथमाध्याये चतुर्थपादे चिन्तितम्—

"यजमानः प्रस्तरोऽत्र गुणो वा नाम वा स्तुतिः ।
सामानाधिकरण्येन स्यादेकस्यान्यनामता ॥
गुणो वा यजमानोऽस्तु कार्ये प्रस्तरलक्षिते ।
अंशांशित्वाद्यभावेन पूर्ववन्नात्र संस्तुतिः ॥
अर्थभेदादनामत्वं गुणश्चेत्प्रह्रियेत सः ।
यागसाधकताद्वारा विधेयप्रस्तरस्तुतिः ॥[2]"

इदमाम्नायते—'यजमानः प्रस्तरः'[3] इति । तत्र यजमानस्य प्रस्तरशब्दो नामधेयं यागेनेत्यादाविव सामानाधिकरण्यादित्येकः पक्षः । गुणविधिरित्यपरः । तत्रापि यजमानकार्ये जपादौ प्रस्तरस्याचेतनस्य सामर्थ्याभावात् गुणत्वं नास्ति । प्रस्तरकार्ये स्रुग्धारणादौ यजमानस्य शक्तत्वाद् यजमानरूपो गुणो विधीयते । एवं सति पश्चाच्छ्रुतस्य प्रस्तरशब्दस्य कार्यलक्षकत्वेऽपि प्रथमश्रुतो यजमानशब्दो मुख्यवृत्तिर्भविष्यति । न चात्र पूर्वन्यायेन स्तुतिः संभवति । अष्टाकपालद्वादशकपालयोरिवांशांशित्वाभावात् । 'वायुर्वै क्षेपिष्ठा देवता, ऊर्जोऽवरुध्यै'[4] इत्विवत्स्तुतिरिति चेत् । न, क्षिप्रत्वादिधर्मवत्कस्यचिदुत्कस्याप्रतीतेः । तस्मान्नामगुणयोरन्यतरत्वमिति प्राप्ते ब्रूमः—गोमहिषयोरिवार्थभेदस्यात्यन्तप्रसिद्धत्वान्न नामधेयत्वं युक्तम् । गुणपक्षेऽग्नौ प्रहरणस्य प्रस्तरविषयत्वाद्यजमाने प्रहृते सति कर्मलोपः स्यात् । तस्मात् विधेयः प्रस्तरो यजमानशब्देन स्तूयते । यथा 'सिंहो देवदत्तः' इत्यत्र सिंहगुणेन शौर्यादिनोपेतो देवदत्तः सिंह इत्याख्यायते तथा यजमानगुणेन यागसाधनत्वेन युक्तः प्रस्तरो यजमानशब्देन स्तूयते । एवं 'यजमानो वै यूपो यजमानः प्रस्तरः'[5] इत्यादिषु द्रष्टव्यम् ॥

१. तै० सं० ६.१.१६.६ ।
२. जै० न्या० वि० १.४.१३.२३ ।
३,५. द्र० अस्यैव पृ० २०७ ।
४. तै० सं० २.१.१.१ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चतुर्थाध्यायस्य द्वितीयपादे[1] चिन्तितम्—

स्वरुं कुरुत इत्यत्र स्वरुर्यूपात्पृथक्क्रियाम् ।
प्रयोजयेन्न वाऽऽद्योऽस्तु विशिष्टस्य विधानतः ॥
आद्यस्य यूपखण्डस्य स्वरौ तस्य विशेषणे ।
विहिते लाघवं तस्मादनुनिष्पन्न एव सः ॥[2]

अग्नीषोमीयपशौ श्रूयते—'यूपस्य स्वरुं करोति'[3] इति । तत्र यूपो यथा छेदनस्य प्रयोजकः, तथा स्वरुरपि च्छेदनं प्रयोजयति । कुतः करोतीत्यनेन विशिष्टविधिप्रतीतेः । करोतिधातोर्भावना मुख्योऽर्थः । तत्र यूपशब्दोपलक्षितः खदिरादिवृक्षः करणं छेदनादिरितिकर्तव्यता, 'छिन्नेन वृक्षेण स्वरुरुत्पादनीय' इति विशिष्टविधिः । उत्पन्नस्य स्वरोर्विनियोग एवामाम्नातः—'स्वरुणा पशुमनक्ति'[4] इति । तस्मात्स्वरुश्छेदनस्य प्रयोजक इति प्राप्ते ब्रूमः—द्विचमाजस्य यूपस्य यः प्रथमः पतितः शकलः स स्वरुरिति स्वरुत्वनाममात्रविधौर्लाघवात् यूपवत् वरुर्न च्छेदनस्य प्रयोजकः, किंतु यूपप्रयुक्ते छेदने स्वयमनुनिष्पद्यते" इति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः प्रथमाध्याये (षष्ठाध्याये) तृतीयः खण्डः ॥३॥ (३) [३३]

ब्रह्मवादियों का यह मत आदरणीय नहीं है । यह जो अग्नि और सोम का पशु है वह वृत्रघ्न [इन्द्र] के लिये हवि है । क्योंकि अग्नि और सोम के द्वारा ही तो इन्द्र ने वृत्र को मारा था । उन दोनों ने इस [इन्द्र] से कहा—'तुमने हम दोनों के द्वारा ही तो वृत्र को मारा है । अतः हम दोनों [तुमसे] वर माँगते हैं । इन्द्र ने कहा—'माँगो ।' अतः इन्द्र से उन दोनों ने सोमाभिषव के पहले दिन के पशु रूप वर का वरण किया । क्योंकि इन दोनों के द्वारा यह वर प्राप्त किया गया था । अतः वह पशु इन दोनों के लिए अवश्य कर्तव्य है । इसलिए [प्रशस्त होने से] उस [पशु] के मांस का सर्वदा भक्षण करना चाहिए और [भक्षण ही नहीं अपितु आदर से अधिक लेने की लिप्सा करनी चाहिए ।

॥ इस प्रकार षष्ठ अध्याय में तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

---

१. तेषाञ्च सूत्राणां द्विर्व्याख्यानमुक्तं शबरस्वामिना । तदाह च तन्त्ररत्नाकरः—व्याख्यानानन्तरं तु विस्तरोक्तस्य संक्षेपमात्रार्थं कृतं भाष्यकारेण'—इति ।

२. जै० न्या० वि० ४.२.१.१–७ ।

३. शत० ब्रा० ३.७.१.२४ । कात्या० श्रौ० १.७.१७ ।

४. तै० सं० ५ ५.७.१ । 'स्वरूमन्तर्धाय स्वधितिना पशुं समनक्ति घृतेनाक्तौ पशुं त्रायेथामिति शिरसि । न वा स्वधितिना स्वरुणैव' इति आप० श्रौ० ७.१४.११-१२ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ चतुर्थः खण्डः

अग्नीषोमीयं पशुं विधाय तत्रैकादश प्रयाजान् विधत्ते—

**आप्रीभिराप्रीणाति** ।। इति ।

तेषां प्रयाजादीनां याज्याः प्रीतिहेतुत्वादाप्रीशब्देनोच्यन्ते । एतच्च शाखान्तरे श्रुतम्—'आप्रीभिराप्नुवन्, तदाप्रीणामाप्रीत्वम्'[1] इति । ताभिराप्रीसंज्ञकाभिः प्रयाजादिभिराप्रीणाति देवताः, सर्वत्र प्रीणयेत् तत्प्रीत्यर्थं याज्या पठेदित्यर्थः ।।

ii. ४ [vi. ४] **आप्री [संज्ञक प्रयाज मन्त्रों] से होता प्रसन्न करता है [अर्थात् देवता के प्रीत्यर्थ याज्या का पाठ करता है] ।**

ताः प्रशंसति—

**तेजो वै ब्रह्मवर्चसमाप्रियस्तेजसैवैनं तद् ब्रह्मवर्चसेन समर्धयति** ।। इति ।

आज्यद्रव्यकत्वात् तेजस्त्वं शास्त्रीयसंस्कारसाधनत्वाद् ब्रह्मवर्चसत्वम् । तेन याज्यापाठेन यजमानस्य तदुभयं समृद्धं भवति ।।

**आप्री मन्त्र [आज्यद्रव्य के कारण] तेज हैं और [शास्त्रीय संस्कार का साधन होने के कारण] ब्रह्मवर्चस् हैं वस्तुतः उस [याज्या पाठ] से होता यजमान को तेज से और ब्रह्मवर्चस् दोनों से ही समृद्ध करता है ।**

प्रथमं प्रयाजं विधत्ते—

**समिधो यजति** ।। इति ।

समिन्नामकदेवतात्वाद्यागोऽपि समिध इत्यनेन शब्देनोच्यते । समिन्नामकयागं कुर्यादित्यर्थः । यद्वा हौत्र प्रकरणत्वात् समिद्देवताविषयां याज्यां पठेदित्यर्थः । तत्प्रकारं **बौधायन** आह—'यदा जानाति समिद्भ्यः प्रेष्येति तन्मैत्रावरुणः प्रेष्यति होता यक्षदग्निं समिधा सुषमिधा समिद्धमित्यथ होता यजति समिद्धो अद्य मनुषो दुरोणे तावेत्वमेव व्यतिषङ्गमुत्तरेण मैत्रावरुणः प्रेष्यति, उत्तरेणोत्तरेण होता यजति' इति । अस्यायमर्थः—

---

१. अत एवोक्तं यास्केन—'अथात आप्रियः । आप्रियः कस्मात् ? आप्नोतेः प्रीणातेर्वा 'आप्रीभिराप्रीणाति'—इति च ब्राह्मणम्—इति निरु० ८.२.१ । इत आरभ्य अध्यायान्तं यावदाप्रीविचाराः । द्र०—'यज्ञो वै प्रजापतिः·········आप्रीरपश्यत्, ताभिर्वै मुखत आत्मानमाप्रीणीत; यदेता आप्रियो भवन्ति'—इत्यादि तै० सं० ४.७.८.३ । 'अथाप्रीभिश्चरन्ति ·········यो दीक्षते तस्य रिरिचान इव आत्मा भवति; तमेताभिराप्रीभिराप्याययन्ति; तदाप्याययन्ति, तस्मादाप्रियो नाम । तस्मादाप्रीभिश्चरन्ति । ते वा एते एकादशप्रयाजा भवन्ति'—इत्यादि च शत० ब्रा० ३.८.१; पुनरश्वमेधप्रकरणे 'तम् [पशुम्] एताभिराप्रीभिराप्रीणात्'इत्याद्यपि ११.८.३.५ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

समिद्भ्यः प्रेष्येति मन्त्रेणाध्वर्युर्मैत्रावरुणं प्रेष्यति तदानीमयं मैत्रावरुणः प्रैषसूक्तेन 'होता यक्षदग्निं समिधा'[1] इत्यनेन प्रथममन्त्रेण होतारं प्रेष्यति होताऽप्याप्रीसूक्ते[2] 'समिद्धो अद्य'[3] इत्येतां प्रथमयाज्यां पठति। एवमुत्तरत्राध्वर्युर्मैत्रावरुणहोतारौ परस्परसंनिद्धौ स्वस्वमन्त्रयागं कुर्यातामिति तत्र प्रथमा याज्येति ॥

'समित्' [नामक याग] का यजन करता है।

अथ समिद्देवतां प्रशंसति—

**प्राणा वै समिधः, प्राणा हीदं सर्वं समिन्धते यदिदं किंच, प्राणानेव तत्प्रीणाति, प्राणान् यजमाने दधाति ॥** इति।

'समिधः' समिन्धनस्य सम्यक् प्रकाशहेतवः प्रथमप्रयाजदेवताः। प्राणस्वरूपदेवताया एकत्वेऽपि समिध इति बहुवचनं पूजार्थम्। जगति 'यत्किंचिदिदं' शरीरजातमस्ति तत्सर्वं प्राणाः 'समिन्धते' प्रकाशयन्ति; अतस्तेषां समिद्रूपत्वम् तत्तेन याज्यापाठेन प्राणानेव तोषयति तद्यजमानेऽपि प्राणान् संपादयति। अत्र प्रयाजानां क्रमेण समिधः, तनूनपात्, नराशंसः, इळः, बर्हिः, दुरः, उषासानक्ता, दैव्याहोतारा, तिस्रो देव्यः:, त्वष्टा, वनस्पतिः, स्वाहाकृतयः, इत्येता देवताः। वशिष्ठशुनकात्रिवध्र्यश्वराजन्यानां नराशंसो द्वितीयः। अन्येषां तनूनपाद्द्वितीयः ॥

समिधा प्राण हैं। क्योंकि [जगत् में] जो कुछ भी [प्राणिजात] हैं वह सभी प्राण से ही प्रकाशित होते हैं। अतः उस [याज्या पाठ] से प्राणों को ही प्रसन्न करता है और यजमान में भी प्राणों का संपादन करता है।

तद्देवताविषयां द्वितीयां याज्यां विधत्ते—

**तनूनपातं यजति प्राणो वै तनूनपात्स हि तन्वः पाति प्राणमेव तत्प्रीणाति, प्राणं यजमाने दधाति ॥** इति।

अत्राध्वर्युप्रैषप्रकारमापस्तम्ब आह—'समिद्भ्यः प्रेष्येति प्रथमं संप्रेष्यति। प्रेष्य प्रेष्येतीतरान्'[4] इति। अतोऽस्माद् द्वितीयपर्याये प्रेष्येति मन्त्रेणाध्वर्युर्मैत्रावरुणं प्रेष्यति। स च मैत्रावरुणः प्रैषसूक्तगतेन 'होता यक्षत्तनूनपातम्' इत्यनेन द्वितीयमन्त्रेण होतारं प्रेष्यति। स तु होताऽऽप्रीसूक्तगतां तनूनपादित्येतां द्वितीयां याज्यां पठेत्। तनूं शरीरं न पातयतीति तनूनपात्। शरीरे वसति प्राणे न पतति किंतु प्राणः शरीराणि चालयति अतस्तनूनपाद्देवस्य प्राणरूपत्वम् ॥

---

१. तै० ब्रा० ३.६.२।
२. 'समिद्धो अद्य' इत्येकादशर्चं नवमं [ऋ० १. १८८] सूक्तमागस्त्यम्। पशावगस्त्यानामेकादशप्रयाजरूपमिदमाप्रीसूक्तम्।
३. ऋ० १.१८८.१। ४. आप० श्रौ० ७.१४.७।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[आप्रीसूक्तगत] तनूनपात् [आदि द्वितीय याज्या को पढ़कर] यजन करता है। प्राण ही तनूनपात् है। क्योंकि वह तनू अर्थात् शरीर की 'पाति' अर्थात् रक्षा करता है [अर्थात् शरीर में रहने से शरीर नष्ट नहीं होता अपितु प्राण ही शरीरों का संचालन करता है]। अतः उस [याज्या पाठ] से प्राण को ही प्रसन्न करता है और यजमान में भी प्राण को रखता है।

द्वितीयप्रयाजयाज्यान्तरं विधत्ते—

**नराशंसं यजति; प्रजा वै नरो, वाक्शंसः, प्रजां चैव तद्वाचं च प्रीणाति, प्रजां च वाचं च यजमाने दधाति ॥** इति।

अध्वर्युप्रेषितो मैत्रावरुणो होता यक्षन्नराशंसमिति[1] मन्त्रेण होतारं प्रेष्यति होता नराशंसस्येति याज्यां पठेत्। नरान् मनुष्याञ्शंसति वाचा स्तौतीति नराशंसः। तथा सति प्रजाया नरशब्दवाच्यत्वाद् वाचश्च शंसनहेतुत्वादुभयप्रीतिर्यजमानेऽपि तदुभयसंपत्तिः। अनयोरुभयोर्मन्त्रयोरधिकारिभेदेन व्यवस्थामापस्तम्ब आह—'नराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकानाम्, तनूनपादितरेषां गोत्राणाम्'[2] इति ॥

[आप्रीसूक्तगत] नराशंस [आदि द्वितीय याज्यान्तर को पढ़कर] यजन करता है। प्रजा ही नर है और वाणी शंसन [का हेतुभूत] है। अतः उस [याज्यान्तर के पाठ] से प्रजा और वाणी दोनों को प्रसन्न करता है। इस प्रकार यजमान में प्रजा और वाणी दोनों को रखता है।

तृतीयां प्रयाजयाज्यां विधत्ते—

**इळो यजत्यन्नं वा इळोऽन्नमेव तत्प्रीणात्यन्नं यजमाने दधाति ॥** इति।

'होता यक्षत्'[3] 'अग्निमीळे'[4] ईळित इति प्रेषितो होता 'आजुह्वान'[5] इत्येतां याज्यां पठेत्। इष्यत इति व्युत्पत्त्याऽन्नमिट्शब्दवाच्यम् ॥

'इळा' [=हवि] का यजन करता है। अन्न ही इळा है। उस [तृतीय याज्या पाठ] से वह अन्न को ही प्रसन्न करता है और इस प्रकार यजमान में अन्न का संपादन करता है।

चतुर्थीं विधत्ते—

**बर्हिर्यजति, पशवो वै बर्हिः, पशूनेव तत्प्रीणाति, पशून् यजमाने दधाति ॥** इति।

'होता यक्षद् बर्हिः सुष्टरीम्' इति मन्त्रेण प्रेषितो होता 'प्राचीनं बर्हिः'[6] इत्येतां याज्यां पठेत्। बृंहणस्य पोषणस्य हेतुर्बर्हिः; पशवश्च क्षीरादिदानेन तादृशत्वाद् बर्हिः स्वरूपाः ॥

---

१. ऋ० १.१३.३। २. आप० श्रौ० (इष्टिहौत्रकल्पः) ४.११.१६।
३. ऋ० १.१३९.१०। ४. ऋ० १.१.१।
५. ऋ० १०.११०.३। ६. ऋ० १०.११०.४।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'बर्हिः' का यजन करता है। पशु ही बर्हि [=पोषण के हेतु] हैं। उस [चतुर्थ याज्या पाठ] से वह [क्षीरादि देने से पोषणकारी] पशुओं को ही प्रसन्न करता है और इस प्रकार यजमान में पशु का संपादन करता है।

अथ पञ्चमीं विधत्ते—

**दुरो यजति, वृष्टिर्वै दुरो वृष्टिमेव तत्प्रीणाति, वृष्टिमन्नाद्यं यजमाने दधाति ॥ इति ।**

होता यक्षद्दुर ऋष्वा इत्यादिना मन्त्रेण प्रेषितो 'व्यचस्वतीरुर्विया'[1] इत्येतां याज्यां पठेत्। दुरो द्वारदेवतां वृष्टिश्च जीवनद्वारा ॥

'दुरः' [=द्वारदेवता] का यजन करता है। [जीवन का द्वार होने से] वृष्टि ही दुर है। उस [पाँचवी याज्या के पाठ] से वह वृष्टि को ही प्रसन्न करता है; और वृष्टि अन्नादि का यजमान में संपादन करती है।

षष्ठीं विधत्ते—

**उषासानक्ता यजति; अहोरात्रे वा उषासानक्ताऽहोरात्रे एव तत्प्रीणात्यहोरात्रयोर्यजमानं दधाति ॥ इति ।**

होता यक्षदुषासानक्तेति मन्त्रेण प्रेषित 'आ सुष्वयन्ती'[2] इत्यादिकां याज्यां पठेत्। उषः शब्दस्य नक्तशब्दस्य चाहोरात्रविषयत्वं लोकप्रसिद्धम् ॥

'उषासानक्ता' उषा और रात्रि [=अहोरात्र] का यजन करता है। रात और दिन ही उषासानक्ता है। अतः उस [छठवीं याज्या के पाठ] से वह अहोरात्र को सन्तुष्ट करता है। इस प्रकार यजमान को अहोरात्र में रखता है।

सप्तमीं विधत्ते—

**दैव्या होतारा यजति, प्राणापानौ वै दैव्या होतारा, प्राणापानावेव तत्प्रीणाति, प्राणापानौ यजमाने दधाति ॥ इति ।**

होता यक्षद्दैव्या होतारेति मन्त्रेण प्रेषितो 'दैव्या होतारा प्रथमा'[3] इति याज्यां पठेत् ॥

दैव्या होतारा [=दिव्य होताओं] का यजन करता है। प्राण और अपान [=श्वास-प्रश्वास] ही 'दिव्य होता' हैं। उस [सातवीं याज्या के पाठ] से वह प्राण और अपान को ही सन्तुष्ट करता है। इस प्रकार यजमान में प्राण और अपान को रखता है।

अष्टमीं विधत्ते—

**तिस्रो देवीर्यजति, प्राणो वा अपानो व्यानस्तिस्रो देव्यस्ता एव तत्प्रीणाति ता यजमाने दधाति ॥ इति ।**

होता यक्षत्तिस्र इत्यादिमन्त्रेण प्रेषित 'आ नो यज्ञम्'[4] इति याज्यां पठेत्। इळा सरस्वती भारतीतिशब्दैरभिधेया देव्यो यथा तिस्र एवं प्राणापानव्याना अपि संख्यासाम्यात् तिस्रो देव्यः ॥

---

१–४. ऋ० १०.११०.५–८।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[इला, सरस्वती और भारती नामक] तीन देवियों का यजन करता है। प्राण, अपान और व्यान ही तीन देवियाँ हैं। उन [याज्या मन्त्रों] से उन्हीं को सन्तुष्ट करता है; और उनको यजमान में रखता है।

नवमीं विधत्ते—

**त्वष्टारं यजति, वाग्वै त्वष्टा वाग्घीदं सर्वं ताष्टीव वाचमेव तत्प्रीणाति वाचं यजमाने दधाति ॥ इति।**

होता यक्षत्त्वष्टारमिति मन्त्रेण प्रेषितो होता 'य इमे द्यावापृथिवी'[1] इति याज्यां पठेत्। तक्षू त्वक्षू तनूकरण इत्यत्र त्वक्षीत्यादिधातोरुत्पन्नः शब्दस्त्वष्टारं देवतामाचष्टे। वाचश्च तक्षणहेतुत्वात्त्वष्टृत्वं तदेव वाग्घीत्यनेन स्पष्टी क्रियते। यस्मादिदं सर्वं जगद्-वाक् ताष्टीव तक्षतीव यथा तक्षणेन काष्ठं प्रौढमपि सूक्ष्मं भवति। एवं महान्तोऽपि पर्वतादयोऽल्पेनैव शब्देन गृह्यन्ते। तदेतज्जगत्तष्टमिव भवति ॥

त्वष्टा का यजन करता है। वाणी ही त्वष्टा है। वाणी ही मानो अखिल जगत् को काँट-छाँट करती है उस [याज्या पाठ] से वह वाणी को यजमान में सम्पादित करता है।

दशमीं विधत्ते—

**वनस्पतिं यजति, प्राणो वै वनस्पतिः, प्राणमेव तत्प्रीणाति प्राणं यजमाने दधाति ॥ इति।**

होता यक्षद्वनस्पतिमित्यादिमन्त्रेण प्रेषित 'उपावसृजद्'[2] इति याज्यां पठेत्। वनस्पति-जन्यफलानां प्राणावस्थितिहेतुत्वाद्वनस्पतेः प्राणत्वम् ॥

वनस्पति का यजन करता है। प्राण ही वनस्पति है। उस [याज्या] से वह प्राण को ही सन्तुष्ट करता है, और यजमान में प्राण को रखता है।

एकादशीं विधत्ते—

**स्वाहाकृतीर्यजति, प्रतिष्ठा वै स्वाहाकृतयः प्रतिष्ठायामेव तद्यज्ञमन्ततः प्रतिष्ठापयति ॥ इति।**

होता यक्षदग्निं स्वाहेति मंत्रेण प्रेषितः 'सद्यो जातः'[3] इति याज्यां पठेत्। स्वाहाकृती-नामाहुतिसमाप्तिहेतुत्वात्प्रतिष्ठात्वं तन्मन्त्रपाठेनैनं यज्ञमन्ततः समाप्त्यवसरे प्रतिष्ठायामेव वैकल्यराहित्यरूपायां 'प्रतिष्ठापयति'[4] ॥

---

१–२. ऋ० १०.११०. ९–१०। ३. ऋ० १०.११०.११।

४. तै० ब्रा० ३.२ अनुवाके 'होता यक्षदग्निम्'—इत्यादयः एकादशप्रयाजविषया द्वादश मैत्रावरुण प्रैषमन्त्राः, तृतीये 'समिद्धो अद्य मनुषः'—इत्याद्याः द्वादश होतुर्याज्याश्च एतद् ।ब्राह्मणविधिक्रमत एव श्रुताः। माध्यन्दिन्यां च तथा आप्रियः २१.१२–२२, प्रयाजप्रैषमन्त्राश्च २१.२९–४० द्रष्टव्याः। 'तान्येकादशाप्रीसूक्तानि'—इत्यादि नैरुक्तम्, दुर्गाचार्यं कृतं तद्व्याख्यानं चेहालोच्यम् (८.३.७)।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वाहाकृतियों का यजन करता है। प्रतिष्ठा ही स्वाहाकृतियाँ हैं। इस प्रकार वह प्रतिष्ठा में ही अन्ततः यज्ञ जो प्रतिष्ठित करता है।

दशतो वहुविधानामाप्रीसूक्तानामाम्नातत्वाद् विकल्पः स्याद् इत्याशङ्क्याधिकारिभेदेन व्यवस्थां विधत्ते—

**ताभिर्यथऋष्याप्रीणीयाद्यद्यथऋष्याप्रीणाति[1],–यजमानमेव तद्बन्धुताया नोत्सृजति ॥ इति ।**

'नोत्सृजति' न निःसारयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः प्रथमाध्याये (षष्ठाध्याये) चतुर्थः खण्डः ॥४॥ (४) [३४]

[दस से भी अधिक आप्री सूक्त हैं अतः विकल्प होने से व्यवस्था करते हैं कि—] ऋषियों के आनुवंशिक क्रमानुसार उन [मन्त्रों] के द्वारा यजन करना चाहिए। जो ऋषियों के क्रमानुसार यजन करता है वह उन [ऋषियों की] बन्धुता से यजमान को नहीं हटाता है [अर्थात् यजमान से ऋषियों का सम्बन्ध बना रहता है]।

॥ इस प्रकार षष्ठ अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥४॥

## अथ पञ्चमः खण्डः

आप्रियो विधाय पर्यग्निकरणा ऋचो विधातुमादौ प्रैषमन्त्रं विधत्ते—

**पर्यग्नये क्रियमाणायानुब्रूहीत्याहाध्वर्युः ॥ इति ।**

पर्यग्निकरणस्य स्वरूपम् आपस्तम्बो दर्शयति—'आहवनीयादुल्मुकमादायाऽग्नीध्रः परि वाजपतिः[2] इति त्रिः प्रदक्षिणं पर्यग्निकरोति पशुम्'[3] इति। एवं परितः क्रियमाणायाग्नये योग्या ऋचो हे मैत्रावरुण त्वमनुब्रूहि। अनेनैव मन्त्रेणाध्वर्युः प्रेषयेत् ॥

---

१. द्र० एकादश प्रयाजाः''''सर्वेषाम्'—इति आश्व० श्रौ० ३.२.१–८। अत्र यथऋषिपक्षे भगवता शौनकेनैषः श्लोक उक्तः—

'कण्वाङ्गिरोऽगस्त्यशुनका विश्वामित्रोऽत्रिरेव च।
वसिष्ठः कश्यपो वाध्र्यश्वो जमदग्निरथोत्तमः ॥ इति ।

तदेवम्—तत्र दशानां सूक्तानां प्रथमं कण्वानाम् ऋ० १.१३। द्वितीयं तद्वर्जितानामङ्गिरसाम् ऋ० १.१४२। तृतीयमगस्त्यानाम् ऋ० १.१८८। चतुर्थं शुनकाम् ऋ० २.३। पञ्चमं विश्वामित्राणाम् ऋ० ३.४। षष्ठमत्रीणाम् ऋ० ५.५। सप्तमं वसिष्ठानाम् ७.२। अष्टमं कश्यपानाम् ऋ० ९.५। नवमं वाध्र्यश्वानाम् ऋ० १०.७०। शुनकवाध्र्यश्ववर्जितानां भृगूणां दशमम् ऋ० २.११०। यथर्षिपक्षे विवेकोऽयम् ॥

२. ऋ० ४.१५.३। ३. आप० श्रौ० ७.१५.२।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ii. ५ [vi. ५] 'पर्यग्नि [पशु के चारो ओर अग्नि घुमाने] के लिए मन्त्र का पाठ करो'—इस प्रकार [होता से] अध्वर्यु कहता है।

मैत्रावरुणेनानुवक्तव्यास्तिस्र ऋचो विधत्ते—

**'अग्निर्होता नो अध्वरे'[1] इति तृचमाग्नेयं गायत्रमन्वाह पर्यग्निक्रियमाणे स्वयैवैनं तद्देवतया स्वेन च्छन्दसा समर्धयति ।। इति ।**

पशोः परितोऽग्निरित्यस्मिन्नर्थे पर्यग्नीत्युच्यते । तस्मिन् क्रियमाणे तृचं मैत्रावरुणोऽनुब्रूयात् । तदाहाऽऽश्वलायनः—'प्रेषितो मैत्रावरुणोऽग्निर्होता न इति तृचं पर्यग्नयेऽन्वाह'[2] इति । तृचस्याऽऽदावग्निरित्युक्तत्वादाग्नेयत्वं छन्दश्च तृचस्य गायत्रं परितः क्रियमाणोऽग्निरेव मन्त्रप्रतिपाद्योऽपि । स एवातः स्वयैव देवतयेत्युच्यते । अग्निगायत्र्योर्मुखजन्यत्वसाम्याच्छन्दसः स्वत्वम् । नोऽस्माकमध्वरे यज्ञेऽयमग्निर्होता यज्ञनिष्पादक इति तस्य पादस्यार्थः ।।

पर्यग्नि-करण के लिए 'अग्निर्होता' [=होता अग्नि हमारे यज्ञ में] इत्यादि अग्नि-देवताक, गायत्री छन्दस्क तृच का पाठ करता है। इस प्रकार उसी के देवता और उसी के छन्द के द्वारा वह यजमान इसको समृद्ध करता है।

द्वितीयं पादमनूद्य व्याचष्टे—

**वाजी सन्परिणीयत इति वाजिनमिव ह्येनं सन्तं परिणयन्ति इति ।**

अयमग्निर्वाज्यन्नप्रदानेनान्नवान् गतिमान् वा तादृशः सन्नृत्विग्भिः पशोः परितो नीयते । तत्पादपाठेनैनमग्निं वाजिनमेव सन्तमृत्विजः परितो नयन्ति ।।

'यह अग्नि अन्नवान् अथवा गतिमान होकर ऋत्विजों के द्वारा पशु के चारों ओर ले जाया जाता है'—इस पाद के पाठ के द्वारा इस [अग्नि] को अन्नवान् के समान बनाते हुए ऋत्विज चारो तरफ ले जाते हैं।

द्वितीयस्या ऋचः पूर्वार्धमनूद्य तात्पर्यं दर्शयति—

**परित्रिविष्टचध्वरं यात्यग्नी रथीरिवेति[3] एष हि रथीरिवाध्वरं परियाति ।। इति ।**

'अग्नि रथी के समान यज्ञ के चारों ओर जाता है'—क्योंकि यह रथी के समान यज्ञ के चारों ओर जाता है।

तृतीयस्या ऋचः प्रथमपादमनूद्य व्याचष्टे—

**परि वाजपतिः कविरिति[4] एष हि वाजानां पतिः ।। इति ।**

---

१. ऋ० ४.१५.१–३ ।
२. आश्व० श्रौ० ३.२.९ ।
३. ऋ० ४.१५.२ ।
४. ऋ० ४.१५.३ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'कविः' अनूचानः । 'ये वा अनूचानास्ते कवयः' इति श्रुतेः[1] । तादृशोऽग्निर्वाजपतिरन्नस्वामी । एष हीत्यादिना तदर्थप्रसिद्धिरुच्यते । अन्नभक्षकत्वाद् वाजपतिः ॥

'अन्न का स्वामी, मेधावी अग्नि चारों ओर जाता है' क्योंकि [अन्न का भक्षक होने से] यह अन्न का स्वामी है ।

अथ होतारं प्रति मैत्रावरुणप्रैषार्थं मैत्रावरुणं प्रत्यध्वर्योः प्रैषमन्त्रं विधत्ते—

**अत उपप्रेष्य होतर्हव्या देवेभ्य इत्याहाध्वर्युः ॥** इति ।

अतः पर्यग्निकरणानुवचनादूर्ध्वमध्वर्युरुपप्रेष्येत्यादिकं प्रैषमन्त्रं पठेत् । होतर्देवेभ्यो हवींष्युपप्रेष्य प्रेरयेति तस्यार्थः । अत्र मैत्रावरुणस्य होतृसमीपे वरणीयत्वाद्धोतृशब्द उपलक्षकः । तथा सति मैत्रावरुणं प्रत्यध्वर्योर्मन्त्रो भविष्यति ॥

[पर्यग्निकरण के अनुवचन के बाद] अब अध्वर्यु कहता है कि 'हे होता, देवों के हव्य के लिए निर्देश दो ।' इस प्रकार अध्वर्यु को मैत्रावरुण के प्रति प्रैषमन्त्र पढ़ना चाहिए [यहाँ मैत्रावरुण का होता के समीप वरण होने से 'होतृ' शब्द मैत्रावरुण का उपलक्षक है] ।

अथ मैत्रावरुणेन पठनीयं मन्त्रं विधत्ते—

**अजैदग्निरसनद्वाजमिति मैत्रावरुण उपप्रैषं प्रतिपद्यते ॥** इति ।

अत्र शामित्रदेशं प्रति नीयमानस्य पशोः पुरतो य उल्मुकाकारोऽग्निर्गच्छति सोऽग्निरजैज्जयतु । पशोः पुरस्तादग्नेर्गमनं शाखान्तरे श्रूयते—'अग्निना पुरस्तादेति रक्षसामपहत्यै' इति । तस्याग्नेर्जयो नाम हविःसंपादनसामर्थ्यं सोऽग्निर्वाजमन्नं हविर्लक्षणमसनत् । अस्य मन्त्रस्यान्तः 'उपप्रेष्य होतर्हव्या देवेभ्य' इति श्रूयते ।[3] यत्ते होतारं प्रति मैत्रावरुणो मुख्यस्याध्वर्युप्रैष्यस्य समीपवर्तित्वादयमुपप्रेष्यः ॥

[शामित्र नामक स्थान के प्रति लाए जाने वाले पशु के सामने जो उल्मुक के आकार का अग्नि है उस] 'अग्नि की विजय हो । अग्नि हविरूप अन्न का भक्षण करे'—इस प्रकार मैत्रावरुण उपप्रैष का प्रतिपादन करता है । ['उपप्रैष' इसलिए है क्योंकि होता के समीप में रहने वाले मैत्रावरुण के प्रति प्रैष है] ।

अत्र ब्रह्मवादिनां चोद्यं वैयधिकरण्यरूपमुद्भावयति—

**तदाहुर्यदध्वर्युर्होतारमुपप्रेष्यत्यथ कस्मान् मैत्रावरुण उपप्रैषंप्रतिपद्यत इति ॥** इति ।

अध्वर्युप्रयुक्ते मन्त्रे होतुः संबोधितत्वान्मैत्रावरुणस्य मन्त्रपाठे वैयधिकरण्यम् ॥

---

१. 'एते वै कवयो यदृषयः'—इति शत० ब्रा० १.४.२.८ ।

२. तै० सं० ६.३.८.२ ।

३. सोऽयं मन्त्रः—'अजैदग्निः असनद् वाजं नि देवो देवेभ्यो हव्यवाट् प्राञ्जोभिर्हिन्वानः धेनाभिः कल्पमानः यज्ञस्यायुः प्रतिरन् उपप्रेष्य होतः हव्या देवेभ्यः'—इति तै० ब्रा० ३.६.५.१ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यहाँ ब्रह्मवादी कहते हैं कि जब अध्वर्यु ने होता को उपप्रैष बोलने को कहा था तो मैत्रावरुण ने क्यों उपप्रैष का प्रतिपादन किया ?

तस्य चोद्यस्य परिहारं दर्शयति—

**मनो वै यज्ञस्य मैत्रावरुणो, वाग्यज्ञस्य होता, मनसा वा इषिता वाग्वदति, यां ह्यन्यमना वाचं वदत्यसुर्या वै सा वागदेवजुष्टा तद्यन्मैत्रावरुण उपप्रैषं प्रतिपद्यते मनसैव तद्वाचमीरयति तन्मनसेरितया वाचा देवेभ्यो हव्यं संपादयति ॥ ५ ॥** इति ।

यज्ञपुरुषस्य मैत्रावरुणो मनःस्थानीयो होता तु वाक्स्थानीयः । लोके हि मनसैव प्रेरिता वाक्शब्दमुच्चारयति । यदा त्वन्यमनस्कः पुरुषो वाचं ब्रूते सा वागसुर्याऽसुराणां प्रिया न तु देवजुष्टा देवानां न प्रिया । तथा सति यदि मैत्रावरुणः प्रथममुपप्रैषं ब्रूते । मनसैव वाक्प्रेरिता भवति । ततो मनसा प्रेरितया वाचा देवेभ्यो हव्यं संपादितं भवति । अन्यथा तद्धविरसुरेभ्यः संपादितं स्यात् । तस्मादध्वर्युणा होतरित्येवं संबोधितेऽपि मैत्रावरुणोक्तप्रैषपूर्वकमेव होतृवचनं युक्तम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः प्रथमाध्याये (षष्ठाध्याये) पञ्चमः खण्डः ॥५॥ (५) [३५]

मैत्रावरण यज्ञ [पुरुष] का मन है और होता यज्ञ [पुरुष] की वाणी है । वस्तुतः लोक में मन से ही प्रेरित होकर वाणी शब्द का उच्चारण करती है । जो अन्यमनस्क होकर वाणी को बोलता है, तो वह वाणी आसुरी होती है; और वह देवताओं को प्रिय नहीं होती । अतः जो मैत्रावरुण उपप्रैष का प्रतिपादन करता है वह मन से ही उस वाणी को प्रेरित करता है, और उस मन से प्रेरित वाणी के द्वारा देवताओं के लिए हव्य का सम्पादन करता है ।

॥ इस प्रकार छठवें अध्याय में पाँचवे खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

मैत्रावरुणोपप्रैषादूर्ध्वं होतुरध्रिगुप्रैषो बौधायनेन दर्शितः—'यदा जानात्युपप्रेष्य होतर्हव्या देवेभ्य इति तं मैत्रावरुणः प्रेष्यत्यजैदग्निरित्यथ होताऽध्रिगुमन्वाह दैव्याः शमितारः' इति । अध्रिगुः कश्चिद्देवः पशुविशसनस्य कर्ता तं प्रति होता दैव्याः शमितार इत्यादिकं प्रैषमन्त्रमनुब्रूयादिति तस्य सूत्रवाक्यस्यार्थः ॥

तमिमं सूत्रोक्तमन्त्रं[1] विधत्ते—

**दैव्याः शमितार आरभध्वमुत मनुष्या इत्याह[2]** ॥ इति ।

---

१. 'सूक्तोक्तमर्थं' इति वा पाठः ।

२. तै० सं० ३.६.६ । एष चाध्रिगुप्रैषमन्त्रोऽन्यशाखीय इति कल्पकारेण प्रपठ्य विहितः (आश्व० ३.३.१) ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हे दैव्या देवसंबन्धिनः शमितारः पशुविशसनकारिण आरभध्वं विशसनस्योपक्रमं कुरुतेति मनुष्या अपि मनुष्यरूपा अपि शमितार आरभध्वमित्यादिकमध्रिगुप्रैषमन्त्रं होता पठेत् ॥

ii. ६ [vi ६] 'देव सम्बन्धी पशु की हिंसा करने वाले और मनुष्य सम्बन्धी पशु की हिंसा करने वाले मारने का उपक्रम आरम्भ करो—इस प्रकार होता कहता है।

यथोक्तमन्त्रस्य प्रथमपादं व्याचष्टे—

**ये चैव देवानां शमितारो ये च मनुष्याणां तानेव तत्संशास्ति ॥** इति।

तत्तेन प्रथमपादभागेन द्विविधजातीयाञ्शमितॄन् प्रेरयति ॥

देवताओं के मध्य जो वध करने वाले हैं और जो मनुष्यों के बीच [पशुमेध करने वाले] हैं उन्हीं को उस [प्रथम पाद के] द्वारा प्रेरित करता है।

मन्त्रस्य द्वितीयभागमनुवदति—

**उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधमिति ॥** इति।

प्रारम्भे किं कर्तव्यमिति चेत्; तदुच्यते—मेध्या मेधार्हा दुरो द्वारो हविर्मार्गान् विशसनहेतीर्वोपनयत संनिधापयत; मेधपतिभ्यां यज्ञस्वामिपत्नीयजमानार्थमग्नीषोमदेवतार्थं वा मेधं यज्ञमाशासानाः प्रार्थयमाना हे शमितारो यूयमुपनयत ॥

यज्ञ के स्वामी यजमान और उसकी पत्नी के लिए [अथवा अग्नि और सोमदेव के लिए] यज्ञ की प्रार्थना करने वाले हे शमिता [= मारने वाले] तुम मेध्य पशु रूप हवि को [अथवा वधार्थ-आयुध] लाओ।

अत्र मेधशब्दं मेधपतिशब्दं च व्याचष्टे—

**पशुर्वै मेधो यजमानो मेधपतिर्यजमानमेव तत्स्वेन मेधेन समर्धयति ॥** इति।

[यहाँ मेध और मेधपति शब्द का अर्थ है]—पशु ही मेध [= बलि] है और यजमान मेधपति [= यज्ञ का स्वामी] है। वस्तुतः इस प्रकार होता यजमान को उसी के मेध से समृद्ध करता है।

मतान्तरानुसारेण मेधपतिशब्दस्यार्थं दर्शयति—

**अथो खल्वाहुर्यस्यै वाव कस्यै च देवतायै पशुरालभ्यते सैव मेधपतिरिति ॥** इति।

अथवा इस सन्दर्भ में अन्य ब्रह्मवादी कहते हैं कि जिस किसी देवता के लिए पशु का आलम्भन किया जाता है वही यज्ञ का स्वामी है।

अस्तु मेधपतिशब्दो देवतापरस्तावता च को लाभ इत्याशङ्क्याऽऽह—

**स यद्येकदेवत्यः पशुः स्यान्मेधपतय इति ब्रूयाद् यदि द्विदेवत्यो मेधपतिभ्यामिति यदि बहुदेवत्यो मेधपतिभ्य इत्येतदेव स्थितम् ॥** इति।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[देवता परक मेधपति शब्द से लाभ यह है कि] यदि एक देवता के लिए पशु हो तो 'मेधपतये' [मेधपति के लिए च० एक०] कहना चाहिए। यदि दो देवता के लिए पशु हो तो 'मेधपतिभ्याम्' [च० द्वि०] ; और यदि बहुत से देवों के लिए पशु हो तो 'मेधपतिभ्यः [च० बहु०] कहना चाहिए। यही नियम है।

तृतीयभागमनुवदति—

**प्रास्मा अग्निं भरतेति ॥** इति।

अस्मै पश्वर्थं हे शमितारोऽग्निं प्रभरत प्रथमं नयत ॥

इस पशु के लिए हे शमिताओं, पहले अग्नि लाओ।

अग्नेः प्रथमतो नयनमुपपादयितुमाख्यायिकामाह—

**पशुर्वै नीयमानः स मृत्युं प्रापश्यत् स देवान्नान्वकामयतैतुं तं देवा अब्रुवन्नेहि स्वर्गं वै त्वा लोकं गमयिष्याम इति स तथेत्यब्रवीत् तस्य वै मे युष्माकमेकः पुरस्तादैत्विति तथेति तस्याग्निः पुरस्तादैत् सोऽग्निमनु प्राच्यवत ॥** इति।

शामित्रदेशं प्रति नीयमानः पशुः प्रत्यक्षेण मृत्युं दृष्टवान्। ततः स पशुर्देवानन्वेतुं नान्वकामयताऽऽगन्तुं नैच्छत्। ततो देवाः पशुं प्रत्येवमब्रुवन् हे पशो त्वमागच्छ, त्वया सह वयं सर्वे स्वर्गं गच्छाम इति। पशुश्च तदङ्गीकृत्य देवान् प्रत्येवमब्रवीत्, युष्माकं मध्ये कश्चिद्देवो मम पुरस्ताद् गच्छत्विति। तद्वचनमङ्गीकृत्याग्निर्देवस्तस्य पशोः पुरस्तादगच्छत्। ततः स पशुस्तमग्निमनु स्वयमपि तुष्टः सन्प्रकर्षेणागच्छत्। तस्मादग्निं प्रभरतेत्येतद्युक्तम् ॥

जब पशु को [शामित्र देश के प्रति] ले जाया जा रहा था तो उसे सामने मृत्यु दिखाई दी तब उसने देवताओं का अनुगमन नहीं करना चाहा। तब देवों ने उससे कहा—आओ, हम सभी तुम्हारे साथ स्वर्ग लोक को चलेंगे। उसने कहा—अच्छा, किन्तु तुम लोगों में से एक मेरे आगे चले। उन्होंने कहा—अच्छा; और अग्नि उसके आगे चले एवं वह अग्नि के पीछे चला [इस लिए पहले अग्नि को लाना चाहिए]।

उक्तमर्थं लोकप्रसिद्ध्या द्रढयति—

**तस्मादाहुराग्नेयो वाव सर्वः पशुरग्निं हि सोऽनु प्राच्यवतेति ॥** इति।

यस्मादग्निमनु पशुः प्रागच्छत् तस्मादाग्नेयः सर्वः पशुरित्येवं याज्ञिकलोकप्रसिद्धिः। अत एव सर्वं पशुमग्नौ जुह्वति ॥

क्योंकि उस [पशु] ने अग्नि का अनुसरण किया इसलिए सभी पशु अग्नि से सम्बन्धित कहे जाते हैं।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यस्मादेवं प्रसिद्धिस्तस्मादेव कारणात् पशोः पुरस्तादग्निं नयेयुरित्येतमर्थं प्रसङ्गाद् विधत्ते—

**तस्माद् वस्याग्निं पुरस्ताद्धरन्ति ॥** इति ।

तस्मादु तस्मादेव ॥

इसीलिए अग्नि को पहले ले जाते हैं ।

चतुर्थभागमनूद्य व्याचष्टे—

**स्तृणीत बर्हिरित्योषध्यात्मा वै पशुः पशुमेव तत्सर्वात्मानं करोति ॥** इति ।

संज्ञपनस्थानं नीतस्य पशोरधस्तादुपाकरणसाधनयोर्बर्हिषोरन्यतरद्बर्हिर्हे शमितार उपक्षिपत । पशुभक्षितानामोषधीनां पश्ववयवत्वेन परिणतत्वात् पशोरोषध्यात्मत्वम्, अतस्तद्भागपाठेन पशुं सर्वौषध्यात्मानं करोति ॥

हे शमिताओ 'कुश को बिछा दो'-[पशु भक्षित वनस्पतियाँ पशु के अवयव के रूप में परिणत होने से] पशु ओषध्यात्मक है । वस्तुतः इस प्रकार पशु को ही वह सर्वात्मक [पूर्णाङ्ग] बनाता है ।

पञ्चमभागमनूद्य व्याचष्टे—

**अन्वेनं माता मन्यतामनु पिताऽनुभ्राता सगर्भ्योऽनु सखा सयूथ्य इति जनित्रैरेवैनं तत्समनुमतमालभन्ते ॥** इति ।

संज्ञप्यमानमेनं पशुं मात्रादयोऽङ्गी कुर्वताम् । समाने गर्भे भवः सगर्भ्य एकोदरो भ्रातृविशेषणमेतत्, समाने यूथे भवः सयूथ्यः पशुसमूहाद् व्यावर्तकविशेषणमेतत् । तद्भागपाठेनैनं पशुं जनित्रैस्तज्जन्मसंबन्धिभिः पश्वन्तरैरनुज्ञातं कृत्वा पश्चादालभन्ते ॥

इस [संज्ञपनीय पशु] की माता अनुज्ञा करे, इसका पिता, इसका सहोदर भ्राता और इसके समूह के मित्र अनुज्ञा प्रदान करें; वस्तुतः इस प्रकार इसके जन्म से सम्बन्धित अन्य पशुओं की अनुज्ञा लेकर ही इसका अलम्भन किया जाता है ।

षष्ठं भागमनूद्य व्याचष्टे—

**उदीचीनाँ अस्य पदो निधत्तात् सूर्यं चक्षुर्गमयताद् वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरमित्येष्वेवैनं तल्लोकेष्वादधाति ॥** इति ।

संज्ञप्यमानस्य पशोः पदः पादानुदीचीनानुत्तरदिग्गतान्निधत्तात् स्थापयत । चक्षुरिन्द्रियं सूर्यदेवतां प्रापयत । प्राणं वायुदेवतां प्रत्यन्ववसृजतात् प्रापयत । असुं जीवमन्तरिक्षं प्रापयत । श्रोत्रं दिग्देवतां प्रापयत । शरीरं पृथिवीं प्रापयत । तद्भागपाठेनैनं पशुमेष्वेव यथोक्तदेवतासंबन्धिषु लोकेषु स्थापयति ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इसके पैरों को उत्तर की ओर स्थापित करो, चक्षु सूर्य देवता को प्राप्त कराए, प्राण वायुदेवता के प्रति छोड़े, जीव अन्तरिक्ष के लिए, कान दिशाओं के लिए और शरीर पृथ्वी के लिए [छोड़े]। वस्तुतः इस प्रकार उस [भाग] के पाठ से इस [पशु] को उन [उन देवताओं] के लोकों में स्थापित करता है।

सप्तमभागमनूद्य व्याचष्टे—

**एकधाऽस्य त्वचमाच्छचतात् पुरा नाभ्या अपि शसो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वादिति पशुष्वेव तत्प्राणान् दधाति ॥** इति।

एकधैकविधया विच्छेदराहित्येनास्य त्वचमाच्छचतात्समन्ताच्छिन्नां कुरुत। नाभ्या अपि शसश्छेदात् पूर्वमेव वपामुत्खिदतादुद्धरत। ऊष्माणमुच्छ्वासमन्तरेव वारयध्वान्निवारयत पिहितास्यं संज्ञपयतेत्यर्थः। तद्भागपाठेन पशुष्वेव प्राणान् संपादयति ॥

'इसकी सम्पूर्ण त्वचा को [विच्छेदरहित] चारो ओर से उचाड़ लो और नाभि काटने से पूर्व ही वपा अर्थात् अतड़ियों को निकाल लो। इसकी साँस को [मुँहे बन्द करके] भीतर ही रोक लो [अर्थात् मुँह बन्द करके संज्ञपन करे]—इस प्रकार होता उस [भाग] के पाठ से पशुओं में ही प्राणों को संपादित करता है।

अष्टमभागमनूद्य व्याचष्टे—

**श्येनमस्य वक्षः कृणुतात् प्रशसा बाहू, शला दोषणी, कश्यपेवांसाऽच्छिद्रे श्रोणी, कवषोरू स्रेकपर्णाऽष्ठीवन्ता षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयताद् गात्रं गात्रमस्यानूनं कृणुतादित्यङ्गान्येवास्य तद्गात्राणि प्रीणाति ॥** इति।

श्येनं श्येनाकृतिकमस्य पशोर्वक्षः कुरुत। बाहू प्रशसा प्रकृष्टच्छेदनौ कुरुत। दोषणी प्रकोष्ठौ शला कृणुताच्छलाकाकारौ कुरुत। उभावप्यंसौ कश्यपाकारौ कुरुत। श्रोणी उभे अप्यच्छिद्रे शनूने कुरुत। कवषोरू कवषाकारावूरू स्रेकपर्णा करवीरपत्राकारावष्ठीवन्तावूरू मूलयुक्तौ कुरुत। अस्य पशोर्वङ्क्रयो वक्राणि पार्श्वास्थीनि षड्विंशतिर्भवन्ति। ताः सर्वा अनुष्ठ्यानुक्रमेण स्वस्थानगतान्युच्च्यावयतोद्धरत। गात्रं गात्रं सर्वमप्यदनीयमङ्गमनूनं कृणुतादविकलं कुरुत। तद्भागपाठे तस्य पशोरङ्गान्येवावयवरूपाण्येव गात्राणि प्रीणाति। गात्रशब्दः शरीरे तदवयवे च वर्तते। अतोऽत्रावयवविवक्षां द्योतयितुमङ्गानीति निर्देशः ॥

'इसके वक्ष को श्येन [=बाज] पक्षी की आकृति का कर दो। इसकी दोनो भुजाओं को प्रशस [=कुल्हाड़ी] की आकृति का, इसके प्रकोष्ठों [पीछे के दोनो पैरों] को भाले की नोक की आकृति का, इसके कन्धों को कच्छपों की आकृति का, श्रोणी [कूल्हों] को छिद्ररहित, जाघों को कवष [=ढाल या door leaves] के आकार का, दोनों घुटनों को स्रेक वृक्ष [करवीर या कनेर] के पत्तों के आकार का करो। इस पशु

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

की पसली की छब्बीस हड्डियाँ हैं उन्हें अनुक्रम से उनके अपने स्थान से निकाल लो। इस प्रकार इसके अंग अंग को पूरा रक्खो अर्थात् सभी अंगो को ऐसा निकाले कि वे परिपूर्ण रहें।'—इस प्रकार उस [भाग के पाठ] के द्वारा इस पशु के शरीर के अवयवरूपी अङ्गों को सन्तुष्ट करता है।

नवमभागमनूद्य व्याचष्टे—

**ऊवध्यगोहं पार्थिवं खनतादित्याहौषधं वा ऊवध्यमियं वा ओषधीनां प्रतिष्ठा, तदेनत्स्वायामेव प्रतिष्ठायामन्ततः प्रतिष्ठापयति ॥ इति।**

ऊवध्यगोहं पुरीषगूहनस्थानं पार्थिवं खनतात्पृथिवीसंबन्धमेव खनत। अत्रोवध्य-शब्देनौषधमेवोच्यते, पुरीषस्य पशुभक्षितस्यौषधिविकारत्वात्। ओषधीनां चेयमेव भूमिः प्रतिष्ठाऽऽश्रयः। तत्तथा सत्येनमूवध्यं स्वकीयायामेव प्रतिष्ठायां भूमिरूपायामन्ततः पशुविशसनान्ते प्रतिष्ठापयति ॥

अत्र मीमांसा—नवमाध्याये चिन्तितम्—

अविकारो विकारो वा स्यान्मेधपतिशब्दयोः।
विकारे स्वामिदेवार्थ एकार्थो वाऽन्तिमेऽपि किम् ॥
स्वाम्यर्थो देवतार्थो वा स्यादन्याय्यत्वतोऽग्रिमः।
अर्थभेदाद्विकारोऽत्र द्वावर्थौ शब्दयोर्द्वयोः ॥
मन्त्रैक्यादर्थ एकोऽत्र स्वाम्यस्मिञ्जायया द्विता।
देवार्थाशीर्देव एकोऽधिष्ठाने द्वे द्विधेरणम्[1] ॥

अध्रिगुप्रैषनिगदस्य[2] आदाविदमाम्नायते—'दैव्याः शमितार आरभध्वमुत मनुष्या। उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम्'' इति। शाखान्तरे तु 'मेधपतये मेधमिति। अयमर्थः—शमितारः पशुघातिनो द्विविधाः—दैव्या मानुषाश्च, तानुभयांश्च संबोध्य होता कर्तव्यविशेषान्निर्दिशति—'प्रारम्भः कर्तव्यः। मेधो यज्ञः, तद्योग्यान्दुरः पदार्थान्हिंसाहेतूनिहाऽऽनयत। किं कुर्वन्तः? यज्ञपतिभ्यां यज्ञपतये वा यज्ञमाशासानाः' इति। तत्रैकवचनान्तस्य द्विवचनान्तस्य च मेधपतिशब्दस्य बहुपशुयुक्तासु विकृतिष्वनूहः, ऊहो वेति संशयः। ऊहपक्षेऽपि किमेकवचनान्तस्य यजमानोऽर्थः, द्विवचनान्तस्याग्नीषोमौ देवते इत्येवमर्थभेदः। किं वा शब्दद्वयस्यैक एवार्थ इति संशयः।

---

१. जै० न्या० वि० ९.३.१२.३२–४०।

२. परसम्बोधनार्थाः मन्त्रा निगदाः। ते च यजूंष्येव; 'यजूंषि वा तद्रूपत्वात्'—इत्यादुक्तेः [जै० सू० २.१.१३.४०–४५]। अध्वर्युप्रैषनिगदमन्त्रं तु तैतिरीयाः समामनन्ति (तै० ब्रा० ३.६ ६.१–४) 'अथ होताध्रिगुमन्वाह दैव्या शमितार इति' इति च तत्कल्पः।

३. तै० ब्रा० ३.६.६।



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एकार्थत्वपक्षेऽपि यजमान एवार्थः, देवतैव वेति संशयः। अत्राग्नीषोमीये पशौ यजमानः, अग्नीषोमौ चेति त्रयो मेधस्य पतयस्तेष्वेकवचनस्य द्विवचनस्य चान्यायनिगदत्वेन प्रकृतावविवक्षितस्य वचनस्य विकृतावनूह इत्याद्यः पक्षः। प्रकृतौ समवेतार्थत्वे संपादयितुं शक्ये सत्यन्यायनिगदत्वाभावाद् विकृतावूहः कर्तव्य इति द्वितीयः पक्षः। अस्मिन् द्वितीयपक्षेऽपि प्रकृतावुपन्यस्तप्रकारेणार्थभेदाद् विकृतिषु द्विबहुयजमानयुक्तास्वहीनादिषु यजमानानुसारेणैकवचनान्त ऊह्नीयः। अनेकपशुयुक्तासु विकृतिषु देवतानुसारेण द्विवचनान्त ऊह्नीयः। सोऽयं शाखाविकल्पेन प्रथमः पक्षः। शाखाभेदेन पाठभेदेऽपि मन्त्रभेदाभावादर्थभेदो न युक्तः। किं त्वेक एवार्थ इति पक्षान्तरम्। तदाऽपि देवतायाः संप्रदानत्वेन स्वामित्वाभावान्मेधपतिशब्दयोग्यता नास्तीति यजमान एव तच्छब्दार्थः। तस्मिन् यजमान स्वत एकत्वं जायया सह द्वित्वमित्येकवचनद्विवचने उभे अपि समवेतार्थे। ततो यजमानद्वयोपेतायां विकृतावेकवचनान्तो द्वित्वेनोह्नीयः। द्विवचनान्तो बहुत्वेनेति पूर्वः पक्षः। मेधस्य यजमानार्थत्वं नैवाऽऽशासनीयम्। तस्य सिद्धत्वात्। देवतार्थत्वं त्वाशासनीयम्। ततो मेधमाशासानः इत्येतद्देवतायां समवेतार्थम्। संप्रदानस्याप्युद्देश्यत्वेन प्राधान्यान्मेधपतित्वमविरुद्धम्। देवत्वाकारेणैकत्वादग्नित्वसोमत्वाकारेण द्वित्वाच्चैकवचनद्विवचने उपपन्ने। तस्माद्देवतानुसारेण विकृतावूह इति सिद्धान्तः।

तत्रैवान्यच्चिन्तितम्—

"आदित्येष्वेकवाच्येष ऊह्यो नो वोह्यतेऽन्यवत्।
गणार्थत्वादनूह्योऽतो विकल्पः प्रकृताविव" ॥[1]

प्रजापशुसंपत्तिकामस्य बहुदेवत्यः पशुराम्नायते—'यः कामयेत····प्रथेयं पशुभिः प्र प्रजया जायेयेति स एतामविं वशामादित्येभ्यः कामायाऽऽलभेत'[2] इति। वशा वन्ध्या, कामाय कामुकेभ्य इत्यर्थः। अत्र चोदकप्राप्तो मेधपतय इत्येकवचनान्तः शब्द आदित्यानां बहुत्वाद् बहुवचनान्तत्वेनोह्नीयः। यथा मेधपतिभ्यामिति द्विवचनान्त ऊह्यते[3]। यथा वा प्रास्मा इत्येकवचनान्त ऊह्यते[4] तद्वदिति चेत्। मैवम्। प्रकृतावग्नीषोमयोर्गणैकत्वमेकवचनान्तो ब्रूते। आदित्यानामपि गणैकत्वं समानमित्यनूहः। तस्मादविकृत एकवचनान्त इतरेण सह प्रकृताविवात्रापि विकल्प्यते॥

तत्रैवान्यच्चिन्तितम्—

"कृष्णग्रीवादिकेऽनूह ऊहो वा नास्य पूर्ववत्।
देवत्वं न गणस्यात ऊहो बह्वभिधित्सया" ॥[5]

---

१. जै० न्या० वि० ९.३.१३.४१–४२।
२. तै० सं० २.१.२.३।
३. 'मेधपतिभ्याम्'—इति २७१ पृ० १४ पं०।
४. 'प्रास्मै'—इति च तत्रैव।
५. जै० न्या० वि० ९.३.१४–४३।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यूपैकादशिन्याम्[1] अग्न्यादिदेवताकाः पशव आम्नाताः—प्रैवाऽऽग्नेयेन वापयति । मिथुनं सारस्वत्या करोति । रेतः सौम्येन दधाति । प्रजनयति पौष्णेन[2] इत्यादिना । ते च स्वनामभिरन्यत्राऽऽम्नाताः—'आग्नेयः कृष्णग्रीवः । सारस्वती मेषी । बभ्रुः सौम्यः । पौष्णः श्यामः'[3] इत्यादिना । तत्रास्यैकवचनान्तस्य मेधपतिशब्दस्याऽऽदित्येष्विव नोह इति चेत् । मैवम्, वैषम्यात् । आदित्यगणस्य तत्रदेवत्वम्, इह त्वेकैकस्य पृथग्देवत्वम्। अतो बहून्देवानभिधातुं बहुवचनान्तत्वमूहनीयम् ॥

तत्रैवान्यच्चिन्तितम्—

द्विपश्वोश्चक्षुराद्यूहो न वोहः पशुभेदतः ।
तेजोमात्रस्य सूर्यादावेकीभावादनूहनम्[4] ॥

अग्नीषोमीयपशावध्रिगुप्रैषे पशुसंबन्धिचक्षुरादीनां सूर्यादिसंसर्ग आम्नायते—'सूर्यं चक्षुर्गमयतात् वातं प्राणमन्ववसृजतात् ? दिशः श्रोत्रम्' इत्यादि । 'मैत्रं[5] श्वेतमालभेत, वारुणं कृष्णमिति[6] विहितयोर्द्वयोः पश्वोर्मन्त्रगताश्चक्षुरादिशब्दा द्विवचनान्तत्वेनोहनीयाः । कुतः—पशुभेदेन चक्षुरादीनां भेदादिति चेत् । मैवम् । न खल्वत्रेन्द्रियाधिष्ठाने शरीरगत-गोलकं चक्षुःशब्देन विवक्षितम् । तद्विवक्षायामेकस्मिन्नपि पशौ गोलकभेदादेकवचनान्तचक्षुः-शब्दस्यानन्वयप्रसङ्गाद्, गोलकस्य सूर्यादिप्राप्त्यसंभवाच्च । यत्तु रूपदर्शनादिसामर्थ्यं-लक्षणं तेजोमात्रम्, तदत्र चक्षुरादिशब्दैर्विवक्षितम् । तच्च पश्वनेकत्वेऽपि ततो निर्गत्य सूर्यादावेकीभूतत्वात् समुद्रप्रविष्टनदीवन्न भेदेनावतिष्ठते । तस्मान्नास्त्यूहः ॥

तत्रैवान्यच्चिन्तितम्—

एकधेत्यविकारः स्यादभ्यासो वा सहत्वतः ।
आद्यो मैवं प्राकृतस्य सकृत्त्वस्योचितत्वतः[7] ॥

तस्मिन्नेवाध्रिगुप्रैषे श्रूयते—'एकधाऽस्य त्वचमाच्छ्यतात्'[8] इति । छिन्धीत्यर्थः । तत्र द्वयोः पश्वोरेकधेत्यस्य शब्दस्य नास्ति विकारः । कुतः ? तस्य शब्दस्येह सहत्व-

१. अग्निष्टोमे स्तोमायनसंज्ञा विकल्पत आग्नेय-सारस्वत-सौम्य-पौष्ण-बार्हस्पत्य-वैश्वदेव-ऐन्द्र-मारुतैन्द्राग्न-सावित्र-वारुणाः सवनीया पशवो भवन्ति । तेषामेकादशानां नियोजनार्थमेक एव यूपः' प्रतिपशु एकैको वा यूपो भवति । एकादशानां वर्ग एकादशिनी, तस्याम्; तस्मिन् पक्षे इति यावत् [कात्या० श्रौ० ८.८.६,२६] एषा तु यूपैकादशिनी शतपथे (३.८.५) 'प्रजापतिर्वै प्रजाः ससृजानः'—इत्याख्यान-पूर्विका विहिता; तथा तै० संहितायां च 'प्रजापतिः प्रजा असृजत'—इत्यादिना (६.६.५) ।

२. तै० सं० ६.६.५.१ ।
३. वा० सं० २९.५८ ।
४. जै० न्या० वि० ९.३ १०.२७,२८ ।
५. तै० ब्रा० ३.६.६.२ ।
६. तै० सं० २.१.९.२ ।
७. जै० न्या० वि० ९.३.११.२९–३१ ।
८. तै० ब्रा० ३.६.६.२ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वाचित्वात्;—'एकधा गाः पाययति' इत्यत्र यौगपद्ये प्रयोगदर्शनात् । पश्वनेकत्वेऽपि त्वगुत्पाटनस्यैककालीनत्वं बहुपुरुषकर्तृकत्वं च घटत इति प्राप्ते, ब्रूमः—प्रकृतावेकस्मिन्पशौ यौगपद्यलक्षणोऽर्थो न संभवति ततः सकृत्त्वं तस्य शब्दस्यार्थः—त्वगियमवयवशो बहुकृत्वो न च्छेत्तव्या किंतु सर्वाऽपि सकृदेकप्रयत्नेनेत्युक्तं भवति । यत्प्रकृतौ सकृत्त्वं, तदेव विकृतावुचितम् । ततः प्रतिपशु सकृत्त्वमभिधातुम् 'एकधा' इत्ययं मन्त्रोऽभ्यसितव्यः ।।

तत्रैवान्यच्चिन्तितम्—

साहृश्यमुत साकल्यं श्येनाद्युक्तौ विवक्षितम् ।
प्रसिद्धसंनिधेराद्यस्तत्सत्त्वादखिलोद्धृतिः[1] ।।

अध्रिगुप्रैषे वचनमेतदाम्नायते—'श्येनमस्य वक्षः कृणुतात्' इति । तत्र—यथा 'अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम्' इत्युक्ते प्रसिद्धसिंहसंनिधानात्पिष्टपिण्डेषु सिंहसादृश्यं कर्तव्यतया प्रतीयते, तथैव अस्य पशोर्वक्षः श्येनं कृणुतात् इत्यत्र श्येनसादृश्यं वक्षसि कर्तव्यतया प्रतीयते । ततो वक्षः उद्धृत्य कर्तनाद्युपायेन पक्षचरणचञ्च्वादिकं संपाद्य श्येनसंस्थानं कर्तव्यमिति प्राप्ते, ब्रूमः—वक्षसि श्येनसादृश्यं स्वत एव पूर्वमस्ति । ततो यथा 'तन्न नश्यति तथा साकल्येनोद्धरणीयम्' इति विवक्षया श्येनशब्दः प्रयुज्यते । तथा सति हविरविकलं भवति । अंसादिष्वनेनैव न्यायेन साकल्यविवक्षया तत्तद्रूपकोक्तिर्द्रष्टव्या[3] । एतदेवाभिप्रेत्य श्रूयते—'गात्रं गात्रमस्यानूनं कृणुतात्'[4] इति ।

तत्रैवान्यच्चिन्तितम्—

प्रशसेत्यसिरर्थः स्यात्स्तुतिर्वा छेदनादसिः ।
स्तुतिः कात्स्न्र्याय बाह्वोः स्यात्स्वधितिश्छेदसाधनम् ।।[5]

अध्रिगुप्रैषे वाक्यान्तरमाम्नातम्—'प्रशसा बाहू'[6] इति । 'शसु हिंसायाम्' इत्यस्माद्धातोः सोपसर्गादुत्पन्नस्य सकारान्तप्रातिपदिकस्य तृतीयैकवचनान्तस्य 'प्रशसा' इति रूपं भवति । तच्चासेर्वाचकम् तदेतत्केनचिद्ब्राह्मणवाक्येनानूद्यते—"दश 'प्रयाजानिष्ट्वाऽऽह शासमाहरेति । असिवै शास इत्याचक्षते"[7] इति । सोऽयमसिर्बाह्वोश्छेदनहेतुः । तस्माद् दृष्टार्थलाभादसिः 'प्रशसा' इत्यस्य पदस्यार्थ इति चेत् । मैवम् । 'शंसु स्तुतौ' इत्यस्माद्धातोरयमुत्पन्नः । 'प्रशसौ' इत्यस्य द्वितीयाद्विवचनान्तस्य शब्दस्य च्छान्दस औकारलोप आकारादेशे च कृते 'प्रशसा' इति भवति[8] । बाह्वोः प्रशस्तत्वं नाम कात्स्न्र्यम् । 'प्रशसा बाहू कृणुतात्' इत्युक्ते

---

१. जै० न्या० वि० ९.४.६.२५–२७ ।
२. तै० ब्रा० ३.६.६.२ ।
३. तथा च अंशो कच्छपौ, दोषणी शलाके, कवषौ करवीरपत्रे इत्यादि (तै० ब्रा० ३.६.६) ।
४. तै० ब्रा० ३.६.६.३ ।
५. जै० न्या० वि० ९.४.५.२३–२४ ।
६. तै० ब्रा० ३.६.६ २ ।
७. शत० ब्रा० ३.८.१.४ ।
८. 'सुपां सुलुक्'—इति पा० सू० ७.१.३९ । प्रशसावित्यत्र द्वितीया द्विवचनस्य छान्दस आत्वे प्रशसेति भवति'—इत्येवं वक्तव्यम् ।।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

निःशेषेणोद्धर्तंत्यौ बाहू इत्येतादृशो दृष्टाऽर्थो लभ्यते। नात्र च्छेदनसाधनत्वमसेः संभवति स्वधितेस्तत्साधनत्वेन विहितत्वात्। तस्मात् स्तुतिरेवास्य शब्दस्यार्थः। तथा सति बाहुवृद्धौ बहुवचनान्तत्वेन प्रशसा' इति पदमूहनीयम्।[1]

तत्रैवान्यच्चिन्तितम्—

षड्विंशतिर्वङ्क्रयोऽस्येत्यनूहः स्यादुतोह्यते।
ऊहेऽपि वचनान्यत्वमस्येत्यावर्त्यतेऽथ वा॥
षड्विंशतेरुताभ्यासः समस्तोक्तिर्भवेदुत।
अनूहोऽकरणत्वेन दृष्टलाभात्तदूहनम्॥
संख्यायाश्च पशोर्युक्तेर्वङ्क्रीणां मुख्यतावशात्।
अमी पक्षा युज्यतेऽन्त्यस्ता अनुष्ठ्येति शेषतः॥[2]

अध्रिगुप्रैषे वाक्यमिदमाम्नायते—'षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयतात्'[3] इति। अयमर्थः—'वङ्क्रयो वक्राणि पार्श्वास्थीनि। तान्यस्य पशोः षड्विंशतिसंख्याकानि, एकैकस्मिन् पार्श्वे त्रयोदशानामवस्थितत्वात्। ताश्च वङ्क्रीरनुष्ठ्यानुष्ठायानुक्रमेण गणयित्वेति यावत्। उच्च्यावयतादुद्धरताद्' इति। सोऽयं मन्त्रो वङ्क्रीणामुद्धरणे करणतया न विनियुक्तः। किं तु संज्ञपनात् प्राक्पशौ नीयमाने होत्रा प्रयुज्यते। ततोऽसमवेतार्थत्वादनूहः—इत्याद्यः पक्षः। अकरणत्वेऽपि नादृष्टार्थत्वम्, वक्ष्यमाणार्थस्मारकत्वेन दृष्टार्थलाभात्। तस्मात्प्रकृतौ समवेतार्थतया विकृतावूहः। तदाऽपि चत्वारः पक्षाः। तत्र संख्या मुख्यत्वेन प्रकाश्यते। तेन द्वयोः पश्वोर्द्विगुणितां षड्विंशतिसंख्यां प्रकाशयितुं द्विवचनान्ततया षड्विंशतिशब्द ऊहनीयः—इत्याद्यः पक्षः। पशोश्चोदितत्वेन मुख्यत्वात्तद्वाचकं षष्ठ्यन्तम् 'अस्य' इति पदं पश्वनुसारेणाऽऽवर्तनीयमिति-द्वितीयः पक्षः। युक्तिर्योगः। षड्विंशतिसंख्यायाश्च पशुना सह संबन्धात्तस्य मुख्यत्वात् प्रतिपशु विभक्तसंख्यां प्रकाशयितुं षड्विंशतिपदस्याभ्यासः—इति तृतीयः पक्षः। अत्र सर्वत्र मुख्यानुसारेण पदान्तराण्यूहनीयानि। संख्येयानां वङ्क्रीणां मुख्यत्वात् तासामियत्ता समस्य वक्तव्या। ततो 'द्वापञ्चाशदनयोर्वङ्क्रयः। अष्टसप्ततिरेषां वङ्क्रय'[4] इत्येवं यथायोगमूहनीयमिति—चतुर्थः पक्षः। अयमेव सिद्धान्तो वाक्यशेषानुगुण्यात्। ता अनुष्ठ्येत्ययं वाक्यशेषः[5]। स च व्याख्यातः[6]॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः प्रथमाध्याये (षष्ठाध्याये) षष्ठः खण्डः॥६॥ (६) [३६]

---

१. बहुषु पशुषु संज्ञप्तेषु 'प्रशसा बाहू'—इति निगद एव 'प्रशसान् बाहून्'—इति पठितव्यमिति भावः।
२. जै० न्या० वि० ९.४.१.१–१६।
३. तै० ब्रा० ३.६.६.३।
४. षड्विंशतिरस्य वङ्क्रयः'—इत्येष एव निगदः। द्विपशुस्थले 'द्विपञ्चाशदनयोर्वङ्क्रयः'—इति पठनीयः। एवं त्रिपशुस्थले 'अष्टसप्ततिरेषां वङ्क्रयः'—इति।
५. द्र० इतः पूर्वम् २२४ पृ०।
६. द्र० इतः पूर्वम् २२८-२२९ पृ०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इस मल को छिपाने के लिए भूमि [में गड्ढा] खोदो। [पशुभक्षित वनस्पति का विकार होने से] ओषधि ही ऊवध्य [=पुरीष] है और यह भूमि ओषधियों का आश्रय-स्थान है। इस प्रकार होता ऊवध्य को उस अपने भूमि रूप स्वकीय आश्रय में ही [पशु-मेध के] अन्त में प्रतिष्ठित कर देता है।

॥ इस प्रकार षष्ठ अध्याय में षष्ठ खण्ड की हिन्दी पूर्ण हुई ॥ ६ ॥

## अथ सप्तमः खण्डः

यद्यप्यध्रिगुप्रैषमन्त्रो न समाप्तस्तथाऽप्यनन्तरभागे बहुवक्तव्यसद्भावात् खण्डान्तरं कृतम्।

दशमं भागमनूद्य व्याचष्टे—

**अस्ना रक्षः संसृजतादित्याह तुषैर्वै फलीकरणैर्देवा हविर्यज्ञेभ्यो रक्षांसि निरभजन्नस्ना महायज्ञात् स यदस्ना रक्षः संसृजतादित्याह रक्षांस्येव तत्स्वेन भागधेयेन यज्ञान्निरवदयते ॥** इति।

अस्नाऽसृजा रुधिरेण रक्षः संसृजतान्मांसाभिलाषव्यावृत्त्यर्थं राक्षसान् रक्तेनैव संयोजयत। एनं मन्त्रभागं होता ब्रूयात्। किमर्थमेतदिति? तदुच्यते—पुरा देवास्तुषैर्व्रीहिगतैर्हेयांशैः फलीकरणैस्तण्डुललेशैश्च दर्शपूर्णमासादिहविर्यज्ञेषु समागतानि रक्षांसि तोषयित्वा तेभ्यो यज्ञेभ्यो निरभजन् हविर्भागरहितान्यकुर्वन्। महायज्ञे ज्योतिष्टोमादिके समागतानि रक्षांसि पशुरक्तेन तोषयित्वा तस्माद्यज्ञान्निरभजन् निःसारितवन्तः। हविर्यज्ञेभ्यो निःसारणं शाखान्तरे दर्शपूर्णमासप्रकरणे मन्त्रव्याख्याने समाम्नातम्—'रक्षसां भागोऽसीत्याह[1] तुषैरेव रक्षांसि निरवदयते'[2] इति। तदेतदापस्तम्बेनोक्तम्—'मध्यमे पुरोडाशकपाले तुषानोप्य रक्षसां भागोऽसीत्यधस्तात् कृष्णाजिनस्योपवपति'[3] इति। महायज्ञान्निःसरणमग्नीषोमीयपशुप्रकरणे तैत्तिरीयैराम्नातम्—'रक्षसां भागोऽसीति स्थविमतो बर्हिरङ्क्त्वाऽपास्यत्यस्यैव रक्षांसि निरवदयतः'[4] इति। स्थविमतः स्थौल्ययुक्ते बर्हिर्मूलभाग इत्यर्थः। एतदपि सूत्रकारेण स्पष्टीकृतम्—'बर्हिषोऽग्रं सव्येन पाणिनाऽऽदत्ते' तं मध्यं यत आच्छेति तदुभयतो लोहितेनाङ्क्त्वा रक्षसां भागोऽसीत्युत्तरमपरमवान्तरदेशं निरस्य'[5] इति। एवं सति यद्यस्ना रक्ष इति भागं पठेत् तदानीं रक्षांसि स्वकीयभागेन युक्तानि कृत्वा महायज्ञान्निरवदयते निःसारयति॥

ii. ७ [vi. ७] 'राक्षसों को रुधिर से संयुक्त करो'—होता इस मन्त्र का पाठ करता है। [वस्तुतः प्राचीन काल में] देवताओं ने राक्षसों को भूसी और थोड़े से

---

१. तै० सं० १.१.५.२।
२. तै० ब्रा० ३.२.५.११।
३. आप० श्रौ० १.२०.९।
४. तै० सं० ६.३.९.२।
५. आप० श्रौ० ७.१८.१३, १४।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चावल से सन्तुष्ट करके उन्हें यज्ञ की हवियों से वंचित कर दिया और [ज्योतिष्टोमादिक] महान् यज्ञ में आए हुए राक्षसों को पशु का रुधिर देकर उस यज्ञ से उन्हें निकाल दिया। इस प्रकार होता जो 'अस्ना रक्षः संसृजतात्' मन्त्र का पाठ करता है उससे राक्षसों को ही उन्हीं के अपने भाग के द्वारा युक्त करके महान् यज्ञ से निकालता है।

अथास्नेत्येतस्य मन्त्रभागस्य पाठं पूर्वपक्षत्वेनाऽक्षिपति—

**तदाहुर्न यज्ञे रक्षसां कीर्तयेत् कानि रक्षांस्यृतेरक्षा वै यज्ञ इति ॥** इति।

तत्तत्र मन्त्रभागे चोद्यवादिन आहुः। कथमिति, उच्यते—यज्ञे प्रवर्तमाने सति कानिचिदपि रक्षांसि न कीर्तयेत्। जातिविशेषानपेक्ष्य बहुवचननिर्देशः। राक्षसावान्तरजातीनां मध्ये राक्षसमसुरं पिशाचं वा न कंचिदपि कीर्तयेत्। जातिविशेषाः श्रुत्यन्तरे सैन्यद्वयोपन्यासे श्रूयन्ते—'देवा मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रक्षांसि पिशाचास्तेऽन्यतः'[1] इति। अकीर्तने हेतुमृतेरक्षा इतिपदेनोपन्यस्यति। तदेतत् समस्तमेकमेव पदम्। ऋतशब्दो वर्जनवाची। वर्जितं रक्षो यस्मिन् यज्ञे सोऽयमृतेरक्षाः। यज्ञे हि हविर्भागत्वाद्देवा एव नामग्रहणमर्हन्ति न तु रक्षःप्रभृतयः। तस्मादेतं मन्त्रभागं न कीर्तयेत्—इत्याक्षेपवादिनामभिप्रायः॥

इस सम्बन्ध में कुछ याज्ञिकों का कहना है कि यज्ञ में राक्षसों का नाम भी नहीं लेना चाहिए; [असुर या पिशाच] कोई भी राक्षस क्यों न हो। वस्तुतः यज्ञ राक्षसों से सर्वथा मुक्त होना चाहिए।

समाधत्ते—

**तदु वा आहुः कीर्तयेदेव ॥** इति।

तदु वै तस्मिन्नेवास्ना रक्ष इति मन्त्रभागे संप्रदायविदः समाधानमाहुः। यद्यपि तत्र रक्षोनामास्ति तथाऽपि तं भागं कीर्तयेदेव॥

उस मन्त्र के सम्बन्ध में सम्प्रदायविदों का कहना है कि यद्यपि उसमें राक्षस नाम है तथापि उस मन्त्रभाग को पढ़ना ही चाहिए।

तत्रोपपत्तिमाह—

**यो वै भागिनं भागान्नुदते चयते वैनं स यदि वैनं न चयतेऽथ पुत्रमथ पौत्रं चयते त्वेवैनमिति ॥** इति।

यः पुमान् भागिनं भागार्हं सन्तमन्यं पुरुषं तदीयाद्भागान्नुदते नाशयत्येनं विनाशयितारं स नष्टभागः संश्चयते वैनं च्यावयत्येव। यदि वा यदा कदाचिद् विनाशयितुः प्राबल्ये सति तदानीमेनं न चयते न च्यावयति। अथापि कालान्तरे तदीयं पुत्रं पितृद्वेषेण विनाशयति तदाऽप्यशक्तो पौत्रं वा विनाशयति। किं बहुना भागभ्रष्टो मनसि द्वेषं

---

१. तै० सं० २.४.१.१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

गृहीत्वा स्वविरोधिनमेनं भ्रंशयितारं यदा कदाचित्केनापि द्वारेण चयते त्वेव विनाशयत्येवेत्यनेनाभिप्रायेण मन्त्रभागं कीर्तयेदेवेत्यभिज्ञैरुक्तम्। यद्यपि रक्षसां हविर्भागो नास्ति तथाऽपि यज्ञे तुषकणादिदेवानर्हंभागोऽस्त्येव, तस्मात् कीर्तनपक्ष एव युक्तः॥

जो जिस भाग का भागीदार है उस भाग से उसको जो वंचित कर देता है वह स्वयं वण्डित होता है। यदि वह दण्डित नहीं होता तो उसका पुत्र दण्डित होता है और यदि पुत्र दण्डित नहीं होता तो उसका पौत्र दण्डित होता है। अतः इस मन्त्रभाग का पाठ करना ही चाहिए [ऐसा अभिज्ञजनों के द्वारा कहा गया है]।

तत्रैतस्य मन्त्रभागस्य कीर्तने कंञ्चिद्विशेषं विधत्ते—

**स यदि कीर्तयेदुपांशु कीर्तयेत्तिर इव वा एतद्वाचो यदुपांशु तिर इवैतद् यद् रक्षांसि॥** इति।

स याज्ञिको यज्ञे रक्षसां नामधेयं द्वेषपरिहाराय यदि कीर्तयेत् तदाऽप्युपांशु परैर्यथा न श्रूयेत तथा कीर्तयेत्। वाचः संबन्धि यदुपांशुकीर्तनमेतत्तिर इव तिरोहितमिव भवति। यथा कुड्यादिव्यवहितं स्तम्भादिकं चक्षुषा न दृश्यते तथैवोपांशुकथितं न श्रूयते। रक्षांसीति यदस्त्येतदपि तिर इवं चोरवद्यज्ञे रक्षसां गूढचारित्वात्। तस्मात् तदीयकीर्तनस्योपांशुत्वं युक्तम्॥

यदि वह [द्वेष परिहार के लिए] कीर्तन करना चाहता है तो उसे चुपचाप [उपांशु रूप से] नाम लेना चाहिए क्योंकि यह जो उपांशु ध्वनि है वह छिपी हुई है और जो राक्षस है, वह भी छिपे हुए हैं।

विपक्षे बाधं दर्शयति—

**अथ यदुच्चैः कीर्तयेदीश्वरो हास्य वाचो रक्षोभाषो जनितोः॥** इति।

अथोपांशुवैलक्षण्येन यद्युच्चैः कीर्तयेदस्य कीर्तयितुः संबन्धिनीर्वाचो रक्षोभाषो जनितोर्जनयितुमयमीश्वरो भवति। रक्षोभिर्भाष्यत इति रक्षोभाष्, इत्यस्य स्त्रीलिङ्गस्य द्वितीयाबहुवचनं रक्षोभाष इति। तदेतद्वाच इत्यस्य विशेषणम्। अस्योच्चैः कीर्तयितुर्या वाचः सन्ति ताः सर्वा रक्षः प्रोक्तवाग्रूपेणोत्पादयितुमयं संकीर्तयिता समर्थो भवतीति॥

क्योंकि जो जोर से कीर्तन करता है तो उसकी वाणी राक्षस-भाषा को उत्पन्न करने में समर्थ होती है [अर्थात् उसकी आवाज राक्षसों की सी हो जाती है]।

कोऽयं समर्थ इत्याशङ्क्य तं विशेषाकारेण दर्शयति—

**योऽयं राक्षसीं वाचं वदति सः॥** इति।

लोके यः पुमान् रक्षसां वाचं परभर्त्सनरूपामुच्चध्वनित्वेन भीतिकरीं वाचं ब्रूते स पुमांस्तामप्युच्चैः कीर्तयन् रक्षसां वागुत्पादको भवति॥

जो [लोक में] इस राक्षसी वाणी को बोलता है वह [राक्षसी वाणी का उत्पादक होता है]।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

काऽसौ राक्षसी वागित्याशङ्क्याऽऽह—

**यां वै दृप्तो वदति, यामुन्मत्तः सा वै राक्षसी वाक् ॥** इति ।

धनविद्यादिना दृप्तो दर्पं प्राप्तः परतिरस्कारहेतुं यां वाचं वदत्युन्मत्तश्च बुद्धिराहित्यात् पूर्वापरसंबन्धरहितां यां वाचं वदति सेयमुभयविधाऽपि राक्षसी वाक् ॥

**जो [धन या विद्या आदि के] अभिमान में [तिरस्कार हेतु] जिस वाणी को बोलता अथवा उन्मत्त [होकर बुद्धिविहीन] वाणी बोलता है, वह राक्षसी वाणी है ।**

एतद्वेदनं प्रशंसति—

**नाऽऽत्मना दृप्यति नास्य प्रजायां दृप्त आजायते य एवं वेद ॥** इति ।

वेदिता स्वयमपि दर्पं नाऽऽप्नोति तदा स्वीयायां प्रजायां कश्चिदपि दृप्तो नोत्पद्यते ॥

**जो इस प्रकार जानता है वह स्वयं अभिमानी नहीं होता और इसकी सन्तान भी अभिमानी नहीं होती है ।**

एकादशं भागमनूद्य व्याचष्टे—

**वनिष्ठुमस्य मा राविष्टोरूकं मन्यमाना नेद् वस्तोके तनये रविता रवच्छमितार इति ये चैव देवानां शमितारो ये च मनुष्याणां तेभ्य एवैनं तत् परिददाति ॥** इति ।

हे शमितारो दैव्या मानुष्याश्च वनिष्ठुं वपायाः समीपवर्तिनं मांसखण्डमस्य पशोः संबन्धिनमुरूकमुलूकाख्यं पक्षिसदृशं मन्यमाना विशेषाकारेण विजानन्तो मा राविष्ट मैव लवनं कुरुत । उलूकसदृशो वनिष्ठुर्यथा वर्तते तथैवोद्धरत, न तु मध्यतश्छिन्नं कुरुतेत्यर्थः । एवं कुर्वतां वो युष्माकं संबन्धिनि तोके पुत्रे तनये तदीयापत्ये च रविता शब्दयिता नेन्नैव रवद्भूयात् । यथाशास्त्रं छेदने क्रियमाणे भवतां गृहे पुत्रपौत्रादिकं निमित्तीकृत्य रोदिता न भविष्यतीत्यर्थः । तद्भागपाठेन देवानां मध्ये ये शमितारः सन्ति मनुष्याणां च मध्ये ये सन्ति तेभ्य एव सर्वेभ्य एनं वनिष्ठुं परिददात्यवैकल्याय समर्पयति ॥

**'इसकी अतड़ियों को उल्लू पक्षी समझते हुए [उसके आकार का] मत काटो । [अर्थात् वनिष्ठु = वपा के पास के मांस खण्ड को जो उल्लू के आकार का है उसी तरह निकाल लो जैसा वह है उसे बीच से न काटो] जैसे कहीं, हे शमिताओ ! ऐसा करने वाले तुम्हारे [परिवार के] पुत्र और पौत्र में रोने चिल्लाने वाला न होए'—इस भाग के पाठ के द्वारा जो देवों के मध्य वध करने वाले हैं और जो मनुष्यों के बीच वध करने वाले हैं; उन सभी के लिए इस वनिष्ठु अर्थात् वपा को समर्पित करता है ।**

द्वादशं भागमनूद्य व्याचष्टे—

**अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ इति त्रिर्ब्रूयादपापेति चाध्रिगुर्वै देवानां शमिताऽपापो निग्रभीता शमितृभ्यश्चैवैनं तन्निग्रभीतृभ्यश्च संप्रयच्छति ॥** इति ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हे अध्रिगो, एतन्नामकदेवेषु शमितृषु मुख्यदेवा यूयं सर्वे शमीध्वं विशसनादिना पशुं संस्कुरुध्वम् । पुनरपि विशेषाकारेणोच्यते सुशमि सुष्ठु शमनं शास्त्रीयं विशसनं यथा भवति तथा शमीध्वं शमयत संज्ञपयत । अध्रिगादौ प्लुतिर्दूराद्धानार्था । ओकारस्य प्लुतिवेलायामाकार उकारश्चेति वर्णद्वयं संपद्यते ।[1] तथाविधा यूयमितरैः सह यूयं सुशमीध्वं सर्वथा शमयत न तूपचरितं शमनं कुरुत । क्रूरकर्मेति[2] कृत्वा तदुपेक्षणं मा भूदिति पुनः पुनर्वचनम् । अध्रिगो शमीध्वमित्यादिकं वाक्यत्रयसमुदायं त्रिवारमावर्तयेत् । अपापेत्यपि तत्संबन्धिनं त्रिवारमावर्तयेत् । तदेतद् आश्वलायन आह—'अध्रिग्वादि त्रिरुक्त्वा'[3] इति । अध्रिगो अपापदेवः (?) । सोऽयमपापवाची शाखान्तरे पठ्यते—'अध्रिगुश्चापापश्चोभौ देवानां शमितारौ'[4] इति । अत्र तु तदवान्तरविशेषोऽभिधीयते । देवानां मध्ये यः शमिता हन्ता सोऽध्रिगुर्यश्च ध्यानादिना निग्रभीता निग्रहस्य कर्ता सोऽयमपापः । तद्भागपाठेनाध्रिगुप्रभृतिभ्यः शमितृभ्यश्चापापप्रभृतिभ्यो निग्रहीतृभ्यश्चैनं पशुं संज्ञपनाय प्रयच्छति ॥

हे अध्रिगु, [विशसन के द्वारा पशु का] संस्कार करो और सावधानी से शमन करो, हे अध्रिगु, शास्त्रीय संज्ञपन करो'—इस प्रकार तीन बार 'अध्रिगो शमीध्वम्' आदि वाक्य कहना चाहिए, और 'अपाप' [=पाप से मुक्त]—इस शब्द को भी तीन बार कहे । देवताओं के मध्य जो संज्ञपन करने वाला है वह अध्रिगु है और जो ध्यान आदि के द्वारा निग्रह करने वाला है वह अपाप है । इस प्रकार इस भाग के पाठ के द्वारा वह अध्रिगु आदि शमिताओं को और अपाप आदि निग्रहीताओं को इस [पशु] को संज्ञपन के लिए देता है ।

अध्रिगुमन्त्रपाठानन्तरं जपं विधत्ते—

**शमितारो यदत्र सुकृतं कृणवथास्मासु तद्यद् दुष्कृतमन्यत्र तदित्याहाग्निर्वै देवानां होताऽऽसीत्, स एनं वाचा व्यशाद्, वाचा वा एनं होता विशास्ति तद्यदर्वाग्यत्परः कृन्तन्ति यदुल्बणं यद्विथुरं क्रियते शमितृभ्यश्चैवैनत् तन्निग्रभीतृभ्यश्च समनुदिशति स्वस्त्येव होतोन्मुच्यते, सर्वायुः सर्वायुत्वाय ॥** इति ।

---

१. द्र० 'एचो०' पा० सू० ८.२.१०७ ।

२. क्रूरकर्मत्वेवं विहितम्—'संज्ञपयन्ति····अध्वर्युः'—इति० आप० श्रौ० ७.१६.५,६ । 'मायुः शब्दः, तमकुर्वन्तमित्यर्थः —इति च तट्टीका । तच्छब्दरोधाय मुखे धानादीन् प्रवेशयति निग्रमिता । तदुक्तं कात्यायनेन—'संगृह्य मुखं तमयन्त्यवाश्यमानम्'—इति ६.५.१८ ।

३. आश्व० श्रौ० ३.३.४ ।          ४. तै० ब्रा० ३.६.६.४ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हे शमितारो यदत्र पशुविशसनकर्मणि यत्सुकृतं कृणवथास्मासु तत्। तत्र यद्दुष्कृतमन्यत्र तदिति जपित्वा दक्षिणावृदावर्तेत इति। एतन्मन्त्रार्थमग्निर्वा–इत्यादिनोच्यते। यदा देवा यज्ञं कुर्वन्ति तदानीं तेषां मध्येऽग्निरेव होताऽभूत्। स एनं पशुं वाचाऽध्रिगुप्रैषरूपया व्यशाद् विशसनं कृतवान्। अध्रिगुप्रैष आरभध्वं शमीध्वमित्यादिप्रेरणवाचकानां पदानां बहूनां विद्यमानत्वादस्त्येव होतुर्वाचिकं विशसनम्[1]। तथा सति पशोरर्वाग्भागे यत्कृन्तन्ति यच्च परः परभाग उत्तमाङ्गे कृन्तन्ति तस्मिन्नुभयस्मिन्नपि च्छेदने यदुल्बणं शास्त्रार्थादतिरिक्तं क्रियते यच्च विथुरं न्यूनं क्रियते, तत्सर्वमेनत् पशुशमितृभ्यो निग्रभीतृभ्यश्च समनुदिशति, तेन मन्त्रजपेन सम्यक् कथयतीति वाचा होता स्वस्त्येव क्षेमेणैव पापान् मुच्यते सर्वायुर्मृत्युरहितश्च भवति यजमानस्याप्यपमृत्युराहित्याय॥

होता कहता है [कि इस पशु संज्ञपन कर्म में] 'हे शमिताओ! जो कुछ भी सुकृत अर्थात् पुण्यकर्म हैं वह हममें रहें और जो दुष्कृत हैं वह अन्यत्र चले जायें' [यह मन्त्र जपकर दक्षिणावृत होवे।॰ जब देवों ने यज्ञ किया तब] अग्नि देवों का होता हुआ था और तब उसने भी इन्हीं [अध्रीगु प्रैष रूप] वाणी से विच्छेद किया था अतः इसी वाणी से होता इसका विच्छेदन करता है। जो कुछ भी पशु का आगे का भाग काटते हैं और जो उसका उत्तमाङ्ग काटते हैं उन [दोनों छेदनों] में जो शास्त्रातिरिक्त कार्य करते हैं और जो न्यून कार्य करते हैं वह [सभी] पशु का वध करने वाले शमिताओं के लिए और निग्रहीताओं के लिए सम्यक् रूप से आदेश देता है। इस मन्त्र के जप के द्वारा होता क्षेम से ही पाप से अपने को मुक्त कर लेता है; और पूर्णायु प्राप्त करता है एवं इस प्रकार यह यजमान के लिए भी पूर्णायु प्राप्ति के लिए ही होता है।

एतद्वेदनं प्रशंसति—

**सर्वमायुरेति य एवं वेद ॥ ७ ॥** इति।

अत्र मीमांसा। नवमाध्यायस्य चतुर्थपादे चिन्तितम्—

पक्षी वपाऽथवोरूको रलयोरविशेषितः।
पक्षी वपा संनिधानाद् भ्रान्तिच्छेदनिषेधतः॥[2]

अध्रिगुप्रैषे वचनमिदम् आम्नायते–'वनिष्ठुमस्य मा राविष्टोरूकं मन्यमानाः'[3] इति। वनिष्ठुर्वपासमीपवर्ती कश्चित्पश्वङ्गविशेषः। तं मा राविष्ट तस्य लवनं मा कुरुतेति व्यत्ययेन लकारस्य रेफः[4]। किं कुर्वन्तः—उरूकं मन्यमानाः। वनिष्ठावुरूकबुद्धिं कुर्वन्त इत्यर्थः। अत्र—उरूकशब्देन काकविरोधी कश्चिद् उलूकनामा पक्षिविशेषोऽभिधीयते। कुतः—रलयोरविशेषात्। 'पर्यङ्कः, पल्यङ्कः, लोमानि, रोमाणि' इत्यादि दर्शनात्।

---

१. द्र० अध्रिगुशब्दनिर्वचनम्, तत्प्रैषमन्त्रव्याख्यानादिकञ्च निरु० ५.११।
२. जै० न्या० वि० ९.४.४.२२। ३. तै० ब्रा० ३. ६.६.३।
४. द्र० पा० सू० ३.४.९८।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उरूकशब्दः सादृश्यलक्षकः। 'पक्षिसदृशं वनिष्ठुं विवेकेन मन्यमाना मा राविष्टेति वाक्यार्थः। तस्मादुरूकशब्दः पक्षीति प्राप्ते, ब्रूमः—उरूकशब्देनात्र वपा लक्ष्यते। कुतः,—वनिष्ठुसंनिधानात्। साहित्यसंनिधानादुरूकत्वभ्रान्तिर्वनिष्ठौ संभवति। भ्रान्तिप्राप्तं लवनमत्र निषिध्यते। 'उरूकं मन्यमाना वनिष्ठुं मा राविष्ट' इत्युक्तत्वात्। वपालवनकाले भ्रान्त्या वनिष्ठोर्यल्लवनं तस्य निषेधे सति दृष्टार्थो लभ्यते, भ्रान्तिनिवारणस्य दृष्टत्वात्। त्वत्पक्षे वनिष्ठोर्लवनमेव नास्ति। तच्चायुक्तम्। हृदयाद्यङ्गवद्वनिष्ठोर्लवितव्यत्वात्। 'वनिष्ठुमग्नीधे षडवत्तं संपादयति'[1] इत्याद्यनुष्ठानविधानात्। ततो लवननिषेधस्यासमवेतार्थत्वेनादृष्टार्थो मन्त्रपाठः प्राप्नुयात्। तस्माद्वपावचन उरूकशब्दः। यद्यपि वपायामप्रसिद्धस्याऽप्युरु विस्तीर्णमुको मेदो यत्रेत्यवयवार्थद्वारा मेदस्विन्यां वपायां युक्त उरूकशब्दः। एवं सत्यनेकवपासु विकृतिष्वेकवचनान्त उरूकशब्द ऊहनीयः॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः प्रथमाध्याये (षष्ठाध्याये) सप्तमः खण्ड.॥ ७॥ (७) [३७]

**जो इस प्रकार जानता है वह पूर्णायु को प्राप्त करता है।**

**॥ इस प्रकार षष्ठ अध्याय में सप्तम खण्ड की हिन्दी पूर्ण हुई॥ ७॥**

## अथ अष्टमः खण्डः

अध्रिगुप्रैषं समाप्य पुरोडाशं विधातुं वहुभिः पर्यायैरुपेता काचिदाख्यायिकोच्यते। तत्र प्रथमं पर्यायं दर्शयति—

**पुरुषं वै देवाः पशुमालभन्त तस्मादालब्धान्मेध उदक्रामत्, सोऽश्वं प्राविशत् तस्मादश्वो मेध्योऽभवदथैनमुत्क्रान्तमेधमत्यार्जन्त स किंपुरुषोऽभवत्॥ इति।**

पुरा कदाचिद्देवाः स्वकीये यज्ञे पुरुषं मनुष्यं पशुमालभन्त पशुं कृत्वा तेन पशुना यष्टुमुद्युक्ताः। तस्मादालब्धाद्यष्टुमुद्युक्तान्मनुष्यपशोर्मेधो मेध्यो यज्ञयोग्यो हविर्भाग उदक्रामन्मनुष्यं परित्यज्यान्यत्रागच्छत्। गत्वा च स भागोऽश्वं प्राविशत्। यस्मादेवं तस्मादश्वो यज्ञयोग्योऽभवत्। अथ तदानीमुत्क्रान्तमेधं परित्यक्तहविर्भागमेनं मनुष्यं देवा अत्यार्जन्तातिशयेन वर्जितवन्तः। तस्मिन्पशुत्वमपि नाकुर्वन्। देवैः स्वीकृत्य परित्यक्तः स मनुष्यः किंपुरुषः किंनरावान्तरजातीयः॥

**ii. ७ [vi ७] प्राचीन काल में देवों ने अपने यज्ञ में मनुष्य को पशु बनाकर आलम्भन किया। किन्तु उस आलम्भित [मनुष्य पशु] से मेध अर्थात् यज्ञ के योग्य हविःभाग निकल गया और वह अश्व में प्रविष्ट हो गया। इसीलिए अश्व यज्ञ के योग्य हुआ। तब निकले हुए हविःभाग वाले इस मनुष्य को देवों ने [यज्ञ पशु बनाने**

१. आप० श्रौ० ७.२६.६।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

के लिए] अत्यन्त तिरस्कृत कर दिया। वह [देवों के द्वारा स्वीकृत किन्तु परित्यक्त मनुष्य ही] किंपुरुष अर्थात् किन्नर हो गए।

द्वितीयं पर्यायं दर्शयति—

**तेऽश्वमालभन्त, सोऽश्वादालब्धादुदक्रामत्, स गां प्राविशत्, तस्माद् गौर्मेध्योऽभवदथैनमुत्क्रान्तमेधमत्यार्जन्त स गौरमृगोऽभवत् ॥** इति।

आलब्धादश्वान्मेधो यज्ञयोग्यभाग उत्क्रम्य गां प्राविशत्, स गौर्यज्ञयोग्य आसीत्। तदानीमयोग्यत्वेन त्यक्तः सोऽश्वो गौरमृगोऽभवद्, यस्य शृङ्गावपि लोमशौ भवतः ॥

उन्होंने अश्व का आलम्भन किया। किन्तु उस आलम्भित अश्व से यज्ञ योग्य हविःभाग निकल गया और वह गाय में प्रविष्ट हो गया। इसीलिए गाय यज्ञ योग्य हुई। तब निकले हुए हविभाग वाले इस [अश्व] को देवों ने अयोग्य जानकर उसे भी तिरस्कृत कर दिया। वह [देवों से पहले स्वीकृत किन्तु बाद में परित्यक्त] गौरमृग [=नीलगाय] हो गई।

तृतीयपर्यायं दर्शयति—

**ते गामालभन्त, स गोरालब्धादुदक्रामत्, सोऽविं प्राविशत्, तस्मादविर्मेध्योऽभवदथैनमुत्क्रान्तमेधमत्यार्जन्त, स गवयोऽभवत्, तेऽविमालभन्त सोऽवेरालब्धादुदक्रामत्, सोऽजं प्राविशत्, तस्मादजो मेध्योऽभवदथैनमुत्क्रान्तमेधमत्यार्जन्त, स उष्ट्रोऽभवत् ॥** इति।

अजादयः प्रसिद्धाः। उष्ट्रो दीर्घग्रीवः ॥

उन्होंने गाय का आलम्भन किया। किन्तु उस आलम्भित गौ से मेध निकल गया और वह भेड़ में प्रविष्ट हो गया। इसीलिए भेड़ मेध्य पशु हुआ। तब निकले हुए मेध वाले उस [गाय] को उन्होंने तिरस्कृत कर दिया। तब वह [गौ] गवय [=बैल] हो गया। उन्होंने भेड़ का आलम्भन किया। किन्तु उस आलम्भित भेड़ से मेध निकल गया और वह बकरे में प्रविष्ट हो गया। इसीलिए बकरा मेध्य पशु हुआ। तब उस उत्क्रान्त मेध वाले [भेड़] को उन्होंने तिरस्कृत कर दिया। तब वह ऊँट हो गया।

अजं पुनरपि प्रशंसति—

**सोऽजे ज्योक्तमामिवारमत तस्मादेष एतेषां पशूनां प्रयुक्ततमो यदजः ॥** इति।

स मेधाख्यो यज्ञयोग्यभागस्तस्मिन्नजे ज्योक्तमामिवातिशयेन चिरकालमेवारमत क्रीडितवांस्तस्माच्चिरकालमेव सद्भावाद्योऽयमजोऽस्ति स एष एतेषां पूर्वोक्तानां पशूनां मध्ये प्रयुक्ततमः शिष्टैरतिशयेन प्रयुक्तः ॥

उस बकरे में यज्ञ योग्य भाग बहुत दिनों तक रहा। अतः [चिरकाल तक रहने के कारण] जो यह अज है वह इन [पूर्वोक्त] पशुओं के मध्य अत्यन्त प्रयुक्त हुआ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पञ्चमं पर्यायं दर्शयति—

**तेऽजमालभन्त, सोऽजादालब्धादुदक्रामत्, स इमां प्राविशत्, तस्मादियं मेध्याऽभवदथैनमुत्क्रान्तमेधमत्यार्जन्त, स शरभोऽभवत् ॥ इति ।**

इमां पृथिवीम् । शरभोऽष्टभिः पादैरुपेतः सिंहघाती मृगविशेषः ॥

उन्होंने अज का आलम्भन किया। किन्तु उस आलम्भित अज से वह निकल गया और वह पृथ्वी में प्रविष्ट हो गया। इसीलिए पृथ्वी मेध्य हुई। तब उस उत्क्रान्त मेध वाले अज को उन देवों ने तिरस्कृत कर दिया। वह शरभ [आठ पैरों वाला सिंह का घातक पशु विशेष] हो गया।

अत्र प्रसङ्गात् कंचिद्धर्मविशेषं दर्शयति—

**त एत उत्क्रान्तमेधा अमेध्याः पशवस्तस्मादेतेषां नाश्नीयात् ॥ इति ।**

मनुष्याश्वगोव्यजेभ्यो मेधस्योत्क्रमणक्रमेण निष्पन्नास्त एते किंपुरुषादयो मेधराहित्याद् यज्ञयोग्याः पशवो नाऽऽसन्[1] । अत एतेषां पशूनां संबन्धि मांसं नाश्नीयात् ।

उत्क्रान्त-मेध वाले [मनुष्य, अश्व, गो, अवि और अज] वे ये [किंपुरुष आदि] पशु [मेधविहीन होने के कारण] यज्ञ के योग्य नहीं थे। अतः इन पशुओं का मांस नहीं खाना चाहिए।

अत्र पुरोडाशं विधत्ते—

**तमस्यामन्वगच्छन्, सोऽनुगतो व्रीहिरभवत्, तद्यत्पशौ पुरोळाशमनुनिर्वपन्ति समेधेन नः पशुनेष्टमसत्, केवलेन नः पशुनेष्टमसदिति ॥ इति ।**

तं मेधाख्यं हविर्भागमस्यां पृथिव्यां प्रविष्टं ग्रहीतुं देवा अन्वगच्छन् । स च मेधो देवैरनुगत उत्क्रान्तुमशक्तः सन्सहसा व्रीहिरभवत् । तथा सति यदि पशौ पुरोडाशमनुनिर्वपन्ति पश्वालम्भानन्तरमेव निर्वपेयुः, तदानीं नोऽस्माकं समेधेन यज्ञयोग्यहविर्भागयुक्तेन पशुनेष्टमसदिष्टं भवति । पुरोडाशनिर्वापकर्तॄणां कोऽभिप्राय इति, सोऽभिधीयते । नोऽस्माकं केवलेन साधनान्तरनिरपेक्षेण मेधपूर्णेन पशुनेष्टमस्त्विति तदभिप्रायः ॥

---

१. आदिकाले नरमेधस्य प्राचुर्यमासीत्—एतेनानुमीयते, ततस्तदनुकल्पोऽश्वमेधः प्रचलितः । एवं क्रमेण शरभान्तो मेध्यश्चलितः, ततो जीवहिंसने ग्लानिमनुभूय तदनुकल्पत्वं पुरोडाशस्य मत्त्वैव 'पिष्ट-पशुः' प्रारब्धः; योऽनुष्ठितः सम्प्रति च प्रायः षड्विंशत्यब्दतः प्राक् काश्यामसीतीरे पेशवावंशधरेणेति । शतपथेऽप्येवम्—पुरुषो हि प्रथमः पशूनाम्'—इत्यादि ६.२.१.१८ । घृतपशुः पिष्टपशुश्च म० सं० ५ ३७ । उक्तं च तथा—'दधि मधु घृतमापो धाना भवन्त्येतद्वै पशूनां रूपम्—इति तै० सं० २.३.२.८ । 'पशवो वै ।पुरोडाशः'—इति च ७.१.९ । इहानुपदं वक्ष्यति च 'स वा एष पशुरेवालभ्यते यत् पुरोळाशः'—इति (९ खण्डे) ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इस [पृथ्वी] में प्रविष्ट उस मेध को पाने के लिए देवों ने अनुगमन किया। देवों से पीछा किया गया वह [भागने में असमर्थ हो सहसा] व्रीहि [=धान] हो गया। जब उस पश्वालम्भन के पश्चात् पुरोडाश का निर्वपन करते हैं तब हमें यज्ञ योग्य हविभाग से युक्त पशु ही इष्ट होता है। इस प्रकार [पुरोडाश निर्वाप का अभिप्राय है] हम लोगों को साधनान्तर की निरपेक्षा से मेधपूर्ण पशु इष्ट होवे।

वेदनं प्रशंसति—

**समेधेन हास्य पशुनेष्टं भवति, केवलेन हास्य पशुनेष्टं भवति य एवं वेद ॥ ८ ॥** इति।

समेधेनेत्यस्यैव वाक्यस्य व्याख्यानं केवलेनेत्यादि। तदेतत् सर्वं श्रुत्यन्तरसंगृहीतम्—'पशुमालभ्य पुरोडाशं निर्वपति समेधमेवैनमालभते'[1] इति ॥

अत्र मीमांसा—

उपकारी, संस्कृतिर्वा पुरोडाशः पशूदितः।
तद्धितोक्त्या द्वयोर्देवभेदादुपकृतिर्मता ॥
संदंशान्निश्चितेऽङ्गत्वे दृष्टोऽर्थः स्मृतिसंस्कृतिः।
देवान्तरं चेद्विकृतावग्नीषोमनिवर्तनम्[2] ॥

ज्योतिष्टोमाङ्गभूताग्नीषोमीयपशौ श्रूयते—'अग्नीषोमीयस्य वपां प्रचर्याग्नीषोमीयमेकादशकपालं निर्वपति'[3] इति। तत्र—पशावुक्तः पुरोडाशः। स किं पशोरारादुपकारकः, उत पशुदेवतासंस्कारः इति संदेहः[4]। तत्राग्नीषोमीयं पशुमालभेतेति[5] पशुविधौ तद्धितोक्त्याऽग्नीषोमदेवता यथा गुणत्वेन पशौ विधीयते तथा पशुपुरोडाशेऽपि। तथा सति विधिभेदेन विधेयदेवताभेदात् संस्कारो न युक्तः। गुणत्वं च संस्कार्यविरोधीति पूर्वोक्तम्, तस्मात्—पशोरारादुपकारकः इति प्राप्ते ब्रूमः। देवताभेदवादिना तावदिदं वक्तव्यम्—पशुः पुरोडाशश्चेत्युभौ किं स्वतन्त्रौ यागौ, किं वाऽङ्गाङ्गिरूपौ। तत्रापि किमङ्गं किं वाऽङ्गीति। तत्र पशुधर्मैरुभयतः संदष्टस्य पुरोडाशस्य स्वतन्त्राङ्गित्वे तयोः पशुप्रकरणपाठबाध्यत्वादभिमतमुपकारकत्वं न सिध्येत्। अङ्गत्वेऽपि दृष्टसंभवाददृष्टकल्पनमन्याय्यम्। भवति चात्र दृष्टं पुरोडाशवाक्यगतेन तद्धितान्तपदेन पशुवाक्यविहिताया देवताया अनुवादे सति तदीयस्मरणपूर्वकनिर्वापेण पशुदेवतायाः संस्क्रियमाणत्वात्। एवं च सति पशुवाक्ये गुणत्वेन प्रतीयमानायाः अपि देवतायाः पुरोडाशवाक्ये प्राधान्यावगमात्संस्कार्यत्वमविरुद्धम्। तस्मात्पशुदेवतासंस्कारः पुरोडाशः। एवं च सत्यग्नीषोमीयपशुविकृतौ वायव्यपशावग्नीषोमदेवतायां निवृत्तायां तदीयपशुपुरोडाशेऽपि सा निवर्तत इति बाधः फलिष्यति ॥

१. तै० सं० ६.३.१०.१। २. जै० न्या० वि० १०.१.९.१९–३३।
३. तै० सं० ६.३.१ ।
४. क्रिया रूपाणि च द्विविधानि····उपयुज्यते'—इति लौ० मी० अर्थ०।
५. तै० सं० ६.१.११.६।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यद्वा, द्वादशाध्यायस्य प्रथमपादे चिन्तितम्—

"पश्वर्थानुष्ठितैर्नास्ति पुरोडाश उपक्रिया ।
अस्ति वा विध्यभावान्नो ह्यर्थतस्त्वस्तु लोकवत्[1] ॥"

अग्नीषोमीये पशौ यानि चोदकप्राप्तानि प्रयाजादीन्यङ्गान्यनुष्ठितानि, तैः पशुपुरोडाश उपकारो नास्ति । कुतः,—तदुपकारबोधकस्य विधेरभावात् । चोदकस्तु 'दर्शपूर्णमासवत्पशुरनुष्ठेयः' इत्येवंरूपत्वात्पशावेव तदुपकारं बोधयति । ननु पशुपुरोडाशस्यापीष्टिविकृतित्वात्तत्रापि चोदकोऽस्तीति चेत् । बाढम् । अत एव भिन्नचोदकबलात्पुरोडाशोपकाराय प्रयाजाद्यङ्गानि पृथगनुष्ठेयानीति प्राप्ते,—ब्रूमः । यद्यपि 'पश्वर्थैः पुरोडाशस्योपकारः' इत्येतादृशं शास्त्रं नास्ति, तथाऽप्ययमुपकारोऽर्थप्राप्तो न निवारयितुं शक्यते । यथा प्रदीपस्य वेदिकार्यम्, निर्मितस्यार्थसिद्धं मार्गप्रकाशकत्वमनिवार्यम्, तथा पशुतन्त्रमध्येऽनुष्ठीयमानस्य पुरोडाशस्य पश्वर्थैरङ्गैरुपकारः केन वार्येत । तस्मादन्यार्थैरप्यस्तूपकारः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः प्रथमाध्याये (षष्ठाध्याये) अष्टमः खण्डः ॥ ८ ॥ (८) [३८]

जो इस प्रकार जानता है उसका यज्ञ यज्ञयोग्यहवि व पुरोडाश रूप पशु से इष्ट होता है और इसका यज्ञ साधनान्तर निरपेक्ष से मेधपूर्ण पशु से इष्ट होता है ।

॥ इस प्रकार षष्ठ अध्याय के आठवें खण्ड की हिन्दी पूर्ण हुई ॥ ८ ॥

## अथ नवमः खण्डः

विहितं पशुपुरोडाशं प्रशस्य पश्चाद् वपादियाज्या विवक्षुरादौ तं प्रशंसति—

**स वा एष पशुरेवाऽऽलभ्यते यत्पुरोळाशः ॥** इति ।

पशुशरीरसादृश्यादयं पुरोडाशोऽनुष्ठितः पश्वालम्भ एव भवति ॥

ii. ९ [vi. ९] [पशु-इष्टि में] जो पुरोडाश होता है वह [पशु शरीर के सादृश्य के कारण पुरोडाश से अनुष्ठित] यह पश्वालम्भन ही होता है ।

तदेतत्सादृश्यं विशदयति—

**तस्य यानि किंशारूणि तानि रोमाणि, ये तुषाः सा त्वग्ये फलीकरणास्तदसृग्यत्पिष्टं किक्नसास्तन्मांसं यत्किंचित्कं सारं तदस्थि ॥** इति ।

तस्य व्रीहिबीजस्य संबन्धीनि यानि किंशारूणि बुसपलालादीनि तानि पशुरोमस्थानीयानि ये तुषास्तण्डुलवेष्टनरूपाः प्रथमावघातेन परित्याज्याः सा तुषसमष्टिः पशुत्वक्स्थानीया, ये फलीकरणास्तण्डुलश्वैत्यार्थेनावघातेन हेया अंशास्तत्सर्वमसृक्पशुरक्तस्थानीयम् । यत्पिष्टं तण्डुलपेषणेन निष्पन्नं पिण्डयोग्यं रूपं ये च किक्नसाः सूक्ष्माः

१. जै० न्या० वि० १२.१.१–६ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पिष्टावयवास्तत्सर्वं पशुमांसस्थानीयम् । यत्किन्चित्कं सारं स्वार्थे कप्रत्ययः किंचिदन्यद्-व्रीहिसंबन्धिकाठिन्यरूपं सारं तदस्थि तत्पशोरस्थिस्थानीयम् । एवं पशुसाम्यात् पुरोडाशस्य पशुत्वम् ॥

उस व्रीहि का जो [किशारू अर्थात्] भूँसा है वे पशु के लोम स्थानीय हैं । जो तुष [प्रथम अवघात से निकला चावल का वेष्टन रूप भूँसी] है वे पशु के त्वचा-स्थानीय हैं, जो फलीकरण [तण्डुल को श्वेत करने के लिऐ जो अवघात से निकला हेयांश] है वह पशु का रुधिर स्थानीय हैं । जो पिसा अवयव है और किनकी है वह पशु का मांस स्थानीय है और जो कुछ भी वचा हुआ व्रीहि का कठोर भाग है वह पशु की अस्थि रूप है ।

एवं सति यत्फलितं तद्दर्शयति—

**सर्वेषां वा एष पशूनां मेधेन यजते यः पुरोळाशेन यजते ॥** इति ।

पुरोडाशयाग एव सर्वपशुसंबन्धियज्ञयोग्यहविर्यागः । सर्वपशुसंबन्धश्च 'पुरुषं वै देवा' इत्यादिना प्रपञ्चितः[1] ॥

जो पुरोडाश से यजन करता है वह मानो सब पशुओं के मांस रूप मेध से यजन करता है ।

लौकिकोक्त्या प्राशस्त्यं द्रढयति—

**तस्मादाहुः पुरोळाशसत्रं लोक्यमिति ॥** इति ।

यस्मात् पुरोळाशयागः सर्वपशुसारभूतस्तस्मात् पुरोडाशानुष्ठानं लोक्यं प्रेक्षणीयमिति याज्ञिका आहुः । अत एव प्रैषमन्त्रे 'पुरोडाशाँ अलङ्कुरु' इत्येवमाम्नातम्[2] ॥

[क्योंकि पुरोडाश-याग सब पशु का सार है] अतः याज्ञिक कहते हैं कि पुरोडाश का सत्र [=अनुष्ठान] करना चाहिए ।

अथ वपादीनां क्रमेण याज्या विवक्षुरादौ वपायाज्यां विधत्ते—

**'युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् ।
युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान्'[3] इति वपायै यजति ॥** इति ।

हे सोम त्वं चाग्निश्च युवमेतावुभौ युवामेतानि सर्वैर्दृश्यमानानि रोचनानि प्रकाश-रूपाणि नक्षत्रादीनि दिवि द्युलोकेऽधत्तम् । कीदृशौ युवां, सक्रतू समानकर्माणौ, हे अग्नीषोमौ युवां स्वकीयत्वेन स्वीकृतान् सिन्धून् समुद्रवत्प्रौढान् राजामात्यादीन् पुरुषान् यजमानादीन् वाऽभिशस्तेः सङ्ग्रामादिषु ब्राह्मणवधादिरूपादपवादादवद्यात्तन्निमित्तदुरि-

१. द्र० इतः पूर्वम्, २३६ पृ० । २. शत० ब्रा० ४.२.५.११ । ३. ऋ० १.९३.५ ।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ताञ्चामुञ्चतं मुक्तानकुरुतम् । एतत्पश्वादिकर्मानुष्ठानेन जनापवादो दुरितं च नश्यतीत्यर्थः । वपायै यजतीति वपाहोमार्थमृचं याज्यात्वेन पठेदित्यर्थः ।।

'हे अग्नि और सोम, समान-कर्मा तुम दोनों ने इन प्रकाशमान नक्षत्र आदि को द्युलोक में स्थापित किया है। हे अग्नि और सोम, तुम दोनों ने समुद्र के समान प्रौढ़ [राजा, अमात्यादि पुरुषों को अथवा यजमानादिकों को संग्रामादि में ब्राह्मणवधादि रूप] पाप से आक्रान्त लोगों को मुक्त किया'—इस याज्या मन्त्र का वपा होम के लिए पाठ करता है।

पूर्वोत्तरपक्षाभ्यामेतां याज्यां प्रशंसति—

**सर्वाभिर्वा एष देवताभिरालब्धो भवति यो दीक्षितो भवति तस्मादाहुर्न दीक्षितस्याऽश्नीयादिति स यदग्नीषोमावमुञ्चतं गृभीतानिति वपायै यजति, सर्वाभ्य एव तद्देवताभ्यो यजमानं प्रमुञ्चति, तस्मादाहुरशितव्यं वपायां हुतायां यजमानो हि स तर्हि भवतीति ।।** इति ।

यः पुमान् यज्ञार्थो दीक्षितो भवत्येष सर्वाभिरपि देवताभिः स्वकीयहविर्दानार्थमारब्धः स्वीकृतो भवति । तस्मादेतदीयस्य द्रव्यस्य देवताभिरवरुद्धत्वाद्दीक्षितस्य गृहे नाश्नीयादित्येवं पूर्वपक्षिण आहुः । तत्र होता यद्यग्नीषोमावमुञ्चतं गृभीतानित्येतं याज्यायाश्चतुर्थपादं पठेत् तदा तेन पाठेन सर्वाभ्यो देवताभ्यो यजमानं होता मोचयति । तस्मात्कारणाद् वपाहोमे निष्पन्ने सति तद्गृहे भोक्तव्यम् । तर्हि तस्मिन् वपाहोमोत्तरकाले स दीक्षितो यजमानो भवति । पूर्वं तु दीक्षित एव न तु यजमानः । इदानीं यागस्य निष्पन्नत्वादयं यजमानः । तथा सति देवतावरोधान्मुक्तस्य गृहे भोक्तुं शक्यमिति सिद्धान्तिन आहुः ।।

जो पुरुष यज्ञ के लिए दीक्षित होता है वह सभी देवताओं से [स्वकीय हविर्दान के लिए] गृहीत अर्थात् स्वीकृत होता है। इसलिए [पूर्वपक्षी] कहते हैं कि [क्योंकि इसका द्रव्य देवताओं से अवरुद्ध है अतः] 'दीक्षित के घर में भोजन नहीं करना चाहिए। किन्तु वह होता 'हे अग्नि और सोम, पापाक्रान्त को मुक्त करें'—इस वपाहोम के लिए याज्या मन्त्र का जो पाठ करता है उससे सभी देवताओं से यजमान को मुक्त कराता है। इसलिए याज्ञिकजन कहते हैं कि वपा होम में देवतावरोध से मुक्त यजमान के घर में भोजन करना चाहिए क्योंकि वपा होम के पश्चात् तब वह [दीक्षित पुरुष] यजमान हो जाता है।

अथ पुरोडाशस्य याज्यां विधत्ते—

**'आऽन्यं दिवो मातरिश्वा जभारेति'[1] पुरोळाशस्य यजति ।।** इति ।

'मातरिश्वा वायु ने द्युलोक से [अग्नि-सोम में से] अन्य [सोम देव] का आहरण किया'—इस याज्या मन्त्र का पुरोडाश होम के लिए पाठ करता है।

---

१. ऋ० १.९३.६ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

द्वितीयपादमनूद्य पादद्वयस्य सहैव तात्पर्यं दर्शयति—

**अमथ्नादन्यं परि श्येनो अद्रेरितीत इव च ह्येष इत इव च मेधः समाहृतो भवति ॥** इति ।

मातरिश्वा वायुरन्यमग्नीषोमयोरन्यतरं सोमाख्यदेवं दिवो द्युलोकादाजभाराऽऽहृतवान् । गायत्रीरूपं कृत्वा वायुः सोममानीतवान्, इति प्रथमपादस्यार्थः । श्येनो बलवत्पक्षी, तादृशोऽध्वर्युरन्यमुभयोर्देवयोरन्यतरमग्निमद्रेः पर्वतजन्यात् काष्ठादरणिरूपात् पर्यमथ्नात् परितो मथनं कृतवानिति द्वितीयपादार्थः । एष मेधो यज्ञयोग्यः पुरोडाशोऽपीत इव चेत इव चास्मान् मनुष्यादस्यादश्वाद् गोरवेरजाच्च भूम्याः समाहृतः । एवं सतीतस्तत आनयनसाम्यात् पुरोडाशस्येयमग्नीषोमप्रतिपादिका याज्यां योग्येत्यर्थः ॥

**'और श्येन ने अन्य [अग्नि] को पर्वत से मन्थन द्वारा आहृत किया'—क्योंकि वह यह इस प्रकार है [अर्थात् वह मेध मनुष्य से, अश्व से, गो से, अवि से और अज से भूमि में चला गया था अतः] वह मेध [पुरोडाश रूप में भूमि से] समाहृत होता है [जैसे अग्नि और सोम लाए गए थे उसी प्रकार] ।**

पुरोडाशसंबन्धिस्विष्टकृतो याज्यां विधत्ते—

**'स्वदस्व हव्या समिषो दिदीहीति'[1] पुरोळाशस्विष्टकृतो यजति ॥** इति ।

हे स्विष्टकृदग्ने हव्या हवींषि स्वदस्व स्वादूनि कुर्विषोऽन्नानि संदिदीहि सम्यक् प्रयच्छेत्येतस्य पादस्यार्थः ॥

**हे स्विष्टकृदग्नि, हवि को स्वादयुक्त बनाते हुए अन्नों को सम्यक् रूप से प्रदान करो'—इस याज्या मन्त्र का स्विष्टकृत् पुरोडाश के लिए पाठ करता है ।**

तामेतां याज्यां प्रशंसति—

**हविरेवास्मा एतत्स्वदयतीषमूर्जमात्मन्धत्ते ॥** इति ।

एतेन याज्यापाठेनास्मै कर्मसिद्ध्यर्थं यजमानार्थं वा हविरेव स्वादू करोति य इषमोदनमूर्जं क्षीरादिरसं चाऽऽत्मन् धत्ते होता स्वात्मनि संपादयति ॥

**इस [याज्या पाठ] के द्वारा इस [कर्म] की सिद्धि के लिए अथवा यजमान के लिए हवि को स्वादयुक्त करता है और जो ओदन आदि अन्न एवं क्षीरादि रस है उसे अपने में धारण करता है ।**

पुरोडाशीयस्विष्टकृद्यागादूर्ध्वं पशुपुरोडाशसंबन्धीळोपाह्वानं विधत्ते—

**इळामुपह्वयते पशवो वा इळा, पशूनेव तदुपह्वयते पशून् यजमाने दधाति ॥ ९ ॥** इति ।

---

१. ऋ० ३.५४.२२ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इळोपहूता सह दिवेत्यादिना[1] सूत्रगतेन, उपहूतं रथन्तरं सह पृथिव्येत्यादिना[2] शाखान्तराम्नातेन मन्त्रेण वेळाख्यां देवतामुपह्वयते। गौर्वा अस्यै शरीरमिति श्रुत्यन्तरादिष्टदेवतायाः पशुरूपत्वम्[3]। तत्तेनोपह्वानेन पशूनेवाऽऽह्वयति। यजमाने च पशून् सम्पादयति[4]॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः पञ्चमाध्याये (षष्ठाध्याये) नवमः खण्डः ॥ ९ ॥ (९) [३९]

अब होता [पशु पुरोडाश सम्बन्धी] इळा का आह्वान करता है। पशु ही इळा है। इस प्रकार उस आह्वान से वह पशुओं को ही बुलाता है; और येजमान में उन पशुओं को स्थापित करता है।

॥ इस प्रकार षष्ठ अध्याय में नवम खण्ड की हिन्दी पूर्ण हुई ॥ ९ ॥

## अथ दशमः खण्डः

अथ हृदयाद्यङ्गरूपस्य प्रधानहविषोऽवदानकाले किंचित्सूक्तं विधातुं प्रैषमन्त्रं विधत्ते—

**मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्याहाध्वर्युः** ॥ इति।

देवानां मनांस्योतानि दृढं प्रविष्टानि यस्यां देवतायां सा मनोता। तदर्थं हृदयाद्येकादशाङ्गरूपं हविरवदीयते॥

ii. १० [vi. १०] 'मनोता देवता के लिए हवि के निमित्त काटे जाने वाले भाग के अनुरूप मन्त्र का पाठ करो'—इस प्रकार अध्वर्यु प्रैष मन्त्र कहता है।

तस्य हविषोऽनुकूला ऋचोऽनुब्रूहीत्यध्वर्युः प्रैषमन्त्रं पठन् सूक्तं[5] विधत्ते—

**'त्वं ह्यग्ने प्रथमो मनोतेति' सूक्तमन्वाह** ॥ इति।

त्वं ह्यग्न इत्यादिकं त्रयोदशर्चं सूक्तं[6] तन्मैत्रावरुणो ब्रूयात्। तदाह बौधायनः—'यदा जानाति ममोतायै हविषोऽवदीयमानस्यानुब्रूहीति तदा मैत्रावरुणो मनोतामन्वाह 'त्वं ह्यग्ने प्रथमः' इति॥

---

१. आश्व० श्रौ० १.७.७। २. तै० ब्रा० ३.५.८.१।
३. द्र० शत० ब्रा० १.८.१.२४।
४. व्याख्यातं चैतदिडाह्वानं तै० सं० २.६.७। शतपथेऽप्येवमेव १.८.१.१९।
५. मनोतासूक्तमिदम्। तदाहाश्वलायनः—'मनोतायै·····'इत्यादि ३.६.१। तै० ब्रा० ३.६.१० एतदेव सूक्तम्।
६. ऋ० ६.१.१–१३।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'हे अग्नि, तुम प्रथम मनोता [ = विचारों को बुलाने वाले] हो'—इस सूक्त का पाठ करता है।

अत्र वैयधिकरण्यलक्षणं चोद्यमवतारयति—

**तदाहुर्यदन्यदेवत्य उत पशुर्भवत्यथ कस्मादाग्नेयीरेव मनोतायै हविषोऽवदीयमानस्यान्वाहेति ॥ इति ।**

अत्र हविरग्नीषोमदेवत्यं सूक्तगता ऋचः केवलाग्निदेवताकाः। तत्र यस्मात्कारणात् पशुरन्यदेवत्य उत देवतान्तरयुक्तः खलु भवति तस्मात्कारणाद्वैयधिकरण्यमिदं तच्चायुक्तमिति ब्रह्मवादिनश्चोद्यमाहुः ॥

इस सम्बन्ध में ब्रह्मवादी कहते हैं कि जब पशु अन्य देवता का है तो मनोता देवता को दिए जाने वाले हविरूप अङ्गों के अवदान में अग्नि-देवताक मन्त्र का पाठ क्यों करता है ?

तस्य समाधानं दर्शयति—

**तिस्रो वै देवानां मनोतास्तासु हि तेषां मनांस्योतानि, वाग्वै देवानां मनोता तस्यां हि तेषां मनांस्योतानि, गौर्वै देवानां मनोता तस्यां हि तेषां मनांस्योतान्यग्निर्वै देवानां मनोता तस्मिन् हि तेषां मनांस्योतान्यग्निः सर्वा मनोता अग्नौ मनोताः संगच्छन्ते, तस्मादाग्नेयीरेव मनोतायै हविषोऽवदीयमानस्यान्वाह ॥ इति ।**

वाग्गौरग्निरित्येतासु देवतासु देवमनः समासक्तत्वात्तिस्रोऽपि देवता मनोतेत्युच्यन्ते। ताश्च तिस्रः सर्वा मनोता अग्निस्वरूपा एवाग्नौ तासां संगतत्वात्। संगतिश्च तदीयहविषोऽग्न्याधारकत्वात्। तस्मादग्नेर्मुख्यत्वादग्निदेवताका ऋचोऽनुब्रूयात् ॥

वस्तुतः देवों में [वाक्, गौ और अग्नि] तीन मनोता देवता हैं, क्योंकि उनमें उनके विचार ओतप्रोत हैं; १. देवों में वाणी मनोता देवता है क्योंकि उसमें उनके मन ओतप्रोत हैं। २. देवों में गौ मनोता देवता हैं, क्योंकि उसमें उनके विचार संलग्न हैं। ३. देवों में अग्नि मनोता देवता है, क्योंकि उसमें उनके विचार ओतप्रोत हैं। उन तीनों में सभी मनोता देवता अग्निस्वरूप ही हैं क्योंकि अग्नि में सभी मनोता संगठित हैं। इसीलिए मनोता के हवि के अवदान में अग्नि-देवताक मन्त्रों का ही पाठ करता है।

अथ हृदयाद्यङ्गरूपस्य प्रधानहविषो याज्यां विधत्ते—

**'अग्नीषोमा हविषः प्रस्थितस्येति'[1] हविषो यजति ॥ इति ।**

अग्नीषोमेत्यादिकां याज्यां पठेदित्यर्थः ॥

---

१. ऋ० १.९३.७।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'हे अग्नि और सोम, उपस्थित हवि को ग्रहण कीजिए'—[हृदयाद्यङ्ग रूप प्रधान] हवि की इस याज्या का पाठ करता हे।

अस्या याज्याया हविरानुकूल्यं दर्शयति—

**हविष इति रूपसमृद्धा प्रस्थितस्येति रूपसमृद्धा ॥** इति।

इदं हृदयादिक हविः प्रस्थितं वेद्यामासादितं याज्यायां हविषः प्रस्थितस्येति पदद्वयं श्रुतं तस्मादियमनुकूला ॥

'यह हृदयादि हवि वेदि पर उपस्थित है' यहाँ 'हविषः' और 'प्रस्थितस्य' ये दो पद होने से यह याज्या रूपसमृद्ध है।

वेदनं प्रशंसति—

**सर्वाभिर्हास्य समृद्धिभिः समृद्धं हव्यं देवानप्येति य एवं वेद ॥** इति।

हविषो यथाशास्त्रमवदानपाकविशेषः परस्परं हृदयादीनामसंकीर्णत्वमित्यादयो याः समृद्धयोऽपेक्षितास्ताभिः संपूर्णं भूत्वा तद्धविर्देवान् प्राप्नोति ॥

जो इस प्रकार जानता है सभी समृद्धियों से समृद्ध इसकी हवि देवताओं को प्राप्त होती है।

अथ वनस्पतियागं विधत्ते—

**वनस्पतिं यजति, प्राणो वै वनस्पतिः ॥** इति।

वनस्पतिर्वृक्षस्तथाविधशरीरयुक्तां देवतां यजेत्। तत्प्रकार आपस्तम्बेन दर्शितः— 'जुह्वामुपस्तीर्य सकृत्पृषदाज्यस्योपहृत्य द्विरभिघार्य वनस्पतयेऽनुब्रूहि वनस्पतये प्रेष्येति संप्रैषौ वषट्कृते जुहोति'[1] इति। अत्र वनस्पतेर्वृक्षशरीरस्य जीवाविष्टत्वात् प्राणरूपत्वम्[2] ॥

वह वनस्पति [=वृक्ष] देवता का यजन करता है। [वनस्पति में जीवन होने से] वनस्पति प्राणरूप हैं।

यष्टुर्वेदनं प्रशंसति—

**जीवं हास्य हव्यं देवानप्येति यत्रैवं विद्वान् वनस्पतिं यजति ॥** इति।

विदुषो यष्टुर्हविरेवं प्राणोपेतं चेतनं भूत्वा तद्धविर्देवानाप्नोति ॥

---

१. आप० श्रौ० ७.२५.१५।

२. यास्कस्याभिमतविरुद्धं व्याख्यानम्। तेन ह्युक्तम्–यज्ञसंयोगाद् राजा स्तुतिं लभेत। राजसंयोगाद् युद्धोपकरणानि। तेषां रथः प्रथमगामी भवति इति। आत्मैवैषां रथो भवत्यात्माश्व आत्मायुधमात्मेषवः—इत्यादि च निरु० ९.११। ७.४।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जो इस प्रकार जानते हुए वनस्पति देवता का यजन करता है उसकी हवि भी प्राण से युक्त हो देवों को प्राप्त होती है।

अथ स्विष्टकृद्यागं विधत्ते—

**स्विष्टकृतं यजति, प्रतिष्ठा वै स्विष्टकृत्, प्रतिष्ठायामेव तद्यज्ञमन्ततः प्रतिष्ठापयति** ॥ इति ।

वैकल्यपरिहारेण स्विष्टकृत्त्वापादनात् स्विष्टकृतः प्रतिष्ठात्वम् । तद्यागानुष्ठानेनेमं यज्ञमन्ततः समाप्त्यवसरे प्रतिष्ठायां स्थापयति ॥

अब स्विष्टकृत् याग का यजन करता है। स्विष्टकृत् प्रतिष्ठा है। इस प्रकार अन्त में उस [यागानुष्ठान] के द्वारा यज्ञ को प्रतिष्ठा में ही प्रतिष्ठित करता है।

इळोपह्वानं विधत्ते—

**इळामुपह्वयते पशवो वा इळा पशूनेव तदुपह्वयते पशून् यजमाने दधाति, दधाति ॥ १० ॥** इति ।

पूर्ववद् व्याख्येयम्[1] । पुरोडाशेडा पूर्वखण्डेऽभिहितेह तु पश्विडेति विशेषः । अत्र सर्वत्र यद्यच्चोदकतः प्राप्तं तस्य सर्वस्य विधिमनूद्य प्रशंसा कृतेति द्रष्टव्यम् । दधातीति-पदाभ्यासोऽध्याय समाप्त्यर्थः ॥

अथ मीमांसा—दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

मनोतामन्त्र ऊहोऽस्ति वायव्ये नास्ति वाऽस्त्यसौ ।
आग्नेय्येवेति वचनं प्रकृतौ सार्थकं यतः ॥
अग्नीषोमावग्निनैव लक्ष्येतां वचनं विना ।
अनर्थकात्तत्र वाक्याद् विकृतावूहवारणम्[2] ॥

'त्वं ह्यग्ने प्रथमो मनोता'[3] इत्ययं मनोतामन्त्रोऽग्नीषोमीयपशौ पठितः ।[4] वायव्य-पशावप्ययं चोदकप्राप्तः । तत्र—'त्वं हि वायो प्रथमः' इत्येवमूहोऽस्ति । यत्तु वचनं—यद्यप्यन्नदेवत्यः पशुराग्नेय्येव मनोता कार्येति । तत्प्रकृतौ पठितं तत्रैव वचनं सार्थकम् । द्विदेवत्यपशावेकवचनमन्त्रस्य प्रकरणपठितस्याप्ययोग्यत्वशङ्कया पुनर्विधानार्थत्वात्[5] ।

---

१. द्र० इतः पूर्वम्, पृ० २४३ । २. जै० न्या० वि० १०.४.२२.४२ ।
३. ऋ० ६.१.१ । ४. तै० ब्रा० ३.६.१० ।
५. अत एवाहाश्वलायनः—तत्र प्रैषे करत एवाग्नीषोमावेवमित्यैतरेयिणः । अन्यत्र द्विदेवतान्मैत्रावरुणदेवते च । तथा दृष्टत्वात् । प्रकृत्या गाणगारिः । उत्पन्नानां स्मृत आम्नायेऽनर्थभेदे निरर्थो विकारः—इति श्रौ० ३.६.३–७ सूत्र ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मैवम् 'छत्रिणो गच्छन्ति' इत्यादिवन्मन्त्रगतस्याग्निशब्दस्याग्नीषोमलक्षकत्वेनायोग्यत्व-शङ्काया अनुदयात् । अतः प्रकृतावनर्थकं तद्वाक्यं विकृतावूहनिवारणेन चरितार्थं भवति । तस्माद्-ऊहो नास्ति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः प्रथमाध्याये (षष्ठाध्याये) दशमः खण्डः ॥१०॥ (१०) [४०]

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यादेशतो सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश-नाम भाष्ये ऐतरेयब्राह्मणस्य कृतौ द्वितीयपञ्चिकायाः प्रथमोऽध्यायः समाप्तः ॥ १ ॥

अब होता इळा देवता का आह्वान करता है। पशु ही इळा है। इस प्रकार उस आह्वान से वह पशुओं को ही बुलाता है और यजमान में उन पशुओं को स्थापित करता है।

॥ इस प्रकार ऐतरेय ब्राह्मण की द्वितीयपञ्चिका की प्रथम अध्याय की हिन्दी पूर्ण हुई ॥ १ ॥

---

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ द्वितीयोऽध्यायः

## प्रथमः खण्डः

—: * :—

# अथ सप्तमोऽध्यायः

## प्रथमः खण्डः

यूपोऽथ यूपाञ्जनमाप्रियश्च पर्यग्न्युपप्रैषमथाद्रिगुश्च ।
पशौ पुरोडाशविधिर्मनोता वनस्पतिस्विष्टकृदिडास्तुतिश्च ॥ १ ॥

अथ सप्तमाध्याये पशुप्रैषप्रातरनुवाकौ वक्तव्यौ तत्र पर्यग्निकरणस्तुत्यर्थामाख्यायिकामाह—

**देवा वै यज्ञमतन्वत तांस्तन्वानानसुरा अभ्यायन्, यज्ञवेशसमेषां करिष्याम इति तानाप्रीते पशौ पुर इव पर्यग्नेर्यूपं प्रति पुरस्तादुपायंस्ते देवाः प्रतिबुध्याग्निमयीः पुरस्त्रिपुरं पर्यास्यन्त यज्ञस्य चाऽऽत्मनश्च गुप्त्यै, ता एषामिमा अग्निमय्यः पुरो दीप्यमाना भ्राजमाना अतिष्ठंस्ता असुरा अनपधृष्यैवापाद्रवंस्तेऽग्निनैव पुरस्ताद् असुररक्षांस्यपाघ्नताग्निना पश्चात् ॥** इति ।

पुरा कदाचिद्देवा यज्ञमतन्वत विस्तारितवन्तः । यद्यपि पूर्वमीमांसाकर्तृभिर्नवमाध्याये देवानामशरीरत्वात् कर्माधिकारो नास्तीत्युक्तं[1] तथाऽपि प्रशंसार्थत्वेन स्वार्थतात्पर्याभावाद्[2] अविरोधः । यद्वोत्तरमीमांसाकर्तृभिः शरीरमङ्गीकृत्य विद्याधिकारोपपादनाद्[3] इतरेषां[4] शरीरराहित्यमृत्विगादिवत् कर्मकाले प्रत्यक्षशरीरं नास्तीति तदभिप्रायम् । कर्माधिकारनिराकरणस्य कर्मसाध्यस्य स्वर्गस्य प्राप्तत्वात् तत्प्रयोजनाभावाभिप्रायम् । जगदनुग्रहार्थं तु तेषां शरीरिणामस्त्येवाधिकार इत्यभिप्रेत्य यज्ञमतन्वतेत्य-

---

१. जै० न्या० वि० ९.१.४.६–१०; अधि० १५.४२–४४; अधि० १३,६.७.३२ ।

२. तथाप्याह शबरस्वामी—'असदवृत्तान्तान्वाख्यानं····वेदस्य प्रसज्येत'—इति जै० सू० १.२.१० भाष्ये ।

३. जै० न्या० वि० १.३.९.२६–३३ ।

४. 'इतरेषाम्' नैरुक्तानाम् । तथाहि—'अपि वा कर्मपृथक्त्वाद् यथा होताध्वर्युर्ब्रह्मोद्गातेत्यप्येकस्य सतः'—इति निरु० ७.२.१ । तत्रैव तत उत्तरम्—'अथाकारचिन्तनं देवतानाम्'—इत्युपक्रम्य 'अपुरुषविधाः स्युः'—इत्यादिना (७.७.२–३) यास्केन इन्द्रादीनां विग्रहाद्यभाव एव सिद्धान्तितः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्रोच्यते। तान् देवान् यज्ञविस्तारिणोऽभिलक्ष्यासुरा आगच्छन्। केनाभिप्रायेणेति, तदुच्यते—एषां देवानां यज्ञवेशसं यज्ञविघातं करिष्याम इति तदभिप्रायः। कदा कुत्र समागता, इति तदुच्यते—पशावाप्रीते प्रयाजैस्तर्पिते सति पर्यग्नेः पुर इव पर्यग्निकरणात् पूर्वस्मिन् काले यूपं प्रति पुरस्तात् पूर्वदेशे तान् देवानसुरा उपागच्छन्। ते देवास्तदागमनं निश्चित्याग्निमयीः पुरोऽग्निप्राकारास्त्रिपुरं वेष्टनत्रयं यथा भवति तथा पर्यास्यन्त पशोः पुरतः प्रक्षिप्तवन्तः। तच्च प्रक्षेपणं यज्ञस्य देवानां स्वरूपस्य च रक्षणाय भवति। एषां देवानां संबन्धिन्यस्ताः पुरः पशोः परितो ज्वलन्त्योऽन्धकारं निवर्त्य तं देशं प्रकाशयन्त्योऽतिष्ठन्। ता अग्निमयीः पुरोऽनपधृष्यैव तिरस्कारमकृत्वैवापाद्रवन्नपगताः। तत्र देवास्तेन च प्राकाररूपेणाग्निना पूर्वस्यां दिश्यसुरान् रक्षांसि च हतवन्तः पश्चादप्यग्निनैव हतवन्तः॥

ii. ११ [vii. १] प्राचीन काल में देवताओं ने यज्ञ का विस्तार किया। उन यज्ञ के विस्तार करने वाले देवों की ओर असुर आए। 'इन [देवों] के यज्ञ में हम लोग बाधा पहुँचाएँगे'—ऐसा कहते हुए उन्होंने पशु के प्रयाजों के द्वारा तर्पित होने पर और पर्यग्निकरण के पहले यूप के प्रति पूर्व की ओर से आक्रमण किया। उनका आगमन जानकर उन दोनों ने यज्ञ की और अपनी रक्षा के लिए पशु के चारों तरफ अग्निमय तीन प्राकार बना दिया। इन देवों के वे अग्निमय प्राकार पशु के चारों ओर जलते हुए एवं [अन्धकार को हटाते हुए] प्रकाशित थे। उन अग्निमय प्राकारों का बिना उल्लङ्घन किए ही वे असुर भाग गए। उन्होंने प्राकार रूप अग्नि से ही पूर्व दिशा में और पीछे भी अग्नि से ही उन असुरों को और राक्षसों को आहत किया।

अथ पर्यग्निकरणं विधत्ते—

**तथैवैतद्यजमाना यत्पर्यग्नि कुर्वन्त्यग्निमयीरेव तत्पुरस्त्रिपुरं पर्यस्यन्ते यज्ञस्य चाऽऽत्मनश्च गुप्त्यै, तस्मात् पर्यग्नि कुर्वन्ति, तस्मात् पर्यग्नयेऽन्वाह॥** इति।

यथा देवैरग्निप्राकाराः कृतास्तथैवैतद्यजमानानां पर्यग्निकरणम्। अतो यद्येतत्कुर्युस्तदानीमग्निप्राकारवेष्टनं पशोः परितः प्रक्षिपन्ति। तच्च यज्ञस्य चाऽऽत्मनश्च रक्षणाय भवति। तस्मादवश्यं पर्यग्निकरणमपेक्षितं तदर्थमनुवचनं चापेक्षितम्। तत्र पर्यग्निकरणम् आपस्तम्बो विस्पष्टयति—'आहवनीयादुल्मुकमादायाऽऽग्नीध्रः 'परि वाजपति कविः[१]' इति त्रिः प्रदक्षिणं पर्यग्नि करोति पशुम्[२] इति। अनुवचनं पूर्वमेवाग्निर्होता नः[३] इत्यादिना दर्शितम्[४]॥

उसी प्रकार जो यजमान पर्यग्नि करते हैं वह यज्ञ की और अपनी रक्षा के लिए ही पशु के चारों ओर अग्नि का तीन प्राकार प्रक्षिप्त करते हैं। इसीलिए पर्यग्नि [अवश्य] करते हैं और इसीलिए पर्यग्नि के लिए अनुवचन [अवश्य] करते हैं।

---

१. ऋ० ४.१५.३। २. आप० श्रौ० ७.१५.२।
३. ऋ० ४.१५.१। ४. द्र० इतः पूर्वम्, पृ० २१८।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पर्यग्निकरणादूर्ध्वं पशोः शामित्रदेशं प्रत्यानयनं विधत्ते—

**तं वा एतं पशुमाप्रीतं सन्तं पर्यग्निकृतमुदञ्चं नयन्ति ॥** इति ।

प्रयाजैस्तोषितं पर्यग्निकरणेन रक्षितं पशुमुदङ्मुखं कृत्वा नयेयुः ॥

**प्रयाजों से सन्तुष्ट किए गए और पर्यग्निकरण के द्वारा रक्षित उस पशु को वे उत्तर की ओर ले जाते हैं ।**

नीयमानस्य पशोः पुरतो नेतव्यं विधत्ते—

**तस्योल्मुकं पुरस्ताद्धरन्ति ॥** इति ।

तदेतदुभयम् आपस्तम्बेन स्पष्टीकृतम्—'आहवनीयादुल्मुकमादायाऽऽग्नीध्रः पूर्वः प्रतिपद्यते शमिता पशुं नयति उरोरन्तरिक्षेत्यन्तरा चात्वालोत्करावुदञ्चं पशुं नयन्ति'[1] इति ॥

**उसके आगे आगे जलती हुई लकड़ी ले जाते हैं । यह समझकर कि—**

पशोः पुरतो वह्निनयनं प्रशंसति—

**यजमानो वा एष निदानेन यत्पशुरनेन ज्योतिषा यजमानः पुरोज्योतिः स्वर्गं लोकमेष्यतीति तेन ज्योतिषा यजमानः पुरोज्योतिः स्वर्गं लोकमेति ॥** इति ।

यः पशुरस्त्येष निदानेन सूक्ष्मदृष्टिनिरूपणेन यजमान एव भवति । पशुना स्वात्मनो निष्क्रीतत्वात् पशोर्यजमानत्वम् । निष्क्रयणं च पूर्वमेवाऽऽत्मनिष्क्रयणमेवास्य स द्रक्ष्यति श्रुत्यन्तरोदाहरणेन दर्शितम्[2] । पशोः पुरतो नीयमानज्योतिषा यजमानः पुरोवर्तिदीपयुक्तो भूत्वा स्वर्गं लोकं प्रयास्यति यथा राजामात्यादिः पर्यटने रात्रौ पुरोवर्तिदीपयुक्तो गच्छति तद्वदित्यभिप्रेत्योल्मुकं पुरस्तान्नयन्ति । तदभिप्रायानुसारेणैव यजमानोऽपि तथा स्वर्गं लोकं प्राप्नोति । तदेतदग्नेः पुरतो नयनं शाखान्तरेऽप्याम्नातम्—'यर्हि पशुमाप्रीतमुदञ्चं पशुं नयन्ति तर्हि तस्य पशुश्रपणमाहरेत्तेनैवैनं भागिनं करोति'[3] इति ॥

**जो पशु है यह सूक्ष्म-दृष्टि से निरूपित यजमान ही होता है । इस प्रकाश द्वारा यजमान पुरोवर्ती दीप से युक्त होकर स्वर्ग लोक को जायगा । इस प्रकार उस प्रकाश के द्वारा [प्रकाशित] यजमान भी पुरोवर्ती दीपक से युक्त हो स्वर्ग लोक को प्राप्त करता है ।**

शामित्रदेशं नीतस्य पशोर्हननस्थले बर्हिष्प्रक्षेपं विधत्ते—

**तं यत्र निहनिष्यन्तो भवन्ति तदध्वर्युर्बर्हिरधस्तादुपास्यति ॥** इति ।

तं पशुं यस्मिन् देशे हनिष्याम इत्येवं मन्यन्ते तस्मिन् देशेऽध्वर्युर्भूमौ बर्हिः प्रक्षिपेत् । तदेतच्छाखान्तरे समन्त्रकमाम्नातम्—'पृथिव्याः संपृचः पाहीति बर्हिरुपास्यत्यस्कन्दा-

---

१. आप० श्रौ० ७.१५.८–१० । २. द्र० इतः पूर्वम्, पृ० २०८,२०९ ।
३. तै० सं० ३.१.३.२ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यास्कन्नं हि तद्यद्बर्हिषि स्कन्दत्यथो बर्हिषदमेवैनं करोति'[१] इति। तदेतदापस्तम्बेन स्पष्टीकृतम्—'अथ पर्यग्निकृत उल्मुकं निदधाति स शामित्रस्तं दक्षिणेन प्रत्यञ्चं पशुमवस्थाप्य पृथिव्याः संपृचः पाहीति तस्याधस्ताद् बर्हिरुपास्यत्युपाकरणयोरन्यतरत्तस्मिन् संज्ञपयन्ति[२] प्रत्यक्शिरसमुदीचीनपादम्'[३] इति ॥

जहाँ उस पशु को मारा जायगा वहाँ अध्वर्यु भूमि पर कुश का प्रक्षेप करता है।

पशोरधो बर्हिष्प्रक्षेपं प्रशंसति—

**यदेवैनमद आप्रीतं सन्तं पर्यग्निकृतं बहिर्वेदि नयन्ति बर्हिषदमेवैनं तत्कुर्वन्ति ॥** इति।

प्रयाजैस्तोषितं पर्यग्निकरणेन रक्षितं पशुं सौमिकवेदेर्बहिर्भागे संज्ञपनाय नयन्तीत्यदो यदस्ति तदानीमेनं पशुं बर्हिषदमेव दर्भेऽवस्थितमेव कुर्वन्ति। यद्वा, बर्हिषदं यज्ञेऽवस्थितं वेद्यामवस्थितं कुर्वन्ति। बाह्यदेशे नयनदोषं परिहरतीत्यर्थः ॥

प्रयाजों के द्वारा तुष्ट एवं पर्यग्निकरण से रक्षित पशु को जब [सौमिक] वेदि के बाहर ले जाते हैं तब इस पशु को दर्भ पर ही अवस्थित करते हैं।

पशोः पुरीषस्थापनार्थमवटखननं विधत्ते—

**तस्योवध्यगोहं खनन्ति ॥** इति।

ऊवध्यं पुरीषं, तस्य गोहं गोपनस्थानं तत्कुर्युः। अस्य खननस्य काल आपस्तम्बेन दर्शितः—'ऊवध्यगोहं पार्थिवं खनतादित्यभिज्ञायोवध्यगोहं खनति'[४] इति। होता त्वध्रिगुप्रैषमन्त्रे[५] यदोवध्यगोहमिति वाक्यं पठति तदा खनेदित्यर्थः ॥

उसके मल-मूत्र के गोपनस्थान [गड्ढे] को खोदते हैं।

तदेतदूवध्यगोहखननं प्रशंसति—

**औषधं वा ऊवध्यमियं वा ओषधीनां प्रतिष्ठा तदेनत्स्वायामेव प्रतिष्ठायामन्ततः प्रतिष्ठापयन्ति ॥** इति।

तदेतदर्थवादवाक्यं पूर्वाध्यायमन्त्रप्रसङ्गे व्याख्यातम्[६] ॥

[पशुभक्षित वनस्पति का विकार होने से] ऊवध्य तो ओषधि ही है और ओषधियों का यह भूमि ही आश्रयस्थान है। इस प्रकार वे उस [ऊवध्य] को उस अपने ही भूमि रूप स्वकीय आश्रयस्थान में अन्ततः प्रतिष्ठित कराते हैं।

---

१. तै० सं० ६.३.८.२। 'पृथिव्याः' इति मन्त्रस्तु तै० सं० १.३.८.२।

२. शमितार इति शेषः। 'अक्षतस्य मारणं सञ्ज्ञपनम्'—इति तट्टीका।

३. आप० श्रौ० ७.१६.२-५। ४. आप० श्रौ० ७.१६.१।

५. स मन्त्रः तैत्तिरीयब्राह्मणे ३.६.६ अनुवाके आम्नातः, इह षष्ठाध्यायीय षष्ठसप्तमखण्डयोः व्याख्यातश्च (२२०–२३६ पृ०)।

६. द्र० इतः पूर्वम्, पृ० २२५ पशुभक्षितानामित्यादिना।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ पशुपुरोडाशं[1] प्रशंसितुं प्रश्नमुत्थापयति—

**तदाहुर्यदेष हविरेव यत्पशुरथास्य बह्वपैति लोमानि त्वगसृक्कुष्ठिकाः शफा विषाणे स्कन्दति पिशितं केनास्य तदापूर्यंत इति ॥** इति ।

तत्तत्र पशौ चोद्यवादिन आहुः । यद्यदा यः पशुरस्त्येष सर्वोऽपि हविरेव कृत्स्नस्य पशोरुपाकृतत्वात् । अथ तदानीं कस्याप्यवयवस्यापनयो न युक्तः । इह तु बह्ववयवजातमपैति । तद्यथा लोमानि रोमाणि त्वक्चर्मासृग्रक्तं कुष्ठिका उदरवर्तिनो भक्षितास्तृणादयः शफाः खुरा विषाणे शृङ्गद्वयमेतत्सर्वमपैत्यग्नौ होमाभावात् । किंच पिशितं मांसं यत्किंचित्स्कन्दति भूमौ पतति तदप्यपैति । एवं सति केन प्रकारेणास्य पशोः संबन्धि तत्सर्वमवयवजातं समन्तात् पूर्यंत इति प्रश्नः ॥

इस पशु के सम्बन्ध में [पूर्वपक्षी] कहते हैं कि जो [संज्ञपनीय] पशु है वह समस्त पशु जब हवि है तब [किसी भी अवयव का फेंकना उचित नहीं है किन्तु] इसके बहुत से अवयव फेंक दिए जाते हैं; जैसे इसके रोम, त्वचा, रुधिर, अधपचा भोजन, खुर, सींग और अधकटा मांस जो कुछ भूमि में गिर पड़ता है। तो इस पशु के उन सभी अवयवों की पूर्ति किस प्रकार की जाती है ?

तस्योत्तरमाह—

**यदेवैतत्पशौ पुरोळाशमनु निर्वपन्ति तेनैवास्य तदापूर्यते ॥** इति ।

पश्वालम्भनमनुसृत्य पुरोळाशं निर्वपन्तीति यदिदमस्ति तेनैवास्य पशोः संबन्धि तत्सर्वमवयवजातं पूरितं भवति ॥

[उत्तर यह है कि] जो पश्वालम्भन के साथ-साथ पुरोडाश का निर्वपन करते हैं उसी के द्वारा इस [पशु के समस्त अवयवों] की पूर्ति हो जाती है।

तदेतदुपपादयति—

**पशुभ्यो वै मेधा उदक्रामंस्तौ व्रीहिश्चैव यवश्च भूतावजायेतां तद्यत्पशौ पुरोळाशमनुनिर्वपन्ति समेधेन नः पशुनेष्टमसत्, केवलेन नः पशुनेष्टमसदिति ॥** इति ।

मनुष्याश्वादिभ्यः सकाशान्मेधा यज्ञयोग्या भागा उदक्रामन् । तदेतत् 'पुरुषं वै देवा' इत्यस्मिन् खण्डे प्रपञ्चितम्[2] । उत्क्रान्तमेधा भूमौ प्रविश्य व्रीहिर्यवश्चेति यौ धान्यविशेषौ विद्येते तावुभौ भूतौ तद्रूपतां प्राप्तावजायेतां भूमेः सकाशादुत्पन्नौ । तद्यत्पशावित्यादिकं तस्मिन्नेव खण्डे व्याख्यातम्[3] ।

[मनुष्य व] पशुओं से जब यज्ञ योग्य भाग निकल गया तब [भूमि में प्रविष्ट होकर] वह चावल और जौ के रूप में उत्पन्न हुआ। उस पशु मेध में जो पुरोडाश का निर्वपन करते हैं [क्योंकि वे ऐसा सोचते हैं कि] हमारा यज्ञ यज्ञयोग्य हविर्भाग से युक्त पशु द्वारा इष्ट होए, हमारा यज्ञ साधनान्तर निरपेक्ष से ही पशु द्वारा इष्ट होए'।

---

१. 'पश्वर्थः पुरोडाशः पशुपुरोडाशः'—इति आप० श्रौ० ७.२२.१ टी० ।
२. द्र० इतः पूर्वम्, पृ० २३६-२३७ । ३. द्र० इतः पूर्वम्, पृ० २३९ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तदेतद्वेदनं प्रशंसति—

**समेधेन हास्य पशुनेष्टं भवति, केवलेन हास्य पशुनेष्टं भवति य एवं वेद ॥ ११ ॥** इति ।

एतदपि तत्रैव व्याख्यातम् ।[1] पुनरप्यत्रोक्तिर्यवप्रशंसार्था । पूर्वत्र व्रीहिमात्रे प्राशस्त्यम् । इह तु व्रीहियवावुभावपि प्रशस्येते इति विशेषः ॥

अत्र यदेष हविरेव यत्पशुरित्युक्तं[2] तत्र कश्चिद्विशेषो दशमाध्यायस्य सप्तमपादे चिन्तितः—

"पशुः कृत्स्नो हविः किं वा प्रत्यङ्गं हविरन्यता ।
आद्यश्चोदनया मैवमवदानपृथक्त्वतः ॥"[3] इति ।

'अग्नीषोमीयं पशुमालभेत'[4] इत्यत्र कृत्स्नस्य पशोरेकहविष्ट्वं युक्तम् । कुतः, अग्नीषोमदेवतां प्रति द्रव्यत्वेन पशोश्चोदितत्वात् । न हि हृदयाद्यङ्गं साक्षात् पशुर्भवतीति प्राप्ते, ब्रूमः—"हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अवद्यति वक्षसोऽवद्यति दोष्णोरवद्यति पार्श्वयोरवद्यति" इत्यादिना हृदयाद्यङ्गानामवदानानि पृथगाम्नायन्ते ।[5] अवदानं च हविष्ट्वप्रयोजकः संस्कारः । पुरोडाशादौ होतुमवदीयमानत्वदर्शनात् । हविःशब्दः स्वकर्मव्युत्पत्त्या होमयोग्यं द्रव्यं ब्रूते । पश्वाकृतिचोदना तु हृदयाद्यङ्गद्वारेण देवतासम्बन्धाद् उपपद्यते । तस्मात्—प्रत्यङ्गं हविर्भेदः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः द्वितीयाध्याये (सप्तमाध्याये) प्रथमः खण्डः ॥१॥ (११) [४१]

**जो इस प्रकार जानता है उसका यज्ञ पुरोडाश रूप पशु से इष्ट होता है, उसका यज्ञ साधनान्तर निरपेक्ष मेधयुक्त पशु से इष्ट होता है ।**

**॥ इस प्रकार सप्तम अध्याय में प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥**

## अथ द्वितीयः खण्डः

अथ स्तोकानुवचनीया[6] विधातुमादौ प्रैषमन्त्रं विधत्ते—

**तस्य वपामुत्खिद्याऽऽहरन्ति, तामध्वर्युः स्रुवेणाभिघारयन्नाह स्तोकेभ्योऽनुब्रूहीति ॥** इति ।

---

१. द्र० इतः पूर्वम्, पृ० २३९ ।

२. द्र० इतः पूर्वम्, पृ० २५३ ।

३. जै० न्या० वि० १०.७.१.१-२ ।

४. द्र० इतः पूर्वम्, पृ० २०८-२११ ।

५. तै० सं० ६.३.१०.४ ।

६. 'अग्निसंयोगाद् ये मेदसो विन्दवश्चोतन्ति, ते स्तोकाः'—इति आप० श्रौ० टी० ७.२०.३ । द्विशूलया शाखया धार्यमाणाया वपाया उपरि 'त्वामु ते दधिरे'—इति मन्त्रेण आज्ये हुते सति तत्सकाशात् पतन्तो विन्दवः स्तोकाः—इति च सा० भा० (तै० सं० १.३.९) ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्य पशोर्वपामुदरगतां वस्त्रसदृशीमुत्खिद्योद्धृत्य होमार्थमाहरन्ति। तां च वपामध्वर्युरभिघारयन् प्रैषमन्त्रं ब्रूयात्। तदेतदापस्तम्बो विशदयति—'त्वामु ते दधिरे हव्यवाहमिति स्रुवेण वपामभिजुहोति प्रादुर्भूतेषु स्तोकेषु स्तोकेभ्योऽनुब्रूहीति संप्रेष्यति'[1] इति॥

ii. १२ [vii. २] उस [पशु] की वपा को [होमार्थ] निकालकर लाते हैं, और अध्वर्यु उसको स्रुवा से अभिघार करते हुए [=घी गिराते हुए] प्रैष करता है कि 'बूँदों के अनुरूप ऋचा का पाठ करो।'

तस्य प्रैषिकस्य तात्पर्यं दर्शयति—

**तद्यत्स्तोका श्चोतन्ति सर्वदेवत्या वै स्तोका नेन्म इमेऽनभिप्रीता देवान् गच्छानिति॥** इति।

तत्तस्यां वपायां तदानीमेव क्लिन्नायामार्द्रायां श्रप्यमाणायां यदा स्तोका नीरबिन्दवः श्चोतन्ति निर्गत्याधः पतन्ति तदानीं सर्वदेवानां प्रियत्वादिमे स्तोकाः स्वयमनभिप्रीता अस्मासु प्रीतिरहिता देवान् गच्छान् गमिष्यन्ति। तथा सति महदेतदस्माकं भयकारणं तन्मा भूदित्यभिप्रेत्य स्तोकप्रीणनार्थमिदं प्रैषानुवचनम्। अत्र नेदित्ययं शब्दः परिभयार्थः॥

उस [श्रप्यमाण आर्द्र वपा] में जो बूँदे टपकती हैं [क्योंकि वह सोंचता है कि] 'बूँदे सभी देवताओं से सम्बन्धित हैं अतः ऐसा न हो कि मुझसे अप्रसन्न होकर ये देवताओं के पास चली जायँ।' [अतः बूदों को प्रसन्न करने के लिए यह अनुवचन है]।

अथानुवचनं विधत्ते—

**जुषस्व सप्रथस्तममित्यन्वाह॥** इति।

तस्यानुवचनस्य काल आश्वलायनेन दर्शितः—'वपायां श्रप्यमाणायां प्रेषितः स्तोकेभ्योऽन्वाह जुषस्व सप्रथस्तममिमं नो यज्ञमिति' इति। अत्रानुवचनवक्ता मैत्रावरुणः। तदाह बौधायनः—'यदा जानाति स्तोकेभ्यो-नुब्रूहीति तदा मैत्रावरुणः स्तोकीया अन्वाह जुषस्व सप्रथस्तमम्' इति॥

तस्या ऋचो द्वितीयतृतीयपादमनुवदति—

**वचो देवप्सरस्तमम्। हव्या जुह्वान आसनीति॥** इति।

सर्वस्या ऋचोऽयमर्थः—हे अग्ने हव्या हवींष्यस्मदीयानि आसन्यास्ये मुखे जुह्वानः प्रक्षिपन् वचोऽस्मदीयं स्तोत्रं जुषस्व सेवस्व। कीदृशं वचः, सप्रथस्तममतिशयेन प्रथसा विस्तरेण सहितं देवप्सरस्तमं देवानामतिशयेन प्रीणयितृ॥

---

१. आप० श्रौ० ७.२०.२-३।

२. आश्व० श्रौ० ३.४.१। जुषस्वेत्येका ऋ० १.७५.१। 'इमन्नो यज्ञमिति सूक्तात्मिकाः पञ्च (ऋ० ३.२१.१-५) त इमाः पडेवर्चस्तैत्तिरीयैरेकत्राम्नाताः (ब्रा० ३.६.७)।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हे अग्नि, मुख में प्रक्षिप्त हवियों को ग्रहण करते हुए हमारे अत्यन्त विस्तीर्ण और देवताओं को अत्यन्त प्रसन्न करने वाले स्तोत्रों का सेवन करो'—इस 'जुषस्व' इत्यादि ऋचा का पाठ करता है।

अत्राऽऽसनीतिपदस्याभिप्रायं दर्शयति—

**अग्नेरेवैनांस्तदास्ये जुहोति ॥** इति ।

तत्तेन मन्त्रपाठेन स्तोकानग्नेरेव मुखे जुहोति ॥

उस [मन्त्र पाठ] से बूंदों को इस अग्नि के मुख में ही हवन करता है।

अनुवचनीयामेकामृचं विधाय पुनरप्यनुवचनीयं पञ्चर्चं सूक्तं[1] विधत्ते—

**'इमं नो यज्ञममृतेषु धेहि' इति सूक्तमन्वाह ॥** इति ।

जातवेद इति संबोधनं वक्ष्यते । नोऽस्मदीयमिमं यज्ञममृतेषु देवेषु धेहि स्थापय ॥

'हमारे इस यज्ञ को देवों में स्थापित करो'—इस सूक्त का पाठ करता है।

द्वितीयपादमनूद्य व्याचष्टे—

**'इमा हव्या जातवेदो जुषस्वेति' हव्यजुष्टिमाशास्ते ॥** इति ।

जुषस्वेत्यभिधानाद्धविः सेवायाः प्रार्थनम् ॥

'हे जातवेद, इन हवियों का सेवन करो' इस पाद में हवि से प्रसन्न होने की कामना की गई है।

तृतीयपादमनूद्य व्याचष्टे—

**'स्तोकानामग्ने मेदसो घृतस्येति मेदसश्च हि घृतस्य च भवन्ति ॥** इति ।

हे अग्ने मेदसो वपाया हूयमानस्य च घृतस्य ये स्तोका बिन्दवः सन्ति तेषां मध्ये स्वादून्बिन्दूनित्यध्याहारः । प्राशानेति वक्ष्यमाणेनान्वयः । अत्र ये स्तोकाः पतन्ति यस्मान्मेदसश्च घृतस्य च संबन्धिनो भवन्ति तस्माद्युक्तोऽयं वादः ॥

'हे अग्नि; हूयमान वपा [=मेदस्] और घृत की बूँदों का प्राशन करो'–इस पाद में क्योंकि वे बूंदे चर्बी एवं घी की होती है [अतः बूँदे टपकती हैं–यह ठीक कहा है]।

चतुर्थं पादमनूद्य व्याचष्टे—

**'होतः प्राशान प्रथमो निषद्य' इत्यग्निर्वै देवानां होताऽग्ने प्राशान प्रथमो निषद्येत्येव तदाह ॥** इति ।

हे होतर्होमनिष्पादकाग्ने त्वं प्रथमो मुख्यः सन्निषद्योपविश्य स्तोकान् प्राशान् भक्षय । यद्यपि होतृशब्दोऽत्र प्रयुक्तस्तथाऽप्यग्नेरेव देवहोतृत्वादग्निमेव संबोध्य चतुर्थपादो ब्रूते ॥

'हे होमनिष्पादक अग्नि, तुम प्रथमतः बैठकर बूदों का प्राशन करो–वस्तुतः अग्नि ही देवताओं का आह्वाता है इसलिए अग्नि ही प्रथमतः बैठकर प्राशन करे—यही उस [पाद] से कहा है।

---

१. ऋ० ३.२१.१-५ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्मिन् सूक्ते द्वितीयस्या ऋचः पूर्वार्धमनूद्य व्याचष्टे—

**'घृतवन्तः पावक ते स्तोकाः श्चोतन्ति मेदसः' इति मेदसश्च ह्येव हि घृतस्य च भवन्ति ॥ इति ।**

हे पावक शोधकाग्ने ते त्वदर्थं मेदसो वपायाः संबन्धिनो घृतवन्तो घृतसहिताः स्तोका बिन्दवः श्चोतन्ति । अत्र मेदःसंबन्धे घृतसंबन्धे च पृथक्प्रसिद्धि वक्तुं मेदसश्च ह्येव हि घृतस्य चेति हिशब्दद्वयम् ॥

'हे शोधक अग्नि, तुम्हारे लिए घृतयुक्त वपा की बूंदे टपकती हैं'—क्योंकि वे बूंदें मेदा की, और क्योंकि वे घृत की होती हैं ।

उत्तरार्धमनूद्य व्याचष्टे—

**'स्वधर्मं देववीतये श्रेष्ठं नो धेहि वार्यम्' इत्याशिषमाशास्ते ॥ इति ।**

देववीतये देवानां भक्षणाय नोऽस्माकं स्वधर्मं कुलोचितयागादावनुष्ठानरूपं धर्मं धेहि सम्पादय । कीदृशं धर्मं, श्रेष्ठमतिप्रशस्तम् । अत एव वार्यं सर्वैर्वरणीयम् । अत्र स्वधर्मं धेहीत्यनेनाऽऽशीः प्रतीयते ॥

'देवों के भक्षण के लिए हमारे अत्यन्त प्रशस्त अतः सभी के द्वारा वरणीय अनुष्ठान रूप धर्म का संपादन करो'—इस पाद के पाठ से आशीर्वाद की आशंसा की गई है ।

तृतीयस्या ऋचः पूर्वार्द्धमनूद्य व्याचष्टे—

**'तुभ्यं स्तोका घृतश्चुतोऽग्ने विप्राय सन्त्य' इति घृतश्चुतो हि भवन्ति ॥ इति ।**

सन्तिर्दानं तामर्हतीति सन्त्यो हे सन्त्य फलप्रदानकुशलाग्ने विप्राय मेधाविने तुभ्यं त्वदर्थं स्तोका बिन्दवो घृतश्चुतो घृतस्राविणो वर्तन्ते । अत्र घृतश्रावित्वप्रसिद्धि हिशब्देन दर्शयति ॥

'हे फल प्रदान में कुशल अग्नि, मेधावी तुम्हारे लिए बूँदें घृतस्रावी बूँदें हैं'—क्योंकि बूँदें घृतच्युत होती हैं ।

उत्तरार्धमनूद्य व्याचष्टे—

**'ऋषिः श्रेष्ठः समिध्यसे यज्ञस्य प्राविता भव' इति यज्ञसमृद्धिमाशास्ते ॥इति।**

हे अग्ने, ऋषिर्द्रष्टा श्रेष्ठः प्रशस्ततमश्च समिध्यसेऽस्माभिः प्रज्वाल्यसे । अतो यज्ञस्यास्मदीयस्य प्राविता प्रकर्षेण रक्षिता भव । अत्र यज्ञरक्षणवचनेन यज्ञसमृद्धिप्रार्थनम् ॥

'हे अग्नि, ऋषि और श्रेष्ठ तुम हम लोगों के लिए प्रज्वलित होते हो । अतः हमारे यज्ञ के प्रकृष्ट रूप से रक्षक होओ'—इस पाद में यज्ञ की समृद्धि की प्रार्थना की गई है ।

चतुर्थ्या ऋचः पूर्वार्धमनूद्य व्याचष्टे—

**'तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य' इति मेदसश्च ह्येव हि घृतस्य च भवन्ति ॥ इति ।**

हे अध्रिगो घृतरश्मे हे शचीवः शक्तिमन्नग्ने मेदसो वपायाः संबन्धिनो घृतस्य स्तोकासो बिन्दवस्तुभ्यं त्वदर्थं श्चोतन्ति क्षरन्ति । अत्रापि हिशब्दद्वयं पूर्ववत् ॥



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'हे घृतरश्मि, और हे शक्तिशाली अग्नि, मेदस् व घृत की बूँदें तुम्हारे लिए टपक रही हैं'—इस पाद में ठीक कहा है, क्योंकि वे बूँदें मेदा की, तथा क्योंकि घृत की होती हैं।

उत्तरार्धमनूद्य व्याचष्टे—

**'कविशस्तो बृहता भानुनाऽऽगा हव्या जुषस्व मेधिर' इति हव्यजुष्टिमेवाऽऽशास्ते ॥** इति।

हे अग्ने त्वं कविशस्तो विद्वद्भिर्ऋत्विग्भिः स्तुतः सन्बृहता भानुना महता तेजसा युक्त आगा आगच्छ। हे मेधिर यज्ञयोग्यास्मदीयानि हव्यानि जुषस्व। तदेतद्धविःसेवायाः प्रार्थनम् ॥

'हे अग्नि, तुम विद्वान् ऋत्विजों से स्तुत होकर महान् तेज से युक्त होकर आओ। हे मेधावि, यज्ञयोग्य हमारे हव्यों का सेवन करो'—इस पाद में हवि से प्रसन्न होनें की प्रार्थना की गई है।

पञ्चम्या ऋचश्चतुरोऽपि पादाननुवदति—

**'ओजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे। श्चोतन्ति ते वसो स्तोका अधि त्वचि प्रति तान् देवशो विहि' इति ॥** इति।

हे अग्ने त्वदर्थमोजिष्ठं बलवत्तमं मेदो वपारूपं मध्यतः पशोर्मध्यभागादुद्धृतमुत्कृष्य संपादितं वयं यजमानास्ते तुभ्यं प्रददामहे प्रकर्षेण दद्मः। हे वसो सर्वेषां निवासहेतोऽधित्वचि वपायामधिश्रिताः स्तोका बिन्दवस्ते त्वदर्थं श्चोतन्ति क्षरन्ति। देवशस्तत्तद्देवतुष्ट्यर्थं तान् स्तोकान् प्रति विहि प्रत्येकं पिब ॥

'हे अग्नि, अत्यन्त बलवत्तम वपा रूप मेद को पशु के मध्यभाग से निकालकर हम यजमान तुम्हारे लिए प्रकृष्ट रूप से देते हैं। हे निवासप्रद, वपा में आश्रित बूँदें तुम्हारे लिए टपकती हैं। देवतुष्ट्यर्थ उन प्रत्येक बूँदों को पीओ।'

एतन्मन्त्रतात्पर्यं दर्शयति—

**अग्न्येवैनांस्तद्वषट्करोति यथा 'सोमस्याग्ने वीहीति' ॥** इति।

तत्तेन मन्त्रपाठेनैतान् स्तोकानभिवषट्कारमन्त्रं पठति। यथा सोमस्येत्यादिमन्त्रस्तद्वत् ॥

'हे अग्नि सोम की बूँदों का भक्षण करो'—इसी मन्त्र के समान उस मन्त्र के पाठ के द्वारा इन बिन्दुओं के लिए वषट्कार मन्त्र पढ़ता है।

इदानीं स्तोकान् प्रशंसति—

**तद्यत् स्तोका श्चोतन्ति सर्वदेवत्या वै स्तोकास्तस्मादियं स्तोकशो वृष्टिर्विभक्तोपाचरति ॥ १२ ॥** इति।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्तस्यां वपायां यद्यस्मात्कारणात् स्तोका श्चोतन्ति ते च स्तोकाः सर्वासां देवतानां प्रिया एव तस्माद्देवानुग्रहादियं वृष्टिर्लोके स्तोकशः प्रतिबिन्दुर्भिर्विभक्ता सती भूसमीपमागच्छति[1] ॥

॥इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मण-
भाष्ये द्वितीयपञ्चिकायाः द्वितीयाध्याये (सप्तमाध्याये) द्वितीयः
खण्डः ॥ २ ॥ (१२) [४२]

उस वपा में जो बूँदें टपकती हैं वे बूँदें सभी देवताओं की प्रिय ही हैं। [देवों के अनुग्रह से] इसीलिए पृथ्वी पर बूँद-बूँद करके विभक्त रूप से वर्षा होती है।

॥ इस प्रकार सप्तम अध्याय में द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

अथ वपाप्रशंसां हृदि निधाय तदुपयोगिनं कंचित्प्रश्नमुत्थापयति—

**तदाहुः काः स्वाहाकृतीनां पुरोनुवाक्याः, कः प्रैषः, का याज्येति ॥** इति ।

स्वाहाकृतिशब्देनान्तिमप्रयाजदेवता उच्यन्ते[2]। तासां देवतानां पुरोनुवाक्याप्रैषयाज्यासु ज्ञानरहिता ब्रह्मवादिनः पृच्छन्ति ॥

ii. १३ [vii. ३] ब्राह्मवादी इस संबन्ध में प्रश्न पूँछते हैं कि स्वाहाकृतियों [=अन्तिम प्रयाज देवता] के लिए 'पुरोनुवाक्या' क्या है, 'प्रैष' क्या है और 'याज्या' क्या है ?

तस्य प्रश्नस्योत्तरमाह—

**या एवैता अन्वाहैताः पुरोनुवाक्या, यः प्रैषः स प्रैषो, या याज्या सा याज्या ॥** इति ।

वपासंबन्धिस्तोकार्थं प्रेषितो मैत्रावरुणो, जुषस्वेत्यादयो या एवैता अन्वाह, एता एव[3] स्वाहाकृतीनां पुरोनुवाक्या भवन्ति । न त्वन्याः सन्ति । अनेन वपाप्रशंसा सूचिता । प्रैषसूक्ते होता यक्षदग्निं स्वाहाऽऽज्यस्येति प्रयाजान्तिमो यः प्रैष आम्नातः[4] स एष प्रैषः । आप्रीसूक्ते येयमुत्तमा याज्यारूपेणाऽऽम्नाता[5] सैव स्वाहाकृतिदेवतानां याज्या । तदेतत् सर्वमज्ञानप्रश्नस्योत्तरम् ॥

---

१. 'वायो वीहि स्तोकानामित्याह, तस्माद् विभक्ताः स्तोका अवपद्यन्ते'—इति तै० सं० ६.३.९ । 'वायो वीहि स्तोकानामिति बर्हिषोऽग्रमधस्ताद् वपाया उपास्यति'—इति च आप० श्रौ० ७.२०.१ । 'वायो वीहि' मन्त्रस्तु तै० सं० १.३.९.२ । 'स्तोक्या जुहोति या एव वर्ष्या आपस्ता अवरुन्धे'—इत्यादि च तै० ब्रा० ३.८.६.२,३ ।

२. २१३ पृष्ठे द्वादश प्रयाजदेवताः प्रदर्शिताः ।

३. पूर्वस्मिन् खण्डे निहिताः षट् स्तोकानुवचनीया एवेत्यर्थः ।

४. तै० ब्रा० ३.६.३.१२ ।

५. तै० ब्रा० ३.६.४.१९ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[उत्तर] वपा की बूँदों के लिए ['जुषस्व' आदि] जिन मन्त्रों का पाठ होता है वे ही स्वाहाकृतियों की पुरोनुवाक्या हैं। जो प्रैष कहा है वही प्रैष है, जो याज्या है वही याज्या है।

पुनरपि तथाविधं प्रश्नान्तरमुत्थापयति—

**तदाहुः का देवताः स्वाहाकृतय इति ॥** इति।

अग्निवाय्वादिवत् स्वाहाकृत्याख्या अपि प्रसिद्धाः काश्चिन्न सन्ति तस्मादेताः का इत्यज्ञात्वा प्रश्नः ॥

ब्रह्मवादी प्रश्न करते हैं कि फिर स्वाहाकृतियों के देवता कौन हैं ?

तस्योत्तरं दर्शयति—

**विश्वे देवा इति ब्रूयात् ॥** इति।

प्रसिद्धा ये देवाः सन्ति ते सर्वे स्वाहाकृत्याख्या इत्यभिज्ञात उत्तरं ब्रूयात् ॥

[उत्तर] विश्वे देव यह कहना चाहिए।

तदेतदुपपादयति—

**तस्मात् 'स्वाहाकृतं हविरदन्तु देवाः' इति यजन्तीति ॥** इति।

अस्या अन्तिमप्रयाजयाज्यायाश्चतुर्थपाद एवमाम्नातः 'स्वाहाकृतं हविरदन्तु देवाः'[1] इति। तस्य पादस्यायमर्थः—स्वाहाकारेण संस्कृतं हविः सर्वे देवा भक्षयन्त्विति। एवं सति स्वाहाकृतिनामकाः सर्वे देवास्तस्मात् स्वाहाकृतमित्यादिपादसहितेन मन्त्रेणान्तिमं प्रयाजं यजति। मन्त्रलिङ्गमेवं स्वाहाकृतिशब्देन सर्वदेवताभिधाने प्रमाणमित्यर्थः। पशोः पर्यग्निकरणात् पूर्वं प्रयाजकाले दशैव प्रयाजा इष्टा अन्तिमप्रयाजस्त्ववस्थापितः।[2] तदुक्तम् आपस्तम्बेन—'दशेष्ट्वैकादशायाऽऽज्यमवशिनष्टि'[3] इति। सोऽयमवशिष्टोऽन्तिमप्रयाजो 'जुषस्व सप्रथस्तमम्'[4] इत्यादिः स्तोकानुवचनादूर्ध्वं वपाहोमात् प्राग् इज्यते। अतो व्यवहितत्वादन्तिमप्रयाजविषयः पुरोनुवाक्याप्रैषयाज्याप्रश्नो युक्तः। वपासमीपवर्तित्वादेव स्तोकानुवचनमन्त्राणामेतदीयपुरोनुवाक्यात्वं चोपपन्नम्। अनुष्ठानस्य व्यवधानेऽपि प्रैष-याज्ये तत्तदनुवाकोक्ते[5] एवेति स्मर्यते ॥

इसीलिए 'स्वाहाकार से संस्कृत हवि का सभी देव भक्षण करें'—इस पाद से [अन्तिम प्रयाज का] यजन करते हैं।

अथ वपाहोमं प्रशंसितुमाख्यायिकामाह—

**देवा वै यज्ञेन श्रमेण तपसाऽऽहुतिभिः स्वर्गं लोकमजयंस्तेषां वपायामेव हुतायां स्वर्गो लोकः प्राख्यायत ते वपामेव हुत्वाऽनादृत्येतराणि कर्माण्यूर्ध्वाः**

---

१. ऋ० १०.११०.११।
२. ते चैकादशैव २१२–२३३ पृष्ठेषु व्याख्याता द्रष्टव्याः।
३. आप० श्रौ० ७.१४.८। ४. ऋ० १.७५.१।
५. तै० ब्रा० ३.६.३,४ अनु०।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**स्वर्गं लोकमायंस्ततो वै मनुष्याश्च ऋषयश्च देवानां यज्ञवास्त्वभ्यायन् यज्ञस्य किंचिदेषिष्यामः प्रज्ञात्या इति तेऽभितः परिचरन्त ऐत्पशुमेव निरान्त्रं शयानं ते विदुरियान्वाव किल पशुर्यावती वपेति॥** इति।

पुरा कदाचिद्देवा ज्योतिष्टोमादियागेन तीर्थयात्रादिश्रमेण कृच्छ्रचान्द्रायणादितपसा कूष्माण्डगणहोमादिगताभिराहुतिभिश्च स्वर्गं लोकमजयन् वशीकृतवन्तः। तेषां देवानां यज्ञमध्ये वपायामेव हुतायां स्वर्गः प्रख्यातोऽभूत्। ततस्ते देवा वपामेव हुत्वोत्तरकालीनानि सर्वाणि कर्माण्यना हृत्योर्ध्वाभिमुखाः स्वर्गं लोकं प्राप्ताः। अनन्तरं मनुष्याश्च ऋषयश्च यज्ञसंवन्धि किंचिदुत्तममङ्गमन्विष्य निश्चेष्याम इति विचार्य तत्प्रज्ञानाय यज्ञानां ज्ञनाय देवानां यज्ञभूमिं प्रत्यागच्छन्। आगत्य च ते मनुष्यादयस्तदन्वेषणार्थं तस्यां यज्ञभूमौ परितश्चरन्तः। निरान्त्रं निरङ्गं शयानं भूमौ पतितं पशुमेवैत् प्राप्तवन्तः। वपाया देवैरुत्कृत्य हुतत्वादयं पशुर्निरान्त्रो दृष्टः। यद्यप्यान्त्रशब्दः पुरीतद्वाची तयाऽप्यत्र तेन वपोपलक्ष्यते। मनुष्यादयः स्वमनस्येवं विदुर्निश्चितवन्तः—वपा यावती विद्यत एतावानेव किल पशुरन्यथा कथं देवा वपामेव हुत्वा शिष्टान्यङ्गान्युपेक्षितवन्तः? तथा पशौ सारभूतमङ्गं वपेति॥

[वपाहोम की प्रशंसा में आख्यायिका इस प्रकार है]—प्राचीन काल में देवों ने [ज्योतिष्टोमादि] याग के द्वारा, [तीर्थयात्रा आदि] श्रम के द्वारा [कृच्छ्रचान्द्रायण आदि] तप से और [कूष्माण्ड, गण होम आदि] आहुतियों से स्वर्गलोक को जीत लिया। उन देवों के यज्ञ के मध्य में वपा की आहुति में ही स्वर्ग प्रख्यापित हुआ। उसके बाद उन देवों ने वपा की ही आहुति देकर उसके बाद के अन्य सभी कर्मों को छोड़कर ऊर्ध्वाभिमुख स्वर्गलोक को प्राप्त किया। तब मनुष्य और ऋषि भी देवताओं के यज्ञ करने के स्थल पर यह सोंचकर आए कि 'हम लोग भी यज्ञ सम्बन्धी कुछ उत्तम अङ्गों का ज्ञान प्राप्त करें।' उन मनुष्य आदिकों ने उसके ज्ञान के लिए उस यज्ञभूमि में चारों ओर विचरण किया। उन्होंने निकली हुई अँतड़ियों वाले भूमि पर पड़े हुए पशु को ही प्राप्त किया। उन्होंने स्वयमेव यह जान लिया कि जितनी वपा होती है उतना ही पशु है [नहीं तो, देवों ने वपा का ही हवन करके शेष अङ्गों को क्यों छोड़ दिया]।

आख्यायिकामुखेन वपां प्रशस्य श्रुतिः स्वयमपि साक्षात् प्रशंसति—

**स एतावानेव पशुर्यावती वपा॥** इति।

पशुशरीरमध्ये वपा यावती विद्यत एतावानेव मुख्यः पशुः, 'हविरदन्तु देवाः'[1] इति मन्त्रे वपायाः सर्वदेवहविष्ट्वाभिधानात्॥

पशु के शरीर में जितनी वपा होती है उतना ही मुख्य पशु है।

ननु सुत्यादिने सवनीयपशोर्वपां प्रातःसवने हुत्वा शिष्टानि हृदयाद्यङ्गानि तृतीयसवने पक्त्वा यजमाना जुह्वति वपामात्रस्य पशुस्वरूपत्वे तृतीयसवने पशुशेषं जुह्वतां

1. ऋ० १०.११०.११।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कोऽभिप्राय इत्याशङ्क्याऽऽह—

**अथ यदेनं तृतीयसवने श्रपयित्वा जुह्वति भूयसीभिर्न आहुतिभिरिष्टमसत् केवलेन नः पशुनेष्टमसदिति ॥** इति ।

अथ वपायाः पशुसारत्वे सत्येनमवशिष्टं पशुं तृतीयसवने श्रपयित्वा जुह्वतीति यदस्ति तत्र जुह्वतामयमभिप्रायः—यद्यपि वपायाग एव स्वर्गाय पर्याप्तस्तथाऽपि नोऽस्माकं भूयसीभिर्बहुलाभिराहुतिभिरिष्टमस्तु[1] केवलेन द्रव्यान्तरनिरपेक्षेण निरवशेषेण नोऽस्मदीयेन पशुनेष्टमस्त्विति । अत्राधिकं नैव दोषायेति लौकिकन्यायेन तृतीयसवने पश्वङ्गहोमो न तु वपायां न्यूनत्वबुद्धयेत्यर्थः ॥

**और यह जो तृतीय सवन में [ पशु की वपा को छोड़कर अन्य भागों को] श्रपण करके हवन करते हैं उसका अभिप्राय यही है कि [यद्यपि वपा याग ही स्वर्ग के लिए पर्याप्त है तथापि] हमारा यज्ञ बहुत आहुतियों से इष्ट होए । अन्य द्रव्यों से निरपेक्ष होकर हमारा यज्ञ पूर्ण पशु से इष्ट होवे ।**

वेदनं प्रशंसति—

**भूयसीभिर्हास्याऽऽहुतिभिरिष्टं भवति, केवलेन हास्य पशुनेष्टं भवति य एवं वेद ॥ १३ ॥** इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः द्वितीयाध्याये (सप्तमाध्याये) तृतीयः खण्डः ॥ ३ ॥ (१३) [४३]

**जो इस प्रकार जानता है उसका यज्ञ बहुत आहुतियों से इष्ट होता है और उसका यह पूर्ण पशु से इष्ट होता है ।**

**॥ इस प्रकार सातवें अध्याय में तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥**

## अथ चतुर्थः खण्डः

आज्याद्याहुतीनां प्राशस्त्यप्रसिद्धेस्तद्वद्वपाहुतिरपि प्रशस्तेति विवक्षया ताभिः सहैतामाहुतिं प्रशंसति—

**सा वा एषाऽमृताहुतिरेव यद्वपाहुतिरमृताहुतिरग्न्याहुतिरमृताहुतिराज्याहुतिरमृताहुतिः सोमाहुतिरेता वा अशरीरा आहुतयो, या वै काश्चाशरीरा आहुतयोऽमृतत्वमेव ताभिर्यजमानो जयति ॥** इति ।

या वपाहुतिरस्ति सैषा स्वयममृताहुतिर्देवानाममृते यावती प्रीतिस्तावत्प्रीतेर्वपाहुतौ विद्यमानत्वात् । आतिथ्यकर्मसु मथितस्याग्नेराहवनीयाग्नौ प्रक्षेपरूपा येयमाहुतिः साऽप्यमृताहुतिः । अमृतत्वाख्यस्य देवत्वस्य प्राप्तिहेतुत्वात् । याऽप्यन्या काचिदाज्याहुतिः साऽप्यमृताहुतिरमृतं वा आज्यमिति श्रुतेः । याऽप्यन्या सोमाहुतिः साऽपि । 'अपाम सोमममृता अभूम'[2] इति सोमस्यामृतत्वप्राप्तिसाधनत्वश्रवणात् । या एताश्चतस्र आहुतय-

---

१. मूले असदिति लेटो रूपम्, तस्यैवार्थोऽयम् ।

२. ऋ० ८.४८.३ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्ताः सर्वा अशरीराः शीघ्रमरणयुक्तशरीरप्राप्तिसाधनत्वाभावात्। अत एव याः काश्चिद् अशरीरा आहुतयः सन्ति ताभिर्यजमानश्चिरजीविनो रूपममृतत्वं देवत्वमेव प्राप्नोति ॥

ii. १४ [vii ४] यह जो वपा की आहुति है वह अमृत की ही आहुति है। जो [आतिथ्य कर्म में आहवनीय] अग्नि में प्रक्षेपरूप आहुति है वह भी अमृत की ही आहुति है। आज्य आहुति भी अमृत की ही आहुति है। सोमाहुति भी अमृत की आहुति है—ये जो चार आहुति हैं वे सभी शरीररहित हैं। अतः जितनी भी शरीररहित आहुति हैं उनसे यजमान अमृतत्व को ही प्राप्त करता है।

पुनः प्रकारान्तरेण वपां प्रशंसति—

**सा वा एषा रेत एव यद्वपा प्रेव वै रेतो लीयते प्रेव वपा लीयते शुक्लं वै रेतः शुक्ला वपाऽशरीरं वै रेतोऽशरीरा वपा यद्वै लोहितं यन्मांसं तच्छरीरं तस्माद् ब्रूयाद् यावदलोहितं तावत्परिवासयेति ॥** इति।

येयं वपाऽस्ति सेयं रेत एव तत्सादृश्यात्। कथं सादृश्यमिति, तदुच्यते—रेतो योन्यां निषिक्तं सत्प्रलीयत एव वपाऽप्यग्नौ हुता प्रलीयत एव—इदमेकं सादृश्यं, शुक्लवर्णत्वं द्वितीयमशरीरत्वं तृतीयम्। तस्मात् प्रजोत्पादकरेतोवद्वपा प्रशस्ता। न च वपायाः शरीरमध्येऽवस्थानाच्छरीरत्वं शङ्कनीयम्।[१] यदेव लोहितं रक्तमस्ति यच्च मांसम्। अनेन मुग्धबालादिप्रसिद्धास्त्वगस्थ्यवयवा उपलक्ष्यन्ते। अतो बालादिप्रसिद्धं रक्तमांसादिकमेव मुख्यं शरीरम्। न तु वपायां रेतसि वा बालप्रसिद्धिरस्ति। ततस्तयोरशरीरत्वम्। यस्माद् वपाशरीरयोर्विभाग उक्तस्तस्माद्याज्ञिको वपोद्धरणकर्तारं प्रत्येवं ब्रूयात्—वपायाः स्वरूपं यावदलोहितं रक्तरहितं श्वेतं भवति तावत्सर्वं परिवासय च्छिन्धीति। तदेवं वपा प्रशस्ता ॥

यह जो वपा है वह वीर्य ही है; क्योंकि योनि में निषिक्त वीर्य जैसे लुप्त हो जाता है वैसे ही अग्नि में हुत वपा भी लुप्त हो जाती है। वीर्य जैसे सफेद होता है वैसे ही वपा भी सफेद होती है। वीर्य जैसे शरीररहित होता है वैसे ही वपा भी अशरीरी होती है। जो रुधिर है और जो मांस है वही शरीर है [क्योंकि बाल्यावस्था में वीर्य नहीं होता] अतः [याज्ञिक वपा निकालने वाले के प्रति] कहें जितनी रक्तरहित अर्थात् श्वेत वपा है उतनी वपा काटो।

तस्या अवदाने विशेषं विधत्ते—

**सा पञ्चावत्ता भवति यद्यपि चतुरवत्ती यजमानः स्यादथ पञ्चावत्तैव वपा ॥** इति।

द्विविधा यजमानाश्चतुरवत्तिनः पञ्चावत्तिनश्चेति। चतुर्भिरवदानैर्युक्तश्चतुरवत्ती पञ्चभिर्युक्ताः पञ्चावत्तिनः। एवं स्थिते वपा पञ्चभिरवदानैर्युक्ता कर्तव्या। तत्र पञ्चा-

१. 'प्रजापतिर्वा इदमेक आसीत्'—इत्यादिना वपाविधानम् तै० सं० २.१.१.४। द्र० तत्रैव ६.३.७.५;९.५; तै० ब्रा० २.८.४.४। शत० ब्रा० १३.७.१.९। कात्या० श्रौ० २०.७.७।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वत्तिनो यजमानस्य स्वत एव पञ्चावदानानि प्राप्तानि। यस्तु चतुरवत्ती तस्यापि पञ्चावदानानि वपायां कुर्यात् ॥

वह वपा पाँच अवदानों से युक्त होती है। यद्यपि यजमान चार अवदानों से युक्त भी हो तो भी वपा का पाँच भाग ही करना चाहिए।

तान्येतानि पञ्चापि विभज्य दर्शयति—

**आज्यस्योपस्तृणाति हिरण्यशल्को वपा हिरण्यशल्क आज्यस्योपरिष्टाद-भिघारयति ॥** इति।

आज्यस्याऽऽज्येनेत्यर्थः। तदेतद् आपस्तम्बेन स्पष्टमुक्तम्—'जुह्वामुपस्तीर्य हिरण्य-शकलमवधाय कृत्स्नां वपामावदाय हिरण्यशकलमुपरिष्टात् कृत्वाऽभिघारयत्येवं पञ्चावत्ता भवति। चतुरवत्तिनोऽपि पञ्चावत्तैव स्यात्'[1] इति ॥

आज्य से उपस्तरण करता है [अर्थात् घी का लेप करता है] फिर सुवर्ण का टुकड़ा, फिर वपा, फिर सोने का टुकड़ा उसके ऊपर रखकर घी से अभिघार करता है अर्थात् बूँदें टपकाता है।

हिरण्यरहितस्य प्रकारान्तरेण पञ्चावदानानि प्रश्नोत्तराभ्यां दर्शयति—

**तदाहुर्यद्धिरण्यं न विद्येत कथं स्यादिति द्विराज्यस्योपस्तीर्य वपामवदाय द्विरुपरिष्टादभिघारयति ॥** इति।

इस संबन्ध में याज्ञिक प्रश्न पूँछते हैं कि यदि सोना न हो तो यह कैसे हो? [उत्तर] आज्य से दो बार उपस्तरण करके वपा का टुकड़ा रखकर ऊपर से दो बार अभिघारण करता है।

आज्यस्य हिरण्यप्रतिनिधित्वमुपपादयति—

**अमृतं वा आज्यममृतं हिरण्यं, तत्र स काम उपाप्तो य आज्ये, तत्र स काम उपाप्तो यो हिरण्ये, तत्पञ्च संपद्यन्ते ॥** इति।

आज्यस्य स्वादुत्वेन हिरण्यस्य च दर्शनीयत्वेन प्रियत्वादमृतत्वमेवं सति यत्र हिरण्यं प्रक्षिप्यते तत्राऽऽज्यप्रयुक्तो यः कामः स प्राप्तो भवति। यत्र त्वाज्यं प्रक्षिप्यते तत्र हिरण्यप्रयुक्तो यः कामः स प्राप्तो भवति। तस्मादाज्येन हिरण्येन पञ्चावदानानि संपद्यन्ते ॥

आज्य अमृत है, सोना भी अमृत है। आज्य में जो कामना होती है वह सभी वहाँ प्राप्त होती है। सोने में जो कामना होती है वह सभी वहाँ प्राप्त होती है। इसलिए [आज्य से और हिरण्य से] पाँच अवदान संपादित होते हैं।

अवदानगतां पञ्चसंख्यां प्रशंसति—

**पाङ्क्तोऽयं पुरुषः पञ्चधा विहितो लोमानि त्वङ्मांसमस्थि मज्जा स यावानेव पुरुषस्तावन्तं यजमानं संस्कृत्याग्नौ देवयोन्यां जुहोत्यग्निर्वै**

१. आप० श्रौ० ७.२०.९–११।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**देवयोनिः सोऽग्नेर्देवयोन्या आहुतिभ्यः संभूय हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति ॥ १४॥** इति ।

पञ्चसंख्यायोगात् पुरुषस्य पाङ्क्तत्वं तद्योगाच्च लोमादिभिः पञ्चभिर्निष्पादितत्वात् । तस्मात् पञ्चभिरवदानैः पुरुषो यावल्लोमादिपञ्चावयवोपेतोऽस्ति तावन्तं सर्वमपि यजमानं संस्कृत्याग्नौ देवत्वप्राप्तिकारणे हुतवान् भवति । अग्नेश्च यागद्वारा देवजन्मकारणत्वम् । एवं सति स यजमानो देवत्वकारणादग्नेः स्वेनानुष्ठिताभ्य आहुतिभ्यः समष्टिरूपेणोत्पद्य सुवर्णवर्णशरीरयुक्त ऊर्ध्वगामी स्वर्गं प्राप्नोति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीय-पञ्चिकायाः द्वितीयाध्याये (सप्तमाध्याये) चतुर्थः खण्डः ॥४॥ (१४) [४४]

यह पुरुष भी पाँच भागों से युक्त हैं। लोम, त्वचा, मांस, अस्थि और मज्जा—इन पाँच से विहित वह जितना पुरुष है उतना यजमान को [होता] संस्कृत करके देवों के जन्मस्थान रूप अग्नि में हवन करता है। अग्नि ही देवों का जन्मस्थान है। वह यजमान देवत्व के कारण रूप अग्नि में आहुतियों के द्वारा समष्टि रूप में उत्पन्न होकर हिरण्यसदृश शरीर से युक्त होकर ऊर्ध्वगामी स्वर्गलोक को प्राप्त करता है।

॥ इस प्रकार सातवें अध्याय में चौथे खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

अथ प्रातरनुवाको वक्तव्यः। तदर्थमादौ प्रैषं विधत्ते—

**देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहीत्याहाध्वर्युः ॥** इति ।

सुत्यादिने प्रातःकाले यान्ति यज्ञभूमिं गच्छन्तीति प्रातर्यावाणस्तादृशेभ्यो देवेभ्यस्तत्प्रीत्यर्थं हे होतरनुकूला ऋचो ब्रूहि तमेतं प्रैषमन्त्रमध्वर्युः पठेत् ॥

[प्रातरनुवाक]—

ii. १५ [vii. ५] अध्वर्यु कहता है कि 'हे होता, सुत्या के दिन यज्ञभूमि में आने वाले देवों के प्रीत्यर्थ अनुरूप ऋचा का पाठ करो।'

तं मन्त्रं व्याचष्टे—

**एते वाव देवाः प्रातर्यावाणो यदग्निरुषा अश्विनौ त एते सप्तभिः सप्तभिश्छन्दोभिरागच्छन्ति ॥** इति ।

योऽयमग्निर्या चोषःकालाभिमानिनी देवता यौ चाश्विनावेत एव देवाः प्रैषमन्त्रे प्रातर्यावाण इति विशेष्यन्ते। तत्कथमिति, तदुच्यते—त एते देवाः प्रत्येकं सप्तच्छन्दोयुक्ताभिर्ऋग्भिर्यज्ञभूमिमागच्छन्ति तस्मात् प्रातर्यावाणः। सप्तभिः सप्तभिरिति वीप्सा प्रत्येकं संख्यान्वयार्था। ताश्च ऋचः सर्वा आश्वलायनेन "आपो रेवतीः क्षयथ"[1] इत्यादिग्रन्थेनोदाहृताः। तत्र 'उप प्रयन्तः—इत्यादिषु[2] च्छन्दो गायत्रम्। 'त्वमग्ने वसून्'[3]

१. आश्व० श्रौ० ४.१३.७। २. ऋ० १.७४.१। ३. ऋ० १.४५.१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्यादिष्वनुष्टुप्छन्दः । अबोध्यग्निः[1] इत्यादिषु त्रिष्टुप्छन्दः । एना वो अग्निम्[2] इत्यादिषु बृहती छन्दः । अग्ने वाजस्य[3] इत्यादिषूष्णिक्छन्दः । जनस्य गोपा[4] इत्यादिषु जगती छन्दः । अग्निं तं मन्ये[5] इत्यादिषु पङ्क्तिश्छन्दः । तान्येतानि सप्त च्छन्दांस्याग्नेये क्रतौ प्रातरनुवाके द्रष्टव्यानि[6] । प्रति ष्या सूनरी[7] इत्यादिषु गायत्री छन्दः । उषो भद्रेभिः[8] इत्यादिष्वनुष्टुप् । इदं श्रेष्ठम्[9] इत्यादिषु त्रिष्टुप् । प्रत्यु अदर्शि[10] इत्यादिषु बृहती । उषस्तच्चित्रमा भर[11] इत्यादिषूष्णिक् । एता उ त्या[12] इत्यादिषु जगती । महे नो अद्य[13] इत्यादिषु पङ्क्तिः । तान्येतान्युषस्य प्रातरनुवाके सप्त च्छन्दांसि[14] । एषो उषा[15] इत्यादिषु गायत्री । यदद्य[16] इत्यादिष्वनुष्टुप् । आ भात्यग्निः[17] इत्यादिषु त्रिष्टुप् । इमा उ वाम्[18] इत्यादिषु बृहती । अश्विना वर्तिः[19] इत्यादिषूष्णिक् । अबोध्यग्निर्ज्म[20] इत्यादिषु जगती । प्रति प्रियतमम्[21] इत्यादिषु पङ्क्तिः । तान्येतान्याश्विने प्रातरनुवाके सप्त च्छन्दांसि[22] । तैरेतैः सप्तभिः सप्तभिः प्रत्येकं छन्दोभिर्देवानामागमनं द्रष्टव्यम् ॥

जो अग्नि, उषा और अश्विन-द्वय हैं ये ही प्रातःकाल आने वाले देव हैं । वे ये देव सात-सात छन्दों से [युक्त ऋचाओं के द्वारा यज्ञ में] आते हैं ।

एतद्वेदनं प्रशंसति—

**आऽस्य देवाः प्रातर्यावाणो हवं गच्छन्ति य एवं वेद ॥** इति ।

हूयतेऽत्रेति हवो यज्ञोऽस्य वेदितुर्हवमुक्ता देवाः प्राप्नुवन्ति ॥

**जो इस प्रकार जानता है उसके आह्वान से ये प्रातःकाल आने वाले देव आ जाते हैं ।**

प्रैषमन्त्रे 'देवेभ्यो····ऽनुब्रूहीति' यदुक्तं[23] तदुपपादयितुं प्रातरनुवाकस्य देवसंबन्धं विशदयति—

---

१. ऋ० ५.१.१ ।    २. ऋ० ७.१६.१ ।    ३. ऋ० १.७९.४ ।
४. ऋ० ५.११.१ ।    ५. ऋ० ५.६.१ ।
६. 'उपप्रयन्त····इत्याग्नेयः क्रतुः'—इति आश्व० श्रौ० ४ १३.७–८ ।
७. ऋ० ४.५२.१ ।    ८. ऋ० १.४९.१ ।    ९. ऋ० १.११३.१ ।
१०. ऋ० ७.८१.१ ।    ११. ऋ० १.९२.१३ ।    १२. ऋ० १.९२.१ ।
१३. ऋ० ५.७९.१ ।
१४. अथौषस्यः । प्रति····इत्युषस्यः क्रतुः—इति आश्व० श्रौ० ४ १४.१–२ ।'
१५. ऋ० १.४६.१ ।    १६. ऋ० ५.७३.१ ।    १७. ऋ० ५.७६.१ ।
१८. ऋ० ७.७४.१ ।    १९. ऋ० १.९२.१६ ।    २०. ऋ० १.१५७.१ ।
२१. ऋ० ५.७५.१ ।
२२. 'अथाश्विनः । एषो उषाः····प्रति प्रियतममिति पाङ्क्तम् । इत्येतेषां छन्दसां पृथक् सूक्तानि प्रातरनुवाकः'— इति आश्व० श्रौ० ४.१५.१–२ ।
२३. द्र० इतः पूर्वम्, २६५ पृष्ठे ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**प्रजापतौ वै स्वयं होतरि प्रातरनुवाकमनुवक्ष्यत्युभये देवासुरा यज्ञमुपावसन्नस्मभ्यमनुवक्ष्यत्यस्मभ्यमिति स वै देवेभ्य एवान्वब्रवीत् ॥ इति ।**

पुरा कदाचित् कस्मिंश्चिद् यज्ञे प्रजापतिः स्वयं होता भूत्वा प्रातरनुवाकमनुवक्तुमुद्यतस्तस्मिन्ननुवक्ष्यति देवाश्चासुराश्चास्मभ्यमस्मदर्थमेवानुवक्ष्यतीति प्रत्येकमभिप्रेत्य तं यज्ञमुपेत्य तत्राऽऽसन्निति । अस्मभ्यमिति वीप्सा वर्गद्वयस्य प्रत्येकमन्वयार्थम् । तदानीं प्रजापतिरसुरानुपेक्ष्य देवार्थमेवान्वब्रवीत् । ततः प्रातरनुवाकस्य पूर्वोक्तैरग्न्यादिभिर्देवसंबन्धः ॥

**[प्राचीनकाल में किसी यज्ञ में] स्वयं होता होकर प्रजापति के प्रातरनुवाक बोलने के लिए उद्यत होने पर, देव और असुर दोनों ही यज्ञ में आ पहुँचे और कहने लगे कि 'यह हमारे लिए कहेंगे, यह हमारे लिए कहेंगे ।' तब उन्होंने [असुरों की उपेक्षा करके] देवों के लिए ही प्रातरनुवाक कहा ।**

प्रातरनुवाकस्य देवोत्कर्षहेतुत्वं तदभावस्यासुरपराभवहेतुत्वं च दर्शयति—

**ततो वै देवा अभवन् पराऽसुराः ॥ इति ।**

अभवन् भूतिमुत्कर्षं प्राप्ताः । असुरास्तु पराभवन्नपकर्षं प्राप्ताः ॥

**उसके बाद से देव उत्कर्ष को प्राप्त हुए और असुर पराभव को प्राप्त हुए ।**

वेदनं प्रशंसति—

**भवत्यात्मना पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ॥ इति ।**

आत्मना भवति स्वयमुत्कृष्टो भवति । तदीयस्तु भ्रातृव्यः पराभवति ॥

**जो इस प्रकार जानता है वह स्वयं उन्नति को प्राप्त होता है और उससे द्वेष करने वाले पापात्मा शत्रु भी पराभव को प्राप्त होते हैं ।**

प्रातरनुवाकशब्दस्य निर्वचनं दर्शयति—

**प्रातर्वै स तं देवेभ्योऽन्वब्रवीद् यत्प्रातरन्वब्रवीत् तत्प्रातरनुवाकस्य प्रातरनुवाकत्वम् ॥ इति ।**

प्रातःकाल एव स प्रजापतिस्तमनुवाकमृक्समूहं देवार्थमनुक्रमेणाब्रवीत् । यस्मादेवं तस्मात् प्रातरनुवाक इति नाम संपन्नम् ॥

**[प्रातरनुवाक शब्द का निर्वचन इस प्रकार है—] प्रातःकाल उन [प्रजापति] ने देवताओं के लिए उस [अनुवाक अर्थात् ऋक्समूह] को अनुक्रम से पढ़ा था । उसमें उन्होंने जो प्रातःकाल पाठ किया; इसीलिए इसका नाम प्रातरनुवाक हुआ ।**

तस्य प्रातरनुवाकस्य कालविशेषं विधत्ते—

**महति रात्र्या अनूच्यः, सर्वस्यै वाचः सर्वस्य ब्रह्मणः परिगृहीत्यै, यो वै भवति, यः श्रेष्ठतामश्नुते, तस्य वाचं प्रोदितामनुप्रवदन्ति तस्मान् महति रात्र्या अनूच्यः ॥ इति ।**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रात्र्याः पूर्वस्यौपवसथ्याख्यस्य[1] दिनस्याग्नीषोमीयपश्वनुष्ठानयुक्तस्य या रात्रिस्तस्या रात्रेः संबन्धिनि शेषे महत्यवतिष्ठमाने सति प्रातरनुवाकाख्य ऋक्समूहो वक्तव्यः। एतदुक्तं भवति—यस्मिन् काले प्रारब्धः प्रातरनुवाकस्तमसोपघातात् पुरैव समापयितुं शक्यः स्यात् तदा प्रारब्धव्य इति। तथाविधमनुवचनं लौकिक्याः सर्वस्या वाचो ब्रह्मणो वेदस्य सर्वस्यापि परिग्रहाय भवति। यो वा इत्यादिना लौकिको न्याय उच्यते। लोके यः पुमान् भवत्यैश्वर्यं प्राप्नोति, यश्च विद्यावृत्तादिभिः श्रेष्ठत्वं प्राप्नोति, तस्योभयविधस्य पुरुषस्य संबन्धिनीं वाचं प्रोदितां प्रथमत उक्तामनु पश्चात् सर्वे भृत्याः शिष्याश्च प्रवदन्ति। तस्मात्तत्रापि राजाचार्यादिवाक्स्थानीयः प्रातरनुवाकः स्वेतरवैदिकलौकिकसर्ववाक्प्रवृत्तेः पूर्वं रात्र्याः संबन्धिनि महत्यवशिष्टे काले पाश्चात्ययामेऽनुवक्तव्यः। यद्यप्ययमुषःकालो न तु प्रातःकालस्तथाऽपि प्रातःकालसमीपवर्तित्वात् प्रातरनुवाकत्वं द्रष्टव्यम् ॥

[अग्नीषोमीय पशु के अनुष्ठान वाले औपवसथ्य नामक पूर्व दिन की] रात्रि के बहुत भाग शेष रह जाने पर ही प्रातरनुवाक [नामक ऋक् समूह] का पाठ करना चाहिए। यह अनुवचन पूर्ण वाणी और सभी वेद के ग्रहण के लिए होता है। लोक में जो [पुरुष] ऐश्वर्य प्राप्त कर लेता है और जो [विद्या आदि से] श्रेष्ठता को प्राप्त कर लेता है; उसकी वाणी प्रथमतः उक्त होती है। बाद में दूसरे [भृत्य और शिष्य आदि] बोलते हैं। इसीलिए [राजा व आचार्य आदि का वाक् स्थानीय प्रातरनुवाक भी] रात्रि का बहुत भाग शेष रहने पर ही बोलना चाहिए।

पाश्चात्ययामेऽपि कंचिद्विशेषं विधत्ते—

**पुरा वाचः प्रवदितोरनूच्यः ॥** इति।

रात्रौ निद्रां कुर्वन्तः प्राणिन उषःकाले प्रबुध्य वाचं प्रवदन्ति; तस्मात् प्रवदितोः प्रवचनात् पूर्वमेवायमनुवक्तव्यः ॥

[रात्रि में भी विशेष यह है कि] प्राणियों द्वारा वाणी के बोलने से पहले ही प्रातरनुवाक का पाठ करना चाहिए।

विपक्षे बाधकमाह—

**यद्वाचि प्रोदितायामनुब्रूयाद् अन्यस्यैवैनमुदितानुवादिनं कुर्यात् ॥** इति।

---

१. उपसदामन्तिमं सुत्याहाच्च पूर्वमग्नीषोमीयाहरेवौपवसथ्यमुच्यते। तथाहि वक्ष्यत्युपरिष्टादिहैव—'अथौपवसथ्य महा'—इत्यादि ७.५.६। 'अग्नीषोमीयसम्बन्धिदिनमुपवसथशब्देनोच्यते। उपवसथसम्बन्धिकम् औपवसथ्यम्'—इति कात्या० श्रौ० ८.३.६ टी० या० दे०। 'तेऽस्य विश्वे देवा गृहानागच्छन्ति, तेऽस्य गृहेषूपवसन्ति, स उपवसथः'—इति (१.१.१.७) 'उपवसथेऽग्नीषोमीयं पशुमालभते'—इति (१.४.४.११), 'उपवसथे नाश्नीयात्'—इति च (९.५.१.६) शत० ब्रा०। तैत्तिरीयेऽप्येवमेव (ब्रा० १.५.९.७)। औपवसथ्यकर्माणि च कात्यायनीयाष्टमाध्यायादितोऽवगन्तव्यानि।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

निद्रां परित्यज्य प्रबुद्धैः पुरुषैर्वाचि प्रोदितायां यदि पश्चाद् ब्रूयात् तदानीमेतं प्रातरनुवाकमुदितानुवादिनं कुर्यात् । अन्यैरुदिता या वाक् तदनुवादित्वे सति भृत्यादि-शिष्यादिरूपत्वं स्यान्न तु राजाचार्यादिरूपत्वम् ॥

यदि [निद्रा छोड़कर जागे हुए व्यक्ति के] वाणी बोलने के बाद पाठ किया जाता है तो यह [प्रातरनुवाक] दूसरे के कहे हुए का अनुवाद होता है ।

स्वपक्षं निगमयति—

**तस्मान्महति रात्र्या अनूच्यः ॥ इति ।**

इसलिए बहुत रात्रि शेष रहने पर ही पाठ करना चाहिए ।

अपरं विशेषं विधत्ते—

**पुरा शकुनिवादादनुब्रूयात् ॥ इति ।**

शकुनयः पक्षिण उषःकाले प्रबुध्य वदन्ति ध्वनिं कुर्वन्ति तस्माद् वादात् पूर्वमेवा-नुब्रूयात्[1] ॥

[दूसरी विशेष बात यह है कि] पक्षियों के कलरव के पहले ही अनुवचन करना चाहिए ।

तदेतदुपपादयति—

**निर्ऋतेर्वा एतन्मुखं यद्वयांसि यच्छकुनयस्तद्यत्पुरा शकुनिवादादनुब्रूयान्मा यज्ञियां वाचं प्रोदितामनु प्रवदिष्मेति, तस्मान्महति रात्र्या अनूच्यः ॥ इति ।**

निर्ऋतिः काचिद् राक्षसरूपा मृत्युदेवता ।[2] यानि वयांसि ये च शकुनय एतत्सर्वं मृत्युदेवताया मुखम् । अत्र वयःशब्देन पक्षिसामान्यमुच्यते शकुनिशब्देन पक्षिविशेषः । येषां संचारादध्वनीष्टानिष्टसूचकतया मनुष्या व्यवहरन्ति ते शकुनयः ।[3] यस्मादुभयं मृत्युमुखं यद्यदि तदुभयध्वनेः पुराऽनुब्रूयात् तदानीं प्रोदितां प्रथमत उक्तामयज्ञियां यज्ञ-संबन्धरहितां वाचमनु मा प्रवदिष्म प्रातरनुवाकं पश्चादुक्तवन्तो मा भवामेति होतुरभिप्रायो भवति । अतो महति रात्रिशेषेऽवस्थिते सति शकुनिवादशङ्कानुदयात् तदानीमेवानूच्यः ॥

जो पक्षि हैं और जो पक्षि विशेष [मुर्गा] हैं वह सभी निर्ऋति [मृत्यु के राक्षस रूपी देव] के मुख हैं । इसलिए दोनों प्रकार के पक्षियों की ध्वनि के पहले ही अनुवचन करना चाहिए । [वस्तुतः इससे होता का अभिप्राय यही है कि] 'यज्ञ से असम्बद्ध वाणी के उच्चरित होने के बाद हम प्रातरनुवाक का पाठ न करें ।' इसलिए बहुत रात्रि शेष रहने पर ही अनुवचन करना चाहिए ।

---

१. 'अथैतस्या रात्रेर्विवासकाले प्राग् वयसां प्रवादात् प्रातरनुवाकायामन्त्रितः'— इत्यादि आश्व० श्रौ० ४.१३.१–६ ।

२. द्र० मार्क० पु० ४७.३७ ।

३ 'भूमौ चरन्तः कुक्कुटायः शकुनयः, नभस्येव चरन्तो गृध्रादयः पक्षिणो वयांसि' इति भट्टभास्करः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पक्षान्तरं विधत्ते—

**अथो खलु यदैवाध्वर्युरुपाकुर्यादथानुब्रूयात् ॥ इति ।**

अध्वर्योरुपाकरणं प्रैषमन्त्रपाठः[1] । स एव प्रातरनुवाकस्य कालः ॥

[दूसरा विकल्प है कि] जब अध्वर्यु प्रैष मन्त्र का पाठ करे तब अनुवचन करना चाहिए ।

तदेतदुपपादयति—

**यदा वा अध्वर्युरुपाकरोति वाचैवोपाकरोति वाचा होताऽन्वाह वाग्घि ब्रह्म तत्र स काम उपाप्तो यो वाचि च ब्रह्मणि च ॥ इति ।**

अध्वर्योरुपाकरणं प्रैषमन्त्ररूपया वैदिकवाचैव सम्पद्यते । होतुरनुवचनमपि वैदिकवाचा भवति । यस्मादुभयविधा, वाग्ब्रह्म वेदरूपं तस्मादुपकरणानन्तरभाविनाऽनुवचनेन लौकिकवाचि वैदिकवाचि यत्फलं भाविनं तत्प्राप्नोति । अत्र कालविशेषः शाखान्तरेऽप्याम्नातः—'पुरा वाचः प्रवदितोः प्रातरनुवाकमुपाकरोति यावत्येव वाक् तामवरुन्धे'[2] इति । उपाकरणं च आपस्तम्बेन स्पष्टीकृतम्—'पुरा वाचः पुरा वा वयोभ्यः प्रवदितो प्रातरनुवाकमुपाकरोति प्रातर्याविभ्यो देवेभ्योऽनुब्रूहि ब्रह्मन् वाचं यच्छ प्रतिप्रस्थातः सवनीयान्निर्वप सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति संप्रैष्यति'[3] इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः द्वितीयाध्याये (सप्तमाध्याये) पञ्चमः खण्डः ॥ ५ ॥ (१५) [४५]

जब अध्वर्यु प्रैषमन्त्र [रूप वाणी] बोलता है तब वस्तुतः वह [वैदिक] वाणी से ही प्रैष करता है और होता का अनुवचन भी [वैदिक] वाणी द्वारा ही होता है । क्योंकि [दोनों ही] वाणी ब्रह्म अर्थात् वेदरूप हैं । अतः [उपाकरण के अनन्तर] वहाँ जो कामना लौकिक वाणी में और जो वैदिक वाणी में होती है सभी उसे प्राप्त होती है ।

॥ इस प्रकार सातवें अध्याय के पाँचवे खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

अथ प्रातरनुवाके प्रथमामृचं विधातुमाख्यायिकामाह—

**प्रजापतौ वै स्वयं होतरि प्रातरनुवाकमनुवक्ष्यति सर्वा देवता आशंसन्त मामभि प्रतिपत्स्यति मामभीति स प्रजापतिरैक्षत यद्येकां देवतामादिष्टामभि प्रतिपत्स्यामीतरामेकेन देवता उपाप्ता भविष्यन्तीति स एतामृचमपश्यदापो रेवतीरित्यापो वै सर्वा देवता, रेवत्यः सर्वा देवताः, स एतयर्चा प्रातरनुवाकं प्रत्यपद्यत ताः सर्वा देवताः प्रामोदन्त मामभि प्रत्यपादि मामभीति ॥ इति ।**

---

१. प्राग् वाचं प्रवदितोः प्रातरनुवाकोपाकरणं देवेभ्यः प्रातर्याविभ्योऽनुब्रूहीति समिधमादधत्'—इति कात्या० श्रौ० ९.१.१० ।

२. तै० सं० ६.४.३.१ । ३. आप० श्रौ० १२.३.१४,१५ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रजापतौ वै स्वयमेव होतृत्वं प्राप्य कस्मिंश्चिद्यज्ञे प्रातरनुवाकमनुवक्तुमुद्युक्ते सति सर्वा अपि देवताः प्रत्येकं मामभिलक्ष्य प्रतिपत्स्यति प्रारम्भं करिष्यतीत्येवमाशंसन्तापेक्षां कृतवन्तः। मामभीति वीप्सा सर्वसंग्रहार्था। मद्देवत्ययैवर्चा प्रारम्भ इति सर्वासां देवतानां प्रत्येकमाशामवलोक्य स प्रजापतिः स्वमनसि विचारितवान्। स एव विचारो यदीत्यादिना स्पष्टीक्रियते। आदिष्टां केनचिन्मन्त्रेण प्रतिपादितामेकां देवतामभिलक्ष्य यद्यहं प्रतिपत्स्यामि प्रारम्भं करिष्यामि तदानीमितरा देवता कुप्येयुरिति शेषः। तस्मात् कारणान्मे मम केन प्रकारेण देवताः सर्वा अप्युपाप्ता उपक्रमे प्राप्ता भविष्यन्ति। एवं विचार्य स प्रजापतिः सर्वदेवतासिद्धयर्थम् 'आपो रेवतीः क्षयथा हि वस्वः'[1] इत्येतामृचमपश्यत्। तत्राप्शब्देन रेवतीशब्देन च सर्वा देवता उक्ता भवन्ति। आप्नुवन्तीत्यापः। रायो धनानि यासां सन्तीति रेवत्यः। यज्ञभूमिप्राप्तिर्धनवत्त्वं च सर्वासु देवतासु विद्यते तस्मात् सर्वदेवताप्रतिपादिकेयमृक्। स प्रजापतो रेवत्यैवोपक्रान्तवान्। तेन सर्वा देवताः प्रत्येकं मामभिलक्ष्य प्रारम्भः कृत इति प्रहृष्टवत्यः। वीप्सा पूर्ववत्॥

ii. १६ [vii. ६] [किसी यज्ञ में] प्रजापति के स्वयं होता होकर प्रातरनुवाक बोलने के लिए उद्यत होने पर सभी देवताओं ने यह अपेक्षा की कि 'मुझे लक्ष्य करके प्रारम्भ करेंगे', 'मुझे लक्ष्य करके प्रारम्भ करेंगे।' [सभी को आशान्वित] देखकर उन्होंने विचार किया कि यदि किसी मन्त्र से प्रतिपादित एक देवता को लक्ष्य करके प्रारम्भ करूँगा [तो अन्य देवता कुपित होंगे] अतः मुझे किस प्रकार सभी देवता प्राप्त होंगे। ऐसा विचार करके उन प्रजापति ने सभी देवों के सिद्ध्यर्थ 'आपो रेवतीः' आदि ऋचा का दर्शन किया। आप ही सब देव हैं और रेवती सभी देव हैं। उन्होंने ऐसी ऋचा के अनुसार प्रातरनुवाक का प्रतिपादन किया कि उससे सभी देवता यह सोंचकर प्रसन्न हो गए कि 'मुझे लक्ष्य करके प्रारम्भ किया गया है।' 'मुझे लक्ष्य करके प्रारम्भ किया गया है।'

अथार्थवादेन विधिमुन्नयति—

**सर्वा हास्मिन् देवताः प्रातरनुवाकमनुब्रुवति प्रमोदन्ते॥ इति।**

स एतयर्चा प्रातरनुवाकं प्रतिपद्यत इति शेषः। यः पुमानापो रेवतीरित्येतया प्रातरनुवाकं प्रारभतेऽस्मिन् प्रारभ्यानुब्रुवति सर्वा देवताः प्रहृष्यन्ति तस्मादनयैवर्चा प्रारभेतेति विधिरुन्नेयः॥

जो इस ऋचा से प्रातरनुवाक प्रारम्भ करता है, उस प्रारम्भ करके प्रातरनुवाक बोलने में सभी देवता प्रसन्न होते हैं।

वेदनं प्रशंसति—

**सर्वाभिर्हास्य देवताभिः प्रातरनुवाकः प्रतिपन्नो भवति य एवं वेद॥ इति।**

तदेतद् आश्वलायनेनाभिहितम्—'अन्तरेण युगधुरावुपविश्य प्रेषितः प्रातरनुवाकमनुब्रूयान् मन्द्रेणाऽऽपो रेवतीः क्षयथा हि वस्व उप प्रयन्त इति सूक्ते'[2] इति॥

१. ऋ० १०.३०.१२। २. आश्व० श्रौ० ४.१३.६,७। ३. ऋक्सर्वा० १०.३०।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**जो इस प्रकार जानता है उसका प्रातरनुवाक सभी देवताओं को लक्ष्य करके सम्पन्न होता है।**

आपो रेवतीरित्येतामृचमाख्यायिकया प्रशंसति—

**ते देवा अबिभयुरादातारो वै न इमं प्रातर्यज्ञमसुरा यथौजीयांसो बलीयांस एवमिति तानब्रवीदिन्द्रो मा बिभीत त्रिषमृद्धमेभ्योऽहं प्रातर्वज्रं प्रहर्ताऽस्मीत्येतां वाव तदृचमब्रवीद् वज्रस्तेन यदपोनप्त्रीया वज्रस्तेन यत्त्रिष्टुब्वज्रस्तेन यद्वाक् तमेभ्यः प्राहरत् तेनैनानहंस्ततो वै देवा अभवन् पराऽसुराः ॥इति।**

पुरा कदाचित् प्रजापतौ प्रातरनुवाकमनुब्रुवति सति तत्समीप आगता देवा अबिभयुर्भीतिं प्राप्ताः। केनाभिप्रायेणेति, तदुच्यते—यथा लोके केचिच्छत्रव ओजसोऽतिशयेनौजसा सप्तधातुना युक्तत्वात् पुष्टशरीरा बलीयांसो महता सैन्येन युक्तत्वादतिशयेन प्राबल्यादागत्य धनमपहरन्ति, एवमसुरा नोऽस्मदीयमिमं प्रातर्यज्ञं प्रातरनुवाकरूपमादातारो वा आदास्यन्त्येवापहरिष्यन्त्येवेति। तदानीमिन्द्रो मा विभीत भीतिं मा कुरुतेति तान् देवानब्रवीत्। कथं भीत्या अभाव इति, तदुच्यते—अहमिन्द्र एवैभ्योऽसुरेभ्योऽसुरविनाशार्थं प्रातःकाले 'त्रिषमृद्धं' त्रिभिः प्रकारैः समृद्धं प्रबलं वज्रं 'प्रहर्ताऽस्मि' तेषामुपरि प्रक्षेप्स्यामि। ततो हे देवा अस्माकं भीतिर्मा भूत्। इत्युक्त्वा तत्तदानीमेतां वावाऽऽपो रेवतीरिति याऽस्ति तामृचमेवाब्रवीत्। तस्या ऋचस्त्रिप्रकारवज्रत्वं कथमिति, तदुच्यते—यद् यस्मात्कारणादपोनप्त्रीया सा ऋगपोनप्तृदेवताका। तथा च अनुक्रमणिकाकारः[1]—यस्मिन् सूक्ते साऽस्ति तस्य सूक्तस्य देवतां ब्रूते 'प्रदेवत्रा पञ्चोना कवष ऐलूष आपमपोनप्त्रीयं वा' इति। तेनापोनप्तृदेवताकत्वेन कारणेनायं मन्त्रो वज्रः संपन्नः। सोऽयमेकः प्रकारः। अपोनप्ता देवोऽतिक्रूरस्तत्तदीयाया ऋचो वज्रत्वं युक्तम्। यस्मादियं त्रिष्टुप्छन्दस्का तेनापि प्रकारेण वज्रत्वम्। 'इन्द्रियं वै वीर्यं त्रिष्टुप्' इति श्रुत्यन्तरे वीर्यरूपत्वश्रवणाद्[1] वज्रत्वम्[2]। सोऽयं द्वितीयः प्रकारः। यस्मादियं वाग्रूपा तेनापि प्रकारेण वज्रत्वम्। 'स वाग्वज्रो यजमानं हिनस्तीत्यत्र[3] शब्दरूपाया वाचो वज्रत्वश्रवणात्। सोऽयं तृतीयः प्रकारः। तमेवं त्रिषमृद्धमृग्रूपं वज्रमेभ्योऽसुरेभ्यः प्राहरत् तेनैनानसुरानहनद्धतवान्। तत एवासुरवधाद्देवा विजयिनोऽभवन्नसुराश्च पराभवन्।

---

१. द्र० इतः पूर्वम्, पृ० ४३। २. द्र० त्रिष्टुभो वज्रत्वश्चेहैव साक्षात् श्रुतं पुरस्तात्—त्रिष्टुबिन्द्रस्य वज्रः—इति (२४२ पृ० ५ पं०)।

३. 'स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात्'—इति पा० शि० १०.४। तदाहृतश्च पा० महाभा० १.१.१। स च वाग्वज्रमन्त्रः 'इन्द्रशत्रुर्वर्धस्व'—इति तैत्तिरीयसंहितायामसकृत् श्रुतः (२.४.१२.१;५.२.१): 'तत्र मन्त्रगतस्वरापराधो निमित्तम्। तथाहि—इन्द्रस्य शातयितेन्द्रशत्रुरिति विवक्षायां तत्पुरुषसमासस्यान्तोदात्तत्वेन भवितव्यम्; आद्युदात्तस्त्वयं शब्दः प्रयुक्तः, स च बहुव्रीहितां द्योतयति। बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदाद्युदात्तत्वविधानात्। सति बहुव्रीहाविन्द्रः शातयिता यस्येत्यर्थो भवति। सोऽयं मन्त्रगतः स्वरापराधः। अपराधाभावे सति उन्नतया ज्वालया यजमानस्य कार्यसिद्धिः सूचिता भवति। अपराधे त्ववनतया ज्वालया यजमानस्य कार्यसिद्ध्यभावः सूच्यते'—इति सा० भा०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

किसी समय प्रजापति के प्रातरनुवाक बोलने पर उसके समीप आए देव भय को प्राप्त हुए। जिस प्रकार लोक में शत्रु अपने ओज और बल से धन का अपहरण करते हैं उसी प्रकार असुर हमारे इस प्रातरनुवाक रूप प्रातः यज्ञ का अपहरण कर लेंगे। इन्द्र ने उनसे कहा—मत डरो। मैं इन [असुरों के विनाश] के लिए प्रातःकाल तीन प्रकार से समृद्ध वज्र को फेकूँगा। तब उन्होंने उस ऋचा को कहा। [तीन प्रकार का वज्रत्व है कि] १. यह ऋचा वज्र है क्योंकि यह 'अपोनप्त्रीय' देवताक है। २. यह ऋचा वज्र है क्योंकि यह त्रिष्टुप छन्दस्क है। ३. यह ऋचा वज्र है क्योंकि यह वाक्‌रूपा है। उस [तीन प्रकार से समृद्ध ऋग्रूप वज्र] को उन [असुरों] के ऊपर प्रहार किया। उसीसे ये असुर मारे गए और तब देव जीत गए और असुर पराजय को प्राप्त हुए।

वेदनं प्रशंसति—

**भवत्यात्मना पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ॥** इति।

पूर्ववद् व्याख्येयम्[1] ॥

जो इस प्रकार जानता है वह स्वयं उत्कृष्ट होता है और उससे द्वेष करने वाले पापात्मा शत्रु भी पराजित होते हैं।

अस्या ऋचस्त्रिरावृत्तिं विधत्ते—

**तदाहुः स वै होता स्याद् य एतस्यामृचि सर्वाणि च्छन्दांसि प्रजनयेदित्येषा वाव त्रिरनूक्ता सर्वाणि च्छन्दांसि भवत्येषा छन्दसां प्रजातिः ॥१६॥** इति।

तत्तस्यामापो रेवतीरित्यृचि ब्रह्मवादिन एवमाहुः—यः पुमानेतस्यामृचि सर्वाणि च्छन्दांस्युत्पादयेत् स एव मुख्यो होता स्यान्न त्वन्य इति। एतद् ब्रह्मवादिनां वचनं श्रुत्वा कश्चिदभिज्ञः सर्वच्छन्दसामुत्पादनप्रकारं ब्रूते—येयमृगनूक्ता सेयमेव त्रिः पठिता सती सर्वच्छन्दसां स्वरूपं भवति। इयं त्रिष्टुब्रूपत्वाच्चतुश्चत्वारिंशदक्षरा।[2] तस्यां त्रिरावृत्तायां द्वात्रिंशदधिकशताक्षराणि संपद्यन्ते। तेषु जगत्यादीन्यधिकाक्षराणि गायत्र्यादीनि न्यूनाक्षराणि सर्वच्छन्दांसि संपादयितुं शक्यते। तस्मादेषा सर्वेषां छन्दसां प्रजातिरुत्पत्तिस्थानम्। यद्येषा त्रिरावृत्तिः सूत्रकारेण नोक्ता तर्हि सर्वच्छन्दोन्तर्भावनेयमृचः प्रशंसाऽस्तु ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः द्वितीयाध्याये (सप्तमाध्याये) षष्ठः खण्डः ॥६॥ (१६) [४६]

इस [ऋचा] के सम्बन्ध में ब्रह्मवादी कहते हैं—वही मुख्य 'होता' होता है जो इस ऋचा में सभी छन्दों को उत्पन्न करता है। इसी ऋचा को तीन बार पढ़ने से वह

---

१. द्र० इतः पूर्वम्, पृष्ठे २६७।
२. सैषा 'आपो रेवतीः.....वयो धात्'—इति ऋ० १०.३०.१२।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सभी छन्दों के रूप वाली हो जाती है। [उसकी तीन आवृत्ति होने से वह १३२ अक्षरों वाली हो जाती है। इन्हीं में जगती आदि अधिक अक्षरों वाले और गायत्री आदि न्यून अक्षरों वाले छन्दों का संपादन होने से] यह ऋचा सभी छन्दों की उत्पत्तिस्थान है।

॥ इस प्रकार सप्तम अध्याय में षष्ठ खण्ड की हिन्दी पूर्ण हुई ॥ ६ ॥

## अथ सप्तमः खण्डः

अथ प्रातरनुवाकगतानामृचां काम्या विशेषा वक्तव्याः। तत्राऽऽयुरर्थं शतसंख्यां विधत्ते—

**शतमनूच्यमायुष्कामस्य, शतायुर्वै पुरुषः, शतवीर्यः शतेन्द्रिय आयुष्येवैनं तद् वीर्य इन्द्रिये दधाति ॥** इति।

अपमृत्युरहितमायुर्यः कामयते तस्यर्चां शतमनूच्यम्। ऋग्विशेषास्तु सूत्रान्तरे द्रष्टव्याः। शतसंख्याका वत्सरा आयुर्यस्य मनुष्यस्य सोऽयं शतायुः। धर्मसम्पादितस्यापमृत्योरभावे संवत्सरशतं मनुष्या जीवन्ति। दशसंख्याकानीन्द्रियाणि प्रत्येकं दशसु नाडीषु वर्तमानत्वात् तन्मिलित्वा शतेन्द्रियाणि भवन्ति। ततस्तद्व्यापाराणामपि शतत्वेन शतवीर्यत्वम्। तस्माच्छतानुवचनेन तत्संख्याक आयुषि वीर्यं इन्द्रिये चैनं यजमानं स्थापयति॥

ii. १७ [vii. ७] [अकाल मृत्यु से रहित] दीर्घायु की कामना वाले [यजमान] को सौ ऋचाओं का पाठ करना चाहिए। मनुष्य की [धर्मसम्पादित] आयु सौ वर्ष की है। मनुष्य [दस इन्द्रियों वाला है; प्रत्येक इन्द्रिय में दस-दस नाड़ी हैं इस प्रकार वह] सौ इन्द्रियों वाला है और [उन सौ इन्द्रियों के कार्य भी सौ ही हैं अतः] वह सौ-वीर्य अर्थात् पराक्रम वाला है। इसलिए सौ ऋचा के अनुवचन से उतनी ही आयु, उतना ही वीर्य और उतनी ही इन्द्रियाँ इस [यजमान] में स्थापित करता है।

अहीनरात्रादुत्तरक्रतुकामस्य संख्यान्तरं विधत्ते—

**त्रीणि च शतानि षष्टिश्चानूच्यानि यज्ञकामस्य, त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि, तावान्संवत्सरः, संवत्सरः प्रजापतिः प्रजापतिर्यज्ञः ॥** इति।

षष्ट्युत्तरशतत्रयदिवसपरिमितो यः संवत्सरः कालात्मा स एव प्रजापतिः। संवत्सरादि कालविशेषणम्। प्रजापतिसृष्टत्वेन तदभेदोपचारः। तथा यज्ञस्यापि तेन सृष्टत्वात् तद्रूपत्वम्। एवं सति षष्ट्युत्तरशतत्रयसंख्यायाः संवत्सरप्रजापतिद्वारा यज्ञसम्बन्धादुत्तरक्रतुप्राप्तिहेतुत्वं भवति॥

यज्ञ की कामना वाले [होता] को ३६० ऋचाओं का पाठ करना चाहिए; क्योंकि संवत्सर में ३६० दिन होते हैं। संवत्सर इतने ही परिमाण का होता है और संवत्सर प्रजापति है, और [प्रजापति द्वारा यज्ञ की सृष्टि किए जाने के कारण] प्रजापति यज्ञ है।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

होतुर्वेदनं प्रशंसति—

**उपैनं यज्ञो नमति यस्यैवं विद्वांस्त्रीणि च शतानि षष्टिं चान्वाह ॥** इति ।

जो [होता] इस प्रकार समझते हुए ३६० ऋचाओं का पाठ करता है वह यज्ञ को यजमान के प्रति झुकाता है अर्थात् वह यज्ञ की कृपा का पात्र बन जाता है ।

अथ प्रजां पशूंश्च कामयमानस्य पूर्वसंख्याया द्विगुणां संख्यां विधत्ते—

**सप्त च शतानि विंशतिश्चानूच्यानि प्रजापशुकामस्य, सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रास्तावान्संवत्सरः, संवत्सरः प्रजापतिर्यं प्रजायमानं विश्वं रूपमिदमनु प्रजायते, प्रजापतिमेव तत्प्रजायमानं प्रजया पशुभिरनु प्रजायते प्रजात्यै ॥** इति ।

संवत्सरगतानामह्नां रात्रीणां च पृथग्गणनायां मिलित्वा विंशत्यधिकसप्तशतसंख्या संवत्सरे संपद्यते । संवत्सरस्य च प्रजापतित्वमुक्तम्[1] । एतावता विंशत्युत्तरसप्तशत-संख्यायाः प्रजापतिसम्बन्धो दर्शितः यं प्रजायमानमित्यादिना काम्यमानानां प्रजानां पशूनां च प्रजापतिसम्बन्धः प्रदर्श्यते । लोके कस्मिंश्चिद् गृहे प्रजायमानं यं पुरुषमनु विश्वरूप-मिदमोषधिवनस्पत्यादिस्थावरं भ्रातृभगिनिगोमहिष्यादिकं जङ्गमं च सर्वं प्रजायते तत्तद्गृहे प्रजायमानं प्रजापतिमेवानु प्रजापशुरूपेण सर्वमुत्पद्यते । एतदुक्तं भवति । कस्य-चिद्धनिकस्य पुत्र उत्पद्यमाने सति कुटुम्बाभिवृद्धया तज्जीवनार्थं सस्यादिनिष्पत्तिं गोमहि-ष्यादिसंपत्तिं च स धनिकः प्रभूतां करोति । तस्य पुत्रस्य भ्रातृभगिन्यादयोऽपि पुन-र्जायन्ते । तत्र च स्थावरजङ्गमरूपाणां प्रजानां पालनहेतुत्वादयं जायमानः पुत्र एव च प्रजापतिः । अतः प्रजापतिद्वारा प्रजापशुसंबन्धोऽपि भवतीति । तस्मादियं संख्या यज-मानस्य प्रजात्यै प्रजापशूत्पादनाय संपद्यते ॥

प्रजा और पशु की कामना वाले [होता] को [पूर्वसंख्या की दुगुनी] ७२० ऋचाओं का पाठ करना चाहिए; क्योंकि एक संवत्सर में ७२० रात और दिन होते हैं । इतने ही परिमाण का संवत्सर होता हैं । संवत्सर प्रजापति है । [किसी गृह में] प्रजनन करने वाला जो पुरुष [ओषधि वनस्पति आदि स्थावर और भाई बहिन व गो-महिष आदि जङ्गम रूप] समस्त प्रजा को उत्पन्न करता है उस प्रजनन करने वाले के रूप में प्रजा-पति ही प्रजा और पशु रूप से सब कुछ उत्पन्न करता है । [अतः ७२० संख्या] प्रजा और पशु के उत्पादन के लिए है ।

वेदनं प्रशंसति—

**प्रजायते प्रजया पशुभिर्य एवं वेद ॥** इति ।

जो इस प्रकार जानता है वह प्रजा और पशु के द्वारा बढ़ता है ।

---

१. द्र० इतः पूर्वम्, २१ पृष्ठे ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ दुर्ब्राह्मणत्वपरिहारकामस्य संख्यान्तरं विधत्ते—

**अष्टौ शतान्यनूच्यान्यब्राह्मणोक्तस्य यो वा दुरुक्तोक्तः शमलगृहीतो यजेताष्टाक्षरा वै गायत्री गायत्र्या वै देवाः पाप्मानं शमलमपाघ्नत गायत्र्यैवास्य तत्पाप्मानं शमलमपहन्ति ॥ इति ।**

अब्राह्मणत्वेन स्मृतिषु योऽभिहितः सोऽयमब्राह्मणोक्तो राजसेवाधिकारी । स्मृतिवाक्यं चात्र पूर्वमेवोदाहृतम्[1] । तादृशस्याष्टौ शतान्यनुब्रूयात् । अथवा यो वा दुरुक्तोक्तो दुरुक्तेनापवादेन जनैर्व्यवहृतः स शमलगृहीतो मलिनेन लोकविरुद्धेन स्वीकृतस्तादृशो यदा यजेत तदाऽप्यष्टौ शतान्यनुब्रूयात् । गायत्र्या अष्टाक्षरत्वात् तया च मलिनस्य पापस्य देवैर्विनाशितत्वात् । अष्टसंख्यामनुतिष्ठन्गायत्र्यैव मलिनं पापं विनाशयति ॥

स्मृति में उक्त अब्राह्मण को ८०० ऋचाओं का पाठ करना चाहिए अथवा जो दुरुक्तोक्त [जनापवाद से दूषित] और कलुषित रूप में समाज में स्वीकृत हैं वे यदि यजन करें [तो वह भी ८०० ऋचाओं का पाठ करें]। गायत्री आठ अक्षरों वाली होती है। गायत्री के ही द्वारा देवों ने पाप और मालिन्य का विनाश किया। इस प्रकार उन [ऋचाओं के पाठ] के द्वारा [आठ संख्या से युक्त] गायत्री से ही पाप और कालुष्य का निवारण करता है।

वेदनं प्रशंसति—

**अप पाप्मानं हते य एवं वेद ॥ इति ।**

अपहन्तीत्यर्थः ॥

जो इस प्रकार जानता है वह अपने पाप को नष्ट करता है।

संख्यान्तरं विधत्ते—

**सहस्रमनूच्यं स्वर्गकामस्य सहस्राश्वीने वा इतः स्वर्गो लोकः स्वर्गस्य लोकस्य समष्ट्यै संपत्त्यै संगत्यै ॥ इति ।**

प्रबलोऽश्व एकेनाह्ना यावन्ति योजनानि गच्छति तावद्योजनपरिमितो देश आश्वीनः। स च सहस्रसंख्यया गुणितः सहस्राश्वीनः। 'अश्वस्यैकाहगमः'[2] इति पाणिनीयसूत्रादाश्वीनशब्दनिष्पत्तिः[3] । इतो भूलोकादारभ्य सहस्राश्वीन ऊर्ध्वदेशे स्वर्गो लोको वर्तते । अतः सहस्रसंख्या स्वर्गस्य लोकस्य समष्ट्यै प्राप्त्यै भवति । प्राप्तस्य संपत्त्यै

---

१. द्र० इतः पूर्वम्, १०७ पृष्ठे । २. पा० सू० ५.२.१९ ।

३. 'एकाहेन गम्यत इत्येकाहगमः अश्वीनोऽध्वा'—इति सि० कौ० । त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते—इति अमरकोश २.८.४७ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वापेक्षितसर्वभोग्यवस्तुसंपादनाय भवति। संपन्नस्य च संगत्यै[1] महतामिन्द्रादिदेवानां प्रीतिपूर्वकसंबन्धाय भवति॥

स्वर्ग की कामना वाले को हजार मन्त्र का पाठ करना चाहिए; क्योंकि यहाँ से स्वर्ग लोक की दूरी सहस्राश्वीन है [अर्थात् एक प्रबल अश्व एक दिन में जितने योजन जाता है उतनी दूरी को 'अश्वीन' कहते हैं। ऐसे एक हजार दिन के परिमाण वाली दूरी वाला स्वर्ग लोक है]। इस प्रकार यह स्वर्ग लोक की प्राप्ति के लिए, अपेक्षित भोग्य वस्तु रूप संपत्ति के लिए और इन्द्रादि देवों से प्रीतिपूर्वक सम्बन्ध के लिए होता है।

सर्वकामसिद्ध्यर्थमियत्तापरिच्छेदराहित्यसंख्यां विधत्ते—

**अपरिमितमनूच्यमपरिमितो वै प्रजापतिः प्रजापतेर्वा एतदुक्थं यत्प्रातरनुवाकस्तस्मिन् सर्वे कामा अवरुध्यन्ते स यदपरिमितमन्वाह सर्वेषां कामानामवरुद्ध्यै॥ इति।**

शतं सहस्रमित्यादिसंख्यापरिमाणं परित्यज्य मध्यरात्रादूर्ध्वमुपक्रम्य सूर्योदयात् प्राचीनकाले यावतीरनुवक्तुं शक्तिरस्ति तावतीरनुब्रूयात्। जगत्कारणभूतः प्रजापतिश्चापरिमितः। न ह्येतावदस्य स्वरूपमिति प्रजापतिः परिमातुं शक्यते। यः प्रातरनुवाकोऽस्ति तदेतत्तादृशस्य प्रजापतेरुक्थं प्रियं शस्त्रम्। अतःस्तस्मिन् प्रातरनुवाके सर्वे कामा अन्तर्भवन्ति। एवं सति स होता यद्यपरिमितमनुब्रूयात् तदानीं तदनुवचनं सर्वकामप्राप्त्यै भवति॥

[सभी कामनाओं की सिद्धि के लिए] अपरिमित मन्त्र बोलना चाहिए; क्योंकि [जगत् के कारणभूत] प्रजापति अपरिमित हैं। जो यह प्रातरनुवाक है वह प्रजापति का प्रिय शस्त्र है। अतः उसमें सभी कामनाओं का अन्तर्भाव हो जाता है। इस प्रकार वह होता जो अपरिमित मन्त्र बोलता है वह सभी कामनाओं की प्राप्ति के लिए होता है।

वेदनं प्रशंसति—

**सर्वान् कामानवरुन्धे य एवं वेद॥ इति।**

जो इस प्रकार जानता है वह [षट्कल्पोक्त] सभी कामनाएँ प्राप्त कर लेता है।

---

१. 'सम्पत्तिः गमनं, सङ्गतिः संयोगः, सामान्यविशेषभावेन सामानाधिकरण्यम्'— इति गोविन्दस्वामी। 'सम्पत्तिः तत्र समृद्धिः सङ्गतिः तेन नित्यसंयोगः कदाचिदप्यप्रच्युतिः' इति भट्टभास्करः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

बहुफलहेतुत्वादपरिमितपक्षमादरेण निगमयति—

**तस्मादपरिमितमेवानूच्यम् ॥**[1] इति ।

**इसलिए अपरिमित मन्त्र बोलना चाहिए ।**

प्रातरनुवाकगतास्वृक्षु च्छन्दोविशेषान् विधत्ते—

**सप्ताऽऽग्नेयानि च्छन्दांस्यन्वाह सप्त वै देवलोकाः ॥** इति ।

प्रातरनुवाके त्रयो भागाः । तत्र प्रथमो भाग आग्नेयः । तस्मिंश्च गायत्र्यनुष्टुप्त्रिष्टुब्-बृहत्युष्णिग्जगती पङ्क्तिरिति सप्तभिश्छन्दोभिर्युक्ता ऋचोऽनुब्रूयात् । देवानां संबन्धिनो बहुलोकयुक्ता लोकविशेषाः सप्त । तस्माच्छन्दसां सप्तसंख्या प्रशस्ता ॥

**[प्रातरनुवाक के प्रथम भाग के देवता] अग्नि के लिए सात छन्दों से युक्त मन्त्र बोलना चाहिए । क्योंकि देव सम्बन्धी लोक सात ही हैं ।**

वेदनं प्रशंसति—

**सर्वेषु देवलोकेषु राघ्नोति य एवं वेद ॥** इति ।

भूलोकादयः सत्यलोकान्ताः सप्त वै देवलोका द्रष्टव्याः ॥

**जो इस प्रकार जानता है वह ['भूः' आदि] सभी देवलोकों में समृद्धि को प्राप्त करता है ।**

प्रातरनुवाकस्य द्वितीयभागे छन्दांसि विधत्ते—

**सप्तौषस्यानि च्छन्दांस्यन्वाह, सप्त वै ग्राम्याः पशवः ॥** इति ।

यथा प्रथमभागस्याग्निर्देवता तथा द्वितीयभागस्योषा देवता । तस्मादुषःप्रतिपादिका-स्वृक्षु पूर्ववद् गायत्र्यादीनि सप्त च्छन्दांसि द्रष्टव्यानि । ग्रामे भवा ग्राम्याः पशवः, ते च सप्त । तथा च बौधायनः—'सप्त ग्राम्याः पशवोऽजाऽश्वो गौर्महिषी वराहो हस्त्यश्वतरी च' इति ॥

आपस्तम्बमतानुसारिणस्त्वेवं वर्णयन्ति—

"अजाविकं गवाश्वं च गर्दभोष्ट्रं नरस्तथा ।
सप्त वै ग्राम्यपशवो गीयन्ते कविसत्तमैः ॥"[2] इति ।

तस्मादत्र सप्तसंख्या युक्ता ॥

**[प्रातरनुवाक के द्वितीय भाग के देवता] उषा के लिए सात छन्दों से युक्त ऋचा का पाठ करना चाहिए; क्योंकि ग्राम्य पशु सात ही होते हैं ।**

वेदनं प्रशंसति—

**अव ग्राम्यान् पशून् रुन्धे य एवं वेद ॥** इति ।

---

१. तदुक्तमाश्वलायनेन—'शतप्रभृत्यपरिमितः'—इति ४.१५.३ ।

२. द्र० मार्कं० ४९.२९ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जो इस प्रकार जानता है वह ग्राम्य पशुओं को प्राप्त करता है।

तृतीयभागे च्छन्दांसि विधत्ते—

**सप्ताऽऽश्विनानि च्छन्दांस्यन्वाह, सप्तधा वै वाग्, अवदत् तावद् वै वागवदत् सर्वस्यै वाचः सर्वस्य ब्रह्मणः परिगृहीत्यै ॥ इति ।**

तृतीयभागस्याश्विनौ देवता तत्संबन्धिनीः सप्त च्छन्दोयुक्ता ऋचोऽनुब्रूयात् । लोके गानरूपा या वागस्ति सा सप्तधाऽवदत् षड्जऋषभादिस्वरोपेता[1] प्रवृत्ता ।[2] तावदेव वैदिकवागप्यवदत् साम्नि क्रुष्टप्रथमद्वितीयादीनां सप्तस्वराणामधीयमानत्वात् ।[3] अतोऽत्र सप्तसंख्या लौकिक्याः सर्वस्या वाचो वेदस्य च सर्वस्य परिग्रहाय भवति । त्रिष्वप्येष्वाग्नेयौषस्याश्विनभागेषु च्छन्दांस्यस्माभिः पूर्वमेवोदाहृत्य प्रदर्शितानि ॥[4]

[प्रातरनुवाक के तृतीय भाग के देवता] अश्वि-द्वय के लिए सात छन्दों से युक्त ऋचा का पाठ करना चाहिए। [लोक में षड्जऋषभ आदि] सात प्रकार से वाणी बोली जाती है। इतनी ही [वैदिक भी] वाणी बोलते हैं। अतः इस प्रकार सभी [लौकिक] वाणी और सभी [वैदिक] वाणी के परिग्रह के लिए होती है।

भागत्रये देवतात्रयं विधत्ते—

**तिस्रो देवता अन्वाह, त्रयो वा इमे त्रिवृतो लोका एषामेव लोकानामभिजित्यै ॥ १७ ॥ इति ।**

अग्निरुषाऽश्विनाविति देवतात्रयम् । यथा गुणत्रयमेलनरूपा रज्जुस्त्रिवृदेवमेते पृथिव्यन्तरिक्षद्युलोकाः परस्परमिलितास्त्रिवृतः । यद्वा, एकैकस्मिल्लोके सत्त्वरजस्तमोगुणभेदेनास्योत्तममध्यमाधमरूपत्वात् प्रत्येकं त्रिवृत्तम् । अतो देवतात्रिसंख्या लोकत्रयजयाय भवति ॥

॥इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः द्वितीयाध्याये (सप्तमाध्याये) सप्तमः खण्डः ॥७॥ (१७) [४७]

---

१. षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा ।
पञ्चमो धैवतश्चैवं निषादः सप्तमः स्वरः ॥ ना० शि० १.२.५ ।

२. प्रथमश्च द्वितीयश्च तृतीयश्च चतुर्थकः ।
मन्द्रः क्रुष्टो ह्यतिस्वार एतान् कुर्वन्ति सामगाः ॥ इति वा० शि० १.१.१२ ।

३. द्र० इतः पूर्वम्, २६५—२६६ पृष्ठे ।

४. 'सप्तविधविभक्तिसम्बन्धेन षड्जादिसप्तस्वरसम्बन्धेन वा'—इति भट्टभास्करः । 'मन्द्रादिषु त्रिषु स्थानेषु सप्त सप्त यमाः क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वार्याः—इति तै० प्राति० २३.१३ । 'सप्तस्वरा ये यमास्ते'—इति ऋक् प्राति० १३.४४ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[अग्नि, उषा और अश्वि-द्वय—इन] तीन देवों के लिए मन्त्र पाठ करना चाहिए। क्योंकि ये त्रिवृत लोक [गुणत्रय रूप में मिले हुए पृथ्वी, अन्तरिक्ष और द्यु] तीन ही हैं। वस्तुतः इन लोकों की विजय के लिए ही ऐसा करते हैं।

॥ इस प्रकार सप्तम अध्याय में सातवें खण्ड की हिन्दी पूर्ण हुई ॥ ७ ॥

## अथ अष्टमः खण्डः

अथ तस्य प्रातरनुवाकस्यानुवचनप्रकारविशेषं निर्णेतुं प्रश्नमवतारयति—

**तदाहुः कथमनूच्यः प्रातरनुवाक इति ॥** इति ।

किम्, एकैकस्मिन् भागे गायत्र्यादीनि च्छन्दांस्यनुक्रमेणैवानुवक्तव्यानि, आहोस्विद् अन्यथा' इत्येकः संशयः। अनुक्रमपक्षेऽपि किं पादे पादेऽवसानं कृत्वाऽनुवचनीयम्, आहोस्वित् तत्तदर्थेऽवसानं कृत्वा' इति द्वितीयः संशयः ॥

ii. १८ [vii.८] इस सम्बन्ध में [याज्ञिक] कहते हैं कि 'प्रातरनुवाक कैसे बोलना चाहिए ?'

तत्र प्रश्नोत्तरमाह—

**यथाछन्दसमनूच्यः प्रातरनुवाकः प्रजापतेर्वा एतान्यङ्गानि यच्छन्दांस्येष उ एव प्रजापतिर्यो यजते तद् यजमानाय हितम् ॥** इति ।

अनुक्रमेणावस्थितानि गायत्र्यादीनि च्छन्दांस्यनतिक्रम्येति यथाछन्दसं छन्दः क्रमेणैवायमनुवचनीयः, छन्दसां प्रजापतिसृष्टत्वेन तदवयवत्वात्। यजमानस्य च प्रजापतिपदप्राप्तियोग्यत्वेन प्रजापतिरूपत्वात् तदङ्गरूपच्छन्दसां क्रमेणानुवचनं यजमानायावयवविपर्यासराहित्येन हितं भवति। तस्माच्छन्दः—क्रमेणैवानुवक्तव्यम् ॥

[उत्तर यह है कि] छन्दों के अनुसार प्रातरनुवाक बोलना चाहिए, क्योंकि यह जो छन्द हैं वह प्रजापति के अङ्ग हैं. और जो यजन करता है वह प्रजापति ही है। अतः यह [अनुक्रम से अनुवचन] यजमान के [अवयव विपर्यासराहित्य से] हित के लिए होता है।

द्वितीयविचारे पूर्वपक्षमाह—

**पच्छोऽनूच्यः प्रातरनुवाकश्चतुष्पादा वै पशवः पशूनामवरुद्ध्यै ॥** इति ।

पच्छ एकैकस्मिन् पादेऽवसायेत्यर्थः ॥

प्रातरनुवाक पाद-पाद के अवसान पर बोलना चाहिए। क्योंकि पशुओं के चार पैर होते हैं। अतः यह पशुओं की प्राप्ति के लिए होता है।

सिद्धान्तमाह—

**अर्धर्चश एवानूच्यो यथैवैनमेतदन्वाह प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो, यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति, तस्मादर्धर्चश एवानूच्यः ॥** इति ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अर्धर्चश एकैकस्मिन्नृचोऽर्धेऽवसायावसायं प्रातरनुवाकोऽनूच्यः। एवकारः पूर्वपक्ष-व्यावृत्त्यर्थः। यथैवेत्यादिनाऽर्धर्चश इत्येतदेव स्पष्टीक्रियते। एनमर्धं यथैव येनैव प्रकारेणैतदन्वध्ययनकालीनं गुरूच्चारणमनु यथाऽध्ययनकाले प्रत्यर्धमवसायाऽऽह पठति तथैव प्रातरनुवाकानुष्ठानकालेऽपि। न त्वत्र ऋगन्ते प्रणवप्रक्षेपादिवत् किंचिन्नूतनं कर्तव्य-मस्ति। तदेतदर्धर्चशोऽनुवचनं प्रतिष्ठाया एव यजमानस्य प्रतिष्ठार्थमेव भवति। तत्कथ-मिति, तदेवोच्यते—यथा, एकस्या ऋचो द्वे अर्धर्चे एवं पुरुषो द्विप्रतिष्ठः प्रतितिष्ठति स्थैर्येणावस्थितो भवति, आभ्यां पादाभ्यामिति प्रतिष्ठे द्वे पादौ प्रतिष्ठे यस्यासौ द्विप्रतिष्ठः। पशूनां चत्वारः पादाः। तथा सति पादचतुष्टयोपेतास्वृक्षु द्वाभ्यामर्धाभ्याम-वसानयुक्ताभ्यामनुवचने कृते सति द्विप्रतिष्ठं द्विपादं यजमानं चतुष्पात्सु पशुषु प्रतिष्ठा-पयति। तस्मादर्धर्चश एवानुवचनं युक्तम्॥

[किन्तु सिद्धान्त पक्ष यह है कि] एक-एक अर्धर्च के अवसान पर बोलना चाहिए। [अध्ययन के समय] जिस प्रकार इस [अर्धर्च] को [गुरुच्चारणपूर्वक अधी-आधी ऋचा के अवसान पर] पढ़ते हैं [उसी प्रकार अनुष्ठान के समय भी पाठ करना चाहिए क्योंकि यह अर्धर्चशः अनुवचन यजमान की] प्रतिष्ठा के लिए ही होता है। वस्तुतः पुरुष द्विप्रतिष्ठ [खड़े रहने के लिए दो पैर वाला] है और पशुओं को चार पैर हैं। इस प्रकार यह दो पैर वाले यजमान को ही चार पैर वाले पशुओं में स्थापित करता है। अतः अर्धर्चशः ही अनुवचन करना चाहिए।

तत्र प्रातरनुवाकक्रममाक्षिप्य समाधत्ते—

**तदाहुर्यद्व्यूह्ळः प्रातरनुवाकः कथमव्यूह्ळो भवतीति यदेवास्य बृहती मध्यान्नैतीति ब्रूयात्तेनेति॥ इति।**

छन्दसां योऽयमनुक्रमः सोऽयम् अनुक्रमणिकाकारेण दर्शितः—'अथ च्छन्दांसि, गायत्र्यु-ष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यतीशक्वर्यष्ट्यत्यष्टीधृत्यतिधृतयश्चतुर्विंशत्य-क्षरादीनि चतुरुत्तराणि'[1] इति। चतुर्विंशत्यक्षरोपेतां गायत्रीमारभ्योत्तरोत्तरं छन्दश्चतुर्भि-श्चतुर्भिरक्षरैरधिकमित्यर्थः। तमेतं छन्दसां क्रमं विपर्यस्य प्रातरनुवाके क्रमान्तरमूहितं गायत्र्यनुष्टुप्त्रिष्टुब्बृहत्युष्णिग्जगती पङ्क्तिरिति। सोऽयं क्रमोऽस्माभिराश्वलायनोक्त-क्रमेण पूर्वमेवोदाहृताः[2]। तस्मात् प्रातरनुवाकोक्तक्रमस्य विपर्ययेणोहनादयं व्यूढः संपन्नः। सोऽयमनुचितः। तस्मात् कथमव्यूह्ळो भवतीति प्रश्न आक्षेपे वा यदेवेत्यादिकमुत्तरं यस्मादेव कारणाच्छन्दःक्रमेऽनुष्ठानक्रमे वाऽस्य प्रातरनुवाकस्य मध्यात् बृहतीच्छन्दो नैति नापगच्छतीत्युत्तरमभिज्ञो ब्रूयात् तेन कारणेनायमव्यूह्ळः संपन्न इत्यवगन्तव्यम्॥

इस सबन्ध में याज्ञिक प्रश्न करते हैं कि जो व्यूढ हैं [अर्थात् गायत्री उष्णिक् अनुष्टुप् आदि छन्द ४-४ अक्षर से बढ़ने वाले हैं। तो प्रातरनुवाक में इन छन्दों का

---

१. ऋक्सर्वा० परि० ३.१-३।    २. द्र० इतः पूर्वम् २६६ पृष्ठे।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

क्रम विपर्यय करके अर्थात् गायत्री-अनुष्टुप्-त्रिष्टुप्-बृहती-उष्णिक्-जगती-पङ्क्ति करके पढ़ना] अव्यूढ कैसे होता है ? [उत्तर यह है कि] 'इस [प्रातरनुवाक] के मध्य से बृहती छन्द चला न जाय'—इस प्रकार [अभिज्ञजन] कहते हैं इसलिए [प्रातरनुवाक अव्यूढ होता है] ।

अथ प्रातरनुवाकं प्रशंसति—

**आहुतिभागा वा अन्या देवता अन्याः स्तोमभागाश्छन्दोभागास्ता या अग्नावाहुतयो हूयन्ते ताभिराहुतिभागाः प्रीणात्यथ यत्स्तुवन्ति च शंसन्ति च तेन स्तोमभागाश्छन्दोभागाः ॥** इति ।

अन्याः काश्चिद्देवता अग्नौ हूयमानामाहुतिं भजन्त इत्यपराः काश्चिद्देवताः साम्न आवृत्तिप्रकारभेदेन निष्पन्नत्रिवृत् पञ्चदशादिस्तोमं[1] भजन्ते । अपराः काश्चिद्देवता ऋग्गतगायत्र्यादि च्छन्दो भजन्ते । एवं सति ता विधिवाक्येषु प्रसिद्धा आहुतयो याः सन्ति ताभिराहुतिभागानां देवतानां प्रीतिः । उद्गातारः स्तोमयुक्तैः सामभिः स्तुवन्तीति यत् तेन स्तोमभागानां प्रीतिः । होतारश्छन्दोयुक्ताभिर्ऋग्भिः शंसन्तीति यत्तेन च्छन्दोभागानां प्रीतिः ॥

कुछ देवता अपना भाग आहुति में लेते हैं, दूसरे कुछ अपना भाग स्तोम [साम गान] में ग्रहण करते है और कुछ [ऋग्गत गायत्री आदि] छन्दों में अपना भाग लेते हैं । वे [विधिवाक्यों में प्रसिद्ध] आहुतियाँ जो अग्नि में हुत होती हैं उनसे वह उन देवों को प्रसन्न करता है जिसका वह हुत भाग है; और [स्तोम से युक्त साम के द्वारा उद्गाता] जो स्तवन करता है उससे स्तोम का भाग लेने वाले देवों को और [छन्दों से युक्त ऋचाओं के द्वारा होता] जो शंसन करता है उससे छन्दों में भाग लेने वाले देवों को [प्रसन्न करता है] ।

वेदनं प्रशंसति—

**उभयो हास्यैता देवताः प्रीता अभीष्टा भवन्ति य एवं वेद ॥** इति ।

आहुतिभागा एको राशिः स्तोमभागाश्छन्दोभागाश्च द्वितीयो राशिः । एता उभयविधा अपि देवता वेदनेन प्रीताः सत्यो वेदितुरभीष्टप्रदा भवन्ति । शंसनेन च्छन्दोभागानां प्रीत्यभिधानात् प्रातरनुवाकस्य प्रशंसा संपन्ना ॥

जो इस प्रकार जानता है उससे [१. आहुति में भाग लेने वाले और २. स्तोम व छन्द में भाग लेने वाले] दोनों प्रकार के देव प्रसन्न होकर अभीष्टप्रद होते हैं ।

---

१. सामब्राह्मणस्य 'तिसृभ्यो हिङ्करोति'—इत्याद्यध्यायद्वयं (ता० ब्रा० २,३) द्रष्टव्यम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विभिन्ने प्रीतिनिमित्ते दृष्टान्तमभिप्रेत्य सोमं पशुं प्रशंसति—

**त्रयस्त्रिंशद्वै देवाः सोमपास्त्रयस्त्रिंशदसोमपा, अष्टौ वसव[1] एकादश रुद्रा[2] द्वादशाऽऽदित्याः[3] प्रजापतिश्च वषट्कारश्च[4], एते देवाः सोमपाः एकादश प्रयाजा एकादशानुयाजा एकादशोपयाजा एतेऽसोमपाः पशुभाजनाः सोमेन सोमपान् प्रीणाति पशुनाऽसोमपान्** ।। इति ।

वस्वादीनां वषट्कारान्तानां देवानां सोमयागेन प्रीतिः । होता यक्षदग्निमित्यादि-मैत्रावरुणप्रैषमन्त्रेषु समिद्धो अद्येत्यादियाज्यासु चाभिहिताः समिदाद्या एकादश प्रयाज-देवताः[5] । देवं बर्हिः सुदेवमित्यादिमैत्रावरुणप्रैषमन्त्रेषु देवं बर्हिर्वसुवन इत्यादि याज्यासु चाभिहिता बर्हिराद्या एकादशानुयाजदेवताः[6] । समुद्रं गच्छ स्वाहेत्यादिमन्त्रोक्ताः

---

१. 'अग्निश्च''''एतेऽष्टौ वसवः क्षिता इति'—तै० आ० १.९.१ ।

२. अथ वायोरेकादश—प्रभ्राजमाना''''वैद्युत इत्येकादश'....इति तै० आ० १.९.४ । 'प्रभ्राजमान इत्येकादश रुद्राः'—इति च तत्कल्पः ।

३. कतम आदित्या इति ? द्वादश वै मासाः''''तस्मादादित्या इति—इति बृह० उ० ३.९.५ । अपरया च गम्यन्ते । तद्यथा—"त्वष्टा, सविता, भगः, सूर्यः, पूषा, विष्णुः, विश्वानरः वरुणः केशी (केशिनः), वृषाकपि, यमः, अजएकपात्"—इति निघ० ५.६ । एते हि अरुणोदयाद्यस्तान्तस्याह्नो द्वादशभागानां कर्तारः कालमात्र-कृतपार्थक्याश्रयाः सूर्या एव । तथाहि 'त्वष्टा दुहित्रे'—इत्यादिः 'वचनानीमानि'—इत्यन्तश्च (१२.११–३०) निरुक्तग्रन्थोऽत्रालोच्यः । धाता, मित्रः, अर्यमा, शक्रः, विवस्वान्, पूषा, सविता, त्वष्टा, विष्णुः इति च द्वादश महाभारते १.२५२३ ।

४. अष्टौ''''दित्या इमे एव द्यावापृथिव्यौ त्रयस्त्रिंश्यौ, त्रयस्त्रिंशद् वै देवाः । प्रजा-पतिश्चतुर्स्त्रिंशः—इति शत० ब्रा० ४.५.७.२ । तत्रैवान्यथाविधमपि—अष्टौ''''दित्यास्त एकत्रिंशत् इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति'—इति ११.६.३.५ । अदिति-र्जनयामास त्रयस्त्रिंशत् शुभान् सुरान् आदित्यांश्च वसूंश्चैव रुद्रांश्चैवाश्विनावपि'—इति च (रामा० ३.२०.१५) ।

५. समिधः, तनूनपात् नराशंसो वा, इळः, बर्हिः, दुरः, उषासानक्ता, दैव्याहोताराः, तिस्रो देव्यः (इडा, सरस्वती, भारती), त्वष्टा, वनस्पतिः, स्वाहाकृतयः,—इत्येका-दशप्रयाजदेवताः, तै० ब्रा० ३.६.२,३ द्रष्टव्याः ।

६. बर्हिः, द्वारः, उषासानक्ता, जोष्ट्री, ऊर्जाहुती, दैव्याहोतारा, तिस्रो देव्याः, नराशंसः वनस्पतिः, बर्हिः, स्विष्टकृत्;—इत्येकादशानुयाजदेवताः । तै० ब्रा० ३.६.१३, १४ द्रष्टव्याः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

समुद्रादय एकादशोपयाजदेवताः[1]। सर्वा अपि सोमपानवर्जिताः पशुमेव भजन्ते। तासां पशुना तृप्तिः ॥

सोम का पान करने वाले तैंतिस देव हैं और तैंतिस ही सोम का पान नहीं करने वाले हैं। आठ वसु, ग्यारह रुद्र, द्वादश आदित्य, प्रजापति और वषट्कार-ये देव सोम पीने वाले हैं और ग्यारह प्रयाज, ग्यारह अनुयाज और ग्यारह उपयाज—ये देव सोमपायी नहीं हैं अपितु पशु ही ग्रहण करते हैं। वह सोमपान करने वाले देवों को सोम से और असोमपायी देवों को पशु से प्रसन्न करता है।

वेदनं प्रशंसति—

**उभयो हास्यैता देवताः प्रीता अभीष्टा भवन्ति य एवं वेद ॥ इति ।**

अत्र सोमपानामसोमपानां च भिन्नप्रीतिनिमित्ततया छन्दोभागानां देवतानामितरदेवताविलक्षणं प्रीतिनिमित्तं प्रातरनुवाक इत्यभिप्रायः ॥

जो इस प्रकार जानता है उससे दोनों प्रकार के देव प्रसन्न हो अभीष्टप्रद होते हैं।

तस्य प्रातरनुवाकस्य समाप्तिमृचं विधत्ते—

**'अभूदुषा रुशत् पशुरिति'[2] उत्तमया परिदधाति ॥ इति ।**

'ध्वनियुक्त पशुओं वाली उषा का प्राकट्य हुआ'—इस अन्तिम ऋचा से अनुवचन की समाप्ति करनी चाहिए।

अत्र कंचिदाक्षेपमुत्थापयति—

**तदाहुर्यत्रीन् क्रतूनन्वाहाऽऽग्नेयमुषस्यमाश्विनं कथमस्यैकयर्चा परिदधतः सर्वे त्रयः क्रतवः परिहिता भवन्तीति ॥ इति ।**

क्रतुशब्दः सोमयागसंबन्धिनः प्रातरनुवाकभागानुपलक्षयति। ते च भागास्त्रय आग्नेय उषस्य आश्विनश्चेति। तत्र सर्वानसौ होता ब्रूते तदानीमेकयर्चा परिधानं कुर्वतोऽस्य होतुस्त्रयो भागाः सर्वेऽपि कथं समापिता भवन्तीत्याक्षेपमाहुः ॥

इस सम्बन्ध में याज्ञिक कहते हैं कि जब सोमयाग सम्बन्धी तीन देवों—अग्नि के, उषा के और अश्विनों के लिए मन्त्र पाठ करता है तो एक ऋचा से ही अनुवचन की समाप्ति करके कैसे सभी तीनों यागों का समापन होता है।

तत्र समाधानं दर्शयति—

**अभूदुषा रुशत् पशुरित्युषसो रूपमाऽग्निरधाय्यृत्विय इत्यग्नेरयोजि वां वृषण्वसू रथो दस्रावमर्त्यो माध्वी मम श्रुतं हवमित्यश्विनोरेवमु हास्यैकयर्चा परिदधतः सर्वे त्रयः क्रतवः परिहिता भवन्ति, भवन्ति ॥ १८ ॥ इति ।**

---

१. समुद्रः, अन्तरिक्षम्, सविता, अहोरात्रे, मित्रावरुणौ, सोमः यज्ञः, छन्दांसि, द्यावापृथिवी, दिव्यं नभः, वैश्वानरः, आपः;—इत्येकादशोपयाजदेवताः तै० सं० १.५.११;६.४.१ द्रष्टव्याः। उपयजोपयाजशब्दावेकार्थौ। २. ऋ० ५.७५.९।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

येयमुषाः सूर्योदयात् पूर्वंभाविनी सेयं रुशत् पशुरभूत। रुशन्तः परस्परध्वनिं कुर्वन्तः पशवो यस्यामुषसि सेयं रुशत् पशुः। रात्रौ निद्रां कुर्वन्तः पशव उषःकाले प्राप्ते ध्वनिं कुर्वन्तीति प्रसिद्धमेतत्। उषोदेवताया अस्मिन् पादेऽभिहितत्वादयं प्रथमः पाद उषसो रूपमनुकूल इत्यर्थः। ऋत्वियोऽरणिमथनरूप ऋतुकाले भवस्ताहशोऽग्निरा समन्ताद-धाय्याधानेन संपादितः। अत्राग्नेरभिधानाद् द्वितीयपादोऽग्ने रूपम्। वृषण्वसू वर्धमानधनौ दस्रौ हेऽश्विनौ देवौ वां युवयोरमर्त्यो रथो मनुष्याणामयोग्यः समीचीनो रथोऽयोज्य-श्वाभ्यां योजितः। अतो माध्वी मधुरया वाचा मम हवं मदीयमाह्वानं श्रुतं युवां शृणुतम्। अस्मिन्नुत्तरार्धेऽश्विनोरभिधानादयमर्धोऽश्विनो रूपम्। तस्मादेकयर्चा देवतात्रय-प्रतिपादिकयैतमेव प्रातरनुवाकं परिदधतः समापयतोऽस्य होतुस्त्रयः क्रतवः प्रातरनुवाक-भागाः सर्वे परिहिताः समापिताः भवन्ति। पदाभ्यासोऽध्यायसमाप्त्यर्थः॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीय-पञ्चिकायाः द्वितीयाध्याये (सप्तमाध्याये) अष्टमः खण्डः॥ ८॥ (१८) [४८]

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरं-धरमाधवाचार्यादिशतो सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश' नाम भाष्ये ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायाः द्वितीयऽध्यायः॥२॥

'परस्पर ध्वनि करते हुए पशुओं से युक्त उषा प्रकट हुई'—यह पाद उषा के अनु-कूल है। '[अरणिमन्थन रूप] ऋतु के अनुकूल अग्नि रख दी गई'—[यहाँ अग्नि का कथन होने से] यह अग्नि के अनुकूल है। 'वर्धनशील धन वाले हे अश्विनो! मनुष्यों के लिए अयोग्य तुम्हारे रथ में अश्व जोत दिए गए हैं। मधुर वाणी से मेरे आह्वान को सुनो'—[इस अर्धर्च में अश्विनों का कथन होने से] यह अश्विनों के अनुरूप है। इस प्रकार [तीनों देवों की प्रतिपादक] एक ही ऋचा से अनुवचन की समाप्ति करने से सभी तीनों देवों के याग का समापन हो जाता है।

॥ इस प्रकार ऐतरेय ब्राह्मण की द्वितीयपञ्चिका की द्वितीय अध्याय की हिन्दी पूर्ण हुई॥ २॥

———

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ तृतीयोऽध्यायः

## प्रथमः खण्डः

—: * :—

# अथाष्टमोऽध्यायः

## प्रथमः खण्डः

पर्यग्न्यादेर्विशेषांश्च स्तोकाः स्वाहाकृतीरपि ।
वपां चाधीयते प्रातरनुवाकविधिः परम् ॥ १ ॥

अथापोनप्त्रीयादयो वक्तव्याः । तदर्थमादावाख्यायिकामाह—

**ऋषयो वै सरस्वत्यां सत्रमासत, ते कवषमैलूषं सोमादनयन् दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्येऽदीक्षिष्टेति तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु सरस्वत्या उदकं मा पादिति स बहिर्धन्वोदूढः पिपासया वित्त एतदपोनप्त्रीयमपश्यत् 'प्र देवत्रा ब्रह्मणे गातुरेत्विति तेनापां प्रियं धामोपागच्छत् तमापोऽनूदायंस्तं सरस्वती समन्तं पर्यधावत् ॥** इति ।

भृग्वङ्गिरःप्रभृतय ऋषयः कदाचित् सरस्वत्यामेतन्नामकनदीतीरे सत्रमासत । द्वादशाहमारभ्योपरितनं त्रयोदशरात्रादिकं बहुयजमानकं कर्म सत्रमित्युच्यते । तदुद्दिश्य तत्र स्थितवन्तः, सत्रमन्वतिष्ठन्नित्यर्थः । तदानीं तेषां मध्ये कश्चिदिलूषाख्यस्य पुरुषस्य पुत्रः कवषनामकोऽवस्थितोऽभूत् । ते च ऋषयस्तं कवषं सोमयागान्निःसारितवन्तः । तेषामभिप्राय उच्यते—दास्याः पुत्र इत्युक्तिरधिक्षेपार्था । कितवो द्यूतकारः, तस्माद् अब्राह्मणोऽयम् । ईदृशो नोऽस्माकं शिष्टानां मध्ये स्थित्वा कथं दीक्षां कृतवानिति तेषामभिप्रायः[1] । तं कवषं सरस्वतीतीराद् बहिर्दूरे धन्व जलरहितां भूमिं प्रत्युदवहन्नुद्धृतवन्तो बलादपसारितवन्तः । धन्वदेशे बलात् प्रेरयितॄणामयमभिप्रायः—अत्र जलवर्जितदेश एनं कवषं पिपासा मारयतु, सरस्वत्या नद्याः पवित्रमुदकमयं पापिष्ठो मा पिबत्विति । स च कवषोऽत्र सरस्वत्या बहिर्दूरं धन्व निर्जलं देशं प्रत्युदूढ उत्कर्षेणापसारितः पिपासया वित्तो लब्ध आक्रान्तस्तत्परिहारार्थमेतत् 'प्र देवत्रा' इत्यादिकमपोनप्तृदेवताकं सूक्तं[2] वेदमध्ये विचार्यापश्यत् । तेन सूक्तेन जपितेनापां जलाभिमानिनीनां देवतानां प्रियं स्थानमुपागच्छत् । तं चाऽऽगतमापो देवता अनूदायन्ननुग्रहेणोत्कर्षो यथा भवति तथा प्राप्नुवत्यः । ततः सरस्वती नदी तं कवषं पर्यधावत् परितः प्रवाहवेगेन प्रवृत्ताऽऽसीत् ॥

---

१. अशिष्ट इति तस्य शिष्टाव्यवहार्यत्वम्, दास्याः पुत्र इति निन्दार्थमुक्तं न तु सत्यमित्याशयः ।
२. ऋ० १०.३० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[अपोनप्त्रीय]—

ii. १९ [viii. १] [भृगु व अङ्गिरा आदि] ऋषियों ने सरस्वती नदी के किनारे एक बार एक सत्र [द्वादशाह से आरम्भ करके तेरह रात्रियों आदि १०० दिन तक चलने वाला कर्म] किया। उन्होंने ईलूष के पुत्र कवष को [यह कहते हुए] सोम-याग से निकाल दिया कि 'यह दासी-पुत्र, जुआड़ी और अब्राह्मण हम शिष्टजनों के बीच कैसे दीक्षाप्राप्त करेगा।' उसको नदीतट से बाहर [अर्थात् दूर] रेगिस्तान में निकाल दिया कि 'यहाँ [जलवर्जित-प्रदेश में] यह [कवष] प्यासा ही मर जाय और सरस्वती नदी का जल यह [पापी] न पी पावे।' तट से दूर निर्जल प्रदेश के प्रति निकाला जाकर व पिपासा से आक्रान्त होकर उसने 'प्र देवत्रा' आदि इस 'अपोनप्त्रीय' सूक्त का दर्शन किया। उस [सूक्त के जप] से वह जल के अभिमानी देवता के प्रिय धाम को प्राप्त हुआ। [आए हुए] उसके प्रति आपो देवता अनुग्रह से प्राप्त हुए। [उसके बाद] सरस्वती नदी उस [कवष] के चारों ओर प्रवाह के साथ प्रवृत्त हुईं।

उक्तमर्थं लोकप्रसिद्धया द्रढयति—

**तस्माद्धाप्येतर्हि परिसारकमित्याचक्षते यदेनं सरस्वती समन्तं परिससार ॥ इति ।**

यद्यस्मिन् स्थाने सरस्वती नद्येनं कवषं समन्तं सर्वासु दिक्षु परिससार तत्स्थानमेतर्ह्यप्येतस्मिन्नपि काले तीर्थविशेषाभिज्ञाः पुराणकर्तारः परिसारक मित्येतन्नाम्ना व्यवहरन्ति ॥

क्योंकि जिस स्थान पर सरस्वती नदी ने इन [कवष] को चारों ओर से घेर लिया था इसीलिए उस स्थान को आज भी [तीर्थविशेषज्ञ] 'परिसारक'[1] नाम से पुकारते हैं।

अथ सत्रानुष्ठायिनां तेषामृषीणां कृत्यं दर्शयति—

**ते वा ऋषयोऽब्रुवन् विदुर्वा इमं देवा उपेमं ह्वयामहा इति तथेति तमुपाह्वयन्त तमुपहूयैतदपोनप्त्रीयमकुर्वत प्र देवत्रा ब्रह्मणे गातुरेत्विति तेनापां प्रियं धामोपागच्छन्नुपदेवानाम् ॥ इति ।**

ते भृग्वादयः परस्परमिदमब्रुवन्निमं कवषं देवाः सर्वेऽपि विदुर्वै जानन्त्येव, अतोऽस्य कितवत्वादिदोषो नास्ति, तस्मादिममस्मत् समीपं प्रत्याह्वयाम इति विचार्य तमुपहूय तेन दृष्टमेतदपोनप्तृदेवताकं प्र देवत्रेत्यादि सूक्तमकुर्वत प्रयुक्तवन्तः। तेन सूक्तेन जलदेवतानामन्यदेवतानां च प्रियं स्थानमुपागच्छन् ॥

उन भृगु आदि ऋषियों ने परस्पर कहा—'देवता इसे जानते ही हैं; अतः इसे बुला लें।' उन्होंने कहा—'ठीक है।' उन्होंने उसको बुलाया। उसको बुलाकर [उसके

---

१. द्र० महाभा० वन० ८३. ७५–७६।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

द्वारा दृष्ट] उस 'अपोनप्तृ' देवताक 'प्र देवत्रा' आदि सूक्त का प्रयोग किया और उस [सूक्त] के द्वारा जल देवों के और अन्य देवों के भी प्रिय धाम को उन्होंने प्राप्त किया।

एतद् वेदनपूर्वकमनुष्ठानं च प्रशंसति—

**उपापां प्रियं धाम गच्छत्युप देवानां जयति परमं लोकं य एवं वेद यश्चैवं विद्वानेतदपोनप्त्रीयं कुरुते ।। इति ।**

यस्मादेवं प्रशस्तं तस्मादपोनप्त्रीयं कुर्यादिति विधिरुन्नेय ।।

जो इस प्रकार जानता है और जो इस प्रकार जानते हुए इस 'अपोनप्तृ' देवताक सूक्त का प्रयोग करता है वह जल के और देवों के प्रिय धाम को प्राप्त होता है; और परम लोक को जीत लेता है।

तस्मिन्नपोनप्त्रीयसूक्ते प्रातरनुवाकवत् प्रसक्तमर्धर्चेऽवसानं निवारयितुं नैरन्तर्यं विधत्ते—

**तत्संततमनुब्रूयात् ।। इति ।**

इस सूक्त का पाठ [अर्धर्च के अवसान पर न करके] लगातार करना चाहिए।

होतुर्वेदनं प्रशंसति—

**संततवर्षी ह प्रजाभ्यः पर्जन्यो भवति यत्रैवं विद्वानेतत्संततमन्वाह ।। इति ।**

पर्जन्यो मेघः, संततवर्षी नैरन्तर्येण वृष्टिमान्यावती वृष्टिरपेक्षिता सा संपूर्णा भवतीत्यर्थः ।।

जहाँ इस प्रकार जानते हुए इस सूक्त का पाठ लगातार किया जाता है वहाँ प्रजाओं के लिए मेघ सततवर्षी होते हैं। [अर्थात् जितनी अपेक्षित वृष्टि होती है उतनी ही करते हैं]।

विपक्षे बाधकपूर्वकं स्वपक्षमुपसंहरति—

**यदवग्राहमनुब्रूयाज्जीमूतवर्षी ह प्रजाभ्यः पर्जन्यः स्यात्, तस्मात् तत्संततमेवानूच्यम् ।। इति ।**

अवग्राहं तस्मिंस्तस्मिन्नर्धर्चे पादे वाऽवगृह्यावगृह्य पुनः पुनरवसानं कृत्वा यद्यनुब्रूयात् तदा प्रजोपकारार्थं प्रवृत्तः पर्जन्यो जीमूतवर्षी स्यात्। जीमूतः=पर्वतः। 'जीमूतौ मेघपर्वतौ' इत्युक्तत्वात्।[1]। अनुपयुक्ते पर्वत एव वर्षति न तूपयुक्तेषु सस्येष्वित्यर्थः। यस्मादेवं तस्मादवग्रहो न कार्यः। किं तु संततमेवानूच्यम् ।।

यदि पुनः पुनः अर्धर्च के अवसान पर पढ़ता है तो प्रजा के लिए मेघ भी जीमूतवर्षा अर्थात् पर्वत के समान ठहर-ठहर कर वर्षा करने वाले होते हैं। इसलिए संतत पाठ ही करना चाहिए।

---

१. अमरकोश ३.३.५८।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्मिन् सूक्ते प्रथमाया ऋच आवृत्तिसहितं सांतत्यं विधीयते—

**तस्य त्रिः प्रथमां संततमन्वाह तेनैव तत्सर्वं संततमनूक्तं भवति ॥१९॥ इति ।**

अस्य सूक्तस्य प्रथमायास्त्रिरावृत्तिः सांतत्येन सर्वस्यापि सूक्तस्य सांतत्यं सिध्यति । प्रथमायाः सांतत्यम् आश्वलायनो दर्शयति—'अध्यर्धकारं प्रथमामृगावानमुत्तराः'[1] इति । त्रिरावृत्तायाः प्रथमाया अर्धत्रयेणावसानं कृत्वा पठेत् उत्तरासामृचामवसानं कृत्वा पाठः कर्तव्य इत्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः तृतीयाध्याये (अष्टमाध्याये) प्रथमः खण्डः ॥१॥ (१९) [४९]

उस [सूक्त] की प्रथम ऋचा को लगातार तीन बार बोलना चाहिए । उसी से उस सम्पूर्ण सूक्त का सांतत्य सिद्ध होता है ।

॥ इस प्रकार आठवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

तत्सूक्तवचने प्रकारविशेषं विधत्ते—

**ता एता नवानन्तरायमन्वाह ॥ इति ।**

प्र देवत्रेत्यारभ्य नवसंख्याका ऋचो याः सन्ति तासां द्वयोर्ऋचोर्मध्येऽन्तराया विच्छेदो न भवति तथाऽनुब्रूयात् ॥

ii. २० [ viii. २] [इस सूक्त के पाठ का यह भी एक प्रकार है कि] ऐसा पाठ करना चाहिए कि नव ऋचाओं तक [दो ऋचाओं के मध्य] अन्तराय न हो ।

अपरं विशेषं विधत्ते—

**'हिनोता नो अध्वरं देवयज्येति' दशमीम् ॥ इति ।**

अध्ययनक्रमेणाऽऽववृतंततीरिति दशमी[2] । तां परित्यज्य तदुत्तरभाविनीं 'हिनोता नः'[3] इति दशमीं कृत्वाऽनुब्रूयात् ॥

और दसवीं ['आववृंततीरध' इत्यादि] के स्थान पर ग्यारहवीं 'हिनोता नो' इत्यादि ऋचा का दसवीं ऋचा मानकर पाठ करे ।

परित्यक्तायास्तस्या अनुवचने कालविशेषं विधत्ते—

**आववृंततीरध नु द्विधारा इत्यावृत्तास्वेकधनासु ॥ इति ।**

---

१. आश्व० श्रौ० ५.१.५ । २. ऋ० १०.३०.१० । ३. ऋ० १०.३०.११ ।



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अत्रायं प्रयोगक्रमः—सुत्यादिनात् पूर्वस्मिन् दिने अग्नीषोमीयं पशुमनुष्ठाय वसतीवरीसंज्ञिताः सोमाभिषवकाले सवनीयाः[1] अपः स्वानीय वेद्यामवस्थाप्य मध्यरात्रादूर्ध्वं निद्रां परित्यज्याऽऽग्नीध्रधिष्ण्यादींस्तत्तन्मन्त्रैरभिमृश्य सोमादीनां पात्राण्यासाद्य प्रातरनुवाकार्थं होतारं संप्रेष्य प्रातरनुवाकान्ते 'शृणोत्वग्निः'[2] इति मन्त्रेण हुत्वा तत एकधनाः[3] अप आनेतुं गच्छन्नपोनप्त्रीयसूक्तार्थं होतारं संप्रेष्यैकधना अप आनयेदिति। सोऽयं प्रयोगक्रम आध्वर्यवसूत्रेषु द्रष्टव्यः। तत्र होतारं प्रत्यपोनप्त्रीयविषये प्रैषम् आपस्तम्बो दर्शयति—'यत्राभिजानात्यभूदुषा रुशत्पशुरिति तत्प्रचरण्या जुहोति शृणोत्वग्निः समिधा हवं म इत्यपरं चतुर्गृहीतं गृहीत्वा संप्रेष्यत्यप इष्य होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन आद्रवत नेष्टः पत्नीमुदानयोन्नेतर्होतृचमसेन वसतीवरीभिश्च चात्वालं प्रत्यास्स्व इति'[4] इति। अस्मात् प्रैषादूर्ध्वं होता सूक्तमनुब्रूयात्। तदाहाश्वलायनः—परिहितेऽप इष्य होतरित्युक्तोऽनभिहिंकृत्यापोनप्त्रीया अन्वाह'[5] इति। तत्र पूर्वोक्तदशमीसहिता ऋचोऽनूच्यैकधनिनः पुरुषाः प्रेषिताः सन्त एकधनाख्या अपो घटैर्गृहीत्वा यदा जलसमीपादावर्तन्ते तदानीं तास्वेकधनास्वप्स्वावृत्तासु सतीषु तदावृत्तिं प्रतीक्षमाणो होता पूर्वं परित्यक्ताम् 'आववृंतती:'[6] इत्येतामृचं तस्मिन् कालेऽनुब्रूयादित्यर्थः॥

और दसवीं 'आववृंततीय' आदि ऋचा को ग्यारहवीं के स्थान पर उस समय पढ़ना चाहिए जब 'एकधना' नामक जल को नदी से लाते हैं।

ऋगन्तरकालं विधत्ते—

**'प्रति यदापो अदृश्रमायतीरिति' प्रतिदृश्यमानासु॥ इति।**

---

१. "अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणं·······" इति कात्या० श्रौ० ८.९.७। 'सोमार्था आपो वसतीवरी–शब्देनोच्यन्ते' –इत्यादिश्च तद्वृत्तिः। 'यत्र होतुः······· गृह्णाति'–इति आप० श्रौ० १२.५.५। यावत्यध्वनि प्रातरनुवाकस्य शब्दः श्रूयते, तावत्येव वहन्तीनामपो गृह्णाति'–इति च तद्वृत्तिः। 'वसतु नु न इदमिति तद्वसतीवरीणां वसतीवरीत्वम्'–इति तन्नामनिर्वचनम् तै० सं० ६.४.२.१ द्रष्टव्यम्। वसतीवरीग्रहणविध्यादिकं तु तत्रैव तत उत्तरं द्रष्टव्यम्। तत्तन्मन्त्रास्त्वाम्नातास्तत्र प्रथमे काण्डे ३.१२,१३।

२. तै० सं० १.३.१३।

३. 'एकधनशब्दार्थं स्वयमेव व्याचष्टे—'[प्रत्यगेकधनानयुग्मान्] उदहरणांस्त्रिप्रभृत्या पञ्चदशभ्यः'–इति सू०। उदकं ह्रियत एभिरित्युदहरणाः कलशाः। त्र्यादि पञ्चदशपर्यन्तम्। अयुग्मसंख्यान् विषमसंख्यान् (शत० ब्रा० ३.९.३.३४)। 'अग्निष्टोमे त्रयः पञ्च वा ······· आप्तोर्यामे त्रयोदश वा पञ्चदश वेति'–इत्यादि कात्या० श्रौ० ९.२.२३ वृ०। एकधनस्थानं चोत्तरस्य हविर्धानस्याधस्तादक्षस्य पश्चात्'–इति च तत्रैव० ९.४.१।

४. आप० श्रौ० १२.५.१,२।

५. आश्व० श्रौ० ५.१.१।

६. ऋ० १०.३०.१०।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ता एकधनाख्या आपो ग्रहणस्थानात् प्रतिनिवृत्य तैः पुरुषैरानीयमाना यदा होत्रा दृश्यन्ते तदानीं 'प्रति यदापः'[1] इत्येतामृचमनुब्रूयात् ॥

[उस 'एकधना' नामक जल को लेकर] लौटते हुए पुरुषों को जब होता देखे तब 'प्रति यदापः' आदि तेरहवीं ऋचा का पाठ करे ।

पुनरप्यृगन्तरकालं विधत्ते—

**'आ धेनवः पयसा तूर्ण्यर्था' इत्युपायतीषु ॥ इति ।**

होत्रा दृष्टास्ता एकधनाख्या आपो यदा चात्वालसमीपं प्रत्यागच्छन्ति तदानीमुपायतीषु समीपमागच्छन्तीषु तासु 'आ धेनवः'[2] इत्येतामृचं ब्रूयात् ॥

[होता द्वारा दृष्ट वह जल जब चात्वाल के पास आवे] तब उसके समीप आते हुए 'आ धेनवः' आदि ऋचा का पाठ करे ।

पुनरप्यृगन्तरकालं विधत्ते—

**'समन्या यन्त्युप यन्त्यन्याः' इति समायतीषु ॥ इति ।**

पूर्वत्र 'उन्नेतर्होतृचमसेन वसतीवरीभिश्च चात्वालं प्रत्यास्स्वेति' इति आपस्तम्बसूत्रोक्तः[3] प्रैष उदाहृतः । तत उन्नेता होतृसंबन्धिनं चमसं वसतीवर्याख्याः पूर्वेदिनानीता अपश्चात्वालसमीपे समानयति । मैत्रावरुणस्य चमसाध्वर्यवाद्रवेति प्रेषितत्वान् मैत्रावरुणस्य परिचारकश्चमसाध्वर्युरपि तदीयं चमसं चात्वालसमीपे समानयति । तेन होतृचमसेन वसतीवर्यो गृह्यन्ते । मैत्रावरुणचमसेनैकधनाश्च गृह्यन्ते । ततो वसतीवरीसहिते होतृचमसे मैत्रावरुणचमसगतास्वेकधनास्वध्वर्युणा समीपनीतासु संयोजयितुं समागतासु 'समन्या यन्ति' इत्यादिकामृचमनुब्रूयात् ।[4] तमेतमनुवचनकालम् आपस्तम्बो विशदयति—'होतृचमसेन वसतीवरीभ्यो निषिच्योपरि चात्वाले होतृचमसं मैत्रावरुणचमसं च सं स्पर्श्य वसतीवरीर्व्यानयति 'समन्या यन्ति' इत्यभिज्ञाय होतृचमसान् मैत्रावरुणचमस आनयति मैत्रावरुणचमसाद्धोतृचमस एतद्वा विपरीतम्'[5] इति ॥

जब [ वसतीवरी जल और एकधना जल] मिलाए जायँ तब 'समन्या यन्ति' आदि ऋचा का पाठ करे ।

एतस्या ऋचः प्रशंसार्थमाख्यायिकामाह—

**आपो वा अस्पर्धन्त वयं पूर्वं यज्ञं वक्ष्यामो वयमिति याश्चेमाः पूर्वेद्युर्वसतीवर्यो गृह्यन्ते याश्च प्रातरेकधनास्ता भृगुरपश्यदापो वै स्पर्धन्त इति ता एतयर्चा समज्ञपयत् 'समन्या यन्त्युप यन्त्यन्याः' इति ताः समजानत ॥इति।**

---

१. ऋ० १०.३०.१३ । २. ऋ० ५.४३.१ । ३. आप० श्रौ० १२.५.२ ।
४. ऋ० २.३५.३ । ५. आप० श्रौ० १२.६.१,२ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पूर्वेद्युः संपादिता वसतीवर्याख्या या आपो याश्च परेद्युः सपादिता एकधनाख्यास्ता उभयविधा अपि यज्ञनिर्वहणे पूर्वंभावित्वार्थमन्योन्यं स्पर्धां कृतवत्यः। तदानीं भृगुनामक ऋषिराप एव परस्परं स्पर्धन्त्य इत्यपश्यत्। अर्थवादत्वादचेतनानां स्पर्धायां न चोदनीयम्। यद्वा, तत्तदभिमानिनी देवताऽस्पर्धतेत्यवगन्तव्यम्। ततो भृगुः स्पर्धां दृष्ट्वा 'समन्या यन्ति' इत्येतयर्चा ता उभयीरपः समज्ञपयत् संज्ञानं परस्परमैकमत्यं प्रापयत्। ततो मन्त्रसामर्थ्यात् ता उभयविधा आपः समजानतैकमत्यं प्राप्ताः॥

पहले दिन लाए जाने वाले 'वसतीवरी' नामक जो जल हैं और जो उसी दिन प्रातःकाल लाए जाने वाले 'एकधना' नामक जल हैं इन जलों में आपस में स्पर्धा हो गई कि 'हम पहले यज्ञ का वहन करेंगे', 'हम पहले···।' इस प्रकार स्पर्धा करते हुए उन्हें भृगु ऋषि ने देखा और 'समन्या यन्ति' आदि ऋचा से उन्हें परस्पर एकमत कर दिया। उसके बाद मन्त्रबल से वे दोनों ही जल एकमत को प्राप्त हुए।

वेदनं प्रशंसति—

**संजानाना हास्याऽऽपो यज्ञं वहन्ति य एवं वेद॥** इति।

या वसतीवर्यो याश्चैकधनास्ता द्विविधा अपि संजानानाः परस्परमैकमत्यं प्राप्ता अस्य विदुषो यज्ञं निर्वहन्ति॥

जो इस प्रकार जानता है परस्पर एकमत को प्राप्त हुए जल उसके यज्ञ का वहन करते हैं।

ऋगन्तरकालं विधत्ते—

**'आपो न देवीरुपयन्ति होत्रियमिति होतृचमसे समवनीयमानास्वन्वाह वसतीवरीष्वेकधनासु च॥** इति।

एतासु द्विविधास्वप्सु होतृचमसे सिच्यमानासु तस्मिन् काले 'आपो न देवीः'[1] इत्येतामृचमनुब्रूयात्॥

वसतीवरी और एकधना दोनों जल जब होतृचमस में डाले जाते हैं, तब 'आपो न देवीः' आदि ऋचा का पाठ करना चाहिए।

अथ होतुः कंचिद् यजुरात्मकं मन्त्रं विधत्ते—

**अवेरपोऽध्वर्या३उ इति होताऽध्वर्युं पृच्छति॥** इति।

हे अध्वर्यो द्विविधा अपः किमवेर्लब्धवानसि। अस्मिन् मन्त्रे प्लुतिः[2] प्रश्नार्था॥

'हे अध्वर्यु! क्या तुमको जल प्राप्त हो गया?'—इस प्रकार होता अध्वर्यु से पूँछता है।

---

१. ऋ० १.८३.२। २. पा० सू० ८.२.१०७ वा० १।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तमेतं मन्त्रं व्याचष्टे—

**आपो वै यज्ञोऽविदो यज्ञा३म्, इत्येव तदाह ॥** इति ।

एतद्विविधा अप्यापः सोमाभिषवसाधनत्वेन यज्ञनिर्वाहकत्वाद् यज्ञस्वरूपा एव । तथा सति यज्ञमन्त्ररूपमविदः किं लब्धवानसीत्यनेन प्रकारेण तदाह तन्मन्त्रवाक्यं ब्रूते । यज्ञा३मिति प्लुतिः[1] पूर्ववत् ॥

[इस मन्त्र का तात्पर्य यह है कि सोभाभिषव के साधन होने से दोनों] जल यज्ञ स्वरूप ही हैं अतः 'यज्ञ रूप जल क्या मिल गया ?'—इस प्रकार उस मन्त्र को बोलता है ।

अध्वर्योः प्रत्युत्तरमन्त्रं विधत्ते—

**उतेमनन्नमुरित्यध्वर्युः प्रत्याह ॥** इति ।

उतशब्दोऽपिशब्दार्थः । ईमिति[2] वाक्यपूरणार्थो निपात इमा इत्यस्मिन्नर्थे वर्तते । इमा द्विविधा अप्यापोऽनन्नमुरतिशयेनोपनताः प्राप्ता इति ॥

इस पर अध्वर्यु उत्तर देता है—'यहाँ दोनों ही जल प्राप्त हो गये ।'

एतमध्वर्योरुत्तरमन्त्रं व्याचष्टे—

**उतेमाः पश्येत्येव तदाह ॥** इति ।

इमा द्विविधा अप्यपो हे होतः पश्येत्यनेन प्रकारेण तन्मन्त्रवाक्यं ब्रूते । शाखान्तरेऽप्येतत् सर्वं श्रुतम्—अध्वर्योऽवेरपा इत्याहोतेमनन्नमुरुतेमाः पश्येति वावैतदाहेति[3] ॥

'हे होता ! इन दोनों जल को देखो'—इस प्रकार से मन्त्र बोलता है ।

अथ किंचिन्निगदरूपेण मन्त्रेण होतुः प्रत्युत्थानं विधत्ते—

**तास्वध्वर्यो इन्द्राय सोमं सोता मधुमन्तं वृष्टिवनिं तीव्रान्तं बहुरमध्यं वसुमते रुद्रवत आदित्यवत ऋभुमते विभुमते वाजवते बृहस्पतिवते विश्वदेव्यावते । यस्येन्द्रः पीत्वा वृत्राणि जङ्घनत् प्र स जन्यानि तारिषो३मिति प्रत्युत्तिष्ठति ॥** इति ।

तास्वित्यादिरोमित्यन्तो निगदः । तेन मन्त्रेण होता द्विविधानामप्यपां प्रत्युत्थानं कुर्यात् । हे अध्वर्यो द्विविधास्वप्सु सोमं सोता सोमस्याभिषवकर्ता भव । कीदृशं सोमं, मधुमन्तं माधुर्यरसोपेतं वृष्टिवनिं वृष्टेः संभजनकर्तारं वृष्टिप्रदमित्यर्थः । तीव्रान्तं तीव्र-

---

१. पा० सू० ८.२.१०७ वा० १ ।

२. अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा अगच्छन्ति, पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति (कम्, ईम्; इत, उ)—इति निरु० ३.३.५ ।

३. तै० सं० ६.४.३.४ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मवश्यंभावि फलमन्ते यस्य सोमस्य सोऽयं तीव्रान्तः। अविघ्नेन सोमयागे समाप्ते सति सर्वथा फलत्येवेत्यर्थः। बहुरमध्यं बहुलमङ्गादिकमनुष्ठानं मध्ये प्रारम्भसमाप्त्योरन्तराले यस्यासौ बहुरमध्यः। ऋत्विग्वरणमारभ्योदवसानीयेष्टेः पूर्वं दीक्षणीयाद्यङ्गकर्मभिरुपांश्वन्तर्यामग्रहादिभिश्च प्रधानैरनुष्ठानबाहुल्यं प्रसिद्धम्। कीदृशायेन्द्राय ? वसुरुद्रादित्यैरन्यैरप्यृभुमिर्देवैर्विभुमिः समर्थैर्भृत्यैर्वाजिनान्नेन बृहस्पतिना सुरगुरुणा सर्वदेवहितैर्भोग्यैश्च युक्तत्वेन वस्वादिमते। अयमिन्द्रो यस्य सोमस्य वल्लीरूपस्य रसं पीत्वा वृत्राणि यजमानस्य शत्रून् पापानि च जङ्घनद् विनाशितवांस्तादृशं सोममिति पूर्वत्रान्वयः; अथवा यस्य यजमानस्य संबन्धिनं सोमं पीत्वेति व्याख्येयम्। स यजमानो जन्यानि जने संभावितानि पापानि प्रतारिषत् प्रकर्षेण तीर्णवान् भवति। ओमित्यङ्गीकारार्थः। अयं युक्तार्थ एवमेवेत्यङ्गीकारार्थः॥

हे अध्वर्यु, इन जलों में तुम, वसु, रुद्र व आदित्य से युक्त [और अन्य भी] ऋभुओं से युक्त, समर्थ भृत्यों एवं अन्न से युक्त, [देवों के गुरु] बृहस्पति तथा सभी देवों के हितों व भोग्यों से युक्त इन्द्र के लिए, माधुर्यपूर्ण रस से युक्त, वृष्टि-प्रद एवं अवश्यमेव फल देने वाले तथा [ऋत्विज वरण से लेकर उदवसानीय इष्टि के पूर्व दीक्षणीय आदि] बहुत से अनुष्ठानों के मध्य रहनेवाले सोम के अभिषव करने वाले होओ। जिस [सोम] का रस पीकर इन्द्र ने [यजमान के] शत्रुओं का और पापों का विनाश किया [उस सोम के अभिषवकर्ता होओ]। वह [यजमान] मनुष्यों में सम्भावित पापों को प्रकृष्ट रूप से पार करता है—इस प्रकार 'ओम्' कहकर वह [होता] उनके प्रति उठता है।

एतन्मन्त्रसाध्यं प्रत्युत्थानमुपपादयति—

**प्रत्युत्थेया वा आपः प्रति वै श्रेयांसमायन् तमुत्तिष्ठन्ति, तस्मात् प्रत्युत्थेयाः॥ इति।**

याश्च द्विविधा आपस्ताः प्रत्युत्थेया एव। दर्शनानन्तरमेव प्रत्युत्थानं कर्तव्यम्। लोकेऽपि श्रेयांसमतिप्रशस्तमाचार्यपित्रादिकमायान्तं स्वसंमुखत्वेन समागच्छन्तं प्रति शिष्यपुत्रादय उत्तिष्ठन्त्येव[1]। तस्मादतिप्रशस्ता आपः प्रत्युत्थानयोग्याः॥

वे जल प्रत्युत्थान के योग्य हैं; जैसे लोक में किसी अत्यन्त प्रतिष्ठित [आचार्य व पिता आदि] के आने पर [उनके सम्मान में] खड़े हो जाते हैं। अतः अतिप्रशस्त जल प्रत्युत्थान के योग्य हैं।

न केवलं प्रत्युत्थानं किं त्वनुवर्तनमपि कर्तव्यमिति विधत्ते—

**अनुपर्यावृत्याः॥ इति।**

अनु पृष्ठतः पर्यावृत्याः परितः संचरणयोग्या द्विविधा आपः॥

---

१. मनु० २.११९,१२० श्लो०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[ये जल मात्र प्रत्युत्थान ही नहीं, अपितु] परितः संचरण के अर्थात् प्रदक्षिणा के योग्य भी हैं।

तदेतदुपपादयति—

**अनु वै श्रेयांसं पर्यावर्तन्ते तस्मादनुपर्यावृत्या अनुब्रुवतैवानुप्रपत्तव्यम् ॥इति।**

श्रेयांसमाचार्यादिकमनुगम्य शिष्यादयः परितः संचरन्ति। तस्मादत्रापि शिष्यस्थानीयेन होत्रा पूर्वोक्तमपोनप्त्रीयं निगदमनुब्रुवतैव तासामपां पृष्ठतोऽनुगन्तव्यम् ॥

[आचार्य आदि] बड़ों का शिष्य अनुगमन करके परितः संचरण करते हैं अतः यहाँ भी [शिष्य रूप] होता को [पूर्वोक्त अपोनप्त्रीय निगद] बोलते हुए उन जलों के पीछे अनुगमन करना चाहिए।

ननु यागकर्तृत्वाद् यजमानस्यैवानुव्रजनं युक्तं न तु होतुरित्याशङ्क्याऽऽह—

**ईश्वरो ह यद्यप्यन्यो यजेताथ होतारं यशोऽर्तोस्तस्मादनुब्रुवतैवानुप्रपत्तव्यम् ॥ इति।**

यद्यपि होता यागकर्ता न भवत्यथाप्यनुव्रजन्तं होतारं यशः कीर्तिरर्तोरीश्वरो ह प्राप्तुं समर्थैव। तस्मात् कीर्तिहेतुत्वादनुब्रुवतैवं होत्रा तासामपामनुगमनं कर्तव्यम् ॥

[अनुव्रजन होता करे या यजमान ? उत्तर है]—यद्यपि दूसरा यजन करता है फिर भी होता ही कीर्ति और यश प्राप्ति के लिए समर्थ होता है। इसलिए होता को बोलते हुए ही उन जलों का अनुगमन करना चाहिए।

ननु प्र देवत्रेत्यादीनामृचां तास्वध्वर्यवित्यादिनिगदस्य च पूर्वमेवानूक्तत्वाद् इतः परमनुगमनकाले किमनुवक्तव्यमित्याशङ्क्यानुवक्तव्यामवशिष्टामृचं विधत्ते—

**'अम्बयो यन्त्यध्वभिः'[1] इति एतामनुब्रुवन्ननु प्रपद्येत ॥ इति।**

अस्या ऋचो द्वितीयतृतीयपादावनुवदति—

**'जामयो अध्वरीयताम्। पृञ्चतीर्मधुना पयः' इति ॥ इति।**

तस्यायमर्थः—अम्बेत्यव्ययं मातृवाचकं तद्रूपत्वं यातीत्यम्बयाः। छान्दसो ह्रस्वः। मातृसमाना एता द्विविधा आपोऽध्वभिर्नानाविधैर्मार्गैर्यन्ति गच्छन्ति। कीदृश्यः ? अध्वरीयतामध्वरं यज्ञमात्मन इच्छतां यजमानानां जामयः सनाभयो भ्रातृस्थानीया इत्यर्थः। तथा स्वकीयं पय उदकं मधुना मधुरेण सोमरसेन पृञ्चतीः संयोजयन्त्यः ॥

'यज्ञेच्छु यजमानों की बहनें अपने जल को मधुर सोमरस से संयोजित करती हैं। माता के समान जल नानाविध मार्गों से जाते हैं'—इस ऋचा का पाठ करते हुए उसे अनुगमन करना चाहिए।

---

१. ऋ० १.२३.१६।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्यामृचि मधुशब्दतात्पर्यं दर्शयति—

**योऽमधव्यो यशोऽर्तोबुभूषेत् ॥** इति ।

यः पुमान् पूर्वममधव्यो मधुररसं सोमं नार्हति स यदि यशोऽर्तोः सोमयागनिमित्तां कीर्तिं प्राप्तुं समर्थो भवितुमिच्छेत् स पुमान् पूर्वोक्तामनुब्रुवन्ननुप्रपद्येतेत्यन्वयः ॥

जो मधुर सोमरस नहीं चाहता है और यदि सोमयाग के निमित्त कीर्ति प्राप्त करने में समर्थ होना चाहता है तो उसे पूर्वोक्त ऋचा का पाठ करते हुए अनुगमन करना चाहिए ।

ऋगन्तरं फलविशेषाय विधत्ते—

**'अमूर्या उपसूर्ये याभिर्वा सूर्यः सह' इति तेजस्कामो ब्रह्मवर्चसकामः ॥** इति ।

शरीरकान्ति श्रुताध्ययनसंपत्ति च कामयमानः पुमान् 'अमूर्याः'[1] इत्येतामृचमनुब्रूयात् ॥

तेज की कामना वाले और ब्रह्मवर्चस् की कामना वाले यजमान को 'यह जो सम्पूर्ण जल सूर्य के पास है अथवा सूर्य जिस सब जल के पास हैं'—इस 'अमूर्या' इत्यादि ऋचा का पाठ करना चाहिए ।

फलान्तरार्थमृगन्तरं विधत्ते—

**'अपो देवीरुप ह्वये यत्र गावः पिबन्ति नः' इति पशुकामः ॥** इति ।

पशुप्राप्त्यर्थम् 'अपो देवीः'[2] इत्येतामृचमनुब्रूयात् ॥

'हमारी गाएँ जिस जल का पान करती हैं, उसी जल का हम आह्वान करते हैं'—पशु की कामना वाले यजमान को इस 'अपो देवी' आदि ऋचा का पाठ करना चाहिए ।

अम्बयो यन्त्यमूर्या अपो देवीरित्येतासां तिसृणां विधिमुपसंहरति—

**ता एताः सर्वा एवानुब्रुवन्ननुप्रपद्येतैतेषां कामानामवरुद्ध्यै ॥** इति ।

अथवा नित्यानुष्ठानार्थोऽयं पुनर्विधिः । एतेषामित्यादिस्तत्प्रशंसार्थः ॥

इन सभी ऋचाओं को पढ़ते हुए उसे इन कामनाओं की पूर्ति के लिए अनुगमन करना चाहिए ।

वेदनं प्रशंसति—

**एतान् कामानवरुन्धे य एवं वेद ॥** इति ।

जो इस प्रकार जानता है उसकी ये कामनाएँ पूर्ण हो जाती हैं ।

ऋगन्तरस्य कालं विधत्ते—

**'एमा अग्मन् रेवतीर्जीवधन्या' इति साद्यमानास्वन्वाह वसतीवरीष्वेकधनासु च ॥** इति ।

---

१. ऋ० १.२३.१७ । २. ऋ० १.२३.१८ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उक्ता द्विविधा आपो यदा वेद्यां साद्यन्ते तदानीम् 'एमा अग्मन्'[1] इत्येतामनुब्रूयात् ॥

जब 'वसतीवरी' और 'एकधना' जल वेदि पर रक्खे जाते हैं तब 'एमा अग्मन्' आदि 'जीव के लिए हितप्रद और धन का आधार सब प्रकार का जल आ रहा है'—इस ऋचा का पाठ करना चाहिए ।

ऋगन्तरेण समाप्तिं विधत्ते—

**'आग्मन्नाप उशतीर्बर्हिरेदम्' इति सन्नासु स एतया परिदधाति ॥२०॥** इति ।

द्विविधास्वप्सु वेद्यां स्थापितास्वाऽग्मन्नाप[2] इत्येतामृचमनुब्रूयात् । सोऽनुवक्ता होतैतयैवर्चाऽनुवचनं समापयेत् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्येद्वितीयपञ्चिकायाः तृतीयाध्याये (अष्टमाध्याये) द्वितीयः खण्डः ॥ २ ॥ (२०) [२०]

'तत्परता के साथ जल कुश की ओर आता है'—वेदि पर दोनों जल के रक्खे जाने पर इस ऋचा का पाठ करना चाहिए । वह होता इस ऋचा से अनुवचन की समाप्ति करता है ।

॥ इस प्रकार आठवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

पूर्वस्मिन् खण्डे द्विविधास्वप्सु वेद्यां सादितास्वपोनप्त्रीयानुवचनस्य समापनमुक्तम् । तत्र सादनप्रकार आपस्तम्बेन दर्शितः—'अपरया द्वारा हविर्धानमपः प्रपादयति पूर्वया गतश्रियः पूर्वया यजमानः प्रपद्यते दक्षिणस्य हविर्धानस्य प्रधुरे प्रचरणीयं सादयति यं कामयेत पण्डकः स्यादिति तं प्रचरण्योपस्पृशेदेतस्यैव हविर्धानस्याधस्तात् पुरोक्षं मैत्रावरुणचमसमुत्तरस्यां वर्तन्यां पुरश्चक्रंहोतृचमसमुत्तरस्य हविर्धानस्याधस्तात् पुरोक्षं वसतीवरीः पश्चादक्षमेकधना एतद्वा विपरीतम् अदो यजमानोऽनुप्रपद्यते'[3] इति । एवं सादितास्वप्स्वपोनप्त्रीया ऋचः समाप्य होताऽवतिष्ठते । ततोऽध्वर्युः दधिग्रहेण[4] उपांशुग्रहेण, अदाभ्यग्रहेण उपांशुग्रहेणान्तर्यामग्रहेण क्रमात् प्रचरति[5] तावदयं होता वाचं नियम्यैवास्ते ॥

तदिदं विधत्ते—

**शिरो वा एतद् यज्ञस्य यत्प्रातरनुवाकः; प्राणापाना उपांश्वन्तर्यामौ; वज्र एव वाङ् नाहुतयोरुपांश्वन्तर्यामयोर्होता वाचं विसृजेत ॥** इति ।

योऽयं प्रातरनुवाकः पूर्वमुक्तः सोऽयं यज्ञस्य शिरःस्थानीय उपांश्वन्तर्यामग्रहौ प्राणापानस्थानीयौ, "एष ते योनिः प्राणाय त्वा", "एष ते योनिरपानाय त्वेति" तदीयमन्त्रयोः

---

१. ऋ० १०.३०.१४ । २. ऋ० १०.३०.१५ । ३. आप० श्रौ० १२.६.९ ।

४. दधिग्रहो नित्यः काम्यश्च । काम्यावितरौ (आज्यग्रहसोमग्रहौ) आप० १२.७.८ ।

५. ग्रहकाण्डं तद्ब्राह्मणं (तै० सं० १.४.१-४२;६.४,५) चैतद् द्वयमेव द्रष्टव्यम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

श्रवणात् ।[1] होतुर्या वाक् सा वज्रस्थानीया । अत एवान्यत्र श्रूयते—'यद्वै होताऽध्वर्युमभ्याह्वयते वज्रमेवमभिप्रवर्तयति'[2] इति । एवं सत्यध्वर्युणोपांश्वन्तर्यामग्रहयोर्हुतयोः सतोः पश्चाद्धोता वाचं विसृजेत् । तावत्पर्यन्तं वाचं नियच्छेत् ॥

[उपांशु और अन्तर्याम ग्रह]—

ii. २१ [viii. ३]—जो यह प्रातरनुवाक है वह यज्ञ का सिरस्थानीय है। उपांशु और अन्तर्याम [नामक ग्रह अर्थात् वह पात्र जिनमें सोम रखा जाता है] प्राण और अपान हैं। [होता की] वाणी वस्तुतः वज्र है। [अतः] उपांशु और अन्तर्याम ग्रह की आहुति के समय होता को वाणी का विसर्जन करना चाहिए [अर्थात् तब तक वाणी का नियमन करे]।

विपक्षबाधकपूर्वकं स्वपक्षमुपसंहरति—

**यदहुतयोरुपांश्वन्तर्यामयोर्होता वाचं विसृजेत् वाचा वज्रेण यजमानस्य प्राणान् वीयाद् य एनं तत्र ब्रूयाद् वाचा वज्रेण यजमानस्य प्राणान् व्यगात् प्राण एनं हास्यतीति शश्वत् तथा स्यात् तस्मान्नाहुतयोरुपांश्वन्तर्यामयोर्होता वाचं विसृजेत ॥** इति ।

उपांश्वन्तर्यामहोमात् पूर्वं वाचं विसृजन् होता वाग्वज्रेण यजमानस्य प्राणान् वीयाद् विगतान् कुर्यात् । कथं प्राणविगम इति, तदुच्यते—तत्र तस्मिन् होतुर्वाग्विसर्गे सति यः कश्चिदागत्यायं होता वाग्वज्रेण यजमानस्य प्राणान् व्यगाद् विगतान् अकरोत् तस्मात् प्राण एनं यजमानं हास्यति परित्यजतीत्येनं होतारं प्रति ब्रूयात् । तदानीं तेन पुरुषेण होतरि शप्ते सति तदीयशापो न शश्वत् तथा स्यादवश्यं यजमानप्राणविगमो होतुस्तद्वधप्रत्यवायश्च भवेत् । तस्मान्नाहुतयोरुपांश्वन्तर्यामयोर्होता वाचं विसृजेत ॥

यदि वह उपांशु और अन्तर्याम होम के पूर्व वाणी बोलता है तो वाणी रूपी वज्र से यजमान के प्राण अवरुद्ध करता है। [अतः यदि वह बोल पड़े तो] वहाँ किसी अन्य को चाहिए कि होता से बोले कि 'वाणी रूपी वज्र से यजमान के प्राणों को इसने अवरुद्ध कर दिया है। इसलिए प्राण इस [यजमान] को छोड़ देगा, इस प्रकार अन्य पुरुष से अभिशप्त होता अवश्य ही वैसा हो जाता है। इसलिए उपांशु और अन्तर्याम होम के बीच होता को वाणी नहीं बोलना चाहिए।

उपांश्वन्तर्यामहोमादूर्ध्वं वाग्विसर्गप्रकारं विधत्ते—

**'प्राणं यच्छ स्वाहा त्वा सुहव सूर्यायेत्युपांशुमनुमन्त्रयेत तमभि प्राणेत् प्राण प्राणं मे यच्छेत्यपानं यच्छ स्वाहा त्वा सुहव सूर्यायेत्यन्तर्याममनुमन्त्रयेत तमभ्यपानेदपानापानं मे यच्छेति व्यानाय त्वेत्युपांशुसवनं ग्रावाणमभिमृश्य वाचं विसृजेत ॥** इति ।

---

१. तै० सं० १.४.२,३ ।   २. तै० सं० ३.२.९.७ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शोभनो हवो होमो यस्येत्युपांशुग्रहस्य सोऽयं सुहवः। हे सुहव सूर्याय त्वदभिमानिसूर्यदेवताप्रीत्यर्थं त्वोपांशुग्रहरूपं स्वाहा सुष्ठु हुतं करोमि। अतो यजमानसंबन्धिनं प्राणं यच्छ देहीत्यनेन मन्त्रेणोपांशुग्रहस्यानुमन्त्रणं कुर्यादिति। अन्वीक्ष्य मन्त्रणमनुमन्त्रणम्। ततस्तमभि प्राणेत् तमुपांशुग्रहमभिलक्ष्योच्छ्वासं कुर्यात्। तत्र प्राणेत्यादिको मन्त्रः। हे प्राणरूपोपांशुग्रह मे मह्यं प्राणं यच्छ देहि। हे सुहवान्तर्यामग्रहेत्येतावान्विशेषः। अन्यत् पूर्ववत्। अपानेन्निश्वासं कुर्यात्। उपांशुग्रहार्थं सोमाभिषवहेतुर्यः पाषाणस्तं व्यानाय त्वेति मन्त्रेणाभिमृशेत्। हे पाषाणोपांशुसवनाख्य त्वां प्राणापानयोर्मध्यवर्तिव्यानवायुसिद्ध्यर्थमभिमृशामीति शेषः। अभिमर्शनादूर्ध्वं मौनं परित्यज्य वाग्व्यवहारं कुर्यात्॥

**[उपांशु और अन्तर्याम होम के बाद] हे शुभ होम वाले [उपांशु ग्रह], सूर्य देवता की प्रीति के लिए [उपांशु ग्रह रूपी] सुन्दर होम करता हूँ' [अतः यजमान के प्राण को दो]—इस मन्त्र से उपांशु ग्रह का अनुमन्त्रण करना चाहिए। उसके बाद उस [उपांशु ग्रह] को देखकर 'हे प्राण [रूप उपांशु ग्रह] मुझमें प्राण वायु का सञ्चार करो'—इस मन्त्र से उच्छ्वास लेना चाहिए। हे शुभ होम वाले (अन्तर्याम ग्रह), सूर्य के प्रीत्यर्थ [अन्तर्याम ग्रह रूप] सुन्दर होम करता हूँ'—इन मन्त्र से अन्तर्याम ग्रह का अनुमन्त्रण करना चाहिए। उसके बाद उस अन्तर्याम ग्रह को देखकर 'हे अपान [रूप अन्तर्याम ग्रह] मुझमें अपान वायु का सञ्चरण करो'—इस मन्त्र से निश्वास लेना चाहिए। 'हे उपांशु सवन नामक पाषाण, तुम्हें [प्राण व अपान के मध्यवर्ती] व्यान वायु की सिद्धि के लिए स्पर्श करता हूँ'—इस मन्त्र से उपांशु ग्रह के लिए सोम के अभिषवार्थ लाए गए पाषाण को स्पर्श करके वाणी बोलना चाहिए।**

उपांशुसवनमभिमर्शनमुपपादयति—

**आत्मा वा उपांशुसवन, आत्मन्येव तद्धोता प्राणान् प्रतिधाय वाचं विसृजते सर्वायुः, सर्वायुत्वाय॥** इति।

योऽयमुपांशुसवनो ग्रावा सोऽयमात्मा वै शरीरमेतत्तदीयाभिमर्शनेनायं होता शरीर एव प्राणानवस्थाप्य स्वयं शतसंवत्सरपरिमितेन सर्वेणाऽऽयुषा युक्तो वाचं विसृजते। तच्च यजमानस्य संपूर्णायुःप्राप्तये भवति॥

**यह उपांशु सवन [नामक पत्थर] आत्मा है। उस [अभिमर्शण] के द्वारा होता शरीर में ही प्राणों को स्थापित करके स्वयं [सौ वर्ष परिमित] सभी आयु से युक्त वाणी बोलता है, जो यजमान के लिए सम्पूर्ण आयु प्राप्त्यर्थ होता है।**

वेदनं प्रशंसति—

**सर्वमायुरेति य एवं वेद॥ २१॥**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः तृतीयाध्याये (अष्टमाध्याये) तृतीयः खण्डः॥ ३॥ (२१) [५१]

**जो इस प्रकार जानता है वह पूर्णायु को प्राप्त करता है।**

**॥ इस प्रकार आठवें अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई॥ ३॥**

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ चतुर्थः खण्डः

अन्तर्यामिग्रहहोमादूर्ध्वं महाभिषवं कृत्वैन्द्रवायवमारभ्य यवमत्यन्तग्रहार्थं तत्तत्पात्रेषु सोमं गृहीत्वाऽऽसादितेषु वैप्रुषान् होमान् हुत्वा बहिष्पवमानार्थं प्रसर्पयेयुः। प्रसर्पणप्रकारम् आपस्तम्ब आह—'सहहोतारं मनसाऽनुद्रुत्याऽऽहवनीये सग्रहं हुत्वोदञ्चः प्रह्वा बहिष्पवमानार्थं पञ्चर्त्विजः समन्वारब्धाः सर्पन्त्यध्वर्युं प्रस्तोताऽन्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गातोद्गातारं ब्रह्मा ब्रह्माणं यजमानः'[1] इति। आश्वलायनोऽप्याह—'अध्वर्युमुखाः समन्वारब्धाः सर्पन्त्यातीर्थदेशात्'[2] 'तत्स्तोत्रायोपविशन्त्युद्गातारमभिमुखाः, तान् होताऽनुमन्त्रयतेऽत्रैवाऽऽसीनो यो देवानामिह'[3] इति॥

ततो होतुः सर्पणं निवारयितुं पूर्वपक्षमुपन्यस्यति—

**तदाहुः सर्पे३त्, न सर्पे३त्, इति सर्पेदिति हैक आहुरुभयेषां वा एष देवमनुष्याणां भक्षो यद्बहिष्पवमानस्तस्मादेनमभिसंगच्छन्त इति वदन्तः॥** इति।

तत्रैन्द्रवायवादिग्रहणादूर्ध्वकालेऽध्वर्युप्रमुखाणां सर्पणे केचिदाहुर्विचारयन्ति। किमयं होता तैः सह सर्पेन्न वेति? विचारार्थे प्लुतिः।[4] अयं होताऽपि सर्पेदिति केचित् पूर्वपक्षिण आहुः। तत्रोपपत्तिं च कथयन्ति। उद्गातृभिर्गेयम् 'उपास्मै गायता नरः'[5] इत्यादिकं स्तोत्रं बहिष्पवमानशब्देनोच्यते। यो बहिष्पवमान एष एव देवानां मनुष्याणां चोभयेषां भक्षः। तेन हि ते सर्वे तृप्यन्ति। अत एव पूर्वत्र स्तोत्रभागानां स्तोत्रेण प्रीतिः श्रुता।[6] तस्मात्कारणादेनं बहिष्पवमानं देवमनुष्याः सर्वेऽभिसंगच्छन्ति इत्येतामुपपत्तिं वदन्तः॥

**[प्रसर्पण]—**

ii. २२ [viii.४]—कुछ याज्ञिकों का प्रश्न है कि होता उन सबके साथ चले, या न चले? बहिष्पवमान स्तोत्र देवों और मनुष्यों दोनों का ही भक्ष्य है [वे सभी उससे तृप्त होते हैं]—इसलिए वे सभी उसके साथ उस ओर जाते हैं'—ऐसा कहते हुए कुछ याज्ञिकों का मत है कि 'उसे भी प्रसर्पण करना चाहिए।'

पूर्वपक्षिणो यदाहुस्तन्निराकरोति—

**तत्तन्नाऽऽदृत्यम्॥** इति।

---

१. आप० श्रौ० १२.१६.१७, १७.१।
२. 'तेनान्तरेण प्रतिपद्यन्ते चात्वालं चोत्करं चैतद् वै देयानां तीर्थम्'–षड्विंश ब्रा० ३.१।
३. आश्व० श्रौ० ८.१३. २३; ५.२.७,८। ४. पा० सू० ८.२.१०७ वा० १।
५. सा० उ० आ० १.१.१–९। ६. द्र० इतः पूर्वम्, २८२ पृष्ठे।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्मिन् सर्पणे तत्पूर्वपक्षिमतं नाऽऽदरणीयम् ॥

[पूर्वपक्षी का] उस [सर्पण] का वह मत आदरणीय नहीं है।

विपक्षे वाधं दर्शयति—

**यत्सर्पेदृचमेव तत्साम्नोऽनुवर्त्मानं कुर्याद् य एनं तत्र ब्रूयादनुवर्त्मा न्वा अयं होता सामगस्याभूद् उद्गातरि यशोऽधादच्योष्टाऽऽयतनाच्च्योष्यत आयतनादिति शश्वत् तथा स्यात् ॥** इति।

यद्ययं होता तैः सह सर्पेत्तदानीं स्वकीयामृचमेव साम्नोऽनुवर्त्मानं पृष्ठगामिनीं कुर्यात्। तच्चायुक्तम्। ऋच आधारत्वात्। साम्न आधेयत्वात् पश्चाद्भावि। अत एव च्छन्दोगा आमनन्ति—'तदेतस्यामृच्यध्यूढ़ं साम तस्मादृच्यध्यूढ़ं साम गीयते'[1] इति। ततः पुरोगामिन्या ऋचः पश्चाद्गामित्वमयुक्तम्। तत्र होतुः सर्पणे यः कश्चिदागत्यैनं होतारं ब्रूयादयं होता सामगस्योद्गातुरनुवर्त्मा न्वै पृष्ठगाम्येवाभूत्। अतो होता स्वकीयां यशः कीर्तिमुद्गातर्यधात् स्थापितवान्। स्वयमायतनात् स्वकीयपदादच्योष्ट च्युतवान्। इतः परमपि च्योष्यते स्वकीयस्थानात प्रच्युतो भविष्यतीत्येवं पुरुषान्तरेण शप्तस्य होतुरवश्यं तथा भवेत् ॥

यदि यह होता उनके साथ प्रसर्पण करता है तो अपनी ऋचाओं को ही साम के पीछे चलनेवाला बनाता है। [ऋचाएँ आधार हैं। अतः यह ठीक नहीं है, साम आधेय है अतः उसे पीछे रहना चाहिए] वहाँ जो कोई आकर इस होता से कहे कि 'यह होता सामगान करने वाले उद्गाता का अनुगमन करने वाला हो गया अतः होता ने अपना यश उद्गाता में स्थापित कर दिया। अतः स्वकीय पद से च्युत हो गया और आगे स्वकीय-स्थान से भी च्युत होएगा—इस प्रकार अन्य पुरुष के द्वारा अभिशप्त होता अवश्य ही वैसा होता है।

सर्पणं निवार्यानुमन्त्रणं विधत्ते—

**तस्मात् तत्रैवाऽऽसीनोऽनुमन्त्रयेत ॥** इति।

यस्मात् प्रसर्पणे दोषाः सन्ति तस्माद् यत्र पूर्वमवस्थितस्तत्रैवाऽऽसीन[2] इतरेषां सर्पणमन्वीक्ष्यानुमन्त्रयेत ॥

इसलिए वहीं पर बैठे हुए [दूसरों का प्रसर्पण देखकर] अनुमन्त्रण करना चाहिए।

तस्मिन्ननुमन्त्रणे मन्त्रं दर्शयति—

**यो देवानामिह सोमपीथो यज्ञे बर्हिषि वेद्या३म्। तस्यापि भक्षयामसीति ॥** इति।

---

१. छा० उ० १.६.१। २. 'तान् होताऽनुमन्त्रयतेऽत्रैवासीनः'—आश्व० श्रौ० ५.२.८।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इह देशे क्रियमाणो यः सोमयागस्तस्मिन् या वेदिर्यच्च तत्रत्यं बर्हिस्तत्र सर्वदेवानां संबन्धी सोमपीथः सोमयागरूपो बहिष्पवमानाख्यो यो भक्षोऽस्ति तस्याप्यंशं वयं भक्षयाम इत्येषोऽनुमन्त्रणमन्त्रः ॥

'इस [क्रियमाण] प्रदेश में जो सोमभाग है उसमें वेदि पर जो बर्हि है वहाँ देवों का सोमभाग रूप बहिष्पवमान नामक जो खाद्य है उसके भी अंश का हम भक्षण करें'— होता इस मन्त्र से अनुमन्त्रण करे।

तं प्रशंसति—

**एवमु हास्याऽऽत्मा सोमपीथादनन्तरितो भवति ॥** इति।

एवमेवानुमन्त्रणे सत्यस्य होतुरात्मा जीवः सोमपानात् कदाचिदप्यन्तरितो न भवति ॥

इस प्रकार अनुमन्त्रण करने पर इस [होता] की आत्मा सोमपान से कभी भी वंचित नहीं होती।

मन्त्रान्तरं च विधत्ते—

**अथो ब्रूयान्मुखमसि मुखं भूयासमिति ॥** इति।

पूर्वोक्तान् मन्त्रादनन्तरं मुखमित्यादिकमपि मन्त्रं ब्रूयात्। हे बहिष्पवमान यज्ञस्य त्वं मुखमसि यज्ञमध्ये मुखोऽसि।[1] अतः त्वत् प्रसादादहमपि मुखं मुख्यो भूयासम् ॥

[पूर्वोक्त मन्त्र के] अनन्तर 'हे बहिष्पवमान, तुम [यज्ञ में] मुख्य हो अतः तुम्हारे प्रसाद से मैं भी मुख्य हो जाऊँ'—इस मन्त्र को बोले।

एतं मन्त्रं प्रशंसति—

**मुखं वा एतद् यज्ञस्य यद् बहिष्पवमानः ॥** इति।

स्तोत्रेषु सर्वेष्वाद्यत्वाद् बहिष्पवमानस्य मुखत्वम् ॥

जो यह बहिष्पवमान है वह [सभी स्तोत्रों में प्रथमतः होने के कारण] यज्ञ का मुख है।

वेदनं प्रशंसति—

**मुखं स्वेषु भवति, श्रेष्ठः स्वानां भवति य एवं वेद ॥** इति।

मुखत्वं लोकव्यवहारप्रवर्तकत्वम्, श्रेष्ठत्वं विद्यावित्तादिसंपत्तिः ॥

अथ सवनीयपुरोडाशेषु येयं मैत्रावरुणी पयस्याऽस्ति तत्सद्भाव आपस्तम्बेन दर्शितः— 'प्राग्वँशे प्रतिप्रस्थाता सवनीयान्निर्वपति सर्वे यवा भवन्ति लाजार्थान् परिहाप्येन्द्राय

१. 'यत् यः सवनत्रययोगिपवमानत्रयादिभूतत्वात्'—इति षड्गुरुशिष्यः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हरिवते धाना इन्द्राय पूषण्वते करम्भं सरस्वत्यै भारत्यै परिवापमिन्द्राय पुरोडाशं मित्रावरुणाभ्यां पयस्याम्"[1] इति ॥

जो इस प्रकार जानता है वह स्वजनों में मुख्यत्व [लोकव्यवहार के प्रवर्तकत्व] को प्राप्त करता है। और अपने जनों में [विद्यावित्त आदि से] श्रेष्ठ होता है।

तामेतां पयस्यां प्रशंसितुमाख्यायिकामाह—

**आसुरी वै दीर्घजिह्वी देवानां प्रातःसवनमवालेट्, तद्व्यमाद्यत् ते देवाः प्राजिज्ञासन्त ते मित्रावरुणावब्रुवन् युवमिदं निष्कुरुतमिति, तौ तथेत्यब्रूतां तौ वै वो वरं वृणावहा इति, वृणाथामिति, तावेतमेव वरमवृणातां, प्रातःसवने पयस्यां सैनयोरेषाऽच्युता वरवृता, ह्येनयोस्तद्यदस्यै विमत्तमिव तदस्यै समृद्धं विमत्तमिव हि तौ तया निरकुरुताम् ॥२२॥** इति ।

दीर्घा जिह्वा यस्याः सा दीर्घजिह्वी। असुरजातावुत्पन्नत्वादासुरी। तथा च तलवकारा आमनन्ति—'दीर्घजीह्वी वा असुर्या सा'[2] इति। सा च देवानां संबन्धि प्रातःसवनमवालेट् स्वकीयया जिह्वया तस्यावलेहं कृतवती। तत्र प्रातःसवनं विषजिह्वालेहनेन 'व्यमाद्यद्'[3] विविधं मत्तमभूत्। सर्वस्यापि सवनप्रयोगस्य विपर्यासो जातः। ते देवास्तत्परिहारोपायं प्राजिज्ञासन्त प्रकर्षेण विचारितवन्तः। विचार्य च तत्परिहारसमर्थौ मित्रावरुणावब्रुवन् हे मित्रावरुणौ युवं युवामुभाविदं प्रातःसवनं निष्कुरुतं निर्गतदोषं[4] कुरुतम्।

---

१. आप० श्रौ० १२.४.४-६।

२. दीर्घजिह्वी वा इदँ रक्षो यज्ञहा यज्ञानवलिहत्यचरत्'—इत्यादि ता० ब्रा० १३.६। 'श्वानं दीर्घजिह्वयम्'—इति ऋ० ९.१०१.१। 'दीर्घजिह्वी च च्छन्दसि'—इति पा० सू० ४.१.५९। निपातनादीकारः। महाभारते त्वियमादिपर्वणि दानवीति, वनपर्वणि तु राक्षसीति। 'आसुरी' जातिलक्षणो ङीप। 'दीर्घजिह्वी वा असुर्या सा' इति तलवकारब्राह्मणे दर्शनादसुरीति तद्धितान्तमेव द्रष्टव्यम्'—इति भट्टभास्करः। 'अत्र केचित्—आसुरी वै दीर्घजिह्वीति ह्रस्वादिमाहुः। कथम्? 'दीर्घजिह्वी ह वा असुर्या' इति तलवकारश्रुतेः संहितायाश्च सम्भवात् इति। अपरे पुनरेतन्नानुमन्यन्ते तद्धितेष्वचामादेः इति दीर्घस्मरणात्। ननु तलवकारश्रुतेर्ह्रस्वोऽपि स्याद् इत्युक्तम्। तत्तु नात्रोपयुज्यते। दृष्टानुविधिश्छन्दसीति स्मरणात् यावद्दर्शनभावी हि छान्दसप्रयोगो न सदृशमुपसंक्रामति इति न्यायाच्च। अत आसुरीति दीर्घाद्येव पदम्'—इति गोविन्दस्वामी।

३. 'व्यमाद्यत् व्यमादयत् विरूपस्य मदस्य हेतुरभवत्। यद्वा, विमत्तमभूत् मदरहितम् अभूत्'—इति भट्टभास्करः। 'मत्तं बभूव वि नाना। अमाद्यत्, 'शमामष्टानां दीर्घः श्यनि' पा० सू० ७.३.७४ इति षड्गुरुशिष्यः।

४. 'निर्गतविषाददोषम्'—इति वा पाठः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्तावदङ्गीकृत्य देवेभ्यो वरं याचित्वा प्रातःसवनगतां पयस्यामेव स्वकीयवरत्वेन वृतवन्तौ। पयसि भवाऽऽमिक्षा पयस्या। सैषा वरवृतत्वाद् एनयोः कदाचिदप्यविच्युता। तत्र प्रातःसवने यदङ्गमस्या अनया दीर्घजीह्वया विमत्तमिव कृतमासीत्। तत्सर्वमस्या अनया पयस्यया समृद्धमासीत्। यस्माद् विमत्तमिव स्थितं प्रातःसवनं तौ मित्रावरुणौ तया पयस्यया निरकुरुतां निवारितवन्तौ तस्मात् समृद्धिर्युक्ता॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः तृतीयाध्याये (अष्टमाध्याये) चतुर्थः खण्डः ॥४॥ (२२) [५२]

दीर्घजिह्वी [=लम्बी जीभ वाली] नामक एक आसुरी स्त्री ने देवताओं के प्रातःसवन को चाट लिया। वह [प्रातःसवन चाटने से] बहुत मतवाला हुआ [अर्थात् सम्पूर्ण सवन प्रयोग उलट-पलट गया] उन देवों ने उसके परिहार के उपाय के बारे में उत्कृष्ट रूप से विचार किया। उन्होंने मित्र और वरुण से कहा—'हे मित्रावरुण, आप दोनों इस प्रातःसवन को दोषरहित करें।' उन दोनों ने कहा—'अच्छा, पहले हम आपसे वर माँग लें।' देवों ने कहा—'वरण करें।' उन दोनों ने यही वर माँगा कि प्रातःसवन का पयस्या अर्थात् मट्ठा [ही वर है]। उसी वर के वरण करने के कारण इनसे वे कभी भी च्युत नहीं होते। उस प्रातःसवन का जो [अङ्ग] इस [दीर्घजिह्वी] के द्वारा मादकतारहित सा किया गया था वह सभी इस मट्ठे से समृद्ध हुआ। क्योंकि मादकतारहित प्रातःसवन को उन [मित्र और वरुण] ने उस [पयस्या] से निवारित किया।

॥ इस प्रकार आठवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

अथ सवनीयपुरोडाशान्[1] विधातुमादौ कथामाह—

**देवानां वै सवनानि नाध्रियन्त त एतान् पुरोळाशानपश्यंस्ताननुसवनं निरवपन् सवनानां धृत्यै ततो वै तानि तेषामध्रियन्त॥ इति।**

यानि प्रातःसवनमाध्यंदिनसवनतृतीयसवनानि सन्ति तानि त्रीणि देवानामर्थे नाध्रियन्त नैव धृतानि देहैरवरोद्धुमशक्यान्यासन्। ते देवास्तद्धारणहेतून् पञ्च पुरोडाशान् दृष्ट्वा तान् प्रतिसवनं निरवपंस्तैः पुरोडाशैस्तुष्टानि सवनानि देवानामर्थे धृतान्यासन्॥

[पुरोडाश]—

ii. २३ [viii.५]—[प्रातः, माध्यन्दिन आदि] तीनों सवन देवों के लिए स्थिर नहीं रहे। [उसकी स्थिरता के हेतुभूत] उन्होंने इन पुरोडाशों को देखा। सवनों की

---

१. सवनेषु भवः सवनीयः। वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने, अङ्गैस्तृतीयसवने इत्येवं यष्टव्यः'—इति आश्व० श्रौ० ५.३.१ वृत्तिः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्थिरता के लिए उन्होंने प्रत्येक सवन के लिए अलग-अलग पुरोडाश का निर्वपन किया। उसके बाद से ही वस्तुतः पुरोडाशों से सन्तुष्ट उन देवों के [सवनों] ने उन [देवों] के लिए स्थिरता धारण की।

आख्यायिकया प्रशस्य पुरोडाशान् विधत्ते—

**तद् यदनुसवनं पुरोळाशा निरुप्यन्ते सवनानामेव धृत्यै तथा हि तानि तेषामध्रियन्त ।।** इति ।

तत् तस्माद् दैवैर्निरुप्तत्वाद् यदि यजमानाः प्रतिसवनं पुरोळाशा निरुप्येरंस्तदा स निर्वापः सवनानां धारणाय भवति। तथा तेनैव हि प्रकारेण तानि सवनानि तेषां देवानामर्थे ध्रियन्ते। अतो मनुष्याणामपि निर्वाप एव धारणोपायः ।।

इसलिए देवों के द्वारा निर्वपन किए जाने के कारण यजमान प्रत्येक सवन के लिए अलग-अलग निर्वपन करें तो वह निर्वाप सवनों के धारण के लिए होता है। उसी प्रकार वे सवन उन [देवों] के लिऐ धृत होते हैं।

इदानीं पुरोडाशशब्दं निर्वक्ति—

**पुरो वा एतान् देवा अक्रत यत्पुरोळाशास्तत्पुरोळाशानां पुरोळाशत्वम् ।।**इति।

यत्पुरोळाशाः सन्त्येतान् देवाः पुरो वै सोमाहुतिभ्यः पुरस्तादेवाक्रत कृतवन्तः, तस्मात् पुरोडाशेति नाम संपन्नम्। 'दा दाने' इति धातुः[1], पुरतो दीयमानं हविरित्यर्थः। यद्यप्यत्र धानादिषु हविष्षु चतुर्थ एव[2] पुरोडाशः, तथाऽपि च्छत्रिन्यायेन धानादीनां सर्वेषां पुरोडाशत्वोपचारः। यद्वा, पुरःशब्द एवं व्याख्येयः—सवनानां धारणार्थं देवा एतानि हवींषि दुर्गमाणि पुराण्यकुर्वतेति। यदि पुरस्ताद् यदि वा पुराणि सर्वथाऽपि पुरोडाश-शब्दो निष्पद्यते[3] ।।

जो पुरोडाश हैं उनको देवों ने सोमाहुतियों के पुरः अर्थात् सामने किया। यही पुरोडाश नाम का कारण [पुरोडाश अर्थात् पुरतः दीयमान] है।

---

१. 'पुरो दाश्यते पुरोडाः'—इति सि० कौ० वै० ३ अ०। पा० सू० ३.२,७१।

२. 'एतानि हवींषि—आज्यं, धानाः, करम्भः, परिवापः, पुरोळाशः, पयस्येति'—इति (इतः परम्, ३०७ पृ०) ऐ० श्रुतेर्यद्यपि पुरोडाशस्य पञ्चमत्वं गम्यते, परमुत्तर-खण्डे 'धानाः करम्भः परिवापः पुरोळाशः पयस्येत्येष वै यज्ञो हविष्पङ्क्तिः'—इत्यादि ऐ० ८.६ श्रुतेश्चतुर्थत्वमेव (द्र० ३०८ पृ०)।

३. 'पुरः परस्तात् कर्मारम्भ एव करणाद् इत्यर्थः। बहुवचनं सर्वपुरोडाशपरिग्रहार्थम्। इतरथा हि सन्निहितपुरोडाशमात्रनिर्वचनं स्यात्। सवनबहुत्वाद् वा बहुवचनम्'—इति भट्टभास्करः।



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ पुरोडाशस्वरूपविशेषं निर्धारयितुं पूर्वपक्षमाह—

**तदाहुरनुसवनं पुरोळाशान् निर्वपेदष्टाकपालं प्रातःसवन एकादशकपालं माध्यंदिने सवने, द्वादशकपालं तृतीयसवने; तथाहि सवनानां रूपं तथा छन्दसामिति ।।** इति ।

तत् तेषु पुरोडाशेषु पूर्वपक्षिण आहुः—प्रतिसवनं निर्वपणीयेषु पुरोडाशेषु क्रमेण कपालसंख्याऽष्टत्वादिरूपा द्रष्टव्या । सवनानां रूपस्य तथाविधत्वात् । तच्च च्छन्दोद्वारेण द्रष्टव्यम् । गायत्री त्रिष्टुब्जगती चेति च्छन्दांसि सवननिष्पादकानि'''गायत्रं प्रातःसवनं''' त्रैष्टुभं माध्यदिनं सवनं जागतं तृतीयसवनमिति श्रुत्यन्तरात्[१] । तथा सति तत्तच्छन्दोगताक्षरसंख्यानुसारेण कपालसंख्या युक्तेति[२] पूर्वपक्षः ॥

**इस सम्बन्ध में कुछ याज्ञिक कहते हैं कि प्रत्येक सवन के लिए अलग-अलग पुरोडाश का निर्वपन करना चाहिए—प्रातःसवन आठ कपालों का, माध्यन्दिन सवन ग्यारह कपालों का और तृतीय सवन बारह कपालों का होना चाहिए; क्योंकि जैसा सवनों का रूप है वैसा ही छन्दों का भी है [अर्थात् गायत्री, त्रिष्टुप् और जगती छन्द सवनों के निष्पादक हैं उनकी अक्षरसंख्या के अनुसार कपाल संख्या युक्त है] ।**

तं निराकृत्य सिद्धान्तं दर्शयति—

**तत्तन्नाऽऽदृत्यमैन्द्रा वा एते सर्वे निरुप्यन्ते यदनुसवनं पुरोळाशास्तस्मात् तानेकादशकपालानेव निर्वपेत् ।।** इति ।

पञ्चसु हविष्षु धानादिषु मध्ये चतुर्थस्य पुरोडाशस्यैन्द्रदेवताकत्वादैन्द्रश्चान्यत्रैकादशकपाल एव प्रायेण विधीयत इति तत्प्रयत्नावगमात्[३] अत्रापि त्रिष्वपि सवनेष्वैन्द्रान् पुरोडाशानेकादशकपालानेव निर्वपेत् । शाखान्तरेऽपि विलोमत्वदोषेण[४] पूर्वपक्षं निराकृत्य

---

१. आग्नावैष्णवमष्टाकपालं निर्वपेत् प्रातःसवनस्याकाले सरस्वत्याज्यभागा स्याद् बार्हस्पत्यश्चरुर्यदष्टाकपालो भवत्यष्टाक्षरा गायत्री गायत्रं प्रातःसवनं प्रातःसवनमेव तेनाप्नोति'''द्वादशाक्षरा जगती जागतं तृतीयसवनं तृतीयसवनमेव तेनाप्नोति—इति तै० सं० २.२.९; भाष्यमेतस्य मन्त्रकाण्डे (तै० सं० १.८.२२) द्रष्टव्यम् । तु० तै० सं० ३.२.९ 'गायत्रं प्रातःसवनम्—आदि ।

२. अत एव श्रुतं तैत्तिरीये—तं वसवोऽष्टाकपालेन प्रातःसवने भिषज्यन्, रुद्रा एकादशकपालेन माध्यन्दिने सवने, विश्वेदेवा द्वादशकपालेन तृतीयसवने—इति तै० ब्रा० १.५.११.३ ।

३. 'विधीयते'''होमादूर्ध्वं वाग्विसर्गतत्प्रयत्नावगमाद्' इति वा पाठः ।

४. तथाहि—'स यदष्टाकपालान् प्रातःसवने कुर्यात्, एकादशकपालान् माध्यन्दिने सवने, द्वादशकपालांस्तृतीयसवने, विलोम तद्यज्ञस्य क्रियेत'—इति तै०ब्रा० १.५.११.४ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सिद्धान्तोऽभिहितः—एकादशकपालानेव प्रातःसवने कुर्यादेकादशकपालान् माध्यंदिने सवने' इत्यादि[1]। आपस्तम्बस्त्वन्यशाखाभेदमनुसृत्य पक्षद्वयमप्युदाहरति—'अष्टौ पुरोडाश-कपालान्येकादश माध्यंदिने द्वादश तृतीयसवने सर्वानैन्द्रानेकादशकपालाननुसवनमेके समामनन्ति'[2] इति।

किन्तु यह मत आदरणीय नहीं है; क्योंकि जितने पुरोडाश सभी सवनों में होते हैं वे सभी इन्द्र के लिए निर्वपित होते हैं इसलिए एकादश कपालों का ही निर्वपन करना चाहिए।

अथ तत्पुरोडाशशेषभक्षणे कंचित्पूर्वपक्षमुपन्यस्यति—

**तदाहुर्यतो घृतेनानक्तं स्यात् ततः पुरोळाशस्य प्राश्नीयात् सोमपीथस्य गुप्त्यै, घृतेन हि वज्रेणेन्द्रो वृत्रमहन्निति ॥ इति।**

तत्सोमपानस्य रक्षणाय भवति। यस्मादिन्द्रो घृतमेव वज्रं कृत्वा तेन वृत्रं हतवान्, तस्मात् तस्य क्रूरत्वात् घृतरहितं सकलं भक्ष्यमिति पूर्वपक्षिण आहुः।

[पुरोडाश—शेष के भक्षण के सम्बन्ध में] याज्ञिकों का कहना है कि पुरोडाश का जितना भाग बिना घी लगा हुआ हो, उतने को ही, सोमपान की रक्षा के लिए, भक्षण करना चाहिए; क्योंकि घृतरूपी वज्र से ही इन्द्र ने वृत्र को मारा।

तं निराकृत्य सिद्धान्तं दर्शयति—

**तत्तन्नादृत्यं, हविर्वा एतद्यदुत्पूतं सोमपीथो वा एष यदुत्पूतं तस्मात् तस्य यत एव कुतश्च प्राश्नीयात्, सर्वतो वा एताः स्वधा यजमानमुपक्षरन्ति यदेतानि हवींष्याज्यं धानाः करम्भः परिवापः पुरोळाशः पयस्येति ॥ इति।**

घृतरहितभाग एव भक्षणीय इति मतं नाऽऽदरणीयम्। उत्पवनसंस्काररहितस्य घृतस्य वज्रत्वेऽपि यदुत्पूतं घृतं तद्धविरेव। किं च यदुत्पूतं तत्सोमपीथसदृशमेव। तस्मात् तस्य पुरोडाशस्य यतः कुतश्च घृतयुक्ताद् घृतरहिताद्वा यस्मात् कस्मादपि भागात् प्राश्नीयात्। आज्यं धानादीनि यानि हवींषि[3] सन्ति ता एताः सर्वतः स्वधाऽन्नं तद्रूपा एव भूत्वा यजमानमुपक्षरन्ति स्रवन्ति। तस्मात् सर्वतः प्राशनमुपपन्नम् ॥

[किन्तु घृतरहित भाग खाने का] यह मत आदरणीय नहीं है; क्योंकि वह जो उत्पवन संस्कार से संस्कृत [घृत] है वह हवि ही है और जो उत्पवन संस्कार से संस्कृत है वह

१. तै० ब्रा० १.५.११.४। २. आप० श्रौ० १२.४.१,२।
३. 'हरिवाँ इन्द्रो धाना' इत्यादि (ऐ० ब्रा० ८.६; द्र० ३११ पृ०) सवनप्रैषाद्युक्तानि यत् यानि एतानि हवींषि—इत्यर्थः। 'अथैन्द्रैः पुरोडाशैरनुसवनं चरन्ति' इति आश्व० श्रौ० सू० ५.४.१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सोम-पान के सदृश ही है। इसलिए उस [पुरोडाश] का जो कुछ भी [घृतयुक्त या घृत-रहित] भाग है, खा लेना चाहिए। ये जो हवियाँ—आज्य, धान, करम्भ, परिवाप, पुरोडाश, पयस्या[1] आदि हैं वे यजमान के पास चारों ओर से अन्न रूप होकर आ जाती हैं। [इसलिए सर्वतः प्राशन उपयुक्त है]।

वेदनं प्रशंसति—

**सर्वत एवैनं स्वधा उपक्षरन्ति य एवं वेद ॥** इति।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः तृतीयाध्याये (अष्टमाध्याये) पञ्चमः खण्डः ॥ ५ ॥ (२३) [५३]

**जो इस प्रकार जानता है सभी ओर से अन्न उसके पास आते हैं।**

**॥ इस प्रकार आठवें अध्याय के पाँचवे खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥**

## अथ षष्ठः खण्डः

विहितान् सवनीयपुरोडाशान् धानादिरूपान् प्रशंसति—

**यो वै यज्ञं हविष्पङ्क्तिं वेद हविष्पङ्क्तिना यज्ञेन राध्नोति धानाः करम्भः परिवापः पुरोळाशः पयस्येत्येष वै यज्ञो हविष्पङ्क्तिर्हविष्पङ्क्तिना यज्ञेन राध्नोति य एवं वेद ॥** इति।

हविषां धानादिद्रव्यरूपाणां पङ्क्तिः समूहो यस्मिन् सोमयागे सोऽयं हविष्पङ्क्तिः, तादृशं यज्ञं यो वेद स तथैव तादृशेन यज्ञेन समृद्धो भवति। भृष्टा यवतण्डुला धानाः। तदाह आपस्तम्बः—'कपालानामुपधानकाले प्रथमकपालमन्त्रेण धानार्थं लाजार्थं कपाले अधिश्रित्य तण्डुलानोप्य धानाः करोति व्रीहीनोप्य लाजान् करोति पुरोडाशमधिश्रित्याऽऽमिक्षावत् पयस्यां करोत्युद्वासनकाले धाना उद्वास्य विभागमन्त्रेण विभज्यार्धा आज्येन संयौत्यर्धाः पिष्टानान् मावृता सक्तून् करोति। मन्थं संयुतं करम्भ इत्याचक्षते, लाजान् परिवाप इति न वै लाजेभ्यः स्तुषान् संहरति'[2] इति। पुरोडाशः प्रसिद्धः। अन्ये धाना-करम्भपरिवापपयस्याशब्दा आपस्तम्बेन व्याख्याताः। एतैर्हविर्भिर्युक्तो यज्ञो हविष्पङ्क्तिः। हविष्पङ्क्तिनेत्यादिपुनर्वचनमुपसंहारार्थम्। यद्वा, पूर्वं वेदनपूर्वकानुष्ठानप्रशंसेह

१. 'आज्यं सर्पिर्यवा घृष्ट धानाः स्युर्व्रीहयोऽपि वा।
मुकुला लाजाः करम्भः परिवापस्तु लाजकः॥
पयस्या दध्युपहिते तप्ते क्षीरे समुद्धृता।
पुरोळाशः पिष्टपिण्डः स्वधामृतमयी नदी॥
प्राप्त्यर्थः क्षरतिर्धातुर्यजमानमुप प्रति॥ इति षड्गुरुशिष्यः।

२. आप० श्रौ० १२.४.९–१४।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तु वेदनमात्रप्रशंसा द्रष्टव्या । हविषां पञ्चसंख्यानां समूहरूपा या पङ्क्तिः सा शाखान्तरेऽप्याम्नाता—'ब्रह्मवादिनो वदन्ति नर्चा न यजुषा पङ्क्तिराप्यतेऽथ किं यज्ञस्य पाङ्क्तत्वमिति । धानाः करम्भः परिवापः पुरोळाशः पयस्या तेन पङ्क्तिराप्यते तद् यज्ञस्य पाङ्क्तत्वम्'[1] इति । अत्रार्थवादेन धानादीनां पुरोडाशद्रव्याणां विधिरुन्नेतव्यः ॥

[पञ्च-हविष्क-यज्ञ]—

ii. २४ [viii. ६] पाँच हवियों से युक्त [सोम] याग को जो जानता है वह पाँच हवियों वाले यज्ञ से समृद्धि को प्राप्त करता है। धान, करम्भ [=दही युक्त आटा], परिवाप [=लावा], पुरोडाश [=रोटी], पयस्या [=मट्ठा]—इन हवियों से युक्त यज्ञ पञ्च-हविष्क यज्ञ है। जो इस प्रकार जानता है वह पञ्च-हविष्क यज्ञ से समृद्धि को प्राप्त करता है।

अनेनैव न्यायेनाक्षराणां पञ्चानां विध्युन्नयनं दर्शयति—

**यो वै यज्ञमक्षरपङ्क्तिं वेदाक्षरपङ्क्तिना यज्ञेन राध्नोति सुमत्पद्वग्द इत्येष वै यज्ञोऽक्षरपङ्क्तिरक्षरपङ्क्तिना यज्ञेन राध्नोति य एवं वेद ॥ इति ।**

पञ्चसंख्याकानामक्षराणां समूहोऽक्षरपङ्क्तिः । 'सु' इत्येकमक्षरम्, मदिति द्वितीयमक्षरम्, पदिति तृतीयमक्षरम्, वगिति चतुर्थमक्षरम्; दे इति पञ्चममक्षरम् । तान्येतान्यक्षराणि होतृजपादौ प्रयोक्तव्यानि । तथा च संप्रदायविद[3] आहुः—

"एतद्धोतृजपाख्यस्य चाऽऽदितोऽक्षरपञ्चकम् ।
एकैकमक्षरं चात्र परस्य ब्रह्मणो वपुः ॥
सुपूजितं मत्प्रहृष्टं पत्सर्वव्यापि तच्च वक् ।
सर्वस्य वक्तृ ब्रह्मैव दे फलानां प्रदातृ तत्[4] ॥ इति ।

अन्यत् पूर्ववद् व्याख्येयम् ॥

पाँच अक्षरों से युक्त यज्ञ को जो जानता है वह पाँच अक्षरों वाले यज्ञ से समृद्धि को प्राप्त करता है। सु, मत्, पद्, वग् और दे—इन पाँच अक्षरों से युक्त यज्ञ ही पाँच अक्षरों वाला यज्ञ है। जो इस प्रकार जानता है वह पञ्चाक्षर-यज्ञ से समृद्धि को प्राप्त करता है।

---

१. तै० सं० ६.५.११.४,५ ।
२. (i) पराङ्ङध्वर्यावावृत्ते सुमत्पद्वग्दे—इत्यादि आश्व० श्रौ० ५.९.१ ।
(ii) 'सुष्ठुमाद्यन्ति इति सुमदः ईदृशा भवन्ति यस्याः प्रपत्तारः यस्याश्च वक्तारः स्तोतारः यस्यै च हवींषि दातारः सा सुमत्पद्वग्दा'—इति भट्टभास्करः ।
३. षड्गुरुशिष्यस्य पद्यद्वयमिदम् ।
४. ब्रह्मैतद् दे दानाय तु तिष्ठति—इति षड्गुरुशिष्यस्य पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तथा पञ्चविधनाराशंसविध्युन्नयनं दर्शयति—

**यो वै यज्ञं नराशंसपङ्क्तिं वेद नराशंसपङ्क्तिना यज्ञेन राध्नोति द्विनाराशंसं प्रातःसवनं द्विनाराशंसं माध्यन्दिनं सवनं सकृन्नाराशंसं तृतीयसवनमेष वै यज्ञो नराशंसपङ्क्तिर्नराशंसपङ्क्तिना यज्ञेन राध्नोति य एवं वेद ॥** इति।

भक्षिताप्यायितानां सादितानां चमसानां नाराशंसशब्दः संज्ञा। अत उक्तमाचार्येण[1] 'आप्यायितांश्चमसान् सादयन्ति ते नाराशंसा भवन्ति' इति। भक्षितेषु चमसेषु पुनः पूरणमाप्यायनम्। तथाविधाश्चमसाः प्रातःसवने द्विः प्रयुज्यन्ते तथा माध्यंदिनसवनेऽपि, तृतीयसवने तु सकृदेव। एवं पञ्चसंख्योपेतत्वान्नराशंसानां पङ्क्तिर्यज्ञे विद्यते ॥

**पाँच नराशंस से युक्त यज्ञ को जो जानता है वह पञ्च-नराशंस वाले यज्ञ से समृद्धि को प्राप्त करता है। [चमसों का भरना ही नराशंस शब्द से अभिहित होता है। भक्षित चमसों को पुनः भरना आप्यायन है। इस प्रकार के] दो नराशंस [चमस] प्रातःसवन में, दो नराशंस माध्यन्दिन सवन में और तृतीयसवन में एक नराशंस—इन पाँच नराशंस से युक्त यज्ञ ही पञ्च-नराशंस यज्ञ है। जो इस प्रकार जानता हैं वह पञ्च-नराशंस यज्ञ से समृद्धि को प्राप्त करता है।**

तथैव सवनपङ्क्तिं दर्शयति—

**यो वै यज्ञं सवनपङ्क्तिं वेद सवनपङ्क्तिना यज्ञेन राध्नोति पशुरुपवसथे त्रीणि सवनानि पशुरनूबन्ध्य इत्येष वै यज्ञः सवनपङ्क्तिः सवनपङ्क्तिना यज्ञेन राध्नोति य एवं वेद ॥** इति।

परेद्युर्यक्ष्यमाणस्य यजमानस्य समीपे पूर्वेद्युर्देवतास्तदीयं यज्ञं प्रतीक्षमाणा वसन्ति तस्मादुप समीपे वसन्त्यस्मिन् दिवस इति पूर्वदिवसमुपवसथाख्ये पूर्वदिवसे यः पशुरग्नीषोमीयः सोऽप्यत्र सवनसमीपवर्तित्वात् सवनत्वेन गण्यते। प्रातःसवनादीनि तु त्रीणि प्रसिद्धान्येव सवनानि। सवनेभ्य ऊर्ध्वमनुष्ठेयोऽनूबन्ध्याख्यः पशुरपि पूर्ववत् सवनत्वेन गण्यते। अतः पञ्चानां सवनानां पङ्क्त्या समूहेन युक्तो यो यज्ञ एष एव सवनपङ्क्तिः। एवं हविष्पङ्क्तिप्रसङ्गेनाक्षरपङ्क्तिर्नराशंसपङ्क्तिः सवनपङ्क्तिश्चेत्येतावदभिहितम्। एतदेवाभिप्रेत्य तत्र तत्र "पाङ्क्तो यज्ञः" श्रूयते[2] ॥

**पाँच सवनों से युक्त यज्ञ को जो जानता है वह पञ्च-सवन-यज्ञ के द्वारा समृद्धि को प्राप्त करता है। उपवसथ [नामक पूर्व दिन में जो अग्नीषोमीय पशु है वह भी सवन के**

---

१. एतत्सूत्रकारेण आश्वलायनेनेति यावत्। तत्र 'आध्वर्य उपह्वयस्व'—इत्यादीनि सूत्राणि द्रष्टव्यानि ५.६.२–१०।

२. आश्व० श्रौ० ५.६.३०।

३. द्र० इतः पूर्वम्, ४३ पृ०। शत० ब्रा० १.१.२.१६; तै० सं० ७.१.१०.४।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

समीपवर्ती होने से] एक सवन है, प्रातःसवन आदि तीन सवन प्रसिद्ध ही हैं और [सवनों के बाद अनुष्ठेय] अनुबन्ध्य नामक पशु पाँचवां सवन है—इन पाँच सवनों से युक्त यज्ञ ही पञ्च-सवन यज्ञ है। जो इस प्रकार जानता है वह पञ्च-सवनों से युक्त यज्ञ द्वारा समृद्धि को प्राप्त करता है।

अथ प्रकृतानां सवनीयपुरोडाशानां क्रमेण याज्या विधत्ते—

**हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूप इति हविष्पङ्क्त्या यजति ॥ इति ।**

हरिनामानौ द्वावश्वावस्य स्त इति हरिवानिन्द्रः। सोऽयं धाना अत्तु भक्षयतु। सेयं प्रथमहविषो याज्या। पोषकत्वात् पशवः पूषञ्छब्देनोच्यन्ते। तत्स्वामी देवः पूषण्वान् स तु करम्भमत्त्वित्यनुवर्तते। सेयं द्वितीयहविषो याज्या। सरस्वती वाक्साऽस्यास्तीति देवविशेषः सरस्वतीवान्। स एव भारतीवाञ्शरीरभरणाद्भरणः प्राणः। तस्य संबन्धिनी देहेऽवस्थितिर्भारती तद्युक्तो देवो भारतीवान्[1]। अयं विशेषणद्वयोपेतो देवः परिवापः परिवापाख्यं हविरत्तु। इत्थं तृतीयस्य याज्या। इन्द्रस्यापूपः पुरोडाशः प्रिय इति शेषः। तथा सतीन्द्रोऽपूपमत्त्वित्यर्थादवगम्यते। सेयं चतुर्थहविषो याज्या। पञ्चमहविःस्वरूपायाः पयस्यायाः शाखान्तरादत्रोपसंहर्तव्या।[2] एवं 'हविष्पङ्क्त्या यजति' हविष्पङ्क्तिविषयां याज्यां पठेदित्यर्थः ॥

[हरि नामक] १. दो अश्वों वाले इन्द्र धान रूप हवि का भक्षण करें, २. पशुओं का स्वामी पूषा-देव करम्भ हवि [का भक्षण करें], ३. [वाणी के देवता] सरस्वती से युक्त देव और [शरीर का भरण करने से प्राण भरण है और उसकी देह में अवस्थित होना भारती है उस] भारती से युक्त देव परिवाप हवि का [भक्षण करें], ४. इन्द्र को अपूप [पुरोडाश या पूआ का भक्षण प्रिय है। इस प्रकार चार हवि की याज्या ये हैं और पाँचवीं हवि पयस्या की याज्या शाखान्तर से जान लेना चाहिए] इस प्रकार इन पाँच हवियों की याज्याओं से यजन करता है।

प्रथमयाज्यां व्याचष्टे—

**ऋक्सामे वा इन्द्रस्य हरी ॥ इति ।**

---

१. 'शरीरस्य भर्ता प्राणो भरतः तस्य स्वभूता भारती प्राणवती वाक् तद्वान् इन्द्रो भारतीवान्'—इति भट्टभास्करः।

२. तथाहि तैत्तिरीयकम्—'तदश्विनौ धानाभिरभिषिज्यताम्, पूषा करम्भेण, भारती परिवापेण, मित्रावरुणौ पयस्यया'—इति तै० ब्रा० १.५.११.२। 'धानाः भृष्टयवाः, करम्भो यवपिष्टमाज्यसंयुतम्, परिवापो लाजाः, पयस्या आमिक्षा'—इति च तत्र सा० भा०। 'पयस्या भवति पयो हि वा एतस्मादपक्रामति'—इति च पयस्यास्वरूपश्रुतिः तै० सं० २.३.१३.२।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ऋग्देवता सामदेवता चेत्युभयदेवतारूपाविन्द्रस्याश्वावतो हरिवानिति मन्त्रोक्ति-रित्यर्थः ॥

ऋक् और साम ही इन्द्र के दो अश्व हैं।

द्वितीययाज्यां व्याचष्टे—

**पशवः पूषाऽन्नं करम्भः ॥** इति ।

पोषकत्वात् पशूनां पूषत्वं स्वादुपोषकत्वात् करम्भस्यान्नत्वमतः पशुस्वामिनः करम्भो योग्य इत्यर्थः ॥

[पशुओं का पोषक होने से] पशु पूषा हैं और [स्वादयुक्त पोषक होने से] करम्भ अन्न है [अर्थात् पशु का स्वामी करम्भ योग्य है]।

तृतीययाज्यां व्याख्यापूर्वं व्याचष्टे—

**सरस्वतीवान् भारतीवानिति वागेव सरस्वती प्राणो भरतः ॥** इति ।

अत्र सरस्वतीवान् भारतीवानिति व्याख्येयमनूद्य वागित्यादिना तद्व्याख्यानं क्रियते। वागेव सरस्वतीत्येतल्लोकप्रसिद्धं न त्वत्र किंचिद्वक्तव्यमस्तीत्येवशब्दस्यार्थः। शरीरभरण-हेतुत्वात् प्राणो भरतशब्दवाच्यः। तदीयवृत्तिर्भारती तदुभयोपेतं मत्प्रत्ययस्यार्थं इति द्रष्टव्यम् ॥

सरस्वती से युक्त और भारती से युक्त जो कहा है उसमें वाणी ही सरस्वती है और प्राण ही भरत है।

तृतीययाज्याया उत्तरार्धं चतुर्थयाज्यां चानूद्य व्याचष्टे—

**परिवाप इन्द्रस्यापूप इत्यन्नमेव परिवाप इन्द्रियमपूपः ॥** इति ।

परिवापशब्दवाच्यानां लाजानां मृत्युत्वेनात्तुं सुकरत्वादन्नत्वम्। इन्द्रियवृद्धिहेतुत्वाद अपूपस्येन्द्रियत्वम्। अत्र हरिपूषादिविशेषणरूपदेवताभेदाद्याज्याभेदेऽपि यजनीयस्य विशेष-स्येन्द्रस्यैकत्वादेकयाज्यात्वमभिप्रेत्य हविष्पङ्क्त्या यजतीत्येकप्रधानविधिरिति द्रष्टव्यम्[1] ॥

'परिवाप इन्द्रस्यापूप' में परिवाप [मृदु लावा] अन्न ही है; और [इन्द्रियों की वृद्धि में कारण होने से] अपूप इन्द्रिय है।

होतुरुक्तयाज्यावेदनं प्रशंसति—

**एतासामेव तद्देवतानां यजमानं सायुज्यं सरूपतां सलोकतां गमयति, गच्छति श्रेयसः सायुज्यं गच्छति श्रेष्ठतां य एवं वेद ॥** इति ।

---

१. अत एव श्रूयते—अथ कस्मादेतेषां हविषामिन्द्रमेव यजन्तीति। एता ह्येनं देवता इति ब्रूयात्'—इति० तै० ब्रा० १.५.११.३। 'यस्मादेताः सर्वा देवता एनमिन्द्रमुप-जीवन्तीति शेषः, तस्माद् इन्द्रस्यैव धानादिहविःस्वमित्वं युक्तम्'—इति च तत्र सा० भा०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

य एवं वेदिता होता यजमानमिन्द्रादिदेवतानां सायुज्यं सहवासं सरूपतां समानशरीरत्वं सलोकतामेकलोकावस्थानां च प्रापयति । स्वयं च होता श्रेयसोऽतिप्रशस्तस्येन्द्रादेः सायुज्यं सहवासं प्राप्नोति भागाधिक्येन श्रेष्ठतां च प्राप्नोति ॥

जो इस प्रकार जानता है वह [होता] यजमान को उन [इन्द्र आदि] देवताओं का सायुज्य अर्थात् सहवास, सारूप्य अर्थात् समान शरीरत्व और सलोकता अर्थात् एक लोक में अवस्थान की प्राप्ति करा देता है और स्वयं [होता] अत्यन्त प्रशस्त इन्द्र आदि का सायुज्य प्राप्त करता है और श्रेष्ठता को प्राप्त करता है।

सवनीयपुरोडाशसंबन्धिनः स्विष्टकृतो याज्यां विधत्ते—

**हविरग्ने वीहीत्यनुसवनं पुरोळाशःस्विष्टकृतो[1] यजति ॥** इति ।

हे अग्ने इदमस्माभिर्दत्तं हविर्वीहि भक्षय ! एतामेव त्रिष्वपि सवनेषु याज्यां पठेत् ॥

'हे अग्नि, हमसे प्रदत्त इस हवि का भक्षण करो'—इस [याज्या] से ही पुरोडाश निर्वपन के तीनों सवनों में स्विष्टकृत् का यजन करता है।

एतामेव प्रशंसति—

**अवत्सारो वा एतेनाग्नेः प्रियं धामोपागच्छत् स परमं लोकमजयत् ॥** इति ।

अवत्सारनामकः कश्चिदृषिर्हविरित्येतेन मन्त्रेणाग्निदेवतायाः प्रियं स्थानं प्राप्य तत ऊर्ध्वं ततोऽप्युत्कृष्टं लोकं जितवान् । अत्र सर्वत्र यजुःस्वरूपैव याज्या ॥

अवत्सार नामक किसी ऋषि की हवि इस [मन्त्र] से अग्नि देव के प्रिय धाम को प्राप्त हुई और वह उससे भी उत्कृष्ट लोक को प्राप्त हुए।

तदेतन्मन्त्रवेदनं तत्पूर्वकमनुष्ठानं च प्रशंसति—

**उपाग्नेः प्रियं धाम गच्छति, जयति परमं लोकं, य एवं वेद, यश्चैवं विद्वानेतया हविष्पङ्क्त्या यजते यजतीति च, यजतीति च, ॥ २४ ॥** इति ।

यस्यात्रवेदिनः फलतया हविष्पङ्क्तिं स्वार्थमनुतिष्ठतो यजमानस्य परार्थं याज्यां पठतो होतुश्च फलं भवति । उभयविवक्षयाऽऽत्मनेपदपरस्मैपदप्रयोगः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः तृतीयाध्याये (अष्टमाध्याये) षष्ठः खण्डः ॥ ६ ॥ (२४) [५४]

---

१. 'पुरोडाशस्विष्टकृतं यजेत् । सवनबहुत्वात् पुरोडाशस्विष्टकृत इति बहुवचनम् । द्वितीयार्थे वा षष्ठ्येकवचनम्'—इति भट्टभास्करः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यदिशतो सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश' नाम भाष्ये ऐतरेयब्राह्मणस्य कृतौ द्वितीयपञ्चिकायाः तृतीयोऽध्यायः ॥३॥

जो इस प्रकार जानता है और जो इस प्रकार जानकर इन हविष्पंक्ति से यजन करता है और जो [होता] यजन कराता है [दोनों ही] अग्नि देव के प्रिय धाम को प्राप्त करते हैं और उससे भी उत्कृष्ट लोक को जीत लेते हैं ।

॥ इस प्रकार ऐतरेय ब्राह्मण की द्वितीय पञ्चिका के तृतीय अध्याय की हिन्दी पूर्ण हुई ॥ ३ ॥

---

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ चतुर्थोऽध्यायः

## प्रथमः खण्डः

—: * :—

# अथ नवमोऽध्यायः

## प्रथमः खण्डः

अपोनप्त्रीयतच्छेष उपांश्वादिग्रहा अपि ।
सवनीयाः पुरोडाशाः पवमानाय सर्पणम् ॥ १ ॥

इदानीमैन्द्रवायवादीन् द्विदेवत्यान् ग्रहान् विधातुमाख्यायिकामाह—

**देवा वै सोमस्य राज्ञोऽग्रपेये न समपादयन्नहं प्रथमः पिबेयमहं प्रथमः पिबेयमित्येवाकामयन्त, ते संपादयन्तोऽब्रुवन् हन्ताऽऽजिमयाम स यो न उज्जेष्यति स प्रथमः सोमस्य पास्यतीति, तथेति त आजिमयुस्तेषामाजिं यतामभिसृष्टानां वायुर्मुखं प्रथमः प्रत्यपद्यताथेन्द्रोऽथ मित्रावरुणावथाश्विनौ ॥ इति ।**

पुरा कदाचिद्देवाः सोमस्याग्रपेये प्रथमपाने निमित्तभूते सति न समपादयन् संपादनं संपत्तिं न प्राप्ताः । किंत्वहमेव प्रथमः पिबेयमिति सर्वेऽप्यकामयन्त सर्वे समयबन्धपुरःसरमाजिं धावनावधिं कंचिद्वृक्षं पाषाणमन्यद्वा किंचिदयामप्राप्नवाम । स यो यः कश्चिदपि नोऽस्माकं मध्य उज्जेष्यति तस्मिन् धावन उत्कर्षेण जयं प्राप्स्यति स एक एव प्रथमो भूत्वा सोमस्य सोमं पास्यति । ते देवास्तथेत्यङ्गीकृत्याऽऽजिं धावनमर्यादामयुः प्राप्तवन्तः । आजिं यतां प्राप्नुवतामभिसृष्टानामभितः प्रवृत्तानां तेषां मध्ये वायुः प्रथमो भूत्वा मुखमवधेः संमुखं तं प्रत्यपद्यत । वायोः पृष्ठत इन्द्रः, तस्य पृष्ठतो मित्रावरुणौ, तयोः पृष्ठतोऽश्विनावेवं क्रमेण सर्वे धावनं प्रारब्धवन्तः ॥

---

१. न समपादयन् न समपद्यन्त तद्विषये सम्प्रतिपत्तिमन्तो नाभवन् । सम्प्रतिपत्तिरेव सम्पत्तिः स्वार्थिको णिच् । यद्वा, सामर्थ्यादात्मानमिति गम्यते । आत्मानं सम्प्रतिपन्नं नाकुर्वत'—इति भट्टभास्करः । 'सम्पदेरनुज्ञान—इत्यर्थाल्लङ्'—इति षड्गुरुशिष्यः ।

२. (i) 'सम्प्रतिपत्तिकामा अब्रुवन् हेतौ शतृप्रत्ययः'—इति भट्टभास्करः । (ii) 'हन्तेत्यभिमुखीकरणे'—इति षड्गुरुशिष्यः । 'हन्तेत्यात्मगतम्'—इति गोविन्दस्वामी ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[देवता-द्वन्द्व के लिए ग्रह]

ii. २५ [ix. १] किसी समय की बात है कि सोम राजा के अग्र-पान में देवता एक-मत नहीं हुए। सभी ने यही कामना की कि 'मैं पहले पीऊँ, मैं पहले पीऊँ।' उन्होंने आपस में समझौता करके कहा—'हम लोग बाजी लगाकर दौड़ें कि जो जीत जायगा वही पहले सोम-पान करेगा।' उन्होंने कहा—'ऐसा ही हो।' तब वे दौड़ में दौड़े। दौड़ में जितने दौड़े थे उनमें वायु पहले नियत स्थान पर पहुँचे, उसके बाद इन्द्र, उसके बाद मित्रावरुण और उसके बाद अश्विन-द्वय पहुँचे।

तस्मिन् धावने वायोरिन्द्रस्य च परस्परं संवादं दर्शयति—

**सोऽवेदिन्द्रो वायुमुद्वै जयतीति तमनु परापतत् सह नावथोज्जयावेति स नेत्यब्रवीदहमेवोज्जेष्यामीति तृतीयं मेऽथोज्जयावेति नेति हैवाब्रवीदहमेवोज्जेष्यामीति तुरीयं मेऽथोज्जयावेति, तथेति तं तुरीयेऽत्यार्जत, तत्तुरीयभागिन्द्रोऽभवत् त्रिभाग्वायुः ॥ इति।**

अयं वायुरुत्कर्षेण जयत्येवेति स इन्द्रोऽवेत्स्वमनसि ज्ञातवाञ्ज्ञात्वा च तं वायुमनु पृष्ठतः परापतत् सहसैवाधावत्। आगत्य चेदमुक्तवान् हे वायो नावावयोरुभयोः सह सोमपानमस्तु तवार्धं ममार्धम्। अथ तस्मात्कारणादावामुभौ सहैवोत्कर्षेण जयं प्राप्नवावेति। स वायुर्नेति निराकृत्याहमेक एवोज्जेष्यामीत्यब्रवीत्। ततः स इन्द्र एवमुवाच ममार्धं मा भूत्, किं तु तृतीयं त्रिषु भागेषु भागोऽस्तु तव द्वौ भागौ। अथैवं सति सहैवाऽऽवामुज्जयावेति। पुनरपि नेत्येव निराकृत्य स वायुरहमेवोज्जेष्यामीत्यब्रवीत्। ततः स इन्द्रः पुनरप्युवाच तृतीयो मा भूत्, किं तु मे तुरीयमस्तु चतुर्थभागोऽस्तु, तव त्रयो भागा। अथैवं सत्यावामुभावुज्जयावेति। ततो वायुरङ्गीकृत्य तमिन्द्रं तुरीये चतुर्थभागेऽत्यार्जतातिशयेन स्थापितवान्[१] तस्मात् कारणादिन्द्रश्चतुर्थांशभागभूत्। वायुरंशत्रयभागवान् ॥

इन्द्र यह सोचकर कि 'मैं वायु से आगे पहुँचूँ' [ऐसा दौड़े कि] वायु के पास ही गिर पड़े। तब इन्द्र ने कहा—'क्योंकि हम दोनों जीते हैं अतः हम दोनों साथ-साथ [आधा-आधा करके सोम-]पान करें।' उस [वायु] ने कहा—'नहीं, मैं ही जीता हूँ।' इन्द्र ने कहा—[अच्छा आधा न हो तो] तृतीय भाग मुझे मिले, क्योंकि हम दोनों जीते हैं। वायु ने पुनः कहा—'नहीं; मैं ही जीता हूँ।' तब इन्द्र ने कहा—'चौथाई-भाग मुझे मिले, क्योंकि हम दोनों जीते हैं।' वायु ने कहा—'ठीक है', और उसको चौथाई भाग देना स्वीकार कर लिया। इसीलिए इन्द्र चौथाई भाग के भागीदार हुए और वायु तीन भाग के।

---

१. 'अतिसृष्टवान्। यद्वा, स्वात्मानमतिक्रम्य स्वामित्वेनेन्द्रमार्जितवान् स्वीकृतवान्'—इति भट्टभास्करः। 'अति सुष्ठु। आर्जताभ्युपगतवान्'—इति षड्गुरुशिष्यः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ विजयक्रमेण सोमपानक्रमं दर्शयति—

**तौ सहैवेन्द्रवायू उदजयतां सह मित्रावरुणौ सहाश्विनौ, त एषामेते यथोज्जितं भक्षा इन्द्रवाय्वोः प्रथमोऽथ मित्रावरुणयोरथाश्विनोः ॥ इति ।**

इन्द्रवायू उभौ सहैवोदजयतां धावतामवधिदेशं प्राप्नुताम् । तयोः पृष्ठतो मित्रावरुणौ परस्परं सह प्राप्नुतः । तयोः पृष्ठतोऽश्विनौ सह प्राप्नुतः । एषां देवानां यथोज्जितं तत्तज्जयमनतिक्रम्य त एते भक्षाः सोमपानरूपा अभवन्निन्द्रवाय्वोः प्रथमं सोमपानं ततो मित्रावरुणयोः सोमपानं ततोऽश्विनोः सोमपानमित्येवं द्विदेवत्यग्रहाणां क्रमो व्यवस्थितः ॥

इस प्रकार इन्द्र और वायु दोनों ही जीते, उसके बाद मित्रावरुण साथ-साथ, और इसके बाद अश्विन-द्वय एक साथ उस पूर्व नियुक्त अवधि को प्राप्त हुए। अतः इन देवों में जो जिस क्रम से पहुँचे उसी क्रम से सोमपान के वे अधिकारी हुए। इन्द्र और वायु प्रथम सोमपान के अधिकारी हुए उसके बाद मित्र और वरुण, उसके बाद अश्विन-द्वय।

इदानीमैन्द्रवायवग्रहं विधत्ते—

**स एष इन्द्रतुरीयो ग्रहो गृह्यते यदैन्द्रवायवः ॥ इति ।**

योऽयमिन्द्रवायुदेवताको ग्रहः स एष इन्द्रतुरीय इन्द्रस्य तुरीयभागो यस्मिन् ग्रहे सोऽयमिन्द्रतुरीयः[1], तादृशं ग्रहं गृह्णीयात् ॥

जो ऐन्द्रवायव-ग्रह [ = इन्द्र और वायु का घड़ा] है, वह इस इन्द्र का चौथाई भाग है, जिसको वे ग्रहण करते हैं।

उक्त भागविशेषं मन्त्रसंवादेन द्रढयति—

**तदेतदृषिः पश्यन्नभ्यनूवाच 'नियुत्वाँ इन्द्रसारथिः' इति ॥ इति ।**

तदेतच्चतुर्थभागत्वं दिव्यदृष्ट्या पश्यन् कश्चिन्मन्त्रात्मक[2] ऋषिस्तेन मन्त्रेणाभ्यनूवाच साकल्येन तदुक्तवान् । नियुत्वानित्यादिको मन्त्रः[3] । नियुत्वच्छब्दो वायुसंबन्धिनां मन्त्राणां वाचकः । 'अध वायुं नियुतः सश्चतस्वाः' इत्यादिमन्त्रेष्वभिधानात्[4] । नियुतो यस्य वायोः सन्ति सोऽयं 'नियुत्वान्'[5] इन्द्रः सारथिर्यस्य वायोः सोऽयमिन्द्रसारथिः । अथ सारथित्वाभिधानाद् इन्द्रस्य चतुर्थभागप्राप्तिर्दर्शिता ॥

---

१. 'तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् । तस्मादियं व्याकृता वागुद्यते, तस्मात् सकृदिन्द्राय मध्यतो गृह्यते द्विर्वायवे'—इति तै० सं० ६.४.७ । 'चतुर्थभागे ग्रहे त्वाद्यौ भागौ द्वौ वायुरग्रहीत् । तृतीयमिन्द्रश्चतुर्थं वायुस्तु पुनरग्रहीत्'—इति षड्गुरुशिष्यः ।

२. इह कर्तृकरणयोरेकत्वमुपगतं सायणस्येत्यालोच्यम् । ३. ऋ० ४.४६.२ ।

४. ऋ० ७.९०.३ । ५. 'नियुतो वायोः'—इति निघ० १.१५.१० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उस इस [चतुर्थांश] को ऋषि [वामदेव] ने दिव्यदृष्टि से देखते हुए 'नियुत्वाँ इन्द्र सारथिः' 'वायु और उसका सारथि इन्द्र'—आदि मन्त्र के द्वारा सब कुछ कह दिया है।

उक्तमर्थं लोकव्यवहारेण द्रढयति—

**तस्माद्धाप्येतर्हि भरताः सत्वनां वित्तिं प्रयन्ति तुरीये हैव संग्रहीतारो वदन्तेऽमुनैवानूकाशेन यदद इन्द्रः सारथिरिव भूत्वोदजयत् ॥ २५ ॥ इति ।**

यस्मात् सारथिरूपस्येन्द्रस्य चतुर्थभागः पूर्वं प्रत्तः, तस्माद्ध तत एव कारणादेतर्ह्यपी-दानीमपि भरता[1] भरः सङ्ग्रामस्तं तन्वन्ति विस्तारयन्तीति भरता योद्धारः सत्वनां सारथीनां वित्तिं वेतनां जीवितरूपां प्रयन्ति प्रकर्षेण संपादयन्ति। ते च संग्रहीतारः सारथयस्तुरीये हैव युद्धलब्धस्य द्रव्यस्य चतुर्थभाग एव वदन्तेऽस्माकमेतावदुचितमिति कथयन्ति। तदौचित्ये युक्तिमाह—अमुनैव पूर्वोक्तेनैवानूकाशेन दृष्टान्तेन। स एव दृष्टान्तो यदद इत्यादिना स्पष्टीक्रियते। यस्मात्कारणाद् इन्द्रो वायोः सारथिरिव भूत्वाऽदश्चतुर्थांश-रूपं सोमात्मकं धनम् उदजयत्, तस्माल्लोकेऽपि तथैव प्रवृत्तमित्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीय-पञ्चिकायाः चतुर्थाध्याये (नवमाध्याये) प्रथमः खण्डः ॥१॥ (२५) [५५]

इसीलिए आज भी [भर अर्थात् संग्राम का विस्तार करने वाले भरत=] योद्धा सारथियों को जब धन देते हैं तो इसी दृष्टान्त को देते हुए वे युद्ध में प्राप्त धन के चौथाई भाग के लिए ही कहते हैं अर्थात् चौथाई भाग हमारा है क्योंकि इन्द्र ने वायु का सारथि बनकर ही विजय प्राप्त की थी।

॥ इस प्रकार नवम अध्याय में प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

अथैन्द्रवायवमैत्रावरुणाश्विनाख्यान् द्विदेवत्यग्रहान् प्राणरूपत्वेन प्रशंसति—

**ते वा एते प्राणा एव यद्द्विदेवत्याः[2] ॥ इति ।**

---

१. 'भरता युद्धार्थिनः सत्वनां सारथीनां वित्तिं वेतनां भृतिं प्रयन्ति प्रयच्छन्ति तुरीये च भागे संग्रहीतारः संग्रहीतॄन् वदन्ते भरताः। संग्रहीतार इति द्वितीयार्थे प्रथमा। यद्वा, भरता इति ऋत्विङ्नाम। भरता भृता भृत्याः, सत्वनां सत्वतां, सत्वन्तो दाक्षिणात्याः 'ये के च सत्वताम्' (ऐ० ब्रा० ३८.३) इति लिङ्गात्। वित्तिं भृतिं प्रयन्ति। ते च भृतिं प्रयन्तः संग्रहीतारो भृत्याः तुरीये चतुर्थे भागे प्रतीयमाने संवदन्ते। तथा चाहुः—कर्मकरा हि कर्म कुर्वाणाः पादिकमर्थं लभन्ते। इति, इति गोविन्दस्वामी। किंतु कीथमहोदयेन संज्ञाशब्दरूपेण व्याख्यातम्; (द्र० शत० १३.५.४.२१)।

२. द्र० 'प्राणा वा एते यद् द्विदेवत्याः'—इति तै० सं० ६.४.९।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ii. २६ [ix. २] जो देवता-द्वन्द्व के ग्रह हैं वे ये ग्रह प्राण ही हैं।

तेषां त्रयाणां प्राणरूपत्वं विभज्य दर्शयति—

**वाक् च प्राणश्चैन्द्रवायवश्चक्षुश्च मनश्च मैत्रावरुणः श्रोत्रं चाऽऽत्मा चाऽऽश्विनः ॥ इति।**

उच्छ्वासादिवृत्तिभेदवर्ती वायुः प्राणः। वागादीनीन्द्रियाणि। तेषां प्राणरूपत्वाभावेऽपि प्राणाधीनवृत्तिलाभत्वेन पूर्वत्र प्राणा इति निर्देशः कृतः[1]। इममर्थं वाजसनेयिन आमनन्ति—'त एतस्यैव सर्वे रूपमभवंस्तस्मादेत एतेनाऽऽख्यायन्ते प्राणाः'[2] इति॥

वाक् [इन्द्रिय] और प्राण [उच्छ्वास आदि] ऐन्द्रवायव-ग्रहस्वरूप हैं, चक्षु और मन [इन्द्रिय] मैत्रावरुण-ग्रहस्वरूप हैं, श्रोत्र और जीवात्मा दोनों आश्विन-ग्रहस्वरूप हैं।

तत्र वायुरूपे त्वमुख्यः प्राणो वाक्चेत्येतद् उभयमैन्द्रवायवग्रहस्वरूपं, चक्षुर्मनश्चातीन्द्रियद्वयं मैत्रावरुणग्रहस्वरूपं, श्रोत्रं जीवात्मा चेत्युभयमाश्विनग्रहस्वरूपं[3] वक्ष्यमाणयाज्यानुवाक्योपयोगित्वेन प्राणरूपतया प्रशस्यैन्द्रवायवग्रहस्य याज्यानुवाक्ये विधातुं पूर्वपक्षमाह—

**तस्य हैतस्यैन्द्रवायवस्याप्येकेऽनुष्टुभौ पुरोनुवाक्ये कुर्वन्ति गायत्र्यौ याज्ये ॥ इति।**

योऽयमैन्द्रवायवग्रहः पूर्वमुक्तस्तस्यैके ह याज्ञिका अनुष्टुप्छन्दस्के ऋचौ पुरोनुवाक्ये कृत्वा गायत्रीछन्दस्के ऋचौ याज्ये इति कुर्वन्ति। अपिशब्दोऽनर्थकः। यदाऽपि कुर्वन्तीत्येवं पूर्वपक्षानुवादार्थो वा॥

उस पूर्वोक्त ऐन्द्रवायव ग्रह का कुछ [याज्ञिक] अनुष्टुप् छन्दस्क दो ऋचाओं में पुरोनुवाक्या करके गायत्री-छन्दस्क दो ऋचाओं में याज्या करते हैं।

तेषां पूर्वपक्षिणामभिप्रायं दर्शयति—

**वाक् च वा एष प्राणश्च ग्रहो यदैन्द्रवायवस्तदपि च्छन्दोभ्यां यथायथं कल्प्स्येते[4] इति ॥ इति।**

---

१. 'प्राणशब्दः प्राणाप्राणेषु लक्षणया छत्रिणो गच्छन्तीतिवत्'—इति गोविन्दस्वामी। 'प्राणप्रवृत्तिभेदात्मकचक्षुरादिरूपत्वात्, चक्षुरादिस्थितिहेतुत्वाद् वा'—इति भट्टभास्करः।

२. शत० ब्रा० १४.४.३.३२। 'पञ्चधा विहितो वा अयं, शीर्षन् प्राणो मनो वाक् प्राणश्चक्षुः श्रोत्रम्'—इत्यादि च शत० ब्रा० ९.२.२.५;१.५.२.५;३.१.३.१९–२१; ५.२.४.१०;११.७.१.७;१३.१.७.२।

३. तु० तै० सं० ६.४.९। 'वचनप्राणनहेतू इन्द्रवायू चिद्रूपत्वात् प्रेरयितृत्वाच्च। दर्शनमननहेतू मित्रावरुणौ प्रकाशकत्वाज्जीवयितृत्वाच्च श्रवणशरीरहेतू अश्विनौ आरोग्यहेतुत्वात्'—इति भट्टभास्करः।    ४. 'क्लृप्स्येते' इति वा पाठः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

योऽयमैन्द्रवायवग्रहः स एष प्राणात्मकः तत्रेन्द्रो वाचो व्याकरणरूपायाः कर्ता 'तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोदिति' श्रुत्यन्तराद्[1] अत इन्द्रद्वारा वाग्रूपत्वम्। 'यः प्राणः स वायुः' इति श्रुत्यन्तरात्[2] प्राणरूपत्वम्। तावुभावपि यथोक्ताभ्यामनुष्टुब्गायत्रीछन्दोभ्यां यथायथं स्वस्वसंबन्धमनतिक्रम्य कल्प्स्येते कल्पितौ भविष्यतः[3]। 'वाग्वा अनुष्टुप्' इति श्रुत्यन्तराद्[4] अनुष्टुप्छन्दसो वाग्रूपत्वम्। 'प्राणो वा गायत्रीति' श्रुत्यन्तराद् गायत्र्याः प्राणरूपत्वम्। अत्र मन्त्रविशेषाः शाखान्तरे द्रष्टव्याः।[5] सोऽयं पूर्वपक्षिणामभिप्रायः॥

[वे कहते हैं कि]—जो यह ऐन्द्रवायव ग्रह है वह प्राणरूप है और [उसमें इन्द्र व्याकरण के कर्ता होने से] वाणी रूप हैं। इस प्रकार वे दोनों यथाक्रम छन्दों के साथ साम्यत्व को प्राप्त होंगे।

पूर्वपक्षनिराकरणपूर्वकसिद्धान्तं दर्शयति—

**तत्तन्नाऽऽदृत्यं व्यृद्धं वा एतद् यज्ञे क्रियते यत्र पुरोनुवाक्या ज्यायसी याज्यायै, यत्र वै याज्या ज्यायसी तत्समृद्धमथो यत्र समे यस्यो तत्कामाय तथा कुर्यात् प्राणस्य च वाचश्चात्रैव तदुपाप्तम्॥** इति।

तत्पूर्वपक्षमतं नाऽऽदरणीयम्। यत्र हेतुरुच्यते—यस्मिन् कर्मणि याज्यायाः सकाशात् पुरोनुवाक्याऽक्षरैरभ्यधिका तत्कर्म व्यृद्धं समृद्धिरहितम्। पूर्वपक्षिणश्चात्र न्यूनां याज्यां पुरोनुवाक्यामधिकां कुर्वन्ति। तस्मादेतन्मतमयुक्तम्। यत्र वै यस्मिंस्तु कर्मणि पुरोनुवाक्यायाः सकाशादभ्यधिका याज्या भवति तत्कर्म समृद्धम्। अपि च यत्र कर्मणि याज्यानुवाक्ये समे भवतः, तदपि कर्म समृद्धम्। साम्यपक्षेऽन्योऽपि गुणोऽस्ति। तत्कथमिति, तदुच्यते—प्राणस्य च वाचश्च प्राणवाचोर्मध्ये यस्य यस्य वस्तुनः कामायापेक्षितफलसिद्धये तत्तथा कुर्यात् तेन पूर्वोक्तप्रकारेणानुष्टुब्गायत्रीजन्यमनुष्ठानं पूर्वपक्षी कुर्वीत तत्सर्वं विफलम्। तत्रैव याज्यानुवाक्ययोः साम्यानुष्ठान एवोपाप्तं शीघ्रं प्राप्तं भवति। तस्मात् साम्यपक्ष एवाऽऽदरणीय इत्यर्थः॥

किन्तु यह मत आदरणीय नहीं है क्योंकि जिस कर्म में याज्या से पुरोनुवाक्या [अक्षरों में] अधिक होती है वह कर्म समृद्धिरहित होता है। जिस कर्म में पुरोनुवाक्या

---

१. तै० सं० ६.४.७.४। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्—इति संहितापाठः। १.४.४ भाष्ये ह्यस्य व्याख्यानं द्रष्टव्यम्।

२. 'तदपि तावपि वाक्प्राणौ तदीयाभ्यां छन्दोभ्यां परिगृहीताभ्यां यथायथं यथास्व कल्प्स्येते क्लृप्तौ भविष्यतः'—इति भट्टभास्करः।

३. यो वै प्राणः स वातः····अयं वै····प्राणो योऽयं पवते'—इति शत० ब्रा० ५.२.४.९।

४. ऐ० ब्रा० ३.२.४।

५. आ वायो भूष शुचिपाः'—इत्यादयः तै० सं० १.४.४।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

से याज्या अधिक होती है वह कर्म समृद्धि वाला होता है; और जिस कर्म में याज्या व पुरोनुवाक्या [अक्षरों में] बराबर हों [तो वह भी समृद्धि युक्त होता है] प्राण और वाणी के मध्य जो उसकी कामना होती है वह इसी [याज्यानुवाक्या के साम्यानुष्ठान] में शीघ्र प्राप्त होती है।

साम्यपक्षे पूर्वपक्ष्यभिप्रेतं प्रयोजनं कथं सिध्येदित्याशङ्क्याऽऽह—

**वायव्या पूर्वा पुरोनुवाक्यैन्द्रवायव्युत्तरैवं, याज्ययोः, सा या वायव्या तया प्राणं कल्पयति, वायुर्हि प्राणोऽथ यैन्द्रवायवी तस्यै यदैन्द्रं पदं तेन वाचं कल्पयति, वाग्घ्यैन्द्रचुपो तं काममाप्नोति यः प्राणे च वाचि च न यज्ञे विषमं करोति ॥ २६ ॥** इति।

द्वयोः पुरोनुवाक्ययोर्मध्ये या पूर्वा पुरोनुवाक्या सा 'वायव्या' वायुदेवताका 'वायवा याहि दर्शत'[1] इत्यस्यामृचि वायोः श्रवणात्। या तूत्तरा पुरोनुवाक्या सेयमैन्द्रवायवी 'इन्द्रवायू इमे सुता'[2] इत्यस्यामृचीन्द्रवाय्वोः श्रवणात्। एवं याज्ययोरपि द्रष्टव्यम्। उभयोर्याज्ययोर्मध्ये या पूर्वा सा वायव्या। 'अग्रं पिबा मधूनाम्'[3] इत्यस्यामृचि सुतं वायो दिविष्टिष्विति वायोः श्रवणात्। योत्तरा याज्या सेन्द्रवायवी। 'शतेना नो अभिष्टिभिः'[4] इत्यस्यामृचि नियुत्वाँ इन्द्रसारथिरितीन्द्रः श्रूयते वायो सुतस्येति वायुरपि श्रूयते। तस्माद् इयमैन्द्रवायवी। एवं सति या वायव्या पुरोनुवाक्या याज्या च तया प्राणः कल्पितः स्वव्यापारसमर्थो भवति 'यः प्राणः स वायुः' इति श्रुत्यन्तरेण वायुप्राणयोरेकत्वस्य पूर्वपक्षिणाऽप्यङ्गीकर्तव्यत्वात्। अथ यैन्द्रवायवी पुरोनुवाक्या या याज्या वा तस्यै तस्यामुभयविधायां यदैन्द्रमिन्द्रसंबन्धिपदं विद्यते तेन पदेन वाचं कल्पयति समर्थां करोति। हि यस्मात् कारणाद् वागैन्द्रीन्द्रस्य[5] व्याकरणकर्तृत्वात्। तस्माद् वाचासामर्थ्यं भवति। एवमनुतिष्ठन् पुरुषो वाक्प्राणयोर्यः कामोऽस्ति तं प्राप्नोति यज्ञे च च्छन्दःसाम्यं विषममनुष्ठानं न करोति॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः चतुर्थाध्याये (नवमाध्याये) द्वितीयः खण्डः ॥२॥ (२६) [५६]

[दो में से] पहली पुरोनुवाक्या वायुदेवताक होनी चाहिए और दूसरी इन्द्र और वायु-देवताक। इसी प्रकार दो याज्या भी होनी चाहिए। इस प्रकार वह जो वायु-देवताक

---

१. ऋ० १.२.१। २. ऋ० १.२.४। ३. ऋ० ४.४६.१। ४. ऋ० ४.४६.२।

५. पुरासीद् ऐन्द्रं व्याकरणमीति प्रवादाश्रितमेतदुक्तम्। वस्तुतः 'इन्द्रश्चन्द्रः'—इति वोपदेवीय—कविकल्पद्रुममुखबन्धादौ लिखित्वादिन्द्राचार्यस्य कस्यचिच्छाब्दिकत्वमात्रं प्रतीयते, न तु व्याकरणप्रणेतृत्वम्, तथात्वेऽपि नैवैतरेयब्राह्मणपूर्वजत्वं तस्य सम्भाव्यते।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[पुरोनुवाक्या और याज्या] है उससे प्राण को अपने व्यापार में समर्थ बनाता है क्योंकि वायु ही प्राण है और जो इन्द्र-वायु देवताक [पुरोनुवाक्या या याज्या] है उसमें जो 'इन्द्र' पद है उससे वाणी को समर्थ बनाता है क्योंकि वाक् [=व्याकरण] के कर्ता इन्द्र हैं। इस प्रकार प्राण और वाणी में जो कामना होती है उसको वह प्राप्त करता है और यज्ञ में विषय-अनुष्ठान भी नहीं करता है [अर्थात् छन्दः साम्य भी बना रहता है]।

॥ इस प्रकार नवम अध्याय में द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

अथ द्विदेवत्यानामैन्द्रवायवमैत्रावरुणाश्विनग्रहाणां त्रयाणां ग्रहणहोमयोः पात्रवैषम्यं विधत्ते—

**प्राणा वै द्विदेवत्या एकपात्रा गृह्यन्ते, तस्मात् प्राणा एकनामानो द्विपात्रा हूयन्ते तस्मात् प्राणा द्वन्द्वम् ॥** इति ।

द्वे देवते युग्मरूपे येषां ग्रहाणां ते द्विदेवत्याः। इन्द्रश्च वायुश्चेत्येकं युग्मं, मित्रश्च वरुणश्चेति द्वितीयं युग्मं, यावश्विनौ तौ तृतीयं युग्मम् । त एते द्विदेवत्यग्रहाः प्राणा वै, इन्द्रियरूपा एव, 'वाग्वा ऐन्द्रवायवश्चक्षुर्मैत्रावरुणः श्रोत्रमाश्विनः'[1] इति श्रुत्यन्तरात् । ते च ग्रहा एकपात्रा ग्रहीतव्या इन्द्रवाय्वोरेकस्मिन् पात्रे ग्रहणं मित्रावरुणयोरेकस्मिन्नश्विनोरेकस्मिन्निति । यस्मात् प्राणरूपाणां ग्रहाणामेकपात्रत्वं तस्माद् वाक्चक्षुःश्रोत्ररूपाः प्राणा एकनामानः प्राणा इत्येवमेतेषां नाम । ते च ग्रहा होमकाले द्विपात्रा होतव्यास्तत्तद्ग्रहणपात्रेणाध्वर्युर्जुहोति प्रतिप्रस्थाता पात्रान्तरेण जुहोतीति । यस्माद्धोमकाले पात्रद्वयं तस्माच्चक्षुरादयः प्राणाः स्वस्वगोलकेषु द्वन्द्वं द्वौ द्वौ भूत्वा वर्तन्ते । अयमर्थः श्रुत्यन्तरेण प्रश्नोत्तराभ्यामाम्नातः—'ब्रह्मवादिनो वदन्ति, कस्मात् सत्यादेकपात्रा द्विदेवत्या गृह्यन्ते द्विपात्रा हूयन्त इति, यदेकपात्रा गृह्यन्ते तस्मादेकोऽन्तरतः प्राणो द्विपात्रा हूयन्ते तस्मा द्वौद्वौ बहिष्टात् प्राणाः'[2] इति । होमकाले द्विपात्रत्वम् आपस्तम्बेन स्पष्टीकृतम्—'हविर्धानं गच्छन् संप्रेष्यति वायव इन्द्रवायुभ्यामनुब्रूहीत्युपयाम गृहीतोऽसि वाऽक्षसदसीत्यादित्यपात्रेण प्रतिप्रस्थाता द्रोणकलशादैन्द्रवायवस्य प्रतिनिग्राह्यं गृहीत्वा न सादयत्यैन्द्रवायवमादायाध्वर्युर्द्रोणकलशाच्च परिप्लवया राजानमुभौ निष्क्रम्य दक्षिणतोऽवस्थाय दक्षिणं परिधिसंधिमन्ववहृत्याध्वरो यज्ञोऽयमस्तु देवा इति परिप्लवयाऽऽघारमाघार्याश्राव्य प्रत्याश्राविते संप्रेष्यति वायव इन्द्रवायुभ्यां प्रेष्य वषट्कृते जुहोत्येवमुत्तराभ्यां ग्रहाभ्यां प्रचरते'[3] इति ॥

---

१. द्र० इतः परम्, ३२५ पृ० सा० भा० । २. तै० सं० ६.४.९.३ ।
३. आप० श्रौ० १२.२०.१८–२४ । 'जुहोति । पुनर्वषट्कृते जुहुतः'—इत्येव पाठो मौलिकः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ii. २७ [ix. ३] देवता-द्वन्द्व के ग्रह प्राण [= इन्द्रियस्वरूप] हैं और [वे ग्रह एक देव-युग्म के लिए] एक पात्र में ग्रहण किये जाते हैं [अर्थात् इन्द्र-वायु को एक पात्र में, मित्रावरुण को एक में और अश्विनों को एक में। क्योंकि प्राणरूप ग्रहों का एक पात्रत्व है] इसीलिए [वाक्, चक्षु और श्रोत्र रूप] प्राण एक नाम वाले हैं। [अध्वर्यु और प्रतिप्रस्थाता] दो पात्रों से आहुति देते हैं [क्योंकि होम के समय दो पात्रों से आहुति देते हैं] अतः [चक्षु आदि] प्राण दो-दो के द्वन्द्व होकर अवस्थित हैं।

अथ होतुर्ग्रहशेषभक्षप्रतिग्रहमन्त्रं विधत्ते—

**येनैवाध्वर्युर्यजुषा प्रयच्छति तेन होता प्रतिगृह्णाति ॥ इति ।**

अध्वर्योः प्रदानमन्त्र आपस्तम्बेन दर्शितः—'ग्रहमध्वर्युरादाय क्षिप्रं होतारमनुद्रुत्य मयि वसुः पुरो वसुरिति ग्रहं होत्रे प्रयच्छत्येतेनैव होता प्रतिगृह्य दक्षिण ऊरावासाद्य हस्ताभ्यां निगृह्याऽऽस्ते'[1] इति ॥

जिस यजुष् मन्त्र से [ग्रह-शेष] अध्वर्यु देता है; उसी [मन्त्र] से होता ग्रहण करता है।

अथ होतुः समन्त्रकं भक्षणं विधत्ते—

**एष वसुः पुरूवसुरिह वसुः पुरूवसुर्मयि वसुः पुरूवसुर्वाक्पा वाचं मे पाहीत्यैन्द्रवायवं भक्षयतीति ॥ इति ।**

एष ऐन्द्रवायवग्रहो वसुर्निवासहेतुः पुरूवसुः प्रभूतनिवासहेतुः। कस्मिँल्लोके निवासहेतुरित्याकाङ्क्षानिवृत्त्यर्थमिह वसुरित्यादिकमुच्यते। अस्मिन्नेव मनुष्यलोके निवासं करोति। तत्रापि प्रभूतनिवासं करोति। कस्मिन् पुरुषे ग्रहस्य निवास इत्याकाङ्क्षानिवृत्त्यर्थं मयि वसुरित्यादिकमुच्यते। मयि होतरि निवसति। तदाऽपि प्रभूतनिवासं करोति। स तादृशो ग्रहो वाक्पा वाचं पालयति। हे ग्रह मे वाचं पालयेत्यनेन मन्त्रेणैन्द्रवायवशेषं भक्षयेत् ॥

यह [ऐन्द्रवायव ग्रह] निवास हेतु है। प्रभूत निवास का हेतु है। इसी मनुष्यलोक में यह निवास करता है। वहाँ भी प्रभूत निवास करता है। मुझ होता में निवास करता है। वहाँ भी प्रभूत निवास करता है। उस प्रकार के 'वाणी की रक्षा करने वाले हे ग्रह! मेरी वाणी की रक्षा करो' इस मन्त्र से ऐन्द्रवायव [ग्रह-शेष] का भक्षण करता है।

तस्य मन्त्रस्यावशिष्टभागं पठति—

**उपहूता वाक्सह प्राणेनोप मां वाक्सह प्राणेन ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति ॥ इति ।**

1. आप० श्रौ० १२.२१.५,६ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्राणेन सह वाग्देवता मयोपहूताऽनुज्ञाता; तस्मात् प्राणसहिता सा वाग्देवता मामुपह्वयतामनुजानातु तथर्षय उपहूता मयाऽनुज्ञाताः। कीदृशा ऋषयो, दैव्यासो देवेषु भवास्तनूपावानोऽस्मच्छरीरपालकास्तन्वः शरीरस्यास्मदीयस्य संबन्धिन इति शेषः। तपोजाः पूर्वजन्मानुष्ठितात् तपसो जाताः। यस्माद् इदृशा ऋषयो मयाऽनुज्ञाताः, तस्मात् तेऽपि यथोक्तविशेषणा मामुपह्वयन्तामनुजानन्तु इत्येष मन्त्रशेषः ॥

वाणी प्राण के साथ मेरे द्वारा आहूत हुई। अतः प्राण के साथ वह वाणी मुझे बुलाए अर्थात् अनुज्ञा करे। दिव्य हमारे शरीर के पालक और पूर्वजन्मानुष्ठित तप से उत्पन्न शरीर वाले ऋषि मेरे द्वारा आहूत हुए। [क्योंकि इस प्रकार के ऋषि मेरे द्वारा अनुज्ञात हुए] अतः दिव्य ऋषि जो हमारे शरीर के पालक और तप से उत्पन्न शरीर वाले हैं मुझे बुलाएँ।

अस्य शेषस्य तात्पर्यं दर्शयति—

**प्राणा वा ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजास्तानेव तदुपह्वयते इति।**

यथोक्तविशेषणविशिष्टा ऋषयः प्राणस्वरूपा एव। तस्मात् तेन मन्त्रशेषपाठेन तानेव प्राणान् अनुजानाति ॥

दिव्य, हमारे शरीर के पालक और तप से उत्पन्न शरीर वाले ऋषि प्राण [स्वरूप] हैं। अतः उस [मन्त्र भाग] के पाठ द्वारा वह उन्हीं [प्राणों] को बुलाता है।

मैत्रावरुणग्रहस्य समन्त्रकं शेषभक्षणं मन्त्रशेषव्याख्यानं च दर्शयति—

**एष वसुर्विदद्वसुरिह वसुर्विदद्वसुर्मयि वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहीति मैत्रावरुणं भक्षयत्युपहूतं चक्षुः सह मनसोप मां चक्षुः सह मनसा ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति, प्राणा वा ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजास्तानेव तदुपह्वयते ॥ इति।**

एष मैत्रावरुणग्रहो विदद्वसुर्ज्ञानपूर्वकनिवासहेतुः। अन्यत् सर्वं पूर्ववत् ॥

यह [मैत्रावरुण ग्रह] निवास हेतु है, ज्ञानपूर्वक निवास हेतु है। इसी मृत्युलोक में यह निवास करता है। वहाँ भी ज्ञानपूर्वक निवास करता है। मुझ होता में निवास करता है। वहाँ भी ज्ञानपूर्वक निवास करता है। 'चक्षु की रक्षा करने वाले हे ग्रह! मेरे चक्षुओं की रक्षा करो'—इस मन्त्र से मैत्रावरुण [ग्रह-शेष] का भक्षण करता है। चक्षु मन के साथ मेरे द्वारा आहूत हुआ। अतः मन के साथ चक्षु मुझे बुलाए। दिव्य, हमारे शरीर के पालक और पूर्वजन्मानुष्ठित तप से उत्पन्न शरीर वाले ऋषि मेरे द्वारा आहूत हुए। [क्योंकि इस प्रकार के ऋषि मेरे द्वारा अनुज्ञात हुए] अतः दिव्य ऋषि जो हमारे शरीर के पालक और तप से उत्पन्न शरीर वाले हैं मुझे बुलाएँ। दिव्य, हमारे शरीर के

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पालक और तप से उत्पन्न शरीर वाले ऋषि प्राण [स्वरूप] हैं। अतः उस [मन्त्र भाग] के पाठ द्वारा वह उन्हीं [प्राणों] को बुलाता है।

आश्विनग्रहशेषस्य समन्त्रकं भक्षणं मन्त्रशेषव्याख्यानं च दर्शयति—

**एष वसुः संयद्वसुरिह वसुः संयद्वसुर्मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहीत्याश्विनं भक्षयत्युपहूतं श्रोत्रं सहाऽऽत्मनोप मां श्रोत्रं सहाऽऽत्मना ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति प्राणा वा ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजास्तानेव तदुपह्वयते ॥** इति।

एष आश्विनग्रहः संयद्वसुर्नियतनिवासः। अथवा वसुशब्दः सर्वत्र धनपरत्वेन व्याख्येयः। मन्त्रशेषस्य पृथक्पाठो व्याख्येयत्वप्रदर्शनार्थः॥

यह [आश्विन-ग्रह] धन है, नियत [इकट्ठा किया हुआ] धन है। इसी लोक में यह धन है। [वहाँ भी] नियत धन है। मुझ होता में धन है। [वहाँ भी] नियत धन है। 'हे श्रोत्र के रक्षक, मेरे श्रोत्र की रक्षा करो'—इस मन्त्र से आश्विन [ग्रह-शेष] का भक्षण करता है। श्रोत्र आत्मा के साथ मेरे द्वारा आहूत हुआ। अतः आत्मा के साथ श्रोत्र मुझे बुलाए। दिव्य, हमारे शरीर के पालक और पूर्वजन्मानुष्ठित तप से उत्पन्न शरीर वाले ऋषि मेरे द्वारा आहूत हुए। [क्योंकि इस प्रकार के ऋषि मेरे द्वारा अनुज्ञात हुए] अतः दिव्य ऋषि जो हमारे शरीर के पालक और तप से उत्पन्न शरीर वाले हैं मुझे बुलाएँ। दिव्य, हमारे शरीर के पालक और तप से उत्पन्न शरीर वाले ऋषि प्राण [स्वरूप] हैं। अतः उस [मन्त्र भाग] के पाठ द्वारा वह उन्हीं [प्राणों] को बुलाता है।

भक्षणे कंचिद् विशेषं विधत्ते—

**पुरस्तात् प्रत्यञ्चमैन्द्रवायवं भक्षयति तस्मात् पुरस्तात् प्राणापानौ, पुरस्तात् प्रत्यञ्चं मैत्रावरुणं भक्षयति, तस्मात् पुरस्ताच्चक्षुषी, सर्वतः परिहारमाश्विनं भक्षयति, तस्मान्मनुष्याश्च पशवश्च सर्वतो वाचं वदन्तीं शृण्वन्ति ॥ २७ ॥** इति।

प्राङ्मुखो होता स्वस्य पुरस्तात् सन्तमैन्द्रवायवं प्रत्यञ्चं स्ववक्त्रसमीपवर्तिनं कृत्वा भक्षयेत्। अत एव पुरुषस्य प्राणापानवायू पुरोभागे संपन्नौ। मैत्रावरुणेऽपि समानन्यायः। आश्विनं तु सर्वतः परिहारं सर्वासु दिक्षु परितो हरणं कृत्वा शिरः प्रदक्षिणीकृत्येत्यर्थः। यस्माच्छ्रोत्ररूपस्याऽऽश्विनस्य परितो हरणं तस्माच्छ्रोत्रेण सर्वतः शृण्वन्ति पुरतः पृष्ठतः पार्श्वयोर्वाचं वदन्तीं स्वार्थमभिदधानां वाचं शृण्वन्ति। यथा होतुरीदृशं भक्षणं तथाऽध्वर्योरपि शाखान्तरे श्रुतम्—'वाग्वा ऐन्द्रवायवश्चक्षुर्मैत्रावरुणः श्रोत्रमाश्विनः पुरस्ताद

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ऐन्द्रवायवं भक्षयति तस्मात् पुरस्ताद् वाचा वदति पुरस्तान्मैत्रावरुणं तस्मात् पुरस्ताच्चक्षुषा पश्यति सर्वतः परिहारमाश्विनं तस्मात् सर्वतः श्रोत्रेण शृणोति'[1] इति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीय-पञ्चिकायाः चतुर्थाध्याये (नवमाध्याये) तृतीयः खण्डः ॥३॥ (२७) [५७]

पूर्वाभिमुख [होता] ग्रह के मुख को अपनी ओर करके उस ऐन्द्रवायव [ग्रह-शेष] का भक्षण करता है; क्योंकि प्राण और अपान पुरुष के सामने होते हैं। इसी प्रकार वह सामने पूर्व-मुख करके मैत्रावरुण [ग्रह-शेष] का भक्षण करता है; क्योंकि दोनों आँखें पुरुष के सामने होती हैं। वह सभी दिशाओं में घुमाकर अर्थात् शिर की प्रदक्षिणा करके आश्विन [ग्रह-शेष] का भक्षण करता है [क्योंकि श्रोत्ररूप आश्विन ग्रह को चारों ओर घुमाते हैं] इसीलिए मनुष्य और पशु दोनों ही चारों ओर से वाणी बोलते हैं और सुनते हैं।

॥ इस प्रकार नवम अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

अथ द्विदेवत्यग्रहेषु होत्रा प्रयोक्तव्यानां मन्त्राणां मध्येऽनुच्छ्वासं विधत्ते—

**प्राणा वै द्विदेवत्या, अनवानं द्विदेवत्यान्यजेत् प्राणानां संतत्यै प्राणानाम-व्यवच्छेदाय ॥ इति ।**

द्विदेवत्यग्रहेषु याज्यां पठन् होता अनवानं[2] यजेन्मन्त्रमध्य उच्छ्वासमकृत्वा यजेत्। द्विदेवत्यानां प्राणरूपत्वादयं नैरन्तर्यपाठः प्राणानां संततावस्थापनाय भवति। ततस्तेषां व्यवच्छेदो न भवति। संततिरव्यवच्छेदश्चेत्येक एवार्थोऽन्वयव्यतिरेकाभ्यामुच्यते। इतरेषु ग्रहेषु याज्यान्ते वषट्कारेण सकृद्धुत्वा 'सोमस्याग्ने वीहि' इत्यनुवषट्कारेण[3] पुनर्यजन्ति ॥

ii. २८ [ix. ४] दो देवों के ग्रह प्राण हैं इसलिए प्राणों की निरन्तरता बनाये रखने के लिए और प्राणों के क्रम को टूटने न देने के लिए दो देवों का यजन लगातार पाठ करते हुए करना चाहिये।

अतः प्रसक्तमनुवषट्कारमन्त्रं निषेधति—

**प्राणा वै द्विदेवत्याः, न द्विदेवत्यानामनुवषट्कुर्यात् ॥ इति ।**

---

१. तै० सं० ६.४.९.४।

२. (i) 'याज्याया अनवानवचनं पुरोनुवाक्याप्रैषाणामप्युपलक्षणार्थम्'—इति भट्ट-भास्करः। (ii) अनवानं नाम आदित अन्तादनुच्छ्वासः।

३. द्र० इतः पूर्वम्, १.४.५ १३४ पृष्ठे।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दो देवों के ग्रह प्राण हैं अतः होता दो देवों के लिए अनुवषट्कार न बोले।

विपक्षे बाधपुरःसरं स्वपक्षं निगमयति—

**यद्‌द्विदेवत्यानामनुवषट्कुर्याद्, असंस्थितान् प्राणान् संस्थापयेत्, संस्था वा एषा यदनुवषट्कारो य एनं तत्र ब्रूयाद् असंस्थितान् प्राणान् समतिष्टपत् प्राण एनं हास्यतीति शश्वत् तथा स्यात् तस्मान्न द्विदेवत्यानामनुवषट्कुर्यात् ॥इति।**

यदि होता द्विदेवत्येष्वनुवषट्कारमन्त्रं पठेत् तदानीम् असंस्थितानसमाप्ताननुपरतान् प्राणान् संस्थापयेद् उपरतान् कुर्यात्। योऽयमनुवषट्कार एषैव संस्था ग्रहस्य समाप्तिः। अतः ग्रहरूपाणां प्राणानामप्युपरतिः स्यात्। तत्रानुवषट्कारकाले यः कोऽप्येनं होतारं ब्रूयाच्छपेत्। कथमिति, तदुच्यते—अनुपरतान् प्राणानुपरतानकरोत् तस्मादेनं होतारं प्राणः परित्यजतीति। ततोऽपराधिनो होतुरवश्यं तथा भवेत्। तस्मादेतेष्वनुवषट्कार-मन्त्रं न पठेत् ॥

**यदि होता दो देवों के [ग्रह के] लिए अनुवषट्कार करता है तो अनुपरत प्राणों को उपरत करता है अर्थात् निरन्तर पाठ को रोक देता है। वस्तुतः अनुवषट्कार इस [ग्रह] की समाप्ति है। अतः वहाँ [अनुवषट्कार के समय] जो कोई पुरुष इस [होता] से आकर कहे कि 'अनुपरत प्राणों को उपरत किया है अतः इस [होता] को प्राण छोड़ देंगे।' तो ऐसा अवश्य ही होता है। इसलिए दो देवताओं के [ग्रह के] लिए अनुवषट्कार नहीं करना चाहिए।**

अथैन्द्रवायवे कंचिद्विशेषं वक्तुं प्रश्नमुत्थापयति—

**तदाहुर्द्विरागूर्य मैत्रावरुणो द्विः प्रेष्यति सकृदागूर्य होता द्विर्वषट्करोति; का होतुरागूरिति ॥ इति।**

आगूःशब्देन प्रतिज्ञाऽभिधीयते। मैत्रावरुणो द्विरागूर्य द्विः प्रतिज्ञाय द्विः प्रेष्यति। द्वावस्य प्रैषमन्त्रौ 'होता यक्षद्वायुमग्रे गाम्' इत्येको 'होता यक्षदिन्द्रवायू अर्हन्तेति' द्वितीयः।[1] तयोरुभयोरप्यादावयं[2] होता यक्षदिति द्विः प्रतिजानाति। द्वयोर्मन्त्रयोरन्ते 'होतर्यज होतर्यज' इति द्विः प्रेष्यति। होता तु 'अग्रं पिवा मधूनाम्'[3] इत्यादिके द्वे याज्ये पठितुमादौ 'ये यजामहे'[4] इति सकृदेव प्रतिजानीते। द्वयोर्याज्ययोरन्ते वौषड्वौषडिति द्विर्वषट्-करोति। तच्च न्यायेन द्वितीयमन्त्रादावपि 'ये यजामहे' इत्यागूःकरणमपेक्षितम्। तच्च न क्रियते तस्माद्धोतुर्द्वितीययाज्यादावागूः का नाम स्यादिति प्रश्नः ॥

**इस सम्बन्ध में याज्ञिक प्रश्न करते हैं कि मैत्रावरुण [नामक ऋत्विज] जब दो बार आगू [=प्रतिज्ञा] करते हुए दो बार [याज्या मन्त्र बोलने की] प्रेरणा करता है तो होता**

---

१. आश्व० श्रौ० ५.५.३।
२. अर्थात् मैत्रावरुणः।
३. ऋ० ४.४६.१,२।
४. वा० सं० १९.२४।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

क्यों [दो याज्या मन्त्र पढ़ने के लिए] एक बार आगू करके दो बार [वौषड्, वौषड] वषट्कार करता है [वस्तुतः दूसरे याज्या मन्त्र के लिए भी 'ये यजामहे'-ऐसा आगूकरण अपेक्षित था। जिसे होता नहीं करता, अतः द्वितीय याज्या के लिए] होता का आगू क्या होगा ?

द्वितीययाज्यादौ मा भूदेवाऽऽगूरित्येतदुत्तरं विपक्षवाधपूर्वकं दर्शयति--

**प्राणा वै द्विदेवत्या आगूर्वज्रस्तद्यदत्र होताऽन्तरेणाऽऽगुरेताऽऽगुरा वज्रेण यजमानस्य प्राणान् वीयाद् य एनं तत्र ब्रूयादागुरा वज्रेण यजमानस्य प्राणान् व्यगात् प्राण एनं हास्यतीति शश्वत् तथा स्यात् तस्मात् तत्र होताऽऽन्तरेण नाऽऽगुरेत ॥** इति ।

द्विदेवत्यग्रहाः प्राणरूपा येयमागूर्ये यजामह इति प्रतिज्ञा सा वज्ररूपा ।[1] तथा सत्यत्र कर्मण्यन्तरेण याज्ययोर्मध्ये यदि होताऽऽगुरेत प्रतिजानीयात् तदानीमागूःस्वरूपेण वज्रेण यजमानस्य प्राणान् वियाद विगतान् कुर्यात् । तत्र तस्यामागुरि क्रियमाणायां यः कोऽप्येनं होतारं शपेत् । कथमिति, तदुच्यते--आगुरा वज्रेण होता यजमानस्य प्राणान् व्यगाद विगतान् अकरोत् । तस्मात् प्राण एनं यजमानं होतारं वा परित्यजतीति । तेन कृतः शापोऽवश्यं तथैव स्यात् । तस्मात् तत्र तयोर्याज्ययोरन्तरेण मध्ये होता नाऽऽगुरेत ॥

वस्तुतः दो देवताओं के [ग्रह] प्राणरूप हैं और आगू [अर्थात् 'ये यजामहे'-यह प्रतिज्ञा] वज्ररूप है। इसलिए यहाँ यदि होता [दो याज्या मन्त्रों के] बीच में आगू बोल दे तो वह आगू-रूप वज्र से यजमान के प्राणों को काट दे। यदि कोई इस [होता] से वहाँ [आगूकरण के समय] कहे कि 'आगू-रूप वज्र से होता ने यजमान के प्राणों को काट डाला। इसलिए इस [होता] को प्राण छोड़ देंगे।' तो ऐसा अवश्य ही होता है। इसलिए वहाँ [दो याज्या के] बीच में होता को आगू नहीं करना चाहिए।

तत्रैव युक्त्यन्तरमाह--

**अथो मनो वै यज्ञस्य मैत्रावरुणो, वाग्यज्ञस्य होता, मनसा वा इषिता वाग्वदति, यां ह्यन्यमना वाचं वदत्यसुर्या वै सा वागदेवजुष्टा तद्यदेवात्र मैत्रावरुणो द्विरागुरते सैव होतुरागूः ॥ २८ ॥** इति ।

अपि च मैत्रावरुणो यज्ञस्य मनस्थानीयो होता तु वाक्स्थानीयः । लोके हि मनसा प्रेरिता वाग्वक्तव्यं ब्रूते । यस्त्वन्यमनस्को यां वाचं वदति तत्र सा वागसुरेभ्यस्तामसेभ्यो हिता तेषामसंबद्धप्रलापप्रियत्वात् । न त्वसौ वाक्सात्त्विकानां देवानां प्रिया । तस्मात् मनःपूर्विकैव वाग्वक्तव्या । तथा सत्यत्र मनोरूपो मैत्रावरुणो द्विरागुरत इति यदस्ति

१. वाक्त्वाद् वज्रस्थानीया आगूः । 'वाग्वै वज्रः' इति श्रुतेः—इति भट्टभास्करः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

-सैव तत्प्रेषितस्य वाग्रूपस्य होतुरागूर्द्वितीया भविष्यतीति। तस्माद् याज्योर्मध्ये होता नाऽऽगुरेत ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीय-पञ्चिकायाः चतुर्थाध्याये (नवमाध्याये) चतुर्थः खण्डः ॥ ४ ॥ (२८) [५८]

इसके अतिरिक्त मैत्रावरुण नामक ऋत्विज तो यज्ञ [पुरुष] का मन है और होता यज्ञ [पुरुष] की वाणी है। वस्तुतः लोक में मन से ही प्रेरित होकर वाणी [वक्तव्य] बोलती है। जो अन्यमनस्क होकर वाणी बोलता है, वह वाणी आसुरों को प्रिय होती है, देवों को प्रिय नहीं होती [इसलिए असम्बद्ध प्रलाप न करके मन से प्रेरित वाणी बोलना चाहिए] इसलिए इस प्रकार यहाँ जो [मन रूप] मैत्रावरुण दो बार आगू करता है वही [वाक्‌रूप] होता का आगू है।

॥ इस प्रकार नवम अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

ऋतुग्रहयागान् विधत्ते—

**प्राणा वा ऋतुयाजास्तद्यदृतुयाजैश्चरन्ति प्राणानेव तद्यजमाने दधति ॥इति।**

मधुमाधवादय ऋतुदेवा यत्रेज्यन्ते त एत ऋतुयाजाः[1]। ते च प्राणस्वरूपाः। प्राण-शब्देन प्राणापानव्यानास्त्रयोऽपि विवक्षिताः। तैर्ऋतुयाजैरनुतिष्ठेयुः, तेन प्राणानेव यजमाने स्थापयन्ति॥

[ऋतु ग्रह-याग]—

ii. २९ [ix. ५] ऋतु-याज [मधु-माधव आदि ऋतु-देवों के लिए यजन] प्राण-स्वरूप है। जो ऋतु-याज करते हैं वस्तुतः इस प्रकार वे उन [ऋतु-याज आहुतियों] से यजमान में प्राणों को ही स्थापित करते हैं।

ऋतुग्रहाश्च द्वादशसंख्याकाः तत्राऽऽद्येषु षट्सु कंचिद् विशेषं विधत्ते—

**षळ्ऋतुनेति यजन्ति, प्राणमेव तद् यजमाने दधति ॥ इति।**

अध्वर्युणा प्रेषितो मैत्रावरुणः प्रैषसूक्तगतैर्मन्त्रैः क्रमेण होत्रादीन् प्रेष्यति तेन प्रेषिता होत्रादय ऋतुना सोममित्येवं यजेयुः। एतेषां षण्णामृतुयाजानां प्राणस्वरूपत्वाद्धोत्रादयः षडपि यजमाने प्राणं स्थापयन्ति॥

---

१. 'ऋतुयाजैश्चरन्ति'—इत्यादीनि आश्व० श्रौ० ५.८.१–७। शत० ब्रा० ४.३.१.३–२०। कात्या० श्रौ० ९.१३.१–१९। तै० सं० १.४.१४; ६.५.३। आप० १२.२६.८–२७। निरु० ८.१.२।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[ऋतु ग्रह बारह होते हैं। प्रथम छः के बारे में विशेष यह है कि] छः ऋत्विज 'ऋतुना' आदि मन्त्रों से यजन करते है वस्तुतः इस प्रकार वे उन [आहुतियों] से यजमान में प्राण को ही स्थापित करते हैं।

सप्तममारभ्य दशमान्ते विशेषं विधत्ते—

**चत्वार ऋतुभिरिति यजन्त्यपानमेव तद् यजमाने दधति ।।** इति ।

अध्वर्युणा प्रेषितो मैत्रावरुणः प्रैषसूक्तगतैः सप्तमादिभिश्चतुर्भिर्मन्त्रैर्होत्रादीन् क्रमेण चतुरः प्रेष्यति । त ऋतुभिः सोममिति बहुवचनान्तप्रयोगेण चत्वारोऽपि यजेयुः । तेषां चतुर्णामृतुयाजानामपानवायुस्वरूपत्वात् तद् यागेनापानमेव यजमाने स्थापयन्ति ।।

चार ऋत्विज 'ऋतुभिः' [आदि बहुवचनान्त प्रयोग] से यजन करते हैं। वस्तुतः इस प्रकार वे उन [आहुतियों] से यजमान में अपान को ही स्थापित करते हैं।

एकादशद्वादशयोर्विशेषं विधत्ते—

**द्विर्ऋतुनेत्युपरिष्टाद् व्यानमेव तद् यजमाने दधति ।।** इति ।

अध्वर्युप्रेषितो मैत्रावरुणः प्रैषसूक्तगताभ्यामेकादशद्वादशाभ्यां मन्त्राभ्यां प्रेष्यति । तेन प्रेषितौ द्वावध्वर्युयजमानावृतुना सोममित्येवमेकवचनान्तप्रयोगेण यजेतामन्त्ययोर्द्वयोर्यागयोर्व्यानस्वरूपत्वात् तद् यागेन व्यानमेव यजमाने सर्वेऽप्यृत्विजः स्थापयन्ति । अनेनैव क्रमेण मैत्रावरुणं प्रत्यध्वर्योः प्रैष आपस्तम्बेन दर्शितः—'ऋतुना प्रेष्यति त्रिष्वाद्येष्वध्वर्युः संप्रेष्यत्येवं प्रतिप्रस्थाता पात्रयोर्मुखे पर्यावृत्यर्तुभिः प्रेष्यति द्वयोरध्वर्युरेवं प्रतिप्रस्थाता पुनः पर्यावृत्यर्तुना प्रेष्येति सकृदध्वर्युरेवं प्रतिप्रस्थाता'[1] इति । तदेकवचनान्तबहुवचनान्तैकवचनान्तैर्ऋतुशब्दैरुदाहृतः प्रैषः तैत्तिरीय ब्राह्मणे[2] संगृह्याऽऽम्नातः—'ऋतुना प्रेष्येति षट्कृत्व आह षड्वा ऋतव ऋतूनेव प्रीणाति ऋतुभिरिति चतुश्चतुष्पद एव पशून् प्रीणाति द्विः पुनर्ऋतुनाऽऽह द्विपद एव प्रीणाति'[3] इति ।।

दो ऋत्विज 'ऋतुना' [आदि एकवचनान्त प्रयोग] वाले मन्त्र से यजन करते हैं। वस्तुतः वे इस प्रकार उन [आहुतियों] से यजमान में व्यान को ही स्थापित करते हैं।

तानेतान् ऋतुयाजान् प्रशंसति—

**स वा अयं प्राणस्त्रेधा विहितः प्राणोऽपानो व्यान इति तद् यदृतुन ऋतुभिर्ऋतुनेति यजन्ति प्राणानां संतत्यै प्राणानामव्यवच्छेदाय ।।** इति ।

शरीरमध्ये स्थितस्य प्राणवायोः प्राणापानव्यानाख्याभिर्वृत्तिभिस्त्रिविधत्वादृतुशब्दप्रयोगेण त्रिविधेन यजमानस्य प्राणाः संतता भवन्ति, न तु व्यवच्छिद्यन्ते ।।

---

१. आप० श्रौ० १२.२६.१७–१९ ।

२. मन्त्रभागीये इति ज्ञेयम्; तैत्तिरीयशाखाया ब्राह्मणग्रन्थेऽपि मन्त्रा आम्नाताः, तथा मन्त्रभागेऽपि ब्राह्मणवचनानीति ।

३. तै० सं० ६.५.३.२ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यह प्राण तीन प्रकार के हैं १. प्राण, २. अपान और ३. व्यान । यह जो 'ऋतुना', 'ऋतुभिः' और 'ऋतुना' आदि त्रिविध मन्त्रों से यजन करते हैं वह यजमान के प्राणों की संततता के लिए और प्राणों के क्रम को न टूटने देने के लिए करते हैं ।

तेष्वृतुयाजेष्वनुवषट्कारं निषेधति—

**प्राणा वा ऋतुयाजा, नर्तुयाजानामनु वषट्कुर्यादसंस्थिता वा ऋतव एकैक एव ।। इति ।**

लोके वसन्ताद्यृतवोऽसंस्थिता असमाप्ता अनुपरता एकस्यैकस्यानन्तरमेव द्वितीय इत्येवमेकैकक्रमेण वसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिराख्याः प्रत्येकं मासद्वयेन द्वादशमासात्मका घटीयन्त्रवत्[1] पुनः पुनरावर्तन्ते । अतो न कदाचिदप्यृतूनामुपरतिरस्ति ।।

ऋतुयाज प्राण हैं; उन ऋतुयाजों में अनुवषट्कार नहीं बोलना चाहिए । क्योंकि ऋतुओं का कोई अन्त नहीं है, एक के बाद दूसरी आती रहती है ।

विपक्षबाधकपूर्वकं स्वपक्षमुपसंहरति—

**यदृतुयाजानामनु वषट्कुर्यादसंस्थितानृतून् संस्थापयेत् संस्था वा एषा यदनुवषट्कारो य एनं तत्र ब्रूयादसंस्थितानृतून् समतिष्ठिपद्द दुःषमं भविष्यतीति शश्वत् तथा स्यात् तस्मान्नर्तुयाजानामनु वषट्कुर्यात् ।।२९।। इति ।**

दुःषमं[2] रोगदारिद्र्यादिरूपं विषमं किंचिदस्वास्थ्यम् । अन्यत् पूर्ववद् व्याख्येयम् ।।

।। इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः चतुर्थाध्याये (नवमाध्याये) पञ्चमः खण्डः ।।५।। (२९) [५९]

यदि वह ऋतुयाजों में अनुवषट्कार करे तो अनुपरत [ = समाप्त न होने वाली] ऋतुओं को रोक देता है, क्योंकि यह जो अनुवषट्कार है वह तो विराम [का सूचक] है । यदि जो [कोई पुरुष] इस [होता] से वहाँ [अनुवषट्कार करने के समय] कहे कि 'समाप्त न होने वाली ऋतुओं को समाप्ति पर ला दिया है अतः वह [रोग-दारिद्र्य आदि रूप अस्वास्थ्यकर] विषमता को प्राप्त होवेगा ।' उसका कथन सत्य ही होता है । अतः ऋतु-याजों में अनुवषट्कार नहीं करना चहिए ।

।। इस प्रकार नवम अध्याय के पाँचवें खण्ड की हिन्दी पूर्ण हुई ।। ५ ।।

---

१. उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः—इति अमरकोश २.१०.२७ ।

२. 'दुष्क्रमम्' इति भट्टभास्करपाठः । तथा च तद्व्याख्या—'समायाः संवत्सरस्य दुष्टत्वम्, प्रजानां विनाशहेतुत्वं दुष्क्रमं तदेव कृतं भवति'—इति ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ षष्ठः खण्डः

सवनीयपशुपुरोडाशप्रचारादूर्ध्वं तदङ्गमिडोपह्वानमवस्थाप्य द्विदेवत्यग्रहप्रचारः कृतः। तत ऊर्ध्वं तद्ग्रहशेषभक्षणमपि प्राप्तम् ॥

तत्रेळोपह्वानग्रहशेषभक्षणयोः किं पूर्वं किमपरमिति क्रमस्य ज्ञातुमशक्यत्वात् तं क्रमं विधत्ते—

**प्राणा वै द्विदेवत्याः, पशव इळा, द्विदेवत्यान् भक्षयित्वेळामुपह्वयते, पशवो वा इळा पशूनेव तदुपह्वयते, पशून् यजमाने दधाति ॥** इति ।

द्विदेवत्यानां वागादिप्राणरूपत्वं पूर्वमेवोक्तमिडादेवता[1] च 'गौर्वा अस्यै शरीरम्' इति श्रुतेः[2] पशुरूपा।[3] तत्रैवं स्थिते प्रथमतो द्विदेवत्यग्रहशेषान् भक्षयित्वा पश्चादिळोपह्वानं कुर्यात्। तथा सतीडायाः पशुरूपत्वेन पशुनेवोपहूतवान् भवति। तांश्च पशून् स्वकीयैः प्राणैः सुस्थिते यजमाने स्थापयति। अयमेवार्थो व्यतिरेकमुखेन श्रुत्यन्तरे प्रतिष्ठापितः—'प्राणा वा एते यद्द्विदेवत्याः पशव इळा यदिडां पूर्वां द्विदेवत्येभ्य उपह्वयेत पशुभिः प्राणानन्तर्दधीत प्रमायुकः स्याद् द्विदेवत्यान् भक्षयित्वेडामुप ह्वयते प्राणानेवाऽऽत्मन् धित्वा पशूनुप ह्वयते'[4] इति। इत्थं द्विदेवत्यभक्षणस्य पूर्वभावित्वमिळोपह्वानस्य पश्चाद्भावित्वं च व्यवस्थापितम्। तदेतदिडापात्रे भागमवदाय क्रियमाणमुपह्वानम् ॥

[देवताद्व- न्द्व के ग्रह]—क्रमागत

ii. ३० [ix. ६] दो देवों के [ग्रह] प्राण हैं और [पुरोडाश रूप] अन्न पशु हैं। प्रथमतः दो देवों के ग्रह-शेष का भक्षण करके उसके बाद होता इळा देवता का आह्वान करता है। पशु ही इळा है। इस प्रकार उस आह्वान से पशुओं को ही वह बुलाता है और यजमान में उन पशुओं को स्थापित करता है।

या तु होतुर्हस्ते संपादिताऽवान्तरेडा तत्प्राशनस्य होतृचमसभक्षणस्य च पौर्वापर्यं विचार्य निश्चिनोति—

**तदाहुरवान्तरेळां पूर्वां प्राश्नीया३त्, होतृचमसं भक्षये३त्, इति। अवान्तरेळामेव पूर्वां प्राश्नीयाद्, अथ होतृचमसं भक्षयेत् ॥** इति ।

विचारार्थं प्लुतिद्वयम्।[5] अवान्तरेळाप्राशनं पूर्वभावि चमसभक्षणं पश्चाद्भावीति निर्णयः ॥

---

१. द्र० इतः पूर्वम्, पृ० ३१९,३२६। २. तै० सं० १.७.२.१।
३. 'इळा इत्यन्ननाम तद्धेतुतया पशव इळा' इति गोविन्दस्वामी।
४. तै० सं० ६.४.९.३। ५. 'विचार्यमाणानाम्'—इति पा० सू० ८.२.९७।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इस सम्वन्ध में याज्ञिक प्रश्न करते हैं कि होता के हिस्से में प्राप्त इळा [पुरोडाश] का पहले भक्षण करे अथवा होतृ-चमस का पहले पान करे। [उत्तर] हिस्से में प्राप्त इळा का ही पहले भक्षण करे। बाद में होतृ-चमस का भक्षण करे।

तदेतदुपपादयति—

**यद्वाव द्विदेवत्यान् पूर्वान् भक्षयति, तेनास्य सोमपीथः पूर्वो भक्षितो भवति, तस्मादवान्तरेळामेव पूर्वां प्राश्नीयात्, अथ होतृचमसं भक्षयेत्, तदुभयतोऽन्नाद्यं परिगृह्णाति सोमपीथाभ्यामन्नाद्यस्य परिगृहीत्यै ॥ इति।**

द्विदेवत्यानां भक्षणं पूर्वंभावीति यदस्ति तेन सोमपानरूपस्य भक्षस्येडाप्राशनात् पूर्वत्वं सिध्यति। तत इळां प्राश्य होतृचमसभक्षणे सत्युपरिष्टादपि सोमभक्षणसिद्धेरिडाया उभयतः पार्श्वद्वयेऽपि सोमपानाभ्यामयं होताऽन्नाद्यं परिगृह्णाति। तच्च यजमानस्यान्नाद्यपरिग्रहाय भवति ॥

जो वह दो देवों के ग्रह में से प्रथम का भक्षण करता है उससे ही उसके द्वारा प्रथमतः सोम-पान का भक्षण हो जाता है। इसलिए पहले अपने हिस्से में प्राप्त [पुरोडाश रूप] इळा का भक्षण करे। फिर होतृ-चमस का भक्षण करना चाहिए। इस प्रकार दोनों ओर से वह सोमपानों के साथ अन्न को आवृत करता है; और [वह यजमान के] अन्न के परिग्रह के लिए होता है।

द्विदेवत्यग्रहशेषस्य विन्दोर्होतृचमसे प्रक्षेपं विधत्ते—

**प्राणा वै द्विदेवत्यां, आत्मा होतृचमसो, द्विदेवत्यानां संस्रवान् होतृचमसे समवनयत्यात्मन्येव तद्धोता प्राणान् समवनयते सर्वायुः सर्वायुत्वाय ॥ इति।**

संस्रवा विन्दवः, तत्प्रक्षेपेण द्विदेवत्यरूपान् प्राणानात्मन्येव शरीरे होतृचमसरूपे होता प्रक्षिपति। प्राणानामवस्थापनात् स्वयं सर्वायुरपमृत्युरहितो भवति। तद् यजमानस्य सर्वायुत्वाय संपद्यते ॥

दो देवों के [ग्रह] प्राण हैं, और होतृ-चमस आत्मा [=शरीर] है। दो देवों के ग्रहों के शेष को वह होतृचमस में उड़ेलता है, वस्तुतः इस प्रकार होता उस [संस्रव अर्थात् बूँद के प्रक्षेप] से प्राणों को अपने शरीर में ही स्थापित करता है। [प्राणों के अवस्थापन से स्वयं वह अपमृत्युरहित] पूर्णायु को प्राप्त करता है और [वह यजमान के] पूर्णायु के लिए होता है।

वेदनं प्रशंसति—

**सर्वमायुरेति य एवं वेद ॥ ३० ॥ इति।**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः चतुर्थाध्याये (नवमाध्याये) षष्ठः खण्डः ॥६॥ (३०) [६०]

जो इस प्रकार जानता है वह सम्पूर्ण आयु को प्राप्त करता है।

॥ इस प्रकार नवम अध्याय के षष्ठ खण्ड की हिन्दी पूर्ण हुई ॥ ६ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ सप्तमः खण्डः

अथ तूष्णींशंसविधानार्थमितिहासमाह—

**देवा वै यदेव यज्ञेऽकुर्वंस्तदसुरा अकुर्वंस्ते समावद्वीर्या एवाऽऽसन्न व्यावर्तन्त, ततो वै देवा एतं तूष्णींशंसमपश्यंस्तमेषामसुरा नान्ववायंस्तूष्णींसारो वा एष यत्तूष्णींशंसः ॥** इति ।

देवाः पुरा स्वकीये यज्ञे यदेवाङ्गमन्वतिष्ठन्नसुरा अप्यवेक्ष्य तदेवान्वतिष्ठन् । तदा ते देवाश्चासुराश्च परस्परं समावद्वीर्यास्तुल्यसामर्थ्या एवाभवन्नेकस्य वर्गस्य सामर्थ्याधिक्यमितरस्य तु न्यूनमित्येवं व्यावृत्तिं न प्राप्ताः । ततो देवाः सामर्थ्याधिक्यलक्षणव्यावृत्तिहेतुं वेदेष्वन्विच्छन्त एतं वक्ष्यमाणं तूष्णींशंसं तदुपायत्वेन दृष्टवन्तः । सर्वेष्वपि शस्त्रेष्वप्यृचः पठ्यन्ते । अस्मिंस्तु शस्त्रे न पठ्यन्त इति तूष्णींशंसत्वम् । ऋक्पाठराहित्येन गूढमेषां देवानां तं तूष्णींशंसमसुरा नान्ववायन्नानुगतवन्तः । एतदनुष्ठानमविज्ञाय न कृतवन्त इत्यर्थः । योऽयं तूष्णींशंस एष तूष्णींसारो वा ऋक्पाठराहित्यलक्षणात् तूष्णींभाव एवास्मिञ्शस्त्रे शस्तः । असुराणां तु निष्फलं तूष्णीमवस्थानमिति निश्चयः ॥

[तूष्णीं-शंस = मौन-स्तुति]—

ii. ३१ [ix. ७] देवों ने यज्ञ में जो कुछ [कर्म] किया असुरों ने भी [देखकर] वैसा ही किया । तब वे [देव और असुर] तुल्य-सामर्थ्य वाले हो गए; और उनमें विभेद [पृथक्करण या अलगाव] नहीं हो पाया । तब देवों ने [विभेदीकरण के हेतुभूत] इस मौन-स्तुति का दर्शन किया । [वस्तुतः सभी शस्त्रों में ऋचाओं का पाठ किया जाता है किन्तु तूष्णीं-शंस ऋक्पाठरहित होता है अतः] उनमें से उस [मौन-स्तुति] का असुर अनुगमन नहीं कर पाए । [अर्थात् इस अनुष्ठान को नहीं कर पाए] जो यह मौन-स्तुति है वह [ऋक्पाठरहित रूप] मौन भाव ही है ।

अस्य तूष्णींशंसस्यासुरविनाशहेतुत्वं दर्शयति—

**देवा वै यं यमेव वज्रमसुरेभ्य उदयच्छंस्तं तमेषामसुराः प्रत्यबुध्यन्त, ततो वै देवा एतं तूष्णींशंसं वज्रमपश्यंस्तमेभ्य उदयच्छंस्तमेषामसुरा न प्रत्यबुध्यन्त, तमेभ्यः प्राहरंस्तेनैनानप्रतिबुद्धेनाघ्नंस्ततो वै देवा अभवन् पराऽसुराः ॥** इति ।

देवा असुरविनाशार्थमायुधरूपं मन्त्ररूपमाभिचाररूपं वा यं यं वज्रं प्रयुक्तवन्त एषां देवानां तं तं वज्रमसुराः प्रत्यबुध्यन्त तदा तदा प्रतीकारं कुर्वन्ति । ततो देवा एतं तूष्णींशंसं वज्रत्वेन दृष्ट्वा तदसुरविनाशार्थं प्रयुक्तवन्तः । असुरास्तु देवानां तं तूष्णींशंसमज्ञात्वा प्रतीकारं न कृतवन्तः । ततो निर्विघ्नेन देवास्तं तूष्णींशंसं वज्रमसुराणामुपरि प्राहरंस्तद्विनाशार्थं प्रयुक्तवन्तः । असुरैरविज्ञातेन तेनैवासुरान् हतवन्तः । ततो वै देवा विजयिनोऽभवन् मुख्येष्वसुरेषु हतेष्ववशिष्टा असुराः पराभूताः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

देवों ने असुरों के [विनाश के] लिए [मन्त्र या अभिचाररूप] जिस-जिस वज्र का प्रयोग किया उस-उस वज्र को असुर जान गए [और उसका प्रतीकार कर दिया]। तब देवों ने इस मौन-स्तुति रूप वज्र का दर्शन किया और इन [असुरों के विनाश] के लिए उसका प्रयोग किया। उनमें से इस [मौन-स्तुति रूप वज्र] को असुर नहीं समझ पाए; [और उसका प्रतीकार नहीं कर सके। तब देवों ने] उस [तूष्णींशंस रूप वज्र] का असुरों के ऊपर प्रहार किया। असुरों द्वारा अविज्ञात उस वज्र से ही असुर मार डाले गये। तब से देव विजयी हुए और असुर पराभव को प्राप्त हुए।

एतद् वेदनं प्रशंसति—

**भवत्यात्मना पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ॥** इति।

जो इस प्रकार जानता है वह स्वयं उन्नति को प्राप्त होता है और इसके विद्वेषी पापात्मा शत्रु भी पराभव को प्राप्त होते हैं।

अथोपाख्यानमुखेनैव तूष्णींशंसस्य स्वरूपं दर्शयति—

**ते वै देवा विजितिनो मन्यमाना यज्ञमतन्वत, तमेषामसुरा अभ्यायन् यज्ञवेशसमेषां करिष्याम इति, तान् समन्तमेवोदारान् परियत्तानुदपश्यंस्तेऽब्रुवन्, संस्थापयामेमं यज्ञं यज्ञं नोऽसुरा मा वधिषुरिति तथेति, तं तूष्णींशंसे संस्थापयन्, भूरग्निर्ज्योतिर्ज्योतिरग्निरित्याज्यप्रउगे संस्थापयन्निन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्र इति निष्केवल्यमरुत्वतीये संस्थापयन्, सूर्यो ज्योतिर्ज्योतिः स्वः सूर्य इति वैश्वदेवाग्निमारुते संस्थापयंस्तमेवं तूष्णींशंसे संस्थापयंस्तमेवं तूष्णींशंसे संस्थाप्य तेनारिष्टेनोदृचमाश्नुवत ॥** इति।

मुख्यानामसुराणां हतत्वात् ते देवा विजितिनो विजयवन्तो वयमिति मन्यमाना यज्ञं विस्तारितवन्तः। एषां देवानां यज्ञमभिलक्ष्यासुरास्तत्र गताः। केनाभिप्रायेणेति, तदुच्यते—एषां देवानां यज्ञवेशसं यज्ञविघातं करिष्याम इति तदभिप्रायः। ततो देवाः समन्तमेव पुरतः पृष्ठतः पार्श्वयोश्च समागतानुदारानुद्धतान् परियत्तानत्यन्तसंनिधानुदपश्यन्नुदङ्मुखाः सन्तो दृष्टवन्तः। दृष्ट्वा च परस्परमिदमब्रुवन्निमं यज्ञं संस्थापयामः शीघ्रं समापयामः। तथा सति नोऽस्मदीयं यज्ञमसुरा मा वधिषुर्मा विनाशयन्तु विलम्बे सति विनाशयिष्यन्ति तन्मा भूदिति। तद्वचनं परस्परमङ्गीकृत्य स्वकीयं तं यज्ञं तूष्णींशंसे संस्थापयञ्शीघ्रं समापितवन्तः[1]। यद्वा, तूष्णींशंसस्य वज्ररूपेण रक्षकत्वाद् रक्षार्थं तस्मिन् स्थापितवन्तः। कोऽयं तूष्णींशंस, इति स उच्यते—भूरग्निर्ज्योतिर्ज्योतिरग्निरित्येष नवाक्षरात्मको मन्त्र एकस्तूष्णींशंसभागः। आज्यं प्रउगं चेत्युभे प्रातःसवनकालीने

१. 'संस्थापयन्। अडभावश्छान्दसः। यद्वा, पञ्चमोऽयं लकारः। संस्थापयेयुः'—इति भट्टभास्करः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शस्त्रे । तदुभयमप्युक्ते तूष्णींशंसभागे स्थापितवन्तः । इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्र इत्येष दशाक्षरात्मको मन्त्रो द्वितीयस्तूष्णींशंसभागः । निष्केवल्यं मरुत्वतीयं चेत्युभे माध्यंदिन-सवनकालीने शस्त्रे । तदुभयमिन्द्रो ज्योतिरित्यस्मिंस्तूष्णींशंसभागे स्थापितवन्तः । सूर्यो ज्योतिर्ज्योतिः स्वः सूर्यं इत्येष नवाक्षरात्मको मन्त्रस्तृतीयस्तूष्णींशंसभागः । वैश्वदेव-माग्निमारुतं चेत्युभे तृतीयसवनकालीने शस्त्रे तदुभयं 'सूर्यो ज्योतिः'[1] इत्यादिके तूष्णीं-शंसभागे स्थापितवन्तः । तं सवनत्रयगतैः षड्भिः शस्त्रैरुपेतं यज्ञमेवमुक्तेन प्रकारेण तूष्णीं-शंसे स्थापितवन्त इत्येवमुक्तार्थस्योपसंहारः पुनस्तमेवमित्यादिः । उक्तार्थानुवादषड्विध-शस्त्रसंस्थापनादूर्ध्वमरिष्टेन हिंसारहितेन तेन यज्ञेनोदृचमुत्तमामृचं यज्ञसमाप्तिमाश्नुवत प्राप्तवन्तः ॥

[तूष्णींशंस का स्वरूप इस प्रकार है]—उन देवों ने अपने को विजयी समझते हुए यज्ञ का विस्तार किया । उनके पास ये असुर [यह सोंचते हुए] आये कि 'इनके यज्ञ में विघ्न करेंगे ।' देवों ने चारों ओर से आते हुए उन उद्धत असुरों को अत्यन्त सन्निकट देखा । उन्होंने कहा—'हम इस यज्ञ को शीघ्र समाप्त करें जिससे हमारे यज्ञ का असुर विध्वंस न कर दें ।' उन्होंने कहा—'ठीक है ।' और उस यज्ञ को मौन-स्तुति में समाप्त कर दिया । उन्होंने [प्रातःसवनकालीन] आज्य और प्रउग शस्त्र को 'भूरग्निर्ज्योतिर्ज्योति-रग्निः' से समाप्त किया, 'इन्द्रो ज्योतिर्भुवोज्योतिरिन्द्र' से [माध्यन्दिन सवनकालीन] निष्केवल्य और मरुत्वतीय शस्त्र को समाप्त किया । 'सूर्योज्योतिर्ज्योतिः स्वः सूर्यः' से [तृतीयसवनकालीन] वैश्वदेव और आग्निमारुत शस्त्र को समाप्त किया । इस प्रकार तूष्णींशंस से उन्होंने उपसंहार किया और इस तरह [तीन सवनगत छः शस्त्रों से] उस यज्ञ को तूष्णींशंस में स्थापित करके निर्विघ्न यज्ञ की समाप्ति को प्राप्त किया ।

इत्थमाख्यायिकामुखेन तूष्णींशंसस्वरूपमभिधाय तदनुष्ठानं विधत्ते—

**स तदा वाव यज्ञः संतिष्ठते यदा होता तूष्णींशंसं शंसति ॥** इति ।

यस्मिन् काले होता तमिमं मन्त्रं शंसेत् तदैव स यज्ञो निर्विघ्नः समाप्यते । तस्मा-द्धोत्रा तच्छस्त्रं शंसनीयम् । तत्प्रकार आश्वलायनेन दर्शितः—"सुमत्पद्वग्दे पिता मातरि-श्वाऽच्छिद्रा पदाऽधाद्[2] अच्छिद्रोक्था कवयः शंसन् सोमो विश्वविन्नीथा निनेषद् बृहस्पति-रुक्थामदानि शंसिषद् वागायुर्विश्वायुर्विश्वमायुः क इदं शंसिष्यति स इदं शंसिष्यति' इति जपित्वाऽनभिहिंकृत्य 'शोंसावोम्' इत्युच्चैराहूय तूष्णींशंसं शंसेद् उपांशु सप्रणवमसंतन्व-न्नेष आहावः प्रातःसवने शस्त्रादिषु"[3] इति । अस्यायमर्थः—ऋतुपात्रभक्षणानन्तरं

---

१. 'भूरग्निर्ज्योतिर्ज्योतिरग्नो३म्, इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रो३म्, सूर्यो ज्योतिर्ज्योतिः स्वः सूर्यो३मिति त्रिपदस्तूष्णींशंसः'—इति आश्व० श्रौ० ५.९.११ ।

२. इतः परं दशमाध्याये षष्ठखण्डे एतन्मन्त्रव्याख्यानभूतब्राह्मणे तु 'पदाऽधा' इति पाठः । ३. आश्व० श्रौ० ५.९.१,२ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

होतुर्मुखत आसीनोऽध्वर्युः पराङ्मुखः सन्नावर्तते तदानीं होता 'सुमद्' इत्यादि 'स इदं शंसिष्यति' इत्यन्तं मन्त्रं जपित्वाऽभिहिंकारमकृत्वा शोंसावोमित्यनेन मन्त्रेणाध्वर्युमुच्चैराहूय भूरग्निरित्यादिकं प्रणवसहितमुपांशु पठेत् प्रणवेन सहासंततमविच्छेदनं कुर्यात्। एष शोंसावोमितिमन्त्रोऽध्वर्योराह्वानरूपत्वाद् 'आहाव' इत्युच्यते। स च प्रातःसवने शस्त्रादिषु प्रवर्तत इति ॥

जब होता तूष्णींशंस का शंसन करता है तब वस्तुतः वह यज्ञ [निर्विघ्न] समाप्त हो जाता है।

उक्तं तूष्णींशंसनं प्रशंसति—

**स य एनं शस्ते तूष्णींशंस उप वा वदेदनु वा व्याहरेत् तं ब्रूयादेष एवैतामार्तिमारिष्यति प्रातर्वाव वयमद्येमं शस्ते तूष्णींशंसे संस्थापयामस्तं यथा गृहानितं कर्मणाऽनुसमियादेवमेवैनमिदमनुसमिम इति स ह वाव तामार्तिमृच्छति य एवं विद्वान् संशस्ते तूष्णींशंस उप वा वदत्यनु वा व्याहरति, तस्मादेवं विद्वान् संशस्ते तूष्णींशंसे नोपवदेन्नानुव्याहरेत् ॥३१॥ इति।**

होत्रा तूष्णींशंसे शस्ते सत्येनं होतारं स उपवदेद् वाऽनुव्याहरेद् वा यः कोऽप्यन्यः पुरुषो निन्देच्छपेद् वा। उपवादो निन्दाऽनुव्याहारः शापः। तदानीमयं होता निन्दितारं शप्तारं वा ब्रूयात्। कथं ब्रूयादिति, तदुच्यते—यो निन्दता शप्ता वाऽस्त्येष एव निन्दारूपां शापरूपां वाऽऽर्तिं विनाशमारिष्यति प्राप्स्यति न त्वहं प्राप्स्यामि। तत्र हेतुरुच्यते—प्रातर्वाव प्रातःसवन एव वयं होतारोऽद्यास्मिन् दिवसेऽस्माभिः शस्ते तूष्णींशंसे तमिमं यज्ञं संस्थापयामः समापयामो यथा लोके गृहानितं स्वकीयान् गृहान् प्राप्तमतिथिं कर्मणाऽऽतिथ्यसत्काररूपेणानुसमियादानुकूल्येन सम्यक्प्राप्नुयादुपचरेदित्यर्थः। एवमेवमपीदं तूष्णींशंसानुष्ठानं कृत्वैनं यज्ञमनुसमिम आनुकूल्येन सम्यक्प्राप्नुम उपचराम इत्यर्थः। एष एवेत्यादिकोऽनुसमिम इत्यन्तो निन्दाशापपरिहारार्थो मन्त्रः। तं होता ब्रूयात्। तस्मिन्नुक्ते सति यः पुमान् स्वयं विद्वानेव संस्तूष्णींशंसस्य शंसनादूर्ध्वं निन्दति शपति वा स एव तामार्तिं प्राप्नोति। तस्मात् कारणादेवमुक्तार्थं विद्वान् पुरुषस्तूष्णींशंसपाठादूर्ध्वं होतारं न निन्देन्नापि शपेत् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः चतुर्थाध्याये (नवमाध्याये) सप्तमः खण्डः ॥७॥ (३१) [६१]

इस प्रकार होता द्वारा 'तूष्णींशंस' के बोलने पर वह जो पुरुष उसकी निन्दा करे या शाप दे तो [यह होता] उस [निन्दा करने वाले या शाप देने वाले] से कहे—[जो निन्दक या शाप देने वाला है] यह ही उस [निन्दारूप या शापरूप] विनाश को प्राप्त होवेगा; क्योंकि आज प्रातःकाल हम इस मौनस्तुति को कहकर इस यज्ञ को समाप्त करते हैं। जैसे अपने घर में आये हुए अतिथि का [आतिथ्य-सत्कार रूप किसी] कर्म से अच्छी



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रकार से सत्कार करते हैं उसी प्रकार इस [तूष्णींशंस रूप अनुष्ठान] को करके इस [यज्ञ] का अनुकूलता के साथ सम्यक्रूपेण सत्कार करते हैं। जो इस प्रकार जानता हुआ भी तूष्णींशंस का शंसन करने के बाद उस होता की निन्दा करता है या शाप देता है तो वही उस विनाश [=क्षति] को प्राप्त करता है। इसलिए इस प्रकार जानते हुए उस होता के तूष्णींशंस का शंसन करने के बाद न तो उसे निन्दित करना चाहिए और न शाप ही देना चाहिए।

॥ इस प्रकार नवम अध्याय के सप्तम खण्ड की हिन्दी पूर्ण हुई ॥ ७ ॥

## अथाऽष्टमः खण्डः

अथ प्रकारान्तरेण तूष्णींशंसं प्रशंसति—

**चक्षूंषि वा एतानि सवनानां यत्तूष्णींशंसो भूरग्निर्ज्योतिर्ज्योतिरग्निरिति प्रातःसवनस्य चक्षुषी, इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्र इति माध्यंदिनस्य सवनस्य चक्षुषी, सूर्यो ज्योतिर्ज्योतिः स्वः सूर्य इति तृतीयसवनस्य चक्षुषी ॥** इति।

यत्तूष्णींशंसोऽस्त्येतान्येव तद्गतानि पदानि त्रयाणां सवनानां चक्षुःस्थानीयानि। कथमेतदिति, तदेव स्पष्टीक्रियते—'भूरग्निर्ज्योतिरिति' प्रथमस्य तूष्णींशंसपादस्य पूर्वो भागः। स च प्रातःसवनस्य दक्षिणचक्षुःस्थानीयः। ज्योतिरग्निरित्ययमुत्तरो भागो वामचक्षुःस्थानीयो भूलोकवर्ती योऽग्निः स एव गोलकद्वये प्रकाशक इत्यर्थः। इन्द्रो ज्योतिरित्ययं द्वितीयस्य पूर्वो भागो माध्यंदिनस्य सवनस्य दक्षिणं चक्षुः। भुवो ज्योतिरित्ययमुत्तरो भागो वामचक्षुरन्तरिक्षलोकवर्ती परमैश्वर्ययुक्तो वायुर्गोलकद्वये भासक इत्यर्थः। सूर्यो ज्योतिरित्येष तृतीयस्य पूर्वभागस्तृतीयसवनस्य दक्षिणं चक्षुः। ज्योतिः स्वः सूर्य इत्ययमुत्तरो भागो वामचक्षुः स्वर्लोकवर्ती सूर्यो गोलकद्वये भासक[1] इत्यर्थः॥

ii. ३२ [ix. ८] यह जो तूष्णींशंस है वे [पद ही तीनों] सवनों की आँखें हैं। 'भूरग्निर्ज्योतिः'—'ज्योतिरग्निः' यह प्रातःसवन की दो आँखें हैं। 'इन्द्रो ज्योतिः'—'भुवो ज्योतिरिन्द्रः' यह माध्यन्दिन सवन की दो आँखें हैं। 'सूर्यो ज्योतिः'—'ज्योतिः स्वः सूर्यः' यह तृतीयसवन की दो आँखें हैं।

वेदनं प्रशंसति—

**चक्षुष्मद्भिः सवनै राध्नोति, चक्षुष्मद्भिः सवनैः स्वर्गं लोकमेति, य एवं वेद ॥** इति।

---

१. 'यद्यु वै षट्पदः, पूर्वैर्ज्योतिः शब्दैरग्रेऽवस्येत्'—इति आश्व० श्रौ० ५.९.११। 'त्रिपदः षट्पदो वायं शंस्तव्यः। त्रिपदपक्षे यथापठितमेव (३३० पृ०, ३२७ पृ०) षट्पदपक्षे त्रीणि त्रीणि वाक्यानि द्विधा कृत्वा शंसेत्। तत्र द्विधाकरणेऽवसानस्थानं पूर्वैर्ज्योतिःशब्दैरग्रेऽवस्येत्'—इति तद्वृत्तिः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

राधिरिह लोके समृद्धिः ॥[1]

जो इस प्रकार जानता है वह चक्षुओं से युक्त सवनों से समृद्धि को प्राप्त करता है और चक्षुओं से युक्त सवनों से स्वर्ग लोक को जाता है।

तूष्णींशंसस्य चक्षुःस्वरूपत्वमुपपादयति—

**चक्षुर्वा एतद् यज्ञस्य यत्तूष्णींशंस, एका सती व्याहृतिर्द्वेधोच्यते, तस्मादेकं सच्चक्षुर्द्वेधा ॥ इति ।**

यद्यपि भूरित्येषैव व्याहृतिस्तथाऽपि तद्योगादग्निर्ज्योतिरित्यपि पदद्वयं व्याहृतित्वेनोच्यते। सेयं व्याहृतिरेकैव सत्यारोहावरोहाभ्यां द्वेधोच्यते[2]। यस्मादेवं तस्माच्चक्षुरिन्द्रियमप्येकमेव सद्गोलकद्वये द्वेधा वर्तते। तस्माच्चक्षुष्ट्वं युक्तम् ॥

यह जो तूष्णींशंस है वह इस यज्ञ [पुरुष] की आँख है; क्योंकि ['भूः' यह] व्याहृति एक होकर भी [आरोह और अवरोह रूप में] दो प्रकार से बोली जाती है। इसीलिए चक्षु एक होकर भी [दो-गोलक में रहने के कारण] दो है।

पुनरपि प्रकारान्तरेण प्रशंसति—

**मूलं वा एतद् यज्ञस्य यत्तूष्णींशंसो यं कामयेतानायतनवान् स्यादिति नास्य यज्ञे तूष्णींशंसं शंसेदुन्मूलमेव तद्यज्ञं पराभवन् तमनु पराभवति ॥ इति ।**

यं यजमानमुद्दिश्य होता द्वेषादेवं कामयेतानायतनवान् स्वर्गसाधनरूपेणाऽऽयतनेनाऽऽश्रयेण रहितोऽयं यजमानः स्यादिति तदानीमस्य द्विषस्य यजमानस्य यज्ञे तूष्णींशंसं होता न शंसेत्। तथा सति वृक्षमूलवद् यज्ञमूलत्वेनावस्थितस्य तूष्णींशंसस्य पाठाभावाद् अयं यज्ञो मूलरहितः पराभवति विनश्यति। तमनु यजमानोऽपि विनश्यति। तदेवं द्वेष्यस्य विनाशहेतुत्वेन प्रशंसा कृता ॥

यह जो तूष्णींशंस है वह इस यज्ञ की जड़ है। यदि वह यजमान से द्वेष करते हुए यह चाहे कि 'यह बिना घर के हो जाये'—तो वह इस यजमान के यज्ञ में तूष्णींशंस का शंसन न करे; क्योंकि इस प्रकार [इसके न पढ़ने से वृक्ष के समान] मूलरहित उसका यज्ञ पराभव को प्राप्त होता है और उसके बाद वह यजमान भी विनाश को प्राप्त होता है।

पुनरप्यृत्विजो होतुरनुकूलत्वेन प्रशंसति—

---

१. 'राद्धः समृद्धो भवति'—इति च शत० ब्रा० १४.७.१.३२।

२. 'व्याहृतीर्मनसानुद्रवेत् भूर्भुवः स्वरिति'—इति षड्विं० ब्रा०। 'सोऽताम्यत्। स भूरिति व्याहरत्।....स भुव इति व्याहरत्।....स सुवरिति व्याहरत्।....एता वै व्याहृतयः इमे लोकाः।' इति तै० ब्रा० २.२.४.३। आरोहावरोहौ चात्र क्रमव्युत्क्रमाभ्यां पाठौ; 'अग्निः ज्योतिः', 'ज्योतिः अग्निः'—इत्येवमिति।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**तदु वा आहुः शंसेदेवापि वैतदृत्विजेऽहितं यद्धोता तूष्णींशंसं न शंसत्यृत्विजि हि सर्वो यज्ञः प्रतिष्ठितो यज्ञे यजमानः तस्माच्छंस्तव्यः, शंस्तव्यः ॥ ३२ ॥ इति ।**

तदु वै तत्रैव तूष्णींशंसविषये ब्रह्मवादिन आहुः । किमिति, तदुच्यते—यद्यपि यजमाने प्रीतिरहितो होता तथाऽपि शंसेदेव । अपि वेति पूर्वोक्तापेक्षया पक्षान्तरोपन्यासार्थः । होता न शंसतीति यदस्ति तदेतदृत्विजे होत्रेऽप्यहितं भ्रष्टे यज्ञे दक्षिणाया अलाभात् । यस्मादृत्विजि सर्वो यज्ञः प्रतिष्ठितः, स्तस्माद् यज्ञयजमानयोः प्रतिष्ठाद्वारा होतुर्हितत्वेनायं तूष्णींशंसः शंस्तव्यः । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः चतुर्थाध्याये (नवमाध्याये) अष्टमः खण्डः ॥८॥ (३२) [६२]

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यदिशतो सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'—नामभाष्ये ऐतरेयब्राह्मणभाष्यस्य कृतौ द्वितीयपञ्चिकायाः
चतुर्थोऽध्यायः ॥ ४ ॥

**उसी तूष्णींशंस के विषय में ब्रह्मवादी कहते हैं कि [यजमान में होता की प्रीति न हो] फिर भी वह [मौन स्तुति का] अवश्य ही शंसन करे; क्योंकि जो होता तूष्णींशंस का शंसन नहीं करता तो यह ऋत्विज के लिए [दक्षिणा की प्राप्ति न होने के कारण] अहितकर ही होता है। वस्तुतः ऋत्विज में ही यज्ञ प्रतिष्ठित है और यज्ञ में यजमान [प्रतिष्ठित है]। इसीलिए [क्योंकि यज्ञ और यजमान की प्रतिष्ठा के द्वारा ही होता का हित सम्भव है] तूष्णींशंस का पाठ करना चाहिए।**

**॥ इस प्रकार ऐतरेय ब्राह्मण की द्वितीय पञ्चिका के चतुर्थ अध्याय की हिन्दी पूर्ण हुई ॥ ४ ॥**

---

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ पञ्चमोऽध्यायः

## प्रथमः खण्डः

—: * :—

# अथ दशमोऽध्यायः

## प्रथमः खण्डः

ऋतुयाजा द्विदेवत्यास्तद्विशेषफला स्तुतिः ॥
तूष्णींशंसप्रशंसा च नवमाध्यायचोदना ॥ १ ॥

अथाऽऽहावादयो वक्तव्यास्त्रिहावं निविदं सूक्तं च विधत्ते—

**ब्रह्म वा आहावः, क्षत्त्रं निविद्विट्सूक्तमाह्वयतेऽथ निविदं दधाति, ब्रह्मण्येव तत्क्षत्त्रमनुनियुनक्ति, निविदं शस्त्वा सूक्तं शंसति, क्षत्त्रं वै निविद्विट्सूक्तं क्षत्त्र एव तद्विशमनुनियुनक्ति ॥** इति ।

शोंसावोमित्यनेन मन्त्रेण शंसनकाले होताऽध्वर्युमाह्वयति सोऽयमाहावः[1] । अग्निर्देवेद्ध इत्यादिभिर्द्वादशभिर्वक्ष्यमाणैः पदैः[2] युक्ता तत्समूहरूपा निवित् । 'प्र वो देवायाग्नये' इत्यादिकं सप्तर्चं सूक्तम्[3] । तदेतत्त्रयं क्रमेण ब्राह्मणक्षत्त्रियवैश्यरूपम् । तत्र ब्राह्मणरूपत्वेन प्रथममाह्वयते मन्त्रेणाध्वर्योराह्वानं कुर्यात्[4] । अथानन्तरं क्षत्त्रियरूपत्वेन 'निविदं दधाति' अग्निर्देवेद्ध इत्यादिपदसमूहं[5] वदेत् तथा सति ब्रह्मण्येव ब्राह्मणजातावेव क्षत्त्रं क्षत्त्रियजातिमनुनियुनक्ति । प्रथमतो ब्राह्मणजातिः पश्चात् क्षत्त्रियजातिरित्येवं नियोगः कृतो भवेत् । तां निविदं शस्त्वा पश्चात् 'प्र वो देवायेति' सूक्तं शंसेत् । तथा सति क्षत्त्रियजातिरूपायां निविदि वैश्यजातिरूपं सूक्तमनुनियुनक्त्यानुकूल्येन पश्चादवस्थापयति । यः पूर्व-

---

१. सांख्या० ब्रा० १४.३ । आश्व० श्रौ० ५.९.१ ।

२. तद्यथा निविदध्याये—'अग्निर्देवेद्धः । अग्निर्मन्विद्धः । अग्निः सुषमित् । होता देववृतः । होता मनुवृतः । प्रणीर्यज्ञानाम् । रथीरध्वराणाम् । अतूर्त्तो होता । तूर्णिर्हव्यवाट् । आ देवो देवान् वक्षत् । यक्षदग्निर्देवो देवान् । सो अध्वरा करति जातवेदाः'—इति १.१–१२ । उत्तरस्मिन् खण्डे चेमानि पदानि विधास्यन्ते ।

३. ऋ० ३.१३.१–७ ।

४. 'प्रथममाह्वयते शस्त्रादौ । अथ निविदं दधाति । यद्यपि तूष्णींशंसोऽप्याहावादनन्तरं शस्यते तथाप्याहावनिवित्सूक्तानामेवात्र पौर्वापर्यमुच्यते वर्णत्रयसंस्तुतत्वात्'—इति गोविन्दस्वामी ।

५. अर्थात् निविद् १.१–१२ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मुक्तस्तूष्णींशंसो ये च निवित्सूक्ते तदेतत्त्रयमाज्यनामकशस्त्रस्य रूपम्। तदुक्तं संप्रदायविद्भिः[1]—"तूष्णींशंसनिवित्सूक्तैराज्यशस्त्रं त्रिपर्वकम्"[2] इति ।।

[आज्य शस्त्र]—

ii. ३३. [x. १] [आज्यशस्त्र के तीन भाग में] 'आहाव' ब्राह्मणरूप है, 'निवित्' क्षत्रियरूप है और 'सूक्त' वैश्यरूप है। [अतः ब्राह्मणरूप में अध्वर्यु का प्रथमतः] आह्वान करना चाहिए। इसके बाद 'निविदं दधाति'—इस मन्त्र को कहकर होता ब्राह्मण [जाति] में क्षत्रिय [जाति] को सन्निविष्ट कर देता है। 'निविद्' का शंसन करके 'सूक्त' का शंसन करता है। क्योंकि निविद् क्षत्रियरूप है और सूक्त वैश्यरूप है अतः उस [निविद् के बाद सूक्त का शंसन करने] से वह क्षत्रिय जाति में वैश्य जाति को सन्निविष्ट करता है।

अथ कंचिदभिचारप्रयोगं विधत्ते—

**यं कामयेत क्षत्त्रेणैनं व्यर्धयानीति, मध्य एतस्यै निविदः सूक्तं शंसेत्, क्षत्त्रं वै निविद्विट्सूक्तं क्षत्त्रेणैवैनं तद्व्यर्धयति ।। इति ।**

येयं द्वादशपदात्मिका निविदस्ति तस्या मध्ये सूक्तशंसने सति क्षत्त्रियजातिरूपाया निविदः खण्डितत्वादेनं यजमानं क्षत्त्रियजात्या व्यृद्धं वियुक्तं विरोधिनं करोति। अतो यजमानमुद्दिश्य होत्रा यत्कामितं तत्सिध्यतीत्युक्तं भवति ।।

[कुछ अभिचार प्रयोग यह हैं कि] यदि होता यजमान को चाहे कि वह क्षत्रिय जाति से वियुक्त हो जाय तो वह [बारह पदों वाले] निविद् के मध्य सूक्त का शंसन करे; क्योंकि निविद् क्षत्रियरूप है और सूक्त वैश्यरूप है अतः उस [निविद्] के मध्य सूक्त का शंसन करने] से इस [यजमान] को क्षत्रिय जाति से ही वियुक्त करता है।

अभिचारान्तरं विधत्ते—

**यं कामयेत विशैनं व्यर्धयानीति, मध्य एतस्य सूक्तस्य निविदं शंसेत्, क्षत्त्रं वै निविद्विट्सूक्तं विशैवैनं तद्व्यर्धयति ।। इति ।**

प्र वो देवायेत्यस्य सूक्तस्य वैश्यस्थानीयस्य मध्ये निविदः शंसने सति वैश्यजातेः खण्डितत्वात् तद्विरोधो यजमानस्य भवति ।।

जो [होता] यह चाहे कि यजमान वैश्य जाति से वियुक्त हो जाय ['प्र वो देवाय' आदि इस वैश्यस्थानीय] सूक्त के मध्य निविद् का शंसन करे; क्योंकि निविद् क्षत्रिय रूप है और सूक्त वैश्यरूप है अतः उस [सूक्त के मध्य निविद् का पाठ करने] से वह इस [यजमान] को वैश्य जाति से ही वियुक्त करता है।

---

१. षड्गुरुशिष्यस्य पद्यखण्डोऽयम्। 'तूष्णींशंसः पूर्वमुक्तो निवित्सूक्ते ब्रवीम्यथ'—इति उत्तरार्धः।

२. 'प्र वो देवायेत्याज्यमुपसन्तनुयात्'—इति आश्व० श्रौ० ५.९.१५।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रतिकूलं प्रयोगद्वयं विधायानुकूलं प्रयोगं विधत्ते—

**यमु कामयेत सर्वमेवास्य यथापूर्वमृजुक्लृप्तं स्यादित्याह्वयेताथ निविदं दध्यादथ सूक्तं शंसेत्, सो सर्वस्य क्लृप्तिः ॥ इति ।**

यमु यं तु यजमानं प्रति । पूर्वोक्तस्य द्वेष्यस्य यजमानस्य व्यावृत्त्यर्थं उशब्दः । अस्य यजमानस्य सर्वमेव ब्राह्मणक्षत्रियवैश्यजातिरूपं यथापूर्वमुत्तमजातेः पूर्वमनतिक्रम्य ऋजुक्लृप्तं[1] सम्यक्संपादितं स्यादिति कामनायां 'शोंसावोम्' इत्याहावः प्रथमः, ततोऽग्निर्देवेद्ध इति निवित्, ततः 'प्र वो देवाय' इति सूक्तं शंसेत् । सो सैवोक्तानुष्ठितिरेव सर्वस्य जातित्रयस्य क्लृप्तिः समीचीनकल्पना भवति ॥

**जो [होता] यह चाहे कि यह यजमान सभी [ब्राह्मण क्षत्रिय वैश्य जाति रूप] पहले जैसा कहा है वैसा ही सीधा क्रम सम्यक् रूप से सम्पादित होवे तो उसे प्रथम [शोंसावोम् आदि]आहाव, फिर [अग्निर्देवेद्ध आदि] निविद्; और इसके बाद ['प्र वो देवाय' आदि] सूक्त का शंसन करना चाहिए। वह [अनुष्ठान] ही सभी [जातित्रय] का सीधा क्रम कल्पित करता है।**

अथ निविदः प्रशंसितुमाह—

**प्रजापतिर्वा इदमेक एवाग्र आस, सोऽकामयत प्रजायेय भूयान् स्यामिति, स तपोऽतप्यत, स वाचमयच्छत्, स संवत्सरस्य परस्ताद् व्याहरद् द्वादशकृत्वो द्वादश पदा वा एषा निविदेतां वाव तां निविदं व्याहरत् तां सर्वाणि भूतान्यन्वसृज्यन्त ॥ इति ।**

इदमिदानीं दृश्यमानं जगदग्रे स्वोत्पत्तेः पुरा प्रजापतिरीश्वर एक एवाऽऽस वै । स चाकामयताहमेव प्रजायेय प्रजारूपेणोत्पद्येय । तथा सति पूर्वस्माद् अद्वितीयरूपाद् भूयानतिप्रभूतः स्यामिति कामयित्वा स प्रजापतिः सृष्टिसाधनं तपः[2] कृतवान् । तस्मिंस्तपसि वाचमयच्छन् मौनव्रतं कृतवान् । तथा कृत्वा संवत्सरादूर्ध्वं द्वादशकृत्वो वाचमुच्चारितवान् । सेयमुच्चारिता वागेषा द्वादशपदोपेता निवित् संपन्ना । तामेतामेव निविदं प्रजापतिर्व्याहृतवान् । तां निविदमनु तत्सामर्थ्यात् सर्वाणि भूतान्यन्वसृज्यन्त ॥

**इस संसार की उत्पत्ति के प्रारम्भिक काल में एकमात्र प्रजापति ही थे। उन्होंने कामना की कि 'मैं प्रजा उत्पन्न करूँ और बहुत हो जाऊँ।' ऐसा सोंचकर उन्होंने तपस्या**

---

१. 'ऋजु साधु क्लृप्तं सङ्गतम्'—इति षड्गुरु०; 'ऋजु क्लृप्तम् अञ्जसा क्लृप्तं यथोपचारक्लृप्तम्'—इति गोविन्दस्वामी; ऋज्वा अयत्नेनैव विध्यनतिक्रमेण वा' इति भट्टभास्करः ।

२. 'नियमेषु तपश्शब्दः'—इति आप० धर्म० १.२.१ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

की। [उस तप में] उन्होंने वाणी का संयमन किया। ऐसा करके एक वर्ष के पश्चात् उन्होंने बारह बार वाणी का उच्चारण किया। [उच्चरित वह वाणी ही] बारह पदों से युक्त यह निविद् हुआ। उस इस निविद् को ही प्रजापति ने उच्चरित किया। उसी [निविद् की सामर्थ्य] से सभी भूतों की उत्पत्ति हुई।

उक्तार्थं द्रढयितुं कंचिन्मन्त्रमुदाहरति—

**तदेतदृषिः पश्यन्नभ्यनूवाच 'स पूर्वया निविदा कव्यताऽऽयोरिमाः प्रजा अजनयत् मनूनाम्' इति ॥** इति।

तदेतत् प्रजापतेः सर्जनं दिव्यदृष्ट्या पश्यन् कुत्सनामको महर्षिर्मन्त्रेणाभ्यनूवाच। 'स पूर्वया' इत्यादिर्मन्त्रः[1]। स प्रजापतिः पूर्वया प्रथमं प्रादुर्भूतया निविदा द्वादशपदरूपया कव्यता कवित्वं शब्दस्रष्टृत्वमायोरागतवान् प्राप्तवानित्यर्थः। तत ऊर्ध्वं मनूनां वैवस्वतादीनां संबन्धिनीरिमा ब्राह्मणक्षत्रियादिरूपाः प्रजा अजनयद् इत्ययं मन्त्रः पूर्वोक्तमेवार्थं ब्रूते॥

उस इस [प्रजापति की सृष्टि] को [कुत्स नामक] महर्षि ने [दिव्य दृष्टि से देखते हुए इस प्रकार कहा कि—'उस [प्रजापति] ने पहले प्रादुर्भूत [द्वादशपद वाले] निविद् से शब्दसृष्टि को प्राप्त किया। उसके बाद [वैवस्वत आदि] मनुओं की इस [ब्राह्मण, क्षत्रिय आदि रूप] प्रजा को उत्पन्न किया।'

निविदं प्रशस्य तदनुष्ठानं प्रशंसति—

**तद् यदेतां पुरस्तात् सूक्तस्य निविदं दधाति, प्रजात्यै ॥** इति।

यस्मात् प्रजापतिनैवं कृतं तस्माद् यदि होता सूक्तस्य पुरस्तादेतां निविदं दध्यात् तदा सा निविद् यजमानस्य प्रजात्यै प्रजोत्पादनाय संपद्यते॥

[क्योंकि प्रजापति ने ऐसा किया] अतः यदि होता सूक्त के पहले इस निविद् का पाठ करता है तो वह [निविद् यजमान के] प्रजोत्पादन के लिए होता है।

वेदनं प्रशंसति—

**प्रजायते प्रजया पशुभिर्य एवं वेद ॥ ३३ ॥** इति।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः पञ्चमाध्याये (दशमाध्याये) प्रथमः खण्डः ॥१॥ (३३) [६३]

जो इस प्रकार जानता है वह प्रजा और पशुओं से बढ़ता है।

॥ इस प्रकार दसवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

---

१. ऋ० १.९६.२।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ द्वितीयः खण्डः

[1]द्वादशपदोपेताया निविदः प्रथमं पदं विधत्ते—

**अग्निर्देवेद्ध इति शंसत्यसौ वा अग्निर्देवेद्ध एतं हि देवा इन्धत एतमेव तदेतस्मिँल्लोक आयातयति ॥ इति ।**

देवैरिद्धः प्रज्वलितोऽग्निरित्येष निविदि प्रथमभागस्यार्थः । तं भागं होता शंसेद्, असौ वा आदित्यमण्डलेऽवस्थित एव प्रकाशो देवैरिद्धोऽग्निः ।[2] यस्मादेतं द्युलोकवर्तिनं प्रकाशं देवा इन्धत इद्धं दीपितं समृद्धं कुर्वन्ति तत् तेन प्रथमभागपाठेनैतमेवाऽऽदित्यरूपं प्रकाशमेतस्मिन् द्युलोक आयातयति[3] प्रसारयति ॥

ii. ३४ [x. २] 'अग्नि देवों से प्रज्वलित की गई'—इस निविद् भाग का होता शंसन करता है। यह [आदित्यमण्डल में अवस्थित प्रकाश] ही देवों के द्वारा प्रज्वलित अग्नि हैं; क्योंकि इसको देवों ने प्रज्वलित किया। उस [भाग के पाठ] से इस [आदित्य रूप प्रकाश] को ही इस द्युलोक में प्रसारित करता है।

द्वितीयं पदं विधत्ते—

**अग्निर्मन्विद्ध इति शंसत्ययं वा अग्निर्मन्विद्ध इमं हि मनुष्या इन्धतेऽग्निमेव तदस्मिँल्लोक आयातयति ॥ इति ।**

अङ्गाररूपोऽग्निर्भूलोकवर्ती मनुष्यैः प्रज्वाल्यते । अन्यत् पूर्ववत् ॥

[अङ्गार रूप] 'अग्नि मनुष्यों द्वारा प्रज्वलित की गई'—इस भाग का होता पाठ करता है। यह भूलोकवर्ती अग्नि मनुष्यों के द्वारा प्रज्वलित अग्नि है; क्योंकि इसको मनुष्यों ने प्रज्वलित किया। इस प्रकार उस भाग के पाठ से इस अग्नि को ही इस भूलोक में प्रसारित करता है।

---

१. अत्र चत्वारः पर्यायाः । एकैकस्मिन् पर्याये तिस्रस्तिस्रो देवताः । क्षित्यन्तरिक्षद्युस्थानामग्निर्वायुः सूर्य इति । इह तु सूर्योऽग्निर्वायुरिति क्रमः'—इति गोविन्दस्वामी । 'अत्र चत्वारः पर्यायाः । तत्रैकैकस्मिन् पर्याये तिस्रस्तिस्रो निविदस्तिस्रश्च देवता द्युपृथिव्यन्तरिक्षस्थाः सूर्याग्निवायवः प्रतिपर्यायमावर्तन्ते । तत्रादश्शब्दो द्युलोकवर्तिसूर्यविषयो द्रष्टव्यः । एतच्छब्दोऽपि तत्पर्यायः । इदंशब्दस्तु भूलोकवर्तिवह्निविषयो भूलोकविषयश्च । वाय्वन्तरिक्षे तु स्वशब्देनैवोच्येते सर्वत्र ब्राह्मणेन इति द्रष्टव्यम्'—इति भट्टभास्करः ।

२. 'अग्निः, आगन्ता सर्वकार्यार्थम् । अगेर्निर्नलोपश्च' (उ० सू० ४.५१)—इति षड्गुरु० । 'अग्निशब्दो योगादादित्ये वर्तते । अग्निः सर्वदा गच्छत्यादित्यः अतोऽग्निरादित्य उच्यते'—इति गोविन्दस्वामी ।

३. 'आयातयति=आनयति'—इति गोवि०; प्रजारक्षणार्थं सर्वतो यजमानं करोति'—इति भट्टभास्करः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तृतीयं पदं विधत्ते—

**अग्निः सुषमिदिति शंसति वायुर्वा अग्निः सुषमिद् वायुर्हि स्वयमात्मानं समिन्धे स्वयमिदं सर्वं यदिदं किंच वायुमेव तदन्तरिक्षलोक आयातयति ॥ इति ।**

शोभना समित्प्रकाशनं संचरणरूपं यस्य वायोः सोऽयं सुषमित् । तस्याग्नित्वं गतिहेतुत्वाद् यौगिकम् । 'अगि गतौ' इत्यस्माद्धातोरुत्पन्नोऽयं शब्दः ।[1] प्रथमपर्यायेऽप्यादित्यपरत्वमेवं योजनीयम् । वायुर्हि स्वात्मानं सर्वं जगच्च समिन्धे सम्यक् प्रकाशयति व्यापारक्षमं करोतीत्यर्थः ॥

'शोभन समिध्यमान अग्नि है'—इसका पाठ होता करता है। सुन्दर दीप्तिमान अग्नि वायु ही है; क्योंकि वायु ही स्वयं अपने को और स्वयं ही जो कुछ भी इस संसार में है उन सभी को सम्यक् रूप से प्रकाशित करता है अर्थात् कार्य करने में सक्षम बनाता है। इस प्रकार उस पाठ से वायु को ही अन्तरिक्ष लोक में प्रसारित करता है।

चतुर्थपदं विधत्ते—

**होता देववृत इति शंसत्यसौ वै होता देववृत एष हि सर्वतो देवैर्वृत एतमेव तदेतस्मिँल्लोक आयातयति ॥ इति ।**

असावादित्यः स्वोदयास्तमयाभ्यां सायंप्रातर्होमनिमित्तत्वेन होता स वै द्युलोके वर्तमानत्वाद् देवैर्वृतः[2] ॥

'होता देवों के द्वारा वरण किया गया'—इसका पाठ करता है। यह [आदित्य सायं प्रातः होम का कारण होने से] होता ही देवों द्वारा वरण किया गया है; क्योंकि यह चारों ओर से [द्युलोक में अवस्थित होने के कारण] देवों द्वारा वृत है। इस प्रकार उस भाग के पाठ से इसको ही इस द्युलोक में प्रसारित करता है।

पञ्चमं पदं विधत्ते—

**होता मनुवृत इति शंसत्ययं वा अग्निर्होता मनुवृतोऽयं हि सर्वतो मनुष्यैर्वृतोऽग्निमेव तदस्मिँल्लोक आयातयति ॥ इति ।**

भूलोकेऽवस्थितोऽग्निर्होमाधिकरणत्वाद्धोता यजमानर्त्विग्भिश्चेष्टितत्वान् मनुवृतः ॥

'मनुष्यों द्वारा वरण किया गया होता'—इस भाग का पाठ करता है। [भूलोकवर्ती] यह अग्नि ही [होम का अधिकरण होने से] 'होता' है जो [यजमान व ऋत्विजों के रूप में] मनुष्यों से वरण किया गया है; क्योंकि यह सर्वतः मनुष्यों से ही वरण किया जाता है। इस प्रकार उस भाग के पाठ से इस लोक में अग्नि को ही प्रसारित करता है।

---

१. भ्वादि० प०, धा० पा० १४७ । उणा० सू० ४.५१ ।

२. 'असौ खलु सूर्यो होता रसानामादाता देवैः रश्मिभिर्वृतः'—इति भट्टभास्करः । 'होता हवनयोगाद् देवैः सर्वदा वृत आदित्यः'—इति गोविन्दस्वामी ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

षष्ठं पदं विधत्ते—

**प्रणीर्यज्ञानामिति शंसति, वायुर्वै प्रणीर्यज्ञानां यदा हि प्राणित्यथ यज्ञोऽथाग्निहोत्रं वायुमेव तदन्तरिक्षलोक आयातयति ॥ इति ।**

यज्ञान् प्रकर्षेण नयति वायुः, तस्मादेष यज्ञानां प्रणीर्यस्मिन् काले पुरुषः प्राणिति प्राणवायुना चेष्टते तदा यज्ञो भवति ।[1] तस्यैव व्याख्यानमुदाहरणरूपमथाग्निहोत्रमिति प्राणवायुचेष्टयाऽग्निहोत्रकरणादिव्यापारा निष्पद्यन्ते ॥

'यज्ञों को ले जाने वाला'—इस भाग का पाठ करता है। वायु यज्ञों को ले जाने वाला है; क्योंकि जब वह चलता है तब यज्ञ होता है और तब अग्निहोत्र होता है। इस प्रकार उस पाठ से इस अन्तरिक्षलोक में वायु को ही प्रसारित करता है।

सप्तमं पदं विधत्ते—

**रथीरध्वराणामिति शंसत्यसौ वै रथीरध्वराणामेष हि यथैतच्चरति रथीरिवैतमेव तदेतस्मिँल्लोक आयातयति ॥ इति ।**

असावादित्योऽध्वराणां प्रकाशनाय रथीर्भवति रथवान् भूत्वा संचरन्ति । अयमेवार्थ एष हीत्यादिनोच्यते । यथा लोके रथीरिव कश्चन रथवानेवैतद् गन्तव्यस्थानं प्रति चरति तथैष आदित्योऽपि रथयुक्त एव चरति । शाखान्तरे तु तदीयरथप्रदर्शनपूर्वकमेव मन्त्रो व्याख्यातः—'रथीरध्वराणामित्याह, एष हि देवरथः'[2] इति ॥

'आहुतियों का रथी'— इस भाग का पाठ करता है। यह [आदित्य] अध्वरों के प्रकाशन के लिए रथी होकर संचरण करता है; क्योंकि जैसे लोक में रथी के समान [कोई रथवान् अपने गन्तव्य स्थान के प्रति जाता है] वैसे ही यह आदित्य भी रथयुक्त होकर संचरण करता है। इस प्रकार उस भाग के पाठ से इस लोक में इसे ही प्रसारित करता है।

अष्टमं पदं विधत्ते—

**अतूर्तो होतेति शंसत्ययं वा अग्निरतूर्तो होतेमं ह न कश्चन तिर्यञ्चं तरत्यग्निमेव तदस्मिँल्लोक आयातयति ॥ इति ।**

भूलोकवर्ती वह्निरतूर्तः केनाप्यतीर्णः[3] । मार्गमध्ये तिर्यञ्चं मार्गस्यावरोधकत्वेनावस्थितं प्रौढं दावाग्निं कश्चिदपि तरितुं न समर्थः ॥

---

१. यदा खलु वायुः प्राणिति प्राणयति जनान् । अन्तर्णीतण्यर्थोऽनितिर्द्रष्टव्यः । यद्वा, यदा प्राणिति बलवान् भवति तदा खल्वयं प्रणीर्भवति । अधुना प्रकृत्यर्थ एवानितिर्द्रष्टव्यः ।'—इति भट्टभास्करः ।

२. तै० सं० २.५.९.२ ।

३. 'अतूर्तः अतिक्रमितुमशक्यः'—इति भट्टभास्करः; 'अहिंसितः' इति षड्गुरु० । 'तरणायोगादतूर्तत्वम्' इति गोवि० ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'अपराजित होता' इस भाग का पाठ करता है। यह भूलोकवर्ती अग्नि ही अपराजित 'होता' है; क्योंकि कोई भी मार्ग में अवरोधक प्रचण्ड दावाग्नि को पार करने में समर्थ नहीं है। इस प्रकार उससे वह इस लोक में अग्नि को ही प्रसारित करता है।

नवमं पदं विधत्ते—

**तूर्णिर्हव्यवाळिति शंसति, वायुर्वै तूर्णिर्हव्यवाड्, वायुर्हीदं सर्वं सद्यस्तरति यदिदं किंच; वायुर्देवेभ्यो हव्यं वहति, वायुमेव तदन्तरिक्षलोक आयातयति ॥ इति ।**

तरतीति तूर्णिः । वायोः सर्वंतरणसामर्थ्यं प्रसिद्धम् । हव्यं वहतीति हव्यवाड्ढविर्वहनस्य क्रियारूपस्य वायुनिष्पाद्यत्वाद् असौ हव्यं वहति ॥

'पार करने वाले, हव्यों का वहन करने वाले वाहक'—इस भाग का पाठ करता है। पार करने वाला और हव्यों को ले जाने वाला वायु ही है; क्योंकि वायु, जो कुछ भी यहाँ है, उन सब को शीघ्रता से पार करता है और वह हवियों को देवों तक ले जाता है। वस्तुतः इस प्रकार उस भाग के पाठ से वह इस अन्तरिक्ष लोक में वायु को ही प्रसारित करता है।

दशमं पदं विधत्ते—

**आ देवो देवान् वक्षदिति शंसत्यसौ वै देवो देवानावहत्येतमेव तदेतस्मिँल्लोके आयातयति ॥ इति ।**

असावादित्यो देवः स्वोदेयास्तमयाभ्यां होमकालसूचनेन देवानावक्षदावहति ॥

'देवों को देव इधर लाएँ'—इस भाग का पाठ करता है। यह [आदित्य] देव ही [उदय और अस्त से होम की सूचना देने के कारण] देवों को यहाँ लाते हैं। वस्तुतः इस प्रकार उस भाग के पाठ से वह इस लोक में इसको ही प्रसारित करता है।

एकादशं पदं विधत्ते—

**यक्षदग्निर्देवो देवानिति शंसत्ययं वा अग्निर्देवो देवान् यजत्यग्निमेव तदस्मिँल्लोक आयातयति ॥ इति ।**

अयं भूमौ दृश्यमानोऽग्निर्देवो देवान् यजतीति प्रसिद्धम् ॥

'अग्निदेव देवों का यजन करें'—इस भाग का पाठ करता है। यह [दृश्यमान] अग्निदेव ही देवों का यजन करते हैं। वस्तुतः इस प्रकार उस [भाग के पाठ] से वह इस अग्नि को ही इस लोक में प्रसारित करता है।

द्वादशं पदं विधत्ते—

**सो अध्वरा करति जातवेदा इति शंसति, वायुर्वै जातवेदा, वायुर्हीदं सर्वं करोति यदिदं किंच, वायुमेव तदन्तरिक्षलोक आयातयति ॥ ३४ ॥ इति ।**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उच्छ्वासनिःश्वासप्रदानेन जातं प्राणिनं वेदयति जीवनयुक्तत्वेन ज्ञापयतीति वायुर्जातवेदाः ।[1] स चाध्वरा सर्वयज्ञान् करोति निष्पादयति व्यापाररूपस्यानुष्ठानस्य वाय्वधीनत्वात् । एष द्वादशसु पदेषु सूर्याग्निवायवश्चतुरावृत्ताः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः पञ्चमाध्याये (दशमाध्याये) द्वितीयः खण्डः ॥२॥ (३४) [६४]

'वह जातवेद [अग्नि] यज्ञों का निष्पादन करे'—इस भाग का पाठ करता है [उच्छ्वास व निश्वास प्रदान के द्वारा जातम् अर्थात् प्राणियों को जो जानता है वह] जातवेद वायु ही है; क्योंकि [सभी अनुष्ठान वायु के आधीन होने से] वायुदेव ही जो कुछ भी यहाँ है उन सभी [यज्ञों] का निष्पादन करते हैं। वस्तुतः इस प्रकार वह उस [भाग के पाठ] से अन्तरिक्ष लोक में वायु को ही प्रसारित करते हैं। [इस प्रकार प्रधान देवता सूर्य, अग्नि और वायु ही बारह पदों में चार बार आवृत्त हुए हैं]।

॥ इस प्रकार दसवें अध्याय के दूसरे खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

निविदो यानि द्वादश पदानि भागरूपाणि तान्युक्तानि। अथ तदनन्तरभाविसूक्तं विधत्ते—

**प्र वो देवायाग्नय इत्यनुष्टुभः ॥ इति ।**

'प्र वो' इत्यादि सूक्तस्य[2] प्रतीकं तस्मिन् सूक्ते याः सप्तसंख्याका अनुष्टुप्छन्दस्का ऋचः सन्ति ताः शंसेदिति शेषः ॥

ii. ३५ [x. ३] 'हे अध्वर्यु, अग्निदेव को लक्ष्य करके [स्तुति करो]'—इन अनुष्टुभ् छन्दस्क ऋचाओं का शंसन करे।

प्रथमायामृचि यौ प्रथमद्वितीयपादौ तयोर्विहरणं विधत्ते—

**प्रथमे पदे विहरति तस्मात् स्त्र्यूरू विहरति ॥ इति ।**

विहरणम् = पृथक्करणम् । द्वयोः पादयोर्मध्ये विहारं विच्छेदं कृत्वा पठेत् । यस्माद् अत्र पादयोः परस्परवियोगः, तस्माल्लोकेऽपि स्त्री संभोगकाले स्वकीये ऊरू विहरति वियोजयति ॥

प्रथम दो पदों के मध्य विच्छेद करके पढ़ना चाहिए। इसीलिए [लोक में भी] स्त्रियां संभोग काल में अपनी जाँघों को अलग करती हैं।

तस्यामृचि तृतीयचतुर्थपादयोरविच्छेदं विधत्ते—

**समस्यत्युत्तरे पदे, तस्मात् पुमानूरू समस्यति तन्मिथुनं मिथुनमेव तदुक्थमुखे करोति, प्रजात्यै । इति ॥**

---

१. 'जातवेदाः जातधनः धनानामुत्पत्तिहेतुः'—इति भट्टभास्करः। २. ऋ० ३.१३ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यस्मात् तृतीयचतुर्थपादयोरुत्तरार्धगतयोः संयोजनं तस्माल्लोकेऽप्युपरिवर्ती पुमान् भोगकाले स्वकीये ऊरू समस्यति संयोजयति तदुभयं मिलित्वा मिथुनं भवति । तस्मादुक्थमुखे शस्त्रस्योपक्रमे मिथुनमेव करोति । तच्च यजमानस्य प्रजननाय संपद्यते ॥

उत्तरार्ध के दो पदों को मिलाकर पढ़ना चाहिए। इसीलिए [लोक में भी] पुरुष भोग के समय अपनी दोनों जाँघों को मिलाता है। यह मिथुन है। इसलिए इस प्रकार वह आज्यशस्त्र के आरम्भ में मिथुन ही करता है जो [यजमान के] प्रजनन के लिए होता है।

वेदनं प्रशंसति—

**प्रजायते प्रजया पशुभिर्य एवं वेद ॥** इति ।

जो इस प्रकार जानता है वह [पुत्र-पौत्रादि] प्रजा और [गौ आदि] पशुओं से बढ़ता है।

पुनरप्युक्तमेवानूद्य प्रकारान्तरेण प्रशंसति—

**प्र वो देवायाग्नय इत्येवानुष्टुभः प्रथमे पदे विहरति वज्रमेव तत्परोवरीयांसं करोति, समस्यत्येवोत्तरे पदे, आरम्भणतो वै वज्रस्याणिमाऽथो दण्डस्याथो परशोर्वज्रमेव तत्प्रहरति द्विषते भ्रातृव्याय वधं योऽस्य स्तृत्यस्तस्मै स्तर्तवै ॥ ३५ ॥** इति ।

इत्येत्रानुष्टुभ इति योऽयमेवकारः स पूर्वस्यैवानुवादो न तु नूतनविधिरितिज्ञापनार्थः । परोवरीयांसं परस्युत्तरभागेऽतिशयेन स्थूलमीदृशं वज्रं सूक्तपठनेन संपादयति । प्रथमाया ऋच उत्तरार्धे पदे तत्पादयोः समसनं तदपि वज्रसादृश्यार्थं वज्रस्य ह्यारम्भणतोऽणिमा मूले सौक्ष्म्यमित्यर्थः । वज्रशब्देन खड्गादिरूपमायुधमभिधीयते । तस्य हि मूले मुष्टिबन्धनस्थाने सूक्ष्मता भवत्युपरि तु विस्तारः । दण्डशब्देन गदा विवक्षिता । साऽपि हस्तग्रहणस्थाने मूले सूक्ष्मा प्रहारस्थानेऽग्रे स्थूला । परशुरपि तथाविधः[1] । यथाऽयं त्रिविधो वज्र एवमिदमपि सूक्तं प्रथमार्धचंपादविहरणेन सूक्ष्ममुत्तरार्धचंपादसमासेन स्थूलम् । अत ईदृशं सूक्तरूपं वज्रमेव द्वेषं कुर्वतो भ्रातृव्यस्य वधमुद्दिश्य प्रहरति—यः शत्रुरस्य स्तृत्यो हन्तव्यः, तस्मै स्तर्तवै तस्य हिंसायै भवति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः पञ्चमाध्याये (दशमाध्याये) तृतीयः खण्डः ॥ ३ ॥ (३५) [६५]

---

१. 'वज्रस्य खल्वारम्भणे आरम्भे हस्तग्रहणप्रदेशोऽणिमा अणुत्वं भवति । अथो अनन्तरं दण्डभागस्यान्योऽणिमा पूर्वस्मादूनो भवति । अथो तदनन्तरं च परशोः आस्यप्रदेशस्यान्योऽणिमा ततोऽप्यूनो भवति । यदा चाणिमा उपर्युपरि क्षीयते तदा चोपर्युपरि वरिमा भवति वज्रस्य'—भट्टभास्करः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'प्र वो देवायाग्नये' इत्यादि अनुष्टुभ छन्दस्क ऋचाएँ हैं। प्रथम दो पादों के मध्य विच्छेद करता है। इस प्रकार वह उसे उत्तर भाग में अत्यन्त स्थूल वज्र [के समान] ही बनाता है। उत्तरार्ध के दो पादों को वह जोड़ता है; क्योंकि वज्र का प्रारम्भिक भाग सूक्ष्म होता है और ऐसा ही दण्ड अर्थात् गदा और कुठार भी होता है अतः इस प्रकार वह सूक्ष्मरूप वज्र का ही द्वेष करने वाले शत्रु के वधार्थ प्रहार करता है। जो शत्रु इस यजमान का हिंस्य होता है उसकी हिंसा के लिए [ही यह होता है][1]।

॥ इस प्रकार दसवें अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

अथाऽऽग्नीध्रीयवासादिसिद्ध्यर्थमाख्यायिकामाह—

**देवासुरा वा एषु लोकेषु समयतन्त, ते वै देवाः सद एवाऽऽयतनमकुर्वत, तान् सदसोऽजयंस्त आग्नीध्रं संप्रापद्यन्त, ते ततो न पराजयन्त, तस्मादाग्नीध्र उपवसन्ति, न सदस्याग्नीध्रे ह्यधारयन्त यदाग्नीध्रेऽधारयन्त तदाग्नीध्रस्याऽऽग्नीध्रत्वम्** ॥ इति।

पुरा कदाचिद् देवाश्चासुराश्च लोकविषये समयतन्त सङ्ग्रामं कृतवन्तः। वयमेवैषु लोकेषु निवसामो न तु यूयमित्येवं परस्परस्पर्धा। तदानीं देवाः सौमिकवेद्यां प्राग्वंशस्य पूर्वस्यां दिशि येयं सदोभिधाना शाला तामेव स्वस्य निवासस्थानं कृतवन्तः। तत्रावस्थितांस्तान् देवानसुराः सदसोऽजयञ्जित्वा सदसो निःसारितवन्त इत्यर्थः। ततो देवा निर्गताः सन्त अग्नीध्राभिधां शालां प्राप्तवन्तः। ते देवाः प्राप्य तत आग्नीध्रीयं न पराजयन्त तत्रासुराणामेव पराजयो न तु देवानाम्। यस्मादेवं तस्मादाग्नीध्रशालायामुपवसथे दिने यजमाना उपवसन्ति। अग्निसमीपे निवसेयुर्न तु सदसि निवासः कर्तव्यः। आग्नीध्रे हि देवाः पलायनं परित्यज्य स्वात्मानं धारितवन्तः, तस्मात् तत्र निवासो युक्तः। यस्माद् आग्नीध्रे धारितवन्तः, तस्मादाग्नीध्रनाम संपन्नम्[2]। अग्निसमीपे स्वात्मधारणस्य प्रवृत्तिनिमित्तत्वात् ॥

ii. ३६ [x. ४] किसी समय देवों और असुरों ने लोक के विषय में संग्राम किया[3] [कि हम लोग ही इन लोकों में रहेंगे, आप नहीं], तब उन देवों ने [सौमिक वेदि पर

---

१. द्र० इतः पूर्वम्, पृ० १९२,१९३।

२. 'प्रयाजादिप्रदानेनाग्नेरिन्धका देवा ध्रियन्तेऽस्मिन्नित्याग्नीध्रम्। घञर्थे कविधानमित्यधिकरणे कः। इन्धेः क्विप् अग्नीध्रमेवाग्नीध्रः स्वार्थिकोऽण्। वर्णव्यत्ययेन वाकारस्य दीर्घत्वम्। तदिदानीमाग्नीध्रस्याग्नीध्रत्वम्। अग्नीधः शरणे रण् भत्वं चेत्येतदनाश्रित्यैवमुक्तम्'—इति भट्टभास्करः।

३. द्र० इतः पूर्वम्, पृ० ९१। तु० तै० सं० ६.३.१.१, शत० ब्रा० ३.६.१.२७-२९।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्राग्वंश के पूर्व की ओर] सदस् नामक शाला को ही अपना निवासस्थान बनाया। असुरों ने [सदस् को] जीतकर उन देवों को सदस् से निकाल दिया। तब उन देवों ने आग्नीध्र नामक शाला को [निवास के लिए] प्राप्त किया। वहाँ पर वे पराजित न हो सके। इसीलिए [उपवसथ के दिन यजमान] आग्नीध्रशाला के समीप ही बैठते हैं, सदस् के नहीं; क्योंकि आग्नीध्रशाला में ही उन्होंने आश्रय प्राप्त किया। क्योंकि आग्नीध्रशाला में उन्होंने आधार ग्रहण किया इसलिए आग्नीध्र नाम हुआ [अर्थात् अग्नि के समीप अपने को धारण किया]।

अथ सदस्यवस्थितेषु धिष्ण्येष्वाग्नीध्रादग्निविहरणं विधत्ते—

**तेषां वै देवानामसुराः सदस्यानग्नीन्निर्वापयांचक्रुस्ते देवा आग्नीध्रादेव सदस्यानग्नीन् विहरन्त तैरसुररक्षांस्यपाघ्नत तथैवैतद् यजमाना आग्नीध्रादेव सदस्यानग्नीन् विहरन्त्यसुररक्षांस्येव तदपघ्नते ॥** इति।

पुरा देवानां संबन्धिनो येऽग्नयः सदस्यवस्थितेषु धिष्ण्येष्वासंस्तान् सर्वान् देवपलायनेन सदःप्रविष्टा असुरा निर्वापयांचक्रुर्जलप्रक्षेपेणाग्नीन् शान्तानकुर्वन्। तदानीं ते देवा आग्नीध्रे स्थित्वा तत्रत्यान् सदस्यानग्नीन् विहरन्त सदस्यवस्थितेषु धिष्ण्येषु पृथक्पृथगग्नीन् विहृतवन्तः स्थापितवन्तः। तैः प्रबलैरग्निभिरसुरान् रक्षांसि च सदसि हतवन्तः। यथा देवैर्विहरणं कृतं तथैवैतस्मिन्नपि काले यजमाना आग्नीध्रादेव वह्नेः सदस्यानग्नीन् विहरेयुः। तेन विहरणेनासुरान् रक्षांसि च तदपघ्नते तत् तदानीं नाशयन्ति। सोऽयमर्थः सर्वोऽपि शाखान्तरे संगृह्याऽऽम्नातः—'देवा वै यज्ञं पराजयन्त तमाग्नीध्रात् पुनरपाजयन्नेतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदाग्नीध्राद् धिष्णियान् विहरन्ति यदेव यज्ञस्यापराजितं तत एवैनं पुनस्तनुते'[1] इति॥

उन देवों के सदस् की अग्नि को [सदस् में प्रविष्ट] असुरों ने जल प्रोक्षण के द्वारा बुझा दिया। किन्तु उन देवों ने आग्नीध्र अग्नि से ही सदस् की अग्नि को स्थापित कर लिया। उन [प्रबल अग्नियों] से असुर और राक्षस मार डाले गए। उसी प्रकार यजमान को भी इस आग्नीध्र से ही सदस् की अग्नि का स्थापन करना चाहिए; क्योंकि उससे असुरों व राक्षसों का विनाश ही होता है।

इत्थं शंसनस्थानगतेषु धिष्ण्येष्वग्निविहरणं विधाय तत्र शंसनीयानां शस्त्राणां यदेतद् आज्यनामकत्वं तदेतच्छब्दनिर्वचनेन विस्पष्टयति—

**ते वै प्रातराज्यैरेवाऽऽजयन्त आयन् यदाज्यैरेवाऽऽजयन्त आयंस्तदाज्यानामाज्यत्वम् ॥** इति।

त एव देवाः प्रातःसवने यान् याज्यनामकानि शस्त्राणि तैरेवाऽऽसमन्ताज्जयं प्राप्नुवन्त आगच्छन्। यस्मादेवं तस्माद् आसमन्ताज्जयन्त्येभिरिति व्युत्पत्त्या शस्त्राणामाज्यनाम

१. तै० सं० ६.३.१.१।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

संपन्नम् । अनेनैव न्यायेन सामवेदे 'पञ्चदशान्याज्यानिति'[1] वाक्येन विहितानां पञ्चदश-स्तोमयुक्तानां स्तोत्राणामाज्यनामत्वं द्रष्टव्यम् ॥[2]

उन देवों ने प्रातःसवन में आज्य नामक शस्त्रों से विजय प्राप्त की और [जीते हुए स्थान पर] आए; क्योंकि इन्होंने आज्यशस्त्रों से विजय प्राप्त की और [वहाँ] आए इसीलिए आज्य का [चारों ओर से जय प्राप्त करने के कारण] आज्य नाम हुआ।

अथाच्छावाकस्य शस्त्रं विधत्ते—

**तासां वै होत्राणामायतीनामाजयन्तीनामच्छावाकीयाऽहीयत, तस्यामिन्द्राग्नी अध्यास्तामिन्द्राग्नी वै देवानामोजिष्ठौ बलिष्ठौ सहिष्ठौ सत्तमौ पारयिष्णुतमौ तस्मादैन्द्राग्नमच्छावाकः प्रातःसवने शंसतीन्द्राग्नी हि तस्यामध्यास्ताम् ॥ इति ।**

प्रशास्ता ब्राह्मणाच्छंस्यच्छावाक इत्येते शस्त्रिणो होत्रका यद्यपि पुरुषास्तथाऽपि तदीयतनुविवक्षया तासामित्यादिस्त्रीलिङ्गनिर्देशः । यास्तनवः पूर्वमसुरानपाघ्नत तासामेव होत्राणां होत्रकतनूनामायतीनां सदः प्रवेष्टुमागच्छन्तीनामाजयन्तीनां सर्वतो जयं प्राप्नुवतीनां मध्येऽच्छावाकीयाऽच्छावाकसंबन्धिनी तनुरहीयत हीनाऽभूत् सदसमागन्तुं नाशक्नोद् इत्यर्थः । तदनुग्रहार्थं तस्यां तन्वामिन्द्राग्नी अध्यास्तामधिष्ठाय निवासं कृतवन्तौ । युज्यते हीन्द्राग्न्योरनुग्रहीतृत्वं यस्माद्देवानां मध्य इन्द्राग्नी ओजिष्ठावोजसा बलहेतुनाऽष्टम-धातुनाऽत्यन्तमुपेतावत एव बलिष्ठावतिशयेन शरीरशक्तियुक्तौ तत एव सहिष्ठावतिशयेन शत्रूनभिभवितारौ स्वभक्तविषये तु सत्तमावतिशयेन सन्तौ सन्मार्गवर्तिनावनुग्रहीतारा-वित्यर्थः । अत एव पारयिष्णुतमौ स्वभक्तैरनुष्ठीयमानं कर्मातिशयेन पारं नेतुं सदोद्युक्तौ । तस्मादयमच्छावाक इन्द्राग्नीदेवताकं शस्त्रं प्रातःसवने शंसेत् । 'इन्द्राग्नी आ गतम्'[3] इत्यादिकं तच्छस्त्रम् ।[4] यस्मादिन्द्राग्नी तस्यामच्छावाकतन्वामध्यास्तां[5] तस्मादैन्द्राग्नशस्त्रं तस्य युक्तम् ॥

---

१. ता० ब्रा० २०.३ १ । बहिष्पवमानसूक्तादनन्तरम् 'अग्न आयाहि' (उत्तर ऋक् १–४) इत्यारभ्य गीयमानानि सूक्तान्याज्यस्तोत्राणि । तत्र प्रातःसवने चत्वारि । माध्यन्दिनसवने पञ्च । तृतीयसवने षट् इति पञ्चदश ।

२. प्रजापतिर्देवेभ्य आत्मानं यज्ञं कृत्वा प्रायच्छत् तेऽन्योऽन्यस्मा अग्राय तातिष्ठन्त तान-ब्रवीदाजिमस्मिन्नितेति त आजिमायन्यदाजिमाय स्तदाज्यानामाज्यत्वम्'—इत्या-द्याखण्डसमापि द्रष्टव्यम्. (ता० ब्रा० ७.२) । ३. ऋ० ३.१२ ।

४. 'इन्द्राग्नी आगतं सुतम्'—इति आश्व० श्रौ० ५.१०.२८ ।

५. अध्यास्ताम् = अध्यासाताम् । आसेर्व्यत्ययेन परस्मैपदम्; अधिशीङ्स्थासामिति कर्मसंज्ञाभावश्च । यद्वा, अस्तेर्लङ् । स्वामित्वेन भवनमधिभवनम् । इन्द्राग्नी खलु तस्यामधि स्वामित्वेनास्तामभवताम् । अधिरीश्वर इति कर्मप्रवचनीयत्वाद् यस्माद-धिकमिति सप्तमी'—इति भट्टभास्करः ।



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उन [सदस् में प्रवेश के लिए] आने वाले और विजय पाए हुए होताओं के शरीर में से अच्छावाक का शरीर हीन हो गया [अर्थात् सदस् में प्रवेश न पा सका]। उस [शरीर] पर [अनुग्रह करके] इन्द्र और अग्निदेव ने निवास किया। देवों में इन्द्र और अग्नि वस्तुतः अत्यन्त ओजवान्, बहुत बलवान्, शत्रुओं के अत्यन्त अभिभविता, [अपने भक्त के लिए] अत्यन्त सन्मार्गवर्ती [अर्थात् अनुग्रह करने वाले] और [अपने भक्त के कर्म को] पार लगाने वाले हैं। इसीलिए प्रातःसवन में अच्छावाक इन्द्र और अग्नि की स्तुति करता है; क्योंकि इन्द्र और अग्नि ने ही उस [अच्छावाक के शरीर] में निवास किया था।

इदानीमच्छावाकस्य सदःप्रवेशे विशेषं विधत्ते—

**तस्माद् पुरस्ताद् अन्ये होत्रकाः सदः प्रसर्पन्ति पश्चाऽच्छावाकः पश्चेव हि हीनोऽनुसंजिगमिषति ॥** इति।

यस्मादच्छावाकव्यतिरिक्ताः प्रशास्त्रादयो होत्रकाः सहसा गन्तुं शक्नुवन्ति न त्वच्छावाकः, तस्मात् प्रशास्त्रादयः पुरस्तात् सदः प्रसर्पेयुः। अच्छावाकस्तु पश्चात् प्रसर्पेत्। लोकेऽपि हि हीनोऽशक्तः पश्चेव हि पश्चादेव हि जिगमिषतीति प्रसिद्धम्। अत्र पुरस्तात् पश्चाच्छब्दौ देशतः कालतश्चेति वेदितव्यौ ॥

इसीलिए [प्रशास्ता प्रभृति] अन्य होता पहले सदस् में जाते हैं और बाद में अच्छावाक; क्योंकि लोक में भी हीन अर्थात् अशक्त पुरुष पीछे ही छोड़ दिया जाता है जैसे कि वह अनुगमन के लिए तत्पर रहे।

अच्छावाकीयशस्त्रं प्रशंसति—

**तस्माद् यो ब्राह्मणो बह्वृचो वीर्यवान् स्यात् सोऽस्याच्छावाकीयां कुर्यात् तेनैव साऽहीना भवति ॥ ३६ ॥** इति।

यस्मादिन्द्राग्नी तस्यां तन्वामधिष्ठाय निवसतस्तस्माल्लोके यः कोऽपि ब्राह्मणो बह्वृच ऋग्वेदाध्यायी वीर्यवान् वेदपाठसामर्थ्यातिशयोपेतः स्यात् सोऽस्य यजमानस्याच्छावाकीयां कुर्यादच्छावाकसम्बन्धमैन्द्राग्नशस्त्रं पठेत्। तेनैव पाठेन सा तदीयतनुरहीना व्यवहर्तुं समर्था भवति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः पञ्चमाध्याये (दशमाध्याये) चतुर्थः खण्डः ॥ ४ ॥ (३६) [६६]

इसलिए जो ब्राह्मण बह्वृच [=ऋग्वेद में परंगत] एवं वीर्यवान् [ऋचाएँ बोलने में अत्यन्त समर्थ] हो वही इस [यजमान] का अच्छावाक का कार्य करे; क्योंकि उस [ऐन्द्राग्नशस्त्र] के पाठ से ही उसका शरीर अहीन [= व्यवहार में समर्थ] होता है।

॥ इस प्रकार दसवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ पञ्चमः खण्डः

अथाऽऽज्यशस्त्रस्य बहिष्पवमानस्तोत्रोत्तरत्वं प्रउगशस्त्रस्याऽऽज्यस्तोत्रोत्तरत्वं विधत्ते—

**देवरथो वा एष यद्यज्ञस्तस्यैतावन्तरौ रश्मी यदाज्यप्रउगे तद्यदाज्येन पवमानमनुशंसति प्रउगेणाऽऽज्यं देवरथस्यैव तदन्तरौ रश्मी विहरत्यलोभाय ॥** इति ।

यो यज्ञोऽस्त्येष देवानां रथ एव तस्य रथरूपस्य रथस्याऽऽज्यं प्रउगं च यच्छस्त्रद्वयं तदन्तरौ रश्मी अश्वबन्धनरज्जू रथस्योपर्यवस्थितेन सारथिना ध्रियमाणत्वात् तयोरभ्यन्तरत्वम् । यस्मादेवं तस्मात् यद्याज्यशस्त्रेण बहिष्पवमानमनु पश्चाच्छंसेत् प्रउगशस्त्रेण चाऽऽज्यस्तोत्रमनुशंसेत् तदानीं देवरथस्यैव संबन्धिनावभ्यन्तरौ रश्मी प्रग्रहौ विहरति विशेषेण संपादयति । तच्चालोभाय व्यामोहराहित्याय संपद्यते । रश्मिराहित्ये दुष्टाभ्यामश्वाभ्यां यत्र क्वापि दुर्गमे देशे रथनयने सति रथभङ्गरूपो व्यामोहः स्यात् तन्मा भूदिति शस्त्रद्वयं क्रमेण प्रयोक्तव्यम् ॥

ii. ३७ [x. ५] यह जो यज्ञ है, वह देवों का रथ है। उस रथरूपी यज्ञ के आज्य और प्रउग जो दो शस्त्र हैं वे दो आभ्यन्तर बागडोर हैं। इसीलिए आज्यशस्त्र से बहिष्पवमान-स्तोत्र के बाद वह शंसन करता है और आज्यशस्त्र के बाद प्रउगशस्त्र का [पाठ करता है] तब वह होता मानों देवों से रथ की आभ्यन्तर बागडोर को व्यामोहराहित्य के लिए संभाल लेता है [जैसे रश्मियों के बिना घोड़े इधर उधर जहाँ कहीं भी रथ को ले जाते हैं वैसा न हो अतः शस्त्र-द्वय का क्रम से प्रयोग करना चाहिए] ।

लौकिकफलप्रदर्शनेऽत्रैव रश्मिस्थानीयं शस्त्रद्वयं प्रशंसति—

**तामनु कृतिं मनुष्यरथस्यैवान्तरौ रश्मी विहरन्त्यलोभाय ॥** इति ।

तां कृतिं देवरथे शस्त्रद्वयरूपरश्मिकरणमनु पश्चान्मनुष्यरथस्यैवान्तरौ सारथिना ग्रहणयोग्यौ रश्मी प्रग्रहौ विहरन्ति संपादयन्ति । तच्च मनुष्यरथस्यालोभाय संपद्यते । अभग्नो मनुष्यरथो यजमानस्य संभवतीत्यर्थः ॥

उस देव-रथ के शस्त्रद्वयरूप लगाम की अनुकृतिस्वरूप मनुष्य-रथ की आभ्यन्तर बागडोर को सारथी व्यामोहराहित्य के लिए संभालते हैं ।

वेदनं प्रशंसति—

**नास्य देवरथो लुभ्यति न मनुष्यरथो य एवं वेद ॥** इति ।

जो इस प्रकार जानता है उसका न तो देव-रथ और न तो मनुष्य-रथ ही भ्रमित होता है ।

इदानीं स्तोत्रशस्त्रयोर्वैयधिकरण्यरूपं चोद्यमुद्भावयति—

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**तदाहुर्यथा वाव स्तोत्रमेवं शस्त्रं पावमानीषु सामगाः स्तुवत आग्नेयं होताऽऽज्यं शंसति कथमस्य पावमान्योऽनुशस्ता भवन्तीति ॥ इति ।**

तत्तस्मिन्नाज्यशस्त्रे ब्रह्मवादिन आहुश्चोदयन्ति । यथैवं स्तोत्रं सामगैरुक्तं तथैव बह्वृचैः शस्त्रं वक्तव्यं 'स्तुतमनुशंसतीति' विधानात् ।[1] अत्र तु सामगा 'उपास्मै गायता नरः पवमानाय' इत्यादिषु पावमानीषु पवमानदेवताकास्वृक्षु[2] बहिष्पवमानाख्येन स्तोत्रेण स्तुवते ।[3] बह्वृचस्तु होता 'प्र वो देवायाग्नये'[4] इत्यादिकमाज्यशस्त्रं शंसति । तथा सति कथमस्य होतुः पावमान्य ऋचोऽनुशस्ता भवेयुः । न हि पवमानः शस्त्रस्य देवता किं त्वग्निरिति चोद्यम् ।

उस [आज्यशस्त्र] के सम्बन्ध में ब्रह्मवादी कहते हैं कि—'साम-गान करने वालों का जैसे स्तोत्र होता है वैसे ही [बह्वृचों का] शस्त्र होना चाहिए । पवमान देवताक ऋचाओं में [बहिष्पवमान नामक स्तोत्र के द्वारा] साम-गान करने वाले स्तुति करते हैं । जबकि [बह्वृच] होता अग्निदेवताक ऋचाओं में शंसन करता है तो इस होता की पवमान देवताक ऋचाएँ कैसे उसके अनुकूल होती हैं ?

तस्य परिहारमाह—

**यो वा अग्निः स पवमानः ॥ इति ।**

अग्निपवमानदेवतयोः परस्परप्रीत्याऽभेदादाग्नेयमपि सूक्तं पावमानमिति वक्तुं शक्यते । तेन पावमान्योऽनुशस्ताः संपद्यन्ते ॥

वस्तुतः जो अग्नि है वह पवमान है [अतः दोनों देवता में परस्पर प्रीति के कारण अग्निदेवताक सूक्त को भी पवमान में पढ़ा जा सकता है] ।

अग्निपवमानयोरेकत्वे कंचिन्मन्त्रमुदाहरति—

**तदप्येतदृषिणोक्तम् 'अग्निर्ऋषिः पवमानः'[5] इति ॥ इति ।**

ऋषिरतीन्द्रियद्रष्टा । योऽयमग्निः स एव पवमानो वायुः । प्रीत्यतिशयेनैकत्वप्रतिभासात् । यद्वा, शोधकत्वादग्निरेव पवमान इति मन्त्रार्थः ।

यही तथ्य ऋषि के द्वारा कहा भी गया है—'जो अग्नि है वही पवमान वायु है ।'

परिहारमुपपाद्य निगमयति—

**एवमु हास्याऽऽग्नेयोभिरेव प्रतिपद्यमानस्य पावमान्योऽनुशस्ता भवन्ति ॥इति ।**

---

१. ऐ० ब्रा० २४.४ । ऋग्भिः शंसन्ति, यजुर्भिर्यजन्ति, सामभिः स्तुवन्ति'–इति निरु० १३.७ । 'स्तुवतेऽथ शंसति'–इति शत० ब्रा० ८.१.३.३ । 'स्तोत्रमग्रे शस्त्रात्'–इति च आश्व० श्रौ० ५.१०.१ ।

२. उ० आ० १.१.१–३. १–९ (ऋ० ९.११.१) ।

३. द्र० इतः पूर्वम्, ३०० पृ० ५ टि० ।

४. ऋ० ३.१३.१–७ ।

५. ऋ० ९.६६.२० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अग्निदेवताकाभिः सूक्तगताभिर्ऋग्भिः शस्त्रं प्रारभमाणस्य होतुर्बहिष्पवमानस्तोत्रगताः पवमानदेवताका ऋचोऽनुशस्ता भवन्ति ॥

इस प्रकार अग्निदेवताक सूक्तगत ऋचाओं से आरम्भ होने वाला होता का आज्यशस्त्र भी बहिष्पवमान स्तोत्र-गत पवमान देवताक ऋचाओं के अनुकूल हो जाता है।

देवताप्रयुक्तं वैयधिकरण्यं परिहृत्य च्छन्दःप्रयुक्तं वैयधिकरण्यरूपं चोद्यं पूर्ववद्-उद्भावयति—

**तदाहुर्यथा वाव स्तोत्रमेवं शस्त्रं गायत्रीषु सामगाः स्तुवत आनुष्टुभं होताऽऽज्यं शंसति, कथमस्य गायत्र्योऽनुशस्ता भवन्तीति ॥** इति।

बहिष्पवमानस्तोत्रगता 'उपास्मै गायता'[1] इत्याद्या ऋचो गायत्रीछन्दस्काः[2] 'प्र वो देवाय' इत्यादिकमाज्यशस्त्रम्[3] अनुष्टुप्छन्दस्कमिति वैयधिकरण्यं चोद्यम् ॥

उस [आज्यशस्त्र] के सम्बन्ध में ब्रह्मवादी कहते हैं कि [साम-गान करने वालों का] जैसे स्तोत्र होता है वैसे ही शस्त्र भी होना चाहिए। साम-गान करने वाले गायत्री छन्दस्क ऋचाओं में स्तुति करते हैं जब कि होता अनुष्टुभ् छन्दस्क ऋचाओं में आज्यशस्त्र का शंसन करता है तो इस साम-गान करने वालों की गायत्री छन्दस्क ऋचाएँ कैसे उसके अनुकूल होती हैं ?

तस्य परिहारमाह—

**संपदेति ब्रूयात् ॥** इति।

अनुष्टुप्सु गायत्रीत्वे संपादिते सति तया संपदा वैयधिकरण्यपरिहारादनुकूलशंसनं भवतीति परिहारं ब्रूयात् ॥

उसे कहना चाहिए कि [अनुष्टुप् में गायत्री का] सम्पादन होने से अनुकूल शंसन होता है।

संपादनप्रकारं दर्शयति—

**सप्तैता अनुष्टुभस्तास्त्रिः प्रथमया त्रिरुत्तमयैकादश भवन्ति विराड्याज्या द्वादशी, न वा एकेनाक्षरेण च्छन्दांसि वियन्ति न द्वाभ्यां, ताः षोळश गायत्र्यो भवन्ति ॥** इति।

आद्यन्तयोर्ऋचोस्त्रिरावृत्तौ सत्यां स्वभावतः सप्तानामनुष्टुभामेकादशत्वं संपद्यते। 'अग्न इन्द्रश्चेति'[4] याज्या विराट्छन्दस्का। सा द्वादश्यनुष्टुबिति गणनीया। यद्यपि तस्या विराजस्त्रयस्त्रिंशदक्षरत्वादेकमक्षरमनुष्टुप्त्वादतिरिच्यते तथाऽप्यल्पेन वैकल्येन च्छन्दस्त्वं नापैतीतिन्यायः पूर्वमप्युदाहृतः।[5] एवं सति द्वादशस्वनुष्टुप्सु द्वादश पादानपनीयावशिष्टैः

१. ऋ० ९.११.१।  २. उ० आ० १.१.१–३.१–९।
३. ऋ० ३.१३.१–७।  ४. ऋ० ३.२५.४। आश्व० श्रौ० ५.९.२६।
५. द्र० इतः पूर्वम्, ४५ पृ०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पादैस्त्रिपदा गायत्र्यो द्वादश संपादनीयाः। अपनीतैश्च पादैश्चतस्रो गायत्र्यः, इत्यनेन प्रकारेण षोडशसंख्याका गायत्र्य एव संपद्यन्ते ॥

सात अनुष्टुभ् [ऋचाएँ आज्यशस्त्र में] हैं। उनमें से प्रथम ऋचा का तीन बार और अन्तिम ऋचा का तीन बार पाठ करने से वे ग्यारह हो जाते हैं। विराट् छन्दस्क याज्या बारहवीं अनुष्टुप् है [क्योंकि इसमें तैंतिस अक्षर होते हैं अतः यह अनुष्टुप् के समान होता है। यद्यपि अनुष्टुप् छन्द बत्तिस अक्षरों का होता है तथापि] एक अक्षर से न्यून या अधिक होने से छन्द नहीं बदलता है; अथवा दो अक्षर से न्यून या अधिक होने पर भी छन्द नहीं बदलता है। इस प्रकार वे [आज्यमन्त्र स्तोत्र के] सोलह गायत्री छन्दों के बराबर हो जाते हैं।

परिहारं निगमयति—

**एवमु हास्यानुष्टुब्भिरेव प्रतिपद्यमानस्य गायत्र्योऽनुशस्ता भवन्ति ॥ इति।**

इस प्रकार अनुष्टुप् छन्द से आरम्भ होने वाला होता का आज्यशास्त्र भी बहिष्पवमान स्तोत्र-गत गायत्री छन्द के अनुकूल हो जाता हैं।

इदानीमैन्द्राग्नग्रहस्य याज्यां विधत्ते—

**अग्न इन्द्रश्च दाशुषो दरोण इत्याग्नेन्द्र्या यजति ॥ इति।**

नन्वैन्द्राग्नग्रहे पूर्वभावित्वमिन्द्रस्य प्रतीयतेऽग्नेस्तु पश्चाद्भावित्वम् ॥

'हे अग्नि, इन्द्र के साथ अभिषव प्रदाता के गृह में [आओ]'—इस अग्नि और इन्द्र देवताक ऋचा से यजन करता है।

याज्यायां तु तद्विपर्ययः कस्मात् क्रियत इत्याशङ्क्याऽऽह—

**न वा एताविन्द्राग्नी सन्तौ व्यजयेतामाग्नेन्द्रौ वा एतौ सन्तौ व्यजयेतां तद्यदाग्नेन्द्र्या यजति विजित्या एव, इति।**

असुरैः सह देवानां विजययुद्धे सति विजयार्थमिन्द्रस्य पुरोगमनमग्नेः पश्चाद्गमनमित्येवं न संपन्नम्। किं त्वग्निः पुरोगत इन्द्रस्तु पश्चाद्गतः। अतो विजयकालीनक्रमेणैवाग्निपूर्वकत्वप्रतिपादिकया यजने सति यजमानस्य विजयाय संपद्यत एव ॥

[याज्या में 'इन्द्राग्नी' न होकर 'अग्न इन्द्रश्च' होने का यह कारण है कि—असुरों के साथ देवताओं का युद्ध होने पर विजयार्थ इन्द्र का पुरोगमन और अग्नि का उनके पीछे चलना नहीं हुआ अतः] इन्होंने 'इन्द्राग्नी' के रूप में विजय नहीं प्राप्त की। किन्तु 'आग्नीन्द्र' के रूप में इन्होंने विजय प्राप्त की। इस प्रकार [विजयकालीन क्रमानुसार] जो अग्नि और इन्द्र-देवताक ऋचा से यजन करता है वह यजमान के विजय के लिए ही होता है।

याज्यागतान्यक्षराणि प्रशंसति—

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**सा विराट् त्रयस्त्रिंशदक्षरा भवति, त्रयस्त्रिंशद् वै देवाः, अष्टौ वसवः, एकादश रुद्रा, द्वादशाऽऽदित्याः, प्रजापतिश्च, वषट्कारश्च, तत्प्रथम उक्थमुखे देवता अक्षरभाजः करोत्यक्षरमक्षरमेव तद्देवता अनुप्रपिबन्ति देवपात्रेणैव तद्देवतास्तृप्यन्ति ॥ इति ।**

अक्षराणां देवतानां च संख्यासाम्यम् । उक्थमुखे शस्त्राणां मध्ये मुख्ये प्रथम आज्यशस्त्रे देवताः प्रत्येकमक्षरभाजः करोति तास्तत्तदक्षरमेवानुसृत्य ता देवताः सोमं प्रकर्षेण पिबन्ति । तथा सति स्वयोग्येनाक्षररूपेण देवपात्रेणैव देवतास्तृप्ता भवन्तीति ॥

वह विराट् छन्द तैंतीस अक्षरों का होता है । वस्तुतः तैंतीस ही देवता भी है—आठ वसु, ग्यारह रुद्र, बारह आदित्य, प्रजापति और वषट्कार । इस प्रकार शस्त्रों के मध्य मुख्य [आज्यशास्त्र] में ही वह [होता मन्त्र के तैंतिस] अक्षरों में [वसु आदि] देवताओं को [संख्या साम्य के द्वारा] सम्मिलित कर लेता है ।[1] उन उन अक्षरों का अनुसरण करके वे देव सोम को प्रकृष्ट रूप से पीते हैं । इस प्रकार उनसे [अक्षर रूपी] देवपात्र के द्वारा ही देवता तृप्त होते हैं ।

शस्त्रयाज्ययोर्देवताप्रयुक्तं वैयधिकरण्यचोद्यमुद्भावयति —

**तदाहुर्यथा वाव शस्त्रमेवं याज्याऽऽग्नेयं होताऽऽज्यं शंसत्यथ कस्मादाग्नेन्द्रया यजतीति ॥ इति ।**

शस्त्रस्याग्निरेक एव देवता याज्यायास्त्वग्निरिन्द्रश्चेति द्वयोर्मिलितयोर्देवतात्वमिति वैयधिकरण्यम् ॥

उस [याज्या] के सम्बन्ध में ब्रह्मवादी कहते हैं कि—जैसा शस्त्र होता है वैसी ही याज्या भी होनी चाहिए । जब होता अग्निदेवता के आज्यशास्त्र का शंसन करता है तो कैसे अग्नि और इन्द्र देवताक याज्या से यजन करता है ? [अर्थात् शस्त्र के मात्र अग्नि देवता हैं तो याज्या के देवता-द्वय क्यों हैं] ।

अस्य चोद्यस्य परिहारमाह—

**या वा आग्नेन्द्रचैन्द्राग्नी वै सा सेन्द्राग्नमेतदुक्थं ग्रहेण च तूष्णींशंसेन च ॥ इति ।**

येयमाग्नेन्द्री याज्या सेयमैन्द्राग्न्यपि भवति । द्वयोः पौर्वापर्यमविसंवादेऽपि तस्या ऋचो द्विदेवत्यत्वसद्भावाद् देवतयोः क्रमविपर्यासमात्रेऽङ्गीकृते सति याज्याया ऐन्द्राग्नत्वमुपचरितं यथा संपद्यते तथैवैतदुक्थमाज्यशस्त्रमपि ग्रहद्वारा तूष्णींशंसद्वारा चेन्द्राग्निदेवतासहितं संपद्यते । तथा सत्यैन्द्राग्नत्वस्योपचरितस्य याज्याशस्त्रयोः सद्भावान्नास्ति वैयधिकरण्यम् ॥

[उत्तर] जो यह अग्नि और इन्द्र देवताक याज्या है वह यह इन्द्र और अग्नि देवताक भी है; क्योंकि यह स्तवन तो ग्रह और तूष्णींशंस के द्वारा इन्द्र और अग्नि

---

१. द्र० इतः पूर्वम्, ६८ पृष्ठे ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दोनों देवों के साथ संपादित होता है [अतः याज्या और शस्त्र का आनुकूल्य होने से क्रम विपर्यास रूप वैयधिकरण्य नहीं है]।

आज्यशस्त्रस्य ग्रहद्वारकं तूष्णींशंसद्वारकं चैन्द्राग्नत्वं दर्शयति—

**'इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम्। अस्य पातं धियेषिता'[1] इत्यैन्द्राग्नमध्वर्युर्ग्रहं गृह्णाति, 'भूरग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रः सूर्यो ज्योतिर्ज्योतिः स्वः सूर्यः' इति होता तूष्णींशंसं शंसति तद्यथैव शस्त्रमेवं याज्या ॥ ३७ ॥** इति।

हे इन्द्राग्नी, सुतमभिषुतं सोमं प्रत्यागतमागच्छतम्। कीदृशं सुतं, गीर्भिः स्तुतिभिर्युक्तमिति शेषः। नभ आकाशस्वरूपमाकाशवन्महदि(हान्तमि)त्यर्थः। वरेण्यं वरणीयम्। आगत्य च युवां धियेषिता स्वबुद्ध्या प्रेषितौ सन्तावस्य सोमस्य सारं पातं पिबतम्। इत्यनेनैन्द्राग्नदेवताकमन्त्रेणाध्वर्युरैन्द्राग्नं ग्रहं गृह्णाति। तूष्णींशंसे भूरग्निरित्यग्निराम्नात इन्द्रो ज्योतिरितीन्द्रोऽप्याम्नातः[2] तत उभयसद्भावात् तूष्णींशंसोऽप्यैन्द्राग्नः। ईदृशस्य ग्रहस्य तूष्णींशंसस्य संबन्धादाज्यशस्त्रमप्यैन्द्राग्नं भवति। तस्माच्छस्त्रयाज्ययोरैन्द्राग्नत्वसंपादनान्नास्ति वैयधिकरण्यम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीय पञ्चिकायाः पञ्चमाध्याये (दशमाध्याये) पञ्चमः खण्डः ॥ ५ ॥ (३७) [६७]

**'हे इन्द्र और अग्नि! स्तुतियों से युक्त, आकाश के समान महान्[3] और वरणीय अभिषुत सोम के प्रति आओ और [आकर तुम दोनों] अपनी बुद्धि से प्रेरित होकर इस सोम के सार को पिओ'—इस [इन्द्र और अग्नि-देवताक] मन्त्र से अध्वर्यु ऐन्द्राग्न-ग्रह को लेता है; और होता 'भूरग्निः···सूर्यः' इत्यादि तूष्णींशंस का शंसन करता है। इसलिए जैसा शस्त्र है वैसी ही याज्या भी है [अर्थात् तूष्णींशंस में 'भूरग्निः' में अग्नि उक्त है और 'इन्द्रो ज्योतिः' में इन्द्र उक्त है अतः दोनों के होने के कारण शस्त्र के अनुकूल याज्या है]।**

॥ इस प्रकार दसवें अध्याय के पाँचवें खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

पूर्वत्र पराङ्ध्वर्यावित्याद्याश्वलायनसूत्रोदाहरणेन होतुर्यो जपो दर्शितः,[4] तमिमं जपं विधत्ते—

**होतृजपं जपति रेतस्तत्सिञ्चति ॥** इति।

---

१. ऋ० ३.१२.१।        २. द्र० इतः पूर्वम्, ३३५ पृ० (ii.४.७)।

३. 'delightful cloud' इति कीथमहोदयः।

४. 'सुमदित्यादिमन्त्रस्य' नाम 'होतृजपस्त्विति'—इति षड्गुरु०।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

होतुः कर्तव्यो यो जपस्तमनुतिष्ठेत् । तेन प्रजोत्पादनार्थमादौ रेतः सिक्तं भवति ॥

ii. ३८ [x.६] वह होतृ-जप[1] का जप करता है। इस प्रकार उससे वह प्रजोत्पादन के लिए वीर्य का प्रथमतः सेचन करता है।

तत्रोच्चारणप्रकारविशेषं विधत्ते—

**उपांशु जपत्युपांश्विव वै रेतसः सिक्तिः ॥** इति ।

ओष्ठस्पन्दनमेव परैर्दृश्यते न तु शब्दः श्रूयते तादृशमुपांशुत्वम् । लौकिके रेतःसेचनेऽपि ध्वनेरश्रवणाद्युक्तं तथाविधत्वम् ॥

उपांशु [मात्र ओष्ठ स्पन्दन हो किन्तु स्वर न सुनाई पड़े] जप करता है। वस्तुतः लोक में भी वीर्य सेचन ध्वनिरहित ही होता है।

तस्य जपस्य शोंसावोमित्येतस्मादाह्वावात् पूर्वभावित्वं विधत्ते—

**पुराऽऽह्वावाज्जपति यद्वै किंचोर्ध्वमाह्वावाच्छस्त्रस्यैव तत् ॥** इति ।

अध्वर्युराह्वयते येन 'शोंसावोम्' इति मन्त्रेण तस्मात् पूर्वभावी होतृजपः । तथा च आश्वलायनेनोदाहृतम्—'जपित्वाऽनभिहिङ्कृत्य शोंसावोमित्युच्चैराहूय'[2] इति। आह्वावाद् ऊर्ध्वं यत्किंचित् पठ्यते तत्सर्वं शस्त्रस्यैव संबन्धि भवेत् । आह्वावमन्त्रेण शस्त्रानुज्ञानस्य पृष्टत्वात् । अतो होतृजपस्य शस्त्रान्तर्भावं निवारयितुं पूर्वकालीनत्वम् ॥

आह्वाव के पहले जप करता है और आह्वाव के अनन्तर जो कुछ भी पाठ करता है वह सभी शस्त्र से सम्बन्धित होता है।

अथाऽऽह्वावे प्रकारविशेषं विधत्ते—

**पराङ्ङं चतुष्पद्यासीनमभ्याह्वयते, तस्मात् पराञ्चो भूत्वा चतुष्पादो रेतः सिञ्चन्ति ॥** इति ।

अस्मिन् कालेऽध्वर्युः पराङ् भवति होतुर्विमुखो भवति । तथा चतुष्पदी गौरिव हस्तौ भूमाववस्थाप्याऽऽसीनो भवति । तादृशमध्वर्युं संबोध्याभिमुखो यथा भवति तथा होता शोंसावोमिति मन्त्रेणाऽऽह्वयते । यस्मादाह्वानकाल ईदृशोऽध्वर्युस्तस्माल्लोकेऽपि चतुष्पादो गवादयः पराञ्चः संभोगावस्थायां परस्पराभिमुखरहिता भूत्वा रेतः सिञ्चन्ति ॥

होता [उस समय अध्वर्यु को संबोधित करके आह्वाव] बोलता है जब वह होता से पराङ्मुख होकर [चौपाए पशु के समान दोनों हाथों को भूमि में रखकर] चतुष्पदासीन होता है। इसीलिए चौपाए पशु पराङ् मुख होकर वीर्य का सेक करते हैं।

आह्वावादूर्ध्वमध्वर्योश्चतुष्पात्त्वं परित्यज्य सम्यगुत्थानं विधत्ते—

**सम्यङ्द्विपाद् भवति, तस्मात् सम्यञ्चो भूत्वा द्विपादो रेतः सिञ्चन्ति ॥** इति ।

ऊर्ध्वत्वेनोत्थानं सम्यक्त्वम् । तथाविधा भूत्वा रेतः सिञ्चन्ति । जपितव्यो यो मन्त्र-

---

१. द्र० इतः पूर्वम् ३०९ पृ०, तत्सूत्रारम्भपाठो ३०९ पृष्ठे टि० २ द्रष्टव्यः ।

२. आश्व० श्रौ० ५.९.१ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्तस्याऽऽदौ 'सुमत्पद्वग्दे' इति पञ्चाक्षराणि पठितव्यानि। तानि च पूर्वमेवाक्षरपङ्क्ति-प्रशंसायां[1] विहितानि ॥

[आहाव के अनन्तर अब अध्वर्यु] दो पैरो पर सम्मुख खड़ा हो जाता है। इसीलिए दो पैरों वाले [मनुष्य] सामने मुँह करके वीर्य का सिंचन करते हैं।

तेभ्य ऊर्ध्वं यो जपितव्यो मन्त्रस्तस्य प्रथमभागमनूद्य व्याचष्टे—

**पिता मातरिश्वेत्याह, प्राणो वै पिता, प्राणो मातरिश्वा, प्राणो रेतो रेतस्त-द्सिञ्चति ॥** इति।

तस्मिन् मन्त्रे यजमानस्य नूतनं जन्म संपाद्यते। अतोऽत्र मातरिश्वा वायुः पितृत्वेन वर्ण्यते। तमिमं पितेत्यादिकं मन्त्रं होता ब्रूयात्। प्राण एव लोके पिता, मृतात् पितृदेहा-ज्जन्मासंभवात्। वायुश्च प्राणः प्राणस्य वायुकार्यत्वात्। रेतश्च प्राणः, प्राणयुक्तस्यैव रेतसो जननहेतुत्वात्। अत एव आरण्यके समाम्नास्यते[2]—'यद्वा ऋते प्राणाद् रेतः सिच्येत पूयेन्न संभवेत्'[3] इति। तत्तेन प्रथमभागपाठेन यजमानपुनर्जन्मार्थं रेतः सिक्तं भवति ॥

होता 'पिता मातरिश्वा'='पिता मातरिश्वा है' आदि मन्त्र का पाठ करे। [क्योंकि यजमान का इस मन्त्र में नूतन जन्म होता है अतः 'मातरिश्वा' वायु ही पितृ रूप से वर्णित है]। प्राण ही पिता है [क्योंकि मृतपितृ देह से जन्म असम्भव है]। प्राण मात-रिश्वा है। प्राण वीर्य है [क्योंकि वीर्य ही जनन का हेतुभूत है]। अतः उस [भाग के पाठ] [मानो यजमान के पुनर्जन्म के लिए] वीर्य का सिंचन करता है।

द्वितीयभागमनूद्य व्याचष्टे—

**अच्छिद्रा पदाऽधा इ(दि)ति रेतो वा अच्छिद्रमतो ह्यच्छिद्रः संभ-वति ॥** इति।

स वायुरूपः पिता छिद्ररहितं पदं प्रापणीयं रेतोऽधा ग(द्ग)र्भाशये स्थापितवान्। अत्रोक्तमच्छिद्रं वस्तु रेत एव। अतो हि रेतसः पुमानच्छिद्र उत्पद्यते ॥

[उस वायु रूप पिता ने] छिद्ररहित वस्तु [रेत] को [गर्भाशय में] स्थापित किया। यह छिद्ररहित वस्तु वीर्य ही है क्योंकि [पुरुष] छिद्ररहित उत्पन्न होता है।

तृतीयभागमनूद्य व्याचष्टे—

**अच्छिद्रोक्था कवयः शंसन्निति ये वा अनूचानास्ते कवयस्त इदमच्छिद्रं रेतः प्रजनयन्नित्येव तदाह ॥** इति।

कवयः पुरुषा अच्छिद्रोक्था शंसंश्छिद्ररहितमुक्थं शस्त्रं शंसन्ति। अत्र कविशब्दे-नानूचानाः षडङ्गसहितवेदाध्यायिन उच्यन्ते। ते चेदमच्छिद्रं रेतः प्रजनयन्नुत्पादयन्ती-त्यनेनैव प्रकारेण तदच्छिद्रोक्थेति वाक्यमाह ब्रूते ॥

---

१. द्र० इतः पूर्वम् ३०९ पृष्ठे।

२. एष मन्त्रोऽन्यशाखीय इति आश्व० श्रौ० ५.९.१। ३. ऐ० आ० ३.२.२.५।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'कवि छिद्ररहित उक्थ [ = शस्त्र] का शंसन करते हैं'—जो [षडङ्ग वेद के] वेत्ता हैं वे ही कवि हैं। वे ही इस छिद्ररहित वीर्य को उत्पन्न करते हैं। इस वाक्य में यही कहा गया है।

चतुर्थभागमनूद्य व्याचष्टे—

**सोमो विश्वविन्नीथा निनेषद् बृहस्पतिरुक्थामदानि शंसिषदिति, ब्रह्म वै बृहस्पतिः, क्षत्त्रं सोम, स्तुतशस्त्राणि नीथानि चोक्थामदानि च दैवेन चैवैतद्ब्रह्मणा प्रसूतो दैवेन च क्षत्त्रेणोक्थानि शंसति ॥** इति।

विश्ववित् सर्वज्ञः सोमो नीथानि नेतव्यान्यनुष्ठेयानि स्तोत्रशस्त्राणि निनेषन्नेतुमिच्छां कृतवान् प्रयुक्तवानित्यर्थः। तथा बृहस्पतिरुक्थामदानि शस्त्ररूपाणि संतोषकारणानि शंसिषच्छंसितुमिच्छति शस्तवानित्यर्थः। अस्मिन् भागे बृहस्पतिसोमशब्दाभ्यां ब्राह्मण-क्षत्त्रियजातिद्वयं दैवं विवक्षितम्। नीथशब्देनोक्थामदशब्देन च स्तोत्रशस्त्राणि विवक्षितानि। अत एवैतद्भागपाठे सति देवसंबन्धिना ब्राह्मणेन क्षत्त्रियेण च प्रेरितः शस्त्राणि शंसति ॥

'सर्वज्ञ सोम ने नेतव्य [अनुष्ठेय स्तोत्र व शस्त्रों को] लाने की इच्छा की अर्थात् उनका प्रयोग किया; और बृहस्पति ने संतोषकारी शस्त्रों के शंसन की इच्छा की अर्थात् पाठ किया।' [इस मन्त्र भाग में उक्त] बृहस्पति ब्राह्मण हैं और सोम क्षत्रिय हैं। 'नीथ' शब्द से उक्थ और मदशब्द से स्तोत्र व शस्त्र विवक्षित है। वस्तुतः इस प्रकार इस भाग के पाठ से देवसम्बन्धी ब्राह्मण से और देवसम्बन्धी क्षत्रिय से प्रेरित होकर होता शस्त्रों का पाठ करता है।

सोमबृहस्पत्योः सर्वकर्मप्रेरकत्वप्रसिद्धि दर्शयति—

**एतौ ह वा अस्य सर्वस्य प्रसवस्येशाते यदिदं किंच ॥** इति।

यज्ञेऽनुष्ठेयं यत्किंचिदस्त्यस्य सर्वस्य प्रसवो यत्प्रेरणं तस्य सोमबृहस्पती एव स्वामिनौ ॥

ये दोनों [सोम और बृहस्पति] इस [यज्ञ में अनुष्ठेय] जो कुछ भी है उन सबको प्रेरित करने वाले के स्वामी हैं।

व्यतिरेकमुखेनैतदेव द्रढयति—

**तद्यदेताभ्यामप्रसूतः करोत्यकृतं तदकृतमकरिति वै निन्दन्ति ॥** इति।

तत्तथा द्वयोः प्रेरणस्वामित्वे सति यदङ्गमेताभ्यामप्रेरितः करोति तदङ्गमकृतमेव भवति। लोकेऽपि स्वाम्यनुज्ञामन्तरेण यत्क्रियते तत्त्राकृतमकरकर्तव्यं कृतवानिति जना निन्दन्ति ॥

और इन दोनों की प्रेरणा के बिना जो कुछ होता करता है वह न करने के समान

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ही होता है। [लोक में भी स्वामी की अनुज्ञा के बिना जो कुछ किया जाता है] उसकी लोग निन्दा करते हैं कि अकरणीय कर्म इसने किया है।

वेदनं प्रशंसति—

**कृतमस्य कृतं भवति नास्याकृतं कृतं भवति य एवं वेद ॥** इति ।

अस्य वेदितुः कृतं कर्तव्यमेव कृतं भवति, न त्वकृतमकर्तव्यं कृतं भवति ॥

जो इस प्रकार जानता है उसका किया किया हुआ होता है। इसका अकृत कृत नहीं होता है।

पञ्चमभागमनूद्य व्याचष्टे—

**वागायुर्विश्वायुर्विश्वमायुरित्याह प्राणो वा आयुः प्राणो रेतो वाग्योनिर्योनिं तदुपसंधाय रेतः सिञ्चति ॥** इति ।

येयं वागिन्द्रियरूपा यदप्यायुर्जीवनं तदुभयमस्त्विति शेषः। न चात्राऽऽयुरल्पं विवक्षितं किंतु विश्वायुर्विश्वं समस्तं शतसंवत्सरपरिमितमायुर्विवक्षितम्। तस्माद्विश्वमायुर्यजमानः प्राप्नोत्वित्यध्याहारः। तमिमं भागं पठेत्। अत्र आयुःशब्देन प्राण एव विवक्ष्यते। 'यावद्ध्यस्मिञ्शरीरे प्राणो वसति तावदायुः' इति श्रुतेः[१]। रेतसः प्राणत्वं पूर्वमेवोदाहृतम्[२]। वाक्शब्देन योनिरुपलक्ष्यते।[३] तथा सति तद्भागपाठेन योनिमुपसंधाय[४] गर्भस्थानमभिलक्ष्य रेतः सिञ्चति ॥

'वाक् [इन्द्रिय] और आयु, समस्त आयु व समस्त [सौ वर्ष की] आयु' [यजमान प्राप्त करता है]—इस भाग का पाठ करता है। यहाँ प्राण आयु है और प्राण वीर्य है एवं वाणी योनि [स्वरूप] है। इस प्रकार उस भाग के पाठ से मानों वह गर्भ स्थान को लक्ष्य करके वीर्य का सिंचन करता है।

षष्ठं भागमनूद्य व्याचष्टे—

**क इदं शंसिष्यति स इदं शंसिष्यतीत्याह प्रजापतिर्वै कः[५] प्रजापतिः प्रजनयिष्यतीत्येव तदाह ॥ ३८ ॥** इति ।

कः प्रजापतिरिदं शस्त्रं शंसिष्यति शंसितुमिच्छति। अतः स एवेदं शंसिष्यति, तमिममन्तिमभागं ब्रूयात्। अत्र कशब्देन प्रजापतिरुक्तत्वात् स एव यजमानमुत्पादयिष्यतीत्यनेनैव प्रकारेण तन्मन्त्रवाक्यं ब्रूते ॥

---

१. कौषी० उ० ३.२। २. द्र० इतः पूर्वम्, ३६२ पृष्ठे।

३. 'प्राणो रेतः प्राणनहेतुत्वात्। योनिरेव वाक् सर्वार्थानां विकल्पमूलत्वात्'—इति भट्टभास्करः।

४. 'उपसन्धानमुपसंश्लेषः' इति भट्टभास्करः। 'शस्त्रस्य योनिभूतां वाचमुपसन्धाय मन्त्रेण रेतोभूतं यजमानं सिञ्चति'—इति गोविन्दस्वामी।

५. 'को ह वै नाम प्रजापतिः'—इति तै० ब्रा० २.२.१०।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीय-पञ्चिकायाः पञ्चमाध्याये (दशमाध्याये) षष्ठः खण्डः ॥ ६ ॥ (३८) [६८]

'प्रजापति इस [शस्त्र] के पाठ करने की इच्छा करता है अतः वह ही इसके शंसन की इच्छा करता है' इस भाग का पाठ करता है। यहाँ 'कः' का अर्थ प्रजापति है। अतः वही यजमान को उत्पन्न करेगा—यही इस मन्त्र में कहा गया है।

॥ इस प्रकार दसवें अध्याय के षष्ठ खण्ड की हिन्दी पूर्ण हुई ॥ ६ ॥

## अथ सप्तमः खण्डः

आहावात् पूर्वकालीनं जपमुक्त्वोत्तरकालीनं तूष्णींशंसं विधत्ते—

**आहूय तूष्णींशंसं शंसति, रेतस्तत्सिक्तं विकरोति सिक्तिर्वा अग्रेऽथ विकृतिः ॥ इति ।**

शोंसावोमिति मन्त्रेणाध्वर्युमुपहूय पश्चात्तूष्णींशंसं पठेत्। तथा सति होतृजपेन सिक्तं रेतोऽनेन विकरोति पिण्डाद्याकारविकारं रेतसि जनयति। सेकः पूर्वभावी विकारः पश्चाद्भावीति युक्तोऽयं क्रमः ॥

ii. ३९ [x. ७] [शोंसावोम् इस मन्त्र से अध्वर्यु को] बुलाकर होता तूष्णींशंस का पाठ करता है। इस प्रकार [होतृ जप से] सिक्त वीर्य में इस [तूष्णींशंस] से पिण्ड रूप आकार को उत्पन्न करता है। वस्तुतः सेक प्रथमतः होता है और विकार बाद में [अतः यह क्रम युक्त ही है]।

शंसनकाले ध्वनिराहित्यं विधत्ते—

**उपांशु तूष्णींशंसं शंसत्युपांश्विव वै रेतसः सिक्तिः ॥ इति ।**

परैर्ध्वनेरश्रवणादपठितसदृशं भवतीत्यस्य तूष्णींशंस इति नामधेयम्। तस्मात् तदनुसारेणोपांशूच्चारयेत्। रेतःसेकोऽप्युपांशुसदृशः, रहसि क्रियमाणत्वात् ॥

होता तूष्णींशंस का उपांशु पाठ करता है। वस्तुतः वीर्य का सेक भी अश्रव्य सदृश होता है।

उपांशुत्वेन होतृजपसाम्यप्रसक्तौ वैषम्यं विधत्ते—

**तिर इव तूष्णींशंसं शंसति, तिर इव वै रेतांसि विक्रियन्ते ॥ इति ।**

यथा कुडयगृहादिव्यवहितमन्यैरधीयमानं वाक्यमीषत् प्रतीयते, न तु स्पष्टम्, तद्वत् तूष्णींशंसोऽप्यस्पष्टो यथा भवति तथा शंसेत्। तदिदं तिर इवेत्युच्यते। होतृजपादीषदुच्चैरित्यर्थः ॥

वह तूष्णींशंस का पाठ छिपे हुए के समान [अस्पष्ट सा] करता है। वस्तुतः वीर्य में भी गोपनीय रूप से विकार होता है।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तूष्णींशंसस्येयत्तां विधत्ते—

**षट्पदं तूष्णींशंसं शंसति, षड्विधो वै पुरुषः षळङ्ग आत्मानमेव तत्षड्विधं षळङ्गं विकरोति ॥** इति ।

षट्पदं षड्भागम् । भूरग्निर्ज्योतिरित्येको भागो ज्योतिरग्निरिति द्वितीयो भागः । एवमुत्तरत्रापि द्रष्टव्यम् । तथाविधशंसने पुरुषसाम्यं भवति । पुरुषस्य षड्विधत्वमेव षळङ्ग इत्यनेन स्पष्टीक्रियते । पुरुषावयवषट्कं शाखान्तरे दर्शितम्—'षोढा विहितो वै पुरुष आत्मा च शिरश्चत्वार्यङ्गानि'[1] इति । द्वौ हस्तौ द्वौ पादावित्यङ्गचतुष्टयम् । आत्मशब्दो मध्यदेहवाची । भागत्रयोपेते तूष्णींशंसे तत्तद्भागमध्येष्ववसाने षड्भागत्वं भवति । आश्वलायन आह—'भूरग्निर्ज्योतिर्ज्योतिरग्नौ इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रौ सूर्यो ज्योतिर्ज्योतिः स्वः सूर्योमिति त्रिपदस्तूष्णींशंसो यद्यु वै षट्पदः पूर्वैर्ज्योतिः-शब्दैरग्नेऽवस्येत्'[2] इति । अतः षट्पदेन तूष्णींशंसेन यजमानस्य शरीरमेव षडङ्गोपेतं कृत्वा विकरोति ॥

वह तूष्णींशंस का पाठ छः पदों के [अवसान पर] करता है पुरुष भी षड्विध अङ्गों वाला होता है । वस्तुतः इस प्रकार वह अपने को ही छः अङ्गों वाला बनाता है । अतः उस [तूष्णींशंस के छः पदों के अवसान पर पाठ] से यजमान के शरीर को छः अङ्गों से युक्त करके बढ़ाता है ।

एतदनन्तरं निविदो विधत्ते—

**तूष्णींशंसं शस्त्वा पुरोरुचं शंसति, रेतस्तद्विकृतं प्रजनयति विकृतिर्वा अग्रेऽथ जातिः ॥** इति ।

'प्र वो देवाय' इत्यादिसूक्तात् पुरतो दीप्यते रोचत इति पुरोरुक्शब्देन निविदुच्यते । तां तूष्णींशंसादूर्ध्वं पठेत् । तेनोर्ध्वपाठेन षडङ्गतया विकृतं रेतः शरीररूपेणोत्पादितं भवति । विकारः पूर्वभावी, जन्म पश्चाद्भावि । तस्मात् तदानन्तर्यं निविदो युक्तम् ॥

तूष्णींशंस का शंसन करके वह पुरोरुक् ['प्र वो देवाय' आदि सूक्त के सम्मुख दीप्तिमान होने वाले निविद्] का पाठ करता है । इस प्रकार वह [षड्ङ्ग] विकार वाले वीर्य को ही [शरीर रूप में] उत्पन्न करता है । वस्तुतः विकार पहले होता है और जन्म बाद में [अतः निविद् का आनन्तर्य युक्तियुक्त है]।

होतृजपगतं यदुपांशुत्वं तूष्णींशंसगतं च यदीषदुच्चध्वनित्वं तस्मादुभयस्माद् वैलक्षण्यं निविदो विधत्ते—

**उच्चैः पुरोरुचं शंसत्युच्चैरेवैनं तत्प्रजनयति ॥** इति ।

उत्पादनकाले प्रसववेदनया तन्मातोच्चैर्ध्वनिं करोति । तदिदमुच्चैः प्रजनयतीत्युच्यते ॥

---

१. तै० सं० ५. ६. ९. १ ।

२. आश्व० श्रौ० ५. ९. ११ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उच्च स्वर से पुरोरुक् का पाठ करता है। [वस्तुतः प्रसव की वेदना से जैसे माता जोर से आवाज करती है वैसे ही] इस प्रकार इसे वह उच्च स्वर से जन्म देता है।

निविदां न्यूनाधिकभागशङ्काव्युदासाय संख्यां विधत्ते—

**द्वादशपदां पुरोरुचं शंसति, द्वादश वै मासाः संवत्सरः, संवत्सरः प्रजापतिः, सोऽस्य सर्वस्य प्रजनयिता, स योऽस्य सर्वस्य प्रजनयिता, स एवैनं तत्प्रजया पशुभिः प्रजनयति प्रजात्यै ॥** इति।

निविदो द्वादश भागाः पूर्वमेव तद्व्याख्याने विवेचिताः ।[1] अतो माससंख्यासाम्यात् माससंवत्सरद्वारा सर्वस्य जगत उत्पादकत्वेन प्रसिद्धः प्रजापतिरेवेयं पुरोरुग्भवति। तादृश्याः पाठे सति प्रसिद्धः सर्वस्योत्पादको यः प्रजापतिरस्ति स एवैनं यजमानं प्रजापशुसहितं प्रजनयति। तस्मादेतच्छंसनं प्रजात्यै संपद्यते ॥

बारह पदों वाले पुरोरुक् का शंसन करता है। वस्तुतः बारह ही मासों का एक संवत्सर होता है। संवत्सर प्रजापति है। वह समस्त [जगत्] का उत्पादक है। वह जो [प्रजापति] इस सृष्टि का बनाने वाला है वही इस [यजमान] को उस [पाठ] से प्रजा और पशु सहित उत्पन्न करता है। [इसलिए यह शंसन] प्रजनन के लिए होता है।

वेदनं प्रशंसति—

**प्रजायते प्रजया पशुभिर्य एवं वेद ॥** इति।

जो इस प्रकार जानता है वह प्रजा और पशुओं से बढ़ता है।

देवताद्वारा पुरोरुचं प्रशंसति—

**जातवेदस्यां पुरोरुचं शंसति जातवेदोन्यङ्गाम् ॥** इति।

जातवेदा देवता यस्याः पुरोरुचः सा जातवेदस्या। जातवेदःशब्दरूपं न्यङ्गं नितरामङ्गं चिह्नं यस्याः पुरोरुचः सा जातवेदोन्यङ्गा। तस्याः पुरोरुचोऽन्तिमे भागे 'सो अध्वरा करति जातवेदाः'[2] इति जातवेदःशब्दः पठ्यते ॥

वह जातवेद-देवताक पुरोरुक् का शंसन करता है। अन्तिम भाग में जातवेद-शब्दरूप चिह्न है।

उक्तमर्थमाक्षिपति—

**तदाहुर्यत् तृतीयसवनमेव जातवेदस आयतनम्, अथ कस्मात् प्रातःसवने जातवेदस्यां पुरोरुचं शंसतीति ॥** इति।

तृतीयसवनस्य जातवेदसं प्रत्यायतनत्वमाग्निमारुतशस्त्रे देवत्वादवगन्तव्यम्। तथा च संप्रदायविद[3] आहुः—"जातवेदास्तु देवोऽयं वर्तत आग्निमारुते" इति। यस्मादेवं तस्मात् प्रातःसवने जातवेदस्यायाः शंसने कारणं नास्तीत्याक्षेपं तद्वादिन आहुः ॥

---

१. द्र० इतः पूर्वम् ३४५–४९ पृष्ठे। २. द्र० इतः पूर्वम्, ३४८ पृष्ठे।

३. षड्गुरुशिष्यस्य श्लोकोऽयम्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इस सम्बन्ध में याज्ञिक प्रश्न करते हैं कि जब जातवेद का स्थान तृतीयसवन है तो क्यों प्रातःसवन में जातवेद के प्रति पुरोरुक् का पाठ करता है ।

तस्य परिहारं दर्शयति—

**प्राणो वै जातवेदाः, स हि जातानां वेद, यावतां वै स जातानां वेद ते भवन्ति येषामु न वेद किमु ते स्युर्यो वा आज्य आत्मसंस्कृतिं वेद तत्सुविदितम् ॥ ३९ ॥** इति ।

अत्र जातवेदःशब्देन प्राण एवाभिधीयते न त्वग्निः । अत एवान्तिमभागव्याख्याने 'वायुर्वै जातवेदा'[1] इत्याम्नातम् । यस्मात् स प्राणो जातानामुत्पन्नानां शरीराणां स्वरूपं वेद जानाति लभत इत्यर्थः । तस्मात् प्राणस्य जातवेदा इति नामधेयम् । एवं सति प्राणो यावतामुत्पन्नानां शरीराणां स्वरूपं वेद लभते ते देहा भवन्ति सत्तां भजन्ते । येषां तु देहानां स्वरूपं प्राणो न वेद न लभते ते देहाः किमु स्युः किमु विद्यमानतां भजेयुर्न भजेयुरित्यर्थः । एवं सति जातवेदोनामकस्य प्राणस्य प्रतिपादिकायाः पुरोरुचोऽन्तःपाठे यजमानो लब्धप्राणः सन् विद्यमानो भवति । अन्यथाऽयमसत् कल्पः स्यात् । एवमुक्तप्रकारेण यो यजमान आज्यशस्त्रे पुनर्जन्मस्वरूपां संस्कृतिं वेद तत् तस्य यजमानस्य सुविदितं सम्यग्ज्ञानमुत्पन्नम् । अनेन होतृजपमित्यारभ्य प्रोक्ते प्रघट्टकेऽवस्थितस्यार्थवादस्य सर्वस्याप्युपसंहारो जातः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायाः पञ्चमाध्याये (दशमाध्याये) सप्तमः खण्डः ॥ ७ ॥ (३९) [६९]

[उत्तर] जातवेद प्राण हैं; क्योंकि वह उत्पन्न हुए [शरीरों के स्वरूप] को जानता है । इस प्रकार वह जितने उत्पन्न हुए शरीरों को जानता है वे ही सत्ता को प्राप्त होते हैं । जिन शरीरों के स्वरूप को वह नहीं जानता, वह कैसे [विद्यमान] हो सकते हैं ? [अतः अन्तिम जातवेद देवताक पुरोरुक् के पाठ से यजमान विद्यमान होता है] इस प्रकार जो यजमान आज्यशस्त्र में पुनर्जन्मस्वरूप आत्मसंस्कृति को जानता है उसी [यजमान] का सम्यक् ज्ञान है ।

॥ इस प्रकार दसवें अध्याय में सातवें खण्ड की हिन्दी पूर्ण हुई ॥ ७ ॥

## अथाष्टमः खण्डः

अथ सूक्तगतां प्रथमामृचं विधत्ते—

**प्र वो देवायाग्नय इति शंसति, प्राणो वै प्र, प्राणं हीमानि सर्वाणि भूतान्यनु प्रयन्ति, प्राणमेव तत्संभावयति प्राणं संस्कुरुते ॥** इति ।

अस्याः प्रथमाया ऋच आदौ प्रेतिशब्दः श्रूयते स प्राणस्वरूपः । नाम्न आद्यक्षरसाम्यात् । हि यस्मात्कारणात् सर्वाणीमानि भूतानि जीवजातानि प्राणमनु प्रयन्ति ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्राणः प्रथमतो गच्छति, तमनु पश्चाद् देहाः प्रयन्ति, प्राणप्रेरणादूर्ध्वं देहानां चलनात्। तत्तथा सति प्रशब्दप्रयुक्ताया ऋचः शंसनेन प्राणं संभावयति संभावितं पूजितं करोति। अनया पूजया प्राणः संस्कृतः सन् स्वव्यापारसमर्थो भवति। तस्मात् 'प्र वो देवाय'[1] इत्येषा शंसनीया ॥

ii. ४० [x.८] 'प्र वो देवाग्नये' 'अग्निदेव के लिए स्तुति करो'—इस ऋचा का पाठ करता है। इसमें 'प्र' प्राणस्वरूप हैं; क्योंकि ये समस्त प्राणिजात प्राण को अनुसरण करके चलते हैं [पहले प्राण निकलता है बाद में देह] इस प्रकार प्र-शब्द युक्त ऋचा के शंसन से वह यजमान में प्राण को ही पूजित करता है। [इस पूजा से] प्राण को संस्कृत करता है अर्थात् अपने कार्य में समर्थ बनाता है।

द्वितीयामृचं विधत्ते—

**'दीदिवांसमपूर्व्यम्' इति शंसति मनो वै दीदाय, मनसो हि न किंचन पूर्वमस्ति, मन एव तत्संभावयति मनः संस्कुरुते ॥ इति।**

यद्यप्यध्ययनक्रमेणेयमृक्पञ्चमी[2] तथाऽपि द्वितीयात्वेन प्रयोक्तव्या। ब्राह्मणक्रमस्यानुष्ठानार्थत्वात्। दीदिवांसं दीप्तियुक्तमपूर्व्यमस्मादन्येन पूर्वेण रहितमित्येताभ्यां मन्त्रपदाभ्यां मनोऽभिधीयते। तच्च मनः सर्वार्थप्रकाशकत्वाद् दीदाय दीप्तियुक्तं भवति। तथा मनसोऽपि न किंचिदपीन्द्रियं व्यापारवन्नास्ति, मनसा संकल्पितेष्वर्थेषु पश्चाद् वागादीन्द्रियाणां व्याप्रियमाणत्वात्। अत एवारण्यकाण्डे वक्ष्यति—'मनसा वाऽग्रे संकल्पयत्यथ वाचा व्याहरति'[3] इति। अतो दीदिवांसमपूर्व्यमिति पदद्वयार्थस्य मनसि विद्यमानत्वात् तच्छंसनेन मनसः संभावनासंस्कारौ संपद्येते। अत्राध्ययनक्रमादन्यमनुष्ठानक्रममभिप्रेत्य आश्वलायन आह—'अनुब्राह्मणं वाऽऽनुपूर्व्यम्'[4] इति ॥

'दीप्तिमान्, जिससे पूर्व कोई नहीं है'—इस ऋचा का पाठ करता है। इसमें [सभी का प्रकाशक होने से] मन ही दीदाय [= दीप्तियुक्त] है; क्योंकि मन से पहले कुछ नहीं होता [प्रथमतः मन में संकल्प होता है बाद में वाणी से प्रकट होता है] इस प्रकार उस शंसन में वह मन को ही उत्पन्न करता है और मन का संस्कार करता है।

अध्ययनक्रमेण[5] चतुर्थीमनुष्ठानाय तृतीयात्वेन विधत्ते—

**'स नः शर्माणि वीतये' इति शंसति, वाग् वै शर्म, तस्माद् वाचाऽनुवदन्तमाह शर्मवदास्मा आयांसीति, वाचमेव तत्संभावयति वाचं संस्कुरुते ॥ इति।**

---

१. द्र० इतः पूर्वम्, पृ० ३४८। १. ऋ० ३. १३. १। २. ऋ० ३. १३. ५।
३. द्र० तै० सं० २. २. ११. ५; ५. १. ३. ३; ६. १. ७. ३।
४. आश्व० श्रौ० ५.९.१३। ५ ऋ० ३.१३.४।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सोऽग्निर्नोऽस्माकं वीतये कामाय शर्माणि सुखानि यच्छत्विति मन्त्रपादस्यार्थः। अत्र शर्मशब्देन वागेव विवक्षिता। यस्मादेवं तस्माल्लोके स्वगुरूक्तमर्थं स्ववाचा सम्यगनुवदन्तं पुरुषमितरः प्रामाणिक एवमाह। अस्मै गुरूक्तार्थस्य सम्यगनुवादिने शिष्याय शर्मवत् सुखयुक्तं जीवनं संपन्नं यस्मात् तस्माद्वेशिष्याऽऽयांसि समन्ततो नियतोऽस्मि। आङ्पूर्वस्य 'यम उपरमे' इत्यस्य धातोश्छान्दसं रूपम्। आस्मा इत्याकारश्च च्छान्दसः। इत्येवं वाङ्नियमितस्य सुखस्य लौकिकेनोच्यमानत्वान् मन्त्रोक्तशर्मशब्देन वाग्विवक्षोपपन्ना॥ तन्मन्त्रपाठेन वाचः संभावनासंस्कारौ भवतः॥

**'वह अग्नि हमारी कामना के लिए सुख प्रदान करे'—इस ऋचा का पाठ करता है। वाणी ही शर्म है। इसीलिए वाणी से [गुरु आदि] दूसरों की बात को दुहराते हुए [शिष्य उसे प्रमाणरूप में] कहता है। इसके लिए सुखयुक्त जीवन मैंने प्रदान किया है। इस प्रकार उस शंसन से वह वाणी को ही उत्पन्न करता है और वाणी का संस्कार करता है।**

अध्ययनक्रमेण[1] षष्ठीमृचमनुष्ठानाय चतुर्थीत्वेन विधत्ते—

**'उत नो ब्रह्मन्नविष' इति शंसति, श्रोत्रं वै ब्रह्म, श्रोत्रेण हि ब्रह्म शृणोति, श्रोत्रे ब्रह्म प्रतिष्ठितं, श्रोत्रमेव तत्संभावयति, श्रोत्रं संस्कुरुते॥ इति।**

उतापि च हे ब्रह्मन् देवेषु ब्राह्मणरूपाग्ने नोऽस्मानविषो रक्षसि। अस्मिन् मन्त्रे ब्रह्मशब्देन श्रोत्रमुपलक्ष्य श्रोत्रेण हि ब्रह्म वेदं पुरुषः शृणोति। श्रोत्रेऽवगतं ब्रह्म वेदवाक्यं प्रतिष्ठितं कदाचिदप्यविस्मृतं भवति। तस्मात् तन्मन्त्रपाठेन श्रोत्रस्य संभावनासंस्कारौ भवतः॥

**'और भी, हे देवों में ब्राह्मणरूप अग्नि! हमारी रक्षा करो'—इस ऋचा का शंसन करता है। श्रोत्र ही ब्रह्म है; क्योंकि श्रोत्र से ही वह वेद [ब्रह्म] को सुनता है। श्रोत्र में ब्रह्म प्रतिष्ठित है। इस प्रकार उस [मन्त्र पाठ] से वह श्रोत्र को ही उत्पन्न करता है, और श्रोत्र का संस्कार करता है।**

अध्ययनक्रमेण[2] तृतीयामृचमनुष्ठानाय पञ्चमीत्वेन विधत्ते—

**'स यन्ता विप्र एषाम्' इति शंसत्यपानो वै यन्ताऽपानेन ह्ययं यतः प्राणो न पराङ्भवत्यपानमेव तत्संभावयत्यपानं संस्कुरुते॥ इति।**

सोऽग्निर्विप्रो देवेषु ब्राह्मणः सन्नेषां मनुष्यविप्राणां यन्ता नियमनकर्ता। अस्मिन् मन्त्रे यन्तृशब्देनापानवायुरुपलक्ष्यते। निःश्वासरूपेणापानेन यतो नियमितः प्राणवायुः पराङ्भवति परं बाह्यं दूरदेशमञ्चति गच्छतीति पराङ्। यद्ययं बहिर्मुख उच्छ्वासरूपः प्राणवायुरपानवायुना न नियम्येत तदा बहिरेव गच्छेन्न पुनर्निवर्तेत। ततः पुरुषो

१. ऋ० ३.१३.६। २. ऋ० ३.१३.३।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

म्रियेतातोऽपानस्य नियन्तृत्वं युक्तम् । एतन्मन्त्रपाठेनापानवायोः संभावनासंस्कारौ भवतः ॥

'वह अग्नि देवों में ब्राह्मण होकर इन मनुष्य विप्रों के नियमन करने वाले हैं'—इस ऋचा का पाठ करता है। अपान ही यन्ता अर्थात् नियन्ता है; क्योंकि [निश्वासरूप] यह अपान वायु के द्वारा नियमित यह [उच्छ्वास रूप] प्राणवायु पुनः नहीं लौटता। इस प्रकार उस [मन्त्र पाठ] से वह अपान को ही उत्पन्न करता है, और अपान का ही संस्कार करता है।

अध्ययनक्रमेण[1] द्वितीयामृचं षष्ठीत्वेनानुष्ठानाय विधत्ते—

**'ऋतावा यस्य रोदसी' इति शंसति, चक्षुर्वा ऋतं, तस्माद् यतरो विवदमानयोराहाहमनुष्ठ्चा चक्षुषाऽदर्शमिति तस्य श्रद्दधति, चक्षुरेव तत्संभावयति चक्षुः संस्कुरुते ॥ इति ।**

रोदसी द्यावापृथिव्यौ यस्याग्नेर्ऋतावा सत्यवत्यौ । अस्मिन् मन्त्रगतऋतशब्देन चक्षुरुपलक्ष्यते । यस्मादेवं तस्माल्लोके विवदमानयोः पुरुषयोर्मध्ये यतरः पुमानेवमाह । कथमिति, तदुच्यते—अहमनुष्ठ्याऽनुष्ठित्या प्रयत्नेन चक्षुषाऽदर्शं दृष्टवानस्मीति । तस्य श्रद्दधति तदीयवचनं सर्वे विश्वसन्ति । दूरस्थे चूतवृक्षे फलमस्ति न वेति निश्चेतुं राजा द्वौ पुरुषौ प्रेषयति । तयोरलसः कश्चिदापाततो दृष्ट्वा नास्तीति ब्रूते । अपरस्तु तत्र प्रयत्नेन दृष्ट्वा यत्र क्वापि पर्णनाऽऽच्छन्नं फलं सम्यग् दृष्टवानस्मीति ब्रूते । तस्य वचने सर्वेषां विश्वासो जायते । तस्मात् सम्यग्दर्शिनश्चक्षुष ऋतत्वं युक्तम् । एतन्मन्त्रपाठेन चक्षुषः संभावनासंस्कारौ भवतः ॥

'जिस अग्नि के वश में द्यावा-पृथिवी है'—इस ऋचा का शंसन करता है। चक्षु ही ऋत है। इसीलिए लोक में दो विवाद कर रहे पुरुषों में से एक जब कहता है कि 'मैंने स्वयं प्रयत्न द्वारा अपनी आँखों से देखा है' तो लोग उसका विश्वास कर लेते हैं। इस प्रकार उस [मन्त्र पाठ] से वह चक्षु को ही उत्पन्न करता है; और चक्षु का ही संस्कार करता है।

अध्ययनक्रमेणानुष्ठानक्रमेण च[2] सप्तम्या शस्त्रसमाप्तिं विधत्ते—

**'नू नो रास्व सहस्रवत् तोकवत् पुष्टिमद् वसु' इत्युत्तमया परिदधात्यात्मा वै समस्तः सहस्रवांस्तोकवान् पुष्टिमानात्मानमेव तत्समस्तं संभावयत्यात्मानं समस्तं संस्कुरुते ॥ इति ।**

यद् वसु धनं सहस्रवत् सहस्रसंख्योपेतं तोकवदपत्योपेतं पुष्टिमत् समृद्धियुक्तमस्ति तादृशं धनं नोऽस्मभ्यं नु क्षिप्रमेव रास्व हेऽग्ने देहि । अनयाऽन्तिमयाऽऽज्यशस्त्रं समाप-

---

१. ऋ० ३.१३.२ । २. ऋ० ३.१३.७ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

येत् । अत्र समस्तः पूर्वोक्तः प्राणमनोवागादिभिः सर्वैरिन्द्रियैः संपूर्ण आत्मा वै पुरुष एव सहस्रसंख्योपेतधनयुक्तो बहुभिरपत्यैरुपेतः समृद्धियुक्तश्च विवक्षितः । अतस्तत्पाठेन तादृशस्य पुरुषस्यैव संभावनासंस्कारौ भवतः ॥

हे अग्नि ! जो धन सहस्रसंख्यक, पुत्रयुक्त और समृद्धियुक्त है उस धन को शीघ्र ही हमें प्रदान करो'—इस अन्तिम ऋचा से आज्यशस्त्र को समाप्त करता है । [पूर्वोक्त प्राण, मन, व वाणी आदि सभी इन्द्रियों से] सम्पूर्ण आत्मा ही है । वही सहस्रसंख्यक धन से युक्त बहुत पुत्रों से युक्त और समृद्धियुक्त है । इस प्रकार उस मन्त्र पाठ से वह सम्पूर्ण आत्मा को ही उत्पन्न करता है और सम्पूर्ण आत्मा का ही संस्कार करता है ।

शस्त्रस्यान्ते याज्यां विधत्ते—

**याज्यया यजति, प्रत्तिर्वै याज्या, पुण्यैव लक्ष्मीः पुण्यामेव तल्लक्ष्मीं संभावयति पुण्यां लक्ष्मीं संस्कुरुते** ॥ इति ।

'अग्न इन्द्रश्चेति' येयं याज्या पूर्वमुक्ता[1] तया यजति यागार्थं याज्यां पठेत् । याज्या च प्रत्तिर्वै प्रदानरूपैव । तथा च हविष आदानप्रदाने क्रमेण पुरोनुवाक्यायाज्याधीने श्रुत्यन्तरे श्रूयेते—'पुरोनुवाक्ययाऽऽदत्ते प्रयच्छति याज्यया'[2] इति । अतः प्रदानरूपत्वादियं पुण्यैव लक्ष्मीः[3] । शास्त्रीयत्वात् पुण्यत्वम् । फलस्य लब्धिहेतुत्वाल्लक्षणस्य दर्शनहेतुत्वाद्वा लक्ष्मीत्वम् । अतो याज्यापाठेन पुण्याया एव लक्ष्म्याः संभावनासंस्कारौ भवतः ॥

[पूर्वोक्त] याज्या से यजन करता है । प्रदान रूप ही याज्या है, पुण्य-लक्ष्मी है । इस प्रकार उस मन्त्र पाठ से वह पुण्य-लक्ष्मी को ही उत्पन्न करता है, और पुण्य लक्ष्मी का ही संस्कार करता है ।

उक्तक्रमेणानुष्ठातृवेदित्रोः फलं दर्शयति—

**स एवं विद्वांश्छन्दोमयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति य एवं वेद** ॥ इति ।

---

१. द्र० इतः पूर्वम् ३५८ पृ०; (ऋ० ३.२५.४) ।

२. (i) तै० सं० २.६.२ । 'ह्वयति वा.....सा याज्या स्यात्' इति च शत० ब्रा० १.७.२. १७–१९ । 'पुरोनुवाक्या देवतास्मरणार्था, याज्या च हविःप्रदानार्था—इति कात्या० श्रौ० १.८.९ ।

(ii) दातुरुपक्रमः प्रत्तिः ऊधो जृम्भणमिति यो गोषु प्रसिद्धः । यथा ब्राह्मणान्तरे—'प्रत्ता वै गौर्दुहे प्रत्तेडा यजमानाय दुहे' (तै० सं० १.७.१) इति यज्ञात्मिकाया धेनोः सर्वाभिमतफलप्रदानादिकर्मस्थानीया याज्या'—इति भट्टभास्करः ।

३. 'यज्ञानुष्ठानलब्धा श्रीः पुण्यमेव हि साधयेत्'—इति षड्गुरुशिष्यः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एवं विद्वानित्यत्रानुतिष्ठन्नित्यध्याहार्यम् । वेदनपूर्वकोऽनुष्ठाता गायत्र्यादिच्छन्दः-स्वरूपो वह्न्यादिदेवतास्वरूप ऋगादिवेदस्वरूपो मरणरहितो मोक्षस्वरूपः सन् संभूय सर्वं जगदेकीकृत्य सर्वा देवताः प्राप्नोति[1] । तदेतदनुष्ठातुः फलम् । य एवं वेदेत्यत्रापि विदुषः फलत्वेन च्छन्दोमयत्वादिकमावर्तनीयम् । अथवा य एवं वेदेत्युक्तस्यैव स एवं विद्वानित्य-नूद्यमानत्वान्नेदं वाक्यमावर्तनीयम् ॥

जो इस प्रकार जानता है वह इस प्रकार जानते हुए [गायत्री आदि] छन्दःस्वरूप [वह्नि आदि] देवता-स्वरूप, [ऋक् आदि] वेदस्वरूप और मरणरहित मोक्षस्वरूप होकर सभी जगत् को एकीकृत करके सभी देवों को प्राप्त कर लेता है ।

वेदनमात्रस्य कथमीदृशं फलमित्याशङ्क्य सुवेदनत्वाद्युक्तं फलमित्येतद् दर्शयति—

**यो वै तद् वेद यथा छन्दोमयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति तत्सुविदितम् ॥** इति ।

येन प्रकारेण च्छन्दःप्राप्त्यादिपूर्वकं सर्वदेवताप्राप्तिर्भवति तत् तादृशं प्रकारं यो वेद तद्वेदनं सुविदितं[2] शोभनज्ञानं तस्माद्युक्तं फलमित्यर्थः ॥

जिस प्रकार से छन्दःस्वरूप, देवतास्वरूप, वेदस्वरूप और मोक्षस्वरूप होकर सभी जगत् को एकीकृत करके सभी देवों को प्राप्त करता है, उस प्रकार जो जानता है, उसी का ज्ञान सुन्दर ज्ञान है ।

उक्तवक्ष्यमाणयोः शङ्कापरिहाराय विभागं दर्शयति—

**इत्यध्यात्ममथाधिदैवतम् ॥ ४० ॥** इति ।

आत्मानं शरीरमधिकृत्य वर्तत इत्यध्यात्मम् । अस्मिन् खण्डे शरीररूपत्वेन प्रशंसन-माज्यशस्त्रस्योक्तम् । उत्तरखण्डे त्वधिदैवतं देवताविषयमाज्यशस्त्रप्रशंसनमुच्यते ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीय-पञ्चिकायाः पञ्चमाध्याये (दशमाध्याये) अष्टमः खण्डः ॥ ८ ॥ (४०) [७०]

इस प्रकार [जो इस खण्ड में शरीर रूप में प्रशंसा करके आज्यशस्त्र को कहा गया वह] शरीर को अधिकृत करके पूर्ण हुआ, और अब [अग्रिम खण्ड में] अधिदैवत [देवता विषयक आज्यशस्त्र की प्रशंसा] कहते हैं ।

॥ इस प्रकार दसवें अध्याय के आठवें खण्ड की हिन्दी पूर्ण हुई ॥

---

१. 'अनुप्रवेशोऽप्ययः'—इति भट्टभास्करः । 'अप्ययोऽनुभवः'—इति षड्गुरुशिष्यः ।
२. तदिदं वेदितुरुक्तं फलं सुविदितं सुप्रसिद्धं ब्रह्मवादिनाम् । यद्वा, अयजमानस्यापि वेदितुः फलसंपत्तौ कारणमनेनोच्यते'—इति भट्टभास्करः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ नवमः खण्डः

पूर्वोक्तक्रमेणैव देवताविषयशस्त्रप्रशंसनं विवक्षित्वा प्रथमं भूरग्निरित्यस्य प्रशंसां दर्शयति—

**षट्पदं तूष्णींशंसं शंसति, षड्वा ऋतव, ऋतूनेव तत्कल्पयत्यृतून-प्येति ॥ इति ।**

भूरग्निरित्यादीनां भागानां षट्संख्यासाम्याद्दृतुत्वे सति तत्पाठेन ऋतून् स्वभोग-प्रदानसमर्थान् करोति । तत ऋतून् देवान् प्राप्नोति ॥

ii.४१ [x.९] वह तूष्णींशंस का पाठ छः पदों के [अवसान पर] करता है । ऋतुएँ भी छः होती हैं । उस मन्त्र पाठ से वह ऋतुओं को ही [भोगप्रदान में समर्थ] बनाता है और उससे ऋतु देवों को प्राप्त करता है ।

निविदः प्रशंसां दर्शयति—

**द्वादशपदां पुरोरुचं शंसति, द्वादश वै मासा मासानेव तत्कल्पयति मासा-नप्येति ॥ इति ।**

निविदां पाठेन मधुमाधवादीन् मासान्[1] स्वात्मभोगाय संपादयति प्राप्नोति च ॥

बारह पदों वाले पुरोरुक् का शंसन करता है । महीने भी बारह होते हैं इस प्रकार उस मन्त्र पाठ से वह महीनों को ही [अपने भाग के लिए] कल्पित करता है और मासों को प्राप्त करता है ।

सूक्तप्रथमामृचं प्रशंसति—

**'प्र वो देवायाग्नये'[2] इति शंसत्यन्तरिक्षं वै प्रान्तरिक्षं ह्रीमानि सर्वाणि भूतान्यनुप्रयन्त्यन्तरिक्षमेव तत्कल्पयत्यन्तरिक्षमप्येति ॥ इति ।**

सर्वे प्राणिनोऽन्तरिक्षमनुसृत्य तिष्ठन्ति तस्मिन्नवकाशे प्रकृष्टगमनादन्तरिक्षस्य प्रशब्द-वाच्यत्वम्[3] ॥

'अग्नि देव के लिए स्तुति करो'—इस ऋचा का पाठ करता है । इसमें 'प्र' अन्त-रिक्षस्वरूप है, क्योंकि ये समस्त प्राणिजात अन्तरिक्ष का ही अनुसरण करके स्थित हैं । इस प्रकार उस मन्त्र से वह अन्तरिक्ष को ही [प्रकृष्ट गमन के लिए] कल्पित करता है और अन्तरिक्ष को प्राप्त करता है ।

अनुष्ठानक्रमेण द्वितीयामृचं प्रशंसति—

**'दीदिवांसमपूर्व्यमिति'[4] शंसत्यसौ वै दीदाय योऽसौ तपत्येतस्माद्धि न किंचन पूर्वमस्त्येतमेव तत्कल्पयत्येतमप्येति ॥ इति ।**

---

१. 'मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेषश्चोर्जश्च सहश्च सहस्यश्च तपश्च तपस्यश्च'—इति तै० सं० १.४.१४ ।

२. ऋ० ३.१३.१ ।

३. 'अन्तरिक्षे पक्षिणां प्रयाणं, प्रयाणस्यायं प्रतीकः प्रेति'—इति गोविन्दस्वामी ।

४. ऋ० ३.१३.५ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

योऽसावादित्यस्तपति जगति संतापं करोत्यसौ वै दीदाय दीप्यते। तस्योदयात्पूर्वमन्धकारे किमपि प्राणिजातं स्वव्यापारकर्तृ नास्ति। तस्मादादित्यस्य दीदिवांसमपूर्व्यमितिपदद्वयाभिधेयत्वम् ॥

'दीप्तिमान और अपूर्व्य'—इस ऋचा का पाठ करता है। यह आदित्य ही दीप्तिमान है जो यह तप रहा है। इसीलिए इसके [उदय के] पूर्व [अन्धकार में] कुछ भी नहीं होता। इस प्रकार उस शंसन से वह उसकी ही कल्पना करता है और उसको ही प्राप्त करता है।

तृतीयामृचं दर्शयति—

**'स नः शर्माणि वीतये'[1] इति शंसत्यग्निर्वै शर्माण्यन्नाद्यानि यच्छत्यग्निमेव तत्कल्पयत्यग्निमप्येति ॥ इति।**

सुखकराण्यत्तुं योग्यान्यन्नानि पाकेन प्रयच्छतीत्यग्नेः शर्मशब्दवाच्यत्वम् ॥

'वह अग्नि हमारी कामना के लिए सुख प्रदान करें'—इस ऋचा का पाठ करता है। अग्नि ही शम है; क्योंकि यह खाने योग्य सुखकर अन्न को पकाकर देती है। इस प्रकार उस [मन्त्र पाठ] से वह अग्नि को ही कल्पित करता है और अग्नि को ही प्राप्त करता है।

चतुर्थीमृचं दर्शयति—

**'उत नो ब्रह्मन्नविष'[2] इति शंसति, चन्द्रमा वै ब्रह्म चन्द्रमसमेव तत्कल्पयति चन्द्रमसमप्येति ॥ इति।**

नक्षत्रादिप्रकाशेषु बृहत्त्वाच्चन्द्रमसो ब्रह्मत्वम्[3] ॥

'और भी, हे देवों में ब्राह्मणरूप अग्नि! हमारी रक्षा करो'—इस ऋचा का शंसन करता है। चन्द्रमा ही ब्रह्म है। इस प्रकार उस शंसन से चन्द्रमा को ही कल्पित करता है; और चन्द्रमा को ही प्राप्त करता है।

पञ्चमीमृचं दर्शयति—

**'स यन्ता विप्र एषाम्'[4] इति शंसति, वायुर्वै यन्ता, वायुना हीदं यतमन्तरिक्षं न समृच्छति, वायुमेव तत्कल्पयति वायुमप्येति ॥ इति।**

---

१. ऋ० ३.१३.४। २. ऋ० ३. १३. ६।

३. चन्द्रमा वै ब्रह्म ब्रह्मप्राप्ति हेतुतया 'आदित्याच्चन्द्रमसम्' इति श्रुतेः'—इति गोविन्दस्वामी। 'आह्लादहेतुत्वाद् अमृतात्मकत्वाच्च' इति भट्टभास्करः।

४. ऋ० ३. १३. ३।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इदं दृश्यमानं सूर्यचन्द्रनक्षत्रादिमण्डलं सर्वं वायुना यतं नियमितं सदन्तरिक्षं न समृच्छति सम्यङ् न प्राप्नोति[1]। वायुनियमाभावे संम्यक् प्राप्नुयाद् अन्तरिक्षस्य निरवधिकत्वेन तस्मिन् यत्र क्वापि गच्छेदित्यर्थः। तस्माद् वायुरेव नियन्ता ॥

'वह अग्नि देवों में ब्राह्मण होकर इन मनुष्य विप्रों के नियमन करने वाले हैं'—इस ऋचा का पाठ करता है। वायु ही नियन्ता है; क्योंकि यह [सूर्य नक्षत्र आदि मण्डल सभी कुछ] वायु से ही नियन्त्रित होकर अन्तरिक्ष को सम्यक् रूप से नहीं प्राप्त करता है। इस प्रकार उस पाठ से वह वायु को ही कल्पित करता है और वायु को ही प्राप्त करता है।

षष्ठीमृचं दर्शयति—

**'ऋतावा यस्य रोदसी'[2] इति शंसति, द्यावापृथिवी वै रोदसी, द्यावापृथिवी एव तत्कल्पयति द्यावापृथिवी अप्येति ॥ इति ।**

रोदःशब्दवाच्यत्वं द्यावापृथिव्योर्लोकेऽपि प्रसिद्धम् ॥

'जिस अग्नि के वश में द्यावा-पृथिवी हैं'—इस ऋचा का शंसन करता है। द्यु और पृथिवी रोदसी हैं। इस प्रकार उस शंसन से वह द्यावा-पृथिवी को ही कल्पित करता है और द्यावा-पृथिवी को ही प्राप्त करता है।

सप्तमीमृचं दर्शयति—

**'नू नो रास्व सहस्रवत्तोकवत् पुष्टिमद् वसु' इत्युत्तमया[3] परिदधाति संवत्सरो वै समस्तः सहस्रवांस्तोकवान् पुष्टिमान् संवत्सरमेव तत्समस्तं कल्पयति, संवत्सरं समस्तमप्येति ॥ इति ।**

चैत्रादिफाल्गुनान्तः समस्तः संवत्सरः सहस्रादिविशेषणयुक्तः। संवत्सरेण हि धनिकानां वृद्धिः सहस्रसंख्याका संपद्यते। तोकान्यपत्यानि गर्भधारणमारभ्य संवत्सरमध्य एवोत्पद्यन्ते। रोगैः कृशानां शरीराणामारोग्ये सति संवत्सरमध्ये पुष्टिर्भवति ॥

हे अग्नि, जो धन सहस्रसंख्यक, पुत्रयुक्त और समृद्धियुक्त है उस धन को शीघ्र ही हमें प्रदान करो'—इस अन्तिम ऋचा से आज्यशस्त्र को समाप्त करता है। [चैत्र से लेकर फाल्गुन तक] समस्त संवत्सर ही सहस्र संख्या से युक्त, पुत्रयुक्त और समृद्धियुक्त है। इस प्रकार उस पाठ से वह समस्त संवत्सर को ही कल्पित करता है और समस्त संवत्सर को प्राप्त करता है।

---

१. 'ऋच्छिः प्रलयार्थः'—इति षड्गुरु०। 'समृच्छति गच्छति'-इति गोवि०। 'लीयते विशीर्यते'—इति भट्ट०।

२. ऋ० ३. १३. २। ३. ऋ० ३. १३. ७.।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शस्त्रयाज्यां दर्शयति—

**याज्यया यजति, वृष्टिर्वै याज्या विद्युदेव विद्युद्धीदं वृष्टिमन्नाद्यं संप्रयच्छति, विद्युतमेव तत्कल्पयति विद्युतमप्येति ॥ इति ।**

याज्यया प्रक्षिप्तं हविर्वृष्टिपर्यवसितं भवति ॥

तथा च स्मर्यते[1]—

"अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥" इति ॥

वृष्टिश्च विद्युत्पुरःसरत्वाद् विद्युदेव । यस्मान्मेघेषूत्पन्ना विद्युद्वृष्टिं संपाद्य तद्द्वारेणान्नं प्रयच्छति तस्माद् वृष्टिर्विद्युदेव ॥

**याज्या द्वारा यजन करता है। वस्तुतः वृष्टि ही याज्या है, विद्युत् ही याज्या है क्योंकि विद्युत् ही वर्षा और अन्न को सम्यक् रूप से हमें प्रदान करती है। इस प्रकार उस मन्त्र पाठ से वह विद्युत् को ही कल्पित करता है; और विद्युत् को ही प्राप्त करता है।**

वेदनं प्रशंसति—

**स एवं विद्वानेतन्मयो देवतामयो भवति, भवति ॥ ४१ ॥ इति ।**

**॥ इत्यैतरेयब्राह्मणे द्वितीयपञ्चिकायां पञ्चमोऽध्यायः ॥ ५ ॥**

एतन्मयो वसन्तग्रीष्मादिविद्युदन्तवस्तुमयो भूत्वा तदभिमानिदेवतानां भोगं प्राप्नोति । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये द्वितीयपञ्चिकायां पञ्चमाध्याये (दशमाध्याये) नवमः खण्डः ॥९॥ (४१) [७१]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधर-माधवाचार्यादेशतो सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये ऐतरेयब्राह्मणभाष्यस्य कृतौ द्वितीयपञ्चिकायां पञ्चमोऽध्यायः ॥ ५ ॥

**॥ प्रथमदशकं समाप्तम् ॥**

**जो इस प्रकार जानता है वह [वसन्त से लेकर विद्युत् तक] इतनी वस्तु होकर [तदभिमानी] देवता के भोग को प्राप्त करता है।**

**॥ इस प्रकार ऐतरेय ब्राह्मण की द्वितीय पञ्चिका में पाँचवें अध्याय की हिन्दी पूर्ण हुई ॥ ५ ॥**

---

१. मनु० स्मृ० ३.७६ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[यज्ञेन वै दश ।[1] देवा वै यज्ञमष्टौ ।[2] ऋषयो वै षट् ।[3] देवा वै सोमस्याष्टौ ।[4] ब्रह्म वै नव ।[5] ॥ २ ॥

यज्ञेन वै, देवा वै, शिरो वा एतद्, देवा वै यदेवैकादश ॥ २ ॥ ][1]

॥ इत्यैतरेयब्राह्मणे द्वितीयपञ्चिका समाप्ता ॥ २ ॥

( पञ्चिकाङ्काः—२ । अध्यायाङ्काः—१० । खण्डाङ्काः—७१ ) ।

[द्वितीयपञ्चिका में 'यज्ञेन वै' इत्यादि दस खण्डों का प्रथम अध्याय है । 'देवा वै यज्ञम्' इत्यादि आठ खण्डों का द्वितीय अध्याय है । 'ऋषयो वै' इत्यादि छः खण्डों का तृतीय अध्याय है । 'देवा वै सोमस्य' इत्यादि आठ खण्डों का चतुर्थ अध्याय है । 'ब्रह्म वै' इत्यादि नव खण्डों का पाँचवाँ अध्याय है ।

इस प्रकार 'यज्ञेन वै' इत्यादि से आरम्भ करके खण्डों का प्रथम दशक है । 'देवा वै' इत्यादि से आरम्भ करके खण्डों का द्वितीय दशक है । 'शिरो वा एतद्' इत्यादि से आरम्भ करके खण्डों का तृतीय दशक है और देवा वै यदेव' से आरम्भ करके खण्डों का चतुर्थ एकादशक है अर्थात् द्वितीय पञ्चिका में कुल इक्तालिस खण्ड हैं ।]

॥ इस प्रकार ऐतरेय ब्राह्मण की द्वितीय पञ्चिका की हिन्दी पूर्ण हुई ॥ २ ॥

---

१. द्र० इतः पूर्वम्, १९० पृष्ठे १ टि० ।

---

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ तृतीयपञ्चिका

## तत्र
## प्रथमाध्यायस्य प्रथमः खण्डः

—:*:—

# अथ एकादशोऽध्यायः

## प्रथमः खण्डः

आहावं निविदः सूक्तमच्छावाकस्य चोदनम् ।
यजमानपुनर्जन्म ब्रुवते साधिदैवतम् ॥ १ ॥

इत्थमाज्यशस्त्रं निरूप्य प्रउगशस्त्रं निरूपयितुं प्रस्तौति—

**ग्रहोक्थं वा एतद् यत्प्रउगं, नव प्रातर्ग्रहा गृह्यन्ते नवभिर्बहिष्पवमाने स्तुवते, स्तुते स्तोमे दशमं गृह्णाति, हिंकार इतरासां दशमः, सो सा सम्मा ॥ इति ।**

प्रउगाख्यं यच्छस्त्रमस्ति तद् ग्रहोक्थं वै । ऐन्द्रवायवादिग्रहाणामुक्थं ग्रहोक्थं तदीयदेवताप्रशंसारूपमित्यर्थः । 'नव' इत्यादिना ग्रहसंबन्ध एव स्पष्टीक्रियते । प्रातःसवन ऐन्द्रवायवमैत्रावरुणादयो[1] धाराग्रहा नवसंख्याका[2] गृह्यन्ते । ग्रहीता

---

१. अन्तर्यामादय इति वक्तव्यम्; नान्यथा हि नवसङ्ख्या पूर्येत । अत एव कातीयभाष्ये तस्याः सन्ततं स्रवन्त्याः धारायाः येषामन्तर्यामादीनां ध्रुवपर्यन्तानां ग्रहणम् (९. ६. १)—इत्याद्युक्तम्, ततः 'अन्तर्यामादि-ध्रुवपर्यन्तान् धाराग्रहान्'—इत्यादि च (२५.) । आपस्तम्बोऽप्याह—धराया अन्तर्यामं गृह्णाति, सर्वाश्चातो ग्रहाना-ध्रुवात्'—इति (आप० श्रौ० १२. १३. ५) । यत्तूक्तम्—जैमिनीयन्यायमालायाम् 'ऐन्द्रवायवादिग्रहेषु'—इति (५. ४. १) । तत् खलु 'वाग् वा ऐन्द्रवायवश्चक्षुर्मैत्रा-वरुणः श्रोत्रमाश्विनः'—इति (तै० सं० ६. ४. ९) द्विदेवत्य ग्रहविध्यर्थानुवाद-वाक्यानुगतम्; तथा आश्विनग्रहस्य तृतीयत्वमपि द्विदेवत्यग्रहेष्वेव बोध्यम् ।

२. गृह्यते सोमरस एभिरिति ग्रहाः; वैकङ्कतादीनि पात्राणि; इहं तु तानि सोमरस-पूर्णान्येव विवक्षितानि । 'ग्रहवृदृनिश्चिगमश्च' इति (पा० सू० ३. ३. ५८) करणे अप् प्रत्ययः । ते च ग्रहा अग्निष्टोमे त्रयस्त्रिंशत् सङ्ख्याकाः । तान् परिगणयामः— उपांशुरेकः; अन्तर्यामः, ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, शुक्रः, मन्थी, आग्रयणः,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चाध्वर्युः[३]। तथा बहिष्पवमानाख्ये स्तोत्र उद्गातारो नवभिर्नवसंख्याभिर्ऋग्भिः स्तुवते। उपास्मै गायतेत्येकस्तृचः[४]। दविद्युतत्येति द्वितीयः, पवस्वेति तृतीयः[५]। एतेषु त्रिषु तृचेषु नवसंख्याका ऋचो विद्यन्ते। ता आवृत्तिरहिता गीयन्ते। एवं स्तोमे बहिष्पवमानस्तोत्र उद्गातृभिः स्तुते सति अध्वर्युर्दशमं ग्रहमाश्विनाख्यं गृह्णाति। यद्यप्याध्वर्यवयोर्मन्त्रब्राह्मणकाण्डयो[६]राश्विनग्रहो धाराग्रहेषु तृतीयत्वेनाऽऽम्नातः; तथाऽप्यसौ दशमत्वेन ग्रहीतव्यः। आश्विनो दशमो गृह्यते तं तृतीयं जुह्वत इति श्रुत्यन्तरवचनात्[७]। तथा च ग्रहेषु दशमः संपन्नः[८]।

---

उक्थ्यः, ध्रुवश्चेति नव धाराग्रहाः। तत्र चैन्द्रवायवादयस्त्रयो द्विदेवत्याः; अथ ऋतुग्रहाः द्वादश; ऐन्द्राग्नः; वैश्वदेवश्चेति चतुर्विंशतिः प्रातःसवनग्रहाः; त्रयो मरुत्वतीयाः; माहेन्द्रश्चेति चत्वारो माध्यन्दिनसवनग्रहाः, आदित्यः, सावित्रः, वैश्वदेवः, पात्नीवतः हारियोजनश्चेति पञ्चैव तृतीयसवनग्रहाः; अत्यग्निष्टोमे तु चत्वारोऽधिकाः— अंशुः, अदाभ्यः, दधिग्रहः, षोडशी चेति सङ्कलनया सप्तत्रिंशत्। एषु अन्तर्यामादयो नवैव धाराग्रहाः। उन्नेता आधवनीयकलशादुदञ्चने सोममादाय यजमानहस्तस्थिते होतृचमसे निग्राम्यास्वासिञ्चति। ततः यजमानः तानिग्राम्याः पवित्रे द्रोणकलशस्योपरि उद्गातृभिर्विस्तार्य धृते आसिञ्चति सन्ततम्। ततः सन्ततं स्रवन्त्या धारायाः सकाशात् अन्तर्यामादीन् ध्रुवग्रहान्तान् नव ग्रहान् गृह्णाति—इत्यत एवैते धाराग्रहाः उच्यन्ते। कात्या० श्रौ० ९. ५. १७; ६. १। आप० श्रौ० १२. १२. १२—१३. ५ द्रष्टव्यानि। ये तु न धाराग्रहाः ते 'द्रोणकलशात् परिप्लवया गृह्यन्ते, वचनादन्यतः' —इति आप० श्रौ० १२. १८. ११।

३. 'ग्रहमध्वर्युरादय क्षिप्रं होतारमभिद्रुत्य मयिवसुरिति ग्रहं होत्रे प्रयच्छति'—इति आप० श्रौ० १२. २१. ५।

४. 'ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि'—इति पा० सू० ६. १. ३४ वा० १।

५. उ० आर्चिक १. १. १--३।

६. तै० सं० १. ४. ३—३६; ६. ४. ५। वा० सं० ७, ८ अध्याय। शत० ब्रा० ४. १. १. १—१८।

७. एष एव पाठो मीमांसाभाष्येऽपि दृश्यते (जै० सू० ५. ४. १) स्याद्वैतत्तद्भाष्यकारस्यैव भाषणम्? श्रुतिपाठस्त्वेवम्—'बहिष्पवमाने स्तुत आश्विनो गृह्यते'—इति तै० सं० ६. ४, ९। व्याख्यातं चैतद् वचनं मन्त्रकाण्डे (तै० सं० १. ४. ६, ७)। तत्रैव जैमिनीयन्यायमालीयाधिकरणमप्युदधृतं सायणेन (५. ४. १ अधि०)।

८. उपांशुप्रभृतिषु प्रातःसवनग्रहेष्विति ज्ञेयम्, न तु धाराग्रहेषु, उपांशोर्धाराग्रहत्वाभावाद् दशमत्वानुपपत्तेरिति।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तथैवेतरासां बहिष्पवमानस्तोत्रगतानामृचां 'हिंकारः' दशमत्वेन गणनीयः[1]। तथा सति ग्रहाणां स्तोत्रियाणां च संख्यासाम्यं भवति। तदिदं सो सा सम्मेति वाक्येनोच्यते। उकारो निपातः समुच्चयार्थः सन् स्त्रीलिङ्गाभ्यां तच्छब्दाभ्यां संबध्यते। तथा सति सात्र ग्रहसंख्या सा च स्तोत्रियसंख्येत्युक्तं भवति। सम्मेत्यत्र द्वितीयो मकारश्छान्दसः। तस्मिन्नपगते सति समा तुल्येत्युक्तं भवति। एवं यथा सान्तबहिष्पवमानस्तोत्रस्य ग्रहसंबन्धः, तथा प्रउगशस्त्रस्यापि ग्रहसंबन्धो द्रष्टव्य इत्यभिप्रायः॥

[सोमयाग]—क्रमागत

[प्रउगशस्त्र]—

iii. १ [xi. १] प्रउग नामक जो शस्त्र है वह ग्रहों की स्तुति है। प्रातःसवन में [ऐन्द्रवायव आदि] नौ ग्रह गृहीत होते हैं, तथा बहिष्पवमान नामक स्तोत्र में नौ ऋचाओं से उद्‌गाता स्तुति करते हैं। स्तोम के स्तुत होने पर वह दसवें ग्रह को ग्रहण करता है। प्रत्येक ऋचा के साथ बोला जाने वाला 'हिंकार' ही दसवाँ ग्रह है। इस प्रकार वह जो [ग्रह और स्तोत्र] है; उनका [संख्या] साम्य हो जाता है।

अथ प्रउगशस्त्रे विद्यमानानां तृचानां मध्ये प्रथमं तृचं विधत्ते—

**वायव्यं शंसति, तेन वायव्य उक्थवान्॥ इति।**

वायुर्देवता यस्य तृचस्य सोऽयं वायव्यो 'वायवा याहि दर्शत'[2] इत्यादिकस्तं शंसेत्। तेन शंसनेन वायव्यो ग्रह उक्थवाञ्शस्त्रवान् भवति। यद्यपि वायव्यः पृथग्ग्रहो नास्ति तथाऽप्यैन्द्रवायवस्य ग्रहस्य पूर्वो भागो वायव्य इत्युच्यते। स च प्रथमम् 'आ वायो भूष'[3] इत्यनेन केवलवायुदेवताकेन मन्त्रेण गृह्यते। तेन वायव्यो भवति। पश्चाद् 'इन्द्रवायू इमे सुताः'[4] इत्यनेनेन्द्रसहितवायुदेवताकेन मन्त्रेण गृह्यते। तेनैन्द्रवायवोऽपि भवति। अत एव वायवे द्विर्ग्रहणं तैत्तिरीया अधीयन्ते—'सकृदिन्द्राय मध्यतो गृह्यते द्विर्वायवे'[5] इति। तत्र प्रथमभागरूपो वायव्यो ग्रहः केवलेन वायव्यतृचेन शस्त्रवान् संपद्यते॥

---

१. 'हिं३ इति हिंङ् कृत्य'—इति (१. २. ३) आश्वलायनोक्तस्तु हिङ्कारो बह्वृचानाम्, छन्दोगानां तु 'हुं३ इति हिङ्कारः'—इति (७. ११. ७) लाट्यायनोक्तो ग्राह्यः। साम्नां साप्तभक्तिकत्वे पाञ्चभक्तिकत्वे च स एवाद्या भक्तिः (छा० उप० २. २. १; ८. १)। इहोपदिष्टो हिङ्कारस्तु उक्ताभ्यां भिन्नो मन्त्रात्मक एव। स चाम्नातश्छान्दोग्ये। तथाहि—ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः सꣳरब्धाः सर्पन्तीत्येव माससृपुस्तेह समुपविश्य हिञ्चक्रुः—ओं३ मदा३मों३ पिबामों३ देवो वरुणः प्रजापतिः सविता३ऽन्नमिहा२हरदन्नपतेऽन्नमिहाहराऽऽहरों३म् इति"—१. १२. ४, ५।

२. ऋ० १. २. १—३। ३. ऋ० ७. ९२. १। ४. ऋ० १. २. ४।

५. तै० सं० ६. ४. ७. ४। 'आ वायो'—'इन्द्रवायू'—इतीमौ मन्त्रौ एकस्मिन्ननुवाके यथाक्रमेण आम्नातौ—तै० सं० १. ४. ४।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वायु-देवताक तृच का शंसन करता है। उससे वायु के ग्रह की स्तुति होती है।

द्वितीयं तृचं विधत्ते—

**ऐन्द्रवायवं शंसति, तेनैन्द्रवायव उक्थवान् ॥ इति ।**

इन्द्रश्च वायुश्च मिलित्वा[1] देवता यस्य तृचस्य सोऽयमैन्द्रवायवः 'इन्द्रवायू इमे सुताः'[2] इत्यादिकस्तं शंसेत् । तच्छंसनेनैन्द्रवायवग्रहस्योत्तरभागः शस्त्रवान् भवति ॥

इन्द्र और वायु-देवताक तृच का शंसन करता है। उससे इन्द्र और वायु के ग्रह की स्तुति होती है।

तृतीयं तृचं विधत्ते—

**मैत्रावरुणं शंसति, तेन मैत्रावरुण उक्थवान् ॥ इति ।**

मित्रो वरुणश्च मिलित्वा[3] देवता यस्य तृचस्य सोऽयं मैत्रावरुणो 'मित्रं हुवे पूतदक्षम्'[4] इत्यादिकः । शंसतीत्यादिकं पूर्ववद् योज्यम् ॥

मित्र और वरुण-देवताक तृच का शंसन करता है। उससे मित्र और वरुण के ग्रह की स्तुति होती है।

चतुर्थं तृचं विधत्ते—

**आश्विनं शंसति, तेनाऽऽश्विन उक्थवान् ॥ इति ।**

अश्विनौ मिलित्वा[5] देवता यस्य तृचस्य सोऽयमाश्विनो 'अश्विना यज्वरीरिषः'[6] इत्यादिकः ॥

अश्विन्-देवताक तृच का शंसन करता है। उससे अश्विनों के ग्रह की स्तुति होती है।

पञ्चमं तृचं विधत्ते—

**ऐन्द्रं शंसति, तेन शुक्रामन्थिना उक्थवन्तौ ॥ इति ।**

इन्द्रो देवता यस्य तृचस्य सोऽयमैन्द्र 'इन्द्राऽऽ याहि चित्रभानो'[7] इत्यादिनैन्द्रस्तृचः । तेन शुक्रग्रहमन्थिग्रहयोरुभयोः शस्त्रवत्त्वम् ॥

इन्द्र-देवताक तृच का शंसन करता है। उससे शुक्र-ग्रह और मन्थि-ग्रह दोनों ही स्तुत होते हैं।

षष्ठं तृचं विधत्ते—

**वैश्वदेवं शंसति, तेनाऽऽग्रयण उक्थवान् ॥ इति ।**

---

१, ३, ५. 'मिलिता' इति वा पाठः । २. ऋ० १. २. ४–६ ।
४. ऋ० १. २. ७–९ । ६. १. ३. १–३ । ७. ऋ० १. ३. ४–६ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'ओमासश्चर्षणीधृतः'[1] इत्येष वैश्वदेवस्तृचः। तेनाऽऽग्रयणग्रहस्य शस्त्रवत्त्वं तथाऽपि विश्वदेवदेवताकत्वाद् वैश्वदेवम्। एवं सर्वत्र ग्रहशस्त्रयोरेकदेवताकत्वं द्रष्टव्यम्॥

विश्वेदेव-देवताक तृच का शंसन करता है। उससे आग्रयण-ग्रह की स्तुति होती है।

सप्तमं तृचं विधत्ते—

**सारस्वतं शंसति॥** इति।

'पावका नः सरस्वती'[2] इत्यादिकः सारस्वतस्तृचः॥

सरस्वती-देवताक तृच का शंसन करता है।

ननु पूर्ववदत्रापि ग्रहस्य शस्त्रवत्त्वं कुतो नोपन्यस्यत इत्याशङ्क्याऽऽह—

**न सारस्वतो ग्रहोऽस्ति॥** इति।

आध्वर्यवमन्त्रकाण्डे सारस्वतमन्त्रस्यापठितत्वाद्, ब्राह्मणे विध्यभावाच्च ग्रहाभावः॥

सरस्वती का कोई ग्रह नहीं है।

तर्हि ग्रहोक्थेऽस्मिन्नस्य सारस्वतस्य तृचस्य किमर्थं शंसनमाम्नातमित्याशङ्क्याऽऽह—

**वाक् तु सरस्वती ये तु के च वाचा ग्रहा गृह्यन्ते, तेऽस्य सर्वे शस्तोक्थाः॥** इति।

सरस्वती हि वाग्देवता। ग्रहाणां च वाचा गृह्यमाणत्वात् सारस्वतत्वम्। तेन सर्वेऽपि ग्रहाः शस्तोक्थाः पठितशस्त्रा भवन्ति॥

[फिर सारस्वत-ग्रह का शंसन क्यों कहा है? क्योंकि] सरस्वती तो वाणी है, वस्तुतः वाणी से जो कोई ग्रह लिए जाते हैं। उसीसे सभी ग्रहों की स्तुति हो जाती है।

वेदनं प्रशंसति—

**उक्थिनो भवन्ति य एवं वेद॥ १॥** इति।

तस्य वेदितुः सर्वे ग्रहाः शस्त्रवन्तो भवन्ति ग्रहदेवतास्तुष्यन्तीत्यर्थः॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीय-पञ्चिकायां प्रथमाध्याये (एकादशाध्याये) प्रथमः खण्डः॥ १॥ [७२]

जो इस प्रकार जानता है उसके सभी ग्रह स्तुत हो जाते हैं।

॥ इस प्रकार ग्यारहवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई॥ १॥

## अथ द्वितीयः खण्डः

विहितं प्रउगशस्त्रं प्रशंसति—

**अन्नाद्यं वा एतेनावरुन्धे यत्प्रउगमन्याऽन्या देवता प्रउगे शस्यतेऽन्यदन्यदुक्थं प्रउगे क्रियते॥** इति।

---

१. ऋ० १.३.७–९। २. ऋ० १,३.१०–१२।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यदेतत् प्रउगाख्यं शस्त्रमस्ति, तदेतदत्तुं योग्यस्यान्नस्य साधनम् । अतस्तेनान्नं प्राप्नोति । यस्मादस्मिञ्शस्त्रे पृथगेव देवता शस्यते । प्रथमतृचे केवलो वायुर्द्वितीयस्मिन्निन्द्रवायू तृतीयस्मिन् मित्रावरुणावित्यादिर्देवताभेदः । यथैव देवता भिद्यते तथैतस्मिञ्शस्त्रेऽन्यदन्यदुक्थं वायवा याहीन्द्रवायू इत्यादिकं परस्परविलक्षणं शस्त्राङ्गं क्रियते । तस्मादोदनशाकसूपादिविलक्षणभक्ष्यभोज्यलेह्यपेयचोष्यसाम्याद् अन्नाद्यहेतुत्वं युक्तम् ॥

iii.२ [xi.२] जो यह प्रउग है उससे वह खाने योग्य अन्न की प्राप्ति करता है; क्योंकि प्रउग में अन्यान्य देवों की स्तुति की जाती है और प्रउग में अन्यान्य [परस्पर विलक्षण] शस्त्राङ्ग किए जाते हैं ।

वेदनं प्रशंसति—

**अन्यदन्यदस्यान्नाद्यं गृहेषु[1] ध्रियते य एवं वेद ॥** इति ।

अन्यदन्यत् परस्परविलक्षणं मधुराम्लादिरूपम् ॥

जो इस प्रकार जानता है उसके गृह में [मधुर अम्ल आदि रूप विलक्षण] अन्यान्य खाद्य-सामग्री स्थित होती है ।

प्रकारान्तरेण प्रउगं प्रशंसति—

**एतद्ध वै यजमानस्याध्यात्मतममिवोक्थं यत्प्रउगं, तस्मादेनेनैतदुपेक्ष्यतममिवेत्याहुरेतेन ह्येनं होता संस्करोतीति ॥** इति ।

प्रउगाख्यं यच्छस्त्रमस्ति एतदेव यजमानस्याध्यात्मतममिव । आत्मानं शरीरमधिकृत्य वर्तत इत्यध्यात्मं शरीरसंबन्धीत्यर्थः । पूर्वत्राऽऽज्यशस्त्रस्य यजमानशरीरनिष्पत्तिहेतुत्वाभिधानात्[2], तदप्यध्यात्मम् । इदं तूत्पन्नस्य शरीरस्य संस्कारत्वादतिशयेनैवाध्यात्मम् । यस्मादेवं तस्मादेनेन यजमानेनैतत् प्रउगशस्त्रमुपेक्ष्यतममिवातिशयेनोप समीप ईक्षणीयमादरणीयमित्यर्थः । इत्येवमभिज्ञा आहुः । तेषामयमभिप्रायः । एतेन प्रउगशस्त्रेणैनं यजमानमाज्यशस्त्राद् उत्पन्नं होता संस्करोति तस्मादादरणं युक्तम् ॥

जो यह प्रउगशस्त्र है वह यजमान का अध्यात्मतम के समान है अर्थात् स्वयं अपने शरीर के सबसे निकटस्थ सम्बन्धी के समान है । 'इसीलिए इस [यजमान] के द्वारा यह [प्रउगशस्त्र] अत्यन्त ईक्षणीय है अर्थात् आदरणीय है'—ऐसा अभिज्ञजन कहते हैं; क्योंकि इसी [प्रउगशस्त्र] से होता [आज्यशस्त्र से उत्पन्न हुए] इस यजमान का संस्कार करता है ।

अथ प्रथमं तृचं विहितमनूद्य स्तौति—

**वायव्यं शंसति; तस्मादाहुर्वायुः प्राणः, प्राणो रेतो, रेतः पुरुषस्य प्रथमं सम्भवतः संभवतीति, यद्वायव्यं शंसति, प्राणमेवास्य तत्संस्करोति ॥** इति ।

---

१. 'ग्रहेषु' इति वा पाठः । २. द्र० इतः पूर्वम्, ३७३ पृ० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पूर्वोक्तो विधिः 'वायव्यं शंसति' इति[1] वाक्येनानूद्यते। यस्माद् वायव्यं शंसनीयं तस्मादभिज्ञा एवमाहुः—प्राणस्य वायुकार्यत्वेन वायुरेव प्राणः। रेतसः प्राणधारकशरीर-निष्पादकत्वाद् रेतः प्राणः प्राणस्वरूपम्। तत्सदृशं रेतः संभवत उत्पाद्यमानस्य पुरुषस्य देहस्य कारणत्वेन पितृदेहे प्रथमं संभवति। एवमभिज्ञैरुक्तत्वाद् वायव्यतृचः समीचीनः। तच्छंसनेन होता यजमानस्य प्राणमेव संस्करोति॥

वायु-देवताक तृच का पाठ करता है। इसीलिए अभिज्ञजन कहते हैं कि वायु प्राण है। प्राण वीर्य है। पुरुष के शरीर में वीर्य पहले उत्पन्न होता है; फिर मनुष्य जन्म लेता है। इस प्रकार यह जो वायु-देवताक मन्त्रों का पाठ करता है उससे होता इस [यजमान] के प्राण को ही संस्कृत करता है।

द्वितीयं विधिमनूद्य स्तौति—

**ऐन्द्रवायवं शंसति; यत्र वाव प्राणस्तदपानो, यदैन्द्रवायवं शंसति प्राणा-पानावेवास्य तत्संस्करोति॥** इति।

उच्छ्वासरूपः प्राणो यत्रास्ति तत्र निश्वासरूपोऽपानोऽप्यस्ति। इन्द्रवायू च प्राणा-पानस्वरूपौ। तस्मात् तेन सूक्तेन प्राणापानयोः संस्कारः॥

इन्द्र और वायु-देवताक तृच का पाठ करता है। जहाँ [उच्छ्वासरूप] प्राण है वहाँ [निश्वासरूप] अपान है। इस प्रकार यह जो इन्द्र और वायु-देवताक मन्त्रों का पाठ करता है उससे होता इस [यजमान] के प्राण व अपान को ही संस्कृत करता है।

तृतीयं विधिमनूद्य स्तौति—

**मैत्रावरुणं शंसति; तस्मादाहुश्चक्षुः पुरुषस्य प्रथमं संभवतः संभवतीति यन्मैत्रावरुणं शंसति चक्षुरेवास्य तत्संस्करोति॥** इति।

श्रुत्यन्तरे 'चक्षुर्मैत्रावरुणः'[2] इति मित्रावरुणसंबद्धस्य ग्रहस्य चक्षुष्ट्वाभिधानात् तृचोऽपि चक्षुःस्वरूप एव। तच्चक्षुरन्यस्माच्छ्रोत्रादीन्द्रियात् प्रथममुत्पद्यते। अस्यार्थ-स्याऽऽगमागम्यत्वादाहुरभिज्ञा इत्युक्तम्। एवंविधचक्षुःस्वरूपेण मैत्रावरुणतृचेन यजमान-चक्षुषः संस्कारः॥

मित्र और वरुण-देवताक तृच का पाठ करता है। इसीलिए अभिज्ञजन कहते हैं कि पुरुष के शरीर में [अन्य इन्द्रियों से] पहले चक्षु उत्पन्न होता है; फिर मनुष्य जन्म लेता है। इस प्रकार यह जो मित्र एवं वरुण-देवताक मन्त्रों का पाठ करता है उससे होता इस [यजमान] के चक्षु को ही संस्कृत करता है।

चतुर्थं विधिमनूद्य स्तौति—

**आश्विनं शंसति; तस्मात् कुमारं जातं संवदन्त उप वै शुश्रूषते नि वै ध्याय-तीति, यदाश्विनं शंसति श्रोत्रमेवास्य तत्संस्करोति॥** इति।

---

१. द्र० इतः पूर्वम्, ३७६।  २. तै० सं० ६.४.९.४।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उत्पन्नं बालं मुग्धमेवेक्षमाणा मातापित्रादयः परस्परमेवमाहुः—नानविधैरुपलाल-नैराहूतो बालकोऽस्मन् मुखमवलोकयति। यस्माद् अयमस्मदीयां वाचं श्रोतुमिच्छति। नैरन्तर्येणावलोकनेन मामेव ध्यायतीति। तदेतन् मित्रावरुणानुग्रहकृतम्। तस्मात् तच्छंसनेन श्रोत्रस्य संस्कारः॥

अश्विन्-देवताक तृच का पाठ करता है। क्योंकि कुमार के जन्म लेने पर [माता-पिता] परस्पर कहते हैं कि यह सुनने की इच्छा करता है और निरन्तर देखते हुए यह मेरा ही ध्यान कर रहा है। इस प्रकार यह जो अश्विन्-देवताक मन्त्रों का पाठ करता है, उससे होता इस यजमान के श्रोत्र का ही संस्कार करता है।

पञ्चमं विधिमनूद्य स्तौति—

**ऐन्द्रं शंसति; तस्मात् कुमारं जातं संवदन्ते प्रतिधारयति वै ग्रीवा अथो शिर इति; यदैन्द्रं शंसति वीर्यमेवास्य तत्संस्करोति॥** इति।

दोलायां शयानं बालमवेक्ष्य परस्परमेवमाहुः—अयमिदानीं ग्रीवाः प्रतिधारयति, उत्थातुमादौ गलमुन्नयति ततः शिर उन्नमतीति। एतस्य व्यापारस्य वीर्यनिमित्तत्वाद् इन्द्रस्य च वीर्यप्रदत्वात् तदीयतृचेन शक्तेः संस्कारः॥

इन्द्र-देवताक तृच का पाठ करता है। क्योंकि कुमार के जन्म लेने पर [मातापिता] परस्पर कहते हैं कि यह पहले गर्दन उठाता है और फिर सिर। इस प्रकार यह जो इन्द्र-देवताक तृच का पाठ करता है, उससे होता इस [यजमान] के वीर्य [=शक्ति] का ही संस्कार करता है।

षष्ठं विधिमनूद्य स्तौति—

**वैश्वदेवं शंसति, तस्मात् कुमारो जातः पश्चेव प्रचरति वैश्वदेवानि ह्यङ्गानि यद्वैश्वदेवं शंसत्यङ्गान्येवास्य तत्संस्करोति॥** इति।

उत्पन्नो बालः पश्चेव दर्शनश्रवणग्रीवोन्नमनादिक्रियाभ्यः पश्चादेव समर्थः सन् हस्ताभ्यां पादाभ्यां चेतस्ततः प्रचरति। हस्तादीन्यङ्गानि च बहुदेवताकानि। तस्माद् वैश्वदेव-तृचेनाङ्गसंस्कारः॥

विश्वेदेव देवताक तृच का पाठ करता है; क्योंकि उत्पन्न हुआ कुमार पीछे से हाथ और पैर इधर-उधर हिलाता है; क्योंकि हस्त आदि अङ्ग बहुदेवताक हैं। इस प्रकार यह जो विश्वेदेव-देवताक मन्त्रों का पाठ करता है उससे होता इस [यजमान] के अङ्गों का ही संस्कार करता है।

सप्तमं विधिमनूद्य स्तौति—

**सारस्वतं शंसति, तस्मात् कुमारं जातं जघन्या वागाविशति, वाग्घि सरस्वती, यत्सारस्वतं शंसति वाचमेवास्य तत्संस्करोति॥** इति।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हस्तपादप्रचारावस्थाया ऊर्ध्वं वक्तुमारभते। अतो जघन्या[1] वागित्युच्यते। वाचः सरस्वतीरूपत्वात् तदीयतृचेन तस्याः संस्कारः॥

सरस्वती-देवताक तृच का शंसन करता है। क्योंकि उत्पन्न बालक में वाणी [हाथ-पैर हिलाने-डुलाने के] बाद में आती है क्योंकि वाणी सरस्वती है। इस प्रकार जो सरस्वती-देवताक तृच का शंसन करता है उससे होता इस [यजमान] की वाणी का ही संस्कार करता है।

वेदितारमनुष्ठातारं च प्रशंसति—

**एष वै जातो जायते सर्वाभ्य एताभ्यो देवताभ्यः, सर्वेभ्य उक्थेभ्यः, सर्वेभ्यश्छन्दोभ्यः, सर्वेभ्यः प्रउगेभ्यः, सर्वेभ्यः सवनेभ्यो य एवं वेद, यस्य चैवं विदुष एतच्छंसन्ति॥ २॥ इति।**

यो होता यथोक्तप्रकारेण वेदैष एव पूर्वं स्वमातृपितृभ्यां जातोऽपि पुनर्देवतादिभ्यो जातो भवति। यथोक्तमर्थं विदुषो यस्य यजमानस्य होतार एतत् प्रउगं शंसन्ति सोऽपि यजमानो देवतादिभ्यः पुनर्जायते। देवता वाय्वादयः। उक्थानि याज्यप्रउगादीनि। छन्दांसि गायत्र्यादीनि। प्रउगाणि तदवयवातृचाः। सवनानि त्रीणि प्रसिद्धानि। एतेभ्यः सर्वेभ्यः पुनरुत्पत्तिः॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायाः प्रथमाध्याये (एकादशाध्याये) द्वितीयः खण्डः॥ २॥ [७३]

जो इस प्रकार जानता है अथवा इस प्रकार जानते हुए जिस [यजमान] के ऋत्विज इस प्रउगशस्त्र का शंसन करते हैं, वह और यजमान एक बार उत्पन्न होने पर भी, इन सब देवताओं, सब स्तुतियों, सब छन्दों, सब प्रउगों और सभी सवनों द्वारा पुनः जन्म लेता है।

॥ इस प्रकार ग्यारहवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई॥ २॥

## अथ तृतीयः खण्डः

प्रकारान्तरेण प्रउगशस्त्रं प्रशंसति—

**प्राणानां वा एतदुक्थं यत्प्रउगं, सप्त देवताः शंसति, सप्त वै शीर्षन् प्राणाः, शीर्षन्नेव तत्प्राणान् दधाति॥ इति।**

शिरोगतसप्तच्छिद्रवर्तिप्राणानां पूर्वोक्तसप्ततृचगतवाय्वादिदेवतानां च संख्यासाम्याच्छस्त्रस्य प्राणरूपत्वं तेन यजमानस्य शिरसि प्राणधारणं भवति॥

१. 'इवार्थे जयनाच्छाखादित्वाद्ये (पा० सू० ५.३.१०३) वै जघन्यगीः वाग्वै . जघनवत् पश्चाद्भूता जातस्य जायते॥' इति षड्गुरु०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

iii. ३ [xi. ३] यह जो प्रउगशस्त्र है वह [शिरोगत सात छिद्रों से युक्त] प्राणों की स्तुति है। [वायु आदि] सात देवों के लिए पाठ करता है। वस्तुतः शिर में सात प्राण [=इन्द्रिय] हैं। इस प्रकार उस पाठ से वह यजमान के शिर में प्राण को ही रखता है।

अथ प्रश्नोत्तराभ्यां प्रउगशस्त्रस्य सामर्थ्यं दर्शयति—

**किं स यजमानस्य पापभद्रमाद्रियेतेति ह स्माऽऽह योऽस्य होता स्याद् इत्यत्रै-वैनं यथा कामयेत तथा कुर्यात् ॥ इति।**

अस्य यजमानस्य यो होता स्यात् स तस्य पापभद्रं किमाद्रियेत ? पापमनिष्टफलं भद्रमिष्टफलम्। तादृशं किं फलं संपादयितुं समर्थः ? इति प्रश्नः। अत्रैव जन्मनि 'एनं' यजमानं प्रति यथा होता कामयेत, तथा कर्तुं शक्नोतीत्युत्तरम् ॥

इस यजमान का जो होता है, वह उस यजमान का क्या अनिष्ट या इष्ट संपादन कर सकता है ? [उत्तर] इस यजमान के प्रति इसी जन्म में होता जैसा चाहे कर सकता है।

तत्र प्रथम तृचप्रयुक्तमनिष्टं दर्शयति—

**यं कामयेत प्राणेनैनं व्यर्धयानीति, वायव्यमस्य लुब्धं शंसेद्, ऋचं वा पदं वाऽतीयात्, तेनैव तल्लुब्धं[1] प्राणेनैवैनं तद् व्यर्धयति ॥ इति।**

यं यजमानमुद्दिश्य होता कामयेत। कथमिति; तदुच्यते—एनं यजमानं प्राणेन व्यर्धयानि व्यृद्धं वियुक्तं करवाणीति। एवं कामयमानो होताऽस्य यजमानस्य संबन्धिनं वायव्यं तृचं लुब्धं व्यामूढं यथा भवति तथा शंसेत्। 'लुभ विमोहने' इति धातुः। व्यामोहप्रकार उच्यते—एकामृचं वा तदीयमेकं पदं वा 'अतीयात्' स्तम्भयेन्न पठेदित्यर्थः। तावता तत् तृचस्वरूपं लुब्धं व्यामूढं भवति। तथा सति प्राणरूपत्वेन पूर्वंनिरूपितस्य वायोः क्रोधाद् 'एनं' यजमानं प्राणेन वियोजयति ॥

जिस यजमान को होता चाहे कि इस [यजमान] को प्राण से वियुक्त करूँ तो इसके वायु-देवताक तृच का पाठ गड़बड़ कर दे। एक ऋचा अथवा उसके एक पद को ही न पढ़े। उसीसे उसमें गड़बड़ी हो जाती है। इस प्रकार उस गड़बड़ पाठ से वह इस [यजमान] को प्राण [रूप वायु] से वियुक्त कर देता है।

द्वितीयतृचनिमित्तमनिष्टं दर्शयति—

**यं कामयेत प्राणापानाभ्यामेनं व्यर्धयानीत्यैन्द्रवायवमस्य लुब्धं शंसेद्, ऋचं वा पदं वाऽतीयात्, तेनैव तल्लुब्धं, प्राणापानाभ्यामेवैनं तद् व्यर्ध-यति ॥ इति।**

---

१. 'तं लुब्धम्' इति वा पाठः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पूर्ववद् व्याख्येयम् ॥

जिस यजमान को होता चाहे कि इस [यजमान] को प्राण और अपान से वियुक्त करूँ तो इसके इन्द्र और वायु-देवताक तृच का पाठ गड़बड़ कर दे। एक ऋचा अथवा उसके एक पद को ही न पढ़े। उसीसे उसमें गड़बड़ी हो जाती है। इस प्रकार उस गड़-बड़ पाठ से वह इस [यजमान] को प्राण और अपान से ही वियुक्त कर देता है।

तृतीयतृचनिमित्तमनिष्टं दर्शयति—

**यं कामयेत चक्षुषैनं व्यर्धयानीति, मैत्रावरुणमस्य लुब्धं शंसेद्, ऋचं वा पदं वाऽतीयात्, तेनैव तल्लुब्धं, चक्षुषैवैनं तद् व्यर्धयति ॥** इति।

पूर्ववद् व्याख्येयम् ॥

जिस यजमान को होता चाहे कि इस [यजमान] को नेत्रों से विहीन करूँ तो इसके मित्र और वरुण-देवताक तृच के पाठ में गड़बड़ कर दे। एक ऋचा अथवा उसके एक पद को ही न पढ़े। उसीसे उसमें गड़बड़ी हो जाती है। इस प्रकार उस गड़बड़ पाठ से वह इस [यजमान] को नेत्रविहीन ही कर देता है।

चतुर्थतृचप्रयुक्तमनिष्टं दर्शयति—

**यं कामयेत श्रोत्रेणैनं व्यर्धयानीत्याश्विनमस्य लुब्धं शंसेद्, ऋचं वा पदं वाऽतीयात्, तेनैव तल्लुब्धं, श्रोत्रेणैवैनं तद् व्यर्धयति ॥** इति।

पूर्ववद् व्याख्येयम् ॥

जिस यजमान को होता चाहे कि [यजमान] को श्रोत्र-विहीन करूँ तो इसके अश्विन्-देवताक तृच के पाठ में गड़बड़ी कर दे। एक ऋचा या उसके एक पद को ही न पढ़े। उसीसे उसमें गड़बड़ी हो जाती है। इस प्रकार उस गड़बड़ पाठ में वह इस [यजमान] को श्रोत्रविहीन ही कर देता है।

पञ्चमतृचप्रयुक्तमनिष्टं दर्शयति—

**यं कामयेत वीर्येणैनं व्यर्धयानीत्यैन्द्रमस्य लुब्धं शंसेद्, ऋचं वा पदं वाऽतीयात्, तेनैव तल्लुब्धं, वीर्येणैवैनं तद् व्यर्धयति ॥** इति।

पूर्ववद् व्याख्येयम् ॥

जिस यजमान को होता चाहे कि इस [यजमान] को वीर्यविहीन करूँ तो इसके इन्द्र-देवताक तृच के पाठ में गड़बड़ी कर दे। एक ऋचा या उसके एक पद को ही न पढ़े। उसीसे उसमें गड़बड़ी हो जाती है। इस प्रकार उस गड़बड़ पाठ से वह इस [यजमान] को शक्तिविहीन ही कर देता है।

CCO. Vasishtha Tripathi Collection: Digitized by eGangotri

षष्ठतृचप्रयुक्तमनिष्टं दर्शयति—

**यं कामयेताङ्गैरेनं व्यर्धयानीति, वैश्वदेवमस्य लुब्धं शंसेद्, ऋचं वा पदं वाऽतीयात्, तेनैव तल्लुब्धमङ्गैरेवैनं तद् व्यर्धयति ॥ इति ।**

पूर्ववद् व्याख्येयम् ॥

जिस यजमान को होता चाहे कि इस [यजमान] को अङ्गों से रहित करूँ तो इसके विश्वेदेव-देवताक तृच के पाठ में गड़बड़ी कर दे । एक ऋचा या उसके एक पद को ही न पढ़े । उसीसे उसमें गड़बड़ी हो जाती है । इस प्रकार उस गड़बड़ पाठ से वह इस [यजमान] को अङ्गरहित ही कर देता है ।

सप्तमतृचप्रयुक्तमनिष्टं दर्शयति—

**यं कामयेत वाचैनं व्यर्धयानीति, सारस्वतमस्य लुब्धं शंसेद्, ऋचं वा पदं वाऽतीयात्, तेनैव तल्लुब्धं, वाचैवैनं तद् व्यर्धयति ॥ इति ।**

पूर्ववद् व्याख्येयम् ॥

जिस यजमान को होता चाहे कि इस [यजमान] को वाणी से वियुक्त करूँ तो इसके सरस्वती-देवताक तृच के पाठ में गड़बड़ी कर दे । एक ऋचा या उसके एक पद को ही न पढ़े । उसीसे उसमें गड़बड़ी हो जाती है । इस प्रकार उस गड़बड़ पाठ से वह इस [यजमान] को वाणीविहीन ही कर देता है ।

अथास्य शस्त्रस्येष्टफलसामर्थ्यं दर्शयति—

**यमु कामयेत सर्वैरेनमङ्गैः सर्वेणाऽऽत्मना समर्धयानीत्येतदेवास्य यथापूर्वमृजुक्लृप्तं शंसेत्, सर्वैरेवैनं तदङ्गैः सर्वेणाऽऽत्मना समर्धयति ॥ इति ।**

पूर्वोक्तानि प्राणादीनि सर्वाण्यङ्गानि । संपूर्णो देहः सर्व आत्मा । तत्समृद्धिकामो होताऽस्य यजमानस्य संबन्धि तदेव प्रउगशस्त्रं यथापूर्वं गुरोः समीपे पुरा येन क्रमेण पठितं तथैव ऋजुक्लृप्तं[1] कस्यचिदवयवस्यान्यथात्वाभावाद् ऋजुत्वं तथा क्लृप्तं संपादितं कृत्वा शंसेत् । ततः काम्यमानसमृद्धिः सिध्यति ॥

जिस यजमान को होता चाहे कि इस [यजमान] को सभी अङ्गों से और सम्पूर्ण आत्मा [ = देह] से समृद्ध करूँ तो इस यजमान के उसी [प्रउगशस्त्र] को जैसे [गुरुमुख] से पढ़ा था वैसा ही, बिना किसी अवयव को छोड़े हुए यथाविधि पाठ करे । इस प्रकार उस [यथाविधि पाठ] से वह इस [यजमान] को सभी अङ्गों से और सम्पूर्ण शरीर से समृद्ध करता है ।

---

१. 'यथापूर्वं यथाक्रमम् ऋजु अञ्जासानतिक्रमेण क्लृप्तं यथा कल्पनं यथोत्पत्ति । यद्वा, क्लृप्तम् अविकल्पनम्' इति भट्टभास्करः । 'ऋजु सुष्ठु' । क्लृप्तं व्यवस्थितम् : यथापूर्वमवोचाम' इति षड्गुरुशिष्यः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदनं प्रशंसति—

**सर्वैरङ्गैः सर्वेणाऽऽत्मना समृध्यते य एवं वेद ॥ ३ ॥** इति ।

स्पष्टोऽर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीय-पञ्चिकायाः प्रथमाध्याये (एकादशाध्याये) तृतीयः खण्डः ॥ ३ ॥ [७४]

जो इस प्रकार जानता है वह सभी अङ्गों से और सम्पूर्ण शरीर से समृद्धि को प्राप्त करता है ।

॥ इस प्रकार ग्यारहवें अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

अथ स्तोत्रशस्त्रयोर्देवतावैलक्षण्यरूपमाक्षेपमुत्थापयति—

**तदाहुर्यथा वाव स्तोत्रमेवं शस्त्रमाग्नेयीषु सामगा स्तुवते वायव्यया होता प्रतिपद्यते, कथमस्याऽऽग्नेय्योऽनुशस्ता भवन्तीति ॥** इति ।

सामगानां यान्याज्यस्तोत्राणि तत्र ऋच आग्नेय्य आम्नाताः । 'अग्न आ याहि'[1] इत्यादिषु सामगैराज्यस्तोत्रपाठात्[2] । होता तु 'वायवा याहि'[3] इत्यनया वायव्या प्रउगशस्त्रं प्रारभते । अतोऽनेन विलक्षणदेवताकेन शस्त्रेणाऽऽग्नेय्य ऋचः कथमनुशस्ता भवन्ति ? अनुकूलशंसनाभावे स्तुतमनुशंसतीति[4] शाखान्तरं विरुध्येतेत्याक्षेपः ॥

iii.४ [xi.४] [प्रश्न] इस सम्बन्ध में याज्ञिकों का कहना है कि 'जैसा स्तोत्र हो उसीके अनुकूल जब शस्त्र होना चाहिए तो साम का गान करने वाले अग्नि-देवताक ऋचाओं से स्तुति करते हैं और होता [प्रउगशस्त्र में] वायु-देवताक ऋचाओं के द्वारा प्रतिपादन करता है । अतः इस अग्निदेवताक मन्त्र के अनुकूल [वायुदेवताक मन्त्र] कैसे हैं ।'

तस्योत्तरं दर्शयति—

**अग्नेर्वा एताः सर्वास्तन्वो यदेता देवताः ॥** इति ।

सप्तसु तृचेषु या एता वाय्वादयो देवताः प्रतीयन्ते ताः सर्वा अग्नेरेव शरीरभूताः । अतोऽग्निविषयमेव कृत्स्नं शस्त्रं संपद्यत इति स्तोत्रगता आग्नेय्य ऋचोऽनुशस्ता भवन्ति ॥

[उत्तर] [सात तृचों में प्रतिपादित] जो ये [वायु आदि] देव हैं वे सभी अग्नि के ही [शरीरभूत] हैं ।

---

१. ऋ० ६.१६.१० । उ० आ० १.१.४–७ । २. ता० ब्रा० २.४-६;७.२;११.२.३ ।
३. ऋ० ५.५१.५ ।　　४. ता० ब्रा० ९.८.१० । द्रष्टव्य ३५६ पृ० ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अग्नेः प्रथमतृचप्रतिपादिताया वायुदेवतायाः स्वरूपं दर्शयति—

**स यदग्निः प्रवानिव दहति; तदस्य वायव्यं रूप, तदस्य तेनानुशंसति ॥** इति।

प्रवानिव प्रकर्षवानेव सन्नधिकज्वालया दहत्यग्निरिति यदस्ति तत्प्रकर्षात्मकं वायुसंबन्धिरूपम्। वायुना ज्वालाऽऽधिक्योदया। अतोऽस्य प्रउगशस्त्रस्य संबन्धिना वायुरूपेणायं होता तदग्निरूपमनुशंसति ॥

प्रकृष्ट रूप से प्रज्वलित होकर जो वह अग्नि जलती है वह इसका वायु-रूप है [क्योंकि वायु से अधिक ज्वाला होती है]। इस प्रकार उस [प्रउगशस्त्र] से होता अग्नि के उस [वायु-रूप] का ही अनुशंसन करता है।

द्वितीयतृचप्रतिपादिताया इन्द्रवायुदेवतायाः सारूप्यं दर्शयति—

**अथ यद्द्वैधमिव कृत्वा दहति, द्वौ वा इन्द्रवायू, तदस्यैन्द्रवायवं रूपं, तदस्य येनानुशंसति ॥** इति।

ज्वालाद्वयमिव[1] कृत्वा यदा दहति तदा द्वित्वसाम्यात् तज्ज्वालाद्वयमिन्द्रवायुसंबन्धि रूपं भवति। अन्यत् पूर्ववत् ॥

और, जो [अग्नि ज्वालाओं के] दो रूप करके जलती है तो, क्योंकि इन्द्र और वायु दो हैं अतः वह [ज्वालाद्वय द्वित्व साम्य के कारण] इस [अग्नि] का इन्द्र और वायु रूप है। इस प्रकार उस [तृचा] से उसके इस [रूप] का ही वह होता अनुशंसन करता है।

तृतीयतृचे सारूप्यं दर्शयंति—

**अथ यदुच्च हृष्यति नि च हृष्यति तदस्य मैत्रावरुणं रूपं; तदस्य तेनानुशंसति ॥** इति।

ज्वलतोऽग्नेरौन्नत्यमुद्धर्षः। ज्वालाशान्त्या नीचत्वं[2] निहर्षः[3]। तदुभयं मित्रावरुणसंबन्धि रूपम्। मित्रं दृष्टवतो हर्षेणोन्नतत्वात् तन्मित्ररूपम्। वरुणसंबन्धिनीनामपां नीचगामित्वाद् इतरद् वरुणस्य रूपम्। तदीयतृचेनाग्निरनुशस्तो भवति ॥

और, यह जो अग्नि की ज्वाला ऊपर नीचे [उत्कर्ष व अपकर्ष] होती है वह इस अग्नि का मित्र और वरुण रूप है। इस प्रकार वह उस [तृच] से उसके इस [रूप] का ही अनुशंसन करता है।

---

१. 'द्वैध कृत्वाज्ञया रूपेण द्वेधा भूत्वा दहति'—इति गोविन्दस्वामी।

२. 'ज्वालया अत्यन्तनीचत्वम्' इति वा पाठः।

३. 'यस्मादयमग्निर्दाहारम्भे दाह्यसंयोगाद् उदधृष्यति ऊर्ध्वज्वालो भवति। अथ भस्मीकृतदाह्यो निहृष्यति निभृतज्वालो भवति'—इति भट्टभास्करः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्रैव युक्त्यन्तरमाह—

**स यदग्निर्घोरसंस्पर्शस्तदस्य वारुणं रूपं, तं यद्घोरसंस्पर्शं सन्तं मित्रकृत्येवोपासते, तदस्य मैत्रं रूपं, तदस्य तेनानुशंसति ॥ इति ।**

सोऽग्निर्घोरसंस्पर्श उष्णसंस्पर्श इति यदस्ति तदस्याग्नेर्वरुणसंबन्धि रूपं वरुणस्योग्रत्वात् । घोरसंस्पर्शं सन्तं स्प्रष्टुमशक्यमपि तमग्निं शीतार्ताः प्राणिनो मित्रकृत्या मित्रस्य कृतिः कार्यं समीपेऽवस्थानं तेनैवैनमुपासते शीतपरिहाराय हस्तावुदरं पृष्ठं च वह्निसमीपे प्रतापयन्तो वह्निं सेवन्ते । तदेतत् सेवनमस्याग्नेर्मित्रसंबन्धि रूपम् । ततोऽस्याग्नेः संबन्धिना तेन मैत्रावरुणरूपेणायं होता वह्निमनुशंसति ॥

**उस अग्नि का जो उष्ण-स्पर्श है वह इसका वरुण सम्बन्धी रूप है। यह जो उष्ण-संस्पर्श होते हुए भी [शीत से आर्त लोग] मित्र के समान उसके पास [तापने के लिए] बैठते हैं वह इसका मित्र सम्बन्धी रूप है। इस प्रकार उस [तृच] से वह उसके इस [मित्र और वरुण सम्बन्धी रूप] का ही अनुशंसन करता है।**

चतुर्थतृचे सारूप्यं दर्शयति—

**अथ यदेनं द्वाभ्यां बाहुभ्यां द्वाभ्यामरणीभ्यां मन्थन्ति, द्वौ वा अश्विनौ, तदस्याऽऽश्विनं रूपं, तदस्य तेनानुशंसति ॥ इति ।**

आश्विनोर्द्वित्वाद्धस्तद्वयेनारणिद्वयेन च मन्थनमस्याग्नेराश्विनं रूपम् ॥

**और, जो इसका दो हाथों से और दो अरणियों से मन्थन करते है, क्योंकि अश्विन् दो हैं, अतः वह इस [अग्नि] का अश्विन् सम्बन्धी रूप है। इस प्रकार उस [तृच] से उसके इस [रूप] का ही वह अनुशंसन करता है।**

पञ्चमतृचे सारूप्यं दर्शयति—

**अथ यदुच्चैर्घोष स्तनयन् बबबा कुर्वन्निव दहति, यस्माद् भूतानि विजन्ते, तदस्यैन्द्रं रूपं, तदस्य तेनानुशंसति ॥ इति ।**

स्तनयन् ध्वनिं कुर्वन् । स एव ध्वनिस्त्रिभिर्बकारैरनुक्रियते । यत ईदृशाद् ध्वनिसहिताद् अग्ने रूपाद् भूतानि प्राणिनो विजन्ते बिभ्यति । तद्भयकारणध्वनिसहितमिन्द्रस्य सङ्ग्रामार्थमास्फोटनं कुर्वतः शत्रुभयकारिणो रूपम् ॥

**और, जो यह बहुत जोर से 'ब-ब-बा' ध्वनि करते हुए जलती है, क्योंकि प्राणी इस से भयान्वित होते हैं, अतः वह इस [अग्नि] का इन्द्र सम्बन्धी रूप है। इस प्रकार उस [तृच] से उसके इस [शत्रुओं के लिए भय कारक रूप] का ही वह अनुशंसन करता है।**

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

षष्ठतृचे सारूप्यं दर्शयति—

**अथ यदेनमेकं सन्तं बहुधा विहरन्ति, तदस्य वैश्वदेवं रूपं, तदस्य तेनानुशंसति ॥ इति ।**

अग्नेराहवनीयादिस्थानेष्वाग्नीध्रादिधिष्ण्येषु च बहुधा विहरणं[1] यदस्ति तद्विश्वेषां देवानां रूपं तेषामपि बहुत्वात् ॥

और, जो इस एक अग्नि को [आहवनीयादि और अग्निध्रादि स्थानों में] कई प्रकार से प्रज्वलित करते हैं वह इसका विश्वेदेव सम्बन्धी रूप है। इस प्रकार उस [तृच] से उसके इस [अनेक रूप] का ही वह अनुशंसन करता है।

सप्तमतृचे सारूप्यं दर्शयति—

**अथ यत् स्फूर्जयन् वाचमिव वदन् दहति, तदस्य सारस्वतं रूपं, तदस्य तेनानुशंसति ॥ इति ।**

यथा जनो वाचं वदति, तथैवाग्निः स्फूर्जयति, ईषद्विच्छिद्य विलक्षणोच्चारणमिव शब्दं करोति[2]। तदेतद् वागुच्चारणसदृशं ध्वनिकरणं सरस्वतीसंबद्धं रूपम् ॥

और, यह जो अग्नि मनुष्यों के वाणी बालने के समान विलक्षण शब्द करते हुए जलती है वह इसका सरस्वती सम्बन्धी रूप है। इस प्रकार उस [तृच] से उसके इस [ध्वनि करने वाले सरस्वती संबद्ध रूप] का ही वह अनुशंसन करता है।

इत्थमग्नेर्वाय्वादिदेवतानां च सारूप्यद्वाराऽनुशंसनमुपपाद्योपसंहरति—

**एवमु हास्य वायव्ययैव प्रतिपद्यमानस्य तृचेन तृचेनैवैताभिर्देवताभिः स्तोत्रियोऽनुशस्तो भवति ॥ इति ।**

'एवमु ह' अनेनैवोक्तप्रकारेण 'वायवा याहि' इत्येतया वायुदेवताकयर्चा शस्त्रं प्रारभमाणस्य होतुस्तेन तेनोक्ततृचेनैव प्रतिपादिताभिर्वाय्वादिदेवताभिरग्निसदृशीभिः स्तोत्रियः स्तोत्रसंबन्धी तृचो 'अग्न आयाहि'[3] इत्यादिक आग्नेयोऽप्यनुशस्तो भवति। तस्यानुष्ठानं यथा भवति तथा प्रउगशस्त्रमनुष्ठितं भवतीत्यर्थः ॥

इस उपर्युक्त प्रकार से वायु-देवताक ऋचाओं से आरम्भ होने वाला होता का [प्रउग] शस्त्र भी उन उक्त तृच-तृच से प्रतिपादित इन [वायु आदि भिन्न-भिन्न अग्नि-सदृश] देवताओं के द्वारा स्तोत्र सम्बन्धी अग्नि-देवताक तृच के अनुकूल हो जाता है।

---

१. 'एकमौपासनं गार्ह्यं बहून् श्रौता हि कुर्वते ॥' इति षड्गुरु०। 'एकं सन्तं बहुधा नानादेशेषु पाकार्थं विहरन्ति'—इति गोविन्दस्वामी।

२. 'स्फूर्जयन् हसन्' इति गोविन्दस्वामी। 'स्फूर्जयन् दाह्यं वस्तु निष्पिषन्'—इति भट्टभास्करः। ३. उ० आ० १. १.१–७।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ शस्त्रयाज्यां विधत्ते—

**'विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना। पिबा मित्रस्य धामभिः'[1] इति वैश्वदेवमुक्थं शस्त्वा वैश्वदेव्या यजति, यथाभागं तद्देवताः प्रीणाति॥ इति।**

हे अग्ने विश्वेभिः सर्वैर्देवैः सह विशेषत इन्द्रेण वायुना च सह तथा मित्रस्य धामभिः स्थानैर्युक्तः सन् सोम्यं मधु सोमसंबन्धिनं मधुरं रसं पिब। 'विश्वेभिः' इत्यादिका सेयमृग्वैश्वदेवी तया यजति तां याज्यां पठेत्[2]। कदा पठेदिति, तदुच्यते—वैश्वदेवं बहुदेवताकमुक्थं शस्त्रं प्रउगनामकं शस्त्वा पश्चात् पठेत्। तथा सति स्वस्वभागमनतिक्रम्य सर्वा देवतास्तर्पयति॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां प्रथमाध्याये (एकादशाध्याये) चतुर्थः खण्डः ॥४॥ [७५]

'हे अग्नि सभी देवों के साथ विशेषतः इन्द्र और वायु के साथ तथा मित्र के स्थानों से युक्त होकर सोम के मधुर रस को पीओ'—विश्वेदेवों के लिए [प्रउग] शस्त्र पढ़कर, इस ['विश्वेभिः' इत्यादि] वैश्वदेव-याज्या से यजन करता है। इस प्रकार करके उन सभी देवों को वह यथाविधि उन-उन भागों से सन्तुष्ट करता है।

॥ इस प्रकार ग्यारहवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

अथ शस्त्रयाज्यान्ते पठनीयं वषट्कारं विधत्ते—

**देवपात्रं वा एतद् यद् वषट्कारो वषट्करोति, देवपात्रेणैव तद्देवतास्तर्पयति॥ इति।**

वौषडिति मन्त्रो वषट्कारः। स च देवपात्रं देवानां पानसाधनम्। तस्माद् वषट्कुर्याद् वौषडित्येव पठेत्[3]। तथा सति देवानामुचितेनैव पानसाधनेन सर्वा देवतास्तर्पयतीति॥

[वषट्कार]—

iii. ५ [xi.५]—यह जो वषट्कार [='वौषट् मन्त्र] है वह देवताओं का पात्र है। इसलिए वह वषट्कार करता है। इस प्रकार वस्तुतः वह देवताओं के ही पात्र से देवताओं को तृप्त करता है।

---

१. ऋ० १. १४. १०।
२. आश्व० श्रौ० ५. १०. १०। 'याज्यान्तानि शस्त्राणि'—इति च तत्रैव तदुत्तरम् (५. १०. २१)।
३. परस्मिन् खण्डे द्रष्टव्यम् पृ० ३९९।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तत ऊर्ध्वं पठनीयमनुषट्कारमन्त्रं विधत्ते—

**अनुवषट्करोति, तद् यथाऽदोऽश्वान् वा गा वा पुनरभ्याकारं तर्पयन्त्येवमेवैतद्देवताः पुनरभ्याकारं तर्पयन्ति यदनुवषट्करोति ।।** इति ।

'सोमस्याग्ने वीहि' इत्ययं मन्त्रोऽनुवषट्कारः, तं पठेत्[1] । तत्र लोकेऽदः[2] किंचिदिदं निदर्शनमस्ति । कथमिति, तदुच्यते—यथा मनुष्याः स्वकीयानश्वान् वा स्वकीया गा वा पुनरभ्याकारं पौनःपुन्येन तृणोदकादिभिरभिमुखीकृत्याभिमुखीकृत्य तर्पयन्ति, कण्डूयनेन प्रियशब्देन वा लालयित्वा यथेष्टघासं प्रयच्छन्ति, एवमेवैतेनानुवषट्कारेण पुनःपुनर्देवता अभिमुखीकृत्य यजमानो हविषा तर्पयति ।।

वह अनुवषट्कार मन्त्र बोलता है। जैसे इस लोक में मनुष्य अपने अश्वों या गायों को बार-बार घास और पानी द्वारा अभिमुख करके तृप्त करते हैं; उसी प्रकार जो अनुवषट्कार करता है उसके द्वारा पुनः पुनः देवता को अभिमुख करके [यजमान हवि से] तृप्त करते हैं।

अनुवषट्कारप्रशंसार्थं चोद्यमुद्भावयति—

**इमानेवाग्नीनुपासत इत्याहुर्धिष्ण्यान्, अथ कस्मात् पूर्वस्मिन्नेव जुह्वति, पूर्वस्मिन् वषट्कुर्वन्तीति[3] ।।** इति ।

सोममध्यवर्तिषु धिष्ण्येष्वाग्नीध्राद्यग्नयो ये विहितास्तानग्नीनृत्विजः समीपे स्थित्वोपासत एव सेवन्त एव केवलं न तु तेषु जुह्वति नापि वषट्कुर्वन्ति । पूर्वस्मिन्नेवोत्तरवेदिस्थितेऽग्नावृत्विजो जुह्वति च तत्रैव वषट्कुर्वन्ति च । अथैवं सति धिष्ण्यगतानामग्नीनां प्रीतिर्नास्ति । कस्मादेवं वैषम्यं क्रियत ? इति चोद्यवादिन आहुः ।।

[प्रश्न] 'इन [सोममध्यवर्ती धिष्ण्यों में आग्नीध्र आदि] अग्नियों को ऋत्विज के समीप स्थित करके मात्र सेवा करते हैं, न तो उसमें हवि डालते हैं और न तो वषट्कार करते हैं'—ऐसा अभिज्ञजन कहते हैं। तो फिर कैसे पहले की ही [उत्तरवेदि पर स्थित] अग्नि में ऋत्विज हवन करते हैं और वहीं वषट्कार करते हैं ?

तत्रोत्तरं दर्शयति—

**यदेव सोमस्याग्ने वीहीत्यनुवषट्करोति तेन धिष्ण्यान् प्रीणाति ।।** इति ।

---

१. आश्व० श्रौ० ५.१३. ६ । द्र० इतः पूर्वम्, पृ० १३३ ।

२. 'अदः' 'इति वक्ष्यमाणपरामर्शः ।'—इति षड्गुरुशिष्यः । 'अद इति सर्वनाम्ना लोकप्रसिद्धिं दर्शयति'—इति भट्टभास्करः ।

३. 'चोद्यस्वरूपप्रदर्शनार्थो द्वितीय इतिकरणः । चोद्यहेतुप्रदर्शनार्थः प्रथमः इतिकरणः'—इति भट्टभास्करः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हे अग्न इति जात्याकारेणाग्निं संबोध्य सोमस्य सोमरसं वीहि पिबेत्येवं मन्त्रेण होताऽनुवषट्करोतीति यदस्ति तेन धिष्ण्यानग्नीन् होता तर्पयति । तस्मान्न वैषम्यम् ॥

[उत्तर] 'हे अग्नि ! सोम के रस को पीओ'—इस मन्त्र से होता जो अनुवषट्कार करता है; उससे धिष्ण्य अग्नियों को भी तृप्त करता है ।

प्रकारान्तरेण प्रशंसितुं पुनश्चोद्यद्वयम् उद्भावयति—

**असंस्थितान् सोमान् भक्षयन्तीत्याहुर्येषां नानुवषट्करोति, को नु सोमस्य स्विष्टकृद्भाग इति ॥** इति ।

'येषां' द्विदेवत्यग्रहाणामर्थे होता नानुवषट्करोति, ते द्विदेवत्याः सोमा 'असंस्थिताः' असमाप्ताः; देवतार्थहोमस्यासमाप्तौ कथमृत्विजस्तान् द्विदेवत्यान् भक्षयन्ति ? इत्येके चोद्यमाहुः[1] । दर्शपूर्णमासादिषु स्विष्टकृद्भागेन ततः पूर्वेषां हविषां संस्कारो भवति । ततः सोमस्यापि संस्काराय को नाम स्विष्टकृद्भागः ? इति द्वितीयं चोद्यम् ॥

जिन [दो-देवों के ग्रह] के लिए होता अनुवषट्कार नहीं करता वे सोम असंस्थित हैं अर्थात् असमाप्त हैं । अतः होम के समाप्त हुए विना ही कैसे ऋत्विज उनका भक्षण करते हैं ? [यह प्रथम प्रश्न है । जब दर्शपूर्णमास आदि में स्विष्टकृद्भाग से पूर्व हवि का संस्कार होता है तब] सोम [के संस्कार] के लिए कौन सा स्विष्टकृद्भाग है ? [यह दूसरा प्रश्न है] ।

तत्रोत्तरमाह—

**यद्वाव 'सोमस्याग्ने वीहि' इत्यनुवषट्करोति, तेनैव संस्थितान् सोमान् भक्षयन्ति, स उ एव सोमस्य स्विष्टकृद्भागो वषट्करोति ॥ ५ ॥** इति ।

मन्त्रे सोमस्येति जातिमात्रमुद्दिश्यानुवषट्करोतीति यदेवास्ति तेनैवानुवषट्काररहिता द्विदेवत्यादयः सर्वे सोमाः संस्थिताः समाप्ताः । तस्मात् संस्थितानेव द्विदेवत्यानृत्विजो भक्षयन्ति । 'स उ' एव यथोक्तोऽनुवषट्कार एव सोमस्य स्विष्टकृद्भागः । अतो वषट्करोति । उक्तस्य सर्वस्य प्रयोजनस्य सिद्ध्यर्थमनुवषट्कुर्यादित्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां प्रथमाध्याये (एकादशाध्याये) पञ्चमः खण्डः ॥ ५ ॥ [७६]

[उत्तर] जो 'सोमस्याग्ने वीहि' इस मन्त्र से [जिसमें जाति मात्र को उद्देश्य करके सोम को] वह अनुवषट्कार करता है, उसीसे [सभी सोमों का] वह उपसंहार कर देता है । इसलिए ऋत्विज उपसंहृत सोम का भक्षण करते हैं । वही सोम का स्विष्टकृद्भाग है अतः वषट्कार करता है [उक्त सभी प्रयोजन सिद्ध्यर्थ अनुवषट्कार करना चाहिए]।

इस प्रकार ग्यारहवें अध्याय के पाचवें खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

---

१. 'ऋतुयाजान् द्विदेवत्यान्' ( आश्व० श्रौ० ५. ५. २१ ) इत्यादियज्ञगाथादर्शनाद् येषामृतुयाजद्विदेवत्यपात्नीवतादित्यग्रहसावित्रग्रहाणां नानुवषट्करोति होत्रादिः; तान् असंस्थितान् असमाप्तान् किमिति भक्षयन्तीत्येकं चोद्यम्'—इति षड्गुरुशिष्यः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ षष्ठः खण्डः

अथ वषट्कारमाश्रित्यैवाभिचारप्रयोग उच्यते—

**वज्रो वा एष यद्वषट्कारो यं द्विष्यात् तं ध्यायेद् वषट्करिष्यंस्तस्मिन्नेव तं वज्रमास्थापयति ॥** इति ।

वषट्कारस्य वज्ररूपत्वात् तत्कालध्याने च द्वेष्ये वज्रप्रहारो भवति ॥

iii. ६ [xi. ६] यह जो वषट्कार है वह वज्र है । वषट्कार करते हुए उसे चाहिए कि जो उससे द्वेष करता है उसका वह ध्यान कर ले । उसीसे उस वज्र का प्रहार हो जाता है ।

अथ वौषडित्यस्य वषट्कारस्योत्तरभागं प्रशंसति—

**षळिति वषट्करोति, षड्वा ऋतव ऋतूनेव तत्कल्पयत्यृतून् प्रतिष्ठापयत्यृतून् वै प्रतितिष्ठत इदं सर्वमनु प्रतितिष्ठति यदिदं किंच ॥** इति ।

षडित्यनेन मन्त्रभागेन वसन्तादिषड्तुसंख्याया बुद्धिस्थत्वाद् 'ऋतून् कल्पयति[1]' स्वस्वप्रयोजनसमर्थान् करोति । तावतर्तवो व्याकुलतामन्तरेण प्रतितिष्ठति तत् प्रतिष्ठाम् 'अनु' स्थावरजङ्गमरूपं जगत् सर्वं स्वस्वभागे प्रतिष्ठितं भवति ॥

वषट्कार में वह 'षट्' शब्द को कहता है; छः ऋतुएँ हैं । वस्तुतः इस प्रकार वह [वसन्त आदि छः] ऋतुओं को ही अपने-अपने कार्य में समर्थ करता है; ऋतुओं को प्रतिष्ठित [सुथिर] करता है । यह सब जो कुछ वहाँ है यहाँ ही वह अवलम्ब प्राप्त कर लेता है जो ऋतुओं को सुस्थिर कर देता है ।

तत्प्रतिष्ठार्थं प्रामाणिकपुरुषवचनोदाहरणेन द्रढयति—

**प्रतितिष्ठति य एवं वेद, तदु ह स्माऽऽह हिरण्यदन् बैदः, एतानि वा एतेन षट् प्रतिष्ठापयति, द्यौरन्तरिक्षे प्रतिष्ठिता, अन्तरिक्षं पृथिव्याम्, पृथिव्यप्स्वापः सत्ये, सत्यं ब्रह्मणि, ब्रह्म तपसीत्येता एव तत्प्रतिष्ठाः[2] प्रतितिष्ठन्तीरिदं सर्वमनु प्रतितिष्ठति यदिदं किंच, प्रतितिष्ठति य एवं वेद ॥** इति ।

हिरण्यमया दन्ता यस्यासौ हिरण्यदन् । बिदस्य पुत्रो बैदः, तादृशो मुनिः 'तदु ह' तदेव वचनमाह स्म । किं वचनमिति ? तदुच्यते—एतान्येव द्युलोकादीनि ब्रह्मान्तानि षट्स्थानानि यानि सन्ति, तान्येवैतेन वषट्कारेण होता प्रतिष्ठापयति । तत्र द्युलोकस्याधस्तादन्तरिक्षं, तस्मादन्तरिक्षे द्युलोक आश्रितः । तच्चान्तरिक्षं पृथिव्यामाश्रितम् । पृथिवी चाधोवर्तिनीष्वप्स्वाश्रिता । आपश्च सत्ये समाश्रिताः, जनेषु सत्यवादिषु सत्सु यथाकालं

---

१. 'सम्पतिः क्लृप्तिः'—इति षड्गुरु० । 'कल्पनमविपर्यस्तधर्मत्वम्' इति भट्टभास्करः ।

२. 'अत्र यद्यप्यन्तरिक्षादीनामेव प्रतिष्ठात्वं ब्राह्मणेनोच्यते, तथापि द्युलोकस्यापि देवानां प्रतिष्ठात्वात् प्रतिष्ठेति द्युप्रभृतयः षडुच्यन्ते । तपसस्तु सप्तमस्य सत्यस्य सर्वप्रतिष्ठात्वे तस्य होत्रा क्वचिदप्रतिष्ठापनीयत्वात् तद् व्यतिरेकेण षड् गृह्यन्ते'—इति भट्टभास्करः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वृष्टिसंभवात् । सत्यं 'ब्रह्मणि' वेदे प्रतिष्ठितम् । ईदृशमाचरणं सत्यमिति वेदेनैवावगमात् । वेदस्तपसि[1] वषट्कारमन्त्रानुष्ठानरूपे प्रतिष्ठितः । वेदस्यानुष्ठानप्रतिपादनार्थत्वात् । 'इति' अनेन प्रकारेणैता द्युलोकादय एव यथावत्तेन वषट्कारेण यदा परस्परप्रतिष्ठिता भवन्ति तदानीं प्रतिष्ठारूपास्ताः पृथिव्याद्या एकैकत्र प्रतिष्ठिताः सन्ति । ता अनु पश्चाद्यदिदं किंच जगदस्ति, तत्सर्वं प्रतितिष्ठति । य एवं वेदिता स च प्रतितिष्ठति ॥

जो इस प्रकार जानता है वह सुस्थिर हो जाता है; जैसा कि हिरण्यदन्त वैद [=सोने के दाँतों वाले बिद के पुत्र] ने भी कहा है—इन [द्युलोक से लेकर ब्रह्म पर्यन्त] छः स्थानों को इसी [वषट्कार] से होता स्थापित [=सुस्थिर] करता है। [वहाँ द्युलोक से नीचे अन्तरिक्ष है अतः द्युलोक अन्तरिक्ष में प्रतिष्ठित [आश्रित] है। अन्तरिक्ष पृथ्वी में, पृथ्वी जल में, जल [सत्यवादी जनों के कारण वृष्टि होने से] सत्य में, सत्य वेद में और वेद वषट्कारमन्त्रानुष्ठान रूप] तपस्या में प्रतिष्ठित है। इस प्रकार ये [द्युलोक आदि] ही उस [वषट्कार] से जब परस्पर प्रतिष्ठित होते हैं तब [प्रतिष्ठि रूप] वे [पृथ्वी आदि एक जगह] प्रतिष्ठित होते हैं। इस प्रकार उसके बाद जो कुछ इस संसार में है वह सब यहाँ ही स्थापित हो जाता है और जो इस प्रकार जानता है वह भी प्रतिष्ठित हो जाता है।

अथ वषट्कारमन्त्रस्य पूर्वोत्तरभागावुभौ प्रशंसति—

**वौषळिति[2] वषट्करोत्यसौ वाव वावृतवः षळेतमेव तदृतुष्वादधात्यृतुषु प्रतिष्ठापयति, यादृगिव वै देवेभ्यः करोति तादृगिवास्मै देवाः कुर्वन्ति ॥ ६ ॥ इति ।**

मन्त्रे पूर्वभागो वौशब्दो निपातत्वाद् 'वि गतिप्रजन' इत्यादिधातुजत्वाद्[3] वा गमनस्वभावमादित्यमभिधत्ते[4] । तदेतदभिप्रेत्यासौ वाव 'वौ'—इत्युक्तम्[5] । वसन्ताद्याः 'ऋतवः'

---

१. 'तपः परमं ज्योतिः ऋतं च सत्यं चाभीद्धात् तपसः' इति यथा प्रतिष्ठितम्—इति इति षड्गुरु० । 'परस्मिंस्तेजसि ईश्वरशरीरे' इति भट्टभास्करः ।

२. 'वौ३षडिति वषट्कारः'—इति आश्व० श्रौ० १.५.१५ । 'ब्रूहिप्रेष्यश्रौषड्'—इति (पा० सू० ८.२.९१) प्लुतिः ।

३. 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु'—इति धा० पा० अदा० प० ३८ ।

४. 'अत्र 'वौ' इति शब्देन सूर्योऽसौ कथ्यते कथम् ।
'वेञो डिङ्श्च सोरर्थे सदा खे गतिमान् रविः ॥ (उणा० सू० ४.७)
निखण्टौ पठ्यते चैवं 'विः पक्षिपरमात्मनोः' ।
(वैज० को० शेषकाण्ड पुल्लिङ्गाध्याये श्लो० ६०)—इति षड्गुरुशिष्यः

५. 'वौ इति पदेन सप्तम्यन्तेनोच्यते । वेतेरौणादिके डिप्रत्यये विरिति आकाशगामी आदित्य उच्यते । तत्र षडृतव उत्पद्यन्तामनेन यागेन इति समुदायार्थः । अस्यार्थस्य द्योतकः पदसमुदायात्मा निपातोऽयं द्रष्टव्यः । आदित्ये हि षडृतव उत्पद्यन्ते आदित्यगत्यधीनात्मलाभत्वाद् ऋतूनाम् । यद्वा, वौ आदित्ये जगतां धारयितरि षडृतवः सहायत्वेन वर्तन्ताम्'—इतिभट्टभास्करः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

संख्यावशात् षट् इत्यभिधीयन्ते । तन्मन्त्रपाठेनैतमेव वौशब्दाभिधेयमादित्यं षट्शब्दाभिधेयेष्वृतुष्वादधाति । न केवलमाधानमात्रं किंतु तेष्वृतुषु प्रतिष्ठापयति स्थैर्येणावस्थापयति[1] । एवं सत्यसौ होता देवेभ्यो यादृशमेव प्रयोजनं करोति, तादृशमेव प्रतिष्ठारूपं प्रयोजनम् 'अस्मै' होत्रे, तद् द्वारेण यजमानाय देवाः कुर्वन्ति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां प्रथमाध्याये (एकादशाध्याये) षष्ठः खण्डः ॥ ६ ॥ [७७]

वषट्कार में वह 'वौषट्' शब्द को कहता है। 'वौषट्' में यह आदित्य ही 'वौ' शब्दाभिधेय है; और षट् शब्द ऋतुओं का बोधक है। उस मन्त्र पाठ के द्वारा [होता 'वौ' शब्दाभिधेय] आदित्य को [षट्शब्दाभिधेय] ऋतुओं में स्थापित करता है। [आधानमात्र ही नहीं करता अपितु वह इन] ऋतुओं में उसे सुस्थिर कर देता है। इस प्रकार होता जैसा देवों के साथ [प्रयोजन] करता है वैसा ही [प्रतिष्ठारूप प्रयोजन] इस होता के यजमान के लिए देव करते हैं।

॥ इस प्रकार ग्यारहवें अध्याय के छठवें खण्ड की हिन्दी पूर्ण हुई ॥ ६ ॥

## अथ सप्तमः खण्डः

अथ फलाविशेषार्थं वषट्कारस्यावान्तरभेदानाह—

**त्रयो वै वषट्कारा वज्रो धामच्छद् रिक्तः ॥** इति ।

वज्र इति प्रथमस्य वषट्कारभेदस्य नामधेयम् । धामच्छदिति द्वितीयस्य । 'रिक्तः' इति तृतीयस्य ॥

iii. ७ [xi. ७] वषट्कार तीन होते हैं,—१. वज्र, २. धामच्छद् और ३. रिक्त।

तेषां मध्ये वज्रस्य स्वरूपं दर्शयति—

**स यमेवोच्चैर्बलि वषट्करोति स वज्रः ॥** इति ।

---

१. 'एतमेव तदित्यादि । ननु विप्रतिषिद्धमिदं ब्राह्मणम् । आदित्य ऋतूनां स्थापनं मन्त्रेण प्रतिपाद्यते । आदित्यमेव ऋतुष्वादधाति इति ब्राह्मणेन कथमुच्यते ? अयमभिप्रायः—नानेन वषट्शब्दस्यार्थोऽभिधीयते । अपि तु ईदृशस्य यागस्य फलमनेन ख्याप्यते इति व्याचष्टे । यस्मादादित्यस्योपकाराय तस्मिन् ऋतवः प्रतिष्ठाप्यन्ते तस्मात् प्रत्युपकारार्थमृतुष्वादित्यं प्रतिष्ठापयति । न केवलमृतूनामादित्ये स्थापनमेवानेन क्रियते, अपित्वादित्यस्याप्यृतुष्वास्थापनमनेन वौषट्शब्देन प्रतिपाद्यते प्रत्युपकारपर्यन्तत्वान्महत्सूपकारस्य ।....एतदेव स्पष्टयति यादृगिव वा इत्यादि'—इति भट्टभास्करः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स होता यमेव मन्त्रमुच्चैर्यथा भवति तथा, बलि[1] च यथा भवति तथा, वषट्करोति, स मन्त्ररूपो वषट्कारो वज्र इत्युच्यते। अत्रोच्चैःशब्देन ध्वनेराधिक्यमुच्यते, बलिशब्देनाक्षरपारुष्यं तदुभययुक्तो वज्रः॥

वह [होता] जिस मन्त्र को उच्चस्वर से और बलपूर्वक वषट्कार करता है वह [मन्त्ररूप वषट्कार] वज्र है।

तस्य प्रयोगं विधत्ते—

**तं तं प्रहरति, द्विषते भ्रातृव्याय वधं योऽस्य स्तृत्यस्तस्मै स्तर्तवै; तस्मात् स भ्रातृव्यवता वषट्कृत्यः॥** इति।

यो द्वेष्यो यजमानस्य स्तृत्यो हन्तव्यो भवति, तस्मै स्तर्तवै तं हन्तुं द्विषते द्वेषं कुर्वते भ्रातृव्याय शत्रवे तं तं वधं प्रहरति। वधशब्दो हननसाधनं वज्रं ब्रूते। यदा यदाऽपेक्षितस्तदा तदेति विवक्षया तं तमिति वीप्सा। यस्मात् प्रहरणहेतुर्वज्रः, तस्मात् स वज्रो भ्रातृव्यवता यजमानेन वषट्कृत्यो वषट्काररूपेण प्रयोक्तव्यः। होतृप्रयोग एव यजमानप्रयोगः, दक्षिणया होतुः क्रीतत्वात्॥

जो [शत्रु] इस [यजमान] का हन्तव्य होता है; उसके वध के लिए जब वह चाहता है; तब तब उस द्वेष करने वाले शत्रु के ऊपर उस वज्र का प्रहार करता है[2]। इसलिए वह [वज्र] जिस यजमान के शत्रु हों उसके द्वारा वषट्कार रूप से प्रयोक्तव्य है।

धामच्छदः स्वरूपं दर्शयति—

**अथ यः समः संततोऽनिर्हाणर्चः स धामच्छत्॥** इति।

यो वषट्कारः 'समः' पूर्वोक्तबलित्वादिदोषरहितो यथाऽधीतस्तथैवोच्चारितः संततो याज्यया सह विच्छेदरहितः, निःशेषेण हानं परित्यागो यस्या ऋचः, सा निर्हाणा। तथाविधा काचिदृग्याज्यारूपा यस्य वषट्कारस्य सोऽयं निर्हाणर्चः[3]। याज्यापाठहीन इत्यर्थः। तद्वैलक्षण्यात् अनिर्हाणर्चः संपूर्णयाज्यापाठोपेत इत्यर्थः। कीदृशो वषट्कारो धामच्छदिति? उच्यते—धाम यज्ञस्थानं तत्र यथा रक्षांसि न प्रविशन्ति, तथा छादयति, स धामच्छत्॥

---

१. 'बलि बलवत्, अतिस्फुटम्'—इति षड्गुरुशिष्यः।　२. द्र० इतःपूर्वम्, १९२ पृ०।

३. 'समः याज्यया तुल्यध्वनिः। संततः मध्य उच्छ्वासरहितः। व्याचष्टे—अनिर्हाणर्चः। निर्हाणं विश्लेषः। 'ऋक्पूः' इत्यकारः समासान्तः। ऋचा विश्लेषरहितः'—इति षड्गुरुशिष्यः। 'नितरां हानं निर्हाणम्। यस्य वषट्कारस्य ऋग् हीना न भवति, सोऽनिर्हाणर्चः'—इति गोविन्दस्वामी।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

और, जो [वषट्कार याज्या के] तुल्यध्वनि वाला हो, [याज्या के साथ विच्छेद-रहित] संतत हो और जो सम्पूर्ण याज्या पाठ से युक्त हो, वह 'धामच्छत्' [धाम अर्थात् यज्ञस्थान जहाँ राक्षस न प्रवेश कर पावें वैसा छादन करने वाला वषट्कार] है।

तस्य प्रयोगं विधत्ते—

**तं तं प्रजाश्च पशवश्चानूपतिष्ठन्ते, तस्मात् स प्रजाकामेन पशुकामेन वषट्-कृत्यः ॥ इति ।**

प्रजाभिः पशुभिश्चान्वयार्थं तं तमिति वीप्सा; तं वषट्कारं धामच्छदं प्रजाश्च पशवश्च सेवन्ते। तस्मात् तादृक्कामेण धामच्छद् वषट्कारः प्रयोक्तव्यः ॥

उस प्रकार के [धामच्छत्] वषट्कार का प्रयोग करने वाला प्रजाओं और पशुओं से युक्त हो जाता है। अतः प्रजा की कामना वाले और पशु की कामना वाले उस [यजमान] को यह वषट्कार करना चाहिए।

रिक्तस्य स्वरूपं दर्शयति—

**अथ येनैव षळवराध्नोति, स रिक्तः ॥ इति ।**

षट्शब्दो वषट्कारमभिधत्ते, भीमसेनो भीम इतिवदेकदेशेन व्यवहारात्। येनैवोच्चारणेन षळवराध्नोति वषट्कारोऽवराधं समृद्ध्यभावं प्राप्नोति। नोचोच्चारणेन हि वषट्कारस्य समृद्ध्यभावः। स तथोच्चारितो वषट्कारो रिक्त इत्युच्यते[1]। उच्चध्वनियोग्यस्य तदभावे रिक्तप्रायत्वात् ॥

और जिसके उच्चारण से वषट्कार समृद्ध्यभाव [अर्थात् नीच-उच्चारण, धीरे से कहने] को प्राप्त करता है वह [उच्चध्वनियोग्य वषट्कार रिक्तप्राय होने से] रिक्त' है।

तमेतं रिक्तं निन्दति—

**रिणक्त्यात्मानं, रिणक्ति यजमानं, पापीयान् वषट्कर्ता भवति, पापीयान् यस्मै वषट्करोति, तस्मात् तस्याऽऽशां नेयात् ॥ इति ।**

रिक्ताख्यो वषट्कारः प्रयुज्यमानः सन् होतुरात्मानं 'रिणक्ति' रिक्तीकरोति, समृद्धिहीनं दरिद्रं करोतीत्यर्थः। तथा यजमानमपि रिणक्ति। अतस्तेन वषट्कर्ता होता 'पापीयान् भवति' अत्यन्तन कसाधनपापेन युक्तो भवति। यस्मै यजमानाय वषट्करोति सोऽपि पापीयान् भवति। तस्मात् तस्य रिक्तस्य वषट्कारस्याऽऽशां नेयान्न प्राप्नुयाद्, इच्छामपि न कुर्यात्, किमु तत् प्रयोगमित्यर्थः ॥

---

१. 'येन वषट्कारेण षडपि शब्दधर्मान् शिक्षाशास्त्रप्रसिद्धान् वर्णस्वरमात्राबलसामसन्तानाख्यान् अवराध्नोति व्यर्धयति अवहीनान् करोति स वषट्कारो रिक्तो नाम'—इति भट्टभास्करः। 'षडिति वषट्कारमन्त्रः तस्य अवराधः ऋक्स्वरान्नीचैरुच्चारणम्'—इति गोविन्दस्वामी।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[इस वषट्कार का प्रयोग करने वाला होता] अपने को रिक्त [=दरिद्र] करता है, तथा यजमान भी समृद्धिहीन हो जाता है। अतः वषट्कार करने वाला होता पापी होता है। जिस यजमान के लिए वषट्कार करता है वह भी पापी होता है। इसलिए [इस वषट्कार का प्रयोग करना तो दूर है] इसकी इच्छा भी नहीं करनी चाहिए।

प्रश्नोत्तराभ्यां वषट्कारस्येष्टानिष्टफलप्राप्तिसामर्थ्यं दर्शयति—

**किं स यजमानस्य पापभद्रमाद्रियेतेति ह स्माऽऽह योऽस्य होता स्यादित्यत्रैवैनं यथा कामयेत तथा कुर्यात् ॥** इति ।

तदेतद् वाक्यं 'प्राणानां वा एतदुक्थम्'[1], इत्यस्मिन्न खण्डे प्रउगविषयं यथा व्याख्यातम्, तथैवात्र वषट्कारविषयं व्याख्यातव्यमिति ॥

[प्रश्न] इस यजमान का जो होता है वह उस यजमान का अनिष्ट या इष्ट क्या कर सकता है? [उत्तर] इस यजमान के प्रति इसी जन्म में होता जैसा चाहे कर सकता है।

अनिष्टफलसाधनत्वं दर्शयति—

**यं कामयेत यथैवानीजानोऽभूत्, तथैवेजानः स्यादिति,—यथैवास्य ऋचं ब्रूयात् तथैवास्य वषट्कुर्यात्, सदृशमेवैनं तत्करोति ॥** इति ।

'अनीजानः' अकृतयज्ञः पुरुषो यथैव फलरहितोऽभूत्, तथैवायम् 'ईजानः' कृतयज्ञोऽपि फलरहितः स्यादिति यं यजमानं होता कामयेत, अस्य यजमानस्य येन स्वरेण याज्यां ब्रूयात्, तेनैव स्वरेण वषट्कारमपि ब्रूयात्। तथा सत्येनं कृतयज्ञं यज्ञरहितेन सदृशं फलरहितं करोति ॥

जिस [यजमान] को होता चाहे कि वह अकृतयज्ञ पुरुष के समान यज्ञ करके भी यज्ञ के फल से रहित होवे तो वह इस यजमान की याज्या ऋक जिस स्वर से बोले उसी स्वर से वषट्कार भी बोले। इस प्रकार वह उससे इस [यजमान] को यज्ञ करके भी यज्ञरहित के सदृश फलरहित करता है।

अनिष्टफलान्तरसाधनत्वं दर्शयति—

**यं कामयेत पापीयान् स्यादित्युच्चैस्तरामस्य ऋचमुक्त्वा शनैस्तरां वषट्कुर्यात् पापीयांसमेवैनं तत्करोति ॥** इति ।

पापीयान् दरिद्रो नरकयोग्यो वा यजमानः स्यादिति कामयमानो होतर्चमतिशयेनोच्चैरुच्चार्य वषट्कारमतिशयेन नीचैर्ब्रूयात्। तथा सत्येनं यजमानं पापीयांसमेव करोति ॥

---

१. द्र० इतः पूर्वम्, ३८७ पृ०।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जिस [यजमान] को होता चाहे कि वह पापी [=दरिद्र या नरक के योग्य] हो जाए तो वह इस यजमान की ऋक् को अत्यन्त उच्च स्वर से कहकर वषट्कार को अत्यन्त नीच स्वर में बोले। इस प्रकार वह उससे इसको पापी ही बनाता है।

अथेष्टफलसाधनत्वं दर्शयति—

**यं कामयेत श्रेयान् स्यादिति शनैस्तरामस्य ऋचमुक्त्वोच्चैस्तरां वषट्कुर्याच्छ्रिय एवैनं तच्छ्रियामादधाति ॥ इति ।**

श्रेयान् दारिद्र्यरहितः पापरहितश्च यजमानः स्यादिति कामयमानो होतर्चं याज्यां शनैरुच्चार्यं वषट्कारमतिशयेनोच्चैरुच्चारयेत्[1]। तच्च श्रिये संपदर्थमेव भवति। 'तत्' तेन प्रयोगेणैनं यजमानं श्रियामैहिकामुष्मिकसंपदि स्थापयति ॥

जिस [यजमान] को होता चाहे कि वह दारिद्र्यरहित होवे तो वह इस यजमान की ऋक् को अत्यन्त मन्द स्वर में कहकर वषट्कार को अत्यन्त उच्च स्वर में बोले। वस्तुतः यह श्री के लिए ही होता है। इस प्रकार उस [प्रयोग] से इस यजमान में वह श्री [=ऐहिक और आमुष्मिक संपदा] की स्थापना करता है।

याज्यावषट्कारयोर्नैरन्तर्यं विधत्ते—

**संततमृचा वषट्कृत्यं संतत्यै ॥ इति ।**

ऋचा याज्यया सह संततं निरन्तरं यथा भवति तथा 'वषट्कृत्यं' वषट्कार उच्चारणीयः। तच्च यजमानस्य श्रेयः संतत्यै संपद्यते ॥

वषट्कार ऋचा के साथ ही लगातार करना चाहिए। इस प्रकार वह यजमान के श्री की निरन्तरता को संपादित करता है।

वेदनं प्रशंसति—

**संधीयते प्रजया पशुभिर्य एवं वेद ॥ ७ ॥ इति ।**

संधीयते संयुज्यते ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्यस्य तृतीयपञ्चिकायां प्रथमाध्याये (एकादशाध्याये) सप्तमः खण्डः ॥ ७ ॥ [७८]

जो इस प्रकार जानता है वह प्रजा और पशुओं से युक्त हो जाता है।

॥ इस प्रकार ग्यारहवें अध्याय के सातवें खण्ड की हिन्दी पूर्ण हुई ॥ ७ ॥

---

१. 'उच्चैस्तरां वा वषट्कारः' इति पा० सू० १.२.३५।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ अष्टमः खण्डः

अथ होतुर्वषट्कारकाले देवताध्यानं विधत्ते—

**यस्यै देवतायै हविर्गृहीतं स्यात्, तां ध्यायेद् वषट्करिष्यन्[1] साक्षादेव तद्देवतां प्रीणाति, प्रत्यक्षाद् देवतां यजति ॥ इति ।**

अध्वर्युः यां देवतामुद्दिश्य हविर्गृह्णाति, तां देवतामयं होता वषट्करिष्यन् वषट्कारायोद्युक्तः सन् ध्यायेन्मनसा देवतायाः शास्त्रीयां देवतामूर्तिमादौ कृत्वा सम्यगनुसंधाय पश्चाद् वषट्कुर्यादित्यर्थः । एवं सति 'साक्षादेव' प्रत्यक्षेणैव देवतां तर्पयति । न केवलं तृप्त्यर्थमेव देवतायाः साक्षात्कारः, किंतु प्रत्यक्षात् प्रत्यक्षेणैव देवतां यजति, यागकाले प्रत्यक्षेण पश्यतीत्यर्थः ।

ननु देवता चक्षुषा न दृश्यते, कथमस्याः प्रत्यक्षत्वमिति चेत्, नायं दोषः । मानसप्रत्यक्षस्य विवक्षितत्वात् । यथा पुरोवर्तिनो देवता चक्षुषा दृश्यते, तथैव चिन्त्यमानाऽपि मनसा दृश्यत एव[2] ॥

iii. ८ [xi. ८] [अध्वर्यु] जिस देवता के लिए हवि ग्रहण करे [होता] उस देवता का ध्यान वषट्कार करते हुए करे । इस प्रकार उससे देवता को साक्षात् ही प्रसन्न करता है; और [यागकाल में] प्रत्यक्षरूप से ही देवता का यजन करता है ।

होतुर्वषट्कारादूर्ध्वमनुमन्त्रणं विधत्ते—

**वज्रो वै वषट्कारः, स एष प्रहृतोऽशान्तो दीदाय, तस्य हैतस्य न सर्व इव शान्तिं वेद, न प्रतिष्ठां, तस्माद्धाप्येतर्हि भूयानिव मृत्युः, तस्य हैषैव शान्तिरेषा प्रतिष्ठा, वागित्येव, तस्माद् वषट्कृत्य वषट्कृत्य वागित्यनुमन्त्रयेत, स एनं शान्तो न हिनस्ति ॥ इति ।**

वषट्कारस्य वज्रत्वमसकृदुक्तम् । 'स एषः' वषट्कारात्मको वज्रः परस्योपरि प्रहृतः सन्नशान्त उग्रो दीदाय दीप्यते । तस्य वज्रस्य शान्तिमुपशमप्रकारं सर्व इव सर्वोऽपि पुरुषो न वेद । उपद्रवशान्तेरूर्ध्वं वषट्कारस्योग्रत्वपरिहारेण क्वचिदवस्थानं प्रतिष्ठा तामपि सर्वो न वेद । तस्माच्छान्तिप्रतिष्ठाविषयज्ञानाभावादेतर्ह्यपीदानीमपि लोके मृत्युर्भूयानिव बहुभूत एव प्रवर्तते । तस्य तादृशवषट्कारवज्रस्यैषैव वक्ष्यमाणा शान्तिः शमनोपायः । तथैषा वक्ष्यमाणैव प्रतिष्ठा परोपद्रवरहिताऽवस्थितिः । वागित्येवेत्यनेन साऽभिधीयते । । उपरिष्टाद् वक्ष्यमाणस्य मन्त्रस्य स्मरणमिदम् ।[3] 'वागोजः' इत्यादिको

---

१. इदमेव श्रुतिवचनं यथावदुद्धृतं निरुक्ते; ८.३.७ द्रष्टव्यम् ।

२. दुर्गाचार्यकृता निरुक्तवृत्तिश्चेहावेक्षणीया ।

३. अस्मिन्नेव खण्डे इतः परम् (४०७–८ पृ०) व्याख्यास्यमानस्येति भावः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यो मन्त्रः, स एव शमनोपायः, न त्वन्यः कश्चिदस्ति। तस्माद् 'वषट्कृत्य वषट्कृत्य' यदा यदा वषट्करोति तदा तदा वागिति मन्त्रेणानुमन्त्रयेत। स वज्रस्तावता शान्त एनं न हिनस्ति। अयमेकः पक्षः ॥

वषट्कार वज्र है। इस वज्र का प्रक्षेप बिना शान्ति के यदि किया जाय तो यह प्रदीप्त होता है। उस [वज्र] के शान्ति की प्रक्रिया को सभी पुरुष नहीं जानते और [उपद्रव शान्ति के बाद वषट्कार के उग्रत्व परिहार से कहीं अवस्थान रूप] प्रतिष्ठा को भी सभी नहीं जानते इसलिए [शान्ति और प्रतिष्ठा के अज्ञान के कारण] इस लोक में भी बहुतों की मृत्यु होती है। अतः 'वागोजः' इत्यादि आगे कहा जाने वाला मन्त्र उस वषट्कार रूप वज्र की यही शान्ति है और यही प्रतिष्ठा है। इसलिए जब जब वषट्कार करता है, तब तब होता 'वागोजः' इत्यादि मन्त्र से अनुमन्त्रण करता है। इस प्रकार शान्त होकर वह वज्र इस यजमान को नहीं मारता।

पक्षान्तरमभिप्रेत्यान्येन मन्त्रेणानुमन्त्रणं विधत्ते—

**वषट्कार मा मां प्रमृक्षो, माऽहं त्वां प्रमृक्षं, बृहता मन उपह्वये, व्यानेन शरीरं, प्रतिष्ठाऽसि, प्रतिष्ठां गच्छ, प्रतिष्ठां मा गमयेति, वषट्कारमनुमन्त्रयेत ॥ इति।**

हे वषट्कार वज्ररूप, मां यजमानं 'मा प्रमृक्षः' प्रमृष्टं विनष्टं मा कार्षीः। अहमपि त्वां मा प्रमृक्षं विनष्टं माकार्षम्। 'बृहता' प्रौढेन यज्ञेन मनस्त्वदीयमुपह्वयेऽनुजानामि। यथा व्यानेन व्यानादिवायुना सह त्वदीयं शरीरमनुजानामि। यतस्त्वं सर्वस्य प्राणिसंघस्य प्रतिष्ठाऽऽश्रयोऽसि, तदर्थं त्वमपि प्रतिष्ठां स्थैर्येणावस्थितिं गच्छ। ततो मामपि प्रतिष्ठां स्थैर्येणावस्थितिं प्रापयेत्यनेनानुमन्त्रेणानुमन्त्रयेत ॥

'हे [वज्ररूप] वषट्कार! मुझ [यजमान] को विनष्ट न करो। मैं भी तुम्हें विनष्ट नहीं करूँगा। प्रौढ़ [यज्ञ] के द्वारा मैं तुम्हें बुलाता हूँ। व्यान [वायु] के साथ तुम्हारे शरीर को मैं जानता हूँ। अतः सभी प्राणों के तुम आश्रय हो। इसलिए उसकी स्थिरता के साथ अवस्थिति को तुम प्राप्त होओ; और उसके बाद मुझे भी स्थिर अवस्थान प्राप्त कराओ'—इस मन्त्र से वषट्कार का अनुमन्त्रण करना चाहिए।

तमिमं द्वितीयं पक्षं निन्दित्वा मन्त्रान्तरं दर्शयति—

**तदु ह स्माऽऽह दीर्घमेतत् सदप्रभ्वोजः सह ओजः ॥ इति।**

तदु ह तत्रैवानुमन्त्रणे ब्रह्मवादी कश्चिदाह स्म। किमाहेति, तदुच्यते—एतत् पूर्वोक्तं मन्त्रवाक्यं दीर्घं सदपि वज्रं शमयितुमप्रभु न क्षमम्। कोऽसौ क्षमो मन्त्र इति स

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उच्यते—'ओजः सह ओजः' इति पदत्रयात्मको मन्त्रः।[1] मन्त्रार्थं तु श्रुतिरेव व्याख्यास्यति ॥

उस अनुमन्त्रण के सम्बन्ध में कोई ब्रह्मवादी कहते हैं कि यह [पूर्वोक्त] मन्त्र दीर्घ है और वज्र की शान्ति में समर्थ भी नहीं है अतः 'ओजः सह ओजः' इत्यादि—

तेन मन्त्रेणानुमन्त्रणं विधत्ते—

**इत्येव वषट्कारमनुमन्त्रयेत ॥** इति ।

एवकारः पूर्वमन्त्रव्यावृत्त्यर्थः ॥

—मन्त्र से वषट्कार का अनुमन्त्रण करना चाहिए ।

मन्त्रपदयोरर्थं दर्शयति—

**ओजश्च ह वै सहश्च वषट्कारस्य प्रियतमे तन्वौ ॥** इति ।

स्पष्टोऽर्थः ॥

वस्तुतः 'ओज' और 'सह' वषट्कार के दो अत्यन्त प्रिय शरीर हैं ।

अनेन मन्त्रेणोग्रत्वशान्तिं दर्शयति—

**प्रियेणैवैनं तद्धाम्ना समर्धयति ॥** इति ।

प्रियतमयोः शरीरयोर्नामग्रहणे सति वषट्कारस्योग्रत्वरूपः कोपो गच्छति । तत एनं वषट्कारः प्रियेण धाम्ना सर्वभूतामनुपद्रवकारिणा प्रियेण स्वरूपेण समृद्धं करोति । अत्र मन्त्रगतो द्वितीय ओजःशब्द आदरार्थं इत्यभिप्रायः ॥

[इनके नाममात्र से ही वषट्कार का क्रोध चला जाता है] इस प्रकार उससे वह इस यजमान को इसके प्रिय धाम से समृद्ध करता है ।

वेदनं प्रशंसति—

**प्रियेण धाम्ना समृध्यते य एवं वेद ॥** इति ।

जो इस प्रकार जानता है वह इसके प्रिय धाम के साथ समृद्धि को प्राप्त करता है ।

अथ प्रियशरीरद्वयवाचकाभ्यां पदाभ्यां सहितमादौ विहितं मन्त्रमेव सिद्धान्तयति—

**वाक् च वै प्राणापानौ च वषट्कारस्त एते वषट्कृते वषट्कृते व्युत्क्रामन्ति,ताननुमन्त्रयेत वागोजः सह ओजो मयि प्राणापानावित्यात्मन्येव तद्धोता वाचं च प्राणापानौ च प्रतिष्ठापयति, सर्वायुः, सर्वायुत्वाय ॥** इति ।

---

१. एष एव प्रियशरीरद्वयाभ्यामुपेतो व्यवह्रियते; तद्वक्ष्यत्यनुपदम् इहैव । तथा च कल्पः—'वागोजः सह ओजो मयि प्राणापानाविति वषट्कार मुक्त्वोक्त्वाऽनुमन्त्रयते'—इति आश्व० श्रौ० १.५.१७ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

येयं वागस्ति, यौ च प्राणापानौ स्तः, तेऽत्र त्रयो वषट्कारस्वरूपम्। यदा यदा होता वषट्करोति तदा तदा वषट्काररूपा होतुर्वाक्प्राणापानाः शरीराद् उत्क्रामन्ति, अतस्तन्मा भूदिति तांस्त्रीन् वागोज इत्यादिना प्राणापानावित्यन्तेन मन्त्रेणानुमन्त्रयेत। मन्त्रस्यायमर्थः—'ओजः' 'सह' इत्याभ्यां प्रियशरीराभ्यामुपेत हे वषट्कार त्वत्प्रसादान् मय्योजो बलमस्तु। तथा वाक्प्राणापानाः सुखेन तिष्ठन्त्विति। अनेन मन्त्रेण होता स्वात्मन्येव वाचं च प्राणापानौ च स्थापयति। तावता स्वयं सर्वायुः शतसंवत्सरपरिमितेनाऽऽयुषा युक्तो भवति। एतच्च यजमानस्य सर्वायुत्वाय संपद्यते। पूर्वत्र[1] 'वषट्कृत्य वागित्यनुमन्त्रयेत्' इति वषट्कारानुमन्त्रणयोरेककर्तृकत्वमुक्तम्। अत्राप्यात्मन्येव तद्धोतेति ब्राह्मणे होतृकर्तृकत्वं प्रतीयते। ततोऽनुमन्त्रणस्य यजमानकर्तृकत्वमन्यैरुक्तं बाधित्वा होतृकर्तृकत्वमेव द्रष्टव्यम्[2]॥

वषट्कार वाणी और प्राण एवं अपान है। जब-जब होता वषट्कार करता है; तब-तब वषट्काररूप होता की वाणी, प्राण एवं अपान शरीर से बाहर निकलते हैं। [ऐसा न हो इसलिए] उन [तीन वागित्यादि से लेकर प्राणापानौ तक मन्त्र] से 'ओज और बल रूप प्रिय शरीर से युक्त हे वषट्कार! तुम्हारी कृपा से मुझमें ओज एवं बल होवे; तथा वाणी, प्राण एवं अपान सुख से स्थित होवें'—इस मन्त्र से अनुमन्त्रण करना चाहिए। इस प्रकार इस [मन्त्र] से होता अपने में वाणी, प्राण एवं अपान को स्थापित करता है और स्वयं सौ वर्ष की आयु से युक्त होता है तथा यह यजमान को सम्पूर्ण आयु प्राप्त कराने वाला होता है।

वेदनं प्रशंसति—

**सर्वमायुरेति य एवं वेद ॥ ८ ॥** इति।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां प्रथमाध्याये (एकादशाध्याये) अष्टमः खण्डः ॥८॥ [७९]

जो इस प्रकार जानता है वह सम्पूर्ण आयु को प्राप्त करता है।

॥ इस प्रकार ग्यारहवें अध्याय के आठवें खण्ड की हिन्दी पूर्ण हुई ॥ ८ ॥

## अथ नवमः खण्डः

अथ प्रैषादीनां प्रशंसां विवक्षुरादौ प्रैषान् प्रशंसति—

**यज्ञो वै देवेभ्य उदक्रामत्, तं प्रैषैः प्रैषमैच्छन्, यत् प्रैषैः प्रैषमैच्छंस्तत्प्रैषाणां प्रैषत्वम् ॥** इति।

---

१. द्र० इतः पूर्वम्, पृ० ४०५।

२. 'इति होतुः'—इति आश्व० श्रौ० १.११.१६।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ज्योतिष्टोमाख्यो यज्ञो यदा केनचिन्निमित्तेन देवेभ्य उदक्रामत्, तदा 'तम्' उत्क्रान्तं यज्ञं 'प्रैषैः' 'होता यक्षदग्निं समिधा' इत्येवमाद्यैः[1] प्रैषमन्त्रैस्तस्य यज्ञस्य प्रैषमाह्वानमैच्छन्। यस्मादेवं तस्मात् प्रैषन्त्याह्वानं कुर्वन्त्येभिरिति व्युत्पत्त्या मन्त्राणां प्रैषनाम संपन्नम् ॥[2]

iii. ९ [xi.९] यज्ञ देवों के पास से चला गया।[3] उन्होंने उसको 'प्रैष' मन्त्रों से बुलाना चाहा; क्योंकि 'प्रैष' मन्त्रों से बुलाना चाहा अतः यही 'प्रैष' नाम का कारण है।

अथ पुरोरुचः प्रशंसति—

**तं पुरोरुग्भिः प्रारोचयन्, यत् पुरोरुग्भिः प्रारोचयंस्तत्पुरोरुचां पुरोरुक्त्वम् ॥** इति।

'वायुरग्रेगाः'—इत्याद्याः सप्त पुरोरुचः।[4] प्रउगतृचानां सप्तानां प्ररोचनहेतुत्वात्। तथाविधाभिः पुरोरुग्भिस्तं पूर्वमाहूतं यज्ञं देवाः प्रारोचयंस्तस्य यज्ञस्य रुचिमुत्पादितवन्तः। अतः पुरोरोचनाहेतुत्वात् पुरोरुगिति नाम संपन्नम् ॥[5]

उसको पुरोरुक् मन्त्रों ['वायुरग्ने' आदि] से उन्होंने प्रदीप्त किया; क्योंकि पुरोरुक् मन्त्रों से उन्होंने चमकाया इसीलिए इनको पुरो-रुक् कहते हैं।

वेदेः प्रशंसामाह—

**तं वेद्यामन्वविन्दन्, यद् वेद्यामन्वविन्दंस्तद् वेदेर्वेदित्वम् ॥** इति।

तं प्ररोचितं यज्ञं सौमिक्यां वेद्यामन्वविन्दन्ननुकूलत्वेनोपलब्धवन्तः। अतो वेदनस्य लाभस्य स्थानत्वाद् वेदिरिति नाम संपन्नम् ॥[6]

उन्होंने उसको [सौमिक] वेदि पर प्राप्त किया; क्योंकि उन्होंने वेदि पर प्राप्त किया अतः यही 'वेदि' के नाम का कारण है।

---

१. तै० ब्रा० ३.६.२.१–१२।

२. 'एकादश प्रयाजाः। तेषां प्रैषाः''' अध्वर्युप्रेषितो मैत्रावरुणः प्रेष्यति; प्रैषैर्होतारम्। होता यजत्याप्रीभिः प्रैषसलिङ्गाभिः'—इति आश्व० श्रौ० ३.२.१–५।

३. द्र० इतः पूर्वम्, पृ० २५। ४. वा० सं० १७.३१–३७।

५. 'वायुरग्रेगा यज्ञप्रीरिति सप्तानां पुरोरुचां तस्यास्तस्या उपरिष्टात् तृचं तृचं शंसेत्। वायवा याहि दर्शतेति सप्त तृचाः'—इति आश्व० श्रौ० ५.१०.४,५। द्रष्टव्य—तृचास्ते पूर्वं पृ० ३८१–३८३। 'अन्विष्यमाणे यज्ञे वै दीपा आसन् पुरोरुचः' इत्यर्थः इति षड्गुरुशिष्यः।

६ 'विद्लृ लाभे'—इत्यस्य तुदादेः 'हृपिषिरुहिवृतिविदिच्छिदिकीर्त्तिभ्यश्च'—इति (उणा० ४.११८) रूपमित्यर्थः। द्रष्टव्य—'अपरेणाहवनीयं वेदिं खनति'—इत्यारभ्य—'वेदिकरणं यथोक्तम्'—इति यावत्, कात्या० श्रौ० २.६.१–३०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ग्रहप्रशंसामाह—

**तं वित्तं ग्रहैर्व्यगृह्णत, यद् वित्तं ग्रहैर्व्यगृह्णत तद् ग्रहाणां ग्रहत्वम् ॥ इति ।**

वित्तं लब्धं तं यज्ञं ग्रहैरुपांश्वन्तर्यामादिभिः 'व्यगृह्णत' विशेषेण स्वीकृतवन्तः । तस्माद् ग्रहणस्य स्वीकारस्य हेतुत्वाद् ग्रहनाम संपन्नम् ॥[1]

उस [यज्ञ] को पाकर [उपांशु एवं अन्तर्याम आदि] ग्रहों से स्वीकृत किया; जो पाकर ग्रहों से ग्रहण है इसीलिए इसका 'ग्रह' नाम हुआ ।

निविदां प्रशंसामाह—

**तं वित्त्वा निविद्भिर्न्यवेदयन्, यद् वित्त्वा निविद्भिर्न्यवेदयंस्तन्निविदां निवित्त्वम् ॥ इति ।**

तं यज्ञं वित्त्वा लब्ध्वा ते देवाः परेभ्यो देवेभ्यो निविद्भिः पूर्वोक्तद्वादशपदादिरूपाभिः 'न्यवेदयन्' कथितवन्तः । तस्मान्निवेदनस्य परबोधनार्थकथनस्य हेतुत्वान्निविन्नाम संपन्नम् ॥[3]

उस [यज्ञ] को पाकर उन्होंने [पूर्वोक्त बारह पदों वाले] निविदों से निवेदन किया । क्योंकि पाकर निविदों से निवेदन किया इसीलिए [परबोधनार्थं कथन के कारण] इसका नाम 'निविद्' हुआ ।

अथ प्रैषकर्तुः प्रह्वत्वगुणविधानार्थं प्रस्तौति—

**महद्वाव नष्टैष्यभ्यल्पं वेच्छति, यतरो वाव तयोर्ज्याय इवाभीच्छति, स एव तयोः साधीय इच्छति ॥ इति ।**

नष्टं वस्तुं प्रयत्नेन तत्र तत्रान्विच्छतीति नष्टैषी ।[4] तादृशः पुरुषो द्विविधः । तत्र कश्चित्महद्वाव नष्टाद् वस्तुनोऽधिकमेवाभीच्छति । नष्टादल्पं वाऽन्यः कश्चिद् इच्छति । तयोर्मध्ये 'यतरो वाव' य एवं पुरुषो 'ज्याय इव' महदेवेच्छति, 'स एव' पुरुषस्तयोर्मध्ये साधीयोऽत्यन्तं साधु वस्त्विच्छति । अल्पं कामयमानस्तु न तथेत्यर्थः ॥

नष्ट वस्तु का अन्वेषक, [खोई हुई वस्तु से] अधिक पाना चाहता है या दूसरा जो उससे कम पाना चाहता है; उन दोनों के मध्य जो पुरुष अधिक-सी वस्तु चाहता है, वही उन दोनों के मध्य साधु वस्तु चाहता है ।

---

१. द्र० इतः पूर्वम्, ३७९ पृष्ठे २ टि० ।
२. द्र० इतः पूर्वम्, पृ० ३४५ ।
३. द्र० इतः पूर्वम्, ३४३ । 'पच्छो निविदः शस्यन्ते'—इति चैहैवैकादशखण्डे वक्ष्यति । 'पदैराप्नोति निविदः'—इति हि वा० सं० १९.२५ ।
४. नष्टैषी नष्टान्वेषणकारी । अल्पं फलादि महद् रत्नादिकं वा अभीच्छति प्रार्थयते'—इति षड्गुरुशिष्यः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्त्वेवं लौकिकन्यायः, किं प्रकृते ? इत्याशङ्क्याऽऽह—

**य उ एव प्रैषान् वर्षीयसो वर्षीयसो वेद, स उ एव तान् साधीयो वेद, नष्टैष्यं ह्येतद् यत्प्रैषाः ॥** इति ।

'य उ एव' यस्तु प्रैषवक्ता प्रैषमन्त्रान् वर्षीयसो वर्षीयसोऽतिप्रवृद्धान् वेद । सर्वेषु प्रैषमन्त्रेषु प्रवृद्धत्यार्थं वीप्सा प्रयुक्ता । प्रैषमन्त्राः कस्मात् प्रवृद्धः ? इति चेत्, पुरोनुवाक्यानां संनिहितत्वात् ताभ्योऽधिकाः 'दीर्घाः' इत्यवगन्तव्यम् । 'स उ एव' दोर्घत्वाभिज्ञ एव तान् प्रैषमन्त्रान् साधीयो वेदातिशयेन सम्यक् वेद । ननु लौकिकन्यायोदाहरणे नष्टवस्तुनोऽन्वेषणमुदाहृतम् । इह तु प्रैषमन्त्राणामभिवृद्धिरुक्तेत्यतो लौकिकेनासंगतमिति चेत्, संगतमेवैतत्—'हि' यस्माद् ये प्रैषाः सन्ति, ते 'नष्टैष्यं'[1] 'नष्टस्य' यज्ञस्यान्वेषणहेतवः ॥

जो [प्रैषवक्ता पुरोनुवाक्या के सन्निहित होने से] अतिप्रवृद्ध प्रैष मन्त्रों को जानता है, वही उन [प्रैष-मन्त्रों] को अत्यन्त सम्यक् रूप से जानता है; क्योंकि जो प्रैष हैं वे नष्ट [यज्ञ] के अन्वेषण के हेतु हैं ।

पुरोनुवाक्याभ्यो दीर्घत्वेन प्रैषान् प्रशस्य तदुच्चारणकाले प्रह्वत्वं विधत्ते—

**तस्मात् प्रह्वस्तिष्ठन् प्रेष्यति ॥ ९ ॥** इति ।

यस्मादतिशयेन वृद्धाः प्रैषास्तस्मात् तत्पाठकाले मैत्रावरुणः प्रह्वः[2] विनयेनैव किंचिदवनतशिरास्तिष्ठन्ननुपविष्टो मन्त्रान् पठेत् । यथा लोके पितृगुर्वादीन् दृष्ट्वा प्रह्वस्तिष्ठति तद्वत्,—यथा वा नष्टवस्त्वन्विच्छन् प्रह्वत्वादिना गुप्तश्चरति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां प्रथमाध्याये (एकादशाध्याये) नवमः खण्डः ॥ ९ ॥ [ ८० ]

[क्योंकि प्रैष अत्यन्त वृद्ध हैं] इसलिए विनय के सहित अवनत शिर होकर प्रैष मन्त्रों का पाठ करना चाहिए ।

॥ इस प्रकार ग्यारहवें अध्याय के नौवें खण्ड की हिन्दी पूर्ण हुई ॥ ९ ॥

## अथ दशमः खण्डः

अथ निविदां सवनभेदेन स्थानभेदं विवक्षुः प्रातःसवने स्थानविशेषं विधत्ते—

**गर्भा वा एत उक्थानां यन्निविदस्तद् यत् पुरस्तादुक्थानां प्रातःसवने धीयन्ते, तस्मात् पराञ्चो गर्भा धीयन्ते, पराञ्चः संभवन्ति ॥** इति ।

---

१. 'नष्टैष्यं नष्टस्यान्वेषणसाधनम् । करणे कृत्यः'—इति भट्टभास्करः । 'एतदेते । यत् ये । जसोऽम् । नष्टैष्याः । इषेः कर्मणि ण्यत्'—इति षड्गुरुशिष्यः ।

२. द्र० इतः पूर्वम्, पृ० ३४५ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'अग्निर्देवेद्धः' इत्यादयो निविदः सन्ति ।[1] एते निविद्विशेषा उक्थानां शास्त्राणां गर्भा वै गर्भस्थानीया एव । तथा सति प्रातःसवनप्रयोगे शस्त्राणां पुरस्तान्निविदो 'धीयन्ते' स्थाप्यन्ते, स्थापयेयुरित्यर्थः । यस्माद् गर्भस्थानीयानां पुरस्थापनं तस्माल्लोकेऽपि गर्भाः पराञ्चः स्त्रीशरीरे परमुत्कृष्टं पुरोभागमञ्चन्तो गच्छन्तो धीयन्ते, धार्यन्ते प्रसवकालेऽपि पराञ्चः पुरोभागं गच्छन्त उत्पद्यन्ते ॥

[निविद्]—

iii. १० [xi. १०] जो ये निविद् हैं वे शस्त्रों के गर्भ [के समान] हैं। प्रातःसवन में वे शस्त्रों के पहले रक्खे जाते हैं; इसीलिए [लोक में भी स्त्री-शरीर में पहले स्थापित] गर्भ में बच्चे नीचे को सिर किए हुए रहते हैं और प्रसव काल में भी पुरोभाग को आगे करके [नीचे को सिर किए हुए] उत्पन्न होते हैं।

माध्यंदिनसवने स्थानविशेषं विधत्ते—

**यन्मध्यतो मध्यंदिने धीयन्ते तस्मात् मध्ये गर्भा धृताः ॥ इति ।**

यस्माच्छस्त्राणां मध्ये निविदः प्रयुक्ताः, तस्माद् गर्भा उदरमध्ये धीयन्ते ॥

क्योंकि माध्यन्दिनसवन में वे [निविद्] शस्त्र के मध्य में रक्खे जाते हैं; इसीलिए गर्भ भी [उदर के] मध्य में धृत होते हैं।

तृतीयसवनस्थानविशेषं विधत्ते—

**यदन्ततस्तृतीयसवने धीयन्ते, तस्माद् अमुतोऽर्वाञ्चो गर्भाः प्रजायन्ते, प्रजात्यै ॥ इति ।**

'अन्ततः शस्त्रस्यान्तिमे देशे एकामृचं शिष्ट्वा निविदः पठितव्या । यस्मादेता अन्तिमदेशभागिन्यः तस्माल्लोकेऽपि गर्भा 'अमुतः' निवासस्थानान्मातुरुदरमध्यात् 'अर्वाञ्चः' अधोभागगताः प्रजायन्ते । तच्च यजमानस्य प्रजननार्थं भवति ॥

क्योंकि तृतीयसवन में वे [निविद्] शस्त्र के अन्तिम भाग में रक्खे जाते हैं; इसीलिए लोक में भी गर्भ [माता के उदर रूप] निवासस्थान से नीचे की ओर होकर उत्पन्न होते हैं। [इस प्रकार यह यजमान के] प्रजननार्थ होता है।

वेदनं प्रशंसति—

**प्रजायते प्रजया पशुभिर्य एवं वेद ॥ इति ।**

जो इस प्रकार जानता है वह प्रजा और पशुओं से वृद्धि को प्राप्त होता है।

सवनत्रये विहितं निविदां स्थानत्रयं प्रशंसति—

**पेशा वा एत उक्थानां यन्निविदः, तद् यत्पुरस्तादुक्थानां प्रातःसवने धीयन्ते, यथैव प्रवयणतः पेशः कुर्यात् तादृक् तद्, यन्मध्यतो मध्यंदिने धीयन्ते**

---

१. 'दक्षिणतो होतृषदनात् प्रह्वोऽवस्थाय....' आश्व० श्रौ० ३.१.२० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**यथैव मध्यतः पेशः कुर्यात् तादृक् तद्, यदन्ततस्तृतीयसवने धीयन्ते, यथैवाव प्रज्जनतः पेशः कुर्यात् तादृक् तत् ॥** इति ।

'पेशाः' अलंकाराः[1] । 'वेञ् तन्तुसंताने' इति धातोर्वयशब्दोत्पत्तिः । कुविन्दानां[2] यत्प्रारम्भे वस्त्र वयनं तत्प्रवयणम् । लोके यथैव वाससां[3] प्रवयणतो वयनप्रारम्भे पेशोऽलंकारं कुर्यात्; वर्णान्तरोपेतैस्तन्तुभिरलंकारः; तथैव प्रातःसवने शस्त्राणां पुरतो निवित्पठनं भवति । तच्च[4] वस्त्रस्थानीयानामुक्थानां प्रथमभागेऽलंकाराय संपद्यते[5] । शस्त्रमध्ये तत्पठनम्, वस्त्रमध्ये वर्णान्तरेणालंकारसमम् । एवं 'प्रज्जनः' वस्त्रस्यान्तभागः[6], तत्र यथा वर्णान्तरेणालंकारस्तादृगुक्थानामन्ते निवित्पठनम् ॥

जो यह निविद् हैं, वे 'उक्थों' के अलङ्करण हैं; जैसे लोक में बुनकर वस्त्र बुनते समय कपड़े के प्रारम्भ में अलङ्करण करता है वैसे ही वे प्रातःसवन में उक्थों के प्रारम्भ में रक्खे जाते हैं। जैसे बुनकर कपड़े के मध्य में अलङ्करण करता है वैसे ही वे मध्यन्दिनसवन में शस्त्र के मध्य में रक्खे जाते हैं। जैसे बुनकर कपड़े के अन्तिम भाग में अलङ्करण करता है वैसे ही सायंसवन में वे शस्त्र के अन्तिम भाग में रक्खे जाते हैं।

वेदनं प्रशंसति—

**सर्वतो यज्ञस्य पेशसा शोभते य एवं वेद ॥ १० ॥** इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां प्रथमाध्याये (एकादशाध्याये) दशमः खण्डः ॥ १० ॥ [ ८१ ]

जो इस प्रकार जानता है वह यज्ञ के अलङ्करण से चारों ओर शोभित होता है।

॥ इस प्रकार ग्यारहवें अध्याय के दसवें खण्ड की हिन्दी पूर्ण हुई ॥ १० ॥

## अथ एकादशः खण्डः

अथ निविद्विषयं बहुवक्तव्यं विवक्षुरादौ सूर्यसादृश्येन निविदः प्रशंसति—

**सौर्या वा एता देवता यन्निविदस्तद्यत्पुरस्तादुक्थानां प्रातःसवने धीयन्ते, मध्यतो मध्यंदिनेऽन्ततस्तृतीयसवन आदित्यस्यैव तद्व्रतमनु पर्यावर्तन्ते ॥** इति ।

---

१. पिश अवयवे असुन्नन्ताज्जसः शौ शेश्छन्दसि बहुलमिति लोपः । यद्वा, घञि रूपं द्रष्टव्यम्'–इति भट्टभास्करः ।

२. भ्वा० १००६ । 'वय शब्दनिष्पत्तिः । कुविन्दस्य' इति वा पाठः ।

३. 'वाससः' इति वा पाठः ।

४. 'तेन' इति वा पाठः ।

५. 'अलङ्काराः सम्पद्यन्ते' इति वा पाठः ।

६. 'अवसितं प्रजननमवप्रजननम् अवसानम् । द्वितीयो जकार उपजनः । यद्वा, प्रतिमुखं जननं प्रजननम् । सर्वात्मना समाप्तिः । प्रतेरन्त्यलोपश्छान्दसः'–इति भट्टभास्करः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

या निविदः सन्ति, ता एताः सूर्यसंबन्धिन्य एव देवताः। यथा सूर्यः पुरस्तादुदेत्यथ मध्ये स्थित्वा पश्चादन्तेऽस्तमेति, एवं निविदोऽपि पुरस्तान्मध्येऽन्ते च स्थाप्यन्ते। तस्मादादित्यस्यैव व्रतमाचरणमनु निविदः पर्यावर्तन्ते ॥[१]

iii. ११ [xi. ११] जो ये निविद् हैं वे सूर्यसम्बन्धी देव हैं। [जिस प्रकार सूर्य पहले उदित होते हैं, बाद में मध्य में स्थित होकर अन्त में अस्त हो जाते हैं, वैसे ही] ये जो प्रातःसवन में उक्थों के आरम्भ में रखे जाते हैं, और मध्यन्दिनसवन में मध्य में, उसके बाद तृतीयसवन में, वह आदित्य के ही मार्ग का पर्यावर्तन करते हैं।

तासां निविदां द्वादशपदरूपाणामेकैकस्मिन् पादेऽवसानं विधत्ते—

**पच्छो वै देवा यज्ञं समभरंस्तस्मात् पच्छो निविदः शस्यन्ते ॥** इति।

देवाः पुरा यज्ञं पच्छः पादशः समभरन्नेकैकभागक्रमेण संपादितवन्त इत्यर्थः। तस्मादेता निविदोऽपि पादशः शंसनीयाः ॥[२]

देवों ने प्राचीनकाल में यज्ञ को पादशः अर्थात् पाद-पाद के अवसान पर सम्पादित किया। इसलिए निविद् का भी पादशः शंसन करना चाहिए।

निविदां शंसकाय होत्रेऽश्वदानं विधत्ते—

**यद् वै तद् देवा यज्ञं समभरंस्तस्माद् अश्वः समभवत्, तस्मादाहुरश्वं निविदां शंस्त्रे दद्याद् इति तदु खलु वरमेव ददति ॥** इति।

'यद्वै' यस्मिन्नेव देशे तत् तदा देवा यज्ञं संपादितवन्तः, तस्माद् देशाद् अश्व उत्पन्नः। अत एवाभिज्ञा आहुः। किमाहुरिति, तदुच्यते—निविदां शंसकायाश्वं दद्यादिति। तदु खलु तेनैवाश्वदानेन 'वरमेव' श्रेष्ठमेव वस्तु 'ददति' प्रयच्छन्ति ॥

तब जिस प्रदेश में देवों ने यज्ञ का सम्पादन किया उस स्थान से अश्व उत्पन्न हुआ। इसीलिए अभिज्ञजन कहते हैं—'निविद् का शंसन करने वाले को अश्व देना चाहिए; [क्योंकि यजमान] उस [अश्वदान] के द्वारा श्रेष्ठ वस्तु ही देता है।

द्वादशसु निवित्पदेषु कस्यापि पदस्यातिक्रमं निषेधति—

**न निविदः पदमतीयात् ॥** इति।

---

१. 'निविदोऽपि 'पच्छः' एकैकस्मिन् पादेऽवसाय शंसनीयाः' इति वा पाठः।

२. सूर्यस्य व्रतं सौरम्, तत्र साध्व्यः सौर्याः सूर्येण तुल्यव्रताः। निविदो नाम सौर्याः सूर्येण तुल्यकर्माणो भवन्ति। तदेवाह—आदित्यस्यैव तद् व्रतं कर्मानु पर्यावर्तन्ते पर्यायेणानुवर्तन्तेऽनुगच्छन्ति। तत्प्रकारश्च तद्यत् पुरस्तादित्यादिना दर्शितः। यदा पुनः सूर्यस्येमा इत्यर्थे तस्येदमित्यण् क्रियते, तदापि ङीपि सूर्यतिष्यागस्त्येति य लोपे सौर्यो निविदः स्युः न सौर्याः। तस्मात् सौरे कर्मणि साध्व्य इति तत्र साधुरिति यद् भवति इति वेदितव्यम्'—इति भट्टभास्करः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एकमपि पदं न परित्यजेदित्यर्थः ॥

**निविद् के एक भी पद को नहीं छोड़ना चाहिए ।**

विपक्षबाधकपूर्वं पूर्वपक्षं निगमयति—

**यन्निविदः पदमतीयाद्, यज्ञस्य तच्छिद्रं कुर्याद्; यज्ञस्य वै छिद्रं स्रवद् यजमानोऽनु पापीयान् भवति, तस्मान्न निविदः पदमतीयात् ॥** इति ।

पदस्य परित्यागे यज्ञस्य छिद्रं भवति । तच्च स्रवति । ततो यजमानो निन्द्यो[1] भवति । तस्मान्निवित्पदं न परित्यजेत् ॥

**क्योंकि जो निविद् के पद को छोड़ता है तो मानो उससे वह यज्ञ में छिद्र करता है; और यज्ञ में छिद्र हो जाने से यजमान निन्द्य होता है । इसीलिए निविद् के पद को नहीं छोड़ना चाहिए ।**

पदानां विपर्यासं[2] निषेधति—

**न निविदः पदे विपरिहरेद्, यन्निविदः पदे विपरिहरेन् मोहयेद् यज्ञं, मुग्धो यजमानः स्यात्, तस्मान्न निविदः पदे विपरिहरेत् ॥** इति ।

विपरिहारो विपर्यासः । निविदः संबन्धि यत्पदद्वयं तन्न विपरिहरेद् विपरीततया न पठेत् । तथा सत्ययं होता 'यज्ञं मोहयेत्' यज्ञे भ्रान्ति जनयेत् । ततो यजमानोऽपि मुग्धो भ्रान्तः स्यात्, तस्माद्विपर्यासो न कर्तव्यः ॥

**निविद् के दो पदों को उलट-पलट कर न पढ़े । जो निविद् के दो-पदों को विपर्यास करके पढ़ता है वह होता मानो यज्ञ में भ्रान्ति उत्पन्न कर देता है, और यजमान भी भ्रान्त हो जाता है अतः निविद् के दो-पदों को विपरीततया नहीं पढ़ना चाहिए ।**

निवित्पदसंश्लेषणं[3] निषेधति—

**न निविदः पदे समस्येद्, यन्निविदः पदे समस्येद् यज्ञस्य तदायुः संहरेत्, प्रमायुको यजमानः स्यात्, तस्मान्न निविदः पदे समस्येत् ॥** इति ।

पदयोः संश्लेषणे यज्ञस्याऽऽयुः संहृतं भवेत्, यज्ञो विनश्येदित्यर्थः । ततो यजमानो म्रियेत् । तस्मात् पदद्वयं न संश्लेषयेत् ॥

**निविद् के दो-पदों को मिलाना भी नहीं चाहिए, जो निविद् के दो-पदों को मिलाता है वह मानो उस संश्लेष से यज्ञ की आयु को विनष्ट करता है और यजमान भी मृत्यु को प्राप्त करता है । अतः निविद् के दो-पदों को संश्लिष्ट नहीं करना चाहिए ।**

---

१. 'दरिद्रो' इति वा पाठः ।    २. 'व्युत्क्रमन्यासम्' इति वा पाठः ।
३. 'पदयोः परस्परं श्लेषम्' इति वा पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अनेन निषिधेन सर्वेषां पदानां परस्परविश्लेषणप्राप्तौ मध्यमयोर्द्वयोः पदयो संश्लेषणं विधत्ते—

**प्रेदं ब्रह्म प्रेदं क्षत्रमित्येते एव समस्येद्, ब्रह्मक्षत्रयोः संश्रित्यैः, तस्माद् ब्रह्म च क्षत्रं च संश्रिते ॥** इति ।

निवित्पदानां मध्ये 'प्रेदं ब्रह्म' इत्येकं पदम्, 'प्रेदं क्षत्रम्' इत्यपरं पदम् । ते उभे एव संश्लेषयेत् । एवकार इतरसंश्लेषव्यावृत्त्यर्थः । तदेतन्मेलनं ब्राह्मणक्षत्रियजात्योः परस्परा श्रयणाय भवति । तस्मादेव लोके जातिद्वयं परस्परमाश्रित्य तिष्ठति । ब्राह्मणो धर्मं प्रवर्तयति । क्षत्रियस्तस्य रक्षां करोति ॥

[निविदों में] केवल 'प्रेदं ब्रह्म' और 'प्रेदं क्षत्रम्'—इन दो-पदों को ही संश्लिष्ट करना चाहिए; क्योंकि यह संश्लेष ब्राह्मण और क्षत्रिय जाति के परस्पर आश्रयण के लिए होता है । इसीलिए लोक में ब्राह्मण और क्षत्रिय दोनों ही जाति परस्पर आश्रित होकर रहती हैं [क्योंकि ब्राह्मण धर्म का प्रवर्तन करता है और क्षत्रिय उसकी रक्षा करता है] ।

निवित्पदानां प्रक्षेपस्याऽऽश्रयभूते सूक्ते कंचिन्नियमं विधत्ते—

**न तृचं न चतुर्ऋचमतिमन्येत निविद्धानमेकैकं वै निविदः पदमृचं सूक्तं प्रति, तस्मान्न तृचं न चतुर्ऋचमतिमन्येत, निविद्धानं निविदा ह्येव स्तोत्र-मतिशस्तं भवति ॥** इति ।

तिस्र ऋचो यस्मिन् सूक्ते तत् 'तृचम्'[1] । चतस्र ऋचो यस्मिन् सूक्ते तच्चतुर्ऋचम् । तादृशमुभयविधं सूक्तमतिक्रम्य निविद्धानं निवित्पदानां धानं प्रक्षेपं 'न मन्येत' न चिन्त येत् । एतदुक्तं भवति—त्रिचतुरमात्रर्चात् सूक्तादर्वाचीने सूक्ते निविदो न दध्यात्, किंतु भूयस्येव दध्यादिति । 'निविदः' संबन्धि यदेकैकमेव पदं तदेव प्रत्यृचं प्रतिसूक्तं च समर्थं भवति । यस्मादीदृशं सामर्थ्यं तस्मादित्युक्तार्थोपसंहारः । अधिके सूक्ते निवित्पदेषु प्रक्षिप्तेषु निविदैव स्तोत्रातिशंसनं कृतं भवति । न तु सूक्तम् ऋचं वापेक्षेत तदित्यर्थः ॥

निविद् के पदों के प्रक्षेप के लिए तीन ऋचाओं वाले अथवा चार ऋचाओं वाले सूक्त को अतिक्रमण करके नहीं जाना चाहिए । निविद् के जो एक-एक पद हैं, वे ही ऋचा के और सूक्त के प्रतिरूप हैं । इसलिए निविद् के पदों के प्रक्षेप के लिए तीन ऋचाओं वाले अथवा चार ऋचाओं वाले सूक्त नहीं छोड़ना चाहिए; क्योंकि निविद् के द्वारा [अधिक ऋचा वाले सूक्त में] स्तोत्र बढ़ जाता है ।

तृतीयसवने विशेषं विधत्ते—

**एकां परिशिष्य तृतीयसवने निविदं दध्यात ॥** इति ।

---

१. द्र० इतः पूर्वम् पृ० ३८० टि० ४ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सूक्ते येयमृगन्त्या, तामवस्थाप्य ततः पूर्वमेव तृतीयसवने निविदः प्रक्षिपेत् ॥

तृतीयसवन में एक [सूक्त की अन्तिम] ऋचा को छोड़कर निविद् का प्रक्षेप करना चाहिए ।

विपक्षबाधपुरःसरं स्वपक्षमुपसंहरति—

**यद् द्वे परिशिष्य दध्यात् प्रजननं तदुपहन्याद्, गर्भैस्तत्प्रजा व्यर्धयेत् तस्मादेकामेव परिशिष्य तृतीयसवने निविदं दध्यात् ॥ इति ।**

यदि 'द्वे' ऋचौ परिशिष्य ततः पुरा निविदं दध्यात् तदानीं प्रजोत्पादनं[1] विनाशयेत् । पुत्रादयः प्रजा गर्भैर्व्यर्धयेद् वियुक्ताः कुर्यात् । प्रजननमुपहन्यादित्यनेन यजमानस्य प्रजोत्पादनराहित्यमुक्तम् । प्रजा व्यर्धयेदित्यनेन पूर्वमुत्पन्नानां पुत्रादीनामपत्यराहित्यम् । तस्मादित्युपसंहारः ॥

यदि दो ऋचाओं को छोड़कर उससे पहले निविद् रखता है तो वह प्रजोत्पादन [शक्ति] को उससे विनष्ट करता है और उससे [पुत्र आदि] प्रजा को गर्भ से अलग करता है । इसीलिए तृतीयसवन में एक ही ऋचा को छोड़कर निविद् रखना चाहिए ।

अथ निविद्धानीयेन सूक्तेन निविदतिक्रमं निषेधति—

**न सूक्तेन निविदमतिपद्येत ॥ इति ।**

यत्सूक्तं निविद्धानार्हं निविदमतिक्रमति, तेन सूक्तेन 'न पद्येत' निवित्प्रक्षेपं परित्यज्य केवलं तत्सूक्तं न पठेदित्यर्थः ॥

[जो निवित्प्रक्षेपार्थं सूक्त है उस] सूक्त से निवित्प्रक्षेप छोड़कर [मात्र उस सूक्त का] पाठ नहीं करना चाहिए ।

प्रमादान्निवित्प्रक्षेपविस्मृतौ सत्यां पुनस्तत्सूक्ते निविदं प्रक्षिप्य पाठो भ्रान्त्या प्रसक्तस्तं निषेधति—

**येन सूक्तेन निविदमतिपद्येत, न तत्पुनरुपनिवर्तेत, वास्तुहमेव तत् ॥ इति ।**

निविदमतिक्रम्य परित्यज्य निवित्प्रक्षेपयोग्येन 'येन सूक्तेन' पद्येतानुष्ठानं प्राप्नुयात् 'तत्' विस्मृतनिवित्कं सूक्तं 'पुनर्नोपनिवर्तेत' भूयो निविदं प्रक्षिप्य न पठेत् । तत्र हेतुरुच्यते—'तत्' विस्मृतनिवित्कं सूक्तं वास्तुहमेव । वास्तुशब्देन निविदः स्थानमुच्यते । तस्य स्थानस्य घातकं 'तत्सूक्तम्' ततः पुनः पाठस्य न योग्यत्वम् ॥

[निवित्प्रक्षेपार्थं] जिस सूक्त से निविद् छोड़कर अनुष्ठान करता है उस [विस्मृत निविद् वाले] सूक्त का पुनः [निविद् रखकर] पाठ नहीं करना चाहिए; क्योंकि वह [सूक्त] वास्तु का अर्थात् निविद् के स्थान का घातक ही है [स्थानभ्रष्ट-सूक्त पाठ के योग्य नहीं हैं] ।

---

१. 'प्रजोत्पादनसाधनं' इति वा पाठः ।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

का तर्हि तदानीं निविदो गतिरित्याशङ्क्याऽऽह—

**अन्यत् तद्दैवतं तच्छन्दसं सूक्तमाहृत्य तस्मिन् निविदं दध्यात् ॥ इति ।**

पूर्वस्य निविद्धानीयस्य सूक्तस्य देवता यादृशी, छन्दश्च यादृशं, तथाविधाभ्यां देवता-छन्दोभ्यां युक्तमन्यत् किंचित् सूक्तमाहृत्य तस्मिन् सूक्ते निविदं प्रक्षिपेत् ॥

उसी देवता और उसी छन्द का दूसरा कोई सूक्त लेकर उसमें निविद् रखना चाहिए।

तत्र कंचिद् विशेषं विधत्ते—

**'मा प्र गाम पथो वयम्' इति पुरस्तात् सूक्तस्य शंसति ॥ इति ।**

यस्मिन्नाहृते नूतने सूक्ते निवित् प्रक्षिप्यते, तस्य सूक्तस्य पुरस्तात् तत्पाठात् पूर्वं 'मा प्र गाम'[1] इति सूक्तं शंसेत् । वयं होतारः पथः शंसनमार्गात् प्रभ्रष्टाः सन्तो मा प्र गाम प्रभ्रंशं मा प्राप्नवामेति तस्य पादस्यार्थः । मार्गभ्रंशदोषोऽस्माकं मा भूदित्यभिप्रायः ॥

'हम [होता जो शंसन मार्ग से भ्रष्ट हुए हैं] मार्ग-भ्रंशरूप दोष को न प्राप्त करें'—आहृत नूतन सूक्त के पहले इस सूक्त का पाठ करता है।

द्वितीयपादस्य तात्पर्यं दर्शयति—

**पथो वा एष प्रैति, यो यज्ञे मुह्यति 'मा यज्ञादिन्द्र सोमिनः' इति यज्ञादेव तन्न प्रच्यवते ॥ इति ।**

मा यज्ञादित्यादिर्द्वितीयः पादः, तस्यायमर्थः—हे इन्द्र सोमिनः सोमयुक्ताद् यज्ञात् मा प्र गामेत्यनुवर्तते, प्रभ्रंशं मा प्राप्नवामेति । यः पुमान् यज्ञे मुह्यति भ्रान्तिं प्राप्नोति एष पुमानवश्यं पथः प्रैत्येव मार्गाद् प्रभ्रश्यत्येव । अतो 'मा प्र गाम पथः' इत्येतावता न पर्याप्तं किंतु मार्गभ्रंशपरिहारदार्ढ्यार्थं मा यज्ञादित्यपि पठनीयम् । तत्पादपाठेनायं यज्ञान्न प्रच्यवते । अथवा 'पथो वा एषः' इत्यर्थवादः पूर्वपादशेषत्वेन व्याख्येयः ॥

जो यज्ञ में भूल जाता है वह अवश्य ही मार्ग से भ्रान्त हो जाता है। 'हे इन्द्र, सोमयुक्त यज्ञ से हम भ्रान्त न होवें'—इस [द्वितीय पाद] के पाठ से वह यज्ञ से भ्रान्त नहीं होता है।

तृतीयपादमनूद्य व्याचष्टे—

**'माऽन्तः स्थुर्नो अरातयः' इत्यरातीयत एव तदपहन्ति ॥ इति ।**

नोऽस्माकमन्तर्मध्येऽरातयः शत्रवो 'मा स्थुः' मा तिष्ठन्तु । तत्पादपाठेनारातीयतः शत्रुत्वमिच्छत एव पुरुषानपहन्ति ॥

'हम लोगों के मध्य शत्रु खड़े न होवें' इस [तृतीय पाद] के पाठ से वह शत्रुता करने वाले पुरुषों का विनाश करता है।

---

१. ऋ० १०. ५७. १ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्मिन् सूक्ते[1] द्वितीयामृचमनुवदति—

**'यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः। तमाहुतं नशीमहि' इति॥ इति॥**

यः पुत्रो 'यज्ञस्य प्रसाधनः' कुलपारम्पर्येण यज्ञस्य प्रकर्षेण साधकः। अत एव तन्तुर्देवेष्वाततो दीर्घतन्तुरिव देवेषु विस्तारितः। तं तथाविधं पुत्रमाहुतमाह्वानेन संपादितदेवतं नशीमहि। अत्र निषेधार्थः कश्चिन्नकारोऽध्याहर्तव्यः, नैव नाशयाम इत्यर्थः। अस्माभिः प्रमादे कृतेऽप्यस्मत्पुत्रस्य देवेषु प्रचारात् स प्रमादः समाधीयत इत्यर्थः॥

**'जो [पुत्र कुल परम्परा से] यज्ञ का प्रकृष्ट साधक दीर्घ तन्तु के समान देवों में विस्तृत है ऐसे आहुत पुत्र का हम विनाश न करें'—सूक्त की इस द्वितीय ऋचा का पाठ करता है।**

अत्र तन्तुशब्दस्य तात्पर्यं दर्शयति—

**प्रजा वै तन्तुः, प्रजामेवास्मा एतत्संतनोति॥ इति।**

कुलाचाराद्यविच्छेदहेतुत्वात् पुत्ररूपा प्रजा तन्तुशब्देनोच्यते।[2] तथा सत्येतत्पाठेन 'प्रजामेव' पुत्रादिरूपामेव 'अस्मै' यजमानाय संतनोत्यविच्छिन्नां करोति॥

**[कुलाचारादि का अविच्छेदक होने के कारण पुत्र रूप] प्रजा ही 'तन्तु' शब्द से अभिहित है। इसके पाठ से वह इस यजमान की प्रजा को ही अविच्छिन्न करता है।**

तृतीयस्या[3] ऋचः पूर्वार्धमनुवदति—

**'मनो न्वा हुवामहे नाराशंसेन सोमेन' इति॥ इति।**

आप्यायिताश्चमसा नाराशंसाः, तत्सम्बन्धिना सोमेन नु क्षिप्रमेव 'मनः' अस्मदीयमाहुवामह आह्वयामि॥

**'नाराशंस सम्बन्धी सोम के द्वारा शीघ्र ही हम अपने मन का आह्वान करते हैं'—इस तृतीय ऋचा का पाठ करता है।**

अस्यार्धस्य तात्पर्यं दर्शयति—

**मनसा वै यज्ञस्तायते मनसा क्रियते॥ इति।**

सर्वो यज्ञो मनसैव तायते विस्तार्यते; मनःपूर्वकत्वादितरेन्द्रियप्रवृत्तेः। तस्मिंश्च प्रसारिते यज्ञे यो यः कर्तव्यविशेषोऽस्ति स सर्वोऽपि मनसा क्रियते। तस्मान् मनस आह्वानं यागे-ज्ञाने वा युक्तम्॥

**समस्त यज्ञ मन के द्वारा ही विस्तृत किया जाता है और [जो कुछ भी यज्ञ में कर्तव्य होता है वह] मन से ही किया जाता है।**

---

१. ऋ० १०.५७.२। २. 'विविक्षिता' इति वा पाठः। ३. ऋ० १०.५७.३।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्य सूक्तस्य प्रथमतः पाठे प्रयोजनं दर्शयति—

**सैव तत्र प्रायश्चित्तिः, प्रायश्चित्तिः ॥ ११ ॥** इति ।

मा प्र गामेत्यादिसूक्तस्योक्तिरेव निविदतिक्रमरूपप्रत्यवायस्य प्रायश्चित्तिः । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां प्रथमाध्याये (एकादशाध्याये) एकादशः खण्डः ॥ ११ ॥ [८२]

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यदिशतो सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये ऐतरेयब्राह्मणभाष्यस्य कृतौ तृतीयपञ्चिकायाः प्रथमोऽध्यायः (एकादशोऽध्यायः) समाप्तः ॥ ११ ॥

[निविद् के अतिक्रमण रूप प्रत्यवाय का] वहाँ वह ['मा प्र गाम' आदि सूक्त का पाठ] ही प्रायश्चित्त है ।

॥ इस प्रकार ऐतरेय ब्राह्मण की तृतीय पञ्चिका के प्रथम (ग्यारहवें) अध्याय की हिन्दी पूर्ण हुई ॥ १ ॥

---

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ द्वितीयोऽध्यायः

## प्रथमः खण्डः

—: ० :—

# [ अथ द्वादशोऽध्यायः

## प्रथमः खण्डः ]

एकादशेऽथ प्रउगप्रशंसा ततो वषट्कारमनुस्तुतिं च ।

तत्कर्तुराहमंन्यनुमन्त्रणं च ततो निवित्प्रैषविशेषमाहुः ॥ १ ॥

अथाऽऽहावप्रतिगरादयो वक्तव्याः, तत्र प्रातःसवने होतुराहाववचनमध्वर्योः प्रतिगरं च विधत्ते—

**देवविशः कल्पयितव्या इत्याहुश्छन्दश्छन्दसि प्रतिष्ठाप्यमिति शोंसावो-मित्याह्वयते प्रातःसवने त्र्यक्षरेण, शंसाऽऽमोदैवोमित्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण, तदष्टाक्षरं संपद्यते, अष्टाक्षरा वै गायत्री, गायत्रीमेव तत् पुरस्तात् प्रातःसवनेऽचीक्लृपताम्** ॥ इति ।

देवविशो[1] देवानां संबन्धिन्यः प्रजाः सैन्यरूपाः कल्पयितव्याः संपादनीया इति ब्रह्मवादिन आहुः । तत्कथं संपादनमिति, तदुच्यते—एकं छन्दोऽन्यस्मिश्छन्दसि[2] प्रतिष्ठा-पनीयम् । तथा सति देवविशः संपद्यन्त इति ब्रह्मवादिनामभिप्रायः । तस्मात् तत्संपादनार्थं होता प्रातःसवने शोंसावोमिति मन्त्रेणाध्वर्युमाह्वयते । तस्यायमर्थः—हे अध्वर्यो शोंसावः शंसनं कुर्वतः । ओमित्यनुज्ञार्थम् । त्वयाऽनुज्ञा देयेत्युक्तं भवति । सोऽयं त्र्यक्षरो मन्त्रः । ततोऽध्वर्युः शंसाऽऽमोदैवोमिति पञ्चाक्षरेण[3] प्रतिगृणाति प्रत्युत्तरं ब्रूयात् । तस्यायमर्थः—हे होतः, त्वं शंस तत्राऽऽमोदैव हर्ष एवास्माकमतोऽनुज्ञा दत्तेति । तदेतन्मन्त्रद्वयं मिलित्वाऽ-

---

१. 'विशः सेनाः प्रजा वा'—इति भट्टभास्करः । 'देवविशः देवसेनाः'—इति षड्गुरुशिष्यः ।

२. गायत्र्यादिकं सवनच्छन्दः उक्तादिजगत्यन्ते तस्मिन् छन्दसि प्रतिष्ठाप्यम् अक्षरसंपत्त्या संपाद्यम् । तदिदं देवविशां कल्पनम्'—इति भट्टभास्करः ।

३. 'अध्वर्यो शोंसावोमिति होतुरभिज्ञाय प्रदक्षिणमावर्तमानः शोंसामोद इवेति प्रत्या-ह्वयते शंसामोद इवेति वा'—इति आप० श्रौ० १२.२७.१२ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ष्टाक्षरं संपद्यते, गायत्री चाष्टाक्षरा तेन प्रातःसवने पुरस्तादादौ द्वावपि मिलित्वा गायत्रीमेवाचीक्लृपतां[1] कल्पितवन्तौ ॥

[मरुत्वतीय शस्त्र]—

iii. १२ [xii. १] 'देवों की [सैन्यरूप] प्रजा संपादित होनी चाहिए'—ऐसा ब्रह्मवादी कहते हैं। अतः 'एक छन्द को दूसरे छन्द में रखना चाहिए।' प्रातःसवन में होता तीन अक्षर के मन्त्र 'शोंसावोम्' 'हे अध्वर्यु, हम दोनों स्तुति करें' से आह्वान करता है। तब अध्वर्यु पाँच अक्षर के मन्त्र 'शंसाऽऽमोदैवोम्' 'हे होता, तुम शंसन करो, यह हम लोगों के हर्ष का विषय है'—से उत्तर देता है। इस प्रकार [दोनों मन्त्र मिलाकर] आठ अक्षर हो जाते हैं; और आठ अक्षर की ही गायत्री होती है। इस प्रकार प्रातःसवन में गायत्री को ही प्रारम्भ में दोनों ने कल्पित किया।

शस्त्राद् उत्तरकालीनौ द्वाभ्यां पठनीयौ मन्त्रौ विधत्ते—

**उक्थं वाचीत्याह शस्त्वा चतुरक्षरम्[2], ओमुक्थशा इत्यध्वर्युश्चतुरक्षरं, तदष्टाक्षरं संपद्यते, अष्टाक्षरा वै गायत्री, गायत्रीमेव तदुभयतः प्रातःसवनेऽचीक्लृपताम् ॥ इति ।**

होता शस्त्रं पठित्वोक्थं वाचीति चतुरक्षरं मन्त्रं ब्रूयात्। मदीयायां वाच्युक्थं शस्त्रं संपन्नमिति तस्यार्थः। ततोऽध्वर्युरोमुक्थशा इति चतुरक्षरं मन्त्रं ब्रूयात्। ओमित्यङ्गीकार उक्थशास्त्वं शस्त्रशंसी भवसीत्यर्थः। तदेतन् मन्त्रद्वयं मिलित्वाऽष्टाक्षरं संपद्यते। उभयतः शंसनात् पुरस्तात् पश्चाच्च। शेषं पूर्ववत्[3] ॥

[होता] शस्त्र पढ़कर 'उक्थं वाचि' 'हमारी वाणी में उक्थ संपन्न हुआ' इस चार अक्षर के मन्त्र को पढ़ता है। तब अध्वर्यु 'ओमुक्थशा' 'तुम शस्त्र का शंसन करने वाले हो'—इस चार अक्षर के मन्त्र को बोले। इस प्रकार [दोनों मिलकर] आठ अक्षर हो जाते हैं, और आठ अक्षर की ही गायत्री होती है। इस प्रकार प्रातःसवन में [शंसन के आरम्भ और अन्त में] दोनों तरफ गायत्री को ही दोनों ने कल्पित किया।

माध्यंदिनसवने तद्वन्मन्त्रचतुष्टयं विधत्ते—

**अध्वर्यो शोंसावोमित्याह्वयते मध्यंदिने षळक्षरेण[4]; शंसाऽऽमोदैवोमित्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण, तदेकादशाक्षरं संपद्यते, एकादशाक्षरा वै त्रिष्टुप्**

---

१. 'कृपो रो लः (पा० सू० ८.२.१८), णौ चङ्युपधाया ह्रस्वः' (पा० सू० ७.४.१), उरृत् (पा०सू० ७.४.७); तसस्ताम्। होत्रध्वर्यू अकल्पयताम्'—इति षड्गुरुशिष्यः।

२. 'उक्थं वाचीत्येषां शस्त्वा जपः प्रातःसवने, उक्थं वाचीन्द्रायेति माध्यंदिने, उक्थं वाचीन्द्राय देवेभ्य इत्युक्थेषु सषोडशिकेषु'—इति आश्व० श्रौ० ५.१०.२२–२४।

३. आश्व० श्रौ० ५.९.१;५;१०.२२;९.८।

४. 'अध्वर्यो शोंसःवोमिति माध्यन्दिने शस्त्रादिष्वाहावः'—इति आश्व० श्रौ० ५.१४.३।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्रिष्टुभमेव तत्पुरस्तान्मध्यंदिनेऽचीक्लृपताम्, उक्थं [1]वाचीन्द्रायेत्याह शस्त्वा सप्ताक्षरमोमुक्थशा इत्यध्वर्युश्चतुरक्षरं, तदेकादशाक्षरं संपद्यते, एकादशाक्षरा वै त्रिष्टुप् त्रिष्टुभमेव तदुभयतो मध्यंदिनेऽचीक्लृपताम् ॥ इति।

पूर्ववद् व्याख्येयम्[2] ॥

'हे अध्वर्यु, हम दोनों शंसन करें' इस छः अक्षर के मन्त्र से होता मध्यन्दिन सवन में आह्वान करता है। तब अध्वर्यु पाँच अक्षर के मन्त्र 'शंसाऽऽमोदैवोम्' से उत्तर देता है। इस प्रकार [दोनों मिलकर] ग्यारह अक्षर हो जाते हैं; और ग्यारह अक्षरों का ही त्रिष्टुप् छन्द होता है। इस प्रकार मध्यन्दिन सवन में त्रिष्टुप् को ही प्रारम्भ में कल्पित करते हैं। होता शस्त्र पढ़कर 'उक्थं वाचीन्द्राय' 'हमारी वाणी में इन्द्र के लिए उक्थ संपन्न हुआ'—इस सात अक्षर के मन्त्र को पढ़ता है। तब अध्वर्यु 'ओमुक्थशा'—इस चार अक्षर के मन्त्र को बोले। इस प्रकार [दोनों मिलकर] ग्यारह अक्षर हो जाते हैं; और ग्यारह अक्षरों का ही त्रिष्टुप् छन्द होता है। इस प्रकार मध्यंदिन सवन में वह दोनों ओर से त्रिष्टुप् छन्द को ही दोनों ने कल्पित किया।

तृतीयसवने मन्त्रचतुष्टयं विधत्ते—

अध्वर्यो शोशोंसावोमित्याह्वयते तृतीयसवने सप्ताक्षरेण, शंसाऽऽमोदैवोमित्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण, तद्द्वादशाक्षरं संपद्यते, द्वादशाक्षरा वै जगती, जगतीमेव तत्पुरस्तात् तृतीयसवनेऽचीक्लृपताम्, उक्थं वाचीन्द्राय देवेभ्य[3] इत्याह शस्त्वैकादशाक्षरमोमित्यध्वर्युरेकाक्षरं, तद् द्वादशाक्षरं संपद्यते, द्वादशाक्षरा वै जगती, जगतीमेव तदुभयतस्तृतीयसवनेऽचीक्लृपताम् ॥ इति।

शोशोमिति द्विर्भावश्छान्दसः। माध्यंदिनसवने केवलमिन्द्रार्थमेव वाच्युक्थं सम्पन्नमित्युक्तम्। अत्र त्विन्द्रार्थमितरदेवार्थं चेति विशेषः। अन्यत् सर्वं पूर्ववद् व्याख्येयम्[4] ॥

'अध्वर्यो शोशोंसावोम्' ['श' का द्वित्व छान्दस है] इस सात अक्षर के मन्त्र से होता तृतीयसवन में आह्वान करता है। तब अध्वर्यु 'शंसाऽऽमोदैवोम्' इस पाँच अक्षर के मन्त्र से उत्तर देता है। इस प्रकार [दोनों मिलकर] बारह अक्षर हो जाते हैं, और बारह

---

१. 'च्चि इन्द्रायेति व्यूळ्हेन'—इति षड्गुरुशिष्यः। 'वाचि इन्द्रायेत्यत्र सवर्णदीर्घमकृत्वोक्षरसंख्या गणयितव्या'—इति भट्टभास्करः।

२. आश्व० श्रौ० ५.१४.३; ९.५; १०.२४; ९.८।

३. 'अत्रापि पूर्ववद् वाचि इन्द्रायेत्यनयोः सवर्णदीर्घमकृत्वा देवेभ्य इत्यत्र च इत्यादिपूरणं कृत्वैकादशाक्षरत्वं सम्पाद्यम्'—इति भट्टभास्करः।

४. आश्व० श्रौ० ५.१८.४; ९.५; १८.१३; ९.८।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अक्षरों का ही जगती छन्द होता है। इस प्रकार तृतीय सवन में जगती छन्द को ही प्रारम्भ में दोनों ने कल्पित किया। [होता] शस्त्र पढ़कर 'उक्थं वाचीन्द्राय देवेभ्यः' 'हमारी वाणी में इन्द्र के लिए तथा देवों के लिए उक्थ संपन्न हुआ'—इस ग्यारह अक्षर के मन्त्र को पढ़ता है। तब अध्वर्यु 'ओम्' इस एक अक्षर के मन्त्र को बोले। इस प्रकार [दोनों मिलकर] बारह अक्षर हो जाते हैं; और बारह अक्षरों का ही जगती छन्द होता है। इस प्रकार तृतीयसवन में वह दोनों ओर से जगती छन्द को ही दोनों ने कल्पित किया।

उक्तमर्थं मन्त्रसंवादेन द्रढयति—

**तदेतद् ऋषिः पश्यन्नभ्यनूवाच॥** इति।

तदेतद् ब्राह्मणोक्तं सर्वमृषिर्मन्त्रद्रष्टा दिव्यज्ञानेन पश्यन् मन्त्रवाक्येनाभितोऽनुवचनं कृतवान्॥

इस सब को ही मन्त्रद्रष्टा ऋषि ने दिव्य ज्ञान से देखते हुए मन्त्र के द्वारा कहा भी है।

तमेतं मन्त्रं दर्शयति—

**'यद्गायत्रे अधि गायत्रमाहितं त्रैष्टुभाद् वा त्रैष्टुभं निरतक्षत।**

**यद्वा जगज्जगत्याहितं पदं य इत् तद् विदुस्ते अमृतत्वमानशुः'**[1] **इति॥** इति।

शंसनात् पूर्वकालीने मन्त्रद्वयात्मके गायत्रे छन्दसि तदुत्तरकालीनं मन्त्रद्वयात्मकं गायत्रं छन्दोऽध्याहितं संपादितमिति यदस्ति। अथ च पूर्वकालीनान्मन्त्रद्वयात्मकात् त्रैष्टुभाद् उत्तरकालीनमन्त्रद्वयात्मकं त्रैष्टुभं निरतक्षत निष्पन्नमिति यदस्ति। अथ जगज्जागतं छन्दः पूर्वकालीनं जगत्युत्तरकालीने जागते छन्दस्याहितं संपादितमित्येतत् त्रिविधं पदं यदस्ति तत्पदं य इत्, य एवानुष्ठातारो विदुर्जानन्ति तेऽनुष्ठातारोऽमृतत्वमानशुर्देवत्वं प्राप्तवन्तः[2]॥

इस प्रकार [शंसन के पूर्व मन्त्रद्वयात्मक] गायत्री छन्द में [उत्तरकालीन मन्त्रद्वयात्मक] गायत्री छन्द को जो रखते हैं और [पूर्व में मन्त्रद्वयात्मक] त्रिष्टुप् छन्द से जो [उत्तरकालीन] त्रिष्टुप् को निष्पन्न करते हैं अथवा [पूर्वकालीन] जगती छन्द को [उत्तरकालीन] जगती छन्द में जो रखते हैं, वे ये तीन पद जो हैं, उन्हें जो अनुष्ठान करने वाले जानते हैं वे देवत्व [=अमृतत्व] को प्राप्त करते हैं।

अस्य मन्त्रस्य तात्पर्यं दर्शयति—

**एतद्वै तच्छन्दश्छन्दसि प्रतिष्ठापयति॥** इति।

---

१. ऋ० १.१६४.२३।

२. ऋक्संहिताभाष्ये चैतन्मन्त्रस्य व्याख्यानानि द्रष्टव्यानि।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एतदृषिप्रोक्तं मन्त्रवाक्यमुत्तरकालीने छन्दसि तत्पूर्वकालीनं छन्दः प्रतिष्ठापयतीति तत्राऽऽश्रितमित्येवं प्रतिपादयति ॥

**इस [ऋषिप्रोक्त मन्त्रवाक्य] को [उत्तरकालीन] छन्द में वह उस [पूर्वकालीन] छन्द को इस प्रकार प्रतिष्ठित करता है।**

उक्तार्थवेदनं प्रशंसति—

**कल्पयति देवविशो य एवं वेद ॥ १२ ॥** इति।

वेदिता देवविशो देवसंबन्धिनीः प्रजाः सैन्यरूपाः संपादयति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां द्वितीयाध्याये (द्वादशाध्याये) प्रथमः खण्डः ॥ १ ॥ (१२) [८२]

**इस प्रकार जो जानता है वह देवों की [सैन्यरूप] प्रजा को संपादित करता है।**

**॥ इस प्रकार बारहवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥**

## अथ द्वितीयः खण्डः

अथानुष्टुभो मुख्यत्वेन प्रशंसां कर्तुमाख्यायिकामाह—

**प्रजापतिर्वै यज्ञं छन्दांसि देवेभ्यो भागधेयानि व्यभजत्, स गायत्रीमेवाग्नये वसुभ्यः प्रातःसवनेऽभजत्, त्रिष्टुभमिन्द्राय रुद्रेभ्यो मध्यंदिने, जगतीं विश्वेभ्यो देवेभ्य आदित्येभ्यस्तृतीयसवने ॥** इति।

पुरा प्रजापतिः सर्वं जगत्सृष्ट्वा सवनत्रयात्मकं यज्ञं गायत्र्यादीनि च्छन्दांसि च देवतार्थं भागधेयानि भागविशेषरूपाणि कृत्वा व्यभजद् विभक्तवान्। केन प्रकारेणेति, स उच्यते—यज्ञे यत्प्रातःसवनमस्ति, तस्मिन् गायत्रीमेवाग्न्यर्थमष्टवसुदेवार्थं च विभक्तवान्। माध्यंदिनसवने त्रिष्टुभमिन्द्रार्थमेकादशरुद्रार्थं च विभक्तवान्। तृतीयसवने जगतीं विश्वेभ्यो देवेभ्य आदित्येभ्यश्च विभक्तवान्।

**iii. १३ [xii. २] प्रजापति ने [जगत् की सृष्टि करके] देवों के लिए [सवनत्रयात्मक] यज्ञ को और [गायत्री आदि] छन्दों को विशेष रूप से अलग-अलग भाग करके विभक्त कर दिया। उन्होंने प्रातःसवन में गायत्री छन्द अग्नि और वसुओं के लिए ही विभक्त किया, माध्यन्दिन सवन में इन्द्र और एकादश रुद्रों के लिए त्रिष्टुप् और तृतीयसवन में समस्त देवों और आदित्यों के लिए जगती छन्द विभक्त किया।**

एवं सत्यनुष्टुबेका परिशिष्टा तस्या वृत्तान्तमाह—

**अथास्य यत् स्वं छन्द आसीद् अनुष्टुप् तामुदन्तमभ्युदौहदच्छावाकीयामभि, सैनमब्रवीदनुष्टुप् त्वं न्वेव देवानां पापिष्ठोऽसि, यस्य तेऽहं स्वं छन्दोऽस्मि यां मोदन्तमभ्युदौहीरच्छावाकीयामभीति, तदजानात्, स स्वं सोममाहरत्,**

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**स स्वे सोमेऽग्रं मुखमभि पर्याहरदनुष्टुभं, तस्मादनुष्टुबग्रचा[1] मुख्या युज्यते सर्वेषां सवानानाम् ।। इति ।**

अथाग्न्यादीनां वस्वादीनां च च्छन्दोविभागानन्तरम् 'अस्य' प्रजापतेः स्वभूतमनुष्टुबाख्यं यच्छन्द आसीत् तामनुष्टुभम् उदन्तमभि यज्ञस्य कंचित्प्रान्तदेशमभिलक्ष्योदौहदपसारितवान्[2]। कुत्र देश इति ? तदुच्यते—अच्छावाकीयाममीति । अच्छावाक वदस्वेत्येवमध्वर्युणोक्तोऽच्छावाको यां ब्रूते सेयमृगच्छावाकीया[3] तामभिलक्ष्योदूढवाननुष्टुभमच्छावाकीयां कृतवानित्यर्थः । तेन कुपिता साऽनुष्टुब्वेवैनं प्रजापतिमब्रवीन्नु हे प्रजापते, देवानां मध्ये त्वमेव पापिष्ठोऽसि[4] । यस्य पापिष्ठस्य प्रजापतेस्तवाहं छन्दोऽस्मि । अग्निवस्वादयः पूर्वं छन्दोरहितास्तादृशेभ्योऽपि च्छन्दांसि दत्तवानसि । अहं तु पूर्वमेव त्वदीया तादृशीं मां त्वत्तोऽपसार्याच्छावाकीयामभिलक्ष्योदूढवानसि । अतो नदुपेक्षया भवतः पापिष्ठत्वमित्यनुष्टभोऽभिप्रायः । तत्सर्वमनुष्टुभा प्रोक्तमुपालम्भरूपं प्रजापतिर्ज्ञातवान् । ज्ञात्वा च तदुपालम्भपरिहारार्थं स्वकीयं सोमयागमाहरत् । स तु तस्मिन् सोमयागेऽग्रं श्रेष्ठं प्रारम्भरूपं यन्मुखमस्ति तदभिलक्ष्यानुष्टुभं पर्याहरत् तत्र नीतवानित्यर्थः । तस्मादु तस्मादेव कारणादियमनुष्टुबग्रचा श्रेष्ठा सती सर्वेषां सवनानां मुख्या मुखे भवा प्रारम्भकालीना प्रयुज्यते ।।

[अग्नि आदि छन्दों के विभाग के] अनन्तर अब इस [प्रजापति] का जो अपना छन्द अनुष्टुप् था उसको अच्छावाकीय ऋचा के प्रति यज्ञ के किसी प्रान्त में हटा दिया [अर्थात् अनुष्टुप् को अच्छावाकीय ऋक् बनाया]। तब उस अनुष्टुप् ने इस [प्रजापति] से कहा—'हे प्रजापति ! देवों के मध्य तुम पापिष्ठ हो जो मैं तुम्हारा अपना छन्द हूँ उस मुझको अच्छावाकीय ऋचा के प्रति हटा दिया।' वह अपनी इस [भूल] को समझ गए। उन्होंने अपने सोमयाग का आहरण किया और उन्होंने सोम के प्रारम्भ में अपने अनुष्टुप् छन्द को रख दिया। इसीलिए सभी सवनों में वह श्रेष्ठ अनुष्टुप् प्रारम्भ में ही प्रयुक्त होता है।

एतद्वेदनं प्रशंसति—

**अग्रचो[5] मुख्यो भवति श्रेष्ठतामश्नुते य एवं वेद ।। इति ।**

---

१. 'अग्रिया' इति वा पाठः । 'अग्राद्यत्' (पा० सू० ४.४.११६), 'अग्र्या' इति सायणसम्मतः पाठः ।

२. 'उदौहदस्थापयत्'–इति षड्गुरुशिष्यः । 'उदनैषीत्'–इति भट्टभास्करः ।

३. 'अच्छा वो अग्निमवसे' ऋ० ५.२५.१ । 'अच्छावाक वदस्वेत्युक्तोऽच्छावो अग्निमवसे इति तृचमन्वाह'–इति आश्व० श्रौ० ५.७.२ ।

४. 'नु इति खेदे । पापिष्ठोऽशुभकारी त्वम्'–इति. षड्गुरुशिष्यः ।

५. 'अग्रियो' इति वा पाठः । किन्तु 'अग्रचः' इति सायणसम्मतः पाठः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदिता स्वकीयज्ञातीनां मध्येऽग्रे भवोऽग्र्यो ज्येष्ठो मुख्यो व्यवहारनिर्वाहकः। स श्रेष्ठतां विद्यावृत्तादिगुणैः श्रेष्ठत्वं प्राप्नोति ॥

जो इस प्रकार जानता है वह [अपने सम्बन्धियों के बीच] ज्येष्ठ और मुख्य होता है और [विद्या आदि गुणों से] श्रेष्ठता को प्राप्त करता है।

प्रजापतिन्यायेन यजमानस्यापि सवनीययागादावनुष्टुप्प्रयोगं दर्शयति—

**स्वे वै स तत्सोमेऽकल्पयत्, तस्माद् यत्र क्व च यजमानवशो भवति; कल्पत एव यज्ञोऽपि ॥ इति।**

यस्मात् स प्रजापतिः स्वकर्तृक एव सोमयागे तत् सवनेष्वनुष्टुभो मुख्यतामकल्पयत् तस्मादिदानीमपि यत्र क्वापि यागे यज्ञो यजमानवशो[1] भवति स यज्ञोऽपि कल्पत एव। अवैकल्येनानुष्ठास्यामीत्यभिप्रेत्यानुष्टुभः सवनानामादौ प्रयोगे सति यज्ञस्य यजमानवशत्वं तत्र यज्ञो वैकल्यरहितो भवतीत्यर्थः ॥

[क्योंकि] उस [प्रजापति] ने अपने ही सोमयाग में [उन सवनों में] उसे [मुख्यतया] प्रयुक्त किया। अतः जहाँ-कहीं यज्ञ यजमानविधेय होता है वह यज्ञ भी वैकल्यरहित होता है।

उक्तवाक्यार्थमेव वाक्यान्तरेण स्पष्टीकरोति—

**तस्यै जनतायै कल्पते यत्रैवं विद्वान् यजमानो वशी यजते ॥ १३ ॥ इति।**

यत्र यस्यां जनसभायामेवमनुष्टुभो महिमानं विद्वान् यजमानो वशी स्ववशो भूत्वा तस्मिन्ननुष्टुभः प्रयोगे सावधानो भूत्वा यजते तस्यै जनतायै तस्यां जनसभायां कल्पते यज्ञः प्रयोजनसमर्थो भवति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीय-पञ्चिकायां द्वितीयाध्याये (द्वादशाध्याये) द्वितीय खण्डः ॥२॥ (१३) [८४]

जिस [जनसभा] में इस प्रकार [अनुष्टुप् की महिमा] जानते हुए यजमान वशी होकर [उस अनुष्टुप् के प्रयोग में सावधान होकर] यजन करता है उस जनसभा में यज्ञ प्रयोजनसमर्थ होता है।

॥ इस प्रकार बारहवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

---

१. 'यत्र क्वापि देशे काले वा यजमानवशो यजमानविधेयो यज्ञो भवति स एव यज्ञः कल्पते एतस्य यजमानस्य। यद्वा, यत्र यज्ञे कस्मिंश्चिदपि यज्ञावयवे प्रवृत्तौ निवृत्तौ वा यजमानवशं यजमानस्य वशं स्वातन्त्र्यं भवति तादृशस्य यजमानस्य सम्बन्धी यज्ञः कल्पत एव'—इति भट्टभास्करः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ तृतीयः खण्डः

पुनरपि प्रकारान्तरेणानुष्टुभो महिमानं दर्शयितुमाख्यायिकामाह—

**अग्निर्वै देवानां होताऽऽसीत्, तं मृत्युर्बहिष्पवमानेऽसीदत्, सोऽनुष्टुभाऽऽज्यं प्रत्यपद्यत, मृत्युमेव तत्पर्यक्रामत्, तमाज्येऽसीदत्, स प्रउगेण प्रत्यपद्यत, मृत्युमेव तत्पर्यक्रामत् ॥ इति ।**

पुरा कदाचिद्देवानां यागेऽग्निरेव होता अभूत् तमग्निं होतारं मृत्युरसीदद्धन्तुं प्राप्तवान् । कस्मिन् काल इति ? तदुच्यते—बहिष्पवमानाख्ये स्तोत्रे प्रातःसवनसंबन्धिनि 'उपास्मै गायता नर' इत्याद्यृगाश्रयणेन सामगैः स्तूयमाने[1] सति सोऽयमग्नेर्मृत्युप्राप्तिकालस्तदानीमग्निर्मृत्युं परिहर्तुमनुष्टुप्छन्दस्कया 'प्र वो देवायाग्नये' इत्येतयर्चाऽऽज्यशस्त्रं[2] प्रारब्धवान् । 'तत्' तेनानुष्टुप्प्रयोगेण सोऽग्निस्तदानीमेव मृत्युं 'पर्यक्रामद्' अतिक्रान्तवान् । ततः 'अग्न आ याहि' इत्याद्यृगाश्रयणेनाज्यस्तोत्रे[3] सामगैः स्तूयमाने[4] सति तमग्निं मृत्युरसीदत् प्राप्तवान् । तदा सोऽग्निर्मृत्युं परिहर्तुं वायवायाहीत्यादिकेन सप्ततृचात्मकेन प्रउगशस्त्रेण[5] अनुष्ठानं प्रत्यपद्यत प्रारब्धवान् । तत् तेन प्रउगप्रयोगेण तदानीमेव मृत्युमतिक्रान्तवान् ।

iii. १४ [xii. ३] [पहले कभी देवों के याग में] अग्नि ही देवों के होता हुए। उस [होता अग्नि] को [प्रातःसवन के] बहिष्पवमान नामक स्तोत्र में मृत्यु प्राप्त हुआ। [मृत्यु को जीतने के लिए] उस [अग्नि] ने ['प्र वो देवायाग्नये' आदि] अनुष्टुप्-छन्दस्क ऋचा रूप आज्यशस्त्र को प्रारम्भ किया; और उस [अनुष्टुप् के प्रयोग] से मृत्यु का अतिक्रमण कर दिया। तब उस [अग्नि] को मृत्यु ने आज्यशस्त्र में प्राप्त किया। उस अग्नि ने ['वायवा याहि' आदि सात ऋचाओं वाले] प्रउगशस्त्र का प्रयोग प्रारम्भ किया और उससे मृत्यु को अतिक्रान्त किया।

इत्थं प्रातःसवनेऽनुष्टुभं मृत्युपरिहारहेतुत्वेन प्रशस्य माध्यंदिनसवनेऽपि तथा प्रशंसति—

**तं माध्यंदिने पवमानेऽसीदत्, सोऽनुष्टुभा मरुत्वतीयं प्रत्यपद्यत, मृत्युमेव तत्पर्यक्रामत्, तं माध्यंदिने बृहतीषु नाशक्नोत् सत्तुं, प्राणा वै बृहत्यः, प्राणा-**

---

१. द्र० इतः पूर्वम्, ३५६ पृष्ठे । ता० ब्रा० ७.१ । उ० आ० १.१.१-३ (ऋ० ९.११.१)
२. द्र० इतः पूर्वम्, ३५६ पृष्ठे ।
३. उ० आ० १.१.४–७ । द्र० इतः पूर्वम्, ३५३ पृष्ठे ।
४. 'ततोऽग्निना होत्राऽऽज्यशस्त्रे शस्यमाने' इति वा पाठः ।
५. द्र० इतः पूर्वम्, ३८१–३८३ पृ० (ऋ० १.२.१–९; १.३.१–१३) ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**नेव तन्नाशक्नोद् व्यवैतुं, तस्मान्मध्यंदिने होता बृहतीषु स्तोत्रियेणैव प्रतिपद्यते, प्राणा वै बृहत्यः, प्राणानेव तदभिप्रतिपद्यते ॥** इति ।

प्रातःसवनान्निराकृतो मृत्युः सामगैः 'उच्चा ते जातमन्धसः'[1] इत्यादिके माध्यंदिनपवमानस्तोत्रे[2] गीयमाने सति तस्मिन् काले तमग्निं होतारमसीदत् प्राप्तवान् । तदानीं सोऽग्निर्होता मृत्युपरिहारायानुष्टुप्छन्दस्कया 'आ त्वा रथम्'[3] इत्येतयर्चा मरुत्वतीयशस्त्रं[4] प्रारब्धवान् । तत् तेनानुष्टुप्प्रयोगेण तदानीमेव मृत्युमतिक्रान्तवान् । माध्यंदिनपवमानान्निराकृतो मृत्युर्माध्यंदिनसवनसंबन्धिमरुत्वतीयशस्त्रे शस्यमाने सति शंसितारमग्निं होतारं प्राप्स्यामीति विचार्य तत्र बृहतीछन्दस्कास्वृक्षु गीयमानासु तमग्निं सत्तुं[5] प्राप्तुं नाशक्नोत् । तत्र हेतुरुच्यते—बृहतीछन्दस्का ऋचः प्राणस्वरूपा एव । तत् तेन कारणेन प्राणानेव 'व्यवैतुं' वियोजयितुं मृत्युर्नाशक्नोत् । प्राणाभिमानिनीभिर्बृहतीभिः प्राणानां रक्षितत्वात् । बृहत्यश्च मरुत्वतीयशस्त्रानन्तरभाविनि निष्केवल्यशस्त्रे बहवो विद्यन्ते । ताश्च सर्वस्मिन्नेव माध्यंदिने सवने मृत्युप्रवेशं निवारयन्ति । यस्मादेवं बृहत्यो मृत्युप्रवेशं निवारयितुं समर्थाः, तस्मान्माध्यंदिनप्रयोगे होता बृहतीछन्दस्कास्वृक्षु स्तोत्रियेणैव तृचेन शस्त्रं प्रारभते । यस्मिन् तृचे सामगैः स्तोत्रं गीतं सोऽयं तृचः स्तोत्रियः, तेन तृचेन प्रारम्भे सति तत्रत्यानां बृहतीनां प्राणरूपत्वात् प्राणानेवाभिलक्ष्य शस्त्रप्रारम्भं कृतवान्भवति ॥

[तब 'उच्चा ते जातमन्धसः' इत्यादि] पवमान स्तोत्र के मध्यन्दिन सवन में गाए जाने पर उस अग्नि को [मृत्यु ने] प्राप्त किया । तब उसने अनुष्टुप् छन्दस्क ['आ त्वा रथम्' इत्यादि] मरुत्वतीयशस्त्र प्रारम्भ किया । उससे उसी समय मृत्य को हटा दिया । [तब मृत्यु होता] उस अग्नि को मध्यन्दिनसवन में गीयमान बृहती छन्दस्क ऋचाओं में भी पाने में समर्थ न हो सका; क्योंकि बृहती ऋचाएँ प्राणस्वरूप हैं । इसीलिए मृत्यु प्राण से वियुक्त करने में समर्थ न हो सका । इसीलिए होता मध्यन्दिनसवन में सामगान करने वालों से गीयमान बृहती छन्दस्क तृच से ही शस्त्र प्रारम्भ करते हैं । [उस तृच से प्रारम्भ करने पर क्योंकि] बृहती छन्दस्क ऋचाएँ प्राणस्वरूप हैं, इसलिए प्राणों को ही लक्ष्य करके शस्त्र का प्रारम्भ किया जाता है ।

---

१. उ० आ० १.१.८–१० ।

२. 'एतावता वाव माध्यन्दिनं सवनं पुपुवे, त्रिभिश्च छन्दोभिः पञ्चभिः सामभिः; यन्माध्यन्दिनेन पवमानेन स्तुवन्ति, माध्यन्दिनमेव तं सवनं पावयन्ति'—इत्यादि ता० ब्रा० ७.३.१–३ ।

३. ऋ० ८.६८.१ ।

४. तच्च शस्त्रम् इतः परस्तात् चतुर्थादिषु षट्सु खण्डेषु आम्नास्यते ।

५. (i) 'सत्तुं सदेस्तुमुन् अभिभवितुम्'; (ii) 'भवार्थात् तुमुन् अभिभवितुम्'—इति षड्गुरुशिष्यः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ तृतीयसवने मृत्युपरिहारेणानुष्टुभं प्रशंसति—

**तं तृतीयपवमानेऽसीदत्, सोऽनुष्टुभा वैश्वदेवं प्रत्यपद्यत, मृत्युमेव तत्पर्यक्रामत ॥ इति ।**

त्रिषु पवमानेषु बहिष्पवमानः प्रथमः । माध्यंदिनपवमानो द्वितीयः । आर्भवपवमानस्तृतीयः । माध्यंदिनसवने प्रवेष्टुमशक्तो मृत्युः 'स्वादिष्ठया'[1] इत्येतस्मिन्नार्भवाख्ये तृतीयपवमानस्तोत्रे[2] तृतीयसवनगते सामगैर्गीयमाने सति तमग्निं होतारं मृत्युरसीदत् । सोऽप्यग्निस्तं वारयितुमनुष्टुप्छन्दस्कया 'तत्सवितुर्वृणीमहे'[3] इत्येतयर्चा वैश्वदेवाख्यं शस्त्रं[4] प्रारभत । तेनानुष्टुप्प्रयोगेण तदानीमेव मृत्युमतिक्रान्तवानित्यनुष्टुप्सवनत्रये शस्ता ॥

तृतीयसवन में ['स्वादिष्ठया' इत्यादि आर्भव नामक] पवमान स्तोत्र में [सामगान करने वालों के द्वारा गीयमान होने पर] उस अग्नि को [मृत्यु ने] प्राप्त किया । उस अग्नि ने [उसके निवारणार्थ] अनुष्टुप् छन्दस्क ['तत्सवितुर्वृणीमहे' इत्यादि] वैश्वदेव ऋचा से प्रारम्भ किया । उससे उसी समय मृत्यु को हटा दिया ।

अथ यज्ञायज्ञीयाख्यं साम वैश्वानरीयसूक्तं च प्रशंसति—

**तं यज्ञायज्ञीयेऽसीदत्, स वैश्वानरीयेणाऽऽग्निमारुतं प्रत्यपद्यत, मृत्युमेव तत्पर्यक्रामद्, वज्रो वै वैश्वानरीयं, प्रतिष्ठा यज्ञायज्ञीयं, वज्रेणैव तत्प्रतिष्ठाया मृत्युं नुदते, स सर्वान् पाशान् सर्वान् स्थाणून् मृत्योरतिमुच्य स्वस्त्येवोदमुच्यत, स्वस्त्येव होतोन्मुच्यते सर्वायुः सर्वायुत्वाय ॥ इति ।**

'यज्ञायज्ञा वो अग्नये'[5] इत्यस्यामृच्युत्पन्नं साम यज्ञायज्ञीयम्[6] । तत्सामसाध्ये तन्नामके स्तोत्रे[7] सामगैर्गीयमाने[8] सति तृतीयपवमानान्निराकृतो मृत्युस्तमग्निं होतारं प्राप्तवान् । ततोऽग्निर्होता मृत्युपरिहाराय 'वैश्वानराय पृथुपाजसे विप' इत्यादिना वैश्वानरीयेण सूक्तेन आग्निमारुताख्यं[9] शस्त्रं प्रारब्धवान् ।[10] तेन सूक्तप्रयोगेण तदानीमेव

---

१. उ० आ० १.१.१५ ।

२. (i) स्वादिष्ठयेत्यारभ्य तृतीयसवने गेयं स्तोत्रमार्भवपवमानः ।
(ii) 'साध्या वै नाम देवा आसन्''''स्वादिष्ठया मदिष्ठयेति प्रस्तौति तृतीयसवनस्य सेन्द्रत्वाय'—इत्यादि ता० ब्रा० ८.४.१–५ ।

३. ऋ० ५.८२.१ ।

४. एतदुत्तराध्यायीयसप्तमाष्टमखण्डयोराम्नास्यते ।

५. उ० आ० १.१.२० ।

६. ऊ० गा० १.१.१४ ।

७. 'देवा वै''''ते देवा यज्ञायज्ञीयमपश्यंस्तेषां 'यज्ञायज्ञा वो अग्नये' इति'—इत्यादि ता० ब्रा० ८.६.१–५ ।

८. साम्नानेनाग्निष्टोमस्य समाप्यमानत्वादग्निष्टोमसामेत्युच्यते ।

९. एतदुत्तराध्यायीयेषु नवमादिषु त्रिषु खण्डेषु द्रष्टव्यम् ।

१०. 'मरुत्वतीयशस्त्रप्रारम्भं कृतवान्' इति वा पाठः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मृत्युमतिक्रान्तवान् । तत्र वैश्वानरीयं सूक्तं वज्रस्वरूपम् । यज्ञायज्ञीयस्तोत्रं तु प्रतिष्ठा समाप्तेर्हेतुः । तस्मात् सूक्तरूपेण वज्रेणैव प्रतिष्ठाया यज्ञसमाप्तेर्मृत्युमग्निर्निराकुरुते । स तादृशोऽग्निः सर्वान् पाशान् मृत्युसंबन्धिबन्धनरज्जुरूपांस्तथा मृत्योः संबन्धिनः सर्वान् स्थाणून् काष्ठोपलक्षितगदाद्यायुधानि मृत्योः सकाशादतिमुच्य निवार्य स्वस्त्येव क्षेमेणैव स्वयं मृत्युसकाशादुन्मुक्तोऽभूत् । अग्निवन् मानुषोऽपि होता तेनैव प्रकारेणानुतिष्ठन् सर्वेणाऽऽयुषा युक्तः क्षेमेणैव मृत्योरुन्मुच्यते । अत्र सर्वत्र यो योऽपूर्वोऽर्थस्तस्य सर्वस्यार्थवादादेव विधिरुन्नेयः । सोऽयं हौत्रप्रयोगो यजमानस्य सर्वायुत्वाय[1] संपद्यते ॥

[तब मृत्यु ने] यज्ञायज्ञीय नामक स्तोत्र के गाये जाने पर उसको प्राप्त किया। [तब मृत्यु के परिहार के लिए होता] उस अग्नि ने ['वैश्वानराय पृथुपाजसे विप' इत्यादि] वैश्वानर-देवताक सूक्त से आग्निमारुतशस्त्र को प्रारम्भ किया। उससे उसी समय मृत्यु को हटा दिया; क्योंकि वह वैश्वानरदेवताक सूक्त वज्रस्वरूप है और यज्ञायज्ञीय-स्तोत्र प्रतिष्ठा [=समाप्ति का हेतु] है; इसीलिए [सूक्तरूप] वज्र के द्वारा उस [यज्ञ] की समाप्ति में मृत्यु का निराकरण होता है और वह अग्नि मृत्यु सम्बन्धी सभी पाशों को और सभी [गदा आदि] आयुधों को मृत्यु से निराकृत करके स्वयं भी कल्याण द्वारा मृत्यु से उन्मुक्त हुआ। [अग्नि के ही समान] होता भी उसी प्रकार अनुष्ठान करके सम्पूर्ण आयु से युक्त होकर क्षेम के द्वारा ही मृत्यु से छूट जाता है और इस प्रकार यह सभी कर्म यजमान के लिए भी पूर्ण आयु प्रदान करने वाला होता है।

वेदनं प्रशंसति—

**सर्वमायुरेति य एवं वेद ॥ १४ ॥** इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां द्वितीयाध्याये (द्वादशाध्याये) तृतीयः खण्डः ॥३॥ (१४) [८५]

जो इस प्रकार जानता है वह सम्पूर्ण [वेदोक्त सौ वर्ष पर्यन्त] आयु प्राप्त करता है।[2]

॥ इस प्रकार बारहवें अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

अथ मरुत्वतीयशस्त्रमारभ्यते । तत्रायं संग्रहश्लोकः—

"प्रतिपदनुचरावनुप्रगाथो हरिनिहवोऽथ बृहस्पतेर्ध्रुवश्च ।
ध्रुवविधिविहितास्तथाऽथ धाय्या विततमत्र मरुत्वतीयसूक्ते ॥"

---

१. द्र० इतः पूर्वम्, २३४ पृ० । २. द्र० इतः पूर्वम्, २३५ पृ० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्र 'आ त्वा रथम्'[1] इति मरुत्वतीयस्य प्रतिपदनुष्टुप् तां प्रशंसितुमाह—

**इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतोऽगच्छत् स परमामेव परावतमगच्छद्, अनुष्टुब् वै परमा परावद्, वाग्वा अनुष्टुप्, स वाचं प्रविश्याशयत्, तं सर्वाणि भूतानि विभज्यान्वैच्छंस्तं पूर्वेद्युः पितरोऽविन्दन्नुत्तरमहर्देवास्तस्मात् पूर्वेद्युः पितृभ्यः क्रियते, उत्तरमहर्देवान् यजन्ते ॥ इति ।**

इन्द्रः पुरा वृत्रनामकं दैत्यं हत्वा नास्तृषि अहं न हिंसितवानस्मीति मन्यमानस्तदीयजीवनमाशङ्क्य तस्माद् भीतः पराः परावतोऽभ्यधिका दूरभूमीरगच्छत् । सोऽयं तावताऽप्यसंतुष्टः परमामेवाभ्यधिकामेव परावतं दूरभूमिं पुनरप्यगच्छत् । अधिकाभ्यो दूरभूमिभ्योऽप्यत्यन्तमधिका दूरभूमिः केति ? चेत्, सेयमुच्यते—अनुष्टुब्वै परमा परावदभ्यधिका दूरभूमिः । तस्यामनुष्टुभि प्रविष्टस्य चक्षुषा द्रष्टुमशक्यत्वात् । अनुष्टुप् च वाक्स्वरूपा ।[2] ततः स इन्द्रो वाचं प्रविश्य तत्र शयनं कृतवान् । तमिन्द्रं सर्वाणि भूतानि सर्वेषु देशेषु विभज्यान्वैच्छन् । तमन्वेष्टुमेक एकस्मिन् देशे गतोऽन्यो देशान्तरमित्येतादृशो विभाग इत्यर्थः । तमन्विष्यमाणमिन्द्रं पितरो यागदिनात् पूर्वेद्युरविन्दन्नलभन्त । देवास्तूत्तरमहरुत्तरस्मिन्नहन्यविन्दन् । यस्मादेवं तस्माल्लोकेऽपि पूर्वेद्युरमावास्यायां पितृभ्यः क्रियते । उत्तरमहरुत्तरस्मिन्नहनि प्रतिपद्दिने दर्शपूर्णमासयागदिने देवान् यजन्ते ।[3] इन्द्रस्य रक्षकत्वात् प्रशस्ताऽनुष्टुबिति तात्पर्यार्थः ॥

iii. १५ [xii. ४] प्राचीन काल में इन्द्र ने वृत्र नामक दैत्य को मारकर यह सोंचते हुए कि 'हमने इसे पूर्णतः नहीं मारा है' [अर्थात् उसमें जीवन की आशङ्का से भयभीत होकर] दूर-बहुत दूर चले गए और वह दूर व बहुत दूर चले गए। यह दूरस्थ प्रदेश अनुष्टुप् ही था। [चक्षु से दृष्टिगोचर न होने के कारण] अनुष्टुप् वाणीस्वरूप है। तब वह [इन्द्र] वाणी में प्रवेश करके वहाँ पड़े रहे। सभी प्राणी उनको अलग-अलग [प्रदेशों में विभक्त होकर] खोजते रहे। पितरों ने उन्हें [याग के दिन से] एक दिन पहले खोजकर प्राप्त कर लिया और देवों ने एक दिन बाद। इसीलिए पितरों के लिए कृत्य एक दिन पहले [अमावास्या में] किया जाता है और देवों के लिए एक दिन बाद [प्रतिपद् को] यजन करते हैं।

अथ मरुत्वतीयशस्त्रस्य प्रतिपत्तृचं दर्शयति—

**तेऽब्रुवन्नभिषुणवामैव तथा वाव न आशिष्ठमागमिष्यतीति तथेति तेऽभ्यषुण्वंस्त 'आ त्वा रथं यथोतये' इत्येवैनमावर्तयन्, 'इदं वसो सुतमन्धः'**

---

१. ऋ० ८.६८.१–३ ।

२. 'अनुष्टुप् इति वाङ्नामसु पाठात्'—द्र० निघ० १. ११ ।

३. 'इन्द्रो वृत्रं हत्वा....तस्मात् पितृभ्यः पूर्वेद्यु क्रियते सोमावस्यां प्रत्यागच्छत् तं देवा अभिसमगच्छन्तामा वै नः'—इति तै० सं० २. ५. ३ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**इत्येवैभ्यः सुतकीर्त्यामाविरभवद् 'इन्द्र नेदीय एदिहि' इत्येवैनं मध्यं प्रापादयन्त ॥ इति ।**

इन्द्रं लब्ध्वाऽवस्थितास्ते देवाः परस्परमिदमब्रुवन्नभिषुणवामैवं वयं सर्वथा सोमस्याभिषवं करवाम । तथा वाव तेनैव प्रकारेणाऽऽशिष्ठमाशुतममतिशीघ्रं यथा भवति तथा नोऽस्मानिन्द्र आगमिष्यतीति तद्वचनमङ्गीकृत्य ते सर्वेऽभ्यषुण्वन्नभिषवं कृतवन्तः । तादृशास्ते देवा 'आ त्वा रथं यथोतये'[1] इत्यनेनैव मन्त्रेण तमिन्द्रमनुष्टुभः सकाशाद् अभिषवदेशं प्रत्यावर्तयन् । अत्र किंचिदावृत्तिवाचकमावर्तयामसीति पदद्वयं श्रूयते तत्सामर्थ्यादिन्द्रस्याऽऽवृत्तिरभूत् । 'इदं वसो सुतमन्धः'[2] इत्यस्मिन् मन्त्रपादे सुतकीर्त्यामभिषववाचिना सुतशब्देनैभ्यो देवेभ्य इन्द्र आविरभवत् प्रकटोऽभूत् । 'इन्द्र नेदीय एदिहि'[3] इति मन्त्रगतेन समीपागमनवाचिना 'नेदीय एदिहि' इति पदद्वयेनैनमिन्द्रं यागदेशमध्यं प्रापितवन्तः । अनेनार्थवादेन तत्तन्मन्त्रविधिरुन्नेयः एतदेवाभिप्रेत्य आश्वलायन आह—'मरुत्वतीयशस्त्रं शंसेदध्वर्यो शोंसावोमिति माध्यंदिने शस्त्रादिष्वाहाव 'आ त्वा रथं यथोतय' 'इदं वसो सुतमन्धः' इति मरुत्वतीयस्य प्रतिपदनुचराविन्द्र नेदीय एदिहीतीन्द्रनिहवः प्रगाथः'[4] इति । येन तृचेन शस्त्रं प्रारभते; सोऽयं तृचः प्रतिपदुच्यते । तदनन्तरभावी तृचोऽनुचरः । अत्र 'आ त्वा रथम्' 'इदं वसो', इत्येतावृचौ प्रतिपदनुचरौ द्रष्टव्यौ । तत ऊर्ध्वमिन्द्रनिहवाख्य 'इन्द्र नेदीयः' इति प्रगाथः, ऋग्द्वयात्मको द्रष्टव्य इत्यर्थः ॥

[इन्द्र को प्राप्त करके] उन्होंने परस्पर कहा—'हम सोम का अभिषव करें । वैसे ही अत्यन्त शीघ्र वह आवेंगे । उन्होने कहा—'अच्छा'; और सोम का अभिषव किया । उन देवों ने 'आ त्वा रथं यथोतयः' इत्यादि अनुष्टुप् मन्त्र से अभिषव-स्थान तक उन्हें लौटा लाया । 'इदं वसो सुतमन्धः' इस ऋचा के पाद में अभिषववाचक 'सुत' शब्द से इन देवों ने इन्द्र को प्रकट किया । 'इन्द्र नेदीय एदिहि' इस मन्त्र से [समीप के वाचक 'नेदीय एदिहि' इन दो पदों से] इन इन्द्र को याग देश के मध्य में प्राप्त किया ।

वेदनं प्रशंसति—

**आगतेन्द्रेण यज्ञेन यजते, सेन्द्रेण यज्ञेन राध्नोति य एवं वेद ॥ १५ ॥ इति ।**

आगत इन्द्रो यस्मिन् यज्ञे, सोऽयमागतेन्द्रः, वेदिता तादृशेन यज्ञेन यजते, तथेन्द्रसहितेन यज्ञेन समृद्धो भवति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां द्वितीयाध्याये (द्वादशाध्याये) चतुर्थः खण्डः ॥४॥ (१५) [८६]

जो इस प्रकार जानता है वह उस यज्ञ के द्वारा यजन करता है, जिसमें इन्द्र आ गये हों और इस प्रकार इन्द्र के सहित यज्ञ से समृद्धि को प्राप्त करता है ।

॥ इस प्रकार बारहवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

---

१. ऋ० ८. ६८. १ । २. ऋ० ८. २. १ । ३. ऋ० ८. ५३. ५ ।
४. आश्व० श्रौ० ५. १४. २–५ ।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ पञ्चमः खण्डः

पूर्वोक्तमिन्द्र नेदीय इत्यादिकं प्रगाथं शंसितुमाख्यायिकामाह—

**इन्द्रं वै वृत्रं जघ्निवांसं नास्तृतेति मन्यमानाः सर्वा देवता अजहुस्तं मरुत एव स्वापयो नाजहुः, प्राणा वै मरुतः स्वापयः, प्राणा हैवैनं तं नाजहुस्तस्मादेषोऽच्युतः स्वापिमान् प्रगाथः शस्यत आस्वापे स्वापिभिरिति ॥** इति ।

इन्द्रो यदा वृत्रं हतवान्,[1] तदा तमिन्द्रं सर्वा देवता अजहुः परित्यक्तवत्यः । कीदृश्यो देवताः ? नास्तृतेति न हिंसितवानिन्द्र इति मन्यमानाः । वृत्रस्यातिप्रौढशरीरत्वात् प्रहारमात्रेणासौ न मृत इति देवानां भ्रान्तिः । इतरदेवताभिः परित्यक्तं तमिन्द्रं मरुत एव नाजहुर्न परित्यक्तवन्तः तद्विशेषणं स्वापय[2] इति । सुषुप्तिकालेऽपि वर्तमाना इत्यर्थः । स्वापिशब्दार्थः श्रुत्यैव प्रदर्श्यते । प्राणा वै देहमध्ये वर्तमानाः, प्राणा एव स्वापयो मरुतः स्वापकालानुवर्तिनो वायवः । प्राणानां तत्कालानुवृत्तिमाथर्वणिकाः प्रश्नोत्तराभ्यामामनन्ति—'भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति ? कान्यस्मिञ्जाग्रति ?'[3] इति प्रश्नः । 'प्राणाग्नय एवैतस्मिन् पुरे जाग्रति'[4] इत्युत्तरम् । एवंविधा यस्मात् प्राणरूपा मरुत एवैनमिन्द्रं तदानीं न परित्यक्तवन्तः । तस्मात्कारणादेष 'इन्द्र नेदीयः'[5] इत्यादिकः स्वापिमान् प्रगाथोऽच्युतो मरुत्वतीयशस्त्रे सर्वथाऽप्यपरित्यक्तः शस्यते । स्वापिशब्दो यस्मिन् प्रगाथेऽस्ति सोऽयं स्वापिमान् । आस्वापे स्वापिभिरित्ययं पादः, तस्मिन् प्रगाथ आम्नायते, तस्मादयं स्वापिमान् ॥

iii. १६ [xii. ५] जब इन्द्र ने वृत्र को मारा तब उन इन्द्र को सभी देवों ने यह मानकर कि 'इन्द्र वृत्र को नहीं मार पाए' छोड़ दिया । किन्तु केवल मरुत् ने ही सुषुप्ति काल में वर्तमान रहकर उन्हे नहीं छोड़ा । सुषुप्तिकाल में वर्तमान प्राण ही मरुत् है । मात्र प्राणों ने इन [इन्द्र] को न छोड़ा । इसीलिए 'स्वापि' शब्द से युक्त प्रगाथ [मरुत्वतीय शस्त्र में किसी भी तरह] न छोड़कर बोला जाता है । 'आस्वापे स्वापिभिः' इस पाद में प्रगाथ आम्नात है । अतः यह स्वापिमान् प्रगाथ है ।

इत्थमिन्द्रनिहवाख्यं प्रगाथं प्रशस्य पुनरपि प्रकारान्तरेण तमेव प्रशंसति—

**अपि ह यद्यैन्द्रमेवात ऊर्ध्वं छन्दः शस्यते तद्ध सर्वं मरुत्वतीयं भवत्येष चेदच्युतः स्वापिमान् प्रगाथः शस्यत आस्वापे स्वापिभिरिति ॥१६॥** इति ।

---

१. 'तत्रोपमार्थेन युद्धवर्णा भवन्ति'—इति निरु० २. ५. २ ।

२. 'आपिराप्तो बन्धुः'—इति षड्गुरुशिष्यः । 'स्वापयः स्वापिनामानो मरुतः'—इति भट्टभास्करः । 'हे स्वापे सुतरामाप्तेन्द्र स्वापिभिः शोभना आपयः आप्ता बन्धवः यासु ताभिरूतिभिरेहि'—इति ऋक्संहिताभाष्ये सायणः ।

३. प्र० उप० ४. १ । ४. प्र० उप० ४. ३ । ५. ऋ० ८. ५३. ५ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अपि ह्यपि चात एतत्प्रगाथशंसनादूर्ध्वमस्मिन् मरुत्वतीयशस्त्रे यद्यैन्द्रमेव च्छन्द इन्द्र-संबन्ध्येव च्छन्दःशब्दोपलक्षितो मन्त्रः शस्यते । तद्ध सर्वं तदपि मन्त्रजातं मरुत्वतीयशस्त्रं भवति । एष चेदित्यादिना तत्र युक्तिरुच्यते । आस्वापे स्वापिभिरितिपादोपेतत्वेन स्वापि-मानेष प्रगाथोऽच्युतश्चेदपरित्यक्तश्चेत् तदा मरुत्वतीयं भवति स्वापिशब्दवाच्यानां मरुतां प्रतिपादकत्वादित्यर्थः । सोऽयं प्रगाथः शाखान्तरे द्रष्टव्यः[1] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीय-पञ्चिकायां द्वितीयाध्याये (द्वादशाध्याये) पञ्चमः खण्डः ॥ ५ ॥ (१६) [८७]

फिर भी जब इस [प्रगाथ] के शंसन के बाद [इस मरुत्वतीय शस्त्र में] इन्द्र सम्बन्धी छन्द [ = मन्त्र] का शंसन किया जाता है तब वह सभी मरुत्वतीय शस्त्र होता है। 'आस्वापे स्वापिभिः' इस पाद से युक्त स्वापिमान् प्रगाथ यदि न छोड़ा जाए तो [मरुतों के प्रतिपादक 'स्वापि' शब्द के होने से] मरुत्वतीय शस्त्र होता है।

॥ इस प्रकार बारहवें अध्याय के पाँचवें खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

अथास्मिन् मरुत्वतीयशस्त्रे 'प्र नूनं ब्रह्मणस्पतिः'[2] इत्यादिकं प्रगाथं विधत्ते—

**ब्राह्मणस्पत्यं प्रगाथं शंसति ॥ इति ।**

द्वयोर्ऋचोः समूहः प्रगाथः । तथा च आश्वलायन आह—'तृचाः प्रतिपदनुचरा द्वृचाः प्रगाथाः'[3] इति । ऋग्द्वयमेवानुष्ठानकाले तृचरूपेण प्रग्रथ्यते । तस्मादयं प्रगाथ इत्युच्यते ॥

iii. १७ [xii.६] ब्रह्मणस्पति देवताक प्रगाथ का शंसन करता है।

विहितं ब्राह्मणस्पत्यं प्रशंसति—

**बृहस्पतिपुरोहिता वै देवा अजयन् स्वर्गं लोकं व्यस्मिँल्लोकेऽजयन्त तथैवै-तद् यजमानो बृहस्पतिपुरोहित एव जयति स्वर्गं लोकं व्यस्मिँल्लोके जयते ॥ इति ।**

योऽयं प्रगाथे ब्रह्मणस्पतिराम्नातः सोऽयं बृहस्पतिस्तस्य ब्राह्मणजातिस्वामित्वात् । स च बृहस्पतिः पुरोहितो येषां देवानां ते बृहस्पतिपुरोहिताः[4] । तथा च श्रुत्यन्तरे

---

१. यद्यप्ययमपि प्रगाथः क्वचित्-क्वचित् शाकलशाखीयसंहितापुस्तकेऽपि बाल-खिल्यान्तर्गतत्वेन दृश्यते, तथा मुद्रितश्च मोक्षमूलरभट्टेन; परन्तु नैष शाकल-शाखीयोऽपि त्वयं बाष्कलशाखीयः । अतएव शाकलसंहिताव्याख्याने 'वेदार्थप्रकाशे' न व्याख्यातं तद्वालखिल्यं काण्डमेतेन सायणाचार्येण; तथैवेहाप्युक्तं 'शाखान्तरे द्रष्टव्यः'—इति । २. ऋ० १. ४०. ५ । ३. आश्व० श्रौ० ५. १४. ७ ।
४. 'त्रयस्त्रिंशद्धि देवा बृहस्पतिपुरोहिताः'—इति शत० ब्रा० १२. ८. ३. २९ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

समाम्नातम्—'बृहस्पतिर्देवानां पुरोहित आसीत्'[1] इति पौरोहित्यसिद्ध्यर्थमेव चतुर्विंशतिरात्रनामकं सत्रमन्वतिष्ठन्। तदपि श्रुत्यन्तर एवाऽऽम्नातम्—'बृहस्पतिरकामयत यन्मे देवा दधीरन् गच्छेयं पुरोधामिति स एतं चतुर्विंशतिरात्रमपश्यत्'[2] इति। तादृशा बृहस्पतिपुरोहिता देवा अनेन प्रगाथेन स्वर्गं लोकं जित्वा भूलोकेऽपि विजयं प्राप्ताः। तथैव तत्पाठेनेदानींतनोऽपि यजमानो 'बृहस्पतिपुरोहित एव' बृहस्पत्यनुग्रहयुक्त एव सँल्लोकद्वयं जयति॥

बृहस्पति को पुरोहित बनाकर देवों ने स्वर्गलोक को जीत लिया और इस भूलोक पर भी विजय प्राप्त की। उसी प्रकार उस पाठ से यह यजमान भी पुरोहित के समान बृहस्पति से स्वर्गलोक को जीत लेता है और इस लोक में भी जय प्राप्त करता है।

अत्र किंचिच्चोद्यमुद्भावयति—

**तौ वा एतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं शस्येते, तदाहुर्यन्न किंचनास्तुतं सत्पुनरादायं शस्यतेऽथ कस्मादेतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं शस्येते इति॥ इति।**

समाम्नाते द्वे एव ऋचौ प्रग्रथनेन तृचरूपतया संपाद्येते। प्रग्रथनप्रकार उच्यते—'प्र नूनम्' इत्येषा बृहतीछन्दस्का। द्वादशाक्षरेण तृतीयपादेनाष्टाक्षरैश्चान्यैर्युक्ततया षट्त्रिंशदक्षरसंपत्तेः। सेयमृक् सकृत् पठनीया। पुनरपि तत्रत्यमष्टाक्षरं चतुर्थपादं द्विराम्नाय षोडशाक्षरोऽर्धर्चः संपादनीयः। इतरस्यामृचि प्रथमपादो द्वादशाक्षरः। द्वितीयपादोऽष्टाक्षरः। एतत् सर्वं मिलित्वा द्वितीया बृहती संपद्यते। तत्रत्यमन्तिममष्टाक्षरपादं द्विरभ्यस्य समाम्नात उत्तरार्धे द्वादशाक्षरं प्रथमपादमष्टाक्षरमुत्तरपादं च पठित्वा तृतीया बृहती संपादनीया। अयमेव प्रग्रथनप्रकार 'इन्द्र नेदीय एदिहि' इत्यत्रापि प्रगाथे योजनीयः। तावेतौ प्रगाथौ 'पुनरादायं' पुनः पुनः पठितमेव पादमादायाऽऽदाय शस्येते। सामगैस्तु माध्यंदिनपवमाने प्रगाथावेतावस्तुतौ। तैरस्तुतयोर्होत्रा शंसनमयुक्तम्। न ह्यत्र क्वचिदपि सामगैरस्तुतं मन्त्रजातं पुनः पुनरादायं शस्यमानं दृष्टम्। एवं सति कस्मात्कारणादस्तुतयोरत्र शंसनमिति चोद्यवादिन आहुः॥

वे ये दोनों प्रगाथ यद्यपि [सामगान करने वालों के द्वारा माध्यन्दिन पवमान में] स्तुत नहीं होते फिर भी पुनः पुनः [पादों को] लेकर पाठ किया जाता है। [प्रश्न] इस सम्बन्ध में याज्ञिक कहते हैं कि जो मन्त्र कहीं भी स्तुत नहीं हुए हैं, उन्हें [बिना जाने] पुनः-पुनः लेकर पाठ करते हैं तो कैसे इन दोनों प्रगाथों को जो स्तुत नहीं हुए हैं, पुनः पुनः लेकर पाठ करते हैं ?

---

१. तै० सं. ६. ४. १०। २. तै० सं. ७. ४. १. १।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एतच्चोद्यमनास्थाय परिहारमनुक्त्वैव चोद्यान्तरमुद्भावयति—

**पवमानोक्थं वा एतद् यन्मरुत्वतीयं षट्सु वा अत्र गायत्रीषु स्तुवते, षट्सु बृहतीषु, तिसृषु त्रिष्टुप्सु, स वा एष त्रिच्छन्दाः, पञ्चदशो माध्यंदिनः पवमानः, तदाहुः कथं त एष त्रिच्छन्दाः पञ्चदशो माध्यंदिनः पवमानोऽनुशस्तो भवतीति ॥ इति ।**

मरुत्वतीयशस्त्रं यदस्ति, तदेतत् 'पवमानोक्थं' माध्यंदिनपवमानसंबन्धिशस्त्रम् । अत्र माध्यंदिनपवमानस्तोत्र 'उच्चा ते जातम्' इत्यादिषु 'षट्सु गायत्रीषु' प्रथमं स्तुवते ।[1] ततः 'पुनानः सोम' इत्यादिषु 'षट्सु बृहतीषु' स्तुवते ।[2] यद्यपि द्व्यृचात्मकः प्रगाथः, तथाऽपि पूर्वोक्तन्यायेन प्रग्रथ्य तिस्रो बृहत्यः संपादनीयाः । तासु च रौरवसाम प्रागुद्गातव्यं, तत उपरि यौधाजयसाम गातव्यम् । एवं सति तिस्रो बृहत्यः सामद्वयार्थं द्विरावर्त्यमानाः षट् संपद्यन्ते । तथा 'प्र तु द्रव'[3] इत्यादिषु तिसृषु त्रिष्टुप्सु स्तुवते ।[4] एवं सति स

---

१. छन्दोगाम्नाये 'उच्चा ते'—इति, 'स न इन्द्राय' इति, 'एना विश्वानि'—इति, ऋक्त्रयाणां समूहमेकं तृचं सूक्तमाम्नातमस्ति (उ० आ० १.१.८.१–३) । तत्र 'गायत्रेण स्तुत्वा'—इत्यादि ब्राह्मणशंसनात् (ता० ब्रा ७.३.११) अग्निष्टोमीय-माध्यन्दिनपवमाननिष्पत्तये 'गायत्र' नाम साम गातव्यं भवति । तत्स्वरूपं तु गुरुमुखाद् उद्गातृप्रयोगादिदर्शनाच्चावगन्तव्यम्; सामसंग्रहे प्रकाशितं च । ततस्तमेव तृचात्मकं सूक्तमाश्रित्य 'निधनवता स्तुवन्ति'—इत्यादि ब्राह्मणशंसनात् (ता० ब्रा० ७.३.१३) तदर्थमेव 'आमहीयवं' नाम साम च गातव्यं भवति । तदेव ऊहगानग्रन्थस्यादिमं साम । तदित्थं गायत्रामहीयवसामद्वयार्थं द्विरावर्त्यमानास्तास्तिस्र एव ऋचः षट् सम्पद्यन्ते ।

२. अस्ति छन्दोगाम्नाये 'पुनानः सोम'—इति, 'दुहान ऊधर्दिव्यम्'—इति, ऋग्द्वयात्मकमेकं सूक्तम् (उ० आ० १.१.९ १,२) । तत्र 'ऐडेन बृहतीमारभन्ते'—इत्यादिब्राह्मणशासनात् (ता० ब्रा० ७ ३.१४) अग्निष्टोमीयमाध्यन्दिनपवमाननिष्पत्तये 'रौरवं' नाम साम गातव्यं भवति । श्रूयते च तदूहगाने (१.१.२) । ततस्तमेव द्व्यृचं सूक्तमाश्रित्य 'तत्रापि त्रिणिधनम्'—इत्यादिब्राह्मणशासनात् (ता० ब्रा० ७.३.१७) तदर्थ मेव 'यौधाजयं' नाम साम च गातव्यं भवति । तदपि श्रूयते तत्रैव तत उत्तरम् (ऊ० गा० १.१.३) ।

३. उ० आ० १.१.१०.१–३ ।

४. 'औशनं'—नामेति शेषः । तच्च श्रूयते यौधाजयानन्तरमेव (ऊ० गा० १.१.४) । 'अनिधनवन्तो भवति'—इत्यादि च तद्विधायकं ब्राह्मणम् (७.३.२३) ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एष माध्यंदिनपवमानः 'त्रिच्छन्दाः' भवति ।[1] गायत्रीबृहतीत्रिष्टुब्रूपाणां त्रयाणां छन्दसां सद्भावात् । तथा स पवमानः पञ्चदशस्तोमोपेतः । तस्य च स्तोमस्य प्रकारश्छन्दोगब्राह्मण एवमाम्नायते—'पञ्चभ्यो हिंकरोति, स तिसृभिः स एकया स एकया, पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया, पञ्चभ्यो हिंकरोति स एकया स एकया स तिसृभिः'[2] इति । अस्यायमर्थः—तृचात्मकमेकं सूक्तं त्रिरावर्तनीयम् । तत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासो विधेयः । द्वितीयावृत्तौ मध्यमायाः । तृतीयावृत्तौ चरमायाः । एवं प्रतिसाम सावृत्ताभिः पञ्चदशभिर्ऋग्भिरुपेतत्वात् पञ्चदश स्तोमा इति । एवं सत्यत्र चोद्यवादिन आहुः—हे होतः, ते 'एषः' यथोक्तलक्षणः 'पवमानः' कथं मरुत्वतीयशस्त्रेणानुशस्तो भवति ? अनुशंसनं चान्याय्यम् । 'यथा वाव स्तोत्रमेवं शस्त्रम्' इति न्यायात् । अतोऽत्र स्तोत्रशस्त्रयोर्वैलक्षण्यमयुक्तमिति चोद्यान्तरम् ॥

जो यह मरुत्वतीय शस्त्र है [वह माध्यन्दिन] पवमान सम्बन्धी शस्त्र है । यहाँ [माध्यन्दिन पवमान स्तोत्र में 'उच्चा ते जातम्' इत्यादि] छः गायत्री छन्दों में स्तुति की जाती है; ['पुनानः सोम' इत्यादि] छः बृहती छन्दों में, ['प्र तु द्रवेति' इत्यादि] तीन त्रिष्टुप् छन्दों में [स्तुति की जाती है] । इस प्रकार वह यह माध्यन्दिनपवमान-स्तोत्र तीन छन्दों एवं पन्द्रह मन्त्रों वाला होता है । [प्रश्न] इस संबन्ध में याज्ञिक आक्षेप करते हैं कि यह तीन छन्दों वाला और पन्द्रह मन्त्रों वाला माध्यन्दिन पवमान स्तोत्र कैसे [मरुत्वतीय शस्त्र के द्वारा] अनुशस्त होता है ?

तत्र द्वितीयस्य चोद्यस्य तावदुत्तरं दर्शयति—

**ये एव गायत्र्या उत्तरे प्रतिपदो यो गायत्रोऽनुचरस्ताभिरेवास्य गायत्र्योऽनुशस्ता भवन्त्येताभ्यामेवास्य प्रगाथाभ्यां बृहत्योऽनुशस्ता भवन्ति** ॥ इति ।

'आ त्वा रथम्' इत्यस्मिन् मरुत्वतीयशस्त्रस्य प्रतिपद्रूपे तृचे प्रथमा ऋगनुष्टुब्, ये एवोत्तरे प्रतिपदः प्रतिपद् रूपे द्वे ऋचौ गायत्र्यौ विद्येते । यश्चान्यः 'इदं वसो सुतमन्धः' इत्यनुचराख्यस्तृचो गायत्रः, 'ताभिरेव' पञ्चभिर्गायत्रीभिरस्य होतुः पवमानस्तोत्रगता गायत्र्योऽनुशस्ता भवन्ति । 'इन्द्र नेदीयः' इति योऽयमिन्द्रनिहवः प्रगाथः, यश्च 'प्र नूनं ब्रह्मणस्पतिः' इति ब्राह्मणस्पत्यः प्रगाथः, एताभ्यामुत्तराभ्यां पवमानस्तोत्रगताः बृहत्योऽनुशस्ता भवन्ति; प्रग्रथनेन बृहतीसंपादनस्योभयत्र समानत्वात् । यत्तु त्रिष्टुभामनुशंसनं तदुपरिष्टाद् अभिधास्यते ॥

[उत्तर] ['आ त्वा रथम्' इत्यादि मरुत्वतीयशस्त्र की] जो प्रतिपद् रूप तृच में [प्रथम ऋचा अनुष्टुप् छन्दस्क है और] अन्तिम दो ऋचाएँ गायत्री छन्द में हैं और

---

१. "माध्यन्दिनं सवनं पुपुवे त्रिभिश्च छन्दोभिः पञ्चभिश्च सामभिः"—इति ता० ब्रा० ७.३.१ । गायत्रीत्रिष्टुब्बृहतीभिश्छन्दोभिः, गायत्रामहीयवरौरवयौधाजयौशनैश्च सामभिरित्यर्थः ।

२. ता० ब्रा० ३.४.१ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

['इदं वसो सुतमन्धः' इत्यादि] जो अनुचर नामक तृच गायत्री छन्दस्क है—उन पाँच गायत्री के द्वारा इसकी [पवमानस्तोत्रगत] गायत्री अनुशस्त हो जाती हैं। [इसी प्रकार 'इन्द्र नेदीय' आदि प्रगाथ और 'प्र नूनं ब्रह्मणस्पति' आदि] इन दोनों प्रगाथों द्वारा इसकी [पवमानस्तोत्रगत] बृहती छन्दस्क ऋचाएँ अनुशस्त हो जाती हैं।

अथ प्रसङ्गात् प्रथमचोद्यस्यापि परिहारं दर्शयन् पुनः पुनरादानस्यानुशंसनं दर्शयति—

**तासु वा एतासु बृहतीषु सामगा रौरवयौधाजयाभ्यां पुनरादायं स्तुवते; तस्मादेतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं शस्येते, तच्छस्त्रेण स्तोत्रमन्वैति ॥** इति।

'पुनानः सोम' इत्यस्मिन् प्रगाथे या बृहत्यः प्रग्रथनेन संपादिताः, 'तासु' एवैतासु बृहतीषु रौरवाख्येन यौधाजयाख्येन च साम्ना पुनः पुनः पठितमेव पादमादायादाय स्तुवते। तस्मादेताविन्द्रनिहवब्राह्मणस्पत्यप्रगाथौ सामगैरस्तुतावपि सन्तौ होत्रा पुनः पुनः पठितमेव पादमादायादाय शस्येते। तथा च सत्ययं होता स्वकीयेन शस्त्रेण स्तोत्रमनुगच्छति।[1]

[प्रथम प्रश्न का उत्तर] उन्हीं ['पुनानः सोम' इत्यादि प्रगाथ] बृहती छन्दों में सामगान करने वाले रौरव और यौधाजय नामक साम के द्वारा पादों की पुनः पुनः आवृत्ति कर स्तुति करते हैं। इसलिए ये दोनों प्रगाथ यद्यपि स्तुत नहीं है तथापि पुनः पुनः पादों की आवृत्ति कर पाठ किया जाता है। इस प्रकार होता स्वकीय शस्त्र से स्तोत्र का अनुगमन करता है।

इदानीं त्रिष्टुभामनुशंसनं दर्शयति—

**ये एव त्रिष्टुभौ धाय्ये, यत् त्रैष्टुभं निविद्धानं, ताभिरेवास्य त्रिष्टुभोऽनुशस्ता भवन्ति ॥** इति।

यथा सामिधेनीषु प्रक्षिप्यमाणानामृचां धाय्येति संज्ञा[2], एवमत्रापि। तथा सति 'अग्निर्नेता भग इव क्षितीनाम्'[3] इत्येका धाय्या 'त्वं सोम क्रतुभिः'[4] इत्यपरा। 'ये एव' त्रिष्टुप्छन्दस्के धाय्ये विद्येते, यच्च त्रिष्टुप्छन्दस्कं 'जनिष्ठा उग्रः'—इत्यादिकं निविद्धानं सूक्तम्।[5] निविदां पदानि धीयन्ते प्रक्षिप्यन्ते यस्मिन् सूक्ते तन्निविद्धानम्। 'ताभिरेव' सूक्तगताभिर्धाय्यासहिताभिस्त्रिष्टुब्भिरस्य होतुः स्तोत्रगताः 'त्रिष्टुभः अनुशस्ता भवन्ति' ॥

---

१. 'अनु आ एति स्तोत्रगतबृहतीषु पुनरादाय गीतिं शस्त्रगतबृहतीषु पुनरादाय शंसनं भिन्नदेशगतमप्यनुकरोत्येवेत्यर्थः'—इति षड्गुरुशिष्यः।

२. द्र० इतः पूर्वम्, २० पृष्ठे।　　३. ऋ० ३.२०.४।

४. ऋ० १.९१.२।　　५. ऋ० १०.७३।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जो त्रिष्टुप् छन्दस्क ['अग्निर्नेता भग इव क्षितीनाम्' और 'त्व सोम क्रतुभिः'] दो धाय्या हैं और जो त्रिष्टुप् छन्दस्क ['जनिष्ठा उग्र' आदि] निविद्धान [जिसमें निविद रक्खे जाते हैं वे सूक्त] हैं। उन्हीं [सूक्तगत धाय्या के सहित त्रिष्टुप् मन्त्रों] के द्वारा इस [होता] के [स्तोत्रगत] त्रिष्टुप् अनुकूल होते हैं।

'उक्तार्थवेदनं प्रशंसति—

**एवमु हास्यैष त्रिच्छन्दाः पञ्चदशो माध्यंदिनः पवमानोऽनुशस्तो भवति य एवं वेद ॥ १७ ॥** इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीय-पञ्चिकायां द्वितीयाध्याये (द्वादशाध्याये) षष्ठः खण्डः ॥ ६ ॥ (१७) [८८]

जो इस प्रकार जानता है वस्तुतः उसका यह तीन छन्दों वाला और पन्द्रह मन्त्रों वाला माध्यन्दिन पवमान अनुशस्त होता है।

॥ इस प्रकारबारहवें अध्याय के छठवें खण्ड की हिन्दी पूर्ण हुई ॥ ६ ॥

## अथ सप्तमः खण्डः

मरुत्वतीयशस्त्रे प्रक्षेपणीया ऋचो विधत्ते—

**धाय्याः शंसति ॥** इति ।

'अग्निर्नेता'[1] इत्येका । 'त्वं सोम क्रतुभिः'[2] इति द्वितीया । 'पिन्वन्त्यपः'[3] इति तृतीया । ताः शंसेत् ॥

iii. १८ [xii. ७] [मरुत्वतीयशस्त्र में रक्खी जाने वाली ऋचाएँ]—धाय्या [=प्रक्षिप्त ऋक्] का शंसन करता है।

तासां प्रशंसामाह—

**धाय्याभिर्वै प्रजापतिरिमाँल्लोकानधयद् यं यं काममकामयत ॥** इति ।

पुरा प्रजापतिर्यं यं लोकं कामितवांस्तानिमाँल्लोकानुक्ताभिर्धाय्याभिरेवाधयद् अपिबत्[4] । लोकशब्देन जलम् । [पादवेदनायां सति धमतो यजमानस्य(?) तत्प्राप्तवान्] ॥

जिस-जिस की कामना की उन लोकों से प्रजापति ने धाय्या मन्त्रों के द्वारा प्राप्त किया।

---

१. ऋ० ३.२०.४ । २. ऋ० १.९१.२ । ३. ऋ० १.६४.४ ।

४. 'यद्यपि धयतिः पाने पठ्यते, तथापीह पानजन्या व्याप्तिः पानेन लक्ष्यते । इमान् लोकानाभिर्व्याप्तवान्'—इति भट्टभास्करः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदनं प्रशंसति—

**तथैवैतद् यजमानो धाय्याभिरेवेमाँल्लोकान् धयति, यं यं कामं कामयते, य एवं वेद, यदेव धाय्याः३ ॥ इति ।**

या एवोक्ता धाय्याः सन्ति, ताभिर्वेदिता यजमानः कामितं लोकं धयति । अत्र धयत्याभिरिति[1] धाय्याशब्दनिर्वचनमर्थाद्दर्शितम् ॥

उसी प्रकार यह यजमान भी जो इस प्रकार जानता है; जिस-जिस की कामना करता है उसको इन लोकों से उन धाय्या मन्त्रों के द्वारा ही प्राप्त करता है ।

प्रकारान्तरेण प्रशंसामाह—

**यत्र यत्र वै देवा यज्ञस्य च्छिद्रं निरजानंस्तद्धाय्याभिरपिदधुस्तद्धाय्यानां धाय्यात्वम् ॥ इति ।**

देवा यदा यज्ञस्य च्छिद्रमङ्गवैगुण्यं ज्ञातवन्तः तदा[2] धाय्याभिः 'अपिदधुः' आच्छादितवन्तः । तस्माद् दधात्याभिरिति व्युत्पत्त्या धाय्यात्वं संपन्नम् ॥

देवों ने जहाँ-जहाँ यज्ञ में छिद्र अर्थात् अङ्गवैगुण्य पाया वहाँ उनको धाय्या मन्त्रों से आच्छादित कर दिया । ['आभिः दधाति' अर्थात् इनसे रखते हैं] यही धाय्या नाम का कारण है ।

वेदनं प्रशंसति—

**अच्छिद्रेण हास्य यज्ञेनेष्टं भवति, य एवं वेद, यद्वेव धाय्याः३ ॥ इति ।**

'यद्वेव' इत्यत्र योऽयमुकारः, सोऽयं पूर्वेण फलेन समुच्चयार्थः । न केवलं पूर्वं फलं किंत्विदमपीत्यर्थः । अत्र पूर्ववत् प्लुतिः प्रशंसाद्योतनार्था ॥

जो इस प्रकार जानता है, जितनी भी धाय्या हैं, उनसे उसका यज्ञ बिना छिद्र के अर्थात् बिना त्रुटि के पूर्ण हो जाता है ।

पुनरपि प्रकारान्तरेण प्रशंसति—

**स्यूमहैतद् यज्ञस्य यद्धाय्यास्तद् यथा सूच्या वासः संदधदियादेवमेवैताभिर्यज्ञस्य च्छिद्रं संदधदेति, य एवं वेद, यद्वेव धाय्या३ः ॥ इति ।**

---

१. 'धयत्याभिरिति करणेऽचो यदिति यतं बाधित्वा छान्दसो ण्यत् । पाय्यसान्नाय्येति निपातनादेव वावगम्यते । अतोऽन्यत्रापि दृश्यते धाय्याः शंसतीति । आतो युक् चिण्-कृतोरिति युक् । एवमग्निर्नेता, त्वं सोम क्रतुभिरित्यादय ऋचो धाय्या उच्यन्ते न तु सामिधेन्यः'—इति भट्टभास्करः ।

२. 'यज्ञसम्बन्धिनि यस्मिन्-यस्मिनङ्गे 'छिद्रं' वैकल्यं देवा निर्ज्ञातवन्तः' तत् 'छिद्रं'—इति वा पाठः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जो यह धाय्या हैं, वस्तुतः यह यज्ञ की सिलाई हैं। जैसे सूई से वस्त्र सिला जाता है उसी प्रकार जितनी भी धाय्या हैं उन इन [धाय्या मन्त्रों] से, जो इस प्रकार जानता है, वह यज्ञ के फटे हुए भाग को सिलता है।

पुनरपि प्रकारान्तरेण प्रशंसति—

**तान्यु वा एतान्युपसदामेवोक्थानि यद्धाय्या, अग्निर्नेतेत्याग्नेयी प्रथमोपसत्, तस्या एतदुक्थं, 'त्वं सोम क्रतुभिः' इति सौम्या द्वितीयोपसत्, तस्या एतदुक्थं, 'पिन्वन्त्यपः' इति वैष्णवी तृतीयोपसत्, तस्या एतदुक्थम् ॥ इति ।**

उपसदामर्थवादेऽग्निरनीकं, सोमः शल्यो विष्णुस्तेजनमिति प्रस्तुत्याग्न्यादिदेवताकास्तिस्र उपसदः समाम्नाताः[1]। अत्रापि 'अग्निर्नेता' इत्यादयस्तत्तद्देवताका एव धाय्याः श्रुताः। एकैका धाय्या एकैकस्या उपसदः शस्त्रम् ॥

जो ये धाय्या मन्त्र हैं वे इन उपसदों के ही उक्थ हैं। 'अग्निर्नेता' इत्यादि अग्निदेवताक मन्त्र प्रथम उपसद् है, उसका यह उक्थ है। 'त्वं सोम क्रतुभिः' इत्यादि सोमदेवताक मन्त्र द्वितीय उपसद् है, उसका यह उक्थ है। 'पिन्वन्त्यपः' इत्यादि विष्णुदेवताक मन्त्र तृतीय उपसद् है, उसका यह उक्थ है।

उक्तार्थवेदनं तत्पूर्वकं शंसनं च प्रशंसति—

**यावन्तं ह वै सौम्येनाध्वरेणेष्ट्वा लोकं जयति तमत एकैकयोपसदा जयति, य एवं वेद, यश्चैवं विद्वान् धाय्याः शंसति ॥ इति ।**

वेदिता शंसिता चैकैकधाय्यारूपयोपसदा कृत्स्नं सोमयागफलं प्राप्नोति। उपसत्संबन्धिशस्त्रत्वेनाभिहितत्वादुपसत्त्वोपचारः ॥

जो इस प्रकार जानता है और जो इस प्रकार जानते हुए धाय्या मन्त्रों का शंसन करता है; वह एक-एक धाय्या रूप उपसद् से ही उतने लोक जीत लेता है; जितने लोक पर वह सोम-याग करके विजय पाता है।

अत्र कंचित्पूर्वपक्षमुपन्यस्यति—

**तद्धैक आहुः-'तान् वो महः' इति शंसेद्, एतां वाव वयं भरतेषु शस्यमानामभिव्यजानीम इति वदन्तः ॥ इति ।**

तद्ध तत्रैव तृतीयधाय्याविषये केचिदेवमाहुः—'तान् वो महो मरुतः'[2] इत्येतां वैष्णवीं तृतीयां धाय्यां शंसेत्। न तु 'पिन्वन्त्यपः' इत्येताम्। तत्रोपपत्तिं चैवमाहुः—बिभर्ति फलमिति भरो यज्ञः, तं भरं तन्वन्तीति 'भरताः' ऋत्विजः तेषु पूर्वकालीनेषु

---

१. द्र० इतः पूर्वम्, १४८ पृ०।　　　२. ऋ० २.३४.११।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'तान् वो महः' इत्येतामेवर्चं शस्यमाना वयमभिजानीम इति स्वानुभवमितरेषामग्रे वदन्तस्तं पूर्वपक्षमाहुः ।।

उस [तृतीय धाय्या 'पिन्वन्त्यपः' आदि] के सम्बन्ध में कुछ लोगों का कहना है कि 'तान् वो महः' इत्यादि ऋचा का शंसन करना चाहिए। वे ऐसा कहते हुए पूर्वपक्ष रखते हैं कि 'हम लोगों ने पूर्वकालीन ऋत्विजों को इसका शंसन करते हुए सुना है।'

तं निराचष्टे—

**तत्तन्नाऽऽदृत्यम् ।।** इति।

तद्विषयं तन्मतं नाऽऽदरणीयम् ।।

किन्तु यह मत आदरणीय नहीं है।

विपक्षे बाधकं दर्शयति—

**यदेतां शंसेदीश्वरः पर्जन्योऽवर्ष्टोः ।।** इति।

यदि होता 'तान् वो महः' इत्येतामृचं शंसेत् तदानीं पर्जन्यो मेघः स्वस्वकालेष्ववर्ष्टोरीश्वरो वृष्टिराहित्यं कर्तुं समर्थो भवति।[1] वृष्टिर्न भवेत्। वृष्ट्यनुरूपाणां पदानां तस्यामृच्यभावादित्यर्थः ।।

[क्योंकि] यदि इसका होता शंसन करता है तो मेघ को वृष्टिहीन करने में समर्थ करता है।

सिद्धान्तं दर्शयति—

**'पिन्वन्त्यपः' इत्येव शंसेत् ।।** इति।

इयमेव धाय्या न तु 'तान् वो महः' इत्यादिकाऽपि ।।

अतः 'पिन्वन्त्यपः' इत्यादि ऋचा का ही शंसन करना चाहिए।

अत्र विहितायामृचि वृष्ट्यनुकूलपदसद्भावं दर्शयति—

**वृष्टिवनि पदं, मरुत इति मारुतमत्यं न मिहे वि नयन्तीति विनीतवद्, यद्विनीतवत् तद्विक्रान्तवद्, यद्विक्रान्तवत् तद्वैष्णवं, वाजिनमितीन्द्रो वै वाजी, तस्यां वा एतस्यां चत्वारि पदानि वृष्टिवनि मारुतं वैष्णवमैन्द्रम् ।।** इति।

अत्र 'पिन्वन्त्यपः' इति पदं श्रूयते, तत्सेचनार्थम्। 'पिवि सेचने'—इत्यस्माद्धातोरुत्पन्नत्वात्। अत इदं पदं वृष्टिवनि वृष्टिसंभजनकारीत्यर्थः। 'पिन्वन्त्यपो मरुतः' इत्यत्र मरुत इति पदम्, मारुतं मरुतां वाचकं पदम्, तदपि वृष्ट्यनुकूलम्, पुरोवातस्य वृष्ट्यङ्गत्वात्। 'अत्यं न मिहे वि नयन्ति वाजिनम्' इति तृतीयपादे विनीतवत्पदमस्ति 'विनयन्ति' इत्यस्य नयतिधातुजन्यत्वात्। तेन च विनयेन वृष्टिपातनं लक्ष्यते। किं च

---

१. 'वृषेस्तोसुनि रूपम्' इति (पा० सू० ३.४.९)।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यद् विनीतवत् पदं तद्विक्रान्तवदित्यमुमर्थमाचष्टे; धातूनामनेकार्थत्वात् । तथा सति यद्विक्रान्तवत्पदम्, तद्वैष्णवं विष्णुसंबन्धि । 'इदं विष्णुर्विचक्रमे'[1] इति श्रुत्यन्तरात् । तथा सति वैष्णव्यास्तृतीयस्या उपसदः संबद्धमपि भवतीत्यर्थः । तस्मिन्नेव तृतीयपादे वाजिनमिति पदं विद्यते, तत्रेन्द्रो वाजिशब्दार्थः वृष्टिद्वाराऽन्नप्रदत्वेन वाजोऽन्नमस्यास्तीति निर्वक्तुं शक्यत्वात् । उक्तेन प्रकारेण तस्यामेवैतस्यां 'पिन्वन्त्यपः' इत्यृचि चत्वारि पदानि वृष्टेरनुकूलानि,–वृष्टिवनि, मारुतं, वैष्णवम्, ऐन्द्रं चेति । तस्मादत्र पूर्वोक्तदोषो नास्तीत्यर्थः ॥

यह [सेचनार्थक 'पिवि' धातु से व्युत्पन्न होने के कारण 'पिन्वन्त्यपः'] पद वृष्टिसंभजनकारी है। इस ऋचा में 'मरुत' यह पद [वृष्टि के पूर्व वायु के होने से] मरुतों का वाचक है। 'अत्यं न मिहे वि नयन्ति' इस तृतीयपाद में [वृष्टिपात का लक्षक] विनीतवत् पद है, और जो विनीतवत् पद है, वह विक्रान्तवत् है और जो विक्रान्तवत् पद है, वह विष्णु से सम्बन्धित है। इसी तृतीयपाद में जो 'वाजिनम्' पद है वहाँ वाजीशब्द का अर्थ इन्द्र है। इस प्रकार उसी [ऋचा] में वृष्टि से सम्बन्धित, मरुत् से सम्बन्धित, विष्णु से सम्बन्धित और इन्द्र से सम्बन्धित चार पद हैं। [अतः उक्त दोष नहीं है]।

पुनरप्येतामृचं प्रकारान्तरेण प्रशंसति—

**सा वा एषा तृतीयसवनभाजना सती मध्यंदिने शस्यते, यस्माद्धेदं भरतानां पशवः सायंगोष्ठाः सन्तो मध्यंदिने संगविनीमायन्ति, सो जगती, जागता हि पशवः, आत्मा यजमानस्य मध्यंदिनस्तद् यजमाने पशून् दधाति ॥ १८ ॥** इति ।

येयं 'पिन्वन्त्यपः' इत्यृगस्ति सैषैव 'तृतीयसवनभाजना' जगतीछन्दस्कत्वाज्जागतस्य तृतीयसवनस्य योग्या । तादृशी सती होत्रा मध्यंदिने शस्यते । तस्मादेव कारणादिदं लोके दृश्यते । सायंकाले गोष्ठे व्रजे ये पशवस्तिष्ठन्ति ते 'सायंगोष्ठाः' । भरतानामृत्विजां पशवस्तादृशाः सन्तो मध्यंदिने 'संगविनीं' संगवकालयोग्यां शालामायन्ति प्राप्नुवन्ति । अयमर्थः—ये पशवः क्षीरं दुहन्ति, ते सायं गृहे समागच्छन्ति । ये तु न दुहन्ति, ते सायं व्रज एव निवसन्ति । उभयविधा अपि ते मध्याह्नकाले घर्मकालीनसंतापनिवारणाय निर्मितां संगवकालयोग्यां शालामागच्छन्ति । तदेतन्मध्याह्नपाठनिमित्तमिति । किंच 'सो' पूर्वोक्ताऽप्यृग्जगतीछन्दस्का । पशवश्च जगतीछन्दसा सह प्रजायन्ते, मध्यंदिन उत्पन्नत्वात्[2] । जागतो मध्यंदिनकालश्च यजमानस्याऽऽत्मा । तथा सति तस्मिन् काले जगतीपाठेन यजमाने पशून् संपादयति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां द्वितीयाध्याये (द्वादशाध्याये) सप्तमः खण्डः ॥७॥ (१८) [८९]

---

१. ऋ० १.२२.१७ । २. द्र० इतः पूर्वम्, १६४ पृ०; ता० ब्रा० ६.१.१० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वह यह ऋचा जो तृतीयसवन के योग्य है [होता द्वारा] माध्यन्दिन सवन में पढ़ी जाती है; क्योंकि ऋत्विजों के सायंगोष्ठ-पशु [जो पशु सन्ध्या समय गोष्ठ में रहते हैं] वे मध्याह्नकाल में संगविनी [अर्थात् धूप से बचने योग्य स्थान] में आ जाते हैं। वह [ऋचा] जगती छन्दस्क है; क्योंकि पशु भी जगती छन्द से सम्बन्धित हैं। मध्यन्दिन काल यजमान की आत्मा है। इस प्रकार उस [जगती के पाठ] से यजमान में पशुओं को संपादित करता है।

॥ इस प्रकार बारहवें अध्याय के सातवें खण्ड की हिन्दी पूर्ण हुई ॥ ७ ॥

## अथ अष्टमः खण्डः

अथ प्रगाथान्तरं विधत्ते—

**मरुत्वतीयं प्रगाथं शंसति, पशवो वै मरुतः, पशवः प्रगाथः, पशूनामवरुद्ध्यै ॥ इति।**

यस्मिन् प्रगाथे मरुतः श्रूयन्ते, सोऽयं मरुत्वतीयः प्रगाथः। 'प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत' इत्यस्मिन् प्रगाथे[1] मरुतः श्रूयन्ते तमिमं शंसेत्[2]। पशूनां प्रावरणराहित्येऽप्यरण्ये संचारकाले वायवोऽनुगृह्य न तान् बाधन्ते। तत्संबन्धान् मरुतां पशुत्वं प्रगाथस्य च पशुप्राप्तिहेतुत्वात् पशुत्वम्[3]; अतः स प्रगाथः पशुप्राप्त्यै भवति ॥

iii. १९ [xii ८] मरुत् देवताक प्रगाथ का होता शंसन करता है। मरुत पशु हैं। प्रगाथ पशु हैं, [अतः वह प्रगाथ] पशुओं की प्राप्ति के लिए होता है।

अथ निविद्धानीयं सूक्तं विधत्ते—

**'जनिष्ठा उग्रः सहसे तुरायेति' सूक्तं शंसति, तद्वा एतद् यजमानजननमेव सूक्तं, यजमानं ह वा एतेन यज्ञाद् देवयोन्यै प्रजनयति ॥ इति।**

होता 'जनिष्ठा' इत्यादिसूक्तं[4] शंसेत् तदेतत्सूक्तं यजमानजननमेव। कथमिति, तदुच्यते—एतेन सूक्तेन होता यज्ञादनुष्ठीयमानाद् देवयोन्यै' देवलोकस्थानार्थं यजमानं प्रजनयति। तस्माद् यजमानजननत्वम् ॥

'जनिष्ठा उग्रः' इत्यादि सूक्त का शंसन करता है। यह सूक्त यजमान के जन्म के लिए ही होता है। इस [सूक्त] के द्वारा होता यज्ञ से देवलोकस्थानार्थं यजमान को उत्पन्न करता है।

---

१. ऋ० ८.८९.३।
२. 'प्र व इन्द्राय बृहत इति मरुत्वतीयः प्रगाथः'—आश्व० श्रौ० ५.४.१८।
३. तु० महाभारतम् १२.२०७.२५–२६।
४. ऋ० १०.७३.१।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तेन रूपेण प्रशस्य पुनः प्रकारान्तरेण प्रशंसति—

**तत्संजयं भवति; सं च जयति, वि च जयते ॥** इति ।

यस्माद् एतेन सूक्तेन संयुज्यापि शत्रून् यजमानो जयति वियुज्यापि जयते; तस्मात् सूक्तं 'संजयं' समीचीनो जयो येन सूक्तेनेति समासः[१] ॥

**इससे वह समीचीन जय प्राप्त करता है और वह विशेष रूप से विजय प्राप्त करता है। इसलिए इस सूक्त को संजय कहते हैं।**

पुनरपि प्रकारान्तरेण प्रशंसति—

**एतद् गौरिवीतं, गौरिवीतिर्ह वै शाक्त्यो नेदिष्ठं स्वर्गस्य लोकस्यागच्छत्, स एतत् सूक्तमपश्यत्; तेन स्वर्गं लोकमजयत्, तथैवैतद् यजमान एतेन सूक्तेन स्वर्गं लोकं जयति ॥** इति ।

शक्तिनामकस्य महर्षेः कुले जातः शाक्त्यः, गौरिवीतिर्नाम महर्षिः । स तु स्वर्गस्य समीपं गत्वा प्रवेष्टुमशक्तः सन् तत्साधनत्वेनैतत् सूक्तं दृष्ट्वा तेन स्वर्गं प्राविशत् । तस्मादेतत् सूक्तं[२] महर्षिनाम्ना गौरिवीतमित्युच्यते । यथा महर्षिस्तथा यजमानोऽप्येतेन सूक्तेन स्वर्गं प्राप्नोति ॥

**यह गौरिवीति ऋषि के द्वारा दृष्ट सूक्त है, शक्ति के पुत्र गौरिवीति स्वर्ग लोक के समीप पहुँचे। [प्रवेश में असमर्थ होने पर] उन्होंने इस सूक्त का दर्शन किया और उससे स्वर्ग लोक को प्राप्त कर लिया। इसी प्रकार यह यजमान भी इस सूक्त के द्वारा स्वर्ग लोक को प्राप्त कर लेता है।**

तस्मिन् सूक्ते निवित्प्रक्षेपस्य स्थानं विधत्ते—

**तस्यार्धाः शस्त्वाऽर्धाः परिशिष्य मध्ये निविदं दधाति ॥** इति ।

'तस्य' सूक्तस्य संबन्धिनीष्वृक्षु भागद्वयं कृत्वा, द्वयोर्भागयोर्मध्ये 'इन्द्रो मरुत्वान्' इत्येतां निविदं[३] शंसेत् । नन्वस्मिन्नेकादशर्चे सूक्ते समभागो न संभवतीति चेत्, तर्हि प्रथमभागे कांचिदधिकां शस्त्वा तत ऊर्ध्वं प्रक्षिपेत् । 'एकःभूयसी शस्त्वा' इत्युक्तत्वात्[४] ॥

**उस [सूक्त] के आधे मन्त्रों का शंसन करके आधे [मन्त्रों] को छोड़ कर मध्य में [ग्यारह मन्त्रों के सूक्त में आठ ऋचाओं के बाद] निविद को रखता है।**

---

१. 'विजयो युद्ध उत्कर्षः संजयस्तु वशीकृताः'—इति षड्गुरुशिष्य. । 'संजयति च सम्यक् शत्रून् अभिभवति च विजयते च व्यावृत्य च सर्वस्माद् जेता भवति'—इति भट्टभास्करः ।

२. ऋ० १०.७३.१–११ । ३. निवि० २.१ ।

४. 'जनिष्ठा उग्र' इति । एकभूयसीः शस्त्वा मरुत्वतीयां निविदं दध्यात् सर्वत्र'—इति आश्व० श्रौ० ५.१४.१९;२० । एकां भुयसीषु शस्त्वा'—इति वा पाठः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

निविदं प्रशंसति—

**स्वर्गस्य हैष लोकस्य रोहो यन्निवित् ॥** इति ।

रोह आरोहणहेतुरित्यर्थः ॥

जो निवित् हैं वह इस स्वर्ग लोक के आरोहण-हेतु हैं ।

तत्र स्वरविशेषं विधत्ते—

**स्वर्गस्य हैतल्लोकस्याऽऽक्रमणं यन्निवित्, तामाक्रममाण इव शंसेद्, उपैव यजमानं निगृह्णीत योऽस्य प्रियः स्यादिति नु स्वर्गकामस्य ॥** इति ।

येयं निविदस्ति, तदेतत् स्वर्गस्याऽऽक्रमणं सोपानस्थानीयम्, तस्माद् यथा लोके सोपानारोहणे श्रमेण पुनः पुनः श्वासं करोति, तदनुकारिणं स्वरं कृत्वा तथैव पठेत्[1] । एवं पाठे सति 'अस्य' यजमानस्य यः पुमान् प्रियः स्यात् स पुमानेतं यजमानम् 'उपैव' समीप एव 'निगृह्णीत' स्वीकुर्यात् । 'इति नु' एष एव प्रयोगः, स्वर्गकाभस्यावगतव्यः । वक्ष्यमाणप्रयोगेण सांकर्यपरिहाराय स्वर्गकामस्येत्युक्तिः ॥

जो निविद् हैं वह इस स्वर्ग लोक के सोपान रूप हैं । अतः [सीढ़ी चढ़ने में जैसे बार-बार श्वास लेते हैं उसी प्रकार स्वर करके] उस पर आरोहण के समान शंसन करना चाहिए । [ऐसा पाठ होने पर] जो इस [यजमान] का प्रिय हो वह इस यजमान को समीप ही निगृहीत करे—स्वर्ग की कामना वाले के लिए यही प्रयोग जानना चाहिए ।

अभिचारप्रयोगं विधत्ते—

**अथाभिचरतः—यः कामयेत क्षत्त्रेण विशं हन्यामिति, त्रिस्तर्हि निविदा सूक्तं विशंसेत्, क्षत्त्रं वै निविद्, विट् सूक्तं, क्षत्त्रेणैव तद् विशं हन्ति ॥**इति।

क्षत्रियजात्या वैश्यजातेर्वधं कामयमानो यजमानो निविदा सूक्तं त्रिर्विशंसेत् । एतदुक्तं भवति—सूक्तस्याऽऽदौ मध्ये चान्ते च निविदं दध्यात् । तदिदं सूक्तविच्छेदपूर्वकं शंसनमिति[2] । निविदः क्षत्त्रियजातित्वं सूक्तस्य वैश्यजातित्वं पूर्वमेवाऽऽम्नातम्[3] । अत उक्तशंसनेन क्षत्त्रियजात्या वैश्यजातिं हन्ति । सोऽयमेकोऽभिचारप्रकारः ॥

अब अभिचार का इच्छुक—जो [यजमान] चाहे कि क्षत्रिय से वैश्य का हनन करूँ तो होता सूक्त [के आदि, मध्य और अन्त] में तीन टुकड़े करके निवित् पदों का विच्छेद

---

१. 'आक्रममाण इव उपर्युपरि स्ववीर्येणाभिभवन्निव शंसेत् । यथा सोपानमाक्रममाणः प्रतिसोपानक्रमं प्रयत्नातिरेकं करोत्येवमुपर्युपरि निवित्पदान्युच्चैस्तरां शंसेत्'—इति भट्टभास्करः ।

२. 'तदुक्तं सूक्तविच्छेदकं शंसनमिति'—इति वा पाठः । ३. द्र० इतः पूर्वम्, ३४१ पृष्ठे ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रूप में शंसन करे। वस्तुतः निविद् क्षत्रिय रूप हैं और सूक्त वैश्य रूप हैं। इसलिए उस शंसन से क्षत्रिय से ही वैश्य को मार डालता है।

अथैतद् विपर्ययेणाभिचारं विधत्ते—

**यः कामयेत विशा क्षत्त्रं हन्यामिति, त्रिस्तर्हि सूक्तेन निविदं विशंसेत्, क्षत्त्रं वै निविद् विट् सूक्तं, विशैव तत्क्षत्त्रं हन्ति ॥** इति।

निवित्पदानाम्[1] आदौ मध्ये चान्ते च सूक्तं पठेत् तदेतन्निविद्विच्छेदरूपं शंसनम् ॥

जो चाहे कि वैश्य से क्षत्रिय का हनन करूँ तो निवित् [पदों के आदि, मध्य और अन्त] में तीन भाग करके सूक्त का विच्छेद रूप में शंसन करे। वस्तुतः निविद् क्षत्रिय रूप हैं और सूक्त वैश्य रूप हैं। अतः इस [शंसन] से वैश्य से ही क्षत्रिय को मार डालता है।

प्रकारान्तारेणाभिचारं विधत्ते—

**य उ कामयेतोभयत एनं विशः पर्यवच्छिनदानीत्युभयतस्तर्हि निविदं व्याह्वयीतोभयत एवैनं तद् विशः पर्यवच्छिनत्ति ॥** इति।

'य उ' यस्तु होतैनं यजमानमुभयतः पूर्वोत्तरभागयोः संबन्धिनीर्विशः प्रजाः 'पर्यवच्छिनदानि' परितो विच्छिन्नाः करवाणीति कामयेत—स्वस्मात् पूर्वभाविन्यः, पितृपितृव्यमातुलादयो याः प्रजाः, स्वस्योत्तरभाविन्यः पुत्रजामात्रादयो याः प्रजाः, तासां सर्वासामवच्छेदं करवाणीत्यर्थः। यद्वा, 'उभयतः' मातृपक्षे पितृपक्षे च विद्यमानानां प्रजानामवच्छेदं विरोधं करवाणीत्येवं यो होता यजमानं द्वेष्टि, स होता 'निविदमुभयतः' निविद आदावन्ते च 'व्याह्वयीत' विविधमाहावं कुर्यात्,—आदावपि 'शोंसावोम्' इत्येतमाहावमन्त्रं पठेत्। अन्तेऽपि तथा पठेदित्यर्थः। तथा सत्येनं यजमानं पूर्वापरभागयोर्मातृपक्षपितृपक्षयोश्च प्रजाभिः सहावच्छिनत्ति ॥

जो [होता] चाहे कि इस [यजमान] को दोनों ओर से [पुत्र और पिता चाचा आदि रूप] प्रजा से पृथक् करूँ तो निविद् के [आदि और अन्त में] दोनों ओर विविध आहाव [=शोंसावोम्] मन्त्र पढ़े। इस प्रकार उस मन्त्र पाठ से इस [यजमान] को दोनों ही [मातृ पक्ष अथवा पितृपक्ष रूप] प्रजा से अलग करता है।

उक्तविधीनामसांकर्याय व्यवस्थया निगमयति—

**इति न्वभिचरतः, इतरथा त्वेव स्वर्गकामस्य ॥** इति।

'इति नु' 'यः कामयेत क्षत्त्रेण' इत्यादुक्त एव प्रकारोऽभिचरतो द्रष्टव्यः। 'इतरथा तु' एव प्रकारान्तरं तु, पूर्वोक्तं सूक्तमध्ये निवित्प्रक्षेपरूपं, सोपानारोहणसदृशस्वरोपेतं 'स्वर्गकामस्य' द्रष्टव्यम् ॥

---

१. निवि० २.१–२०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इस प्रकार का विधान अभिचार करने वाले के लिए है और [पूर्वोक्त सूक्त के मध्य निवित्प्रक्षेप रूप] दूसरा प्रकार तो स्वर्ग की कामना वाले के लिए है।

अन्तिमया सूक्तगतयर्चा[1] समाप्तिं विधत्ते—

**'वयः सुपर्णा उपसेदुरिन्द्रम्' इत्युत्तमया परिदधाति ॥** इति।

वेतेर्धातोर्गत्यर्थस्य 'वयः' इति रूपम्, गमनकुशला इत्यर्थः। अत एव सुपर्णाः पक्षिसदृशाः केचिदिन्द्रं स्वर्गवासिनम्—'उपसेदुः' प्राप्तवन्तः। इति तस्य पादस्यार्थः॥

'सुन्दर पङ्खों वाले पक्षि के सदृश इन्द्र के पास [ऋषि] गए'—इस अन्तिम ऋचा से कर्म का समापन करना चाहिए।

द्वितीयपादं सुबोधत्वाभिप्रायेण पठति—

**'प्रियमेधा ऋषयो नाधमानाः' ॥** इति।

ग्रन्थतदर्थावधारणशक्तिर्मेधा, सा प्रिया येषामृषीणां ते 'प्रियमेधाः', ऋषयोऽतीन्द्रियार्थद्रष्टारो 'नाधमानाः' किंचित्स्वकार्यं याचमानाः, इन्द्रमुपसेदुरिति पूर्वेणान्वयः॥

'मेधा [अर्थात् ग्रन्थ के अवधारण की शक्ति के] प्रेमी ऋषि कुछ याचना करते हुए [इन्द्र के पास गए]'—

तृतीयपादस्य पूर्वभागमनूद्य व्याचष्टे—

**'अप ध्वान्तमूर्णुहि' इति, येन तमसा प्रावृतो मन्येत, तन्मनसा गच्छेदप हैवास्मात् तल्लुप्यते॥** इति।

हे इन्द्र, 'ध्वान्तं' तमोऽपोर्णुहि अपसारय। एतस्मिन् भागे पठिते सति तमो लुप्यते : होता येन तमसा प्रावृतश्छादितोऽहमिति मन्येत, 'तत्' तमो 'मनसा गच्छेत्' ध्यायेत्। तमो हि बहुविधम्—दृष्टिनिरोधकमेकं, मोहरूपं द्वितीयं, पापरूपं तृतीयम्। तेषां मध्ये येन स्वस्य बाधः, 'तत्' तम, एतद्भागपाठकाले विनष्टमिति ध्यायेत्। तथा सति तत्तमोऽस्मात् पुरुषाद्विनश्यत्येव॥

'हे इन्द्र, अन्धकार को हटा दो'—'होता जिस अन्धकार से अपने को आवृत माने उस अन्धकार से दूर हट रहा हूँ' ऐसा [पाठ के समय] ध्यान करे। इस प्रकार इस [पुरुष] से उस तम का लोप हो जाता है।

तस्य पादस्योत्तरभागे किंचिदनुष्ठानं विधत्ते—

**'पूर्धि चक्षुः' इति चक्षुषी मरीमृज्येत् ॥** इति।

हे इन्द्र, 'चक्षुः पूर्धि' दृष्टिं पूरय। एतं भागं पठन् स्वेन हस्तेन चक्षुषी 'मरीमृज्येत' पुनः पुनः शोधयेत्॥

---

१. ऋ० १०.७३.११ :



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'हे इन्द्र, दृष्टि पूर्ण करो'—इस [मन्त्र भाग को पढ़ते हुए हाथ] से आँखों को पुनः पुनः मले।

वेदनं प्रशंसति—

**आजरसं ह चक्षुष्मान् भवति, य एवं वेद ॥** इति।

आजरसं जरासमाप्तिपर्यन्तम् ॥

जो इस प्रकार जानता है वह वृद्धावस्थापर्यन्त दृष्टि युक्त होता है।

चतुर्थपादमनूद्य व्याचष्टे—

**'मुमुग्ध्यस्मान् निधयेव बद्धान्' इति, पाशा वै निधा; मुमुग्ध्यस्मान् पाशादिव बद्धान् इत्येव तदाह ॥ १९ ॥** इति।

हे इन्द्र, 'निधयेव' पाशेनेव तमसा 'बद्धान्' अस्मान् मुमुग्धि' मोचय। अस्मिन् पादे निधाशब्देन पाशा बन्धनहेतवो रज्जवो विवक्षिताः। अतो निधयेव बद्धानित्युक्ते पाशादिव बद्धानित्युक्तं भवति[1] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीय पञ्चिकायां द्वितीयाध्याये (द्वादशाध्याये) अष्टमः खण्डः ॥ ८ ॥ (१९) [९०]

'हे इन्द्र, [तम रूप] पाश से बँधे हुए हम लोगों को मुक्त करो'—इस पाद में निधाशब्द का अर्थ बन्धन हेतु रज्जु है। अतः 'रस्सी से बँधे हुए के समान हम लोगों को मुक्त करो'—यही उस पाद से कहा गया है।

॥ इस प्रकार बारहवें अध्याय के आठवें खण्ड की हिन्दी पूर्ण हुई ॥ ८ ॥

## अथ नवमः खण्डः

अथ मरुत्वतीयं शस्त्रं तदन्तपठनीयां याज्यां च प्रशंसितुमुपाख्यानमाह—

**इन्द्रो वै वृत्रं हनिष्यन् सर्वा देवता अब्रवीद्, अनु मोपतिष्ठध्वमुप मा ह्वयध्वमिति, तथेति, तं हनिष्यन् त आद्रवन्, सोऽवेन् मां वै हनिष्यन् त आद्रवन्ति, हन्तेमान् भीषया इति तानभिप्राश्वसीत्, तस्य श्वसथादीषमाणा विश्वे देवा अद्रवन्, मरुतो हैनं नाजहुः, प्रहर भगवो जहि वीरयस्वेत्येवैनमेतां वाचं वदन्त उपातिष्ठन्त ॥** इति।

पुरा कदाचिद् इन्द्रो वृत्रं हन्तुमुद्यतः सर्वा अपि देवताः प्रत्येवमब्रवीत्। अनु मोपतिष्ठध्वमानुकूल्येन मां सेवध्वम्। उप मा ह्वयध्वं वृत्रवधाय प्रवृत्तं मामुपह्वयध्वमनुजानीध्वमीति। ततोऽङ्गीकृत्य सर्वे देवास्तं वृत्रं हन्तुमुद्यता आगच्छन्। तदा स वृत्रो मां

---

१. 'निधा पाश्या भवति'—इत्यादि निरु० ४. १. २।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हन्तुमुद्यता आद्रवन्तीत्यवेत् स्वमनसा ज्ञातवान् । तत इदं विचारयामास । हन्त सम्यग् जातं देवनिवारणोपायस्य प्रतिभातत्वात् । इमान् देवान् भीषयै, अहं भीतान् करवाणीति विचार्य तान् देवानभिलक्ष्य प्राश्वसीत् प्रश्वासमकरोत् । तस्य वृत्रस्य श्वसथात् प्रश्वासादीषमाणा विधूताः सर्वे देवाः पलायनमकुर्वन् । वृत्रो हि स्वजन्मानन्तरं सर्वासु दिक्षु शरपातमात्रदेशं प्राप्य वृद्धिं गतवान् । तथा चान्यत्र श्रूयते—'स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत, स इमाँल्लोकानवृणोद्यत् इमाँल्लोकानवृणोत् तद्वृत्रस्य वृत्रत्वम्'[1] इति । तादृशस्य प्रौढशरीरस्य प्रश्वासः प्रलयकालीनवायुसमानः, अतस्तदीयश्वासेन देवाः परमाणव इव दूरेऽपसारिताः । तदानीं मरुत एवैनमिन्द्रं नाजहुर्न परित्यक्तवन्तः । हे इन्द्र भगवन्, वृत्रं वज्रेण प्रहर तेन प्रहारेण जहि मारय, ततो वीरयस्व स्वकीयं वीरत्वं प्रकटय । इत्यनेनैव प्रकारेणैनमिन्द्रं प्रत्येतां वाचं वदन्तो मरुतस्तमिन्द्रमसेवन्त ॥

iii. २० [xii. ९] वृत्रवध को उद्यत इन्द्र ने सब देवताओं से कहा—'मेरे अनुकूल हो अवस्थित होओ' और 'मुझको पुकारो ।' [उन्होंने कहा—] 'ठीक है ।' उसको सभी मारने दौड़े । वह समझ गया कि ये मुझे मारने ही चले आ रहे हैं । उसने सोचा कि 'मैं इन्हें डरा दूँ' और उनके प्रति फुफकार मारी । उसकी फुफकार से डरकर सभी देव भाग गए । किन्तु मरुतों ने इन [इन्द्र] को न छोड़ा । वे इन इन्द्र के प्रति इस प्रकार की वाणी बोलते हुए समीप खड़े रहे कि 'भगवन्, मारो, मारो, अपनी वीरता दिखाओ ।'

उक्तमर्थं मन्त्रसंवादेन द्रढयति—

**तदेतदृषिः पश्यन्नभ्यनूवाच—**

**'वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः ।**
**मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासीति' ॥ इति ।**

कश्चिदृषिर्दिव्यज्ञानेन तदेतद् देवपलायनं पश्यन् 'वृत्रस्य'[2] इत्यादिमंत्रेण प्रकटीचकार । हे इन्द्र, तव सखायो विश्वे देवा ये सन्ति ते सर्वे वृत्रस्य श्वसथात् पलायमानास्त्वां परित्यक्तवन्तः, तस्मादिदानीं ते तव मरुद्भिः सह सख्यमस्तु । अथानन्तरमिमाः सर्वा वृत्रसंबन्धिनीः सेना जेष्यसीति ॥

दिव्य दृष्टि से इसी सबको देखते हुए किसी ऋषि ने कहा है—'हे इन्द्र, उन समस्त देवों ने जो तुम्हारे मित्र थे वृत्र के फुफकार मारने से तुम्हें छोड़ दिया । अतः हे इन्द्र, तुम्हारी मित्रता मरुतों के साथ होवे, जिससे इन सभी [वृत्र की] सेना को जीत लोगे ।'

---

१. तै० सं. २. ४. १२. २ । २. ऋ० ८. ९६. ७ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ मरुतामिन्द्रकृतमुपकारं दर्शयति—

**सोऽवेदिमे वै किल मे सचिवा, इमे माऽकामयन्त, हन्तेमानस्मिन्नुक्थ आभजा इति, तानेतस्मिन्नुक्थ आभजदथ हैते तर्ह्युभे एव निष्केवल्ये उक्थे आसतुः ॥ इति ।**

स इन्द्रः स्वमनस्यवेद् विचारितवान् । कथमिति, तदुच्यते—'इमे वै किल' पुरतः स्थिता मरुत एव मे मम सचिवाः सखायः । यस्मादिमे मरुतो माऽकामयन्त मामपेक्षितवन्तो न तु मां परित्यज्य गताः, तस्मादस्मत् सखित्वं हन्त सम्यगेभिः कृतमित्यहं दृष्टवानस्मि; तत इमान् मरुतोऽस्मिन्नुक्थे माध्यंदिनगतशस्त्र 'आभजै' भागिनः करवाणीति मनस्येवं विचार्य तथैवाकरोत् । अथानन्तरं तर्हि तदा प्रभृति, 'एते ह' मरुत एव शस्त्रभागिनोऽभूवन्निति शेषः । ततः पूर्वं तु माध्यंदिनसवने निष्केवल्यनामके शस्त्रे केवलेन्द्रदेवताके उभे आसतुः । न तु तत्र मरुतां प्रवेश आसीत् । तस्माद् इदानीं प्रवेश इन्द्रकृत उपकारः ॥

उन इन्द्र ने विचार किया कि 'ये मरुत मेरे वस्तुतः मित्र हैं, क्योंकि इन्होंने मुझे चाहा इसलिए मैं इन्हें इस [माध्यंदिनगत] उक्थ में भागीदार बना लूँ' और उन्हें इस उक्थ में भागीदार बनाया । उसके बाद से वे भागीदार बने और तभी से वे दोनों निष्केवल्य शस्त्र में भागीदार हुए ।

इन्द्रेण दत्तान् मरुतां भागान् प्रदर्शयति—

**मरुत्वतीयं ग्रहं गृह्णाति, मरुत्वतीयं प्रगाथं शंसति, मरुत्वतीयं सूक्तं शंसति, मरुत्वतीयां निविदं दधाति, मरुतां सा भक्तिः ॥ इति ।**

मरुतोऽस्य सन्तीति तैः सहितो मरुत्वांस्तदीयं ग्रहमध्वर्युर्गृह्णाति । होता 'प्र व इन्द्राय बृहते'[1] इत्येतं मरुत्वतीयं प्रगाथं शंसति 'जनिष्ठा उग्रः'[2] इत्यादिकं मरुत्वतीयं शंसति 'इन्द्रो' मरुत्वान् इत्यादिकां मरुत्वतीयां निविदं सूक्ते प्रक्षिपति । ग्रहग्रहणादिसूक्तशंसनान्ते मरुत्संबद्धा सा मरुतां भक्तिर्भागः[3] ॥

[अध्वर्यु] मरुत्वतीय-ग्रह को लेता है, [होता] मरुत्वतीय प्रगाथ का शंसन करता है, वह मरुत्वतीय सूक्त का शंसन करता है और मरुत्वतीय निविद् को [सूक्त में] रखता है—यही मरुतों का भाग है ।

अथ शस्त्रयाज्यां विधत्ते—

**मरुत्वतीयमुक्थं शस्त्वा मरुत्वतीयया यजति, यथाभागं तद्देवताः प्रीणाति ॥ इति ।**

---

१. ऋ० ८.८९.३ । २. ऋ० १०.७३.१ । ३. 'भक्तिः प्रसादलाभः'—इति षड्गुरुशिष्यः । 'भजनप्रकारः' इति भट्टभास्करः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नवथं शस्त्रं तच्छसनादूर्ध्वं मरुत्वद्देवताकां शस्त्रयाज्यां पठेत्। तेन स्वस्वभागमनतिक्रम्य देवतास्तर्पयति ॥

मरुत्वतीय शस्त्र का शंसन करके मरुद्देवताक शस्त्र-याज्या का पाठ करे। इस प्रकार उससे वह अपने-अपने भाग के अनुसार देवों को प्रसन्न करता है।

तां मरुत्वतीयां याज्यां दर्शयति—

**'ये त्वाऽहिहत्ये मघवन्नवर्धन् ये शाम्बरे हरिवो ये गविष्टौ। ये त्वा नूनमनुमदन्ति विप्राः पिबेन्द्र सोमं सगणो मरुद्भिः'[1] इति'** ॥ इति।

हे इन्द्र, अहिहत्ये वृत्रवधे ये मरुतस्त्वामवर्धन् वर्धितवन्तः। अहिशब्दो वृत्रवाची। 'अहिमाचक्षते वृत्रम्' इति वररुचिवचनात्[2]। शम्बरः कश्चिदसुरः, तत्संबन्धी वधः शाम्बरः। तस्मिन् ये मरुतस्त्वामवर्धन् वर्धितवन्त इत्यन्वयः। गवामिष्टिरन्वेषणं गविष्टिः। वलो नाम कश्चिदसुरो गुहायामासीत्। 'इन्द्रश्च तस्य बिलमपोर्णोत्' इति श्रुत्यन्तरात्[3]। तेन वलेन गावोऽपहृताः। तासां गवामन्वेषणमिन्द्रसहिता मरुतः कृतवन्तः। 'देवा वै वले गाः पर्यपश्यन्' इति श्रुत्यन्तरात्। तासां गवामन्वेषणे ये मरुतस्त्वाम् अवर्धयन्[4]। तथा ये मरुतो नूनमद्यापि विप्रा ऋत्विग्रूपा भूत्वा त्वामनुमदन्ति स्तोत्रैरनुदिनं हर्षयन्ति; हे इन्द्र तैर्मरुद्भिः सहितस्त्वं सगणो भूत्वा सोमं पिबेति याज्यामन्त्रार्थः ॥

'हे मघवन्, वृत्रवध में जिन मरुतों ने तुम्हारी सहायता की; हे अश्वों वाले इन्द्र, जिन मरुतों ने तुम्हें शम्बर के वध में और जिन्होंने [बल नामक असुर से अपहृत] गायों के अन्वेषण में [तुम्हारी सहायता की] और जो आज भी ऋत्विज [रूप होकर स्तोत्रों द्वारा] तुम्हें प्रसन्न करते हैं। हे इन्द्र उन मरुतों के साथ गणयुक्त होकर सोमपान करो।'

एतां याज्यां प्रशंसति—

**यत्र यत्रैवैभिर्व्यजयत यत्र वीर्यमकरोत् तदेवैतत् समनुवेद्येन्द्रेणैनान् ससोमपीथान् करोति ॥ २० ॥** इति।

'यत्र यत्रैव' यस्मिन् यस्मिन् वृत्रवधादिके स इन्द्र एभिर्मरुद्भिर्विजयं प्राप्तः। प्राप्य च 'यत्र यत्र' यस्मिन् यस्मिन्नपि युद्धादौ वीर्यं शौर्यमकरोत् तदेवैतदखिलमिन्द्राय 'समनुवेद्य' सम्यगनुक्रमेण विज्ञाप्येन्द्रेण सहैनान् मरुतः सोमपानसहितान् करोति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां द्वितीयाध्याये (द्वादशाध्याये) नवमः खण्डः ॥ ९ ॥ ( २० ) [ ९१ ]

---

१. ऋ० ३.४७.४। २. निघ० १.१०,२१। निरु० २.१६,१७;१०.४३।
३. तै० सं० २.१.५.१। ४. 'ये च गविष्टौ बृहस्पतेर्गोषु बलेनापहृतासु देवशुन्या सरमयेन्द्रप्रेषितया बलपुरे दृष्टासु त्वया तदन्वेषणे क्रियमाणे त्वामवर्धयन्'— इति षड्गुरुशिष्यः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जिस-जिस युद्ध में उनके साथ इन्द्र ने विजय पाई और जिस युद्ध में उन्होंने अपना शौर्य प्रदर्शित किया—इस सब को अनुक्रम से विज्ञापित करके वह होता इन्द्र के साथ इन मरुतों को सोमपायी बनाता है।

॥ इस प्रकार बारहवें अध्याय के नौवें खण्ड की हिन्दी पूर्ण हुई ॥ ९ ॥

## अथ दशमः खण्डः

अथ निष्केवल्याख्यं शस्त्रं विधातव्यं तस्य चायं संग्रहश्लोकः—

"स्तोत्रे यो योऽनुरूपश्च धाय्या प्रागाथिकं तथा।
निविद्धानीयसूक्तं च निष्केवल्ये प्रकीर्तितम्" इति ॥

तदर्थमादावुपाख्यानमाह—

**इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीत् प्रजापतिमहमेतदसानि यत्त्वमहं महानसानीति स प्रजापतिरब्रवीद्–अथ कोऽहमिति यदेवैतदवोच इत्यब्रवीत्, ततो वै को नाम प्रजापतिरभवत्, को वै नाम प्रजापतिर्यन्महान्निन्द्रोऽभवत् तन्महेन्द्रस्य महेन्द्रत्वम् ॥** इति।

इन्द्रः पुरा वृत्रं हत्वा सर्वा विजितीर्जेतव्या[1] भूमीर्विजित्य प्रजापतिमिदमब्रवीत्। हे प्रजापते, त्वमिदानीं यदसि, एतदहमितिः परमसानि भवानि। किं तदिति वीक्षायां विशेषाकारेणोच्यते—अहं महानसानि सर्वेभ्यो भूतेभ्योऽधिकः पूज्यो भवानीति। ततः स प्रजापतिरिदमब्रवीत्। मदीये महत्त्वे त्वया स्वीकृते सत्यनन्तरमहं को नाम भविष्यामीति। तत इन्द्र इदमब्रवीत्। हे प्रजापते, स्वात्मानमुद्दिश्य निवेदनेन क इति यदेवैतदवोचस्तदेव त्वं भवेति। तत् आरभ्य क इत्येतन्नामवान् प्रजापतिरभूत्। एतत्कशब्दवाच्यत्वं सर्वत्र प्रसिद्धम्। अत एव श्रुत्यन्तरेषु प्रतिग्रहमन्त्रब्राह्मण एवमाम्नायते—'क इदं कस्मा अदादित्याह, प्रजापतिर्वै कः प्रजापतय एव तद् ददातीति'[2]। कशब्दस्य सुखवाचित्वात् तेन प्रजापतेर्व्यवहारे सति सुखी प्रजापतिरित्युक्तं भवति। प्रजापतिगतं महत्त्वं स्वीकृत्येन्द्रो यस्मान्महानभवत् तस्मान् महेन्द्रनाम संपन्नम्। श्रुत्यन्तरेऽप्येतदाम्नातम्—'इन्द्रो वृत्रमहन् तं देवा अब्रुवन् महान् वा अयमभूद् यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वम्'[3] इति ॥

iii. २१ [xii. १०] प्राचीन काल में इन्द्र ने वृत्र को मारकर सभी जेतव्य भूमि को विजित करके प्रजापति से कहा—'मैं वह होऊँ जो आप हैं, मैं महान् हो जाऊँ।' तब उन प्रजापति ने कहा—'मैं कौन हूँ?' तब इन्द्र ने कहा—'हे प्रजापति, जो यह

---

१. 'विजीतीः विजयप्रकारान्'—इति भट्टभास्करः। २. तै० ब्रा० २.२.५.५।
३. तै० सं० ६.५.५.३। 'को ह वै नाम प्रजापतिः'—इति तै० ब्रा० २.८.१०।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[कः] आपने कहा है वैसे ही आप होवें।' उसी समय से प्रजापति 'कः' नाम वाले हुए। 'कः' नाम प्रजापति का है। [प्रजापति के महत्त्व को स्वीकार कर] इन्द्र जिससे महान् हुए इसीलिए इनका नाम महेन्द्र हुआ।

अथेन्द्रस्य महत्त्वप्रसक्तं सत्कारविशेषं दर्शयति—

**स महान् भूत्वा देवता अब्रवीदुद्धारं म उद्धरतेति, यथाऽप्येतर्हीच्छति, यो वै भवति यः श्रेष्ठतामश्नुते, स महान् भवति, तं देवा अब्रुवन्, स्वयमेव ब्रूष्व यत् ते भविष्यतीति, स एतं माहेन्द्रं ग्रहमब्रूत माध्यंदिनं सवनानां, निष्केवल्यमुक्थानां त्रिष्टुभं छन्दसां, पृष्ठं साम्नां, तमस्मा उद्धारमुदहरन् ॥ इति।**

'सः' इन्द्रः, उक्तप्रकारेण महत्त्वं प्राप्य देवताः प्रत्येतदब्रवीत्—हे देवा उद्धारमुत्कर्षं निमित्तीकृत्य यः पुंसा पूजाविशेषो ह्रियते संपाद्यते सोऽयं सत्कार उद्धारः[1], तं सत्कारभागं 'मे' मदर्थमुद्धरत पृथक्कुरुतेति। यथेत्यादिना लौकिकदृष्टान्त उच्यते—'यो वै भवति' यः पुमान् भवत्यैश्वर्यं प्राप्नोति। यश्च 'श्रेष्ठतां' विद्याचारादिप्रयुक्तवैशिष्ट्यमश्नुते। स प्राप्तैश्वर्यो विशिष्टश्च सर्वेषां मध्ये महान् भवति। स तादृशः पुरुष एतर्ह्यपीदानीमपि यथा विशिष्टपूजारूपं भागमिच्छति तथाऽयमिन्द्रोऽपीत्यध्याहारः। तमुद्धारेच्छावन्तमिन्द्रं देवा इदमब्रुवन्। हे इन्द्र, यत् ते प्रियं भविष्यति, तत्स्वयमेव ब्रूष्वेति। ततः 'सः' इन्द्रो ग्रहाणां मध्ये 'एतं' माहेन्द्रं ग्रहमब्रूत, तथा सवनानां मध्ये माध्यंदिनं सवनम्, शस्त्राणां मध्ये निष्केवल्यं शस्त्रं, छन्दसां मध्ये त्रिष्टुभं, साम्नां मध्ये 'पृष्ठं', पृष्ठस्तोत्रनिष्पादकं बृहद्रथंतरवैरूपादिकम्[2]। ततो देवा अस्मा इन्द्राय तमुद्धारं माहेन्द्रग्रहादिकं यज्ञादुदहरन्। तदेतच्छाखान्तरेऽप्याम्नातम्—'स एतं माहेन्द्रमुद्धारमुदहरत वृत्रं हत्वाऽन्यासु देवतास्वधीति यन्माहेन्द्रो गृह्यत उद्धारमेव तं यजमान उद्धरतेऽन्यासु प्रजास्वधि'[3] इति॥

वह महान् होकर देवों से बोले—'मेरा सत्कारभाग अलग करो। जो ऐश्वर्य प्राप्त करता है और जो श्रेष्ठता प्राप्त करता है, वह महान् होता है और वह जैसे [विशिष्टपूजा-रूप-भाग की] कामना करता है वैसे ही [मेरा सत्कारभाग अलग करो]। उनसे देवों ने कहा—'हे इन्द्र, जो तुम्हें प्रिय हो, वह स्वयं ही कहो।' उन्होंने ग्रहों के मध्य माहेन्द्र-ग्रह को कहा और सवनों में माध्यन्दिन सवन को, शस्त्रों में निष्केवल्यशस्त्र को, छन्दों में त्रिष्टुभ् छन्द को और सामों में पृष्ठसाम को। इन [इन्द्र] के लिए देवों ने उन [माहेन्द्र ग्रह आदि] सत्कारभाग को निश्चित किया।

---

१. 'सर्वेभ्यो भागेभ्यो य उद्ध्रियते ज्येष्ठाय दातुं सोऽधिकोंऽश उद्धारो नाम'—इति भट्टभास्करः। २. बृहद, रथन्तरम्, वैरूपम, वैराजम्, शाक्वरम्, रैवतञ्चेति षट्। तै० ब्रा० १.२.२.३। ता० ब्रा० ७.६.७। 'यत् पृष्ठेषु न्यदधुः, तेनेन्द्रं सर्वाणि हि पृष्ठानीन्द्रस्य निष्केवल्यानि'—इति च ता० ब्रा० ७.८.५।

३. तै० सं. ६.५.५.३,४।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदनं प्रशंसति—

**उदस्मा उद्धारं हरन्ति य एवं वेद ॥** इति ।

**जो इस प्रकार जानता है उसको वे वाञ्छित सत्कारभाग निश्चित करते हैं ।**

उद्धारभागं दत्तवतां देवानां तस्मिन्नुद्धारे स्वापेक्षितभागप्रार्थनां दर्शयति—

**तं देवा अब्रुवन्, सर्वं वा अवोचथा, अपि नोऽत्रास्त्विति, स नेत्यब्रवीत्, कथं वोऽपि स्यादिति, तमब्रुवन्नप्येव नोऽस्तु मघवन्निति, तानीक्षतैव ॥२१॥** इति ।

उद्धारयुक्तं तमिन्द्रमितरे देवा इदमब्रुवन् । हे मघवन्निन्द्र सर्वमेव यज्ञं स्वसंबन्धित्वेनोक्तवानसि, अस्माकमप्यत्र सारो भागोऽस्त्विति । ततः स इन्द्र एवमब्रवीत् । अयं सारः सर्वोऽपि ममैवापेक्षितो युष्माकमप्यत्र भागः कथं स्यान्नास्त्येव युष्माकं भाग इति । निराकृतवन्तं तमिन्द्रं देवाः प्रार्थयमाना इदमब्रुवन् । हे मघवन्नोऽस्माकमप्यस्त्वेव सर्वथा भागोऽपेक्षित एवेति । ततः स इन्द्रस्तान् देवानीक्षतैवानुग्रहदृष्ट्याऽवलोकितवानेव ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां द्वितीयाध्याये (द्वादशाध्याये) दशमः खण्डः ॥ १० ॥ ( २१ ) [ ९२ ]

**उन इन्द्र से देवों ने कहा—'हे इन्द्र, तुमने अपने ही बारे में सब कुछ कहा । हम लोगों का भी भाग होवे ।' उसने कहा—'नहीं । तुम लोगों का भी भाग कैसे हो सकता है ?' उन इन्द्र से देवों ने कहा—हे मघवन् ! हम लोगों का भी भाग अवश्य ही होवे । तब इन्द्र ने उन्हें मात्र अनुग्रह दृष्टि से देखा ही ।**

**॥ इस प्रकार बारहवें अध्याय के दसवें खण्ड की हिन्दी पूर्ण हुई ॥ १० ॥**

## अथैकादशः खण्डः

अथ निष्केवल्यशस्त्रे याज्यां विधातुं पूर्वोपाख्यानशेषं प्रस्तौति—

**ते देवा अब्रुवन्नियं वा इन्द्रस्य प्रिया जाया वावाता प्रासहा नामास्यामेवेच्छामहा इति, तथेति, तस्यामैच्छन्त, सैनानब्रवीत्, प्रातवः प्रतिवक्तास्मीति, तस्मात् स्त्रियः पत्याविच्छन्ते, तस्माद्‌ु स्त्र्यनुरात्रं पत्याविच्छते, तां प्रातरुपायन्, सैतदेव प्रत्यपद्यत ॥** इति ।

ते देवा इन्द्रस्याभिप्रायमजानन्तः परस्परमिदमब्रुवन् —'इयं वै' पुरतो दृश्यमानैवेन्द्रस्य 'प्रिया जाया' सा 'वावाता' मध्यमजातीया । राज्ञां हि त्रिविधाः स्त्रियः—तत्रोत्तमजातेर्महिषीति नाम । मध्यमजातेर्वावातेति । अधमजातेः परिवृक्तिरिति[1] । अत

---

१. 'चतस्रो जाया उपक्लृप्ता भवन्ति—महिषी, वावाता, परिवृक्ता, पालागली, सर्वा निष्किण्योऽलङ्कृता मिथुनस्यैव सर्वत्वाय । ताभिः सहाग्न्यागारं प्रपद्यते, पूर्वया द्वारा यजमानो दक्षिणया पत्न्यः'—इति शत० ब्रा० १३.४.१.८ । 'वावाता भोग्या न तु व्यूढा'–इति भट्टभास्करः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एवाश्वमेधेऽश्वं प्रति राजस्त्रीणां कर्तव्यविशेष एतैर्नामभिराम्नातः—'भूरिति महिषी भुव इति वावाता सुवरिति परिवृक्तिः'[1] इति। तस्याश्च वावातायाः प्रासहेति नाम, राजप्रियत्वात्। प्रसह्य बलात्कारेण सर्वं कार्यं कर्तुं शक्तेत्यर्थः। तस्मादेतस्यामेव निमित्तभूतायां सत्यां राजाभिप्रायं ज्ञातुमिच्छामहा इति विचार्य, तमभिप्रायं सर्वेऽङ्गीकृत्य, 'तस्यां' वावातायां स्वाभीष्टमैच्छन्त। 'सा' अपि वावाता 'एतान्' देवान् इदमब्रवीत्। रात्रौ राजाभिप्रायं विचरयितुं शक्यत्वात् परेद्युः प्रातःकाले वो युष्माकं प्रत्युत्तरं वक्तास्मि वक्ष्यामीति। यस्मादेवं तस्माँल्लोकेऽपि प्रियाः स्त्रियः सर्वमवगन्तव्यं वृत्तान्तं पत्यावबगन्तुमिच्छन्ते[2]। यस्माद् विविक्तावसरे सर्वमवगन्तुं सुशकं 'तस्माद्' तस्मादेव कारणात् प्रिया स्त्री, 'अनुरात्रं' रात्रिसमये विविक्तवेलायां पत्यौ सर्वमवगन्तुमिच्छते। देवास्तु प्रातःकाले वावातामुपागच्छन्। 'सा' वावाता 'एतदेव' वक्ष्यमाणमन्त्ररूपं वाक्यं प्रत्युत्तरत्वेन प्राप्तवती॥

[निष्केवल्य-शस्त्र]—

iii. २१ [xii. ११]—उन देवों ने [परस्पर] कहा—'यह इन्द्र की प्रिय पत्नी मध्यमजातीया 'प्रासहा' नामक है। हम लोग इसीसे अपनी वाञ्छा प्रगट करें।' उन्होंने कहा—'ठीक है' और उसीसे इच्छा प्रगट की। उसने इन लोगों से कहा—'मैं सबेरे आप लोगों से बताऊँगी।' इसीलिए लोक में स्त्रियाँ पति से सब कुछ [रात्रि में] जानना चाहती हैं। [क्योंकि एकान्त में ही सब कुछ जानने का अवसर होता है] इसीलिए प्रिया स्त्री रात्रि के समय एकान्त वेला में पति से सब कुछ जानना चाहती है। अतः प्रातःकाल देव उसके पास आए। उसने प्रत्युत्तर में यही मन्त्र वाक्य कहा—

तस्मिन् मन्त्रे[3] पादत्रयं पठति—

'यद् वावान पुरुतमं पुराषाळा वृत्रहेन्द्रो नामान्यप्राः।
अचेति प्रासहस्पतिस्तुविष्मान्' इति॥ इति।

पुरातनानां पुरुषाणां मध्ये सहिष्णुः पुरुष इन्द्रः[4] स वृ पुरुतममतिशयेन प्रभूतं यदुद्धारितरूपं वस्तु 'वावान', आदौ दीर्घश्छान्दसः, 'ववान' सम्यग्भेजे लब्धवानित्यर्थः। स च वृत्रहेन्द्रः तस्मिन्नुद्धारे 'नामानि, आ प्रा' माहेन्द्रग्रहो माध्यंदिनमित्यादीनि स्वाभीष्टनामानि 'आ' समन्तात् पूरितवान्। प्रकृष्टं सहो बलं येषां ते प्रासहाः, तेषां पतिः

---

१. तै० ब्रा० ३.९.४.५। २. यस्मादेवं प्रासहा स्वयमेवेन्द्राभिप्रायं निश्चेतुं शक्ता हि रात्रौ पत्युर्मुखादेव श्रुत्वा प्रातर्वः प्रतिवक्तास्मि—इत्यब्रवीत्, न तु स्वयमेव तदभिप्रायमाविष्कृतवती तस्मादिदानीमपि सर्वाः स्त्रियः पत्यावेवेच्छन्ते पतिमुखादेव तदभिप्रायं ज्ञातुमिच्छन्ति ज्ञातमप्यर्थं तमेव पृच्छन्ति'—इति भट्टभास्करः।

३. ऋ० १०.७४.६। ४. 'स विष्णुः 'पुराषाट्' इन्द्रः'—इति वा पाठः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रासहस्पतिरिन्द्रः, 'अचेति' अजानाद् देवानाममीष्टं ज्ञातवान् कटाक्षेणानुगृहीतवानित्यर्थः। स चेन्द्रः 'तुविष्मान्' बहुधनवान् ॥

'पुरातन पुरुषों में सहिष्णु इन्द्र ने जिस उद्धारित रूप वस्तु को अत्यन्त प्रभूत प्राप्त किया; वृत्र को मारने वाले उस इन्द्र ने माहेन्द्र ग्रह आदि अपने अभीष्ट नामों को चारों ओर से पूरित किया। प्रकृष्ट बल वाले के पति व बहु धनवान् इन्द्र ने देवों के अभीष्ट को जान लिया।'

तस्मिंस्तृतीयपादे पादयोरप्रसिद्धत्वादर्थं व्याचष्टे—

**इन्द्रो वै प्रासहस्पतिस्तुविष्मान् ॥** इति।

**प्रकृष्ट बल वाले के पति और बहुधनवान् इन्द्र ही हैं।**

चतुर्थं पादमनूद्य व्याचष्टे—

**'यदीमुश्मसि कर्तवे करत्तद्' इति यदेवैतदवोचामाकरत्तदित्येवैनांस्तदब्रवीत् ॥** इति।

पादत्रयोक्तं वावाताया वचनं श्रुत्वा चतुर्थपादेन देवाः परस्परं ब्रुवते। 'यदि, ईं' यन्निदमस्माकमप्यत्र भागोऽस्त्वित्येतादृशं कार्यं 'कर्तवे' कर्तुमुश्मसि वयं सर्वे कामयामहे 'तत् सर्वं करत्' इन्द्रः संपूर्णमकरोत्। अथवा चतुर्थपादोऽपि वावाताया एव वचनम्। हे देवाः, वयं सर्वे यदिदं कार्यं कर्तुं कामयामहे तद् युष्मद् भागप्रदानरूपं कार्यमिन्द्रोऽकरोदिति। इदमेव द्वितीयं व्याख्यानं यदेवैतदित्यादिब्राह्मणेन स्पष्टीकृतम्। हे देवाः, मया सह युष्माभिरालोचितं कार्यमिन्द्रः कृतवानित्यनेनैव प्रकारेण तस्मिन् मन्त्रे सा वावाताऽब्रवीत् ॥

**[चतुर्थ पाद में वावाता कहती है]—'हे देवों, हम जो कुछ करवाना चाहते हैं; इन्द्र ने उस सबको पूर्ण किया' इस प्रकार वस्तुतः उसने उन देवों से कहा—'जो कुछ हम लोगों ने कहा है वह उन्होंने किया है।'**

उपाख्यानशेषं दर्शयति—

**ते देवा अब्रुवन्नप्यस्या इहास्तु या नोऽस्मिन्न वै कमविददिति, तथेति, तस्या अप्यत्राकुर्वन् ॥** इति।

ते देवा वावाताया उत्तरं श्रुत्वा परस्परमिदमब्रुवन्। वावाता नोऽस्माकमुपकारिणी, 'अस्मिन्न' निष्केवल्ये शस्त्रे 'कम्' अपि संबन्धं 'न वा अविदत्' नैव लब्धवती। अस्या अपि वावाताया इह निष्केवल्ये शस्त्रे संबन्धोऽस्तु। 'इति' एतदङ्गीकृत्य तस्या अप्यत्र संबन्धमकुर्वन् ॥

**तब उन देवों ने [परस्पर] कहा—इस [वावाता] का भी इस [निष्केवल्यशस्त्र] में भाग होवे, क्योंकि जो [वावाता] हमारी [उपकारिणी] है उसे इसमें कुछ भी प्राप्त नहीं हुआ। उन्होंने कहा—'ठीक है', और उसका भी इसमें भाग किया।**

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इदानीं धाय्यां विधत्ते—

**तस्मादेषाऽत्रापि शस्यते'–यद्वावान पुरुतमं पुराषाळिति ।। इति ।**

यस्माद् वावातायाः संबन्धः कृतः, तस्मात्कारणाद् यद्वावानेत्येषापि ऋक् 'अत्र' निष्केवल्यशस्त्रे धाय्यात्वेन शंसनीया[1] ।।

**[क्योंकि वावाता का इससे संबन्ध है] इसीलिए यहाँ [निष्केवल्यशस्त्र में] भी इस 'यद् वावान' आदि ऋचा का धाय्यात्वेन शंसन किया जाता है ।**

अस्या ऋचो वक्त्री येन्द्रस्य जायोक्ता तत्प्रशंसाबुद्धिस्थं कंचित्प्रयोगं विधत्ते—

**सेना वा इन्द्रस्य प्रिया जाया वावाता प्रासहा नाम; को नाम प्रजापतिः श्वशुरस्तद्याऽस्य कामे सेना जयेत्, तस्या अर्धात् तिष्ठंस्तृणमुभयतः परिच्छिद्येतरां सेनामभ्यस्येत्—'प्रासहे कस्त्वा पश्यतीति', तद्यथैवादः स्नुषा श्वशुराल्लज्जमाना निलीयमानैत्येवमेव सा सेना भज्यमाना निलीयमानैति, यत्रैवं विद्वांस्तृणमुभयतः परिच्छिद्येतरां सेनामभ्यस्यति 'प्रासहे कस्त्वा पश्यतीति' ।। इति ।**

पूर्वत्रास्येन्द्रस्य प्रिया जाया वावाता प्रासहा नामेति यैवमुक्ता, सेयं लोकव्यवहारे 'सेना वै' युद्धार्थोद्यतसेनारूपेण वर्तते, इन्द्रजायायाः सेनाभिमानित्वात्[2] । तच्च शाखान्तरे समाम्नातम्—'इन्द्राणी वै सेनाया देवता'[3] इति । 'को नाम' क इत्यनेन नाम्ना युक्तः प्रजापतिः, तस्या इन्द्रजायायाः श्वशुरः प्रजापतेरिन्द्रोत्पादकत्वात् । तथा चान्यत्र श्रूयते—'प्रजापतिरिन्द्रमसृजतानुजावरं देवानाम्'[4] इति । तत्तथा सति, अस्य लौकिकस्य पुरुषस्य युद्धार्थिनो या स्वकीया सेना जयत्विति कामो भवति । एतस्मिन् कामे सति स पुमांस्तस्याः स्वकीयायाः सेनाया अर्धात् तिष्ठन्नर्धभागेऽतीते भूमाववस्थितः किंचित् तृणमध्य आदाय मूलतोऽग्रत उभयतः परिच्छिद्येतरां परकीयां सेनामभिलक्ष्यास्येत्, बाणवत् क्षिपेत् । तत्रायं मन्त्रः—'प्रासहे कस्त्वा पश्यति' इति । हे प्रासहाख्ये, इन्द्रजाये, 'कः' प्रजापतिः त्वदीयः श्वशुरः, 'त्वां' चक्षुषा पश्यति । अनेन मन्त्रेण तृणे क्षिप्ते सति पर-

---

१. 'यद्वावानेति धाय्या'—इति आश्व० श्रौ० ५.१५.२१ ।

२. सेना सेश्वरा समानगतिर्वा—इति निरु० २.३.२ ।

३. तै० सं० २.२.८.१ । द्र० 'इन्द्राणी देवी सुभगा सुपत्नी, उदंशेन पतिविद्ये जिगाय त्रिंशदस्या जघनं योजनानि, उपस्थ इन्द्रं स्थविरं बिभर्ति ।। सेना ह नाम पृथिवी धनञ्जया, विश्वव्यचा अदितिः सूर्यत्वक् । इन्द्राणी देवी प्रासहा ददाना, सा नो देवी सुहवा शर्म यच्छतु ।।—इति द्वे ऋचौ, तै० ब्रा० २.४.२.७ ।

४. तै० ब्रा० २.२.१० । द्र० तै० सं० ६.६.११.२;७.२.१०.२;२.३.४.२ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सेनाया भङ्गे दृष्टान्त उच्यते । 'तत्' तस्मिन् विवक्षितार्थे 'यथैवादः'[१] निदर्शनं भवति, तथा कथयामः—अनूचानानामीशानां वा गृहेषु युवतिः स्नुषा स्वकीयं श्वशुरं दृष्ट्वा तस्माल्लज्जमाना लज्जां प्राप्नुवती 'निलीयमाना' वस्त्रावगुण्ठनहस्ताद्यङ्गसंकोचेन तिरोहितवसना 'एति' गृहाभ्यन्तरमागच्छति । एवमेव 'सा' परकीया सेनाऽभिमन्त्रिततृणरूपास्त्रप्रक्षेपेण 'भज्यमाना'[२] सती तत्र तत्रारण्यपर्वतादिषु 'निलीयमाना' तिरोहिता सती स्वकीयं देशमेति । कुत्रायमितरसेनाभङ्गः ? इत्याशङ्क्य 'यत्रैवम्'—इत्यादिना पूर्वोक्त एवार्थः स्पष्टीकृतः ॥

'प्रासहा' नामक इन्द्र की प्रिय स्त्री वावाता सेना रूप है । 'कः' नाम वाले प्रजापति उसके श्वसुर हैं । इसलिए वह जो चाहे कि उसकी सेना विजयी हो तो वह [स्वकीय सेना से] आधी दूरी पर खड़े होकर एक घास लेकर उसे दोनों सिरों से काटकर दूसरी [शत्रु] सेना को लक्ष्य करके [बाण के समान] यह कहते हुए फेंक दे कि 'हे प्रासहा, तुम्हारा [श्वसुर] प्रजापति तुम्हें देखता है ।' तब, जैसा कि लोक में होता है, एक वधू अपने श्वसुर को देखकर लज्जान्वित होते हुए वस्त्रावगुण्ठन आदि से अपने को छिपाते हुए गृह में जाती है; उसी प्रकार वह [शत्रु] सेना [अभिमन्त्रित-तृण रूप-अस्त्र प्रक्षेप से] तितर-बितर होकर [पर्वत व जंगलों आदि में] छिपती हुई अपने प्रदेश में आती हैं, जो इस प्रकार जानते हुए घास को दोनों ओर से काटकर परकीय सेना पर 'प्रासहे कस्त्वा पश्यति'—यह मन्त्र कहते हुए फेंकता है ।

प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरति—

**तान् इन्द्र उवाचापि वोऽत्रास्त्विति; ते देवा अब्रुवन्—विराड् याज्यास्तु निष्केवल्यस्य या त्रयस्त्रिंशदक्षरा ॥ इति ।**

वावातायां वचनेनेन्द्रसमीपं प्रति देवेष्वागतेषु 'तान्' देवान् इन्द्र एवमुवाच युष्माकमप्यत्र निष्केवल्येऽपेक्षितो भागोऽस्त्विति । ततो देवाः 'त्रयस्त्रिंशदक्षरां' विराट्छन्दस्कां 'पिबा सोमम्'[३] इत्येतां याज्यां प्रार्थितवन्तः ॥

उन देवों से इन्द्र ने कहा—'इस [निष्केवल्यशस्त्र] में आप को भी भाग प्राप्त होवे ।' तब उन देवों ने कहा—'विराट् छन्दस्क जो तैंतिस अक्षरों वाली [पिबा सोमम्] ऋचा है' वह निष्केवल्यशस्त्र की याज्या होवे ।'

तां याज्यां प्रशंसति—

**त्रयस्त्रिंशद् वै देवा अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्याः प्रजापतिश्च वषट्कारश्च; देवता अक्षरभाजः करोत्यक्षरमक्षरमेव तद्देवता अनु प्रपिबन्ति, देवपात्रेणैव तद्देवतास्तृप्यन्ति ॥ इति ।**

---

१. 'अदः अधुना'—इति भट्टभास्करः । २. 'भज्यमाना नश्यत्परिकरा' इति भट्टभास्करः 'ताड्यमाना'—इति षड्गुरुशिष्यः । ३. ऋ० ७.२२.१ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एतद् वाक्यं पूर्वत्रैव व्याख्यातम्[1]। यद्यप्यस्या याज्यायास्त्रयस्त्रिंशदक्षराणि साक्षान्न दृश्यन्ते, तथाऽपि संयोगाक्षरादिविभागेन संख्या पूरणीया। ततो देवसाम्यात् प्रत्यक्षर-मेकैकदेवतातृप्तिः सिध्यति ॥

वस्तुतः तैंतिस हो देवता भी हैं—आठ वसु, ग्यारह रुद्र, बारह आदित्य, प्रजापति और वषट्कार। इस प्रकार [वह होता याज्या मन्त्र के तैंतिस] अक्षरों में [वसु आदि] देवों को [संख्यासाम्य के द्वारा] सम्मिलित कर लेता है। उन-उन अक्षरों का अनुसरण करके वे देव अपना भाग प्रकृष्ट रूप से पीते हैं। इस प्रकार उन [अक्षररूपी] देवपात्र के द्वारा ही देवता तृप्त होते हैं।

अथाभिचारप्रयोगं विधत्ते—

**यं कामयेतानायतनवान् स्यादित्यविराजाऽस्य यजेद् गायत्र्या वा त्रिष्टुभा वाऽन्येन वा छन्दसा वषट्कुर्यादनायतनवन्तमेवैनं तत्करोति ॥** इति।

आयतनमाश्रयो गृहादिरस्यास्तीति 'आयतनवान्' तद्विपरीतो यजमानोऽस्त्विति कामयमानो होता विराड्व्यतिरिक्तगायत्र्यादिच्छन्दोयुक्तां याज्यां पठित्वा तदन्ते वषट्-कुर्यात्[2]। तथा सत्यायतनहीनो यजमानो भवति ॥

जिस [यजमान] को होता चाहे कि वह गृहादि आश्रयविहीन हो जाय तो वह विराड् के अतिरिक्त गायत्री या त्रिष्टुभ् अथवा किसी अन्य छन्दों से युक्त याज्या का पाठ करके वषट्कार करे। इस प्रकार उस [प्रयोग] से वह इस यजमान को आयतनविहीन ही करता है।

उक्तार्थव्यतिरेकं विधत्ते—

**यं कामयेताऽऽयतनवान् स्यादिति विराजाऽस्य यजेत्, पिबा सोममिन्द्र मन्दतु त्वेत्येतयाऽऽयतनवन्तमेवैनं तत्करोति[3] ॥ २२ ॥** इति।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीय-पञ्चिकायां द्वितीयाध्याये (द्वादशाध्याये) एकादशः खण्डः ॥११॥ (२२) [९३]

जिस [यजमान] को होता चाहे कि वह आश्रय युक्त हो जाय तो वह इसके लिए विराट् छन्दस्क मन्त्र 'हे इन्द्र, सोम पीओ, यह तुम्हे प्रसन्न करे'—से यजन करे। इस प्रकार इस ऋचा से वह इस [यजमान] को आयतन युक्त ही करता है।

॥ इस प्रकार बारहवें अध्याय के ग्यारहवें खण्ड की हिन्दी पूर्ण हुई ॥ ११ ॥

---

१. द्र० इतः पूर्वम्, ६८,३५१ पृष्ठे।

२. 'वषटकुर्याद् यजेदित्यर्थः'। यागस्यासमीचीनतां ख्यापयितुं यजेदिति नोक्तम्। विराड्-व्यतिरिक्तेन केनचिच्छन्दसा वषट्कारमात्रमिव कुर्यादित्यर्थः'—इति भट्टभास्करः।

३. 'पिबा सोममिन्द्र मन्दतु त्वेति याज्या'—इति आश्व० श्रौ० ५.१५.२३।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ द्वादशः खण्डः

'स्तुतमनुशंसति'[1] इतिविधिबलेन निष्केवल्यशस्त्रस्य स्तोत्रपूर्वकत्वाद् बुद्धिस्थस्य साम्न आश्रयत्वेन तृचं विधातुमाख्यायिकामाह—

**ऋक्च वा इदमग्रे साम चाऽऽस्तां, सैव नाम ऋगासीदमो नाम साम, सा वा ऋक्सामोपावदन्—मिथुनं संभवाव प्रजात्या इति; नेत्यब्रवीत् साम ज्यायान् वा अतो मम महिमेति; ते द्वे भूत्वोपावदतां; ते न प्रतिचन समवदत; तास्तिस्रो भूत्वोपावदंस्तत् तिसृभिः समभवद्, यत्तिसृभिः समभवत्, तस्मात् तिसृभिः स्तुवन्ति; तिसृभिरुद्गायन्ति, तिसृभिर्हि साम संमितं, तस्मादेकस्य बह्व्यो जाया भवन्ति, नैकस्यै बहवः सह पतयो यद्व तत्सा चामश्च समभवतां, तत्सामाभवत्, तत्साम्नः सामत्वम् ॥** इति ।

यत् 'इदम्' इदानीमृगाश्रितं सामोभयमेलनरूपमधीयते, तदिदमग्रे मेलनात् पुरा ऋगक्षरपदरूपा पृथग्भूता, साम च गीतिरूपं पृथग्भूतम्,—इत्येवं द्वे अपि पृथगेवाऽऽस्तां तयोः परस्परमेलनयोग्यतां प्रदर्शयितुमस्मिन्नेव सामनाम्न्यन्तर्भावः प्रदर्श्यते । सामेति नाम्नि यदेतत् सेति पूर्वमक्षरं, तदेवैकं नाम, तन्नामवाच्या, ऋगासीत् । अम इत्येकं नाम, तद्वाच्यं सामाऽऽसीत् । अतो मेलनयोग्यतायां सत्यां सैव ऋक्, साम प्रत्युपावदत् समीपमागत्योक्तवती । आवामुभे मिथुनं यथा भवति तथा संभवाव । तच्च संभवनं प्रजोत्पत्त्यर्थमिति । तदुक्तं साम निराकरोत् स्वाभिप्रायं चावदत्—अतोऽस्माद्दृङ्महिम्नो 'ज्यायान्' अभ्यधिको 'मम' साम्नो महिमा; तस्माद् विवादश्च विवाहश्च तुल्ययोरिति न्यायविरोध इति । ततः साम्ना स्वस्य तुल्यत्वसिद्धये ते ऋचौ द्वे संभूयोपेत्य पूर्ववदुक्तवत्यौ । चनेत्यक्षरद्वयात्मको निपातोऽपिशब्दार्थः[2] । ते द्वे ऋचौ प्रत्यपि साम 'न समवदत' संवादमङ्गीकारं नाकरोत् । पुनस्ता ऋचस्तिस्रो भूत्वोपेत्य पूर्ववदुक्तवत्यः । तदानीं ताभिस्तिसृभिः 'समभवत्' संभवनं संयोगमकरोत् । यस्मात् संयोगः संभूतः, तस्मात् समयुक्ताभिस्तिसृभिर्ऋग्भिः सामगाः 'स्तुवन्ति' यज्ञे स्तोत्रं कुर्वन्ति । तस्यैव व्याख्यानं—'तिसृभिरुद्गायन्ति' इति । औद्गात्रं कर्म कुर्वन्तीत्यर्थः । अत एव शाखान्तरे श्रूयते—'एकं साम तृचे क्रियते स्तोत्रियम्' इति । यद्यपि च्छन्दःसामनामके ग्रन्थ एकस्यामृचि सामोत्पन्नं तथाऽप्युत्तराख्ये ग्रन्थ आम्नातेषु तृचेषु प्रयोगकाले साम गातव्यम् । तत्र प्रथमायामृचि योनिरूपायां यत्सामोत्पन्नं छन्दःसामग्रन्थे सामाम्नातम्[3], तदवलोक्य तत्सादृश्येन द्वितीयतृतीययोर्ऋचोर्गानं समूहनीयम्[4] । एतदपि शाखान्तरे विहितम्—'यद्योन्यां तदुत्तरयो-

---

१. ता० ब्रा० ९.८.१० । २. पा० सू० ८.१.५७ । अमरकोश ३.४.३ ।

३. गेयारण्यगानग्रन्थयोरेकं नाम छन्दस्सामेति वेदसामेति च राणायनशाखाध्येतॄणाम् ।

४. तथाविधगानानि ऊहोह्ययोर्द्रष्टव्यानि, तादृशगानसमूहात्मकावेव हि तौ गानग्रन्थौ । तयोः पौरुषेयत्वं च, अत एव मीमांसायां सिद्धान्तितम् (जै० न्या०वि० ९.२.१.१-२) ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

र्गायति' इति । तस्मादौद्गात्रं कर्म तिसृभिर्ऋग्भिर्निष्पद्यते । । यस्मादाख्यानोक्तप्रकारेण तिसृभिर्ऋग्भिः 'साम संमितं'[1] साम्न एकस्य महिम्ना तुल्यः संवृत्तः, तस्माल्लोकेऽप्येकस्य पुरुषस्य सामस्थानीयस्य बह्व्यो जाया ऋक्स्थानीया भवन्ति, न तु विपर्ययेणैकस्याः स्त्रिया 'बहवः' पतयः परस्परैकमत्येन 'सह'[2] वर्तमाना दृश्यन्ते । यस्मादृगक्षरपदादिरूपा सेत्यनेन शब्देनाभिधेया साम चामशब्देनाभिधेयं सत्पश्चादुभयं संयुक्तं सत्सामाभवत् तस्मादेकोभयात्मकवस्तुनः सामनाम संपन्नम्[3] ॥

iii. २३ [xi. १२] इस [ऋक् साम के मेल] से पहले [अक्षरपद रूप] ऋक् और गीतिरूप साम [अलग अलग] थे । ऋक् का नाम 'सा' [She] था और साम का नाम 'अमः' [He] था । ऋक् ने साम से कहा—'हम लोग प्रजोत्पादन के लिए एक दूसरे के साथ प्रसंग करें ।' साम ने कहा—'नहीं, क्योंकि मेरी महिमा अधिक है ।' तब [साम के बराबर होने के लिए] दो ऋक् होकर [वैसा ही] बोली । उन दो ऋक् के प्रति भी वह राजी नहीं हुआ । पुनः वे तीन होकर वैसा ही बोली । तब उन तीन के साथ उसने संयोग किया । क्योंकि तीन के साथ संयोग हुआ, इसलिए साम युक्त तीन ऋक् से सामगान करने वाले स्तुति करते हैं, अर्थात् तीन ऋचाओं से गान करते हैं । क्योंकि साम तीन ऋचाओं से संवृत्त हुआ; अतः लोक में भी एक [सामस्थानीय] पुरुष के बहुत सी ऋक्स्थानीय पत्नियाँ होती हैं । किन्तु एक स्त्री के कई पति नहीं होते । इस प्रकार जो वह 'सा' और 'अमः' संयुक्त हुए, वह साम हुआ । यही साम के नाम का कारण है ।

उक्तार्थवेदनं प्रशंसति—

**सामन् भवति य एवं वेद ॥ इति ।**

ऋक्सामयोरेकत्ववेदिता यः, स सर्वैरभ्यर्हितैः सदृशो[4] भवति ॥

जो इस प्रकार जानता है वह सभी से अभ्यर्हित के सदृश होता है ।

---

१. 'संमानं संश्लेषः'—इति षड्गुरुशिष्यः । 'संमितं निर्वर्त्तितम्'—इति भट्टभास्करः ।

२. सह पतय इत्यत्र सहग्रहणं किमर्थमुच्यते । पर्यायेण बहवः पतयो यथा स्युरिति । तथाहि— 'दत्तामपि हरेत् कन्यां श्रेयांश्चेद् वर आव्रजेत्' (याज्ञ० ३.६५)—इति श्रेयसोऽन्यस्य वरस्य लाभे वाग्दत्ताया अक्षतयोन्याश्च पूर्वपतित्यागेनान्यं पतिमिच्छन्ति । तथा प्राजापत्यं वचनम्—'नष्टे मृते प्रव्रजिते क्लीबेऽथ पतिते पतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते'—इति । तस्मात् सह बहवः पतयो न स्युरिति प्रतिपादनार्थं सह ग्रहणम्.....। एवं स्थिते 'तस्मान्नैका द्वौ पती विन्दते'—इति या श्रुतिः, 'न द्वितीयो हि साध्वीनां क्वचिद् भर्तोपदिश्यते' (अनु० ५.१६२)—इति या च स्मृतिः, तत् सर्वं सहाभिप्रायं वेदितव्यम्'—इति भट्टभास्करः ।

३. 'साम सम्मितमृचा । अस्यतेर्वा । ऋचा समं मेनं इति नैदानाः'—इति निरु० ७.१२ ।

४. 'स सामन् साम्नि साधुर्निपुणतरो भवति'—इति भट्टभास्करः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

लौकिकवृत्तान्तोद.हरणेनापि सामस्वरूपं प्रशंसति—

**यो वै भवति, यः श्रेष्ठतामश्नुते, स सामन् भवत्यसामन् य इति हि निन्दन्ति ॥ इति ।**

यः पुमान् भूतिमैश्वर्यं प्राप्नोति, यश्च विद्यावृत्ताभ्यां श्रेष्ठत्वं प्राप्नोति, स सर्वोऽपि सामन् भवति सर्वेषु स्वकीयत्वबुद्धचा समदृष्टिर्भवति[1] । अन्यथा सर्वे जनास्तम् 'असामन् यः' पक्षपातीति निन्दन्ति[2] । अतः सामन्यरूपस्य[3] लोके प्रशस्तत्वाद् अत्राप्यक्षरपाठस्य गानस्य चैकत्वेन सामत्वं प्रशस्तमित्यर्थः ॥

**जो ऐश्वर्य प्राप्त करता है, जो श्रेष्ठता प्राप्त करता है, वह समदृष्टि होता है; और जो समदृष्टि नहीं है उसकी लोग निन्दा करते हैं ।**

नन्वस्त्वेवं सामत्वं निष्केवल्यशस्त्रे किमायातमित्याशङ्क्य सामसादृश्येन शस्त्रप्रशंसां दर्शयति—

**ते वै पञ्चान्यद् भूत्वा पञ्चान्यद् भूत्वा कल्पेताम्—आहावश्च हिंकारश्च प्रस्तावश्च प्रथमा च ऋगुद्गीथश्च मध्यमा च प्रतिहारश्चोत्तमा च निधनं च वषट्कारश्च ॥ इति ।**

'ते वै' त एव वक्ष्यमाणाः आहावादयः शस्त्रावयवाः पञ्चसंख्याका 'अन्यत्' पृथगेव शस्त्ररूपं भूत्वा वर्तन्ते । तथा हिंकारादयः सामांशा पञ्च संख्याकाः, 'अन्यत्' पृथगेव सामस्वरूपं भूत्वा वर्तन्ते । ते च शस्त्रसामनी स्वावयवोपेते उभे 'कल्पेतां' स्वव्यापार-समर्थे भवतः । 'आहावः' शोंसावोमिति मन्त्रः । स्तोत्रिये तृचे 'प्रथममध्यमोत्तमाः' तिस्र ऋचः । याज्यान्ते पठितव्यो 'वषट्कारः'—तदेतत्पञ्चकं शस्त्रस्वरूपम् । उद्गात्रा पठितव्यः साम्न आदौ हिमित्येवंशब्दो 'हिंकारः'[4] । प्रस्तोत्रा गातव्यः सामावयवः 'प्रस्तावः' । उद्गात्रा गातव्य 'उद्गीथः' । प्रतिहर्त्रा गातव्यः 'प्रतिहारः' । अन्ते सर्वै-र्गातव्यो भागो 'निधनम्'—तदेतत्पञ्चकं स्तोत्रस्वरूपम्[5] । अतः सामसादृश्येन निष्केवल्य-शस्त्रं प्रशस्तम् ॥

---

१. 'सामन् सामन्यः पूज्यः'—इति षड्गुरुशिष्यः ।

२. 'यो ह्युक्तगुणरहितो निन्द्यः पुरुषः तं खलु विद्वांसोऽसामन्योऽयमिति निन्दन्ति गर्हन्ते । साम्नि साधुः सामन्यः तत्र साधुरिति यत् । अत एव ज्ञायते सामन् भवति इत्यत्रापि सामविषयं साधुत्वमेवाभिप्रेतमिति'—इति भट्टभास्करः ।

३. 'सामान्यरूपस्य' इति वा पाठः । ४. द्र० इतः पूर्वम्, ३८१ पृष्ठे, १ टि० ।

५. 'प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनानि भक्तयः । तत्पाञ्चविध्यम्'—इति; 'ओङ्कार-हिङ्काराभ्यां साप्तविध्यम्'—इति; 'अवसानं पूर्वं प्रस्तावः' इत्यारभ्य 'निधनं पर्वं सामान्त्यम्'—इत्यन्तश्च पञ्चविधसूत्रग्रन्थो द्रष्टव्यः, समालोच्याः च छान्दोग्योपनिषद् ब्राह्मणस्य २.१–२१ खण्डाः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वे दोनों ही [आहाव आदि शस्त्र के अवयव रूप में और साम स्वरूप में] पाँच-पाँच होकर कल्पित हुए—१. आहाव और हिंकार [=उद्गाता द्वारा पढ़ा जाने वाला], २. प्रस्ताव और प्रथम ऋचा, ३. उद्गीथ और द्वितीय ऋचा ४. प्रतिहार और तृतीय ऋचा, ५. निधन [=सभी के द्वारा अन्त में गाया जाने वाला] और वषट्कार [=याज्या के अन्त में पढ़ा जाने वाला]।

प्रकारान्तरेण प्रशंसति—

**ते यत्पञ्चान्यद् भूत्वा पञ्चान्यद् भूत्वा कल्पेतां, तस्मादाहुः पाङ्क्तो यज्ञः, पाङ्क्ताः पशव इति ॥ इति ।**

यस्मात् सामशस्त्रयोरुक्तप्रकारेण प्रत्येकं पञ्चावयवत्वं संपन्नम्, 'तस्मात्' पञ्चानां पङ्क्त्या योगादयं यज्ञः पाङ्क्तः इत्येवं ब्रह्मवादिन आहुः । तथा गवादिपशवोऽपि चतुर्भिः पादैर्मुखेन च योगात् पाङ्क्ताः । अतो यज्ञपाङ्क्तत्वप्रसिद्धिसंवादनात् पशुसाम्याच्च शस्त्रं प्रशस्तम् ॥

इस प्रकार वे दोनों [ऋक् और साम] जो पाँच-पाँच होकर स्वव्यापार समर्थ होते हैं इसीलिए ब्रह्मवादी करते है कि [पाँच भाग के योग से] 'यह यज्ञ भी पाँच अवयवों वाला है' और 'पशु भी [चार पैर और मुँह से युक्त होकर] पाँच अवयवों वाले हैं।'

पुनः प्रकारान्तरेण प्रशंसति—

**यदु विराजं दशिनीमभि समपद्येतां तस्मादाहुर्विराजि यज्ञो दशिन्यां प्रतिष्ठित इति ॥ इति ।**

'दशाक्षरा विराट्'[1] इति श्रुत्यन्तराद् दशानामक्षराणां समूहो 'दशिनी'[2] । या विराडस्ति, तामभिलक्ष्य पञ्चकद्वयात्मके शस्त्रसामनी 'समपद्येतां' सम्भवतः विराट्सदृशे जाते इत्यर्थः । 'यदु' यस्मादेव कारणात् संख्यया विराट्सादृश्यं तस्मादभिज्ञा एवमाहुः,—दशसंख्योपेतायां शस्त्रसामरूपायां विराजि यज्ञो 'प्रतिष्ठितः' व्यवस्थित इति ॥

क्योंकि विराज् छन्द के [दश अक्षरों से युक्त] दशक को देखकर पञ्च-द्वयात्मक शस्त्र और साम का संपादन होता है इसीलिए अभिज्ञजन कहते हैं—'यज्ञ दश संख्या से युक्त शस्त्र-सामरूप विराज में प्रतिष्ठित है।'

पुनरपि गृहस्थपुरुषसादृश्येन शस्त्रं प्रशंसति—

**आत्मा वै स्तोत्रियः, प्रजाऽनुरूपः, पत्नी धाय्या, पशवः प्रगाथो, गृहाः सूक्तम् ॥ इति ।**

---

१. तै० सं० ५.२.३ । ता० ब्रा० ६.८.४; ८.५.१३; शत० ब्रा० १.१.१.१२ इत्यादि ।

२. दशपरिमाणवतीम् । दश 'परिमाणम् अस्या इति शन् शतोडि्ननिः इति डिनिः'—इति भट्टभास्करः ।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

येन तृचेन सामगाः स्तुवन्ति, सः 'स्तोत्रियः' तृचो निष्केवल्यशस्त्रस्य प्रारम्भे शंसनीयः। स च 'आत्मा वै' गृहस्थशरीरस्थानीय एव। स्तोत्रियं तृचमनु द्वितीयो यस्तृचः शस्यते, सोऽयम् 'अनुरूपः'। स च 'प्रजा' पुत्रपौत्रादिस्थानीयः। येयं 'धाय्या' शस्त्रे प्रक्षेपणीया, सा पत्नीस्थानीया। यः 'प्रगाथः', स पशुस्थानीयः। यन्निविद्धानीयं 'सूक्तं' तद्गृहस्थानीयम्[१] ॥

[जिस तृच से सामगान करने वाले स्तुति करते हैं वह] स्तोत्रिय-तृच [गृहस्थशरीर-स्थानीय] आत्मा है, द्वितीय तृच पुत्र पौत्रादिस्थानीय] प्रजा है; [शस्त्र में प्रक्षेपणीय] धाय्या पत्नीस्थानीय है, प्रगाथ पशुस्थानीय है और [निविद्धानीय] सूक्त गृहस्थानीय है।

एतद् वेदनं प्रशंसति—

**स वा अस्मिंश्च लोकेऽमुष्मिंश्च प्रजया च पशुभिश्च गृहेषु वसति, य एवं वेद ॥ २३ ॥ इति ।**

पशुभिश्च सहित इति शेषः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीय-पञ्चिकायां द्वितीयाध्याये (द्वादशाध्याये) द्वादशः खण्डः ॥ १२ ॥ (२३) [१४]

जो इस प्रकार जानता है वह इस लोक में और परलोक में भी प्रजा और पशुओं से युक्त होकर गृह में वास करता है।

॥ इस प्रकार बारहवें अध्याय के बारहवें खण्ड की हिन्दी पूर्ण हुई ॥ १२ ॥

## अथ त्रयोदशः खण्डः

अथ निष्केवल्यशस्त्रभागाः स्वरविशेषाश्च वक्तव्याः :—

तत्र प्रथमभागं विधत्ते—

**स्तोत्रियं शंसति, आत्मा वै स्तोत्रियः ॥ इति ।**

'अभि त्वा शूर नोनुमः'[२] इत्यस्मिन् प्रगाथे तृचं संपाद्य सामगाः स्तुवन्ति,[३] सोऽयं स्तोत्रियस्तृचः, तमादौ[४] शंसेत्। तस्य गृहस्थदेहस्वरूपत्वं पूर्वमेवोक्तम् ॥

iii. २४ [xii. १३] [निष्केवल्यशस्त्र के प्रथम भाग] स्तोत्रिय तृच का शंसन करता है। स्तोत्रिय तृच आत्मा है।

---

१. द्र० इतः पूर्वम्, पृ० ३४१ सा० भा०।

२. उ० आ० १.१.११ १–२। (ऋ० ९.३३.२२)।

३. द्र० सायणकृता सामवेदभाष्योपक्रमणिका पृ० ८८।

४. यस्मिंस्तृचे छन्दोगाः स्तुवते स तृचः सस्त्रादि स्तोत्रियः। स्तोत्रियतृचसमानच्छन्दः-प्रमाणलिङ्गदेवतार्षस्तृचोऽनुरूपः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्मिन् स्तोत्रिये स्वरविशेषं विधत्ते—

**तं मध्यमया वाचा शंसति, आत्मानमेव तत्संस्कुरुते ॥** इति ।

अत्युच्चत्वमतिनीचत्वं च यस्यां वाचि नास्ति, सा 'मध्यमा'[1] तया । यावता 'वाचा' ध्वनिना देवयजनदेशस्थाः शृण्वन्ति, न तद्बहिर्देशस्थाः, तावन्तं ध्वनिं कुर्यात् । तेन 'आत्मानमेव' देहमेव संस्कुरुते ॥

**उसको मध्यम स्वर में पाठ करता है। उससे वह अपने शरीर को ही संस्कृत करता है।**

तृचान्तरं विधत्ते—

**अनुरूपं शंसति, प्रजा वा अनुरूपः ॥** इति ।

स्तोत्रियेण तृचेन सदृशतृचोऽनुरूपः । स चात्र 'अभि त्वा पूर्वपीतये इन्द्रस्तोमेभिरायवः' इत्येष प्रगाथः[2] । उभयोः[3] प्रगाथयोः समानच्छन्दस्त्वात् समानदेवताकत्वाच्चानुरूपत्वम्[4] । तमिमं तृचं शंसेत् । तस्य च पुत्रादिप्रजास्थानीयस्यानुरूपत्वमपेक्षितं पितृपुत्रयोः कुलशीलादिना समानरूपत्वात् ॥

**[स्तोत्रिय तृच के सदृश] अनुरूप का शंसन करता है। अनुरूप प्रजा है।**

तस्य ध्वनिविशेषं विधत्ते—

**स उच्चैस्तरामिवानुरूपः शंस्तव्यः, प्रजामेव तच्छ्रेयसीमात्मनः कुरुते ॥** इति ।

स्तोत्रियध्वनेरप्यधिकं ध्वनिं कुर्यात् । तथा सति स्वस्मादाधिक्यं पुत्रादौ संपादितं भवति ॥

**उस अनुरूप का शंसन ऊँचे स्वर के सदृश करना चाहिए। उससे वह अपनी सन्तान को अपने से अधिक अच्छा बनाता है।**

ततो यद् वावानेत्येतस्याः[5] धाय्यायाः शंसनं विधत्ते—

**धाय्यां शंसति, पत्नी वै धाय्या ॥** इति ।

---

१. 'यां दीक्षितविमितदेशस्था एव शृण्वन्ति सा मध्यमा वाक्'–इति भट्टभास्करः ।

२. उ० आ० ७.३.१.१–२ ।

३. 'अभि त्वा शूर'–इति स्तोत्रीयस्य, 'अभि त्वा पूर्वपीतये'—इत्यनुरूपस्य चेत्यर्थः । द्र० आश्व० श्रौ० सू० ५.१५.१–३ ।

४. द्र० ता० ब्रा० ११.६.४–६ । प्रथमस्य स्तोत्रीयस्यैव सञ्ज्ञान्तरं प्रतिपदिति—ता० ब्रा० ६.९.१; १२.१.१ द्र० सा० मा० ।

५. ऋ० १०.७४.६ । द्र० आश्व० श्रौ० ५.१५.२१ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पत्नीत्वं पूर्वमेवोक्तम् ॥

धाय्या का शंसन करता है। धाय्या पत्नी है।

स्वरविशेषं विधत्ते—

**सा नीचैस्तरामिव धाय्या शंस्तव्या ॥ इति।**

अत्यन्तनीचो ध्वनिः कर्तव्यः[1] ॥

उस धाय्या का शंसन अत्यन्त नीच ध्वनि के सदृश करना चाहिए।

होतुरेतद्वेदनं प्रशंसति—

**अप्रतिवादिनी हास्य गृहेषु पत्नी भवति, यत्रैवं विद्वान् नीचैस्तरां धाय्यां शंसति ॥ इति।**

पत्युः प्रतिकूलं वदतीति 'प्रतिवादिनी' तद्विपर्ययेणानुकूलवादिनी भवति ॥

जहाँ इस प्रकार जानते हुए अत्यन्त नीच ध्वनि में धाय्या का शंसन करता है उस यजमान के गृह में पत्नी [पति के] प्रतिकूल वचन कहने वाली नहीं होती।

'पिबा सुतस्य रसिनः'[2] इत्येतं प्रगाथं विधत्ते—

**प्रगाथं शंसति ॥ इति।**

प्रगाथ का शंसन करता है।

तत्र स्वरविशेषं विधत्ते—

**स स्वरवत्या वाचा शंस्तव्यः; पशवो वै स्वरः, पशवः प्रगाथः, पशूनामवरुद्ध्यै ॥ इति।**

'स्वरवत्या'[3] स्वरयुक्तया वाचेत्यर्थः। प्रगाथस्य पशुत्वं पूर्वमुक्तम्। स्वरस्य पशुत्वं संख्यासाम्यात्, चत्वारः स्वराः, पशवोऽपि चतुष्पदाः ॥

उसका शंसन स्वरयुक्त वाणी से करना चाहिए। पशु ही स्वर हैं। पशु प्रगाथ हैं। वह पशुओं की प्राप्ति के लिए है।

निविद्धानीयं[4] पञ्चदशर्चं सूक्तं विधत्ते—

**'इन्द्रस्य नु वीर्याणि प्रवोचम्' इति सूक्तं[5] शंसति ॥ इति।**

---

१. यां दीक्षितविमितस्थानस्था अपि न शृण्वन्ति सा नीचतरा वाक्'—इति भट्टभास्करः।

२. उ० आ० ६.२.१६.१–२।

३. ऐस्वर्यवती वाक् स्वरवती'—इति भट्टभास्करः।

४. 'इन्द्रस्य नु वीर्याणीत्येतस्मिन्नैन्द्रीं निविदं दध्यात्'—इति आश्व० श्रौ० ५.१५.२२।

५. ऋ० १.३३.१–१५।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'इन्द्र के पराक्रम को कहूँगा'—इस सूक्त का शंसन करता है।

तदेतत्प्रशंसति—

**तद्वा एतत् प्रियमिन्द्रस्य सूक्तं निष्केवल्यं हैरण्यस्तूपम्, एतेन वै सूक्तेन हिरण्यस्तूप आङ्गिरस इन्द्रस्य प्रियं धामोपागच्छत्, स परमं लोकमजयत् ॥ इति।**

यदेतद् 'इन्द्रस्य नु वीर्याणि प्रवोचम्' इति निष्केवल्यशस्त्रं सूक्तं, तदेतदिन्द्रस्य प्रियम्; हिरण्यस्तूपनाम्ना महर्षिणा दृष्टत्वाद् 'हैरण्यस्तूपं' तदेव 'एतेन' इत्यादिना स्पष्टीक्रियते। अङ्गिरसः पुत्रो हिरण्यस्तूपाख्यो मुनिरेतेनैव सूक्तेनेन्द्रं स्तुत्वा तदीयं स्थानं प्राप्य ततोऽप्युत्तमं लोकमजयत् ॥

यह निष्केवल्यशस्त्र का हिरण्यस्तूप ऋषि द्वारा दृष्ट सूक्त इन्द्र को प्रिय है। इसी सूक्त के द्वारा अङ्गिरस के पुत्र हिरण्यस्तूप ऋषि ने इन्द्र के प्रिय धाम को पा लिया [और उनका स्थान प्राप्त करके] उससे भी उत्तम लोक को जीत लिया।

वेदनं प्रशंसति—

**उपेन्द्रस्य प्रियं धाम गच्छति, जयति परमं लोकं य एवं वेद ॥ इति।**

जो इस प्रकार जानता है वह इन्द्र के प्रिय धाम को जाता है और उससे भी उत्तम लोक को जीतता है।

सूक्ते ध्वनिविशेषं विधत्ते—

**गृहा वै प्रतिष्ठा सूक्तं, तत्प्रतिष्ठिततमया वाचा शंस्तव्यं; तस्माद् यद्यपि दूर इव पशूँल्लभते, गृहानेवैनानाजिगमिषति; गृहा हि पशूनां प्रतिष्ठा, प्रतिष्ठा ॥ २४ ॥ इति।**

'इन्द्रस्य नु वीर्याणि' इत्यस्मिन् सूक्ते शस्त्रस्य समापनेनावस्थानात् तस्य प्रतिष्ठारूपत्वम्। गृहा अपि स्थितिहेतुत्वात् प्रतिष्ठारूपाः। तथा सत्येतत्सूक्तं 'प्रतिष्ठिततमया' द्रुतविलम्बितत्वादिदोषरहितया श्राव्येण ध्वनिनोपेतया वाचा शंसेत्। तस्माद् गृहस्थानीयस्य सूक्तस्य ध्वनिः प्रतिष्ठिततमः, तस्माल्लोकेऽपि यद्यपि तृणभक्षणार्थमरण्ये गतान् दूरदेश एवावस्थितान् पशून् दिवसे पुरुषो 'लभते' पश्यति तथाऽप्येनान् पशून् सायंकाले गृहानेव 'आजिगमिषति' आनेतुमिच्छति। यस्मात् पशूनां गृहाः 'प्रतिष्ठा' सुखेनावस्थातुं स्थानम्। द्विरभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां द्वितीयाध्याये (द्वादशाध्याये) त्रयोदशः खण्डः ॥१३॥ (२४) [९५]

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदार्थस्य प्रकाशेन तमोहार्दं न्यवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधर-
माधवाचार्यादिशतोसायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश' नामभाष्ये
ऐतरेयब्राह्मणभाष्यस्य कृतौ तृतीयपञ्चिकायाः द्वितीयोऽध्यायः
(द्वादशोऽध्यायः) समाप्तः ॥ १२ ॥

सूक्त गृह है, प्रतिष्ठा है । इसलिए इसका शंसन [द्रुत विलम्बित आदि दोष से रहित श्राव्य-ध्वनि से युक्त] प्रतिष्ठिततम वाणी से करना चाहिए । इसीलिए [लोक में भी] यद्यपि पुरुष दूर [तृणभक्षणार्थं] गए पशुओं को दिन में देखता है तथापि सायंकाल इन्हें अपने घर पर ही बुलाना चाहता है; क्योंकि घर ही पशुओं की प्रतिष्ठा अर्थात् सुख से रहने का स्थान है ।

॥ इस प्रकार ऐतरेय ब्राह्मण की तृतीय पञ्चिका के द्वितीय अध्याय की
हिन्दी पूर्ण हुई ॥ २ ॥

———

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ तृतीयोऽध्यायः

## प्रथमः खण्डः

—: * :—

# [अथ त्रयोदशोऽध्यायः

## प्रथमः खण्डः]

वक्त्याहावप्रभेदं प्रतिगरणमथानुष्टुभः शस्यमानाः।
मृत्योः संनद्धयातिक्रमणमथ मरुत्वद्विधानप्रशंसा॥
तच्छेषा ये विशेषाः प्रतिपदनुचरप्रक्रमाः सप्तभागाः।
निष्केवल्यं च शस्त्रं तदवयवकृताः स्तोत्रियाद्याश्च पञ्च॥ १॥

अथ तृतीयसवनं वक्तुमादावाख्यायिकामाह—

**सोमो वै राजाऽमुष्मिँल्लोके आसीत्, तं देवाश्च ऋषयश्चाभ्यध्यायन् कथमयमस्मात् सोमो राजाऽऽगच्छेदिति, तेऽब्रुवंश्छन्दांसि यूयं न इमं सोमं राजानमाहरतेति, तथेति, ते सुपर्णा भूत्वोदपतंस्ते यत्सुपर्णा भूत्वोदपतंस्तदेतत् सौपर्णमित्याख्यानविद आचक्षते॥** इति।

पुरा सोमवल्ली द्युलोक एवासीत्, न त्वेतस्मिँल्लोके। तदानीं सोममभिलक्ष्य केन प्रकारेण सोमो न आगच्छेदिति देवा ऋषयश्च विचारितवन्तः। विचार्य गायत्र्यादीनि च्छन्दांसि प्रत्येवमब्रुवन्। हे छन्दांसि! अस्मदर्थं सोममाहरतेति। तानि च तदङ्गीकृत्य 'ते' लोकप्रसिद्धाः पक्षिणो भूत्वा द्युलोकं प्रत्युदपतन्। यस्मादेवं तस्मादेतत् सोमाहरणप्रतिपादकं ग्रन्थजातं 'सौपर्णम्' आख्यानमिति 'आख्यानविदः' पौराणिका कथयन्ति॥

**[वैश्वदेव और आग्निमारुतशस्त्र]—**

**iii. २५ [xiii. १] सोम राजा द्युलोक में थे। तब देवों और ऋषियों ने विचार किया कि यह सोम राजा हमारे पास कैसे आवें? उन्होंने छन्दों से कहा—'हे छन्दों, आप हमारे लिए इस सोम राजा को लावें।' उन्होंने कहा—'ठीक है।' वे पक्षी होकर [द्युलोक के प्रति] उड़े। वे जो पक्षी होकर उड़े इसलिए आख्यानवेत्ता इसे 'सौपर्णाख्यान' के नाम से पुकारते हैं।**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथोत्पततसु च्छन्दःसु मध्ये जगतीवृत्तान्तमाह—

**छन्दांसि वै तत्सोमं राजानमच्छाचरंस्तानि ह तर्हि चतुरक्षराणि, चतुरक्षराण्येव च्छन्दांस्यासन्, सा जगती चतुरक्षरा प्रथमोदपतत्, सा पतित्वाऽर्धमध्वनो गत्वाऽश्राम्यत् सा परास्य त्रीण्यक्षराण्येकाक्षरा भूत्वा दीक्षां च तपश्च हरन्ती पुनरभ्यवापतत् तस्मात् तस्य वित्ता दीक्षा वित्तं तपो यस्य पशवः सन्ति, जागता हि पशवो जगती हि तानाहरत् ॥** इति ।

गायत्र्यादिच्छन्दांस्युत्पतने प्रवृत्तानि, तदानीं सोमम् 'अच्छ' प्राप्तुं द्युलोकं प्रत्यचरंस्तानि च च्छन्दांसि तस्मिन् काले चतुरक्षरोपेतानि, अतः पुरा सर्वदा चतुरक्षराण्येवासन्, न तु कस्यापि च्छन्दसोऽधिकाक्षरताऽऽसीत् । ततः सा जगती चतुरक्षरा सती छन्दोऽन्तरेभ्यः सर्वेभ्यः प्रथमं प्रवृत्ता सोमस्थानं प्रत्युदपतत् । सा च मार्गस्यार्धं गत्वा श्रान्ता सती श्रमवशात् त्रीण्यक्षराणि परित्यज्य स्वयमेकाक्षरा भूत्वा सोममाहर्तुमशक्नुवती सोमयागसंबन्धिनीं 'दीक्षां' दीक्षणीयेष्टयादिरूपाम्, क्षीरपानादिरूपं 'तपश्च' 'हरन्ती' तस्माल्लोकादानयन्ती पुनरेतं लोकमभिलक्ष्यावापतत्, अधोमुखी समागता । यस्मादेवं तस्माल्लोके यस्य पुरुषस्य पशवः सन्ति, तेन दीक्षा वित्ता लब्धा भवति, तपश्च लब्धं भवति । न च दीक्षातपसोर्जगत्या समानीतयोः सतोः पशूनां तदुभयकारणत्वं कथमिति शङ्कनीयम् । पशूनां जागतत्वेन जगतीद्वारा दीक्षासंबन्धसंभवात् । जागतत्वं कथमिति ? चेत्, जगत्या पशूनामानीतत्वादिति द्रष्टव्यम् । अत एव शाखान्तरे जगतीं प्रकृत्यैवमाम्नातम्—'सा पशुभिश्च दीक्षया चाऽऽगच्छत् तस्माज्जगती छन्दसां पशव्यतमा', तस्मादुत्तमा, 'तस्मात् पशुमन्तं दीक्षोपनमति'[1] इति ॥

[पक्षी होकर उड़े उन छन्दों के मध्य जगती का वृत्तान्त इस प्रकार है]—

छन्द उन सोम राजा को लाने के लिए गये । वे चार अक्षरों के थे; क्योंकि तब छन्द चार अक्षर के ही थे । तब वह चार अक्षरों की जगती [छन्दों में] सर्वप्रथम सोमस्थान के प्रति उड़ी । उड़ने के बाद वह आधे रास्ते जाकर ही थक गई और वह तीन अक्षरों को छोड़कर, एकाक्षरा होकर, दीक्षा एवं तप को लेकर, पुनः इस लोक के प्रति लौट आई । [क्योंकि उसके द्वारा दीक्षा प्राप्त हुई और तप प्राप्त हुआ] इसलिए जिसके पशु होते हैं, वह दीक्षा और तप प्राप्त करता है; क्योंकि पशु जगती से सम्बन्धित हैं; और जगती ने ही उनका आहरण किया ।

त्रिष्टुभो वृत्तान्तमाह—

**अथ त्रिष्टुब् उदपतत् सा पतित्वा भूयोऽर्धादध्वनो गत्वाऽश्राम्यत् सा परास्यैकमक्षरं त्र्यक्षरा भूत्वा दक्षिणा हरन्ती पुनरभ्यवापतत् तस्मान्मध्यंदिने दक्षिणा नीयन्ते त्रिष्टुभो लोके त्रिष्टुब्भि ता आहरत् ॥ २'१ ॥** इति ।

१. तै० सं० ६.१.६.२ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सा त्रिष्टुब् द्युलोके भूयो[1] भूयः पतित्वाऽपि मार्गस्यार्धादेवाश्राम्यदित्यन्वयः। यस्मादेव दक्षिणाः सर्वा आनीतवती, तस्मात् त्रिष्टुभः स्थाने माध्यंदिनसवने यजमानैर्दत्ताः सर्वा दक्षिणा ऋत्विग्भिर्नीयन्ते ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां तृतीयाध्याये (त्रयोदशाध्याये) प्रथमः खण्डः ॥१॥ (२५) [१६]

तदनन्तर त्रिष्टुप् उड़ा। उड़ने के बाद वह भी पुनः आधे दूर जाकर थक गया और वह एक अक्षर को छोड़कर, तीन अक्षरों का होकर, दक्षिणा लेते हुए पुनः यहाँ लौट आया। इसीलिए त्रिष्टुभ् के स्थान में मध्यन्दिन सवन में [ऋत्विजों द्वारा] दक्षिणा ले जायी जाती है; क्योंकि त्रिष्टुभ् ने ही उसका आहरण किया था।

॥ इस प्रकार तेरहवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

अथ गायत्रीवृत्तान्तमाह—

**ते देवा अब्रुवन् गायत्रीं,—त्वं न इमं सोमं राजानमाहरेति; सा तथेत्यब्रवीत्, तां वै मा सर्वेण स्वस्त्ययनेनानुमन्त्रयध्वमिति; तथेति, सोदपतत्, तां देवाः सर्वेण स्वस्त्ययनेनान्वमन्त्रयन्त,—प्रेति चेति चेति; एतद्वै सर्वं स्वस्त्ययनं यत् प्रेति चेति चेति; तद् योऽस्य प्रियः स्यात्, तमेतेनानुमन्त्रयेत—'प्रेति चेति चेति'; स्वस्त्येव गच्छति स्वस्ति पुनरागच्छति ॥ इति।**

जगतीत्रिष्टुभोः सोमानयनसामर्थ्याभावं दृष्ट्वा ते देवा गायत्रीं प्रार्थितवन्तः। हे गायत्रि, त्वं 'नः' अस्मदर्थमिमं सोममाहरेति। 'सा' च गायत्री तथेत्यङ्गीकृत्य देवान् प्रत्येवमब्रवीत्, हे देवा, यदाऽहं सोममानेतुं गच्छामि, तदानीं तामेवं गच्छन्तीं मां यूयं सर्वेऽपि यथाशक्ति सर्वेण[2] 'स्वस्त्ययनेन' 'अनुमन्त्रयध्वं' क्षेमप्रापणं स्वस्त्ययनं तदर्थमाशीर्वादरूपेण मन्त्रेण ममानुमन्त्रणं कुरुतेति। एवमुक्त्वा तथेति देवैरङ्गीकृते सति 'सा' गायत्री द्युलोकं प्रत्युत्पतनमकरोत्। तदानीं देवाः स्वागतप्रकारेण सर्वेणापि क्षेमप्रापणमन्त्रेण गायत्रीमनुमन्त्रितवन्तः। कोऽसौ मन्त्रः? इति—'प्र'शब्द एको मन्त्रः, 'आ'-शब्दो द्वितीयो मन्त्रः, तदुभयप्रदर्शनार्थमितिशब्दद्वयम्। उभयसमुच्चयार्थं चकारद्वयम्। क्षेमेण सोमं प्राप्नुहि,

---

१. 'अध्वनोऽर्धाद् भूयो बहुतरमभ्यधिकमगत्वा गन्तुमशक्ता जगतीवाध्वमध्येऽश्राम्यत्'—इति भट्टभास्करः।

२. 'सर्वेण सर्वप्रकारोपद्रवशमनेन स्वस्त्ययनेन कल्याणप्रापणेन मन्त्रेण' इति भट्टभास्करः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पुनरपि क्षेमेणाऽऽगच्छेति, अयमाशीर्वादमन्त्रद्वयस्यार्थः। [1]एतदेव मन्त्रद्वयं सर्वं स्वस्त्ययनं 'प्र'-इत्येकम्, 'आ'-इति द्वितीयं पदमस्ति, इतोऽधिकं नान्यत् स्वस्त्ययनमस्ति। यस्माद् इदमेव सर्वक्षेमप्रापकं तस्माद् इदानीमपि 'यः' पुमान् ग्रामान्तरं जिगमिषुरस्य गृहस्वामिनः प्रियः स्यात्, तं जिगमिषुं प्रेत्येतीति मन्त्रद्वयेनानुमन्त्रयेत, तेनाऽऽशीर्वादप्रसादेनायं क्षेमेणैव गच्छति पुनरागच्छति च ॥

iii. २६ [xiii. २] उन देवों ने गायत्री से कहा–'तुम हम लोगों के लिए इस सोम राजा का आहरण करो।' उसने कहा–'अच्छा', हे देवों, मुझ जाती हुई का तुम सब [आशीर्वाद रूप मन्त्र से कल्याण के लिए] 'स्वस्ति' वाचन करो। उन्होंने कहा–'ठीक है।' वह द्युलोक के प्रति उड़ी। तब देवों ने उस गायत्री का 'प्रेति चेति चेति' इस सम्पूर्ण क्षेमप्रापक मन्त्र से अनुमन्त्रण किया। यह जो 'प्रेति चेति चेति' है यह सम्पूर्ण स्वस्ति-वचन है। ['प्र' अर्थात् क्षेमपूर्वक सोम को प्राप्त करो और 'आ' अर्थात् पुनः क्षेम से लौट आओ] इसलिए प्रस्थानोन्मुख जो इसका प्रिय होवेगा उसका 'प्रेति चेति चेति' इस मन्त्र से अनुमन्त्रण करे। इस से वह क्षेमपूर्वक ही जाता है और पुनः सकुशल लौट आता है।

इत्थं प्रासङ्गिकं लौकिकविधिमुक्त्वा प्राक्तमेव गायत्रीवृत्तान्तमनुसरति—

**सा पतित्वा सोमपालान् भीषयित्वा पद्भ्यां च मुखेन च सोमं राजानं समगृभ्णाद्, यानि चेतरे छन्दसी अक्षराण्यजहितां तानि चोपसमगृभ्णात् ॥** इति।

'सा' गायत्री 'पतित्वा' उत्पतनेन सोमं प्राप्य गन्धर्वान् स्वानभ्राजादीन् सोमरक्षकान् आस्फोटनायुधप्रदर्शनादिना भीषयित्वा—भीत्या तेष्वपसृतेषु स्वयं पक्षिरूपा सति स्वकीयाभ्यां पद्भ्यां मुखेन च सोमं सम्यग् गृहीतवती। स्वानभ्राजादीनां सोमपालकत्वमाध्वर्यवे सोमप्रकरणे मन्त्र-तद्ब्राह्मणाभ्यामवगम्यते। 'स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान् रक्षध्वम्'—इति मन्त्रः।[2] 'स्वानभ्राजेत्याहैते वाऽमुष्मिँल्लोके सोममरक्षन्'[3]-इति ब्राह्मणम्। न केवलं गायत्री सोममेव गृहीतवती,

१. (i) 'प्रेति च साध्यमर्थं प्रत्यविघ्नेन गच्छति च। ततः कृतकार्यः सन्नेति च स्वदेशं प्रति निर्बाधमागच्छति कार्यार्थं गन्ता जनः'—इति भट्टभास्करः। (ii) 'प्र एति आ एति पररूपं छान्दसम्'—इति षड्गुरुशिष्यः। (iii) अत्र 'एत्येधत्यूठ्सु' इत्येतद् बाधित्वा व्यत्ययेन एङि पररूपम् इत्येतत् प्रवर्तते। एति इत्यस्य चैकादशस्य पूर्वं प्रत्यन्तवद्भावेन आङ्ग्रहणेन ग्रहणात्। तस्मिन् परतश्च शब्दाकारस्य ओमाङोश्चेति पररूपत्वम्'—इति भट्टभास्करः।

२. तै० सं० १.२.७। शत० ब्रा० १.७.१; ३.३.४.१०।

३. तै० सं० ६.१.१०.५।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

किंत्वितरे जगतीत्रिष्टुबाख्ये छन्दसी 'यानि' चत्वार्यक्षराण्यजहितां परित्यक्तवत्यौ, तानि चोपेत्य सम्यग् गृहीतवती ॥

उड़ने के बाद उस गायत्री ने [सोम को प्राप्त कर] सोम के रक्षकों को डराकर अपने पञ्जे और [चञ्चुरूप] मुख से सोम राजा को सम्यक् रूप से पकड़ लिया, और [जगती त्रिष्टुप् नामक] जो दूसरे दो छन्द अपने अक्षर छोड़ आए थे, उन्हें भी सम्यक् रूप से पकड़ लिया।

अथ तस्या गायत्र्या गन्धर्वेण सह युद्धे यो वृत्तान्तस्तं दर्शयति—

**तस्या अनु विसृज्य कृशानुः सोमपालः सव्यस्य पदो नखमच्छिदत्, तच्छल्यकोऽभवत्, तस्मात् सनखमिव, यद्वशमस्रवत्, सा वशाऽभवत्, तस्मात् सा हविरिव, अथ यः शल्यो यदनीकमासीत् स सर्पो निर्दंश्यभवत्, सहसः स्वजो, यानि पर्णानि ते मन्थावलाः, यानि स्नावानि ते गण्डूपदा, यत् तेजनं सोऽन्धाहिः, सो सा तथेषुरभवत् ॥ २६ ॥ इति।**

स्वानभ्राजादिषु सोमरक्षकेषु यः सप्तमो गन्धर्वः कृशानुनामकः, सोऽयं 'तस्या' गायत्र्या 'अनु' पृष्ठतो बाणं 'विसृज्य' तदीयस्य वामपादस्यैकं नखं छिन्नवान्। तच्च नखं शल्यको मर्कटशरीरपरिमितः शलल्याख्यो मृग आसीत्। यस्य मृगस्य पुच्छसमीपे बहवो रोमविशेषाः प्रादेशपरिमितास्तीक्ष्णाग्रा लोहमया उत्पद्यन्ते, स शल्यकः। यस्मादयं नखादुत्पन्नः, तस्मात् स नखमिव तीक्ष्णाग्ररोमोपेतः। तत्र च्छिन्ननखपादप्रदेशे यद् वशं मेदोऽस्रवत् सा 'वशा' मेध्या काचिदजाऽव्यादिपशुष्वासीत्। तस्माद् गायत्र्या उत्पन्नत्वात् 'सा' वशा 'हविरिव' देवतायोग्यं हविरेवाऽऽसीत्। तच्च हविष्ट्वं शाखान्तरे श्रूयते— 'एतामेव वशामादित्येभ्यः कामायाऽऽलभेत'[1] इति। अथ नखच्छेदनाय गन्धर्वेण विसृष्टो बाणः, सोऽपि नखसंघट्टनेन कुण्ठिताग्रो बहुधा भग्नो भूमौ पतितः। तस्य बाणस्य यः 'शल्यः' कृष्णायसनिर्मितो बाणाग्रे स्थापितः, तस्य च शल्यस्य यद् 'अनीकं' मुखं संघट्टनेन कुण्ठितमासीत् सोऽयं शल्यः, तदनीकात्मको बाणभागो 'निर्दंशी' दंशनासमर्थः सर्पोऽभवत्। जलमध्ये संचरतो दुन्दुभाख्यस्य सर्पस्य विषरहितत्वाद् दंशनसामर्थ्यं नास्ति। तस्मात् कुण्ठिताग्रस्य लोहस्य योऽयं सहो वेगः, तस्मात् सहसो बाणवेगात् 'स्वजः' उभयतःशिराः सर्पोऽभवत्। तस्य बाणस्य मूले यानि 'पर्णानि' कङ्कपत्राणि ते 'मन्थावलाः'[2] अभवन्। ये जीवविशेषा वृक्षशाखास्वधोमुखा अवलम्बन्ते ते मन्थावलाः। तस्मिन् बाणे यानि 'स्नावानि' पत्रबन्धनार्थाः स्नायुविशेषास्ते 'गण्डूपदाः' अभवन्। अवस्करादि-

१. तै० सं० २.१.२.३,४।

२. (i) 'महावाग्गुदा अभवन्'—इति षड्गुरुशिष्यः। (ii) 'मन्थावला नाम महावाग्गुदा जन्तुविशेषाः। सर्पविशेषा एवेत्येके'—इति भट्टभास्करः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्थानेषु ये सर्पवज्जायन्ते, ते दण्डूपदाः। तस्मिन् बाणे यत् 'तेजनं' लोहपत्रव्यतिरिक्तं काष्ठं[1], सोऽन्धाहिरभवत्, दृष्टिरहितः सर्पोऽभूत्। 'तथा' तेनोक्तप्रकारेण 'इषुः' गन्धर्वेण मुक्तो बाणः 'सो सा' अभवत्। उशब्दः समुच्चयार्थः। सा च सा चेत्युक्तं भवति। तथोक्ते सति तत्तज्जातिर्निर्दंशिसर्पादिरूपेत्युक्तार्थोपसंहारः॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीय-पञ्चिकायाः तृतीयाध्याये (त्रयोदशाध्याये) द्वितीयः खण्डः ॥२॥ (२६) [९७]

[सप्तम गन्धर्व के साथ युद्ध के समय] कृशानु नामक सोम के रक्षक ने उसके पीछे एक बाण छोड़कर उसके बाएँ पैर का नाखून काट डाला और वह नख शल्यक [=बन्दर के शरीर के समान शलल्याख्य पशु = साही] हुआ। इसीलिए वह नख के समान है। नाखून से जो वसा बहकर निकली वह मेध्य पशु [बकरी, भेड़ आदि] हुआ। इसीलिए वह हवि के समान [=देवयोग्य] है; और जो बाण और जो नोक थी वह दंशरहित [जल का दुन्दुभाख्य] सर्प हुआ। इस [कुण्ठित अग्रभाग के लोहे] के वेग से दो मुँह का सर्प हुआ। इसके जो कङ्कपत्र [=पंख] थे वे मन्थावल [वृक्ष की शाखा में अधोमुख लटकने वाले जीव विशेष] हुए, जो स्नायु [पत्रबन्धन] थे, वे केचुए हुए, और जो बाण में तेज धार थी, वह दृष्टिरहित सर्प हुआ। इस प्रकार वह बाण इस तरह का हो गया।

॥ इस प्रकार तेरहवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

अथ तृतीयसवनार्थं सवनस्योत्पत्तिं दर्शयति—

**सा यद्दक्षिणेन पदा समगृभ्णात्, तत्प्रातःसवनमभवत्, तद्गायत्री स्वमायतनमकुरुत, तस्मात् तत्समृद्धतमं मन्यन्ते सर्वेषां सवनानाम्, अग्रियो मुख्यो भवति, श्रेष्ठतामश्नुते, य एवं वेद, अथ यत्सव्येन पदा समगृभ्णात्, तन्माध्यंदिनं सवनमभवत्, तद्विस्रंसत तद्विस्रंसत नान्वाप्नोत् पूर्वं सवनं, ते देवाः प्राजिज्ञासन्त, तस्मिंस्त्रिष्टुभं छन्दसामदधुरिन्द्रं देवतानां, तेन तत्समावद्वीर्यमभवत् पूर्वेण सवनेनोभाभ्यां सवनाभ्यां समावद्वीर्याभ्यां समावज्जामीभ्यां राध्नोति य एवं वेद, अथ यन्मुखेन समगृभ्णात् तत् तृतीयसवनमभवत् ॥**इति।

'सा' गायत्री सोममानयन्ती दक्षिणेन 'पदा' पादेन 'यत्' यावत् सोमस्य स्वरूपं गृहीतवती, 'तत्' तावत् प्रातःसवनमभवत्। तच्च प्रातःसवनं 'सा' गायत्री स्वकीयं स्थानमकरोत्। तस्मात् तत्सर्वेषां सवनानां मध्ये अतिशयेन समृद्धमिति याज्ञिका मन्यन्ते। तत्र प्रयोगबाहुल्यसद्भावात्। य 'एवम्' उक्तार्थं वेद, स स्वकीयानां मध्ये 'मुख्यः' श्रेष्ठः

---

१. (i) 'तेजनम्' इति यष्टिनाम—इति षड्गुरुशिष्यः। (ii) तेजनं ज्यानिधानस्थानम्। मुखनैशित्यमित्येके—इति भट्टभास्करः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सन् विद्यावृत्तादिरूपां श्रेष्ठतां[1] प्राप्नोति। अथ सा गायत्री वामपादेन 'यत्' सोमस्य स्वरूपं गृहीतवती, तन्माध्यंदिनं सवनं विस्रस्तमभूत्। वामपादात् 'तत्' तत्र 'विस्रस्तं' गलितं तन्माध्यंदिनं सवनं पूर्वोक्तप्रातःसवनानुगमनाय शक्तं नाभूत्। ते देवा विचार्य 'तस्मिन्' माध्यंदिने सवने स्वामित्वेन च्छन्दसां मध्ये त्रिष्टुभं देवतानां मध्ये इन्द्रं च स्थापितवन्तः। तेन 'तत्' माध्यंदिनं सवनं प्रातःसवनेन सह 'समावद्वीर्यं' तुल्यसामर्थ्यमभूत्। उक्तार्थवेदिता तुल्यसामर्थ्याभ्याम्, अत एव तुल्यजामीभ्यामुभाभ्यां सवनाभ्यां समृद्धो भवति। जामीशब्दो जातिवाची[2] तुल्यजातिभ्यामित्यर्थः। अथ गायत्री मुखेन यत्सोमस्वरूपं गृहीतवती तत्तृतीयसवनमभूत्॥

iii. २७ [xiii. ३] उसने जो दक्षिण पैर से पकड़ा था वह प्रातःसवन हुआ। गायत्री ने उसे अपना स्वकीयस्थान बना लिया। इसीलिए याज्ञिकजन उसे सभी सवनों में अत्यन्त समृद्ध मानते हैं। जो इस प्रकार जानता है, वह सभी सवनों में अग्रगण्य और मुख्य होता है तथा श्रेष्ठता प्राप्त करता है; और जो बाएँ पैर से सोम का भाग पकड़ा था वह माध्यन्दिन सवन हुआ। वह फिसल गया। वह फिसल गया, इसलिए प्रातःसवन को नहीं प्राप्त कर सका। उन देवों ने विचार किया और उस माध्यन्दिन सवन में छन्दों के मध्य त्रिष्टुभ को और देवताओं के मध्य इन्द्र को रख दिया। उससे वह [माध्यन्दिनसवन] प्रातःसवन के समानसामर्थ्य वाला हो गया। जो इस प्रकार जानता है वह समान सामर्थ्य वाले और समान जामि अर्थात् सम्बन्ध वाले दो सवनों के द्वारा समृद्ध होता है। इसके बाद, सोम का जो अंश गायत्री ने मुख से पकड़ रक्खा था वह तृतीय सवन हुआ।

तस्मिन् सवन ऋजीषस्वरूपे निःसारे सोम आशिरादिकं विधत्ते—

**तस्य पतन्ती रसमधयत्, तद् धीतरसं नान्वाप्नोत् पूर्वे सवने, ते देवाः प्राजिज्ञासन्त, तत्पशुष्वपश्यंस्तद् यदाशिरमवनयन्त्याज्येन पशुना चरन्ति तेन तत्समावद्वीर्यमभवत् पूर्वाभ्यां सवनाभ्याम्॥** इति।

सा गायत्री मुखेन तृतीयसवनरूपं सोमं गृहीत्वा द्युलोकादधः पतन्ती तस्य सोमस्य 'रसमधयत्' सारं पीतवती। तत्तृतीयसवनं 'धीतरसं' पीतसारं भूत्वा पूर्वोक्तप्रातःसवनमाध्यंदिनसवने द्वे अनुगन्तुं नाशक्नोत्। ते देवास्तत्प्रतीकारं विचार्य तत्साधनं 'पशुष्वपश्यन्'। पशुषु क्षीरं यदस्ति, यच्चाऽऽज्यमस्ति, यदपि हृदयाद्यङ्गमस्ति, तत्सर्वं सारं तस्माद् यत्पीतरसे सोमसंबन्धिनि ऋजीषे 'आशिरं' क्षीरम् 'अवनयन्ति' सिञ्चन्ति

१. 'अग्र्यः अग्रगण्यः, मुख्यः प्रधानभूतः, श्रेष्ठः प्रशस्यतमः'—इति भट्टभास्करः।

२. अतिरेकवाल्लिग्यसमान जातीयानां वाचको 'जामि-शब्दः—इत्यादि देवराजयज्वकृता निघण्टुवृत्तिः (४.१.४६)। निरु० ३.१.५,६।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

याज्ञिका:, तथाऽऽज्यपशुभ्यां 'चरन्ति' अनुतिष्ठन्ति, तदानीं 'तेन' अनुष्ठानेन 'तत्' तृतीयसवनं पूर्वसवनाभ्यां तुल्यसामर्थ्यमभूत् । अयमर्थः सर्वोऽपि शाखान्तरे संगृह्याऽऽम्नात:— 'ब्रह्मवादिनो वदन्ति—तस्मात् सत्याद्गायत्री कनिष्ठा छन्दसां सती यज्ञमुखं परीयायेति; यदेवादः सोममाहरत् तस्माद् यज्ञमुखं पर्यैत् तस्मात् तेजस्विनी तमापद्भ्यां द्वे सवने समगृभ्णान्‌ मुखेनैकं यन्मुखेन समगृभ्णात् तदधयत् तस्माद् द्वे सवने शुक्रवती प्रातःसवन च माध्यंदिनं च तस्मात् तृतीयसवन ऋजीषमभिषुण्वन्ति,—धीतमिव हि मन्यन्त आशिरमवनयति सशुक्रत्वाय'[1] इति ॥

उड़ते हुए उसने इसके रस को पी लिया। इसलिए वह हृतरस [तृतीयसवन] पहले दो सवनों का अनुगमन न कर सका। उन देवों ने विचार किया और उसके साधन को [दूध व घृत रूप में] पशुओं में देखा। इसलिए [सारविहीन सोम में] जो आशिर अर्थात् दूध का सिञ्चन करते हैं और जो आज्य तथा पशु से अनुष्ठान करते हैं, उससे वह सवन पहले दो सवनों के तुल्य सामर्थ्य वाला हुआ।

वेदनं प्रशंसति—

**सर्वैः सवनैः समावद्वीर्यैः समावज्जामिभी राघ्नोति य एवं वेद ॥२७॥** इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां तृतीयाध्याये (त्रयोदशाध्याये) तृतीयः खण्डः ॥ ३ ॥ (२७) [९८]

जो इस प्रकार जानता है वह समान सामर्थ्य वाले और समान गुण वाले सभी सवनों से समृद्धि-लाभ करता है।

॥ इस प्रकार तेरहवें अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

ननु पूर्वत्र सर्वाणि च्छन्दांसि चतुरक्षराणीत्युक्तम्, तेष्वपि त्रिष्टुभ एकमक्षरं गतं जगत्याश्च त्रीण्यक्षराणि गतानि। तथा सति सर्वश्रुत्यन्तरविरोधः। तेषु च श्रुत्यन्तरेष्वष्टाक्षरा गायत्री। एकादशाक्षरा त्रिष्टुप्। द्वादशाक्षरा जगतीति सर्वत्र श्रूयते;[2] अनुष्ठानं च तथैव क्रियते; तत्कथं विरोधपरिहारः? इत्याख्यायिकया परिहारं दर्शयितुमारभते—

**ते वा इमे इतरे छन्दसी गायत्रीमभ्यवदेतां,—वित्तं नावक्षराण्यनुपर्यागुरिति, नेत्यब्रवीद् गायत्री यथावित्तमेव न इति, ते देवेषु प्रश्नमैतां; ते देवा अब्रुवन् यथावित्तमेव व इति, तस्माद्धाप्येतर्हि वित्त्यां व्याहुर्यथावित्तमेव न इति, ततो वा अष्टाक्षरा गायत्र्यभवत्, त्र्यक्षरा त्रिष्टुबेकाक्षरा जगती ॥** इति ।

---

१. तै० सं० ६.१.६.३,४।

२. द्र० इतः पूर्वम्, पृ० ४२३(१२.१)। शत०ब्रा० १.७.३.२३-२५। ता०ब्रा० ८.४।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ये त्रिष्टुब्जगत्यौ पुरा स्वकीयान्यक्षराणि परित्यक्तवत्यौ, ते एव 'इमे' 'इतरे' गायत्री-व्यतिरिक्ते छन्दसी गायत्रीमभिलक्ष्य समागत्यैवमुक्तवत्यौ,—हे गायत्रि, यत्त्वया 'वित्तं' लब्धमधिकमक्षरचतुष्टयं, तदेतत् 'नौ' त्रिष्टुब्जगत्योरावयोः। तस्मात् तानि चत्वार्यक्षराणि 'अनुपर्यागुः' आवां त्रिष्टुब्जगत्यावनुलक्ष्य पर्यावृत्य आगच्छन्त्विति। गायत्री तयोर्वचनं नेति निराकृत्य तत्रैतामुपपत्तिमब्रवीत्,—'नः' अस्माकं 'यथावित्तमेव' लब्धमनतिक्रम्यैव स्वामित्वं युक्तम्। यद् वस्तु येन लब्धं तत्तस्यैवेति लौकिकन्यायः, तं न्यायं निर्णेतुं 'ते' त्रिष्टुब्जगत्यौ देवेषु प्रश्नम् 'ऐतां' प्राप्नुताम्। हे देवाः! कथं न्यायः ? इति तयोः प्रश्नः। ते च देवा उत्तरमेवमब्रुवन्,—'वः' युष्माकं तिसृणां यथावित्तमेवाक्षरस्वीकारो युक्त इति। यस्माद्देवैरेवमुक्तं 'तस्माद्ध' तत एव कारणादिदानीमपि 'वित्त्यां' कस्यांचित्पुरुषस्य द्रव्यलब्धौ सत्यां 'व्याहुः' विप्रतिपन्नं प्रति न्यायाभिज्ञा एवमाहुः,—'नः' अस्माकं सर्वेषामपि लब्धमनतिक्रम्यैव वस्तुस्वीकारो युक्त इति। युद्धादौ जये सति परसेनायां प्रविश्य येन यल्लभ्यते, तेनैव तद्गृह्यत इति वक्तृणामभिप्रायः। देवैर्न्याये निर्णीते सति तदूर्ध्वं गायत्री स्वकीयैः स्वभावसिद्धैश्चतुरक्षरैर्युद्धे लब्धैश्चतुरक्षरैरपि स्वयमष्टाक्षराऽभूत्। त्रिष्टुभः पूर्वं वर्तमानेषु चतुर्ष्वेकाक्षरस्य गतत्वात्, त्र्यक्षरैव सा, तथा जगत्याश्चतुरक्षरे-ष्वक्षरत्रयस्य गतत्वादेकाक्षरैव साऽभवत्॥

iii २८ [xiii. ४] उन अन्य [त्रिष्टुप् व जगती] दो छन्दों ने गायत्री से कहा—'जो तुमने [अक्षरों को] प्राप्त किया है वे हमारे हैं।' वे अक्षर हमारे प्रति लौट आवें। गायत्री ने कहा—'नहीं।' वे हमारे हैं क्योंकि वे मुझे प्राप्त हुए हैं। उन दोनों छन्दों ने देवों से [निर्णयार्थ] प्रश्न किया। उन देवों ने कहा—प्राप्ति के अनुसार ही तुम्हारा [स्वामित्व] है अर्थात् जिनको जो मिला है वह उसका है। क्योंकि, देवों ने ऐसा कहा इसीलिए इस समय भी [लोक में धन की] प्राप्ति होने पर [न्यायविद यही] कहते हैं कि—'उपलब्धि के अनुसार ही हमारा है अर्थात् प्राप्ति के अनुसार वस्तु को स्वीकार करना उचित है।' उसके बाद से ही गायत्री आठ अक्षर की हुई, त्रिष्टुप् तीन अक्षरका और जगती एक अक्षर की।

इदानीं त्रिष्टुभोऽक्षरत्रयादधिकानामक्षराणां प्राप्तिप्रकारं दर्शयति—

**साऽष्टाक्षरा गायत्री प्रातःसवनमुदयच्छत्, नाशक्नोत् त्रिष्टुप्त्र्यक्षरा माध्यंदिनं सवनमुद्यन्तुं, तां गायत्र्यब्रवीदायान्यपि मेऽत्रास्त्विति, सा तथेत्यब्रवीत् त्रिष्टुप् तां वै मैतैरष्टाभिरक्षरैरुपसंधेहीति, तथेति, तामुपसमदधाद्, एतद्वै तद्गायत्र्यै मध्यंदिने यन्मरुत्वतीयस्योत्तरे प्रतिपदो यश्चानुचरः, सैका-दशाक्षरा भूत्वा माध्यंदिनं सवनमुदयच्छत्॥ इति।**

येयमष्टाक्षरा गायत्री सेयं प्रातःसवनम् उदयच्छत् उद्यमनं निर्वाहं तस्य प्रातःसवन-स्याकरोत्। या तु त्रिष्टुप्त्र्यक्षराऽक्षरत्रयमात्रेण युक्ता सती माध्यंदिनसवनम् 'उद्यन्तुं' निर्वोढुं नाशक्नोत्। तामशक्तां त्रिष्टुभं दृष्ट्वा गायत्र्येवमब्रवीत्। 'आयानि' त्वत्सहायार्थं-महमागच्छानि 'मे' ममाप्यत्रास्मिन् माध्यंदिने सवने भागोऽस्त्विति। तद्वचनमङ्गीकृत्य सा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्रिष्टुबेवमब्रवीद् गायत्रीं तां वै मा तादृशीं त्र्यक्षरामेव मां स्वकीयैरेतैरष्टाभिरक्षरैरुपसंधेहि सामीप्येन संधानं कुरु प्रविशेत्यर्थः। तद्वचनमङ्गीकृत्य सा गायत्री तां त्रिष्टुभम् 'उपदधात्' स्वकीयैरष्टाभिरक्षरैः प्राविशत्। कोऽसौ गायत्र्या लब्धो भाग इति, स उच्यते—'मरुत्वतीयस्य' शस्त्रस्योत्तरे[1] प्रतिपदौ 'आ त्वा रथम्' इत्यस्मिन् प्रारम्भरूपे तृचे प्रथमाया उत्तरे ये द्वे ऋचौ प्रतिपदौ प्रारम्भरूपे विद्येते[2], यश्च 'इदं वसो सुतम्' इत्यनुचररूपः तृचः[3] तदेवैतदृक्पञ्चकं माध्यंदिनसवने गायत्र्यै त्रिष्टुभा दत्तं ताश्च पञ्चर्चो गायत्रीछन्दस्काः।[4] ततो गायत्रीप्रवेशात् 'सा' त्रिष्टुबेकादशाक्षरा भूत्वा माध्यंदिनसवनप्रयोगम् 'उदयच्छत्' निरवहत्॥

उस आठ अक्षरों की गायत्री ने प्रातःसवन को संभाला। तीन अक्षरों का त्रिष्टुप् छन्द माध्यन्दिन सवन को न संभाल सका। उससे गायत्री ने कहा—'इस [माध्यन्दिन सवन] में भी मेरा भाग होवे तो मैं आ जाऊँ।' उस त्रिष्टुप् ने कहा—'ठीक है।' 'तुम इन आठ अक्षरों के साथ मेरे पास आओ।' उसने कहा—'ठीक है'; और वह उससे युक्त हो गई। इसीलिए माध्यन्दिनसवन में जो मरुत्वतीयशस्त्र के तृच की प्रारम्भ रूप अन्तिम दो ऋचाएँ हैं और जो अनुचर [रूप तृच] हैं वे गायत्री छन्दस्क हैं। इस प्रकार वह [त्रिष्टुप्] ग्यारह अक्षर का होकर माध्यन्दिन सवन को संभालने में समर्थ हुआ।

अथ जगत्याः स्वकीयादेकस्मादक्षरादधिकानामक्षराणां प्राप्तिप्रकारं दर्शयति—

**नाशक्नोज्जगत्येकाक्षरा तृतीयसवनमुद्यन्तुं, तां गायत्र्यब्रवीदायान्यपि मेऽत्रास्त्विति, सा तथेत्यब्रवीज्जगती, तां वै मैतैरेकादशभिरक्षरैरुपसंधेहीति, तथेति, तामुपसमदधात्, एतद्वै तद्गायत्र्यै तृतीयसवने यद्वैश्वदेवस्योत्तरे प्रतिपदो यश्चानुचरः, सा द्वादशाक्षरा भूत्वा तृतीयसवनमुदयच्छत्॥** इति।

वैश्वदेवशस्त्रस्य प्रतिपदनुचरावुपरिष्टादुदाहरिष्येते[5]॥

एक अक्षर का जगती छन्द तृतीयसवन को न संभाल सका। उससे गायत्री ने कहा -'इस [तृतीय सवन] में भी मेरा भाग होवे तो मैं आ जाऊँ।' उस जगती ने कहा—'ठीक है।' 'तुम इन ग्यारह अक्षरों के साथ मेरे पास आओ।' उसने कहा—'ठीक है' और वह उससे मिल गई। इसीलिए तृतीय सवन में जो वैश्वदेवशस्त्र के तृच की प्रारम्भ रूप अन्तिम दो ऋचाएँ हैं और जो अनुचर [रूप तृच] हैं वे गायत्री छन्दस्क हैं। इस प्रकार वह [जगती] बारह अक्षर की होकर तृतीय सवन को संभालने में समर्थ हुई।

---

१. द्र० इतः पूर्वम् पृ० ४३१, ४५३ मरुत्वतीयशस्त्रविधिः द्वादशाध्याये ४–९ खण्डे आम्नातः। २. द्र० इतः पूर्वं पृ० ४३३ 'येन'-इत्यादि १४ पङ्क्ति, पृ० ४६७ टि० ४ 'प्रथमस्य'–इत्यादि द्रष्टव्यम्।

३. द्र० इतः पूर्वम् पृ० ४३३ पङ्क्ति १४ 'तदनन्तरभावी'—इत्यादि द्रष्टव्यम्।

४. ऋ० ८. ६८. २, ३ इति द्वे; ८. २. १–३ इति तिस्रश्च = इति पञ्च।

५. द्र० इतः परम्; पञ्चमादिचतुःखण्डेषु वैश्वदेवशस्त्रविधिराम्नास्यते।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उक्तमर्थं निगमयति—

**ततो वा अष्टाक्षरा गायत्र्यभवदेकादशाक्षरा त्रिष्टुब्द्वादशाक्षरा जगती ॥** इति ।

उसके बाद से ही गायत्री आठ अक्षर की हुई, त्रिष्टुप् ग्यारह अक्षर का और जगती बारह अक्षर की ।

वेदनं प्रशंसति—

**सर्वैश्छन्दोभिः समावद्वीर्यैः समावज्जामिभी राध्नोति य एवं वेद ॥** इति ।

जो इस प्रकार जानता है वह समान सामर्थ्य वाले और समान जाति वाले सभी छन्दों से समृद्धि प्राप्त करता है ।

गायत्रीं विशेषणविशेषेण प्रशंसति—

**एकं वै सत् तत् त्रेधाऽभवत्, तस्मादाहुर्दातव्यमेवं विदुष इत्येकं हि सत् तत् त्रेधाऽभवत् ॥ २८ ॥** इति ।

तद् गायत्र्याः स्वरूपं पूर्वं चतुरक्षररूपेणैकमेव, तत्पश्चादधिकाक्षरचतुष्टयत्वसंपादनेन स्वकीयानामष्टाक्षराणां त्रिष्टुब्जगत्योः प्रवेशेन च त्रेधाऽभवत् । यस्मात् ईदृशो गायत्र्या महिमा, तस्मात् 'एवंविदुषे' गायत्रीमहिमानं ज्ञातवते पुरुषाय लोके सुवर्णादिकं दातव्यम्, 'इति' एवं धर्मरहस्यविदः प्राहुः । यस्माद् गायत्रीस्वरूपमेकमेव सत्त्रेधाऽभूत् तस्मात् तद् विदे दानमुचितमेवेत्युपसंहारार्थं पुनर्वचनम् ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां तृतीयाध्याये (त्रयोदशाध्याये) चतुर्थः खण्डः ॥ ४ ॥ (२८) [९९]

जो वह एक होकर भी तीन हो गई इसीलिए [धर्म के रहस्य को जानने वाले] कहते हैं कि इस प्रकार [गायत्री की महिमा को जानने वाले] विद्वान् को लोक में सुवर्ण आदि देना ही चाहिए क्योंकि वह एक होकर भी तीन हो गई ।

॥ इस प्रकार तेरहवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

एवं तावत् तृतीयसवनमवतारयितुं सोमाहरणकथा वर्णिता । अथ तृतीयसवनमुच्यते,—तत्र वैश्वदेवाग्निमारुतयोः क्लृप्तिः संगृह्यते—

"स्याद्वैश्वदेवे सवितुः पुनस्तु
द्यावापृथिव्यार्भववैश्वदेविका ।
वैश्वानरीयं मरुतां च शंसनं
स्युर्जातवेदस्यमिहाऽऽग्निमारुते" ॥



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तृतीयसवनस्याऽऽदावादित्यग्रहं विधत्ते—

**ते देवा अब्रुवन्नादित्यान्,—युष्माभिरिदं सवनमुद्यच्छामेति, तथेति, तस्माद् आदित्यारम्भणं तृतीयसवनमादित्यग्रहः पुरस्तात् तस्य ॥** इति ।

तृतीयसवनं निर्वहन्त्या जगत्या अक्षरसंपूर्तिमवगतवन्तः ।[1] 'ते देवा' 'आदित्यान्' द्वादशसंख्याकान् प्रत्येवमब्रुवन्—हे आदित्या, युष्माभिः सहिता वयमिदं तृतीयसवनम् 'उद्यच्छाम' निर्वाहं करवामहा इति । आदित्याश्च तथेत्यङ्गीकृतवन्तः । यस्मादारम्भे देवैरादित्यसाहित्यं प्रार्थितं, 'तस्माद् आदित्यारम्भणं तृतीयसवनम्' आदित्यग्रह 'आरम्भणे' सर्वेषां ग्रहाणामादौ यस्य सवनस्य, तदिदमादित्यारम्भणं, स एवार्थं आदित्यग्रह इत्यादिना स्पष्टीक्रियते । 'तस्य' तृतीयसवनस्य 'पुरस्तात्' आदावादित्यदेवताको ग्रहः कर्तव्यः ॥

iii. २९ [xiii. ५] उन देवों ने [द्वादश] आदित्यों से कहा—'आपके साथ हम लोग इस [तृतीय सवन] को संभालें ।' आदित्यों ने कहा—'ठीक है ।' इसीलिए तृतीय सवन आदित्यों से आरम्भ होता है और उस [तृतीय सवन] के प्रारम्भ में ही आदित्य-ग्रह होता है ।

तस्य ग्रहस्य याज्यां विधत्ते—

**यजत्यादित्यासो अदितिर्मादयन्तामिति मद्वत्या, रूपसमृद्धया, मद्वद्वै तृतीयसवनस्य रूपम् ॥** इति ।

'आदित्यासः' अदितेः पुत्रा आदित्याः, ते च तन्माताऽदितिश्च 'मादयन्तां' ग्रहेणानेन तुष्यन्तु । 'इति' एषा[2] याज्या मद्वती । 'मदी हर्षे'—इत्यस्माद्धातोरुत्पन्नेन मच्छब्देन युक्त ।[3] तस्यामादित्यानामदितेश्च हर्षवर्णनाद् विक्षितदेवताविषयत्वेन रूपसमृद्धा । तृतीयसवनस्य स्वरूपमपि 'मद्वद्वै' हर्षोपेतमेव, तत्समाप्तौ देवतानां यजमानानामृत्विजां हर्षोत्पत्तेः ॥[4]

'अदिति के पुत्र आदित्य और उनकी माता अदिति इस ग्रह से संतुष्ट होवें'—इस हर्ष वाचक 'मद्' शब्द से युक्त याज्या से यजन करता है । इसीलिए यह रूपसमृद्ध है । तृतीय सवन का स्वरूप भी हर्ष से युक्त ही है ।

---

१. 'अक्षररूपां मूर्तिमवगतवन्तः'—इति ऐशियाटिक सो० मुद्रितपाठः ।

२. ऋ० ७.५१.२ । ३. आश्व० श्रौ० ५.१७.३ ।

४. 'ऋत्विग्यजमाना देवताश्चास्मिन् माद्यन्ति इति कृत्वा मद्वत् तृतीय सवनस्य रूपम्'—इति भट्टभास्करः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इतरग्रहवत्प्रसक्तावनुवषट्कारभक्षौ प्रतिषेधति—

**नानुवषट्करोति[1], न भक्षयति, संस्था वा एषा यदनुवषट्कारः, संस्थाभक्षः, प्राणा आदित्या, नेत् प्राणान् संस्थापयानीति ॥** इति ।

अनुवषट्कारभक्षयोर्ग्रहसमाप्तिरूपत्वादादित्यानां च प्राणरूपत्वादादित्यग्रहं समापयन्नहं प्राणानेव समापितवान् भविष्यामीति भीत्या तत्समाप्तिरूपावनुवषट्कारभक्षौ न कुर्यात् । 'नेत्' इति परिभवद्योतनार्थो निपातः ॥

**वह न अनुवषट्कार करता है और न सोम का भक्षण करता है; क्योंकि यह जो अनुवषट्कार है, वह समाप्ति का सूचक है और सोमपान भी उपसंहार है । प्राण आदित्य हैं । अतः ऐसा करके हम प्राणों का उपसंहार न करें ।**

अथ सावित्रग्रहं वैश्वदेवशस्त्रस्य प्रतिपदं च विधत्ते—

**त आदित्या अब्रुवन् सवितारं त्वयेदं सह सवनमुद्यच्छामेति, तथेति, तस्मात् सावित्री प्रतिपद्भवति वैश्वदेवस्य, सावित्रग्रहः पुरस्तात् तस्य, यजति 'दमूना देवः सविता वरेण्य' इति मद्वत्या रूपसमृद्धया, मद्वद्वै तृतीयसवनस्य रूपं, नानुवषट्करोति, न भक्षयति, संस्था वा एषा यदनुवषट्कारः, संस्था भक्षः, प्राणः सविता, नेत् प्राणं संस्थापयानीति ॥** इति ।

वैश्वदेवशस्त्रस्य 'तत्सवितुर्वृणीमहे'[2] इत्येषा सवितृदेवताका 'प्रतिपत्' प्रारम्भरूपा कर्तव्या[3] । 'दमूना देवः' इत्यादिका ग्रहस्य याज्या । सा च संहितायामनाम्नातत्वात् सूत्रकारेण पठिता[4] । तस्यां च, 'अमदन्नेन मिष्टयः' इति मदिधातुः प्रयुक्तः; तस्मादियं मद्वती । अन्यत् सर्वमादित्यग्रहवद् व्याख्येयम् ॥

**उन आदित्यों ने सविता से कहा—आपके साथ हम इस [तृतीय] सवन को संभालें । उन्होंने कहा—'ठीक है ।' इसीलिए तृतीय सवन के वैश्वदेवशस्त्र के प्रारम्भ की तृच सविता-देवताक है, और उस [वैश्वदेवशस्त्र] के प्रारम्भ में ही सावित्र-ग्रह होता है । 'गृह के देव सविता वरेण्य हैं'—इस हर्षवाचक 'मद्' शब्द से युक्त याज्या से यजन करता है । इसीलिए यह रूपसमृद्ध है, और तृतीय सवन का स्वरूप भी हर्षयुक्त है ।[5] वह न अनुवषट्कार करता है, और न सोम का भक्षण करता है; क्योंकि यह जो अनुवषट्कार है वह समाप्ति का सूचक है, और सोम-पान भी समाप्ति का सूचक है । प्राण सविता है । अतः ऐसा करके हम प्राण को न समाप्त करें ।**

---

१. 'सर्वत्रानुवषट्कारो द्विदेवत्यर्तुग्रहादित्यसावित्रपात्नीवतवर्जम्'— इति—आप० श्रौ० १२.२४.२ ।

२. ऋ० ५.८२.१ ।　　३. आश्व० श्रौ० ५.१८.५ ।

४. आश्व० श्रौ० ५.१८. २ ।　　५. तु० ऐ० ब्रा० १६.४; ऐ० ब्रा० २८.३ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ निवित्पदद्वारा सावित्रग्रहं प्रशंसति—

**उभे वा एष एते सवने विपिबति यत्सविता,–प्रातःसवनं च तृतीयसवनं च, तद् यत् पिबवत् सावित्र्यै निविदः पदं पुरस्तात् भवति, मद्वदुपरिष्टात् उभयोरेवैनं तत्सवनयोराभजति, प्रातःसवने च तृतीयसवने च ॥** इति ।

ग्रहस्य देवता यः सविताऽस्ति, एष देवः प्रातःसवनं च तृतीयसवनं चेत्येते उभे अपि सवने 'विपिबति' विलक्षणत्वेन पिबति । तत्कथमिति ? तदेवोच्यते—वैश्वदेवशस्त्रे 'सावित्र्यै' सवितृदेवताकाया निविदः पदं 'पिबवत्' पिबतिधातुयुक्तं 'पुरस्तात्' आदौ भवति 'मद्वत्पदं'[1] मदधातुयुक्तम् 'उपरिष्टात्' अन्ते भवति । तेन 'प्रातःसवने च तृतीयसवने च' उभयोरपि सवनयो 'एनं' सवितारमाभजति भागिनं करोति । 'सविता देवः सोमस्य पिबतु' इत्येतां[2] निविद आदौ प्रयुज्यमानं पदं 'पिबवत्पदम्' । तथाऽन्ते प्रयुज्यमानं 'सविता देव इह श्रवदिह सोमस्य मत्सत्'–इति[3] 'मद्वत्पदम्' अप्युदाहरणीयम् । तयोरुभयोः पदयोः सवनद्वयरूपयोर्विलक्षणत्वात् सवितुः पानमिति विलक्षणमिति च द्रष्टव्यम् । एवंविधसवितृदेवताकत्वात् प्रशस्तोऽयं ग्रह इत्यभिप्रायः । अथवा निवित्पदविधानार्थमिदं वाक्यं द्रष्टव्यम् ।

[ग्रह का देवता] जो सविता है वह इन दोनों ही सवनों को विशेष रूप से पीता है, प्रातःसवन और सायंसवन को । उस [वैश्वदेवशस्त्र] में जो 'पिब्' धातु से युक्त सवितृदेवताक निविद् का पद आदि में है और अन्त में 'मद्' धातु से युक्त जो पद है; वह दोनों ही प्रातःसवन और सायंसवन में इस [सविता] को भाग प्रदान करता है ।

अथ तस्मिन् वैश्वदेवशस्त्रे 'एकया च दशभिश्च स्वभूते' इत्येतां[4] वायुदेवताकामृचं विधत्ते—

**बह्वचः प्रातर्वायव्याः शस्यन्त, एका तृतीयसवने, तस्मादूर्ध्वाः पुरुषस्य भूयांसः प्राणा यच्चावाञ्चः ॥** इति ।

'वायुरग्रेगाः' इत्याद्याः[5] वायव्या ऋचो 'बह्वचः' प्रातःसवने शस्यन्ते । तृतीयसवने तु एकैव पूर्वोदाहृता । तस्मात् प्रातःसवने वायुदेवताकायां भूयस्त्वात् पुरुषस्यापि प्रातःसवनीयस्थानीये मुखे वर्तमानत्वाद् 'ऊर्ध्वाः' चक्षुर्घ्राणादयः 'प्राणाः' भूयांसः । 'यच्च' ये केचिद् 'अवाञ्चः' नाभेरर्वाचीने तृतीयस्थानीये देशे वर्तमाना पायुगुह्यादयोऽवाञ्चः प्राणाः, अल्पीयांस इति शेषः ॥

---

१. आश्व० श्रौ० ५.१८.२ । २. निवि० ४.१ । ३. निवि० ४.१५ ।
४. सा च संहितायामनाम्नातेति सूत्रकारेण पठिता । द्र० आश्व० श्रौ० ५.१८.५ ।
५. आश्व० श्रौ० ५.५.३ । (वाज० सं० २७.३१) ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रातःसवन में बहुत से वायुदेवताक मन्त्र बोले जाते हैं, किन्तु सायंसवन में केवल एक। इसीलिए पुरुष [शरीर] के ऊपरी भाग में प्राण [नाभि के] नीचे के भाग की अपेक्षा बहुत हैं।

तस्मिन्नेव वैश्वदेवशस्त्रे द्यावापृथिवीदेवताकं सूक्तं विधत्ते—

**द्यावापृथिवीयं शंसति, द्यावापृथिवी वै प्रतिष्ठे, इयमेवेह प्रतिष्ठाऽसावमुत्र, तद्यद् द्यावापृथिवीयं शंसति, प्रतिष्ठयोरेवैनं तत्प्रतिष्ठापयति ॥ २९ ॥**

'इह' मनुष्यजन्मनि 'इयमेव' भूमिः 'प्रतिष्ठा' आश्रयः। 'अमुत्र' जन्मान्तरे 'असावेव' द्युलोकः 'प्रतिष्ठा' आश्रयः। एवं द्यावापृथिव्यावेव प्रतिष्ठे यस्मात्, तस्मात् तदीयसूक्त-शंसनेन 'एनं' यजमानं प्रतिष्ठारूपयोर्द्यावापृथिव्योरेवावस्थापयति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीय-पञ्चिकायां तृतीयाध्याये (त्रयोदशाध्याये) पञ्चमः खण्डः ॥ ५ ॥ (२९) [१००]

द्यावापृथिवी-देवताक सूक्त का शंसन करता है। द्यु और पृथिवी प्रतिष्ठा हैं। इस [मनुष्य जन्म] में यह [पृथिवी] ही प्रतिष्ठा [=आश्रय] है। [जन्मान्तर में] यह [द्युलोक] आश्रय है। इसीलिए जो द्यावापृथिवी-देवताक सूक्त का शंसन करता है उससे होता इस [यजमान] को [द्यावापृथिवी रूप] दोनों प्रतिष्ठा में ही स्थापित करता है।

॥ इस प्रकार तेरहवें अध्याय के पाँचवे खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

'प्र द्यावा यज्ञैः पृथिवीं ऋतावृधा'—इत्येतद् द्यावापृथिवीयं सूक्तं[1] विधाय, 'तक्षन् रथं सुवृतम्' इत्येतत्[2] आर्भवं सूक्तं विधत्ते—

**आर्भवं शंसति ॥ इति ।**

ऋभुनामका देवा यस्मिन् सूक्ते सन्ति, तदिदम् 'आर्भवं'; तस्य सूक्तस्य प्रथमायामृचि तृतीयपादे 'तक्षन् पितृभ्यामृभवो युवद्वय' इति तद्देवताकत्वं प्रतीयते ॥

iii. ३०. [xiii. ६] वह ऋभु-देवताक सूक्त का शंसन करता है।

अथ धाय्ये विधातुमाख्यायिकामाह—

**ऋभवो वै देवेषु तपसा सोमपीथमभ्यजयंस्तेभ्यः प्रातःसवने वाचि कल्पयिषंस्तानग्निर्वसुभिः प्रातःसवनादनुदत, तेभ्यो माध्यंदिने सवने वाचि कल्पयिषंस्तानिन्द्रो रुद्रैर्माध्यंदिनात् सवनादनुदत, तेभ्यस्तृतीयसवने वाचि कल्पयिषंस्तान् विश्वे देवा अनोनुद्यन्त, नेह पास्यन्ति नेहेति स प्रजापतिरब्रवीत् सवितारं,—तव वा इमेऽन्तेवासास्त्वमेवैभिः संपिबस्वेति, स तथेत्य-**

---

१. ऋ० १.१५९.१। २. ऋ० १.१११.१।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**ब्रवीत् सविता;—तान् वै त्वमुभयतः परिपिबेति, तान् प्रजापतिरुभयतः पर्यपिबत् ॥ इति ।**

देवेषु सर्वेषु मध्य ऋभुनामकाः केचन देवत्वं प्राप्ता मनुष्यविशेषाः[1] प्रजापतिमुद्दिश्य तपः कृत्वा तेन तपसा 'सोमपीथमभ्यजयन्' सोमपानमभिलक्ष्य जितवन्तः, प्रजापतेः सकाशात् तल्लब्धवन्त इत्यर्थः । स प्रजापतिरन्या देवताश्च 'तेभ्यः' ऋभुभ्यः प्रातःसवने वाचि 'कल्पयिषन्' सोमपानं कल्पयितुमैच्छन् तदानीं प्रातःसवनाभिमानी 'अग्निः' देवः स्वभृत्यैः 'वसुभिः' सह तस्मात् प्रातःसवनात् तानृभून् 'अनुदत' निराकरोत् । तथेन्द्रो रुद्रैः सह माध्यंदिनात् सवनान्निराकरोत् । विश्वे देवास्तृतीयसवनाद् 'अनोनुद्यन्त' भृशं निराकुर्वन् । निराकरणप्रकारः स च 'नेहेति'-वाक्येन पुनः पुनरनूद्यते । 'इह' तृतीयसवन ऋभवो न पास्यन्ति । विश्वेषां देवानां प्रत्येकं निराकरणवाक्येन संबन्धान्नेहेति नियुक्तम् । ततः स प्रजापतिर्निराकृतान् ऋभून् दृष्ट्वा सवितारमब्रवीत्,—हे सवितः, तव 'इमे' ऋभवः 'अन्तेवासाः' समीपवासिनः शिष्याः, अतस्त्वमेवैभिः सह सम्यक् पिबस्व । तथेत्यङ्गीकृत्य सविता प्रजापतिमिदमब्रवीत्,—हे प्रजापते, त्वं 'तान् वै' तानेव ऋभून् 'उभयतः' 'पिब' तेषामृभूणामुभयोः पार्श्वयोः स्थित्वा त्वमपि सोमपानं कुरु । एवमुक्तः प्रजापतिस्तथैवाकरोत् ॥

देवों में ऋभुओं ने तप के द्वारा सोमपान को जीत लिया [अर्थात् सोमपान का अधिकार पा लिया] । उनके लिए देवों ने प्रातःसवन [के सोमपान] में स्थान देना चाहा । अग्नि ने वसुओं के साहाय्य से उनको प्रातःसवन से निराकृत कर दिया । उनके लिए माध्यन्दिन सवन में व्यवस्था चाही । उनको इन्द्र ने रुद्रों के साहाय्य से माध्यन्दिन सवन से निराकृत कर दिया । उनके लिए सायंसवन में व्यवस्था देनी चाही । विश्वेदेवों ने उन्हें अत्यन्त तीव्रता के साथ यह कहते हुए निराकृत किया कि 'यहाँ यह सोमपान नहीं करेंगे, यहाँ नहीं ।' तब उन प्रजापति ने सविता से कहा—'यह तुम्हारे शिष्य हैं, अतः तुम इन्हीं के साथ सम्यक् रूप से पीओ ।' सविता ने कहा—'ठीक है ।' 'तुम भी उनके दोनों ओर खड़े होकर पीओ ।' प्रजापति ने उनके दोनों ओर होकर पान किया ।

अथ धाय्ये विधत्ते—

**ते एते धाय्ये अनिरुक्ते प्राजापत्ये शस्येते अभित आर्भवं,—'सुरूपकृत्नुमूतयेऽयं वेनश्चोदयत् पृश्निगर्भा' इति-प्रजापतिरेवैनांस्तदुभयतः परिपिबति, तस्मादु श्रेष्ठी पात्रे रोचयत्येव यं कामयते तम् ॥ इति ।**

---

१. 'ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः । तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति, न मध्यमेन । तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति । आदित्यरश्मयोऽप्यृभव उच्यन्ते'—इति निरु० ११.२.४ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'सुरूपकृत्नुम्' इत्येका धाय्या[1] 'अयं वेनः'[2] इति द्वितीया; ते एते धाय्ये आर्भवसूक्ते 'अभितः शस्येते'। 'सुरूपकृत्नुम्' इत्येषा सूक्तात् पूर्वं शंसनीया। 'अयं वेनः' इत्येषा सूक्तात् पश्चाच्छंसनीया। कीदृश्यौ धाय्ये ? 'अनिरुक्ते' निःशेषेणोक्तो देवो निरुक्तः, तादृशो ययोर्धाय्ययोर्नास्ति, ते अनिरुक्ते[3]। न खल्वनयोर्ऋचोरीदृशो देव इति सहसा निर्णेतुं शक्यते। प्रजापतेरपि जगत्सृष्टेः पूर्वं मूर्तस्य निर्वक्तुमशक्यत्वात् सोऽप्यनिरुक्तः, अतो योग्यत्वात् ते उभे प्रजापतिदेवताके। एतयोर्धाय्ययोः शंसने प्रजापतिरेवैनानृभूनुभयतः परिपिबति। यस्मात् प्रजापतिरग्निर्वस्वादिदेवतानामृभुषु रुच्यभावे सति पितृद्वारा बलात् रुचिमुत्पादितवांस्तस्मादु तस्मादेव कारणाल्लोकेऽपि श्रेष्ठी[4] कश्चिद्धनपतिर्यं स्वकीयं भृत्यमितरैरङ्गीकृतमपि सर्वेभ्यो रोचयितुं कामयते तं भृत्यमाचारहीनं पात्रे प्रतिग्रहयोग्यस्थाने बलात् सर्वेभ्यो रोचयत्येव ॥

इसीलिए ऋभु सूक्त के पहले और बाद में 'सुरूपकृत्नुम्' और 'अयं वेनः' आदि इन दो अनिरुक्त [=जिनमें देवों का उल्लेख नहीं है] और प्रजापति देवताक धाय्या का शंसन किया जाता है। इससे प्रजापति इसके दोनों ओर होकर पान करते हैं। इसीलिए [लोक में भी] धनपति जिसको चाहता है उसके प्रति प्रतिग्रहयोग्यस्थान में बलात् सभी की रुचि उत्पन्न ही कराता है।

अथापरमृग्द्वयं विधत्ते—

**तेभ्यो वै देवा अपैवाबीभत्सन्त मनुष्यगन्धात्, त एते धाय्ये अन्तरदधत, 'येभ्यो मातैवा पित्रे' इति ॥ ३० ॥** इति।

अग्निवस्वादयो 'देवाः' 'तेभ्यः' ऋभुभ्यः 'अपैव' स्वयमपगता एव सन्तः 'अबीभत्सन्त' एवं मनसि बीभत्सां कृतवन्तः। कस्मात्कारणादिति ? तदुच्यते—'मनुष्यगन्धात्' इति। एते मनुष्या अस्मत्पङ्क्तियोग्या न भवन्तीति शङ्कयेत्यर्थः। बीभत्सां प्राप्य 'ते एते' वक्ष्यमाणे द्वे धाय्ये 'अन्तरदधत' ऋभूणामग्न्यादीनां च मध्येऽन्तर्धानं व्यवधानमकुर्वत। के ते धाय्ये ? इत्युच्येते—'येभ्यो माता मधुमत्'[5] इत्येका। 'एवा पित्रे विश्वदेवाय'[6] इत्यपरा 'अयं वेनः' इत्येतस्मात् पूर्वमेतदुभयं शंसेदित्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां तृतीयाध्याये (त्रयोदशाध्याये) षष्ठः खण्डः ॥ ६ ॥ (३०) [१०१]

---

१. ऋ० १.४.१। २. ऋ० १०.१२३.१। ३. तु० ऐ० ब्रा० २९.४।

४. 'तस्मात् तथाहि श्रेष्ठी तु प्रशस्यगुणसंयुतः।
स्वसमीपस्थापनेन प्रकाशयति सत्सु तम् ॥
यं श्रद्दधाति पुनरु पात्रे पानादिकर्मणि।
विदुषा पूजितं तं तु लोकोऽथ बहुमन्यते ॥'— इति षड्गुरुशिष्यः।

५. ऋ० १०.६३.३। ६. ऋ० ४.५०.६; द्र० आश्व० श्रौ० ५.१८.५।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उनसे [अग्नि आदि] देवों ने उनमें मनुष्य की गन्ध होने के कारण घृणा की। उन्होंने इन दो धाय्या—'येभ्यो माता' और 'एवा पित्रे' इत्यादि से [अपने और ऋभुओं के मध्य] व्यवधान कर दिया।

॥ इस प्रकार तेरहवें अध्याय के षष्ठ खण्ड की हिन्दी पूर्ण हुई ॥ ६ ॥

## अथ सप्तमः खण्डः

अथ विश्वदेवदेवताकम् 'आ नो भद्राः' इत्येतत् सूक्तं[1] विधत्ते—

**वैश्वदेवं शंसति ॥** इति।

iii. ३१ [xiii. ७] वह विश्वदेव देवताक सूक्त का शंसन करता है।

लौकिकदृष्टान्तेन प्रशंसन्नाहावं[2] विधत्ते—

**यथा वै प्रजा एवं वैश्वदेवं, तद् यथाऽन्तरं जनता एवं सूक्तानि, यथाऽरण्यान्येवं धाय्याः, तदुभयतो धाय्यां पर्याह्वयते, तस्मात् तान्यरण्यानि सन्त्यनरण्यानि मृगैश्च वयोभिश्चेति ह स्माऽऽह ॥** इति।

लोके यथा प्रजा, एवमत्र 'वैश्वदेवं' शस्त्रं; प्रजाशब्देन तन्निवासस्थानं राज्यमुपलक्ष्यते, राज्यसदृशं शस्त्रमित्यर्थः। 'तत्' तत्र प्रजाशब्देन राज्ये विवक्षिते, राज्ये 'अन्तरम्' अभ्यन्तरे 'जनताः' जनसमूहा यथा तिष्ठन्ति, एवं तस्मिन् शस्त्रे सूक्तानि तिष्ठन्ति। यथा अरण्यानि राज्ये क्वचित्क्वचिद् भवन्ति, एवमस्मिन् शस्त्रे धाय्याः क्वचित् प्रक्षिप्यन्ते। तथा सत्यरण्यस्थानीयां धाय्यामुभयतः पर्याह्वयते। 'शोंसावोम्' इत्येष मन्त्रः 'पर्याहावः'। अस्य धाय्यायाः पार्श्वयोर्यस्मात् पाठः, तस्माल्लोकेऽपि बहुवृक्षसंकीर्णानि स्थानानि स्वभावतोऽरण्यानि मनुष्यशून्यानि सन्त्यपि मृगैश्च पक्षिभिश्च संकीर्णत्वाद् 'अनरण्यानि' अशून्यानि एवेति कश्चिदभिज्ञ आह स्म।

लोक में जैसे प्रजा है उसी तरह वैश्वदेवशस्त्र है अर्थात् प्रजा के निवासभूत राज्य के समान है। राज्य के अन्दर जैसे जनता होती हैं उसी प्रकार शस्त्र के अन्तर्गत सूक्त होते हैं। जैसे [राज्य में कहीं कहीं] अरण्य होते हैं, उसी तरह [शस्त्र में कहीं कहीं] धाय्या [प्रक्षिप्त] होती हैं। उस [अरण्यस्थानीय] धाय्या के दोनों ओर पर्याह्वान [शोंसावोम्] किया जाता है। इसीलिए [लोक में भी] वे [वन] निर्जन होकर भी पशु और पक्षियों से संकुलित होने से अनरण्य अर्थात् शून्य न होने के समान हैं—ऐसा कुछ अभिज्ञजन कहते हैं।

---

१. ऋ० १.८९.१।

२. द्र० आश्व० श्रौ० ५.९.३। 'आहाव आह्वानात्'—इति निरु० ५.४.८।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एवमेकेन दृष्टान्तेन पर्याह्वावं प्रशस्य पुनरप्यन्येन दृष्टान्तेन प्रशंसति—

**यथा वै पुरुष एवं वैश्वदेवम्, तस्य यथाऽवान्तरमङ्गान्येवं सूक्तानि, यथा पर्वाण्येवं धाय्याः, तदुभयतो धाय्यां पर्याह्वयते, तस्मात् पुरुषस्य पर्वाणि शिथिराणि सन्ति दृह्ळानि, ब्रह्मणा हि तानि धृतानि ॥** इति ।

लोके यथा पुरुषो हस्तपादादिमान्, मनुष्यदेहः, तद् इदं वैश्वदेवशस्त्रम् । 'तस्य' शरीरस्य 'अवान्तरम्' अभ्यन्तरप्रदेशम् 'अङ्गानि' अवयवा यथा वर्तन्ते, एवं शस्त्रस्याभ्यन्तरे सूक्तानि निविष्टानि । यथा तेषामवयवानां संधयः, एवमेता धाय्याः शस्त्रे तिष्ठन्ति । तथा सति धाय्या उभयपार्श्वपर्वाणि 'शिथिराणि' पूर्वं शिथिलानि सन्त्यपि पश्चात् प्रयत्नेन धारितानि दृढानि संपद्यन्ते । 'ब्रह्म वा आहावः' इति श्रुतत्वाद्[1] आहावरूपेण ब्रह्मणैव धाय्यारूपाणि पर्वाणि धृतानि भवन्ति ॥

जैसे पुरुष हैं वैसे ही वैश्वदेव [शस्त्र] हैं । उसके जैसे अवान्तर अङ्ग हैं वैसे ही [शस्त्र के अन्दर] सूक्त हैं । जैसे उसके जोड़ हैं वैसे ही [शस्त्र में] धाय्या हैं । उस धाय्या के दोनों ओर पर्याह्वान करता है; इसीलिए पुरुष के जोड़ शिथिल होकर भी दृढ़ बने हैं; क्योंकि वे ब्रह्मा के द्वारा दृढ़ किए गए हैं [अर्थात् आहाव रूप ब्रह्म से धाय्या रूप पर्व धृत होते हैं] ।

अथ धाय्यानां शस्त्रयाज्यानां च प्रकृतौ विकृतौ चान्यत्वं निराकृत्यैकरूपत्वं विधत्ते—

**मूलं वा एतद् यज्ञस्य यद्धाय्याश्च याज्याश्च, तद् यदन्या अन्या धाय्याश्च याज्याश्च कुर्युरुन्मूलमेव तद् यज्ञं कुर्युस्तस्मात् ताः सामान्य एव स्युः ॥** इति ।

धाय्यानां शस्त्रयाज्यानां वृक्षमूलवद् यज्ञमूलता । तत्प्रकृतिगताः परित्यज्य विकृतावन्यस्वीकारे यज्ञरूपो वृक्ष उन्मूलितः स्यात् । तस्मात् प्रकृतौ याः सन्ति, ता एव विकृतावित्युभयत्र 'समान्य एव' एकविधा एव कर्तव्याः ॥

ये जो धाय्या और याज्या हैं वह यज्ञ की जड़ें हैं । [प्रकृतिगत याज्या व धाय्या को छोड़कर] यदि अन्य धाय्या और अन्य याज्या प्रयुक्त होती हैं तो उस यज्ञ [वृक्ष] का उन्मूलन ही हो जाता है; इसलिए वे समान [=एकविध] ही होनी चाहिए ।

वैश्वदेवशस्त्रमवयवशः प्रशस्य समुदायाकारेण प्रशंसति—

**पाञ्चजन्यं वा एतदुक्थं यद् वैश्वदेवम्; सर्वेषां वा एतत् पञ्चजनानामुक्थं,—देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां च; एतेषां वा एतत् पञ्चजनानामुक्थं; सर्वं एनं पञ्चजना विदुः ॥** इति ।

१. द्र० इतः पूर्वम्, ३४१ पृ० ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यद् वैश्वदेवनामकम् 'उक्थं' शस्त्रमस्ति, तदेतत् 'पाञ्चजन्यं वै' पञ्चविधानां जनानां संबन्ध्येव। स एवार्थः सर्वेषामित्यादिना स्पष्टीक्रियते,—ये पञ्चविधा जनाः सन्ति, तेषां सर्वेषामेव संबन्ध्येतच्छस्त्रम्। पञ्चविधत्वमेव मनुष्याणामित्यादिनोच्यते,—अग्नीन्द्रादिदेवगण एको वर्गः, ब्रह्मक्षत्रियादिमनुष्यगणो द्वितीयो वर्गः, गन्धर्वाणामप्सरसां वर्गस्तृतीयः, सर्पाणां वर्गश्चतुर्थः, पितॄणां वर्गः पञ्चमः[1]। एतेषां पञ्चविधानां जनानां तुष्टिहेतुत्वात् तदीयमेतच्छस्त्रम्। 'एनं' वैश्वदेवशस्त्रस्य शंसितारं होतारं सर्वे पञ्चजनाः 'विदुः' जानन्ति, तेष्वस्य कीर्तिः प्रसरतीत्यर्थः॥

यह जो वैश्वदेवशस्त्र है वह पञ्चविध मनुष्यों से संबन्धित है। यह उक्थ सभी पञ्चविध जनों का है। देवों, मनुष्यों, गन्धर्वों-अप्सराओं, सर्पों और पितरों—इन पाँचों जनों का [वैश्वदेव] शस्त्र है। सभी पाँचों-जन इस [वैश्वदेवशस्त्र के शंसन कर्ता] को जानते हैं।

वेदनं प्रशंसति—

**एनं पञ्चिन्यै जनतायै हविनो गच्छन्ति, य एवं वेद॥ इति।**

जनानां देवमनुष्याणां समूहो 'जनता'। सा च पञ्चसंख्योपेतत्वात् 'पञ्चिनी' तस्यै, तत्प्रीत्यर्थं 'हविनः' होतुं कुशलाः पुरुषाः 'एनं' वेदितारमागच्छन्ति॥

जो इस प्रकार जानता है उसके पास हवन करने में कुशल पुरुष इन पञ्चविध जनों [की प्रसन्नता] के लिए आते हैं।

अथ शंसनपूर्वकाले दिग्ध्यानं विधत्ते—

**सर्वदेवत्यो वा एष होता यो वैश्वदेवं शंसति, सर्वा दिशो ध्यायेच्छंसिष्यन्, सर्वास्वेव तद् दिक्षु रसं दधाति॥ इति।**

'यः' होता 'वैश्वदेवं' शस्त्रं शंसति, 'एषः' 'सर्वदेवत्यो वै' सर्वा देवता अस्येति, तत्परितोषहेतुरित्यर्थः। अतः सोऽयं शंसितुमुद्युक्तः सर्वा दिशो मनसा ध्यायेत्, तेन शंसनेन सर्वास्वेव तद्दिक्षु रसं दधाति॥

जो [होता] वैश्वदेव शस्त्र का शंसन करता है वह सभी देवों का [परितोष का हेतुभूत] होता है। अतः शंसन करते समय उसे सभी दिशाओं का ध्यान करना चाहिए। इस प्रकार उस [शंसन] से वह सभी दिशाओं में रस को रखता है।

---

१. 'गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके, चत्वारो वर्णा निषादः पञ्चमः इत्यौपमन्यवः'—इति निरु० ३.२.२।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

क्वचिद् ध्यानं विधत्ते—

**यस्यामस्य दिशि द्वेष्यः स्यान्न तां ध्यायेत्, अनुहायैवास्य तद्वीर्यमादत्ते ॥ इति ।**

'अस्य' हेतुः 'द्वेष्यः' शत्रुर्यस्यां दिशि वसति, तामेकां दिशं न ध्यायेत् । तथा सति, 'अनुहायैव' द्वेष्यस्य पृष्ठतो गत्वैव तदीयं वीर्यं सर्वं स्वीकरोति ॥

किन्तु उसे उस दिशा का ध्यान नहीं करना चाहिए जिस दिशा में उस [होता] का शत्रु हो । ऐसा करके वह उस शत्रु के पीछे जाकर ही उसके ही बल को स्वीकार करता है ।

शस्त्रस्य परिधानीयामृचं विधत्ते—

**'अदितिर्द्यौरदितिरन्तरिक्षम्'[2] इत्युत्तमया परिदधाति । इयं वा अदितिरियं द्यौरियमन्तरिक्षम् ॥ इति ।**

अखण्डितत्वाद् अदीनत्वाद् वा[3] भूमिरेवादितिरित्युच्यते । सेयं भूमिरेव द्युलोकरूपाऽन्तरिक्षरूपा च; अस्यां भूमौ कर्म कृत्वा तत्तल्लोकप्राप्तेः संपादयितुं शक्यत्वात् ॥

'अदिति [अदीना अथवा अखण्डनीया पृथिवी ही] द्यौ है, अदिति अन्तरिक्ष है'—इस अन्तिम ऋचा से कर्म का समापन करता है । यह पृथिवी ही अदिति है, यह [अदिति] द्यौ है और यह अदिति अन्तरिक्ष है ।

द्वितीयपादमनूद्य व्याचष्टे—

**'अदितिर्माता स पिता स पुत्रः' इति । इयं वै मातेयं पितेयं पुत्रः ॥ इति ।**

येयमदितिर्भूमिः, सैव माता; सोऽदितिरूप एव पिता, सोऽदितिरूप एव पुत्रः । 'इयं वा' इत्यादिनोक्तार्थप्रसिद्धिरुच्यते—सत्यां भूमौ मातापितृपुत्रादिभिरवस्थातुं शक्यत्वात् तेषामदितिरूपत्वं प्रसिद्धमित्यर्थः ॥

'अदिति माता है, वही पिता है, वही पुत्र है'—यह भूमि ही माता है, यह पिता है और यह पुत्र है ।

तृतीयपादमनूद्य व्याचष्टे—

**'विश्वे देवा अदितिः पञ्च जना' इत्यस्यां वै विश्वे देवा अस्यां पञ्चजनाः ॥ इति ।**

---

१. (i) अनुहाय अनुक्रमेण त्याजयित्वैव । यद्वा, अनुगम्यैव बन्धुभावमाचरेन्नेव—इति भट्टभास्करः । (ii) 'अनुहानम् = अभिभवः'—इति षड्गुरुशिष्यः ।

२. ऋ० १.८९.१० ।

३. द्र० अदितिरदीना—इति निरु० ४.४.१; ११.३.२ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विश्वेषां देवानां भूमौ मनुष्यैः पूज्यमानत्वात् पञ्चजनानां देवमनुष्यादीनां भूमाववस्थानाद् अदितेस्तद्रूपत्वम् ॥

'अदिति ही विश्वे देव हैं। अदिति ही पञ्चजन हैं'—इसी [भूमि] में विश्वेदेव [मनुष्यों से पूजित होने से] हैं। इसी [भूमि] में पञ्चजन [का अवस्थान होने से अदिति का तद्रूप] हैं।

चतुर्थपादमनूद्य व्याचष्टे—

**'अदितिर्जातमदितिर्जनित्वम्' इति। इयं वै जातमियं जनित्वम् ॥ इति।**

'जातं' पूर्वमुत्पन्नं प्राणिरूपं, 'जनित्वम्' इतः परमुत्पत्स्यमानं प्राणिरूपम्, तयोरुभयोर्भूमौ संभवाद् अदितेस्तद्रूपत्वम् ॥

'पैदा हुई प्रजा अदिति ही है और पैदा होने वाली भी अदिति ही है'—पूर्व में जो पैदा है, यह पृथ्वी ही है और जो बाद में पैदा होने वाली है वह भी पृथ्वी ही है।

परिधानीयाया अस्या ऋचः शंसने प्रकारविशेषं विधत्ते—

**द्विः पच्छः परिदधाति, चतुष्पादा वै पशवः पशूनामवरुद्ध्यै, सकृदर्धर्चशः, प्रतिष्ठाया एव, द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो, यजमानमेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति ॥ इति।**

'त्रिः प्रथमां त्रिरुत्तमामन्वाह'—इति विधेः[1] सार्वत्रिकत्वादस्याः परिधानीयायास्त्रिरावृत्तिः प्राप्ता। तत्र द्वयोरावृत्त्योः 'पच्छः' शंसेत्। एकैकस्मिन् पादेऽवसायावसाय शंसनं कुर्यात्। तत्र पादानां चतुष्टयेन पशुसाम्यात् पशुप्राप्तिर्भवति। तृतीयस्यामावृत्तावर्धर्चशः[2] शंसेत्। अर्धर्चेऽवसाय पठेदित्यर्थः। तच्च प्रतिष्ठायै स्थैर्येणावस्थानार्थमेव भवति। किंच पुरुषोऽयं 'द्विप्रतिष्ठः' पादद्वयोपेतः, पशवश्चतुष्पादाः, तथा सत्युभयविधशंसनेन द्विपादं यजमानमेव चतुष्पात्सु पशुषु प्रतिष्ठापयति ॥

वह अन्तिम मन्त्र को पाद-पाद के अवसान पर दो बार बोलता है। क्योंकि पशुओं के चार पैर होते हैं [चार पादों से पशु की समता होने से] यह पशुओं की प्राप्ति के लिए ही होता है। [तृतीय आवृत्ति में मन्त्र को] एक बार अर्धर्च के अवसान पर बोलना चाहिए। [यह यजमान की] प्रतिष्ठा [=स्थिर अवस्थान] के लिए ही होता है; क्योंकि पुरुष दो पैरों वाले हैं और पशुओं को चार पैर हैं। इस प्रकार करके यह दो पैरों वाले यजमान को ही चार पैरों वाले पशुओं में स्थापित करता है।[3]

---

१. द्र० इतः पूर्वम् २० पृ० १० पंक्तिः। (तै० सं० २.५, ७.१)।

२. 'द्विः पच्छोऽर्धर्चशः सकृद् भूमिमुपस्पृशन्'—इति आश्व श्रौ० ५.१८.१२।

३. द्र० इतः पूर्वम्, २८० पृष्ठे।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

परिधानकाले भूमिस्पर्शं विधत्ते—

**सदैव पञ्चजनीयया परिदध्यात्, तदुपस्पृशन् भूमिं परिदध्यात्, तद् यस्यामेव यज्ञं संभरति, तस्यामेवैनं तदन्ततः प्रतिष्ठापयति ।। इति ।**

'सदैव' सर्वेष्वपि यज्ञप्रयोगेषु 'पञ्चजनीयया' 'विश्वे देवा अदितिः पञ्चजनाः'—इत्युक्तत्वात् इयमृक् 'पञ्चजनीया', तया 'परिधानं' समापनं यदा कुर्यात् तदानीं भूमिमुपस्पृशन् परिदध्यात् । तथा सति 'यस्यामेव' भूमौ 'यज्ञं संभरति', अनुष्ठातुं यज्ञसाधनानि संपादयति, 'तस्यामेव' भूमौ 'एवं' यज्ञमनेनोपस्पर्शनेनान्ततः प्रतिष्ठापयति ।।

सभी [यज्ञप्रयोगों] में पाञ्चजन्य मन्त्र से ही समापन करना चाहिए । उससे पृथ्वी का स्पर्श करते हुए समापन करे [अर्थात् शस्त्र पढ़ता हुआ भूमि का स्पर्श करे] । ऐसा करके जिस [भूमि] पर यज्ञ का अनुष्ठान करता है, उसी [भूमि] पर इस [यज्ञ] को उस [भूमि स्पर्श] से अन्ततः प्रतिष्ठित करता है ।

शस्त्रयाज्यां विधत्ते—

**'विश्वे देवाः शृणुतेमं हवं मे' इति वैश्वदेवमुक्थं शस्त्वा वैश्वदेव्या यजति, यथाभागं तद्देवताः प्रीणाति ।। ३१ ।। इति ।**

वैश्वदेवशस्त्रशंसनादूर्ध्वं 'विश्वे देवाः शृणुत' इत्येतां वैश्वदेवीं[1] याज्यां पठेत् । तस्यां 'ये अन्तरिक्षे य उपद्यविष्ठाः' इत्यादिना भिन्नवर्गाणां देवगणानामभिधानात् तासां देवतानां स्वस्वभागमतिक्रम्य प्रीतिं करोति ।।

।। इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां तृतीयाध्याये (त्रयोदशाध्याये) सप्तमः खण्डः ।। ७ ।। ( ३१ ) [ १०२ ]

वैश्वदेव शस्त्र के शंसन के बाद विश्वेदेव-देवताक याज्या मन्त्र 'हे विश्वे देवों मेरा यह आह्वान सुनो'—से यजन करता है । इस प्रकार उससे उनके भाग के अनुसार उन देवों को प्रसन्न करता है ।

।। इस प्रकार तेरहवें अध्याय के सप्तम खण्ड की हिन्दी पूर्ण हुई ।। ७ ।।

## अथ अष्टमः खण्डः

अथ घृतयागसौम्ययागयोर्याज्यां विधत्ते—

**आग्नेयी प्रथमा घृतयाज्या, सौमी सौम्ययाज्या, वैष्णवी घृतयाज्या, त्वं सोम पितृभिः संविदान इति सौम्यस्य पितृमत्या यजति ।। इति ।**

---

१. ऋ० ६.५२.१३ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सौम्यचरोरुभयतो घृतसाध्यौ द्वौ यागावनुष्ठेयौ। तत्राग्निदेवताका विष्णुदेवताका चेति द्वे याज्ये। 'घृताहवनो घृतपृष्ठो अग्निः' इत्याग्नेयी प्रथमा याज्या[1] 'उरु विष्णो विक्रमस्व' इति वैष्णवी द्वितीया घृतयाज्या[2]। अस्ति कश्चित्सोमदेवताकश्चरुः, तस्य 'त्वं सोमः'[3] इति सौमी[4] याज्या; तत्र 'पितृभिः संविदानः' इति श्रुतत्वाद् इयं पितृमती; तां याज्यां सौम्यचरौ पठेत्। तस्य चरोः पुरस्तादाग्नेय्यायाज्यया घृतयागः। उपरिष्टाद् वैष्णव्या याज्यया घृतयागः[5]। तद् याज्याद्वयम् आश्वलायनेन पठितम्[6]॥

iii. ३२ [xiii. ८] प्रथम घृत-याज्या अग्नि-देवताक है, सोम के चरु का याज्या मन्त्र सोम-देवताक है और [द्वितीय] घृतयाज्या विष्णु-देवताक है। 'हे सोम, तुम पितरों से संविद हो'—इस पितृ शब्द युक्त सोम के चरु की याज्या से यजन करता है।

सौमीं याज्यां प्रशंसति—

**घ्नन्ति वा एतत् सोमं यदभिषुण्वन्ति, तस्यैतामनुस्तरणीं कुर्वन्ति,—यत्सौम्यः; पितृभ्यो वा अनुस्तरणीं, तस्मात् सौम्यस्य पितृमत्या यजति॥** इति।

ऋत्विजः सोममभिषुण्वन्तीति यदस्ति, सोऽयं सोमस्य वध एव। तत्र यः सौम्यश्चरुरस्ति, एतां सौम्यचरुरूपां तस्य मृतस्य सोमस्यानुस्तरणीं कुर्वन्ति। मृतस्य दीक्षितस्य दहनकाले कांचिद् वृद्धां गां हत्वा दीक्षितावयवेषु गोरवयवानवस्थाप्य दहेत्। सेयं गौर्मृतं दीक्षितमनु मृतत्वाद्विसितत्वाच्चानुस्तरणीत्युच्यते[7]। यस्मात् सा पितृभ्यां योग्या तस्मात् पितृमत्या याज्यया सौम्ययागस्य हविर्यजेत्॥

---

१. आश्व० श्रौ० ५.१९.३। २. आश्व० श्रौ० ५.१९.३। ३. ऋ० ८.४८.१३।
४. 'वैश्वदेवशस्त्रमुक्तं चरुः सौम्योऽथ कथ्यते'—इति षड्गुरुशिष्यः।
५. 'तं घृतयाज्याभ्यामुपांशूभयतः परियजन्ति'—इति आश्व० श्रौ० ५.१९.२।
६. आश्व० श्रौ० ५.१९.३।
७. (i) 'अनुस्तरणीङ्गामजां वैककर्णां कृष्णामेके सव्ये बाहौ बद्ध्वानुसङ्कालयन्ति। अनुस्तरण्या वपामुत्खिद्य शिरो मुखं प्रच्छादयेदग्नेर्वर्म परि गोभिर्व्ययस्व (ऋ० १०. १६.७) इति'—इति आश्व० गृह्य० ४.२,३। (ii) 'अनुस्तरणी चेत् पश्चात् कर्णमाहत्य हस्तयोर्वृक्कौ। अङ्गेष्वङ्गानीति जातूकर्णः। न वास्थिसन्देहात्। वपया मुखमवच्छाद्याग्निमिरादीपयन्ति'—इति कात्या० श्रौ० २५.७.३४–३७। (iii) कर्णप्रदेशस्य पश्चाद्भागे 'आहननं' प्रहारं कृत्वा मारयित्वा तस्याः कुक्षिगोलकौ मृतस्य हस्तयोर्निधेयौ'—इत्यादि च तद् व्याख्यानं कर्काचार्यकृतम्। (iv) द्र० पार० गृह्य० ३.११। (v) 'तस्मात् पुरुषाय पुरुषायानुस्तरणी क्रियते'—इति षड्० ब्रा० १.७। तु० तत्र सा० भा०—'तस्मात्' अतएव लोके 'पुरुषाय-पुरुषाय' सर्वस्यै मृताय 'अनुस्तरणी क्रियते' वैतरणीनद्युत्तारिका गौः दीयते—इति।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वे इस सोम का हनन करते हैं जो इसका अभिषव करते हैं। उस [मृत सोम] के लिए यह अनुस्तरणी अर्थात् वृद्ध गाय का यजन करते हैं, जो सोम के चरु रूप में होता है [जैसे दीक्षित यजमान के मरने पर उसको जलाते समय एक वृद्ध गाय का हनन करके उसके अवयवों को मृत-देह पर वैतरणी नदी पार करने के लिए रखते हैं वैसे ही यहाँ भी अनुस्तरणी, अर्थात् मृत यजमान के अनु अर्थात् पीछे हिंसित होने वाली करते हैं]। क्योंकि वृद्ध गाय का हनन पितरों के योग्य है इसीलिए 'पितृ' शब्द युक्त याज्या से यजन करता है।

घृतयागसहितं सौम्यं चरुं संगृह्य प्रशंसति—

**अवधिषुर्वा एतत् सोमं यदभ्यसुषवुः, तदेनं पुनः संभावयन्ति ॥** इति।

अभ्यषुषवुरभितः सोमं सुतवन्त इति यदस्ति, एतेन सोममवधिषुर्वै, ऋत्विजो हतवन्त एव तस्माद् 'एनं' व्यथितं सोमं घृतचरुभ्यां व्यथापरिहाराय संभावयन्ति ॥

वे सोम को मार डालते हैं जब उसका अभिषव करते हैं। अतः इस प्रकार करके वे पुनः इस [व्यथित सोम] को पुनरुज्जीवित करते हैं।

संगृह्य प्रशस्य देवताद्वारा पुनर्विस्तरेण प्रशंसां दर्शयति—

**पुनराप्याययन्त्युपसदां रूपेण उपसदां किल वै तद्रूपं यदेता देवता अग्निः सोमो विष्णुरिति ॥** इति।

योऽयं हतः सोमः, तं सोममुपसदां रूपेण संपादितेन पुनराप्याययन्ति। अग्निः सोमो विष्णुरिति या एतास्तिस्रो देवताः, तदेतदुपसदामेव स्वरूपं तत्राप्येतस्य देवतात्रयस्य विद्यमानत्वात् ॥

[उस मृत सोम को] पुनः वे उपसद के रूप में बढ़ाते हैं। वस्तुतः उपसद उन्हीं के रूप हैं जो यह अग्नि, सोम और विष्णु देवता हैं।

अथ होतुराज्यावेक्षणं विधत्ते—

**प्रतिगृह्य सौम्यं होता पूर्वश्छन्दोगेभ्योऽवेक्षेत ॥** इति।

हुतशेषं सौम्यं चरुमध्वर्युणा दत्तं होत्रा प्रतिगृह्य चरुमध्ये सिक्ते बहुले घृते 'छन्दोगेभ्यः' उद्गातृभ्यः स्वयं पूर्वभावी सन् स्वकीयां देहच्छायामवेक्षेत ॥

[अध्वर्यु द्वारा प्रदत्त हुतशेष] सोम के चरु को [होता] लेकर [उस चरु के मध्य सिक्त घृत में अपना प्रतिबिम्ब] उद्गाताओं के [देखने के] पहले देखे।

अत्र पूर्वपक्षमुत्थाप्य दूषयति—

**तं हैके पूर्वं छन्दोगेभ्यो हरन्ति, तत् तथा न कुर्यात्, वषट्कर्ता प्रथमः सर्वभक्षान् भक्षयतीति ह स्माऽऽह तेनैव रूपेण। तस्माद् वषट्कर्तैव पूर्वोऽवेक्षेताथैनं छन्दोगेभ्यो हरन्ति ॥ ३२ ॥** इति।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

केचन याज्ञिका होतुराज्यावेक्षणात् पूर्वमेव तं घृतयुक्तं सौम्यं चरुं छन्दोगेभ्यः समर्पयन्ति। तत्समर्पणं तथा न कुर्यात्। हविःशेषभक्षणेषु वषट्कर्ता होता प्रथमः पूर्वभावी सन् हविःशेषान् भक्षयति[1]। इत्येवमभिज्ञो महर्षिराह स्म। तस्मात्कारणात् तेनैव रूपेण भक्षणक्रमेणैवावेक्षणेऽपि होतैव प्रथमो भूत्वाऽवेक्षेत। अनन्तरमेवैनं सौम्यं चरुं छन्दोगेभ्यः समर्पयेयुः[2]॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां तृतीयाध्याये (त्रयोदशाध्याये) अष्टमः खण्डः ॥ ८ ॥ (३२) [१०३]

कुछ [होता] उस [सोम के चरु] को पहले उद्गाताओं को देते हैं। किन्तु ऐसा नहीं करना चाहिए। क्योंकि ऋषि का कथन है कि 'जो [होता] वषट्कार करता है वही प्रथमतः हविःशेष का भक्षण करता है।' इस प्रकार उसी रूप [क्रम] में इसीलिए वषट्कर्ता ही पहले अवेक्षण करे, फिर वे उसको उद्गाताओं को समर्पित करते हैं।

॥ इस प्रकार तेरहवें अध्याय के आठवें खण्ड की हिन्दी पूर्ण हुई ॥ ८ ॥

## अथ नवमः खण्डः

अथाग्निमारुतशस्त्रं वक्तव्यं तदर्थमादावुपाख्यानमाह—

**प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत्, दिवमित्यन्य आहुः, उषसमित्यन्ये, तामृश्यो भूत्वा रोहितं भूतामभ्यैत्, तं देवा अपश्यन्। अकृतं वै प्रजापतिः करोतीति ते तमैच्छन्, य एनमारिष्यत्येतमन्योन्यस्मिन्नाविन्दन्, तेषां या एव घोरतमास्तन्व आसंस्ता एकधा समभरन्, ताः संभृता एष देवोऽभवत् तदस्यैतद् भूतवन्नाम ॥ इति।**

पुरा कदाचित् प्रजापतिः स्वकीयां दुहितरमभिलक्ष्य भार्यात्वेन ध्यानमकरोत्[3]। तस्यां दुहितरि[4] महर्षीणां मतभेदं आसीत्। अन्ये केचन महर्षयो दिवं द्युलोकदेवतां ध्यातवान् इत्याहुः। अपरे तु महर्षय 'उषसम्' उषःकालदेवतां ध्यातवान् इत्याहुः। ऋश्यो मृगविशेषः। तथाचाभिधानकार[5] आह—'गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः' इति। स प्रजापतिः

१. 'होताग्रे भक्षयेदिति गौतमः'—इति आश्व० श्रौ० ५.६.२२।
२. तु० आप० श्रौ० १३.१३.२२; १४.१-२।
३. मन्त्रश्चास्ति 'पिता यत् स्वां' 'कामं कृण्वान' इत्यपि (ऋ० १०.६१.७-६)।
४. 'दुहितृशब्दस्य सम्बन्धि शब्दत्वादेव स्वत्वसिद्धौ स्वग्रहणमौपचारिकव्युदासेन साक्षाद् दुहितृत्वप्रतिपत्त्यर्थम्। प्रजापतेः साक्षादेव सर्वपितृत्वात्। तच्च दोषातिशयख्यापनार्थम्'—इति भट्टभास्करः।
५. अमरकोश २.५.१०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तथाविध ऋश्योऽभूत् । सा च दुहिता 'रोहितं' लोहितं 'भूता' प्राप्ता, ऋतुमती जातेत्यर्थः । तादृशीं तां दुहितरम् 'अभ्यैत्' अभिगतवान् मिथुनधर्मं प्राप्तवान् इत्यर्थः । 'तं' दुहितृगामिनं प्रजापतिं देवाः परस्परमिदमब्रुवन्–अयं प्रजापतिः 'अकृतं वै' अकर्तव्यमेव निषिद्धाचरणं करोतीति विचार्य यः पुरुषः 'एनं' प्रजापतिम् 'आरिष्यति'[1] आर्तिं प्रापयितुं क्षमः, तादृशं पुरुषमैच्छन्नन्वेषणं कृतवन्तः; कृत्वा चान्योन्यस्मिन् तेषां मध्ये 'तं' प्रजापति-घातकं 'नाविन्दन्' न अलभन्त—त्वं हन्तुं शक्नोषि, त्वं हन्तुमिति परस्परं पृष्ट्वैकैकस्य शक्तिराहित्यं निश्चितवन्तः । सर्वेषु देवेषु या एव कश्चिद् घोरतमास्तन्वोऽत्युग्राणि शरीराण्यासन्, ताः सर्वाः 'एकधा समभरन्' मेलयित्वैकं शरीरं कृतवन्तः, 'ताः' घोरतमास्तन्वः 'संभृताः' एकत्वेन संपादिताः सत्यः 'एष देवोऽभवत्' एष इति हस्तेन प्रदर्श्य रुद्रोऽभिधीयते । तत् तस्मादेव कारणाद् अस्य रुद्रस्यैतल्लोकप्रसिद्धं 'भूतवद्' भूतशब्दोपेतं नाम संपन्नम् । भूतपतिरिति भूतवन्नाम । तच्च तस्य भवत्यर्थानुगमाद्युक्तम् ॥

[आग्निमारुत शस्त्र]—

iii. ३३ [xiii. ९] प्रजापति ने अपनी लड़की को [देखकर भार्या के रूप में] सोंचा । इसे कुछ ऋषि द्युलोक की देवता कहते हैं और कुछ अन्य 'उषा' देवता कहते हैं । वे प्रजापति हरिण होकर रोहित [हिरनी या ऋतुमती] हुई [दुहिता] के पास गए । उस [दुहितृगामी प्रजापति] को देवों ने देखा और परस्पर कहा—'ओह, प्रजापति अकृत-कर्म [निषिद्ध आचरण] करता है'—ऐसा विचार करके उन्होंने [ऐसे पुरुष को] खोजा जो इस [प्रजापति] को मारने में समर्थ होवे । किन्तु अपने लोगों के बीच में किसी को भी नहीं प्राप्त किया । तब उनमें जो घोरतम [उग्र] शरीरांश था उसको उन्होंने एक जगह इकट्ठा किया । वह सब एकीकृत होकर यह देव [रुद्र] उत्पन्न हुए । इसीलिए उस [रुद्र] का 'भूत' शब्द से युक्त [ =भूतपति] नाम हुआ ।

एतन्नामवेदनं प्रशंसति—

**भवति वै स योऽस्यैतदेवं नाम वेद ॥** इति ।

वेदिता 'भवति वै' भूतिमानेव संपद्यते ।

जो इनके इस नाम को जानता है वह भूतिमान् होता है ।

अथ तेन रुद्रेण सह देवानां संवादं दर्शयति—

**तं देवा अब्रुवन् । अयं वै प्रजापतिरकृतमकरिमं विध्येति, स तथेत्यब्रवीत् स वै वो वरं वृणा इति; वृणीष्वेति; स एतमेव वरमवृणीत,—पशूनामाधिपत्यं, तदस्यैतत् पशुमन्नाम ॥** इति ।

---

१. 'आरिष्यत्' इति भट्टभास्करीयपाठः । तथा च तद् व्याख्या—'आरिष्यत् आर्तिं प्रापयिष्यत् प्रापयेत् । अर्तेराङ्पूर्वादन्तर्णीतण्यर्थाल्लृङ् । यद्वा, रिष्यतेस्तादृशाल्लेटि रूपम् ।'



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'तं' रुद्रं देवा एवमब्रुवन्—हे रुद्र! अयं प्रजापतिः 'अकृतम् अकः' निषिद्धाचरणं कृतवांस्तस्मादिमं 'विध्य' बाणेन प्रहरेति। स रुद्रस्तदङ्गीकृत्योत्कोचत्वेन पशूनामाधिपत्यं कृतवान्। तस्मात् कारणादस्य रुद्रस्यैतल्लोकप्रसिद्धं पशुपतिरित्येतादृशं पशुशब्दोपेतं नाम संपन्नम् ॥

उन [रुद्र] से देवों ने कहा—'इस प्रजापति ने आकृत-कर्म किया है अतः इसे विद्ध कर दो।' उन [रुद्र] ने वैसा ही किया। तब उन [रुद्र] ने कहा—'मैं आप लोगों से एक वर का वरण करता हूँ। उन्होंने कहा—'वरण करें।' उन [रुद्र] ने यही वर माँगा कि मैं पशुओं का आधिपत्य प्राप्त करूँ। इसीलिए इन [रुद्र] का नाम 'पशु' शब्द से युक्त [=पशुपति] हुआ।

तद्वेदनं प्रशंसति—

**पशुमान् भवति योऽस्यैतदेवं नाम वेद ॥ इति ।**

जो इनके इस नाम को जानता है वह पशुमान् हो जाता है।

अथ रुद्रप्रजापत्योर्वृत्तान्तं दर्शयति—

**तमभ्यायत्याविध्यत् स विद्ध ऊर्ध्व उदप्रपतत्, तमेतं मृग इत्याचक्षते, य उ एव मृगव्याधः स उ एव सः, या रोहित् सा रोहिणी, यो एवेषुस्त्रिकाण्डा सो एवेषुस्त्रिकाण्डा ॥ इति ।**

स रुद्रोऽभ्यायत् य बाणयुक्तं धनुरभित आकृष्य तं प्रजापतिमविध्यत्। ऋश्यमृगरूपः स प्रजापतिर्विद्धः सन्नूर्ध्वमुख उदप्रपतत् प्रकर्षेणोत्पतनमकरोत्। तमेतमुत्पतितमृश्यमृगरूपं प्रजापतिमाकाशे दृष्ट्वा सर्व एव ते जना मृग इत्याचक्षते, रोहिण्यार्द्रयोर्नक्षत्रयोर्मध्येऽवस्थितं मृगशीर्षनक्षत्रं कथयन्ति, नक्षत्ररूपेण निष्पन्न इत्यर्थः। 'य उ एव' यस्तु रुद्रो 'मृगव्याधो' मृगघाती स रुद्र आकाशे दृश्यमानः स उ एव लोकप्रसिद्धो मृगव्याध आसीत्। या दुहिता रोहिता रोहिद् रक्तवर्णा मृगी सेयमाकाशे रोहिणीनक्षत्रमभूत्। यो एव या तु रुद्रेण प्रेरितेषुस्त्रिकाण्डाऽनीकं शल्यस्तेजनमित्यवयवत्रयोपेता सो एव सैव लोकप्रसिद्धा काण्डत्रयोपेतेषुर्बाणोऽभवत् ॥

उस [प्रजापति] को [रुद्र ने बाण युक्त] धनुष को खींचकर मारा। विद्ध हुआ वह प्रजापति ऊपर को उछला। उस [आकाश में ऊपर उछले हुए प्रजापति] को अभिज्ञजन [रोहिणी और आर्द्रा नक्षत्र के मध्य अवस्थित] मृगशिरा नक्षत्र कहते हैं। जिस [मृगघाती रुद्र] ने उसको मारा वह ही मृगव्याध हुआ। जो [दुहिता] लाल वर्ण की [हिरणी] थी वही [आकाश में] रोहिणी हुई। [रुद्र का] जो बाण तीन धारों वाला था, वह ही तीन नोकों वाला बाण हो गया।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ मनुष्योत्पत्तिं दर्शयति—

**तद्वा इदं प्रजापते रेतः सिक्तमधावत्, तत्सरोऽभवत्, ते देवा अब्रुवन्, मेदं प्रजापते रेतो दुषदिति, यदब्रुवन्, मेदं प्रजापते रेतो दुषदिति, तन्मादुषमभवत्, तन्मादुषस्य मादुषत्वं, मादुषं ह वै नामैतद् यन्मानुषं तन्मादुषं सन्मानुषमित्याचक्षते परोक्षेण; परोक्षप्रिया इव हि देवाः ॥ ३३ ॥** इति ।

मृगरूपेण प्रजापतिना यद् रेतो मृग्यां सिक्तं तदेतदतिबहुत्वाद् भूमौ पतितं सत्प्रवाहरूपेणाधावत् । तच्च क्वचिन्निम्न देशेऽवस्थाय प्रौढं सरोऽभूत् । ते देवा एवमब्रुवन्—प्रजापतेरिदं रेतो 'मा दुषद्' दुष्टमस्पृश्यं मा भूदिति[1] । यस्मान्मा दुषदित्यवदंस्तस्माद् दोषरहितस्य रेतसो 'मादुषमिति' नाम संपन्नम् । जनास्तु दकारस्थाने नकारं प्रक्षिप्य 'मानुषमिति' ब्राह्मणक्षत्रियादिशरीरमाचक्षते । तद् वस्तुतो दैवाचारेण दोषरहितत्वान्मादुषमेव । तथा सति मादुषनाममयोग्यमपि तच्छरीरं परोक्षेण नाम्ना व्यवहर्तव्यमित्यभिप्रेत्य वर्णव्यत्ययेन मानुषमित्याचक्षते । यस्माल्लोके देववत्पूज्या उत्तमाः पुरुषाः 'परोक्षप्रिया इव हि' प्रत्यक्षे मातापितृनिर्मिते देवदत्तादिनाम्नि न प्रीतिं कुर्वन्ति, किन्तु उपाध्यायाचार्यस्वामीत्यादिके मातापित्रादीनामक्लृप्तत्वेन परोक्षे नाम्नि प्रीतिं कुर्वन्ति । तस्मात् परोक्षत्वाय नकारप्रक्षेपो युज्यते ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां तृतीयाध्याये (त्रयोदशाध्याये) नवमः खण्डः ॥ ९ ॥ (३३) [१०४]

[मृगरूप] प्रजापति का जो वीर्य [मृगी में] सिक्त हुआ वह [बहुत होने के कारण] बह चला और [इकट्ठा होकर] एक सरोवर बन गया । तब उन देवों ने कहा—'प्रजापति का यह वीर्य दूषित न हो ।' क्योंकि यह कहा कि—'प्रजापति का यह वीर्य दूषित न हो ।' अतः वह मादुष अर्थात् दोषरहित हुआ, इसीलिए इसका नाम मादुष हुआ । यह जो 'मादुषम्' [=दोषरहित] नाम था वही 'मानुषम्' हुआ । [वस्तुतः दैव-आचरण के द्वारा दोषरहित होने से] वह मादुष ही [अपने नाम के योग्य उस शरीर का] परोक्ष रूप से [नाम व्यवहृत हो इस अभिप्राय से एवं वर्णव्यत्यय से] 'मानुषम्' इस नाम से अभिहित हुआ; क्योंकि देव परोक्ष प्रिय होते हैं । [अर्थात् क्योंकि लोक में भी माता पिता द्वारा दिए गए देवदत्त आदि प्रत्यक्ष नाम से देववत् पूज्य पुरुष प्रीति नहीं करते । किन्तु उपाध्याय, आचार्य स्वामी आदि नाम में प्रीति करते हैं । इसीलिए परोक्ष रूप से नकार युक्तियुक्त है] ।

॥ इस प्रकार तेरहवें अध्याय के नौवें खण्ड की हिन्दी पूर्ण हुई ॥ ९ ॥

---

१. 'मा दुष्टपरिणामं लोकगर्हितमभूत्'—इति भट्टभास्करः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ दशमः खण्डः

अथाऽऽदित्यादिदेवतोत्पत्तिं दर्शयति—

**तदग्निना पर्यादधुः, तन्मरुतोऽधून्वन्, तदग्निर्न प्राच्यावयत्, तदग्निना वैश्वानरेण पर्यादधुः, तन्मरुतोऽधून्वन्, तदग्निर्वैश्वानरः प्राच्यावयत्, तस्य यद् रेतसः प्रथममुददीप्यत तदसावादित्योऽभवत्, यद् द्वितीयमासीत् तद् भृगुरभवत्, तं वरुणो न्यगृह्णीत, तस्मात् स भृगुर्वारुणिः, अथ यत् तृतीयमदीदेदिव त आदित्या अभवन्, येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्, यदङ्गाराः पुनरवशान्ता उददीप्यन्त तद् बृहस्पतिरभवत् ॥** इति ।

प्रजापतेः संबन्धि यद् रेतो देवैर्दोषरहितं कृतं तद् रेतो देवा अग्निना पर्यादधुः परितो वेष्टितवन्तः। सरोरूपेणावस्थितस्य रेतसो दाहेन द्रवीभावं निवारयितुं परितोऽग्निं प्रज्वलितवन्त इत्यर्थः। यदाऽग्निः प्रज्वलितस्तदा मरुतो वायवस्तद्रेतोऽधून्वञ्शोषणाय वायुसंयुक्तमकुर्वन्। सोऽग्निस्तद् रेतो न प्राच्यावयत्। द्रवीभावात् प्रच्युतं नाकरोत्। द्रवबाहुल्यात् पिण्डाकारं कर्तुं नाशक्नोदित्यर्थः। वैश्वानरो नाम कश्चिदग्निविशेषः प्राणिनामुदरे प्रविश्यान्नपानादिकं पाचयति। तथा च भगवतोक्तम्[1]—

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्।" इति।

तेन वैश्वानरनामकेनाग्निविशेषेण तद् रेतः पूर्ववत् पर्यादधुः। देवैरग्नौ परिक्षिप्ते सति मरुतस्तद् रेतः पूर्ववद् अधून्वन्। सोऽयं वैश्वानरोऽग्निस्तद् रेतो द्रवीभावात् प्रच्युतमकरोत्। तस्य पिण्डीभूतस्य रेतसो यत्प्रथमं पिण्डरूपमुददीप्यतोद्दीप्तमभूत् तद्रूपमसौ दिवि दृश्यमान आदित्योऽभवत्। द्वितीयं यत्पिण्डरूपमासीत्, तदृषिर्भृगुरभवत्, तं भृगुं वरुणो न्यगृह्णीत निगृह्य स्वपुत्रत्वेन स्वीकृतवान्। तस्मात् स भृगुर्वारुणिरित्युच्यते। वरुणस्यापत्यं वारुणिः। एतदेवाभिप्रेत्य तैत्तिरीया आमनन्ति—'भृगुर्वै वारुणिः। वरुणं पितरमुपससार'[2] इति। अथानन्तरं तृतीयं पिण्डरूपम् 'अदीदेदिव' अतिशयेन दीप्तमेवासीत्। 'त आदित्या' अदितेः पुत्रा देवविशेषा 'अभवन्'। पूर्वमादित्यशब्देन मण्डलवर्ती सूर्य उक्तः। अत्रादितेः पुत्रा इतरे देवा उच्यन्ते। 'ये' रेतःपिण्डा दग्धाः सन्तोऽङ्गारा अभवन्, ते सर्वेऽप्यङ्गिरोनामका ऋषयोऽभवन्। पुनरपि तत्र यदङ्गारा ये केचिदङ्गारा 'अवशान्ताः' शान्तिरहिताः सन्त 'उददीप्यन्त' उत्कर्षेण दीप्ताः, तत्सर्वं 'बृहस्पतिरभवत्' ॥

**iii. ३४ [xiii. १०] [देवों ने] इस [वीर्य] को अग्नि से परिवेष्टित कर दिया। मरुतों ने इसे फूंका। किन्तु अग्नि ने उसे हिलने न दिया अर्थात् पिण्डाकार न होने दिया। उन्होंने उसे वैश्वानर अग्नि के द्वारा घेर लिया। मरुतों ने इसे फूंका। तब वैश्वानर**

---

१. गीता १५.१४। २. तै० आ० ९.१, तै० उप० ३.१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अग्नि ने इसे प्रच्युत किया। उस [पिण्डीभूत] वीर्य का जो प्रथम [पिण्डरूप] उद्दीप्त हुआ वह यह आदित्य हुआ; जो द्वितीय [पिण्ड] था वह भृगु हुआ। उसको वरुण ने अपने पुत्र के रूप में स्वीकार कर लिया। इसीलिए वह भृगु वारुणि [=वरुण की संतान] हुए। इसके बाद जो तृतीय [पिण्ड] था वह अत्यन्त दीप्त हुआ। वे अदिति के पुत्र [देव विशेष] हुए। जो [दग्धपिण्ड के] अङ्गारे थे, वे अङ्गिरस हुए। जो अङ्गार फिर भी शान्त नहीं हुए थे, वे उद्दीप्त हुए और वह बृहस्पति हुए।

अथ पशुसृष्टिं दर्शयति—

**यानि परिक्षाणान्यासंस्ते कृष्णाः पशवोऽभवन् या लोहिनी मृत्तिका ते रोहिताः, अथ यद् भस्मासीत् तत्पुरुष्यं व्यसर्पद् गौरो गवय ऋश्य उष्ट्रो गर्दभ इति ये चैतेऽरुणाः पशवस्ते च ॥** इति।

अङ्गारेषु शान्तेषु यानि कृष्णवर्णान्यासन् काष्ठानि ते कृष्णवर्णाः[1] पशवोऽभवन्। अग्निदाहेन भूमौ या लोहिनी रक्तवर्णा मृत्तिका तिष्ठति ते रोहिता रक्तवर्णाः[2] पशवोऽभवन्। अत्राग्निस्थाने यद् भस्मासीत्, तत्परुष्यं परुषशरीरजातं भूत्वा व्यसर्पत्, विविधमरण्यादावगच्छत्। किं तत्परुष्यमिति ? तदेवोच्यते—गौरो गवय ऋश्य इत्येतेऽरण्यमृगाः। उष्ट्रगर्दभौ प्रसिद्धौ। एवमादिकं परुषशरीरम्। येऽप्येतेऽरुणाः[3] पशवस्ते च व्यसर्पन् ॥

[शान्त अङ्गारों में] जो बुझे हुए कोयले थे; वे काले पशु हुए। [अग्नि के जलने से] जो लाल वर्ण की भूमि की मिट्टी थी, वे लाल वर्ण के पशु हुए; और जो भस्म थी वह कठोर शरीर का होकर इधर उधर जाने लगी। [वह कठोर शरीर] भैंसा, गवय, बारहसिंहा, ऊँट और गर्दभ हुए जो ये अरुण पशु थे वे भी [इधर इधर जाने लगे]।

एवमुपाख्यानेनाऽऽग्निमारुतशस्त्रस्योपोद्घातमभिधाय तस्मिञ्शस्त्रे शंसनीयामेकामृचं विधत्ते—

**तान् वा एष देवोऽभ्यवदत, मम वा इदं मम वै वास्तुहमिति तमेतयर्चा निरवादयन्त यैषा रौद्री शस्यते ॥** इति।

तान् वै तानेव पशून् सर्वानभिलक्ष्यैष रुद्र इदं सर्वं ममैवेत्यब्रवीत्। तत्रोपपत्तिं चोक्तवान्। 'वास्तुहं' वास्तौ यज्ञभूमौ हीनं यद्द्रव्यमस्ति तत्सर्वं ममेति[4] श्रुत्यन्तरेऽपि प्रसिद्धम्। तथाच तैत्तिरीया रुद्रवाक्यमामनन्ति—'यद्यज्ञवास्तौ हीयते मम वै तत्'[5]

---

१. तप्तं शान्तं कृष्णरूपं परिक्षाणं तु कथ्यते।
कृष्णवर्णास्तु पशवो वराह महिषादयः ॥ इति षड्गुरुशिष्यः।

२. 'रक्तवर्णास्तु पशवः सिंहशार्दूलकादयः'—इति षड्गुरुशिष्यः।

३. 'गौरादिरूपं तद्भूद रक्तारचैव वृकादयः'—इति षड्गुरुशिष्यः।

४. तथा च मनुः—'यो यज्जयति तस्य तत्' (७.५६)। ५. तै० सं० ३.१.९.५।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इति । तं रुद्रं सर्वान् पशूनभिगच्छन्तमेतया वक्ष्यमाणयर्चा निरवादयन्त निरपेक्षमकुर्वंत । तया तुष्टो रुद्रः पश्वपेक्षां परित्यजति स्म । का सर्गिति सोच्यते । यैषा रौद्री रुद्रदेवताका शस्यते साऽवगन्तव्या ॥

देव [रुद्र ने] उन उन [पशुओं] को लक्ष्य करके कहा—'यह मेरा है, जो कुछ [यज्ञ भूमि में] छुटा है वह मेरा है । जिस रुद्र देवताक ऋचा का शंसन किया जाता है, उस [वक्ष्यमाण] ऋचा से इस भाग को उन्होंने छुड़ा लिया ।

तस्या ऋचः[1] पादत्रयं पठति—

**'आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य संदृशो युयोथाः ।**
**त्वं नो वीरो अर्वति क्षमेथाः' ॥ इति ।**

मरुतां देवानां पितः[2] हे रुद्र ते तव सुम्नं सुखमैत्वागच्छतु । नोऽस्मान् सूर्यस्य संदृशः सूर्यावलोकनान्मा 'युयोथाः' मा वियोजय दृष्टियुक्तान् कुर्वित्यर्थः । किंच हे रुद्र वीरस्त्वं नोऽस्माकमर्वति पश्वादिवस्तूनि 'क्षमेथाः' सहिष्णुर्भव । अस्मदीयान् पश्वादिवस्तूनि मा विनाशयेत्यर्थः ॥

'मरुतों के पिता हे रुद्र ! तुम्हारा दिया हुआ सुख हमारे पास आए । हम लोगों को सूर्यावलोकन से वियुक्त मत करो अर्थात् दृष्टि युक्त करो । वीर तुम हमारे पशु आदि वस्तुओं पर सहिष्णु होओ ।'

तृतीयपादस्य 'त्वं नो वीरः' इत्ययमत्यः पाठः । 'अभि नो वीरः' इति शाखान्तर-पाठः[3] । तयोर्मध्ये स्वपाठं विधाय शाखान्तरपाठं निषेधति—

**इति ब्रूयान्नाभि न इति; अनभिमानुको हैष देवः प्रजा भवति ॥ इति ।**

इत्यनेन पूर्वोक्तेन प्रकारेण 'त्वं नो वीरः' इति पाठमेव शंसनकाले ब्रूयान्नाभि न इति पाठं ब्रूयात् । त्वं नो वीर इति पाठे सत्येष 'देवः प्रजा अनभिमानुको भवति' ।

---

१. ऋ० २.३३.१ ।

२. 'अत्रेतिहासं कथयन्ति विप्रा यथा रुद्रो मरुतां वै पितासीत्'—इत्यादि ऋक्सर्वानुक्रमणी-वृत्तौ वेदार्थदीपिकायाम्; तथा ऐतरेयब्राह्मणस्य सुखप्रदायामपि द्रष्टव्यम् । मरुतां रुद्र-पुत्रत्वं यद्यपि रामायणादौ न दृश्यतेऽथापि तेषां रुद्रानुगृहीतत्वं ब्रह्मपुराणे गौतमी-माहात्म्ये (अ० ५४) उपलभ्यते ।

३. मुद्रितसंहितापाठस्तु इत्येव दृश्यते—

आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य संदृशो युयोथाः ।
अभि नो वीरो अर्वति क्षमेत प्र जायेमहि रुद्र प्रजाभिः ॥ ऋ० २.३३.१ ॥
आश्व श्रौ० ३.८.१; ऋग्वि० १.३० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[1]अभिमानुकोऽभि न इति पाठान्तरेऽभिशब्दस्य विद्यमानत्वात् । पुत्रादिकाः प्रजा अभिलक्ष्य ताः श्रयिष्यामीति रुद्रो मनुते । त्वं न इति पाठे तु न तथेत्यर्थः ॥[2]

'त्वं नो वीरः' इसे ही [शंसन काल में] बोलना चाहिए; 'अभि नो वीरः' इस शाखान्तर पाठ को नहीं। ऐसा करने से ये देव [रुद्र पुत्र पौत्र आदि] प्रजा का अभिमानुक अर्थात् अभिभव करने वाले नहीं होते।

चतुर्थपादेऽपि स्वाभिमतपाठविधिपूर्वकं पाठान्तरं विधत्ते—

**'प्र जायेमहि रुद्रिय प्रजाभिः' इति ब्रूयान्न रुद्रेति एतस्यैव नाम्नः परिहृत्यै ॥** इति ।

हे रुद्रिय रुद्रसम्बन्धिभृत्य त्वदनुज्ञया वयं प्रजाभिः प्रजायेमहि पुत्रपौत्रादिरूपेणोत्पद्येमहि । अस्मिन् पादे रुद्रियेत्येतमेव पाठं ब्रूयान्न तु रुद्रेति पाठम् । एतस्यैव रुद्रनाम्न उग्रस्य परिहाराय रुद्रियेतिपाठादरः[3] ॥

'हे रुद्रसम्बन्धी भृत्य ! तुम्हारी कृपा से हम पुत्र पौत्रादि प्रजा के द्वारा अनेक होवें।' इस [रुद्र] नाम के उग्रता के परिहार के लिए यहाँ 'रुद्रिय' ही कहना चाहिए 'रुद्र' नहीं।

आ ते पितरित्यस्या ऋचः स्थाने काञ्चिदन्यामृचं विधत्ते—

**तदु खलु 'शं नः करतीत्येव शंसेच्छमिति प्रतिपद्यते, सर्वस्मा एव शान्त्यै, 'नृभ्यो नारिभ्यो गवे' इति, पुमांसो वै नरः, स्त्रियो नार्यः, सर्वस्मा एव शान्त्यै ॥** इति ।

---

१. 'यदा ह्यभिशब्दः प्रयुज्यते तदाभिशब्दस्याभिमुख्यवृत्तित्वादाभिमुख्यस्य च मनन-रूपत्वादभि क्षमेत इति पदद्वयस्याभिमन्यमानः क्षमेत इत्यर्थः स्यात् । ततो देवोऽस्य प्रजा अभिमन्येत ममैताः सन्त्विति । ततश्चार्याज्ञियाः स्युः अस्य प्रजा अभिवृद्धिशीलाश्च । अभिशब्दाभावे तु शंसने नाभिमानुको भवति अभिमननशीलवान् न भवति प्रजासु'—इति भट्टभास्करः ।

२. अत्र 'क्षमेत'—इत्येव मुद्रितसंहितापाठः, ऐतरेयकविहितस्तु 'क्षमेथाः'—इत्यपि ज्ञेयम् ।

३. 'ननु रुद्रिय इत्यप्युच्यमाने समान एवायं दोष इति चेत्, अयमभिप्रायः—आ········ रुद्रार्थस्य तद्धितार्थं प्रत्युपसर्जनत्वान्न प्राधान्यम्, तद्धितार्थस्य प्राधान्येन प्रतिपाद्यत्वात् । तत्र रुद्रभावार्हे त्वमस्मिन्नर्थे छान्दसो घप्रत्ययः । यद्वा, ये देवेन सृष्टाः शतं रुद्रास्तेषा पितृत्वेन भवः, तेषु वा साधुः, तेभ्यो वा हितो रुद्रियः भवाद्यर्थे छान्दसो घः । एतस्यां व्युत्पत्तौ विनेतुर्देवस्य वाचकं यद् रुद्रपदं तदेतस्मिन् पदे वर्जनतयापि न प्रयुज्यते इति तत्परिहारसिद्धिः'—इति भट्टभास्करः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'तद्‌ खलु' तत्रैव पूर्वामृचं परित्यज्य तस्या एव स्थाने 'शं नः करत्यर्वते'[1] इत्येतामृचं शंसेत्। तथा सति को लाभ इति, तदुच्यते—तस्या ऋच आदौ यच्छमित्यनेन पदेन प्रतिपद्यते प्रारम्भः क्रियते; तस्य पदस्य शान्तिवाचकत्वात् सर्वस्मै सर्वस्यापि स्वकीयस्य वस्तुनः शान्तिर्भवति। सर्वस्मा इत्यस्य व्याख्यानं नृभ्य इत्यादि। तस्यापि व्याख्यानं पुमांस इत्यादि। सर्वस्मा एव शान्त्या इत्युपसंहारः॥

अथवा उस ऋचा के स्थान पर 'शं नः करत्यर्वत' इस ऋचा का शंसन करना चाहिए। इस ऋचा में शान्तिवाचक 'शम्' शब्द होने से यह कल्याण ही करती है। सभी की स्वकीय वस्तु की शान्ति ही होती है। सभी की अर्थात् 'पुरुष स्त्री और गो-जाति के लिए' शान्ति प्रदान करने वाली है। नर ही पुमान् है, नारी ही स्त्रियाँ हैं इस प्रकार यह ऋचा सभी की शान्ति के लिए ही है।

प्रकारान्तरेण तामृचं प्रशंसति—

**सोऽनिरुक्ता रौद्री शान्ता, सर्वायुः सर्वायुत्वाय ॥** इति।

'सो' साऽप्यृगनिरुक्ता[2] रुद्रवाचकपदाभावादस्पष्टदेवताका। अत एव रौद्री रुद्रदेवताका सत्यपि घोरार्थवाचकरुद्रपदाभावाद् इयं शान्ता, तां शंसेद्धोता सर्वायुर्भवति। तच्च यजमानस्य सर्वायुत्वाय सम्पद्यते॥

वही ऋचा अनिरुक्त अर्थात् देवता का अभिधान न करने वाली है यद्यपि वह रुद्रदेवताक है और [उग्र पद रुद्र का अभाव होने से] शान्तिकारक है। [इसका शंसन करने वाला होता] सम्पूर्ण आयु को प्राप्त करता है और यह [यजमान को भी] सम्पूर्ण आयु देने के लिए ही होता है।

वेदन प्रशंसति—

**सर्वमायुरेति य एवं वेद ॥** इति।

जो इस प्रकार जानता है वह सम्पूर्ण आयु को प्राप्त करता है।

पुनरपि प्रकारान्तरेण प्रशंसति—

**सो गायत्री, ब्रह्म वै गायत्री ब्रह्मणैवैनं तं नमस्यति ॥ ३४ ॥** इति।

---

१. ऋ० १.४३.६।

२. (i) द्र० 'कद्रुद्राय नव रौद्रम्' इति ऋक्सर्वानुक्रमणी (१.४३)। (ii) 'कथमवगम्यते इयं रौद्रीति। अत एव वचनात् इति चेत्, कस्मात् पुनः कारणादेवमृषिराह। अयमभिप्रायः—शङ्करोतीत्याभ्यां पदाभ्यां शङ्करोऽस्या देवतेति गम्यत एव। तेनैवाभिप्रायेण खल्वस्या ऋचो वैशिष्ट्यं प्रतिपादयितुं शमिति प्रतिपद्यत इति ब्रवीति। न हि शंशब्दमात्रवत्त्वमस्या वैशिष्ट्यहेतुः शङ्करणशालिदेवोपक्रमशीलमेव। तादृशश्च देवो रुद्र एवेति रौद्रीयं भवत्यनिरुक्ता'—इति भट्टभास्करः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'सो' सा च ऋग्गायत्रीछन्दस्का । गायत्री च 'ब्रह्म वै' ब्राह्मणजातिरेव । उभयोः प्रजापतिमुखजत्वात् । अतो 'ब्रह्मणैव' ब्राह्मणेनैवैनं रुद्रं नमस्करोति ।।

।। इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां तृतीयाध्याये (त्रयोदशाध्याये)दशमः खण्डः ।।१०।। (३४) [१०५]

वह ऋचा गायत्री छन्दस्क है; और गायत्री ब्रह्म है। अतः ब्रह्म से ही वह उन [रुद्र] को नमस्कार करता है।

।। इस प्रकार तेरहवें अध्याय के दसवें खण्ड की हिन्दी पूर्ण हुई ।। १० ।।

## अथ एकादशः खण्डः

अथ 'वैश्वानराय पृथुपाजसे विपः' इत्यनेन सूक्तेन[1] आग्निमारुतशस्त्रस्य प्रारम्भं विधत्ते—

**वैश्वानरीयेणाऽऽग्निमारुतं प्रतिपद्यते; वैश्वानरो वा एतद् रेतः सिक्तं प्राच्यावयत्, तस्माद् वैश्वानरीयेणाऽऽग्निमारुतं प्रतिपद्यते ।।** इति ।

रेतसः प्रच्यावनं काठिन्यापादनम् ।।

iii. ३५ [xiii. ११] वैश्वानर-देवताक सूक्त के द्वारा वह आग्निमारुत शस्त्र को प्रारम्भ करता है। वैश्वानर के ही कारण यह वीर्य सिक्त होने पर पिण्डीभूत होने में समर्थ हुआ। इसीलिए वैश्वानर-देवताक सूक्त के द्वारा आग्निमारुत को वह प्रारम्भ करता है।

तस्मिन् वैश्वानरीयसूक्ते कंचिद्विशेषं विधत्ते—

**अनवानं प्रथम ऋक् शंस्तव्या । अग्नीन् वा एषोऽर्चींष्यशान्तान् प्रसीदन्नेति य आग्निमारुतं शंसति । प्राणेनैव तदग्नींस्तरति ।।** इति ।

अवानशब्देनोच्छ्वासनिश्वासावुच्येते । तौ यथा न भवतस्तथा प्रथमा, ऋक्शंस्तव्या ।[2] तथा सति सर्वानग्नीन् वै ज्वालारूपानग्नीनेवैष होताऽशान्तान् कृत्वा प्रसीदन् प्रसादं कुर्वन्नेति गच्छति ।[3] यः पुमानाग्निमारुतशस्त्रं शंसति, तस्य प्रसादहेतुत्वं कथम् ? इति तदुच्यते–उच्छ्वासनिश्वासनिरोधाद् अनवानं शंसन् प्राणवायुनैव तानग्नींस्तरत्युल्लङ्घयति, अग्निकृतमुपद्रवं शमयतीत्यर्थः ।।

प्रथम ऋचा का शंसन [बिना साँस तोड़े] अवसान के बिना करना चाहिए। जो आग्निमारुतशस्त्र का शंसन करता है वह इन अशान्त अग्नि की ज्वालाओं को शान्त ही करता

---

१. ऋ० ३.३.१-११ । २. आश्व० श्रौ० ५.२०.१–५ ।

३. 'अर्चींषि ज्योतिर्भूतान् अशान्तान् प्रज्वलितान् प्रसीदन् प्रशमयन् एति निर्वहति'—इति षड्गुरुशिष्यः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

है। इस प्रकार [स्वासोच्छ्वास का निरोध करके शंसन करते हुए वह] प्राणों के ही द्वारा उन अग्नि का तरण कर लेता है अर्थात् अग्नि के उपद्रवों को शान्त कर देता है।

शंसनकाले प्रामादिकस्य वर्णादिलोपरूपस्यापराधस्य प्रतीकारं दर्शयति—

**अधीयन्नुपहन्यादन्यं विवक्तारमिच्छेत्, तमेव तत् सेतुं कृत्वा तरति** ॥ इति।

अधीयन्नधीयानः शंसनं कुर्वन् होता यद्युपहन्यादुपघातं वर्णलोपं कुर्यात्, तदानीमन्यं कञ्चित्पुरुषं विवक्तारं[1] विविच्य वक्तुं समर्थमिच्छेत् समीपेऽवस्थापयेत्। तदानीं तमेव पुरुषमपराधतरणोपायं सेतुं कृत्वा तमपराधमुल्लङ्घयति। अयं पक्षोऽनुकल्पः॥

शंसन करते हुए [होता से वर्ण लोप आदि] भूल न हो जाय इसलिए उसे चाहिए कि किसी अन्य पुरुष को पास में भूल को इङ्गित करने के लिए अवस्थित करे। इस प्रकार उसको [मानो] एक पुल के रूप में अवस्थित करके वह [आग्निमारुतशस्त्र रूप समुद्र को] पार करता है।

मुख्यपक्षं दर्शयति—

**तस्मादाग्निमारुते न व्युच्यम्, एष्टव्यो विवक्ता** ॥ इति।

यस्मात् प्रमादं कृत्वा विवक्तृपुरुषसंपादनं न मुख्यं तस्मादाग्निमारुते शस्त्रे न व्युच्यं[2] न पश्चाद् विवक्तव्यं किन्तु प्रथमेव विवक्ता विविच्य वक्तुं समर्थो होता, एष्टव्यः प्रयत्नेन सम्पादनीयः॥

इसलिए आग्निमारुतशस्त्र में [जिससे विवक्ता पुरुष का प्राधान्य न हो और बाद में गल्ती न हो इसलिए उसे] स्वयं सुधारना नहीं चाहिए। किन्तु पहले ही गल्ती सुधरवा कर [बोलने में समर्थ होता को] प्रयत्न पूर्वक शंसन करना चाहिए।

अथ 'प्रत्वक्षसः प्रतवसः' इत्येतन्मरुद्देवताकं सूक्तं[3] विधत्ते—

**मारुतं शंसति, मरुतो ह वा एतद् रेतः सिक्तं धून्वन्तः प्राच्यावयन्, तस्मान्मारुतं शंसति** ॥ इति।

मरुतां धूननेन प्रजापतिरेतःशोषणं पूर्वमेवोक्तम्[4]॥

वह मरुद्देवताक सूक्त का शंसन करता है, क्योंकि मरुतों ने ही इस सिक्त वीर्य को स्पंदित करते हुए प्रच्युत[=कठोर]किया। इसीलिए मरुतद्देवताक सूक्त का शंसन करता है।

---

१. (i) 'वि सुष्ठु वक्तारं स्वाध्यायदक्षमिच्छेत्। भ्रेषशान्तये'—इति षड्गुरुशिष्यः।
(ii) विवक्तारं महते ख्यापयितारं विरुद्धमादिनमिच्छेत्। न तु स्वयं विब्रूयात् उपहतिं न ख्यापयेत्—इति भट्टभास्करः।

२. 'वि सुष्ठु वचनं न कार्यम्। वचेर्भावे क्यप्'—इति षड्गुरुशिष्यः।

३. ऋ० १.८७.१–६।

४. द्र० इतः पूर्वम् ५०० पृ०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ प्रगाथद्वयं विधत्ते—

**'यज्ञा यज्ञा वो अग्नये' 'देवो वो द्रविणोदः' इति मध्ये योनिं चानुरूपं च शंसति। तद्यन्मध्ये योनिं चानुरूपं च शंसति; तस्मान्मध्ये योनिधृता ॥इति।**

'यज्ञायज्ञा वः' इत्येकः प्रगाथः[1]। 'देवो वः' इति द्वितीयः[2]। तत्र प्रथमे प्रगाथे तृचः संपद्यते। सोऽयं स्तोत्रियः, तस्मिन् तृचे सामगैः स्तूयमानत्वात्। अत एवासौ द्वयोर्मध्ये प्रथमभावित्वाद् 'योनिः' इत्युच्यते। द्वितीयप्रगाथे समुत्पन्नस्तृचोऽनुरूपः।[3] यादृशः स्तोत्रियः, तादृशत्वमनुरूपत्वम्। तदेतदुभयं शस्त्रमध्ये शंसनीयम्, न तु शस्त्रान्तरेष्विव स्तोत्रियानुरूपयोरादौ शंसनीयम्। तथा सति यस्मादत्र सूक्तमध्ये योनेरनुरूपस्य च शंसनं, तस्माल्लोकेऽपि नारीणां शरीरमध्ये योनिर्धृता[4] ॥

**'यज्ञा यज्ञा' और 'देवो वः' आदि प्रगाथों के मध्य योनि [बीच में पढ़े जाने वाले मन्त्र] का और अनुरूप का[3] शंसन करता है। इस प्रकार जो मध्य में योनि का और अनुरूप का शंसन करता है इसीलिए [लोक में भी स्त्रियों की] योनि [शरीर के] मध्य में ही होती है।**

शस्त्रमध्ये तयोः स्थानविशेषं दर्शयति—

**यद्वु द्वे सूक्ते शस्त्वा शंसति, प्रतिष्ठयोरेव तदुपरिष्टात् प्रजननं दधाति, प्रजात्यै ॥ इति।**

'यदु' यस्मादेव कारणाद् वैश्वानरीयं मारुतं चेति 'द्वे सूक्ते' शस्त्वा पश्चादेतौ स्तोत्रियानुरूपौ शंसति, तस्मात् कारणाद् द्वित्वसंख्योपेतयोः 'प्रतिष्ठयोः' स्थितिहेत्वोः पादयोरेव 'उपरिष्टाद्' ऊर्ध्वदेशे 'प्रजननं' प्रजोत्पादकमिन्द्रियं दधाति। तच्च 'प्रजात्यै' प्रजोत्पादनाय संपद्यते ॥

**क्योंकि [वैश्वानरीय और आग्निमारुतीय] दो सूक्तों का शंसन करके [इन स्तोत्रिय और अनुरूप का] शंसन करता है। इसीलिए स्थिति के हेतुभूत दो पादों के ऊपर प्रजनन [इन्द्रिय] को रखता है। वस्तुतः यह प्रजोत्पादन के लिए होता है।**

---

१. उ० आ० १.१.१०.१,२ (ऋ० ६.४८.१)।
२. उ० आ० १.१.२०.१,२ (ऋ० ७.१६.११)।
३. 'यज्ञायज्ञा....इति प्रगाथौ स्तोत्रियानुरूपौ'—इतिकल्पशाखानुरोधादेवेहैवं व्याख्यानमिति ध्येयम्। द्र० आश्व० श्रौ० ५.२०.६।
४. 'यज्ञा योनिद्वयृंचतृचो देवादिरनुरूपकः। अयं द्वयृचतृचो मध्येशस्त्रास्यास्येति गृह्यताम् ॥'—इति षड्गुरुशिष्यः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदनं प्रशंसति—

**प्रजायते प्रजया पशुभिर्य एवं वेद ॥ ३५ ॥** इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीय-पञ्चिकायां तृतीयाध्याये (त्रयोदशाध्याये) एकादशः खण्डः ॥ ११ ॥ (३५) [१०६]

जो इस प्रकार जानता है वह पुत्र पौत्रादि प्रजा और गो-अश्वादि पशुओं से समृद्ध होता है ।

॥ इस प्रकार तेरहवें अध्याय के ग्यारहवें खण्ड की हिन्दी पूर्ण हुई ॥ ११ ॥

## अथ द्वादशः खण्डः

अथ 'प्र तव्यसीम्' इत्येतज्जातवेदोदेवताकं सूक्तं[1] विधत्ते[2]—

**जातवेदस्यं शंसति ॥** इति ।

iii. ३६ [xiii. १२] जातवेद-देवताक सूक्त का शंसन करता है ।

तदेतत्प्रशंसति—

**प्रजापतिः प्रजा असृजत, ताः सृष्टाः पराच्य एवायन्, न व्यावर्तन्त, ता अग्निना पर्यगच्छत्, ता अग्निमुपावर्तन्त, तमेवाद्याप्युपावृत्ताः, सोऽब्रवीज्जाता वै प्रजा अनेनाविदमिति, यदब्रवीज्जाता वै प्रजा अनेनाविदमिति, तज्जातवेदस्यमभवत् तज्जातवेदसो जातवेदस्त्वम् ॥** इति ।

पुरा प्रजापतिना सृष्टाः प्रजाः प्रजापतिं पृष्ठतः कृत्वा पराङ्मुखत्वेनैवागच्छन् न पुनरावृत्ताः । तदानीं प्रजापतिस्ताः प्रजा अग्निना 'पर्यगच्छत्' परितोऽग्निप्राकारं कृतवान् । अतः 'ताः' प्रजा दूरं गन्तुमशक्ता अग्निमुपेत्य पुनरावर्तन्त । यस्मादेवं तस्मादद्यापि शीतार्ताः प्रजाः 'तमेव' अग्निम् 'उपावृत्ताः' परितो गच्छन्त्योऽप्यग्निं दृष्ट्वा समीपे कृत्वा सेवितुमावर्तन्ते । ततः 'सः' तुष्टः प्रजापतिरेनमब्रवीत्—'जाताः' उत्पन्ना याः प्रजास्ताः सर्वा अहम् 'अनेन' अग्निना 'अविदं' लब्धवानस्मि, ज्ञातवानस्मीति वा । यस्माज्जाता अविदमनेनेत्युक्तवान्, तस्मादग्निसंबन्धि जातवेदस्यं सूक्तमभवत् । जातवेदसोऽग्नेरपि जातान् वेत्त्यनेनेति व्युत्पत्त्या तन्नाम संपन्नम्[3] ॥

प्रजापति ने सृष्टि का सृजन किया । सृष्ट हुए वे पराङ्मुख हो चले गए और न लौटे । उसने अग्नि से उन्हें घेर लिया । वे अग्नि के पास आए । इसीलिए आज भी उन [अग्नि] के पास ही [शीत से आर्त जन] आते हैं । उसके बाद उन [संतुष्ट प्रजापति]

---

१. ऋ० १.१४३.१–८ ।

२. आश्व० श्रौ० ५.२०.६ ।

३. निरु० ७.५.१ । तु० बृहद्दे० २.३० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

से [इसने] कहा—उत्पन्न सभी प्रजाको हमने इस [अग्नि] से प्राप्त किया। जो यह कहा कि—उत्पन्न सभी प्रजा को हमने इस अग्नि से जाना। इसीलिए जातवेद-देवताक सूक्त हुआ। उत्पन्नों का जानने वाला होने के कारण ही इसका नाम 'जातवेद' हुआ।

'आपो हि ष्ठा मयोभुवः' इत्यादिकं तृचं[1] विधत्ते—

**ता अग्निना परिगता निरुद्धाः शोचन्त्यो दीध्यत्योऽतिष्ठन् ता अद्भिरभ्य-षिञ्चत् तस्मादुपरिष्टाज्जातवेदस्यस्यापोहिष्ठीयं शंसति ।। इति ।**

अग्निना 'परिगताः' परितो वेष्टिताः, 'निरुद्धाः' गन्तुमशक्ताः, 'शोचन्त्यः' शोकं प्राप्नुवत्यः, 'दीध्यत्यः' दीप्यमानाः, ताः प्रजास्तत्रैवातिष्ठन्। प्रजापतिः 'ताः' प्रजाः संतापपरिहाराय अद्भिरभ्यषिञ्चत्। यस्मादेवं तस्माज्जातवेदस्याख्यसूक्तस्योपरिष्टात् 'आपो हि ष्ठा' इत्यादिकं तृचं शंसेत् ।।

अग्नि द्वारा परिवेष्टित, इधर-उधर जाने में अशक्त, शोक में पड़े हुए और दीप्तिमान वे [प्रजा जन] वहीं रहे। प्रजापति ने [तापशमनार्थ] उन पर जल का सिंचन किया। इसीलिए जातवेद-देवताक सूक्त के बाद 'आपो हि ष्ठा' आदि [जल के] सूक्त का शंसन करता है।

तत्र कंचिद् विशेषं विधत्ते—

**तस्मात् तच्छमयतेव शंस्तव्यम्, ता अद्भिरभिषिच्य निजा स्यैवा-मन्यत ।। इति ।**

यस्माद् आपोहिष्ठीयं तापशमनकारणं, 'तस्मात् तच्छमयतेव' होत्रा शंसनीयम्—यथा वह्निं शमयन् पुरुषः शनैः शनैः क्रमेण जलं सिञ्चति, एवमनेनापि शनैः शंसनं कर्तव्यम्। ततः स प्रजापतिः ताः प्रजा अद्भिरभिषिच्य 'निजा एव'[2] स्वकीया एव 'स्या' ताः प्रजा इत्यमन्यत। स्याशब्दस्तच्छब्दपर्यायः, एकवचनान्तोऽपि बहुवचनान्तत्वेन परिणम-यितव्यः। तथा सति ताः प्रजा इत्युक्तं भवति। तस्माच्छनैः शंसनेन शस्त्रस्य स्वकीयत्वं संपद्यत इत्यर्थः। यद्वा, 'ताः' अद्भिः' इत्याद्यर्थवाद उत्तरशेषत्वेन योजनीयः[3] ।।

---

१. ऋ० १०.९.१–३।

२. 'निजास्य नितरां शासयित्वा हिंसित्वैव शैत्यातिशयेन पीडयित्वैवामन्यत पीडिता मयैताः प्रतीकारः सर्वथा कर्तव्य इत्यमन्यत। आत्मीयाः प्रजाः पीडयित्वा यथा मन्तव्यं तथा मन्यत। स च प्रकारः प्रतीकारविधानकामनैवेति भावः। जासु ताडने, चौरादिकण्यन्ताल्ल्यप्। यद्वा, ताः शीतार्ताः प्रजा अनुजिघृक्षया तां तां प्रजां प्रत्येकममन्यत। स्या सैषा प्रजा निजा मदीयैव इयं च मदीयैव इति। तस्मादार्तैः प्रतीकारः कर्तव्यः इत्यमन्यत'—इति भट्टभास्करः।

३. 'आपो हि ष्ठेति तिस्रो वियतमप उपस्पृशन्नन्वारब्धेष्वपावृतशिरस्कः, इदमादि प्रति प्रतीकमाह्वानम्'—इति आश्व० श्रौ० ५.२०.६।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[ताप को यह शान्त करने वाला है] इसलिए शान्त करते हुए ही [होता को इसका] शंसन करना चाहिए। [उसके बाद से प्रजापति ने] उन प्रजा जनों का जल से अभिषेक करके उन्हें अपना मान लिया।

'उत नोऽहिर्बुध्न्यः' इत्यस्या ऋचः[1] शंसनं तद्देवतास्तुतिद्वारेणोन्नयति—

**तासु वा अहिना बुध्न्येन परोक्षात् तेजोऽदधात्, एष ह वा अहिर्बुध्न्यो यदग्निर्गार्हपत्यः। अग्निनैवासु तद् गार्हपत्येन परोक्षात् तेजो दधाति; तस्मादाहुर्जुह्वदेवाजुह्वतो वसीयानिति॥ ३६॥** इति।

'तासु' अभिषेकादूर्ध्वं स्वकीयत्वेन स्वीकृतासु प्रजासु, प्रजापतिः 'अहिना' 'बुध्न्येन' अहिशब्दबुध्न्यशब्दद्वयनामकाग्निविशेषेण 'परोक्षात्' परोक्षरूपेण 'तेजोऽदधात्'; प्रजानां संतापभीरुत्वात्। ता यथा नाग्निविशेष पश्यन्ति, तथा तास्वग्निविशेषसम्बन्धि तेजः स्थापितवान्। यो गार्हपत्योऽग्निरस्ति, एष एव अहिशब्देन बुध्न्यशब्देनाभिहितः। अतस्तदीयायाः शंसने सति गार्हपत्येनैवाग्निना प्रजासु परोक्षत्वेन तेजः स्थापयति। यस्मादाग्नेयं तेजोऽपेक्षितं, तस्माद् 'अजुह्वतः' होमरहिताव् पुरुषात् 'जुह्वदेव' होमं कुर्वन्नेव 'पुरुषो वसीयान्' अत्यन्तं श्रेष्ठ इत्येवं जना आहुः॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां तृतीयाध्याये (त्रयोदशाध्याये) द्वादशः खण्डः॥१२॥ (३६) [१०७]

[प्रजापति ने] उनमें 'अहि' और 'बुध्न्य' नामक अग्नि विशेष के द्वारा परोक्ष रूप से तेज स्थापित कर दिया। जो गार्हपत्य अग्नि है यही 'अहि-बुध्न्य' है। इसी अग्नि के द्वारा उस [शंसन] से गार्हपत्य अग्नि से प्रजा में परोक्ष रूप से तेज स्थापित कर दिया। इसीलिए कहते हैं कि जो आहुति देता है वह आहुति न देने वाले पुरुष से अधिक श्रेष्ठ होता है।

॥ इस प्रकार तेरहवें अध्याय के बारहवें खण्ड की हिन्दी पूर्ण हुई॥ १२॥

## अथ त्रयोदशः खण्डः

अथ 'देवानां पत्नीरुशतीरवन्तु नः' इत्यृग्द्वयं देवपत्नीदेवताकं विधत्ते—

**देवानां पत्नीः शंसति; अनूचीरग्निं गृहपतिं, तस्मादनूची पत्नी गार्हपत्यमास्ते॥** इति।

---

१. ऋ० ६.५०.१४।

२. अहिरयनात्, एत्यन्तरिक्षेऽयम् [मेघः]—इति, 'बुध्न्यः'—बुध्नमन्तरिक्षम्, तन्निवासात् [विद्युदग्निः]'—इति च निरु० २.५.३; १०.४.७। 'अहिश्चासौ बुध्न्यश्चेत्यहिबुध्न्यः' इति सा० भा० [ऋ० ७.३४.१७] तदेवं मेघसहचरवैद्युतोऽग्निरेवाहिर्बुध्न्योऽवगम्यते। परम् 'उत नोऽहिर्बुध्न्यः'—इत्येषा तु निरुक्ते द्युस्थाननामनिर्वचनावसरे एव निगमत्वेनोद्धृता दृश्यते [१२.३.१४]।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'देवानां पत्नीः' इत्यनेन देवतावाचकेन शब्देन तत्प्रतिपादकमृग्द्वयं[1] विवक्षितम्[2]। ततश्च देवानां पत्नीः 'गृहपतिमग्निमनूचीः' शंसेत्। गृहपतिरग्निरित्येताभ्यां शब्दाभ्यां तत्प्रतिपादिका 'उत नोऽहिर्बुध्न्यः' इति, ऋग्विवक्षिता[3]। तदपेक्षया देवपत्नीनामकस्य मन्त्रजातस्य पश्चाद्भावित्वमन्वक्त्वम्। अतः पूर्वोक्ताया ऋचः पश्चाच्छंसेदित्यर्थः। यस्मादत्रैवं 'तस्माद्' यज्ञशालायां पत्नी गार्हपत्यम 'अनूची आस्ते' पश्चादवतिष्ठत इत्यर्थः॥

iii. ३७ [xiii. १३] गृहपति अग्नि [का प्रतिपादक 'उत नोऽहिर्बुध्न्यः' आदि मन्त्र] के बाद देव-पत्नियों के लिए शंसन करता है। इसीलिए [यज्ञशाला में यजमान की] पत्नी गार्हपत्य अग्नि के पीछे बैठती है।

अत्र कंचित् पूर्वपक्षमुत्थापयति—

**तदाहू राकां पूर्वां शंसेज्जाम्यै वै पूर्वपेयमिति॥** इति।

संपूर्णचन्द्रमण्डलयुक्ता पौर्णमासी राका। तदभिमानिदेवतायाः प्रतिपादिका ऋगपि 'राका' इत्युच्यते। तां राकां 'पूर्वां' देवपत्नीभ्यः पूर्वभाविनीं शंसेत्[4]। सेयं राका, देवानां 'जामि' नाम भगिनी; तस्मात् तस्या एव 'पूर्वपेयं' प्रथमतः सोमपानं युक्तमिति पूर्वपक्षः॥

कुछ ऋषियों के मत में [देवपत्नियों से] पहले राका के लिए मन्त्र पढ़ना चाहिए। क्योंकि [सोमपान में] प्रथमतः बहन का पेय है [वस्तुतः राका देवों की बहन है]।

तं निराकृत्य देवपत्नीनामेव पूर्वत्वं दर्शयति—

**तत्तन्नादृत्यम्, देवानामेव पत्नीः पूर्वाः शंसेत्। एष ह वा एतत् पत्नीषु रेतो दधाति, यदग्निर्गार्हपत्यः अग्निनैवासु तद्गार्हपत्येन पत्नीषु प्रत्यक्षाद् रेतो दधाति, प्रजात्यै॥** इति।

राकायाः पूर्वत्वमनादरणीयम्, देवपत्नीनामेव पूर्वत्वं युक्तम्; गार्हपत्योऽग्निः पत्नीष्वेव रेतः स्थापयति, न तु भगिन्याम्। तस्मात् पत्नीनां पूर्वशंसनेन प्रत्यक्षमेव पत्नीषु गार्हपत्यमुखेन रेतः स्थापयति। तच्च 'प्रजात्यै' संपद्यते॥

किन्तु यह मत आदरणीय नहीं है। देव-पत्नियों के लिए प्रथमतः शंसन करना चाहिए। जो गार्हपत्य अग्नि है वह इन पत्नियों में वीर्य स्थापित करती है। इस प्रकार इस [शंसन] से गार्हपत्य अग्नि द्वारा इन पत्नियों में वह प्रत्यक्ष रूप से वीर्य स्थापित करता है। यह यजमान के प्रजोत्पादन के लिए होता है।

---

१. 'देवानां पत्नीरुशतीरवन्तु न इति द्वे'— इति आश्व० श्रौ० ५ २०.६।

२. ऋ० ५.४६ ७,८।

३. द्र० इतः पूर्वम् ५१० पृ०।

४. राकायाः शंसनविध्यादिकमनुपदं वक्ष्यति।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदनं प्रशंसति—

**प्रजायते प्रजया पशुभिर्य एवं वेद ॥ इति ।**

**जो इस प्रकार जानता है वह पुत्र-पौत्रादि प्रजा और गो-अश्वादि पशुओं से युक्त हो जाता है ।**

लौकिकोदाहरणेन पत्नीनां पूर्वभावित्वं भगिन्याः पश्चाद्भावित्वं चोपपादयति—

**तस्मात् समानोदर्या स्वसाऽन्योदर्यायै जायाया अनुजीविनी जीवति ॥ इति ।**

पुरुषाणामेकोदरजाऽपि भगिनी परस्मै दीयते । भिन्नोदरजाऽपि जाया स्वार्थं स्वीक्रियते । तथा सति परस्मै दत्ता भगिनी यदा कदाचिद् भ्रातृगृहमागत्य जायामनुसृत्य तद्दत्तान्नपानाभ्यां जीवन्ती सती 'जीवति' कंचित्कालमवतिष्ठति ॥

**इसीलिए बहन एक ही पेट से जन्म लेकर भी अपनी भार्या की अनुजीवी [अनुसरण करके ही रहने वाली] ही होती है, जबकि भार्या दूसरे पेट से जन्म लेती है ।**

'राकामहम्'–इति ऋग्द्वयं विधत्ते—

**राकां शंसति, राका ह वा एतां पुरुषस्य सेवनीं सीव्यति, यैषा शिश्नेऽधि[1] ॥ इति ।**

देवतावाचिराकाशब्देन तदभिधायिनी ऋगभिधीयते[2] तां शंसेत् । पुरुषस्य 'शिश्नेऽधि' शिश्नस्योपरि स्थिता, गुदवलयपर्यन्तं[3] व्याप्ता यैषा 'सेवनी', एतच्छब्दाभिधेया उपस्थशिराऽस्ति, 'एतां' शिरां राकाख्या देवता 'सीव्यति' दृढबद्धां करोति । तस्मात् तदीयामृचं शंसेत्[4] ॥

**वह राका के लिए मन्त्र बोलता है । राका ही इस पुरुष के शिश्न के ऊपर स्थित गुदापर्यन्त जो यह सीवनी है उसे सी देती है ।**

वेदनं प्रशंसति—

**पुमांसोऽस्य पुत्रा जायन्ते य एवं वेद ॥ इति ।**

**जो इस प्रकार जानता है उसे पुमान् पुत्र उत्पन्न होते हैं ।**

'पावीरवी कन्या'–इत्येतामृचं[5] विधत्ते—

**पावीरवीं शंसति, वाग्वै सरस्वती पावीरवी । वाच्येव तद् वाचं दधाति ॥ इति ।**

---

१. 'शिश्न्येऽधि'—इति वा पाठः । किन्तु 'शिश्नेऽधि' इति सायणसम्मतः ।

२. ऋ० २.३२.४ । ३. 'गुदबिलपर्यन्तम्' इति वा पाठः ।

४. आश्वलायनेन तु ऋग्द्वयं विहितम् 'राका महमिति द्वे'—इति (५.२०.६); इहापि उपक्रमभाष्ये उक्तं 'राकामहमिति ऋग्द्वयं विधत्ते'–इति तदेतद् विचार्यं विद्वद्भिः ।

५. ऋ० ६.४९.७ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

येयं वागभिमानिनी 'सरस्वती' देवता, सैव 'पावस्य' शोधनस्य हेतुत्वात् 'पावीरवी'। तत्पाठेन 'वाच्येव' देवतायां मन्त्ररूपायां 'वाचं' स्थापयति ॥

**'पवीरवी' के लिए मन्त्र पढ़ता है। वाक् की अभिमानिनी देवता सरस्वती ही 'पावीरवी' है। उस [पाठ] से वाग्देवता में मन्त्र रूप वाणी को ही स्थापित करता है।**

अत्र विचारमवतारयति —

**तदाहुर्यामीं पूर्वां शंसे३त्, पित्र्या३मिति ॥** इति।

'इमं यम प्रस्तरम्'[1] इत्येषा यमदेवताकत्वाद् 'यामी', 'उदीरतामवरः' इत्येषा पितृदेवताकत्वात् 'पित्र्या'। उभयोः पौर्वापर्यकारणस्यानिश्चयाद् विचारः, तदर्था प्लुतिः ॥

**कुछ लोग प्रश्न करते हैं कि पहले यम-देवता के लिए मन्त्र पढ़ना चाहिए अथवा पितरों के लिए।**

तत्र निर्णयं दर्शयति —

**यामीमेव पूर्वां शंसेत् 'इमं यम प्रस्तरमा हि सीद' इति राज्ञो वै पूर्वपेयं तस्माद् यामीमेव पूर्वां शंसेत् ॥** इति।

यमो हि राजा। 'यमः पितॄणां राजा'—इति श्रुत्यन्तरात्[2]। राज्ञश्च प्रथमपानं युक्तम् ॥

**पहले यम का ही मन्त्र पढ़ना चाहिए। 'हे यम इस प्रस्तर पर आसीन होओ' [वस्तुतः यम राजा हैं और] राजा को ही प्रथमतः सोमपान का अधिकार है। इसीलिए पहले यम के लिए ही मन्त्र पढ़ना चाहिए।**

पूर्वोक्तयाम्याः अन्यां यामीं विधत्ते—

**'मातली कव्यैर्यमो अङ्गिरोभिरिति' काव्यानामनूचीं शंसति। अवरेणैव वै देवान् काव्याः परेणैव पितॄन्, तस्मात् काव्यानामनूचीं शंसति ॥** इति।

'कव्यैः' इति श्रुतत्वाद् इयं काव्यानामृक्, सा[3] च पूर्वोक्तामृचमनु पश्चाद् गच्छतीति 'अनूची', तां तथैव शंसेत्। 'काव्याः' देवानां स्तोतारः केचिदधमजातिविशेषाः, पितृभ्योऽप्युत्तमजातीयाः। तदेव 'देवानवरेण' पितॄन् 'परेण'—इत्युच्यते। अत एव पूर्वमुक्ताया याम्याः, वक्ष्यमाणायाः पित्र्याश्च मध्ये तच्छंसनं युक्तम् ॥

**'मातलि काव्यों अर्थात् देवताओं के स्तोता कोई अधम जाति विशेष के साथ और यम अङ्गिराओं के साथ'—आदि ऋचा को काव्यों के लिए पूर्वोक्त ऋचा के बाद पढ़ता**

---

१. ऋ० १०.१४.४। २. तै० सं० २.६.६। द्र० 'यावन्तो वै मृत्युबन्धवस्तेषां यम आधिपत्यं परीयाय'—इति तै० सं० ५.१.८.२। ३. ऋ० १०.१४.३।



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

है। काव्य देवों से छोटे और पितरों से बड़े हैं। इसीलिए काव्यों के लिए पूर्वोक्त [यम की] ऋचा के बाद [और वक्ष्यमाण पितरों की ऋचा के पहले] शंसन करता है।

अथ तिस्रः पितृदेवताका ऋचो विधत्ते—

**'उदीरतामवर उत्परासः'[1] इति पित्र्याः शंसति ॥** इति।

'उदीरतामवर' इत्यादि पितृ-देवताक मन्त्रों का शंसन करता है।

उदाहृतं पादं द्वितीयपादेन सह व्याख्यातुं द्वितीयपादं पठति—

**'उन्मध्यमाः पितरः सोम्यासः' इति ॥** इति।

'उत्तम, मध्यम और अधम आदि तीन श्रेणियों के सोमभागी पितृगण क्रम से ऊर्ध्व-लोकों को प्राप्त होवें।'

पादद्वयं व्याचष्टे—

**ये चैवावमा, ये च परमा, ये च मध्यमास्तान् सर्वाननन्तरायं प्रीणाति ॥** इति।

'अवरे' निकृष्टाः पितरः 'उदीरताम्' उत्कर्षेण गच्छन्तु। 'परास.' उत्कृष्टाः पितर उदीरताम्। तथा 'मध्यमाः' निकृष्टोत्कृष्टमध्यवर्तिनः पितर उदीरताम्। ते त्रिविधाः पितरः 'सोम्यासः' सोमयोग्याः 'इति' एतस्य पादद्वयस्य पाठेन त्रिविधानपि पितॄन् 'अनन्तरायं' कस्याप्यन्तरायो यथा न भवति तथा तर्पयति ॥

जो निकृष्ट पितर हैं और जो उत्कृष्ट पितर है और जो मध्यमस्थानीय पितर हैं; उन सभी पितरों को, किसी को भी न छोड़कर वह [दो पादों के पाठ से] प्रसन्न करता है।

विहितासु तिसृष्वृक्षु प्रथमाया उदाहृतत्वादनन्तरभाविनीं द्वितीयामृचं दर्शयति—

**'आहं पितॄन्त्सुविदत्राँ अवित्सि'[2] इति द्वितीयां शंसति ॥** इति।

'भलीभाँति परिचित पितरों को हमने पाया है'—आदि का द्वितीय ऋचा के रूप में शंसन करता है।

तस्या ऋचस्तृतीयपादमनूद्य व्याचष्टे—

**'बर्हिषदो ये स्वधया सुतस्य' इत्येतद्ध वा एषां प्रियं धाम; यद्बर्हिषद इति, प्रियेणैवैनांस्तद्धाम्ना समर्धयति ॥** इति।

बर्हिषि दर्भे सीदन्त्युपविशन्तीति 'बर्हिषदः' पितरः। अत्र 'बर्हिषदः' इति यदुच्यते 'एतद्ध वै' एतदेव बर्हिः 'एषां' पितॄणां प्रियं स्थानम्, तस्माद् एतत्पाठेन 'एनान्' पितॄन् प्रियेणैव 'धाम्ना' स्थानेन समृद्धान् करोति ॥

---

१. ऋ० १०.१५.१।        २. ऋ० १०.१५.३।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'जो पितर कुशों पर बैठते हैं और हव्य के साथ सोमरस का ग्रहण करते हैं'—आदि [तीसरे पाद] में 'बर्हिषदाम्' जो कहा है, इसमें उक्त यह कुश ही इन [पितरों] का प्रिय स्थान है। इसीलिए इसके पाठ से वह उनके प्रिय धाम के द्वारा ही इनको समृद्ध करता है।

वेदनं प्रशंसति—

**प्रियेण धाम्ना समृध्यते य एवं वेद ॥** इति।

जो इस प्रकार जानता है वह प्रिय धाम के द्वारा समृद्धि को प्राप्त होता है।

तृतीयामृचं दर्शयति—

**'इदं पितृभ्यो नमो अस्त्वद्य' इति नमस्कारवतीमन्ततः शंसति; तस्मादन्ततः पितृभ्यो नमस्क्रियते ॥** इति।

अस्यामृचि 'नमो अस्तु' इति श्रूयमाणत्वात् इयं 'नमस्कारवती'[1] तामेतां तिसृणां पित्र्याणामन्ते शंसेत्। यस्मादेवं तस्माच्छ्राद्धस्यान्ते 'नमो वः पितरः' इत्यादिना[2] पितृभ्यो नमस्कारः क्रियते ॥

'यह पितरों के लिए नमस्कार है' आदि [ऋचा में नमः पद होने से इस] नमस्कारवती ऋचा का अन्त में शंसन करता है। इसीलिए [श्राद्ध के] अन्त में ['नमो वः पितरः' आदि ऋचा से] पितरों को नमस्कार किया जाता है।

एतासु पित्र्यासु कंचिद् विशेषं विचार्य निर्णयं दर्शयति—

**तदाहुर्व्याहावं पित्र्याः शंसे३त्। अव्याहावाँ३इति। व्याहावमेव शंसेत्, असंस्थितं वै पितृयज्ञस्य साधु। असंस्थितं वा एष पितृयज्ञं संस्थापयति यो व्याहावं शंसति, तस्माद् व्याहावमेव शंस्तव्यम् ॥ ३७ ॥** इति।

'शोंसावोम्'-इति मन्त्र आहावः। अनेन मन्त्रेण प्रत्यृचं 'व्याहावं' विशेषेणाहूयाहूय किं तिस्रः पित्र्याः शंसेत्? आहोस्विद् 'अव्याहावं' पृथक्पृथगाहावमन्त्रं विना शंसेदिति विचारं ब्रह्मवादिन आहुः। अत्र 'पित्र्याः शंसति'-इत्येकेनैव विधिना विहितत्वात् पृथक्पृथगाहावो नास्तीति पक्षः प्रतिभाति। पुनरपि 'द्वितीयां शंसति नमस्कारवतीं शंसति' इति पृथग्विधिदर्शनात् प्रत्येकमाहावः कर्तव्य इत्यपि प्रतिभाति। विचारार्थं प्लुतिद्वयम्। तत्र पृथक्पृथगाहाव एव सिद्धान्तः। तत्रेयमुपपत्तिः—पितृयज्ञस्य संबन्धि यदङ्गम् 'असंस्थितम्' एव वर्तते, असमाप्तं तिष्ठति; तदङ्गं 'साधु' समाप्तं कर्तव्यम्। 'यो' होता पृथगाहावं कृत्वा शंसति, 'एषः' होता पूर्वम् 'असंस्थितम्' असमाप्तं पितृयज्ञं संस्थापयति। तस्मात् पृथक्पृथगाहावमन्त्रं पठित्वैव शंस्तव्यम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां तृतीयाध्याये (त्रयोदशाध्याये) त्रयोदशः खण्डः ॥१३॥ (३७) [१०८]

---

१. ऋ० १०.१५.२। २. वाज० सं० २०.३२।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यहाँ ब्रह्मवादी प्रश्न करते हैं कि इन पितृ-देवताक ऋचाओं का विशेष रूप से आहाव अर्थात् 'शोंसावोम्' करके शंसन करे अथवा बिना आहाव के ? विशेष रूप से पृथक्-पृथक् आहाव करके ही शंसन करे। वस्तुतः पितृयज्ञ के असमाप्त कार्य को समाप्त करना चाहिए। जो होता विशेष रूप से पृथक् आहाव करके शंसन करता है, वह पूर्व में असमाप्त पितृयज्ञ को संस्थापित करता है। इसलिए पृथक् आहाव मन्त्र पढ़कर ही शंसन करना चाहिए।

॥ इस प्रकार तेरहवें अध्याय के तेरहवें खण्ड की हिन्दी पूर्ण हुई ॥ १३ ॥

## अथ चतुर्दशः खण्डः

अथ चतस्र ऋचो विधत्ते—

**'स्वादुष्किलायं मधुमाँ उतायम्' इतीन्द्रस्यैन्द्रीरनुपानीयाः शंसति, एताभिर्वा इन्द्रस्तृतीयसवनमन्वपिबत्, तदनुपानीयानामनुपानीयात्वम् ॥ इति ।**

'स्वादुष्किलायम्'—इत्यादिका ऋच[1] 'ऐन्द्रच' इन्द्रदेवताकत्वात् 'पपिवांसमिन्द्रम्' इतीन्द्रः तृतीयपादे श्रूयते। ताश्चेन्द्रस्यानुपानीयाः भोजनादूर्ध्वं यत्पानं, तत्पश्चाद्भावित्वाद् अनुपानं, तत्स्थानीया एता ऋचः। ताः शंसेत्। कथमिवासामनुपानीयात्वम् ? इति तदुच्यते—अयम् इन्द्रस्तृतीयसवनम् 'अनु' पश्चाद् 'एताभिः' ऋग्भिः शस्यमानः सन् सोमम् अपिबत् तस्मादनुपानीयेति नाम संपन्नम् ॥

iii. ३८ [xiii. १४] 'यह अभिषुत सोम सुस्वादु, मधुर और तीव्र रसवान् है'—आदि इन्द्र के अनुपान [=भोजनोपरान्त सोमपान] स्थानीय इन्द्रदेवताक ऋचा का शंसन करता है। इन्हीं से इन्द्र ने तृतीयसवन के बाद सोम का पान किया था इसीलिए इनका नाम 'अनुपानीय ऋचा' हुआ।

एतच्छंसनकालेऽध्वर्योः प्रतिगरमन्त्रे विशेषं विधत्ते—

**माद्यन्तीव वै तर्हि देवता यदेता होता शंसति, तस्मादेतासु मद्वत् प्रतिगीर्यम् ॥ इति ।**

तस्मिन्ननुपानीयानामृचां शंसनकाले होतुः शंसनं श्रुत्वा देवताः सर्वाः 'माद्यन्तीव वै' सर्वथा हृष्यन्त्येव। 'तस्मात्' कारणाद् 'एतासु' ऋक्षु शस्यमानास्वध्वर्युणा 'मद्वत्प्रतिगीर्यं' मदिधातुयुक्तं प्रतिगरणं पठनीयम्। 'मदामो दैव' इत्ययं मदिधातुयुक्तः प्रतिगरणमन्त्रः[2] ॥

---

१. ऋ० ६.४७.१–४।

२. स्वादुष्किलायमिति चतस्रो मध्ये चाह्वानं मदा मोदैव मोदा मोदैवोमित्यासां प्रतिगरौ'—इति आश्व० श्रौ० ५.२०.६।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जब होता इन मन्त्रों को पढ़ता है तो [शंसन सुनकर] सभी देवता सर्वथा हर्षित ही होते हैं। इसलिए इनके शंसन के समय [अध्वर्यु को] 'मद्' धातुयुक्त प्रतिगर मन्त्र ['मदा मोदैव' आदि] पढ़ना चाहिए।

ऋगन्तरं विधत्ते—

**'ययोरोजसा स्कभिता रजांसीति' वैष्णुवारुणीमृचं शंसति, विष्णुर्वै यज्ञस्य दुरिष्टं पाति वरुणः स्विष्टम्। तयोरुभयोरेव शान्त्यै ॥ इति।**

विष्णुर्वरुणश्च मिलित्वा देवता यस्या ऋचः, सा 'वैष्णुवारुणी'; तां शंसेदित्यर्थः। तस्याश्चतुर्थपादे 'विष्णुरगन्वरुणा'—इति श्रवणाद् वैष्णुवारुणीत्वम्। सा च आश्वलायनेन पठिता[1]। 'दुरिष्टम्' अङ्गविकलं यदनुष्ठितं, तद्विष्णुः 'पाति' वैकल्यं निवारयतीत्यर्थः। 'स्विष्टं' साकल्येन यदङ्गमनुष्ठितं, तद्वरुणः 'पाति' तस्य फलप्रतिबन्धं निवारयतीत्यर्थः। तस्मादियमृक् 'तयोरुभयोः' विष्णुवरुणयोरेव 'शान्त्यै' प्रीत्यै संपद्यते ॥

'जिसके बल से अन्तरिक्ष आदि लोक स्थित हैं'—इस विष्णु और वरुण देवताक ऋचा का शंसन करता है। विष्णु ही यज्ञ के अङ्गवैकल्य का निवारण करते हैं और वरुण उसके फलप्रतिबन्धकता का। इसलिए यह ऋचा उन दोनों के ही प्रीति के लिए है।

ऋगन्तरं विधत्ते—

**'विष्णोर्नु कं वीर्याणि प्र वोचम्' इति वैष्णवीं शंसति, यथा वै मत्यमेवं यज्ञस्य विष्णुः। तद्यथा दुष्कृष्टं दुर्मतीकृतं सुकृष्टं सुमतीकृतं कुर्वन्नियादेव-मेवैतद् यज्ञस्य दुष्टुतं दुःशस्तं सुष्टुतं सुशस्तं कुर्वन्नेति, यदेतां होता शंसति ॥ इति।**

'विष्णोः' इति श्रूयमाणत्वाद् इयं 'वैष्णवी'[2]। मतौ बुद्धौ सम्यक्त्वेन प्रतिभातं कार्यं 'मत्यम्'। अयं दृष्टान्तः। विष्णुर्दार्ष्टान्तिकः। यथा मत्यं कार्यं लोके फलपर्यवसायि भवति, तथा विष्णुरपि फलपर्यवसायीत्यर्थः। उक्तयोर्दृष्टान्तदार्ष्टान्तिकयोः तात्पर्यं तद्यथे-त्यादिना प्रपञ्च्यते। यथा लोके 'दुष्कृष्टं' कर्षकैः सस्यस्थाने दोषयुक्तं यथा भवति तथा कर्षणं कृतम्। यत्किंचिद् राजकार्यममात्यैः 'दुर्मतीकृतं' दुष्टं मतमन्यथा चिन्तितं, पूर्वं तत्कार्यमदुर्मतं सत्पश्चाद् बुद्धिप्रमादाद् दुर्मतं संपादितं तत्र कश्चिद् बुद्धिमान् कर्षकः कृष्ट-स्थाने दुष्टस्य तृणादेरपनयनेन 'सुकृष्टं कुर्वन्नियात्' कर्षकस्य पृष्ठतो गच्छेत्। राजकार्यमपि

---

१. ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा।
या पत्येते अप्रतीता सहोभिर्विष्णुरगन् वरुणा पूर्वहूतौ ॥
—इति आश्व० श्रौ० ५.२०.६।

२. ऋ० १.१५४.१।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दुर्बुद्धिनाऽमात्येन 'दुर्मतीकृतं' कश्चित्सुबुद्धिरमात्यः सुमती कुर्वन् गच्छेत् । यथैतदुभयं लोके, एवमेवास्मिन् कर्मणि यज्ञसंबन्धि यत्स्तोत्रमकुशलैरुद्गातृभिर्दोषसहितं कृतं, यदपि होतृभिः शस्त्रं दोषसहितं पठितं, तदुभयमपि विष्णुः क्रमेण सुष्टुतं सुशस्तं कुर्वन् 'एति' गच्छति, तत्रत्यदोषं परिहरतीत्यर्थः । 'यद्' यदा वैष्णवीमेतां होता शंसति, तदा तदुभय-समाधानमिति द्रष्टव्यम् ॥

'विष्णु के पराक्रम को मैं कहूँगा'—इस विष्णु देवताक ऋचा का शंसन करता है। जैसे बुद्धि से ठीक-ठीक कार्य होता है वैसे ही विष्णु यज्ञ में बुद्धि स्वरूप हैं। जैसे बुद्धिमान कृषक दोषयुक्त कर्षण को तृणादि के अपनयन के द्वारा सुन्दर करते हुए कृषक के पीछे चलता है और जैसे दुर्बुद्धि अमात्य के द्वारा किए गए दुर्मति युक्त कार्य को बुद्धिमान् अमात्य सुन्दर करते हुए चलता है वैसे ही जब होता इस [वैष्णवी] ऋचा का शंसन करता है तो इस यज्ञ के दुःस्तुत और दुःशस्त पाठ को सुस्तुत और सुशस्त करते हुए जाता है।

ऋगन्तरं विधत्ते—

**'तन्तुं तन्वन् रजसो भानुमन्विहि' इति प्राजापत्यां शंसति, प्रजा वै तन्तुः। प्रजामेवास्मा एतत् संतनोति ।। इति ।**

अस्यामृचि काचिदपि देवता साक्षाद्वाचकशब्देन नोक्ता तस्माद् इयम्[1] अनिरुक्ता । तादृश्याश्च प्रजापतिर्देवता, तद्दैवताकत्वं पूर्वमेव निरूपितम्,[2] तामेतां 'प्राजापत्यां' शंसेत् । हे प्रजापते, 'तन्तुं तन्वन् पुत्रपौत्रादिसंततिं विस्तारयन् 'रजसः' रञ्जनात्मकस्य जगतो 'भानुं' भासकमादित्यम् 'अन्विहि' अनुगच्छ। आदित्यो हि पुनः पुनः संचरन्नहोरात्र-निष्पत्तिं करोति, तत्कालानुसारेणैव त्वमपि संतानवृद्धिं कुर्वित्यर्थः। अस्मिन् पादे 'तन्तु' शब्देन पुत्रपौत्रादिप्रजा विवक्षिता; तन्तुवद विस्तार्यमाणत्वात् तस्मादेतत् पाठेन 'अस्मै' यजमानाय प्रजामेव 'संतनोति', अविच्छिन्नां करोति ॥

'हे प्रजापति, पुत्र-पौत्रादि संतति का विस्तार करते हुए रञ्जनात्मक जगत् के भासक आदित्य का अनुगमन करो अर्थात् सन्तान की वृद्धि करो'—इस प्रजापति-देवताक ऋचा का शंसन करता है। यहाँ 'तन्तु' का अर्थ प्रजा है। अतः उस [पाठ] से इस [यजमान] के लिए प्रजा का ही विस्तार करता है।

द्वितीयपादमनूद्य व्याचष्टे—

**'ज्योतिष्मतः पथो रक्ष धिया कृतान्' इति। देवयाना वै ज्योतिष्मन्तः पन्थानः। तानेवास्मा एतद् वितनोति ।। इति ।**

---

१. ऋ० १०.५३.६ ।

२. द्र० इतः पूर्वम् ४८६ पृष्ठे; 'अनिरुक्ते' इत्यादि द्रष्टव्यम् ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हे प्रजापते 'धिया कृतान्' यागाद्यनुष्ठानबुद्धया संपादितान् 'ज्योतिष्मतः' प्रकाश-युक्तान् 'पथः' स्वर्गमार्गान् 'रक्ष' विघ्नपरिहारेण पालय। अत्र 'ज्योतिष्मत्पथि'–शब्दा-भ्यां देवगमनमार्गा विवक्षिताः। देवा येषु मार्गेषु यान्ति गच्छन्ति, ते 'देवयानाः'। सर्वेषां देवानां तेजस्वित्वात् तन्मार्गेषु न कदाऽप्यन्धकारोऽस्ति। तस्मादेतत् पादपाठेन 'अस्मै' यजमानाय 'तान्' एव मार्गान् होता विस्तारयति॥

'हे प्रजापति, यागादि अनुष्ठान बुद्धि से सम्पादित प्रकाशयुक्त मार्गों का विघ्न हटाते हुए पालन करो'—यहाँ ज्योतिष्मत् और पथि शब्द का अर्थ देवगमनमार्ग है। अतः उससे वह होता इस यजमान के लिए उन मार्गों का ही विस्तार करता है।

उत्तरार्धमनूद्य व्याचष्टे—

**'अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम्' इति। एवैनं तन्मनोः प्रजया संतनोति, प्रजात्यै॥ इति।**

पुनः पुनः कर्मसु गच्छन्ति प्रवर्तन्त इत्यनुष्ठानशीला 'जोगु' शब्देनोच्यन्ते। तादृशानां 'जोगुवाम्' अस्मत्संततावुत्पन्नानां पुत्रादीनाम् 'अपः' अनुष्ठीयमानमेतत्कर्मानुल्बणमनति-रिक्तं 'वयत' हे प्रजापते, 'वय' निर्वह। बहुवचनं पूजार्थम्। 'मनुर्भव' त्वमपि मनुष्यो-त्पादनार्थमनुरूपो भव। ततो 'दैव्यं' देवताराधनयोग्यं 'जनं' पुत्रादिरूपं मनुष्यं 'जनय' उत्पादय। 'तत्'तेनार्धपाठेन 'एनं' यजमानं 'मनोः' संबन्धिन्या 'प्रजया' मनुष्यरूपया 'संतनोति' संयोजयति। तच्च 'प्रजात्यै' यजमानस्य प्रजोत्पादनाय संपद्यते॥

'हे प्रजापति, अनुष्ठानशील हमारे उत्पन्न पुत्रादिकों का अनुष्ठीयमान इस कर्म का बिना त्रुटि के निर्वाह करो। तुम भी मनुष्योत्पादनार्थ मनु रूप होओ और देवताराधन योग्य पुत्रादि रूप मनुष्य को उत्पन्न करो'—उस [उत्तरार्ध ऋचा के पाठ] से इस [यजमान] को मनु की [=मनुष्य रूप] प्रजा द्वारा संयोजित करता है। यह यजमान के प्रजोत्पादनार्थ ही होता है।

वेदनं प्रशंसति—

**प्रजायते प्रजया पशुभिर्य एवं वेद॥ इति।**

जो इस प्रकार जानता है वह प्रजा और पशुओं से वृद्धि को प्राप्त होता है।

ऋगन्तरेण शस्त्रसमाप्तिं विधत्ते—

**'एवा न इन्द्रो मघवा विरप्शी' इत्युत्तमया परिदधाति। इयं वा इन्द्रो मघवा विरप्शी॥ इति।**

योऽयमिन्द्रोऽस्ति, सोऽयं 'न एवा'अस्मदर्थमेव, करत करोत्विति द्वितीयपादे वक्ष्यमाणेन-संबन्धः। कीदृश इन्द्रः?' 'मघवा' धनवान्। तथा 'विरप्शी'' रम रामस्ये' इत्यस्माद्धातो-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रुत्पन्नोऽयं शब्दः । विशेषेण राभस्यवान् सर्वदोद्युक्त इत्यर्थः । अनयर्चा[1] 'उत्तमया शस्त्रापेक्षयाऽन्तिमया परिधानं कुर्यात् । उदाहृते प्रथमपाद इन्द्रादिशब्दैः सर्वैरपि 'इयं वै' भूमिरेवोपलक्ष्यते । अनया भूमिस्पर्शस्य विधास्यमानत्वात् ॥

'धनवान् और सर्वदा उद्युक्त इन्द्र हमारे लिए ही [अभिलषित सम्पादित] करें'—इस अन्तिम ऋचा से कर्म की समाप्ति करता है। वस्तुतः यह भूमि ही इन्द्र मघवा और विरप्शी है।

द्वितीयपादमनूद्य व्याचष्टे—

**'करत् सत्या चर्षणीधृदनर्वा' इति । इयं वै सत्या चर्षणीधृदनर्वा ॥** इति ।

'चर्षणी' शब्दो मनुष्यवाची, तान् धारयति पोषयतीति 'चर्षणीधृत्' इन्द्रः । सो यम् 'अनर्वा' हयं परित्यज्य यागभूमावुपविष्टत्वाद् अश्वरहितः । तादृशः सन् 'सत्या' फलप्रदानस्या वश्यकत्वेन सत्यानि कर्माणि 'करत्' करोतु विघ्नपरिहारेण संपादयतु । अस्मिन्नपि पादे सत्यादिपदैः पूर्ववदियं भूमिरेवोपलक्षणीया ॥

'मनुष्यों का पोषण करने वाले इन्द्र अश्वरहित हो सत्य कर्मों का सम्पादन करें'—यहाँ यह पृथ्वी ही सत्या, चर्षणीधृत् [=मनुष्यों का पालन करने वाली] और अनर्वा [अश्वरहित यज्ञभूमि] है।

तृतीयपादमनूद्य व्याचष्टे—

**'त्वं राजा जनुषां धेह्यस्मे' इति इयं वै राजा जनुषाम् ॥** इति ।

'जनुषां' जातानाम् 'अस्मे' अस्माकमृत्विजां हे इन्द्र, त्वं राजा भूत्वा 'धेहि' वक्ष्यमाणमभीष्टं संपादय । अस्मिन्नपि पादे 'राजा जनुषाम्' इति पदद्वयेन पूर्ववद् इयं भूमिरेवोपलक्षणीया ॥

'हे इन्द्र, उत्पन्न हम ऋत्विजों के राजा होकर अभीष्ट का सम्पादन करो'—यहाँ यह पृथ्वी ही 'राजा जनुषाम्' है।

चतुर्थपादमनूद्य व्याचष्टे—

**'अधि श्रवो माहिनं यज्जरित्रे' इति । इयं वै माहिनं यज्ञश्रवः । यजमानो जरिता यजमानायैवैतामाशिषमाशास्ते ॥** इति ।

'जरित्रे' स्तोत्रे यजमानाय 'यत्' प्रसिद्धं 'माहिनं' महत्त्वं 'श्रवः' कीर्तिं च 'अधि' धेहीति पूर्वेणान्वयः; हे इन्द्र, ममाधिक्येन संपादयेत्यर्थः । अस्मिन्नपि पादे 'माहिनम्' इत्यनेनेयं भूमिरेवोपलक्षणीया । यच्छब्दो नपुंसकलिङ्गो य इति पुंलिङ्गत्वेन विपरिणमयितव्यः । तेन यो 'यज्ञः' इति प्रसिद्धं यज्ञमाचष्टे । सोऽपीयं भूमिरेव । कीर्तिवाचिना 'श्रवः' शब्देनापि भूमिरेवोपलक्षणीया । यजमानो 'जरितृ' शब्देनाभिधेयः । एतत्पादचतुष्टयपाठेन होता यजमानार्थमेव आशासनीयं सर्वं प्रार्थयते ॥

---

१. ऋ० ४.१७.२० ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'स्तोता यजमान के लिए जो प्रसिद्ध महत्त्व से युक्त कीर्ति है उसे हे इन्द्र अत्यधिक सम्पादित करो'—यहाँ यह भूमि ही 'माहिनं' है, यत् से उक्त यज्ञ और श्रवः भी भूमि का उपलक्षक है। यजमान ही जरिता (स्तोता) है। होता यजमान के लिए ही सभी आशंसनीय की प्रार्थना करता है।

परिधानकाले होतुर्भूमिस्पर्शनं विधत्ते—

**तदुपस्पृशन् भूमिं परिदध्यात् तद् यस्यामेव यज्ञं संभरति, तस्यामेवैनं तदन्ततः प्रतिष्ठापयति ॥** इति ।

'तत्' तदा शस्त्रसमाप्तिकाले भूमिं स्पृशन्नेव 'परि दध्यात्' समापयेत् । 'तत्' तेन स्पर्शेन यस्यामेव भूमौ यज्ञमनुष्ठातुं साधनं 'संभरति' संपादयति, तस्यामेव भूमौ 'एनं यज्ञं 'तदन्ततः' तत्समाप्तिपर्यन्तं प्रतिष्ठापयति ॥

उस [शस्त्र समापन के] समय भूमि का स्पर्श करते हुए समापन करना चाहिए। उस [स्पर्श] से जिस भूमि पर यज्ञ का अनुष्ठान करने के लिए साधन का सम्पादन करता है उसी भूमि में ही इस [यज्ञ] को अन्त में प्रतिष्ठित कर देता है।

अत्र शस्त्रयाज्यां विधत्ते—

**'अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः' इत्याग्निमारुतमुक्थं शस्त्वा आग्निमारुत्या यजति, यथाभागं तद्देवताः प्रीणाति, प्रीणाति ॥ ३८ ॥** इति ।

अग्निर्मरुतश्च यस्य 'उक्थस्य' शस्त्रस्य देवता तत् 'आग्निमारुतमुक्थं' पूर्वोक्तप्रकारेण शस्त्वा तत् ऊर्ध्वम् 'अग्ने मरुद्भिः' इत्येतया 'आग्निमारुत्या' यजेत् । आग्निमारुतीं याज्यां[1] पठेदित्यर्थः[2] । तथा सति तस्मिञ्शस्त्रे प्रतिपादिता यावत्यो देवताः सन्ति ताः सर्वास्तद्भागमनतिक्रम्य तर्पयति । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां तृतीयाध्याये (त्रयोदशाध्याये) चतुर्दशः खण्डः ॥१४॥ (३८) [१०९]

---

१. ऋ० ५.६०.८ ।

२. 'अग्ने मरुद्भिः···इति याज्या । इत्यन्तोऽग्निष्टोमोऽग्निष्टोमः'—इति आश्व० श्रौ० ५.२०.८ । यदुक्तं भाष्ये 'तस्य ज्योतिष्टोमस्य सप्तसंस्थोपेतस्याग्निष्टोमः, उक्थ्यः, षोडश्यतिरात्रश्चेत्येताश्चतस्रः संस्थाः अत्रानुक्रमेण वक्ष्यन्ते'—इति । तत्र प्रथमसंस्थारूपस्याग्निष्टोमस्य हौत्राणामुपदेशा एवेह समाप्ताः; अत्र हि ब्राह्मणे हौत्राण्येवाम्नातानि, आध्वर्यवाणि तु शतपथादौ द्रष्टव्यानि । तत्र शतपथे तृतीयचतुर्थाभ्यां काण्डाभ्यामेकाहाहीनसत्रलक्षणसकलसोमयागप्रकृतिभूतोऽयमग्निष्टोमोऽभिहितः, तथा कातीयश्रौतसूत्रेऽपि 'वसन्तेऽग्निष्टोमः (७.१.७)'—इत्यारभ्य 'एष प्रथमः सोमः (१०.९.२५)'—इत्यन्तो द्रष्टव्यः । एवं सामब्राह्मणे षष्ठादिषु चतुः प्रपाठकेषु 'प्रजापतिरकामयत (ता० ब्रा० ६.१.१)—इत्यादिभिः अग्निष्टोमीयानि औद्गात्राणि विहितानि ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधर-सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश-नाम भाष्ये ऐतरेय-ब्राह्मणभाष्यस्य कृतौ तृतीयपञ्चिकायाः तृतीयोऽध्यायः (त्रयोदशोऽध्यायः) समाप्तः ॥ ३ ॥

अग्नि और मरुद्देवताक उक्थ को पढ़कर 'हे अग्नि, शोभायमान और पूजनीय मरुतों के साथ सोमपान करो'—इस अग्नि और मरुद्देवताक याज्या से यजन करता है। इस प्रकार उस शस्त्र-प्रतिपादित देवों को उनके भाग के अनुसार प्रसन्न करता है।

॥ इस प्रकार ऐतरेय ब्राह्मण की तृतीय पञ्चिका के तृतीय (तेरहवें) अध्याय की हिन्दी पूर्ण हुई ॥ ३ ॥

—०—

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ चतुर्थोऽध्यायः

## प्रथमः खण्डः

# [अथ चतुर्दशोऽध्यायः

## प्रथमः खण्डः]

त्रयोदशे सोमकथा प्रकीर्तिता
राजक्रयार्था सवनान्विताऽपि च ।
स्याद् वैश्वदेवं च मरुत्वतीयं
तद्तद्विशेषा उदिताः क्रमेण ॥ १ ॥

अथ पूर्वाध्यायेक्तोऽग्निष्टोमः, सर्वयज्ञक्रतूनां प्रकृतित्वेन श्रूयते, तदर्थमुपाख्यानमाह—

**देवा वा असुरैर्युद्धमुपप्रायन् विजयाय, तानग्निर्नान्वकामयतैतुम्, तं देवा अब्रुवन्, अपि त्वमेह्यस्माकं वै त्वमेकोऽसीति; स नास्तुतोऽन्वेष्यामीत्यब्रवीत्—स्तुत नु मेति, तथेति; तं ते समुत्क्रम्योपनिवृत्त्यास्तुवन्, तान् स्तुतोऽनु प्रैत् ॥ इति ।**

यदा देवा विजयार्थमसुरैः सह युद्धम् 'उप प्रायन्' उपक्रान्तवन्तः, तदानीमग्निः तान् देवान् 'अनु' पश्चाद् 'एतुम्' आगन्तुं नाकामयत । अग्निमिच्छारहितं देवा एवमब्रुवन्—हे अग्ने त्वमपि 'एहि' आगच्छास्माकमेव मध्ये 'त्वमेकोऽसि', न त्वत्तोऽन्य इति । ततः सोऽग्निरेवमब्रवीद् युष्माभिरस्तुतः सन्नहं 'नान्वेष्यामि' युष्माकं पृष्ठतो न गमिष्यामि; तस्मान्नु क्षिप्रमेव 'मा' माम् 'स्तुत' स्तोत्रं कुरुतेति । देवास्तथेत्यङ्गीकृत्य 'समुत्क्रम्य' उत्थाय 'उपनिवृत्त्य' अग्नेरभिमुखत्वेन निवृत्तिं कृत्वा 'तम्' अग्निमस्तुवन् । सोऽप्यग्निः स्तुतः सन् तान् देवान् अनुसृत्य 'प्रैत्' युद्धार्थं प्रकर्षेणागच्छत् ॥

**[अग्निष्टोम का वैशिष्ट्य]—**

**iii. ३९ [xiv. १] जब देवों ने विजयार्थ असुरों से युद्ध करने का उपक्रम किया तब अग्नि ने उन [देवों] का अनुगमन न करना चाहा । [इच्छारहित] उन [अग्नि] से देवों ने कहा—'तुम भी आओ । हम लोगों के मध्य तुम भी एक हो ।' उसने कहा—'बिना स्तुत हुए मैं अनुगमन नहीं करूँगा । अतः शीघ्र ही मेरी स्तुति करो ।' उन्होंने कहा—'ठीक है'; और उठकर एवं अभिमुख होकर उन अग्नि की स्तुति की । स्तुत होकर अग्नि ने भी उन [देवों] का युद्धार्थ अनुसरण किया ।**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अग्नेर्युद्धप्रकारं दर्शयति—

**स त्रिश्रेणिर्भूत्वा त्र्यनीकोऽसुरान् युद्धमुपप्रायद् विजयाय, त्रिश्रेणिरिति च्छन्दांस्येव श्रेणीरकुरुत। त्र्यनीक इति सवनान्येवानीकानि। तानसंभाव्यं पराभावयत्, ततो वै देवा अभवन् पराऽसुराः॥** इति।

'सः' अग्निर्विजयाय 'त्रिश्रेणिः' सोमपानपङ्क्तित्रययुक्तः, 'त्र्यनीकः', त्रिभिरनीकैः सेनापतिरूपैः सेनामुख्यैर्युक्तः 'असुरान्' प्रति 'युद्धमुपप्रायत्' तत्समीपं प्रकर्षेण गतवान्। त्रिश्रेणिरिति यदुक्तं तत्र गायत्रीत्रिष्टुब्जगतीरूपाणि च्छान्दांस्येव तिस्रः श्रेणीरकुरुत। त्र्यनीक इति यदुक्तं, तत्र प्रातःसवन-माध्यंदिन-तृतीयसवनान्येव त्रीण्यनीकानि सेनामुखान्यकुरुत। ततस्तान् असुरान् पुनः शत्रुशेषो यथा न संभाव्यते[1] तथा 'पराभावयत्' पराभूतानकरोत्। ततो युद्धाद्देवा विजयिनोऽभवन्, असुराः पराभूताः॥

उसने तीन श्रेणी [=व्यूह] बनाकर असुरों पर विजय पाने के लिए तीन [सेनापति रूपी] मुखियों में युद्ध के लिए प्रस्थान किया। 'तीन-श्रेणियाँ' वस्तुतः तीन छन्दों [गायत्री, त्रिष्टुप् एवं जगती] से बनाई, और 'तीन-मुख' वस्तुतः तीन सवनों से। इससे उन [असुरों] को उसने आशातीत पराजय दी। उसके बाद से ही देव विजयी हुए और असुर पराभूत हुए।

वेदनं प्रशंसति—

**भवत्यात्मना पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद॥** इति।

जो इस प्रकार जानता है वह स्वयं उन्नति को प्राप्त होता है और उससे द्वेष करने वाले पापात्मा शत्रु भी पराभव को प्राप्त होते हैं।[2]

एवमग्निश्छन्दस्त्रय-सवनत्रययुक्तोऽग्निष्टोमरूपोऽभवदित्येकेन प्रकारेणाग्निष्टोमं स्तुत्वा पुनरपि प्रकारान्तरेण स्तौति—

**सा वा एषा गायत्र्येव यदग्निष्टोमः, चतुर्विंशत्यक्षरा वै गायत्री चतुर्विंशतिरग्निष्टोमस्य स्तुतशस्त्राणि॥** इति।

योऽयं पूर्वोक्तोऽग्निष्टोमोऽस्ति, 'सा वा एषा गायत्र्येव'। अग्निष्टोमगायत्र्योः संख्यासाम्यात्—गायत्रीगतेष्वक्षरेषु या संख्या, सैवाग्निष्टोमगतेषु स्तोत्रशस्त्रेषु। तथा हि—बहिष्पवमानः, माध्यंदिनपवमानः, आर्भवः पवमान इति त्रीणि पवमानस्तोत्राणि, चत्वार्याज्यस्तोत्राणि, चत्वारि पृष्ठस्तोत्राणि; एकं यज्ञायज्ञीयं स्तोत्रम्; एवमेतानि द्वादश

---

1. असंभाव्य पुनरुज्जीवनसम्भावनापि यथा न भवति तथा। यद्वा, अन्यत्राननुभूतपराक्रमम्—इति भट्टभास्करः।
2. द्र० इतः पूर्वम्; २६७ पृष्ठे।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

संपन्नानि । शस्त्राण्यपि तावन्त्येव, आज्यप्रउगे, निष्केवल्ये, मरुत्वतीये, वैश्वदेवाग्निमारुते इति होतुः शस्त्राणि षट्; तथा होत्रकाणामपि[1] षट् । एवं स्तोत्रशस्त्रसंख्ययाऽग्निष्टोमस्य गायत्रीरूपत्वम् ॥

जो [पूर्वोक्त] अग्निष्टोम है वह [संख्या साम्य के कारण] यह गायत्री ही है । गायत्री भी चौबीस अक्षरों की होती है, और अग्निष्टोम में भी चौबीस ही स्तोत्र और शस्त्र होते हैं [वस्तुतः उद्गाता के १२ स्तोत्र और होता के १२ शस्त्र मिलकर चौबीस होते हैं । एक-एक स्तोत्र के लिए एक-एक शस्त्र होता है । १२ शस्त्र इस प्रकार होते हैं— प्रातःसवन में पाँच (आज्य, प्रउग, मैत्रावरुण, ब्राह्मणाच्छंसिन् एवं अच्छावाक्); माध्यंदिन सवन में पाँच (मरुत्वतीय, निष्केवल्य, मैत्रावरुण, ब्राह्मणाच्छंसिन् और अच्छावाक्); सायंसवन के दो (वैश्वदेव तथा आग्निमारुत शस्त्र)] ।

प्रकारान्तरेण गायत्रीसाम्यं संपाद्य प्रशंसति—

**तद्धै यदिदमाहुः-सुधायां ह वै वाजी सुहितो दधातीति । गायत्री वै तत्, न ह वै गायत्री क्षमा रमते । ऊर्ध्वा ह वा एषा यजमानमादाय स्वरेतीति, अग्निष्टोमो वै तत् न ह वा अग्निष्टोमः क्षमा रमते । ऊर्ध्वो ह वा एष यजमानमादाय स्वरेति ॥ इति ।**

'तद्धै' तत्रैव यज्ञसभायां वेदवादिनो 'यदिदं' वचनमाहुः । किं वचनमिति ? तदुच्यते—सुष्ठु धीयन्ते सुकृतिनोऽस्यां दिवि, सा द्यौः 'सुधा' तस्यामेव 'वाजी' वाजोऽन्नं सोमरूपं यस्मिन्नस्तीत्यग्निष्टोम उच्यते । स च 'सुहितः' साद्गुण्येनानुष्ठितः 'दधाति' सुधाशब्दवाच्यायां दिवि यजमानं स्थापयति 'इति' यद्वेदवादिनां वचनं, तद् 'गायत्री वै' गायत्रीसाम्यमभिप्रेत्यैवोक्तमित्यर्थः । 'न ह वै'—इत्यादिना तदेव स्पष्टीक्रियते । क्षमेति सप्तम्यर्थो विवक्षितः । क्षमायां भूमौ गायत्र्याख्या देवता 'न ह वै रमते' नैव क्रीडति किंत्वेषा गायत्री, 'ऊर्ध्वा ह वै' ऊर्ध्वगामिन्येव भूत्वाऽनुष्ठितवन्तं यजमानमादाय 'स्वरेति' स्वर्गं प्राप्नोति । 'इति' एवं प्रकारेण येयं गायत्री वर्णिता, 'तद्' गायत्रीरूपोऽग्निष्टोम एव, तयोः समत्वात् । अग्निष्टोमोऽपि क्षमायां न रमते, किं त्वनुष्ठित ऊर्ध्वगामी सन्नेष यजमानमादाय स्वर्गमाप्नोति ॥

उसी [यज्ञ सभा] में वेदवादी जो यह कहते हैं कि 'सोम रूप अन्न से युक्त अग्निष्टोम सम्यक् रूप से अनुष्ठित होकर स्वर्ग में यजमान को स्थापित करता है'[2]— यह गायत्री [साम्य को] ही [अभिप्रेत करके कहा गया] है । वस्तुतः गायत्री भूमि पर सन्तुष्ट नहीं होती । किन्तु यह ऊर्ध्वगामिनी होकर यजमान को लेकर स्वर्ग को प्राप्त करती है । अग्नि-

---

१. अहोतारो मैत्रावरुणादयः । तथाहि—'तदिमं मानुषं होतारं प्रवृणीतेऽहोता हैष पुरार्थर्तर्हि होता'—इति शत० ब्रा० १.५.१.१३ ।

२. द्र० इतः परस्तात् १५.३ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ष्टोम भी वैसा ही है। अग्निष्टोम भी भूमि पर सन्तुष्ट नहीं होता और ऊर्ध्वगामी होकर यजमान को लेकर स्वर्ग को प्राप्त करता है।

इत्थं गायत्रीसाम्येन स्तुत्वा संवत्सरसाम्येन स्तौति—

**स वा एष संवत्सर एव यदग्निष्टोमः, चतुर्विंशत्यर्धमासो वै संवत्सरः। चतुर्विंशतिरग्निष्टोमस्य स्तुतशस्त्राणि ॥** इति।

योऽयमग्निष्टोमः, स एष संवत्सर एव। अर्धमाससंख्यायाः स्तोत्रशस्त्रसंख्यायाश्च समानत्वात् ॥

जो यह अग्निष्टोम है वह यह संवत्सर ही है। एक संवत्सर में चौबीस पक्ष होते हैं और अग्निष्टोम में भी चौबीस ही स्तोत्र और शस्त्र होते हैं।

समुद्रसाम्येन प्रशंसति—

**तं यथा समुद्रं स्रोत्या एवं सर्वे यज्ञक्रतवोऽपि यन्ति ॥ ३९ ॥** इति।

'स्रोत्याः' प्रवाहरूपा नद्यो लोके यथा समुद्रं प्राप्नुवन्ति, तथैवोक्थ्यषोडश्यतिरात्राहीनसत्ररूपाः सर्वे क्रतवो विकृतिरूपाः प्रकृतिरूपं तमग्निष्टोमम् 'अपि यन्ति' प्राप्नुवन्ति। अग्निष्टोमात् प्राचीना इष्टिपशुबन्धादयोऽपि तमग्निष्टोमं प्राप्नुवन्ति। तथा सति सर्वशब्दो मुख्यार्थः संपद्यते, न तु संकोचः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां चतुर्थाध्याये (चतुर्दशाध्याये) प्रथमः खण्डः ॥ १ ॥ (३९) [१०१]

प्रवाहरूप नदियाँ जैसे समुद्र में जाती हैं वैसे ही सभी [विकृति रूप उक्थ्य, षोडशी, अतिरात्र, अहीनसत्र वाले] यज्ञ प्रकृति रूप उस [अग्निष्टोम] को ही प्राप्त करते हैं।

॥ इस प्रकार चौदहवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

अग्निष्टोमादपि प्राचीनानां यज्ञानामग्निष्टोमप्राप्तिं दर्शयति—

**दीक्षणीयेष्टिस्तायते। तामेवानु याः काश्चेष्टयस्ताः सर्वा अग्निष्टोममपि यन्ति ॥** इति।

अग्निष्टोमस्य प्रारम्भे येयं दीक्षणीयेष्टिः 'तायते' विस्तार्यते, 'तामनु' तत्सादृश्येन वेदोक्ताः सर्वा अपीष्टयः 'अग्निष्टोमं' प्राप्नुवन्ति। अत्र विकृतिरूपा एवेष्टयो विवक्षिताः, प्रकृतिरूपयोर्दर्शपूर्णमासयोर्वक्ष्यमाणत्वात् ॥

iii. ४० [xiv. २] [अग्निष्टोम के प्रारम्भ में जो] दीक्षणीयेष्टि का विस्तार किया जाता है, [उसके सादृश्य वाली] जो कोई भी इष्टियाँ हैं वे सभी वेदोक्त इष्टियाँ उस अग्निष्टोम को ही प्राप्त करती हैं।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दीक्षणीयेष्टिगतचोदकप्राप्तेडोपाह्वानसादृश्येन पाकयज्ञानामग्निष्टोमप्राप्तिं दर्शयति—

**इळामुपह्वयते । इळाविधा वै पाकयज्ञाः । इळामेवानु ये के च पाकयज्ञाः, ते सर्वेऽग्निष्टोममपि यन्ति ॥** इति ।

पाकयज्ञाश्च सप्तसंख्याकाः,—हुतः, प्रहुतः, आहुतः, शूलगवः, बलिहरणम्, प्रत्यवरोहरणम्, अष्टकाहोम इति । सोऽयं सूत्रान्तरकारस्य पक्षः । आश्वलायनस्तु हुतादींस्त्रीनेव पाकयज्ञानाह[1] । ते च पाकयज्ञा 'इळाविधाः' इळासदृशाः । 'इळा खलु वैषा पाकयज्ञः' इति श्रुत्यन्तरात्[2] । ततो दीक्षणीयेष्टौ इडोपाह्वानेन तत्सदृशाः पाकयज्ञाः सर्वेऽप्यग्निष्टोमं प्राप्नुवन्ति ॥

'इळा' का उपाह्वान किया जाता है, पाकयज्ञ इळा के सदृश हैं, अतः इळा के सदृश जो कोई भी पाक यज्ञ हैं, वे सभी अग्निष्टोम को प्राप्त करते हैं ।

अग्निहोत्रस्य तत्प्राप्तिं दर्शयति—

**सायंप्रातरग्निहोत्रं जुह्वति, सायंप्रातर्व्रतं प्र यच्छन्ति, स्वाहाकारेणाग्निहोत्रं जुह्वति, स्वाहाकारेण व्रतं प्र यच्छन्ति, स्वाहाकारमेवान्वग्निहोत्रमग्निष्टोममप्येति ॥** इति ।

यथा प्रतिदिनं कालद्वयेऽग्निहोत्रहोमः, तथा दीक्षितस्य कालद्वये क्षीरपानरूपं[3] व्रतप्रदानम् । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा'[4]—इति यथा स्वाहाकारेणाग्निहोत्रहोमः, तथा 'ते नः पान्तु, ते नोऽवन्तु, तेभ्यो नमस्तेभ्यः स्वाहा'[5] इति स्वाहाकारेण दीक्षितो व्रतप्रदानमाचरति । अतो व्रतगतस्वाहाकारमेवानुसृत्याग्निहोत्रस्याग्निष्टोमप्राप्तिः ॥

सायं और प्रातः अग्निहोत्र [जैसे] होता है, [वैसे ही] सायंकाल और प्रातःकाल [दीक्षित को दुग्धपान रूप] व्रत प्रदान करते हैं । [जैसे] स्वाहाकार के द्वारा अग्निहोत्र करता है [वैसे ही] स्वाहाकार के द्वारा व्रत प्रदान करता है । अतः [व्रतगत] स्वाहाकार का ही अनुसरण करके अग्निहोत्र अग्निष्टोम को प्राप्त करता है ।

---

१. त्रयः पाकयज्ञाः,—हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्मणि-हुताः'—इति आश्व० गृ० १.१.२.३ । तु० मनु २.८६ ।

२. तै० सं० १.७.३. १ ।

३. 'पयो ब्राह्मणस्य व्रतं, यवागू राजन्यस्यामिक्षा वैश्यस्याथो सौम्येऽप्यध्वर एतद् व्रतं ब्रूयात्'—इति तै० आ० २.८ १ ।

४. तै० ब्रा० २.१.१० ।

५. तै० सं० १.२.३ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अग्निष्टोमगतप्रायणीयेष्टिसादृश्येन दर्शपूर्णमासयोरग्निष्टोमप्राप्तिं दर्शयति—

**पञ्चदश प्रायणीये सामिधेनीरन्वाह, पञ्चदश दर्शपूर्णमासयोः । प्रायणीयमेवानु दर्शपूर्णमासावग्निष्टोममपीतः ॥ इति ।**

प्रायणीयकर्मणि धाय्यारहितत्वात् सामिधेन्यश्चोदकप्राप्ताः पञ्चदशैव, तथा प्रकृतिभूतयोर्दर्शपूर्णमासयोरपि ॥

प्रायणीय-इष्टि में पन्द्रह सामिधेनियों का पाठ करता है और दर्शपूर्णमास याग में भी। इस प्रकार प्रायणीय इष्टि के द्वारा दर्शपूर्णमास याग भी अग्निष्टोम को प्राप्त करता है।

अग्निष्टोमगतसोमद्वारा लौकिकानामपि सर्वेषामौषधीनामग्निष्टोमप्राप्तिं दर्शयति—

**सोमं राजानं क्रीणन्ति । औषधो वै सोमो राजा, औषधिभिस्तं भिषज्यन्ति यं भिषज्यन्ति, सोममेव राजानं क्रीयमाणमनु यानि कानि च भेषजानि, तानि सर्वाण्यग्निष्टोममपि यन्ति ॥ इति ।**

लोके 'यं' व्याधिग्रस्तं चिकित्सकाः 'भिषज्यन्ति' चिकित्सन्ते, 'तं' पुरुषम् 'औषधिभिः' अमृतवल्ल्यादिभिश्चिकित्सन्ते । सोमस्याप्यौषधत्वात् तमनु सर्वाण्यप्यौषधान्यग्निष्टोमं प्राप्नुवन्ति ॥

वे सोम-राजा को खरीदते हैं। सोम-राजा औषध हैं। ओषधियों के द्वारा ही वे चिकित्सा करते हैं, जिसकी वे चिकित्सा करते हैं। इसलिए सोम-राजा के क्रय के द्वारा ही जो कोई भी ओषधियाँ हैं वे सभी अग्निष्टोम को ही प्राप्त करती हैं।

अग्निष्टोमगतातिथ्यकर्मद्वारा चातुर्मास्ययागानां तत्प्राप्तिं दर्शयति—

**अग्निमातिथ्ये मन्थन्ति । अग्निं चातुर्मास्येषु । आतिथ्यमेवानु चातुर्मास्यान्यग्निष्टोममपि यन्ति ॥ इति ।**

आतिथ्यायाम् अग्निमन्थनं विहितम्, चातुर्मास्यपर्वस्वपि मन्थनं विहितम्; उभयत्र मन्थनधर्मसाम्यादातिथ्यासदृशानि चातुर्मास्यान्यप्यग्निष्टोमं 'यन्ति' प्राप्नुवन्ति ॥

आतिथ्येष्टि में अग्नि का मन्थन करते हैं और अग्नि का ही चातुर्मास्येष्टि में भी। इस प्रकार आतिथ्येष्टि के द्वारा चातुर्मास्येष्टि भी अग्निष्टोम को प्राप्त करती है।

प्रवर्ग्यसाम्येन दाक्षायणयज्ञस्याग्निष्टोमप्राप्तिं दर्शयति—

**पयसा प्रवर्ग्ये चरन्ति । पयसा दाक्षायणयज्ञे । प्रवर्ग्यमेवानु दाक्षायणयज्ञोऽग्निष्टोममप्येति ॥ इति ।**

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दर्शपूर्णमासयोरेव गुणविकृतिरूपः कश्चिद् दाक्षायणाख्यो यज्ञः। तथा च शाखान्तरे दर्शपूर्णमाससंनिधौ श्रूयते—'दाक्षायणयज्ञेन स्वर्गकामो यजेत'[1] इति। तस्य च प्रवर्ग्यस्य च क्षीरद्रव्यसाम्येन प्रवर्ग्यसदृशो दाक्षायणयज्ञोऽप्यग्निष्टोममेति ॥

प्रवर्ग्य में दुग्ध से हवन करते हैं और दुग्ध से ही दाक्षायण-यज्ञ में भी। इस प्रकार प्रवर्ग्य के द्वारा दाक्षायण-यज्ञ भी अग्निष्टोम को प्राप्त करता है।

पशुबन्धानामग्निष्टोमप्राप्तिं दर्शयति—

**पशुरुपवसथे भवति। तमेवानु ये के च पशुबन्धास्ते सर्वेऽग्निष्टोममपि यन्ति ॥** इति।

सुत्यादिवसात् पूर्वो दिवस उपवसथाख्यः। तस्मिन्नग्नीषोमीयः पशुरनुष्ठीयते। तद् विकृतिरूपा वेदोक्ताः सर्वे पशुबन्धाः। पशुद्रव्यसाम्याद् अग्नीषोमीयसदृशाः सर्वे पशुबन्धा अप्यग्निष्टोमं यन्ति[2] ॥

[सुत्या दिन के पूर्व] उपवसथ नामक दिन में [अग्नीषोमीय] पशु होता है। इस प्रकार उसके सादृश्य वाले जो कोई भी पशुबन्ध [=पशुयाग] होते हैं वे सभी [वेदोक्त पशुबन्ध] अग्निष्टोम को ही प्राप्त करते हैं।

इळादधनामकस्य यज्ञान्तरस्याग्निष्टोमप्राप्तिं दर्शयति—

**इळादधो नाम यज्ञक्रतुः। तं दध्ना चरन्ति; दध्ना दधिघर्मे। दधिघर्ममेवान्विळादधोऽग्निष्टोममप्येति ॥ ४० ॥** इति।

दर्शपूर्णमासविकृतिरूप एव कश्चिद् इळादधनामको यज्ञोऽस्ति[3]। अत एव आपस्तम्बो दर्शपूर्णमाससंनिधावेवमाह—"एतेनेळादधः सार्वसेनियज्ञो वसिष्ठयज्ञः शौनकयज्ञश्च

---

१. दाक्षायणेन दृष्टो यज्ञो दाक्षायणयज्ञः। स च शतपथब्राह्मणे "आजिं वा एते धावन्ति, ये दर्शपूर्णमासाभ्यां यजन्ते"—इत्याद्यभिधाय (११.१.२.१०) तत्सन्निधावेव "यद्यु दाक्षायणयज्ञी स्यादथो अपि पञ्चदशैव वर्षाणि यजेत"—इत्याद्याम्नातमिति दर्शपूर्णमासतो नान्यत्कर्मेति सिद्धान्तितं कातीयसूत्रे "गुणविधानं वा सन्निधिसम्पद् वचनाभ्याम्"—इति (श्रौ० ४.४.२)। "त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत; पञ्चदश दाक्षायणयज्ञी"—इत्यादि च पार्थक्यं द्रष्टव्यम् (कात्या० श्रौ० ४.२.४७, ४८)। दाक्षायणयज्ञेन सुवर्गकामः—इत्यारभ्य "सन्तिष्ठते दाक्षायणयज्ञः"—इत्यन्त आपस्तम्बीयग्रन्थश्चैवमर्थकः (श्रौ० ३.१७.४–११)। इत उत्तरमेव तत्रोक्तम् "एतेनेळादधः सार्वसेनियज्ञो वसिष्ठयज्ञः शौनकयज्ञश्च व्याख्याताः"—इति (१२ सू०)।

२. 'पशुद्रव्य'''इत्यादि पाठः आनन्दाश्रममुद्रितपुस्तके नास्ति।

३. 'प्राजापत्य इळादधः'—इति आश्व० श्रौ० २.१४.११।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्याख्यातः" इति[1]। दधिघर्मनामकस्त्वग्निष्टोमगतः। कश्चिद्[2] दधियागः, तेन माध्यन्दिने चरन्ति, इळादधोऽपि दधिद्रव्यकः। अतः तयोरुभयोर्दधिद्रव्येण साम्यम्, दधिघर्मसदृश इळादधोऽपि अग्निष्टोममेति॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां चतुर्थाध्याये (चतुर्दशाध्याये) द्वितीयः खण्डः ॥२॥ (४०) [१११]

'इळादध' नाम की एक यज्ञ की इष्टि है। उसका दही से अनुष्ठान करते हैं। [अग्निष्टोम के] दधिघर्म कृत्य में भी दही से ही अनुष्ठान करते हैं। इस प्रकार दधिघर्म के द्वारा 'इळादध' भी अग्निष्टोम को प्राप्त करता है।

॥ इस प्रकार चौदहवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

क्रत्वन्तराणामग्निष्टोमप्राप्तिं दर्शयति—

**इति नु पुरस्ताद्। अथोपरिष्टात्। पञ्चदशोक्थ्यस्य स्तोत्राणि, पञ्चदश शस्त्राणि। स मासो, मासधा संवत्सरो विहितः, संवत्सरोऽग्निर्वैश्वानरः, अग्निरग्निष्टोमः, संवत्सरमेवानूक्थ्योऽग्निष्टोममप्येति। उक्थ्यमपि यन्तमनु वाजपेयोऽप्येति। अत्युक्थ्यो हि स भवति॥** इति।

'इति नु' पूर्वखण्डोक्तप्रकारेणैव 'पुरस्तात्' अग्निष्टोमात् प्राचीनस्य कर्मजातस्याग्निष्टोमप्रवेशः, उक्त इति शेषः। 'अथ' अनन्तरमुपरिष्टाद् अग्निष्टोमादितरेषां क्रतूनां[3] तत्प्रवेश उच्यते। तत्र योऽयम् 'उक्थ्यः' क्रतुः, तस्य पञ्चदशसंख्याकानि स्तोत्राणि; अग्निष्टोमविकृतित्वात् तदीयानि द्वादश स्तोत्राण्यतिदिश्यन्ते। तत ऊर्ध्वं त्रीण्युक्थसंज्ञकानि स्तोत्राणि। एवं पञ्चदश संपद्यन्ते। शस्त्रेष्वप्ययं न्यायो योज्यः। तानि स्तोत्राणि शस्त्राणि च मिलित्वा मासगतां रात्रिसंख्यां प्राप्नुवन्ति। अतः सोऽयं स्तोत्रशस्त्रसमूहो मासः संपद्यते। 'मासधा'[4] मासप्रकारेण मासावृत्त्या संवत्सरो 'विहितः' संपादितो भवति। स च संवत्सरो वैश्वानराग्निरूपः[5]। गर्भप्रविष्टस्य पुरुषस्य संवत्सरमात्रेण वैश्वा-

---

१. आप० श्रौ० ३.१७.१२।

२. 'कश्चिद् दधियागः'''''इत्यादि पाठः आनन्दाश्रममुद्रितपुस्तके त्रुटितः।

३. ज्योतिष्टोमसंस्थाविशेषाणामिति यावत्। तदाहापस्तम्बः—'उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामश्चाग्निष्टोमस्य गुणविकाराः'—इति (आप० श्रौ० १४.१.१)।

४. 'वीप्सायां छान्दसो धाप्रत्ययः, मासो मासः, अनेके मासाः सम्भूय संवत्सरो विहितः' —इति भट्टभास्करः।

५. तु० तै० सं० २.२.५।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नराख्यस्योदर्याग्नेः पाटवसंभवात् । अग्निश्चाग्निष्टोमस्वरूपः; पूर्वोक्तया रीत्या श्रेणित्रय-रूपेणानीकत्रयरूपेण चाग्नेरेवाग्निष्टोमरूपेणाविर्भूतत्वात् । एवं सति स उक्थ्याख्यः क्रतुः स्तोत्रशस्त्रादिपरम्पर्या संवत्सरमेवानुप्रविश्य तद्द्वाराऽग्निष्टोमं प्रविशति । तं विशन्तमुक्थ्यमनु वाजपेयाख्योऽपि क्रतुरग्निष्टोममपि 'एति' प्राप्नोति । 'सः' हि वाज-पेयोऽत्युक्थ्यो भवति । उक्थ्याख्यं क्रतुमतिक्रम्य वर्तमानत्वात् । उक्थ्ये यानि पञ्चदश स्तोत्राणि, तत ऊर्ध्वं वाजपेये स्तोत्रद्वयं, सोऽयमुक्थ्यातिक्रमः । तस्मादुक्थ्यद्वारा वाज-पेयस्य तत्प्राप्तिः ॥

iii. ४१ [xiv.३] यहाँ तक [अग्निष्टोम के] प्राक्तन कर्मों को कहा गया । इसके बाद [उक्थ्य आदि] अन्य कृत्यों को कहते हैं—उक्थ्य के पन्द्रह स्तोत्र और पन्द्रह शस्त्र होते हैं । वे [मिलकर] महीने होते हैं और महीनों से संवत्सर संपादित होता है । संवत्सर अग्नि-वैश्वानर [रूप] है । अग्नि अग्निष्टोम [स्वरूप] है । इस प्रकार संवत्सर के द्वारा उक्थ्य [नामक क्रतु स्तोत्र और शस्त्र परम्परा से] अग्निष्टोम में प्रविष्ट होता है । उस प्रविष्ट उक्थ्य के द्वारा वाजपेय [नामक क्रतु] भी [अग्निष्टोम में] प्रविष्ट होता है क्योंकि वह [वाजपेय] उक्थ्य का अतिक्रमण करके [उक्थ्य के पन्द्रह स्तोत्रों के बाद वाजपेय में दो स्तोत्र अधिक होने के कारण] होता है ।

अथातिरात्राप्तोर्यामयोः क्रत्वोरग्निष्टोमप्रवेशं दर्शयति—

**द्वादश रात्रेः पर्यायाः, सर्वे पञ्चदशाः, ते द्वौ द्वौ संपद्य त्रिंशद् । एकविंशं षोळशिसाम त्रिवृत् संधिः । सा त्रिंशत् । स मासः त्रिंशन्मासस्य रात्रयो मासधा संवत्सरो विहितः, संवत्सरोऽग्निर्वैश्वानरः, अग्निरग्निष्टोमः, संव-त्सरमेवान्वतिरात्रोऽग्निष्टोममप्येति । अतिरात्रमपि यन्तमन्वप्तोर्यामोऽप्येति । अत्यतिरात्रो हि स भवति ॥** इति ।

अतिरात्रयागे द्वादशसंख्याका रात्रेः पर्यायाः । ते च आपस्तम्बेनैव स्पष्टीकृताः—'अतिरात्रश्चेत्,[१] षोडशिचमसानुन्नयंस्त्रयोदशभ्यश्चमसगणेभ्यो राजानमभिरेचयति । षोडशिना प्रचर्य रात्रिपर्यायैः प्रचरति । होतृचसमुख्यः प्रथमो गणो मैत्रावरुणचमसमुख्यो द्वितीयो ब्राह्मणाच्छंसिचमसमुख्यस्तृतीयोऽच्छावाकचमसमुख्यश्चतुर्थः ।····प्रथमाभ्यां गणा-भ्यामध्वर्युश्चरति, उत्तराभ्यां प्रतिप्रस्थाता, एष प्रथमः पर्यायः । एवं विहितो द्वितीय-स्तृतीयश्च' इति[२] । अस्यायमर्थः—अतिरात्राख्यं क्रतुं यदाऽनुतिष्ठति, तदानीं चोदकप्राप्तं सर्वमनुष्ठाय अनन्तरं सायंकाले षोडशिग्रहसंबन्धिनश्चमसान् पूरयित्वा तत ऊर्ध्वं त्रयोदश-चमसगणप्राप्तं सोममवस्थाप्य षोडशिग्रहप्रचारं कृत्वा तत ऊर्ध्वं रात्रिपर्यायैः प्रचरेत् । तेषु पर्यायेषु च होतृचमसमादिं कृत्वा यश्चमसगणः प्रवर्तते, सोऽयं प्रथमः । मैत्रावरुण-

१. 'षोडशिनममी मुनयस्तत्र'—इति आनन्दाश्रम मुद्रितपाठः ।
२. आप० श्रौ० १४.३.८—१०; १४—१६ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चमसस्यादित्वे द्वितीयश्चमसगणो भवति। ब्राह्मणाच्छंसिचमसस्यादित्वे तृतीयश्चमसगणो भवति। अच्छावाकचमसस्यादित्वे चतुर्थश्चमसगणो भवति। तेषु चतुर्षु गणेषु प्रथम-द्वितीयाभ्यां गणाभ्यामध्वर्युरनुतिष्ठेत्। तृतीयचतुर्भ्यां तु प्रतिप्रस्थाताऽनुतिष्ठेत्। एवं गणचतुष्टयानुष्ठानमेकः पर्यायो भवति। पुनरपि द्वितीयतृतीयपर्यायौ तथैवानुष्ठेयौ। तेषु पर्यायेषु द्वादश गणाः संपद्यन्ते। एतत् सर्वमभिप्रेत्य 'द्वादश रात्रेः पर्यायाः' इत्युक्तम्।

ते सर्वेऽपि 'पञ्चदशाः' तदीयस्तोत्रेषु तृचगतानामृचामावृत्तिविशेषेण पञ्चदशस्तोमस्य सामगैः संपादितत्वात् ते पञ्चदशस्तोमयुक्ताः द्वादशपर्यायाः सन्ति। तेषु 'द्वौ द्वौ' पर्यायौ 'संपद्य' मिलित्वा पञ्चदशसंख्याया द्विरावृत्त्या त्रिंशत्संख्याकाः ते सर्वे पर्यवस्यन्ति। किञ्च षोडशिस्तोत्रे यत्सामास्ति तदेकविंशं भवति। तदीयतृचगतानामृचामावृत्त्या सामगैरेक-विंशतिस्तोमसंपादनात्[2]। योऽयमतिरात्रस्तस्यान्ते 'संधि' (तन्नामकं स्तोत्रम्, तत्र त्रिवृत्-स्तोमः सामगैः पठ्यते।[3] तस्य च स्तोमस्य त्रिषु तृचेष्वावृत्तिरहितेषु निष्पन्नत्वादृचां नवत्वं संपद्यते। एकविंशतिसंख्या नवसंख्या च मिलित्वा त्रिंशत्संख्या भवति। अनया त्रिंशत्संख्यया वा पूर्वोक्तत्रिंशत्संख्यया वा मासरात्रिसाम्यात् मासः संपद्यते। मासधेत्यादि पूर्ववद् योजनीयम्[4]। एवं सति वत्सरद्वाराऽतिरात्रोऽग्निष्टोमं प्रविशति। प्रविशन्तमतिरात्र-मनु तद्द्वारेणाप्तोर्यामोऽपि प्रविशति। स ह्यतिरात्रमतिलङ्घ्य स्तोत्राधिक्येन वर्तमानत्वात् 'अत्यतिरात्रः'। एकोनत्रिंशत् स्तोत्राण्यतिरात्रे, आप्तोर्यामे तु त्रयस्त्रिंशदित्याधिक्यम्, अतोऽतिरात्रद्वाराऽप्तोर्यामस्याग्निष्टोमे प्रवेशः॥

[अतिरात्र-याग में] रात्रि के बारह पर्याय होते हैं। सब मिलकर पञ्चदश-स्तोम हैं। वे दो-दो होकर तीस हो जाते हैं। षोडशि-साम में इक्कीस होते हैं। संधि-साम में त्रिवृत् अर्थात् ९ होते हैं। इस प्रकार [२१ और ९ मिलकर] वे तीस हो जाते हैं। वह मास है। मास में तीस ही रात्रियाँ होती हैं और मासों से संवत्सर सम्पादित होता है। संवत्सर अग्नि-वैश्वानर है। अग्नि अग्निष्टोम है। इस प्रकार संवत्सर के माध्यम से अतिरात्र अग्निष्टोम में प्रविष्ट हो जाता है। उस प्रविष्ट अतिरात्र के द्वारा आप्तोर्याम भी [अग्निष्टोम में] प्रविष्ट हो जाता है क्योंकि वह [आप्तोर्याम] अतिरात्र का [स्तोत्राधिक्य होने से] अतिक्रमण करके [अतिरात्र में २९ स्तोत्र और आप्तोर्याम में ३३ होने के कारण] होता है।

उक्तं सर्वयज्ञक्रतुत्वान्तर्भावमुपसंहरति—

**एतद् वै ये च पुरस्ताद्, ये चोपरिष्टाद् यज्ञक्रतवस्ते सर्वेऽग्निष्टोममपि यन्ति॥ इति।**

---

१. 'स्तोमे डविधिः पञ्चादशाद्यर्थः'—इति पा०सू० ५.१.५८ वा ८। पञ्चदशावृत्तिकः।
२. ता० ब्रा० २.१४–१७।
३. ता० ब्रा० ९.१.२०; ३.४। 'त्रिवृत् सन्धिः' २०.११।
४. द्र० इतः पूर्वम्, ५३० पृष्ठे २२ पंक्ति।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'एतद्वै' एतेनैवोक्तप्रकारेणाऽग्निष्टोमस्य पूर्वभाविन इष्ट्यग्निहोत्रादयो ये यज्ञक्रतवः, ये चोत्तरभाविन उक्थ्यवाजपेयादयो यज्ञक्रतवः, ते सर्वेऽग्निष्टोमं प्राप्नुवन्ति ॥

इस प्रकार जो [अग्निष्टोम के] पूर्व होने वाली [अग्निहोत्र आदि] और बाद में होने वाली [उक्थ्य वाजपेय आदि] यज्ञीय इष्टियाँ हैं वे सभी अग्निष्टोम को प्राप्त कर लेती हैं।

अथ प्रकारान्तरेणाग्निष्टोमं प्रशंसति--

**तस्य संस्तुतस्य नवतिशतं स्तोत्रियाः। सा या नवतिस्ते दश त्रिवृतः। अथ या नवतिस्ते दश। अथ या दश, तासामेका स्तोत्रियोदेति, त्रिवृत् परिशिष्यते। सोऽसावेकविंशोऽध्याहितस्तपति। विषुवान् वा एष स्तोमानाम्। दश वा एतस्मादर्वाञ्चस्त्रिवृतः। दश पराञ्चः। मध्य एष एकविंश उभयतोऽध्याहितस्तपति। तद्याऽसौ स्तोत्रियोदेति सैतस्मिन्नध्यूह्ळा, स यजमानः। तद् दैवं क्षत्रं सहो बलम्॥ इति।**

'तस्य' अग्निष्टोमस्योद्गातृभिः संस्तुतस्य 'स्तोत्रियाः' स्तोत्रसंबन्धिन्य ऋचो नवत्यधिकं शतं संपद्यते। कथमिति ? चेत्, तदुच्यते—प्रातःसवने बहिष्पवमानाख्यं यत्स्तोत्रं, तस्य त्रिवृत्स्तोमः क्रियते। त्रिवृतश्चावृत्तिरहितत्वाद् विद्यमानेषु त्रिषु तृचेषु विद्यमाना नवर्चः स्तोत्रिया भवन्ति। तत ऊर्ध्वं चत्वार्याज्यस्तोत्राणि। तेष्वेकैकस्मिन्नपि विद्यमानानां तिसृणामृचामावृत्तिविशेषेण पञ्चदशः स्तोमः संपादनीयः। तथा सत्येकैकस्मिन् स्तोत्रे पञ्चदशर्च इत्येवं चतुर्षु स्तोत्रेषु मिलित्वा षष्टिः संपद्यते। तदेवं प्रातःसवने एकोनसप्ततिः। माध्यंदिने सवने माध्यंदिनपवमानाख्यमेकं स्तोत्रम्, तस्यापि पञ्चदशस्तोमयुक्तत्वात् स्तोत्रियाः पञ्चदश संपद्यन्ते। चत्वारि पृष्ठस्तोत्राणि। तेषु सप्तदशस्तोमे कृते सत्यष्टषष्टिसंख्याकाः स्तोत्रिया भवन्ति। उभयं मिलित्वा माध्यंदिनसवने त्र्यशीतिः संपद्यते। तृतीयसवने आर्भवपवमानस्तोत्रस्य सप्तदशस्तोमोपेतत्वात् तस्मिन् सप्तदश ऋचः। यज्ञायज्ञीयस्तोत्रस्यैकविंशस्तोमोपेतत्वात् तत्रैकविंशतिर्मिलित्वा तृतीयसवनेऽष्टात्रिंशत्। एवं सवनत्रये मिलित्वा नवत्यधिकशतसंख्याकाः[1] स्तोत्रिया भवन्ति॥

तत्र या नवतिः, ते दशसंख्याकास्त्रिवृत्स्तोमाः संपद्यन्ते। एकैकस्मिन् दशकेऽन्तिमामेकां परित्यज्य अवशिष्टानामृचां नवसंख्योपेतत्वात् त्रिवृत्स्तोमत्वम्। ततो नवसु दशकेषु नव त्रिवृत्स्तोमाः। यास्तु तेषु दशकेषु परित्यक्ता नवर्चः, स एकस्त्रिवृत्स्तोमः। एवं दशसंख्याकास्त्रिवृत्स्तोमाः। 'अथ' अनन्तरं यच्छतमस्ति, तस्मिन्नपि या नवतिः, ते पूर्वोक्तन्यायेन दश त्रिवृत्स्तोमा गणनीयाः। अथ नवतेरूर्ध्वंभाविन्यो 'याः' ऋचो दश, 'तासां' दशानामृचां मध्य एका स्तोत्रिया 'उदेति' अतिरिच्यते; अवशिष्टासु स्तोत्रियासु त्रिवृत्स्तोमः परिशिष्यते। एवं सत्येकविंशतिसंख्याकास्त्रिवृत्स्तोमाः, तेभ्योऽतिरिक्ता काचिदृगिति, एतावत्संपन्नम्। तत्रैकविंशतित्रिवृत्स्तोमसंघो योऽस्ति, स सर्वोऽपि 'असौ'

१. 'संख्याया अल्पीयस्याः'—इति (पा० सू० २.२.३५ वा०) नवतेः पूर्वनिपातः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मण्डले दृश्यमानः, एकविंशतिसंख्यापूरकः 'अभ्याहितः' मण्डले स्थापित आदित्यः 'तपति' प्रकाशते। आदित्यस्यैकविंशतिसंख्यापूरकत्वम् अन्यत्र श्रुतम्—"द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः"[1] इति।

यत्तु सत्रं गवामयनाख्यम्, तत्र यान्येकविंशत्यहानि, तत्सादृश्यादपि यथोक्तस्त्रिवृत्स्तोमसंबन्धः प्रशस्तः। कथं सादृश्यमिति? तदुच्यते—तस्मिन् सत्रे यन्मध्यममहः तद् विषुवन्नामकं दिवाकीर्त्यं भवति। तस्य पुरस्ताद्दशाहानि, उपरिष्टाद्दशाहानि। एवमत्रापि पूर्वोक्तरीत्या संपादितानामेकविंशतिसंख्याकानां त्रिवृत्स्तोमानां मध्ये यस्त्रिवृत्स्तोमः, स एव विषुवान् भविष्यति। एतस्माद् विषुवद् रूपात् स्तोमाद् 'अर्वाञ्चः' पूर्वभाविनो दश त्रिवृत्स्तोमाः, 'पराञ्चः' उत्तरभाविनोऽपि दश त्रिवृत्स्तोमाः, उभयोर्दशकयोर्मध्ये एष एकविंशतिसंख्यापूरकस्त्रिवृत्स्तोम 'उभयतोऽभ्याहितः' पार्श्वद्वये दशकव्याप्तः सन् 'तपति' आदित्यवत् प्रकाशते। तत्तत्रैकविंशतित्रिवृत्स्तोमेभ्य ऊर्ध्वं 'याऽसौ' ऋगेका स्तोत्रिया 'उदेति' अतिरिक्ता भवति, सेयम् 'एतस्मिन्नेकविंशतिसंघे' 'अध्यूह्ळा' अधिकत्वेनावस्थापिता। 'स यजमानः' अतिरिक्तः स्तोत्रियारूपो यजमानत्वेनावगन्तव्यः। किंच 'तत्' स्तोत्रियारूपं 'दैवं क्षत्रं' देवसंबन्धिनी क्षत्रियजातिरिन्द्रवरुणादिरूपा तत्क्षत्रं 'सहः' पराभिभवक्षमं 'बलं' सैन्यम्। एवमग्निष्टोमः स्तोत्रियद्वारा प्रशस्तः॥

उस [अग्निष्टोम] की [उद्गाताओं द्वारा तीनों सवनों में] संस्तुत स्तोत्रिय ऋचाएँ [सब मिलकर] एक सौ नब्बे हैं। [अर्थात् प्रातःसवन में एक त्रिवृत् और चार पञ्चदश=६९; मध्यंदिनसवन में एक पञ्चदश और चार सप्तदश = ८३, तथा सायंसवन में एक सप्तदश और एकविंश=३८ अर्थात् १९०=१०×९+१०×९+१० (=९+१)]। जो नब्बे है वह दस त्रिवृत् (=९) के बराबर (९×१०) है और जो दूसरा नब्बे है वह भी ९ का दस गुना है; और जो बचा हुआ एक दशक है, उसमें से एक अन्तिम को छोड़कर अवशिष्ट स्तोत्रिय ऋचाएँ नौ होती हैं। [इस प्रकार इक्कीस को त्रिवृत्

---

१. (i) तु० तै० सं० ५.१:१०.४। द्र० इतः पूर्वम्, १८८ पृष्ठे।
(ii) कथं संख्यैवमिति चेच्छ्लोकौ शृणु पुरातनौ—

त्रिवृद् बहिष्पवमाने नवस्युश्चतुर्षु चाज्येषु हि षष्टिरेवम्।
माध्यंदिने पवमाने दशाथ पञ्चाधिकाः स्तोत्रियाः स्युस्तथैव॥
चतुर्षु पृष्ठेषु तथाष्टषष्टिः सप्तार्भवे पवमाने दशाथ।
अग्निष्टोमं त्वेकविंशं वदन्तीत्येवं संख्या नवतिर्वै शतं च॥

—इति षड्गुरुशिष्यः।

३. द्र० पञ्चविंश ब्रा० २.१.१ (त्रिवृत्); ४.१ (पञ्चदश); ७.१ (सप्तदश); १४.१ (एकविंश)।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अर्थात् नौ गुना करने से १८९ होता है] वही इक्कीस का [नौ-] संघात होकर एक यह [सूर्य रूप से] तपता है [उस सत्र में 'विषुवत्' नामक मध्यम दिन के त्रिवृत् स्तोमों के मध्य जो त्रिवृत् स्तोम हैं] वह विषुवान् (मध्य स्थित) है, क्योंकि इसके पहले दस त्रिवृत् (= ९ ऋचा) स्तोम हैं और बाद में भी दस हैं; और यह इक्कीसवाँ दोनों ओर के दशकसंघात के मध्य [आदित्य के समान] तपता है अर्थात् प्रकाशित होता है। उन [इक्कीस त्रिवृत् स्तोम] के अलावा जो यह एक स्तोत्रिय ऋचा है वह इस इक्कीस के संघात पर अधिक रूप से अवस्थापित होती है और यह यजमान है यही दैवी-शक्ति और पराभूत करते वाला बल [अर्थात् सेना] है।

उक्तार्थवेदनं प्रशंसति—

**अश्नुते ह वै दैवं क्षत्त्रं सहो बलम्, एतस्य ह सायुज्यं सरूपतां सलोकता-मश्नुते य एवं वेद ॥ ४१ ॥ इति।**

उक्तार्थवेदिता पराभवसहिष्णुसैन्योपेतामिन्द्रादिदैवक्षत्त्रियजातिम् 'अश्नुते' प्राप्नोति। तत्र तेन क्षत्त्रेणेन्द्रादिना 'सायुज्यं' सहवासं 'सरूपतां' समानरूपत्वं 'सलोकताम्' एक-लोकावस्थितिं च प्राप्नोति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीय-पञ्चिकायां चतुर्थाध्याये (चतुर्दशाध्याये) तृतीयः खण्डः ॥ ३ ॥ (४१) [११२]

जो इस प्रकार जानता है वह दैवी-शक्ति और पराभव-समर्थ बल को प्राप्त करता है और उस [बल] से [इन्द्र आदि का] सायुज्य, सारूप्य और सालोक्य प्राप्त करता है।

॥ इस प्रकार चौदहवें अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

अथ त्रिवृदादिस्तोमचतुष्टयद्वारेणाग्निष्टोमं स्तोतुमाख्यायिकामाह—

**देवा वा असुरैर्विजिग्याना ऊर्ध्वाः स्वर्गं लोकमायन्, सोऽग्निर्दिविस्पृगूर्ध्व उदश्रयत, स स्वर्गस्य लोकस्य द्वारमवृणोदग्निर्वै स्वर्गस्य लोकस्याधिपतिस्तं वसवः प्रथमा आगच्छंस्त एनमब्रुवन्नति नोऽर्जस्याकाशं नः कुर्विति, स नास्तुतोऽतिस्रक्ष्य इत्यब्रवीत्, स्तुत नु मेति, तथेति, तं ते त्रिवृता स्तोमेना-स्तुवंस्तान् स्तुतोऽत्यार्जत, ते यथालोकमगच्छन् ॥ इति।**

ये देवा अग्निसहिताः पूर्वमसुरैः सह युद्धं कृत्वा 'विजिग्यानाः' विजयं प्राप्ताः, ते देवा ऊर्ध्वगामिनः सन्तः स्वर्गं लोकम् आयन् प्राप्नुवन्। तदानीं 'सोऽग्निः' स्वस्थान एव स्थित्वा 'दिविस्पृक्' द्युलोकं स्पृशन् 'ऊर्ध्वः' उन्नतः सन् 'उदश्रयत' उपरितनं देश-माश्रितवान्, द्युलोकपर्यन्तं स्वकीयां ज्वालां वर्धितवानित्यर्थः। ततः 'सः' अग्निः स्वर्ग-लोकद्वारम् 'अवृणोत्' तयाच्छादितमकरोत्। न चेतरेषु देवेषु स्थितेषु कथमग्ने-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रोहत्सामर्थ्यमिति वाच्यम्। यस्माद् 'अग्निरेव स्वर्गस्य लोकस्याधिपतिः'। अग्नौ ह्यग्निष्टोमादिकर्माण्यनुष्ठाय स्वर्गं प्राप्नुवन्ति। 'तं' स्वर्गद्वारनिरोधनमग्निमष्टौ वसवः 'प्रथमाः' पुरोगामिनो भूत्वाऽगच्छन् प्राप्तवन्तः। प्राप्य च 'एनम्' अग्निं 'ते' वसव एवमब्रुवन्—हे अग्ने त्वं 'नः' अस्मान् 'अत्यर्जसि'[1] त्वदीयां ज्वालामतिलङ्घ्य 'अर्जयितुं' स्वर्गं प्रापयितुमर्हसि, 'नः' अस्माकं तत्प्रात्प्यर्थम् 'आकाशं' त्वदीयज्वालाशमनेनावकाशं कुर्विति। ततः 'सः' अग्निरेवमब्रवीत्—युष्माभिरस्तुतोऽहं 'नातिस्रक्ष्ये' द्वारावरोधं न परित्यक्ष्यामि। तस्मादवरोधपरिहाराय 'नु' क्षिप्रमेव 'मा' मामग्निं 'स्तुत' स्तोत्रं कुरुतेति। 'ते' वसवस्तथेत्यङ्गीकृत्य त्रिवृन्नामकेन स्तोमेनाग्निम् अस्तुवन्॥

तस्य च त्रिवृत् स्तोमस्तोत्रस्य विधायकं छन्दोगब्राह्मणमेवमाम्नायते—'तिसृभ्यो हिंकरोति स प्रथमया, तिसृभ्यो हिंकरोति स मध्यमया, तिसृभ्यो हिंकरोति स उत्तमयोद्यती त्रिवृतो विष्टुतिः'[2] इति। अस्यायमर्थः—'उपास्मै गायता नरः' इति यः प्रथमस्तृचः, 'दविद्युतत्या रुचेति' यो द्वितीयस्तृचः, 'पवमानस्य ते कवे' इति यस्तृतीयस्तृचः, एतेषु त्रिषु तृचात्मकेषु सूक्तेषु[3] विद्यमानानां नवानामृचां त्रिभिः पर्यायैर्गानं कर्तव्यम्। तत्र प्रथमे पर्याये त्रिषु सूक्तेष्वाद्यास्तिस्र ऋचो गातव्याः। द्वितीये पर्याये मध्यमा ऋचो गातव्याः। तृतीयपर्याये उत्तमा ऋचो गातव्याः। 'तिसृभ्यः' इति तृतीयार्थे पञ्चमी। 'हिंकरोति'—इत्यनेन गानमुपलक्ष्यते। सेयं यथोक्तप्रकारोपेता गीतिस्त्रिवृत्स्तोमस्याद्या 'विष्टुतिः' स्तुतिप्रकारविशेषः। तस्या विष्टुतेः 'उद्यती' इत्येवं नामधेयमिति। ईदृशेन स्तोमेन स्तुतोऽग्निः तान् वसून् 'अत्यार्जत' निरुद्धं द्वारमतिलङ्घ्य स्वर्गमध्ये प्रापितवान्। 'ते' च वसवो देवा 'यथालोकं' स्वस्य स्वस्योचितं लोकं स्थानविशेषमनतिक्रम्य तत्रागच्छन्॥

iii. ४२ [xiv. ४] जिन देवों ने [अग्नि के सहित पहले] असुरों के साथ युद्ध करके विजय प्राप्त की वे ऊर्ध्वगामी होकर स्वर्गलोक को चले गये। तब वह अग्नि [अपने स्थान पर ही रहकर] द्युलोक का स्पर्श करते हुए [अर्थात् द्युलोकपर्यन्त अपनी ज्वाला को बढ़ाते हुए] ऊपर की ओर उठी। उसने स्वर्गलोक के द्वार को बन्द कर दिया। अग्नि ही स्वर्ग लोक का अधिपति है। उसके पास पहले [अष्ट] वसु आए और उन्होंने इससे कहा—'हे अग्नि, तुम हम लोगों को अपनी ज्वाला का उल्लङ्घन करके स्वर्ग लोक को प्राप्त कराने के योग्य हो अतः [ज्वालाशमन के द्वारा] हम लोगों के लिए अवकाश प्रदान करो।' उसने कहा—'तुम लोगों से स्तुत हुए बिना मैं द्वारावरोध नहीं

---

१. Aufrecht (p. 430) conjectures 'अर्जासि' or 'अर्जस्व', the latter of which Bohtlingk (BKSGW. 15 Dec, 1900, p. 416) aproves. See, Keith's tra. p. 192.

२. ता० ब्रा० २.१.१।

३. उ० आ० १.१.१–३।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हटाऊँगा। अतः शीघ्र ही मेरी स्तुति करो।' उन्होंने कहा—'ठीक है।' उन्होंने त्रिवृत् स्तोम (९ ऋचाओं) के द्वारा उसकी स्तुति की। उनसे स्तुत हो उन [वसुओं] को निरुद्ध द्वार लाँघकर स्वर्ग को प्राप्त कराया। वे अपने यथोचित लोक को आए।

अथ पञ्चदशस्तोमेन स्तुतिं दर्शयति—

**तं रुद्रा आगच्छंस्त एनमब्रुवन्नति नोऽर्जस्याकाशं नः कुर्विति; स नास्तुतोऽतिस्रक्ष्य इत्यब्रवीत्, स्तुत नु मेति, तथेति, तं ते पञ्चदशेन स्तोमेनास्तुवंस्तान् स्तुतोऽत्यार्जत, ते यथालोकमगच्छन्** ॥ इति।

पञ्चदशनामकस्य स्तोमस्य स्वरूपं छन्दोगैरेवमाम्नायते—'पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकया, पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया, पञ्चभ्यो हिंकरोति स एकया स एकया स तिसृभिः'[1] इति। अस्यायमर्थः—तृचात्मकमेकं सूक्तं त्रिरावर्तनीयम्। तत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः, द्वितीयावृत्तौ मध्यमायाः, तृतीयावृत्तावुत्तमायाः। सोऽयं पञ्चदशस्तोम इति। अन्यत् पूर्ववद् व्याख्येयम्॥

उसके पास रुद्र [गण] आए और उन्होंने इनसे कहा— 'हे अग्नि, तुम हम लोगों को अपनी ज्वाला का उल्लङ्घन करके स्वर्ग को प्राप्त कराने योग्य हो। अतः [ज्वाला-शमन के द्वारा] हम लोगों के लिए मार्ग प्रदान करो।' उसने कहा—'तुम लोगों से स्तुत हुए बिना मैं द्वारावरोध नहीं हटाऊँगा। अतः शीघ्र ही मेरी स्तुति करो।' उन्होंने कहा—'ठीक है।' उन्होंने पञ्चदश-स्तोम के द्वारा उसकी स्तुति की। उनसे स्तुत हो उन [रुद्रों] को निरुद्ध द्वार लाँघकर स्वर्ग को प्राप्त कराया। तब वे अपने यथोचित लोक को आए।

अथ सप्तदशस्तोमेन स्तुतिं दर्शयति—

**तमादित्या आगच्छंस्त एनमब्रुवन्नति नोऽर्जस्याकाशं नः कुर्विति; स नास्तुतोऽतिस्रक्ष्य इत्यब्रवीत्, स्तुत नु मेति, तथेति; तं ते सप्तदशेन स्तोमेनास्तुवंस्तान् स्तुतोऽत्यार्जत; ते यथालोकमगच्छन्** ॥ इति।

सप्तदशस्तोमस्य स्वरूपं छन्दोगैरेवमाम्नायते—'पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकया, पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया, सप्तभ्यो हिंकरोति स एकया स तिसृभिः स तिसृभिः'[2] इति। अत्र प्रथमावृत्तौ प्रथमायास्त्रिरभ्यासः, द्वितीयावृत्तौ मध्यमायाः; तृतीयावृत्तौ मध्यमोत्तमयोः। सोऽयं सप्तदशस्तोम इति। अन्यत् पूर्ववत् व्याख्येयम्॥

उसके पास आदित्य गण आए और उन्होंने इन [अग्नि] से कहा—'हे अग्नि, तुम हम लोगों को अपनी ज्वाला का उल्लङ्घन करके स्वर्ग प्राप्त कराने योग्य हो। अतः हम

---

१. ता० ब्रा० २.४.१। २. ता० ब्रा० २.७.१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

लोगों के लिए अवकाश करो।' उसने कहा—'तुम लोगों से स्तुत हुए बिना मैं अवरोध नहीं हटाऊँगा। अतः शीघ्र ही मेरी स्तुति करो।' उन्होंने कहा—ठीक है।' उन्होंने सप्तदश स्तोम के द्वारा उसकी स्तुति की। उनसे स्तुत हो उन [आदित्यों] को निरुद्ध द्वार लाँघकर स्वर्ग को प्राप्त कराया। तब वे अपने यथोचित लोक को आए।

एकविंशस्तोमेन स्तुतिं दर्शयति—

**तं विश्वे देवा आगच्छंस्त एनमब्रुवन्नति नोऽर्जस्याकाशं नः कुर्विति; स नास्तुतोऽतिस्रक्ष्य इत्यब्रवीत्, स्तुत नु मेति; तथेति; तं त एकविंशेन स्तोमेनास्तुवंस्तान् स्तुतोऽत्यार्जत, ते यथालोकमगच्छन् ॥ इति।**

एकविंशस्तोमस्य स्वरूपं छन्दोगैरेवमाम्नायते—'सप्तभ्यो हिंकरोति स तिसृभिः स तिसृभिः स एकया, सप्तभ्यो हिंकरोति स एकया स तिसृभिः स तिसृभिः, सप्तभ्यो हिंकरोति स तिसृभिः स एकया स तिसृभिः'[1] इति। प्रथमपर्याये तृचस्योत्तमाया ऋचः सकृत्पाठः। द्वितीयपर्याये प्रथमायाः सकृत्पाठः, तृतीयपर्याये मध्यमायाः सकृत्पाठः। अथ शिष्टानां तु त्रिरावृत्तिः। सोऽयमेकविंशस्तोम इति। अन्यत् पूर्ववद् व्याख्येयम् ॥

उसके पास विश्वेदेव आए और उन्होंने इन [अग्नि] से कहा—'हे अग्नि, तुम हम लोगों को अपनी ज्वाला का उल्लङ्घन करके स्वर्ग प्राप्त कराने योग्य हो। अतः हम लोगों के लिए अवकाश करो।' उसने कहा—'तुम लोगों से स्तुत हुए बिना मैं अवरोध नहीं हटाऊँगा। अतः शीघ्र ही मेरी स्तुति करो।' उन्होंने कहा—'ठीक है।' उन्होंने एकविंश स्तोम के द्वारा उसकी स्तुति की। उनसे स्तुत हो उन [विश्वे देवों] को निरुद्ध द्वार लाँघकर स्वर्ग को प्राप्त कराया। तब वे अपने यथोचित लोक को आए।

स्तोमचतुष्टयमुपसंहरति—

**एकैकेन वै तं देवाः स्तोमेनास्तुवंस्तान् स्तुतोऽत्यार्जत; ते यथालोकमगच्छन् ॥ इति।**

इस प्रकार एक-एक स्तोम से देवों ने उन [अग्नि] की स्तुति की। उनसे स्तुत हो उन [देवों] को निरुद्ध द्वार लाँघकर स्वर्ग को प्राप्त कराया। तब वे यथेष्ट लोक को आए!

अग्निष्टोमप्रयोगे चतुर्णाम् उक्तानां स्तोमानां विकल्पशङ्काव्यावृत्त्यर्थं समुच्चयं विधत्ते—

**अथ हैनमेष एतैः सर्वैः स्तोमैः स्तौति यो यजते ॥ इति।**

अर्थवादवैलक्षण्येन विधित्वं द्योतयितुम् 'अथ'शब्दः,—योऽग्निष्टोमेन यजते, स एतैश्चतुर्भिरपि स्तोमैः स्तुवीत ॥

१. ता० ब्रा० २.१४.१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इस प्रकार इन सभी चारों स्तोमों से वह स्तुति करता है जो [अग्निष्टोम से] यजन करता है।

अनुष्ठातुः स्वर्गप्राप्तिफलस्य सिद्धत्वात् तेन सह समुच्चित्य वेदितुरपि तत्फलं दर्शयति—

**यश्चैनमेवं वेदाती तु तमर्जतै ॥** इति।

यजमानो येन प्रकारेण यजते, अनेनैव प्रकारेण 'एनम्' अग्निष्टोमं 'यश्च' वेदिता तमपि वेदितारं द्वारनिरोधनमतिलङ्घ्य 'अर्जातै'[1] प्रापयत्येव। 'अती तु'—इति दीर्घश्छान्दसः ॥

और, जो [यजमान] उसको इस प्रकार जानता है वह द्वार निरोध को पारकर [स्वर्ग] प्राप्त ही कर लेता है।

वेदनमात्रेणानुष्ठानसमानफलं दृढयितुं पुनरप्याह—

**अति ह वा एनमर्जते स्वर्गं लोकमभि य एवं वेद ॥ ४२ ॥**

वेदनमात्रेण सिद्धेऽपि फले 'कर्मभूयस्त्वात् फलभूयस्त्वम्' इति न्यायेनानुष्ठानवैयर्थ्यं नास्ति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेय ब्राह्मणभाष्ये तृतीयपञ्चिकायां चतुर्थाध्याये (चतुर्दशाध्याये) चतुर्थः खण्डः ॥ ४ ॥ (४२) [११३]

जो [ऋत्विज] इस प्रकार जानता है वह स्वर्ग लोक के प्रति द्वार निरोध को पारकर इस [यजमान] को [भी स्वर्ग] प्राप्त ही कराता है।

॥ इस प्रकार चौदहवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

अथाग्निष्टोमादिशब्दं निर्वचनतः प्रशंसति—

**स वा एषोऽग्निरेव यदग्निष्टोमः, तं यदस्तुवंस्तस्मादग्निस्तोमः, तमग्निस्तोमं सन्तमग्निष्टोम इत्याचक्षते परोक्षेण, परोक्षप्रिया इव हि देवाः ॥** इति।

योऽयमग्निष्टोमोऽस्ति, स एष साक्षात् 'अग्निरेव' स्वशरीरमेव; त्रिभिश्छन्दोभिस्त्रिभिः सवनैश्च विभज्य क्रतोर्निष्पादितत्वात्। 'तं' क्रतुरूपमग्निं 'यद्' यस्मात् कारणाद् देवा

---

१. (i) 'अतिलङ्घ्याज्जातै (र्जंत ए)व' इति आनन्दाश्रममुद्रितपाठः। (ii) 'अर्जेर्लेटे। 'आत ऐ' (पा० सू० ३.४.९५), 'वैतोऽन्यत्र' (पा० सू० ३.४.९६) अर्जेत 'दुःखमतिक्रमय्य सुखं प्रवेशयेत्'—इति षड्गुरुशिष्यः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्तुवन्, तस्मादग्निविषयस्तुतियुक्तत्वादयं क्रतुः 'अग्निस्तोमः' इत्येतन्नामकः। तन्नामयुक्तं क्रतुं परोक्षनाम्ना व्याहर्तुं सकारतकारयोः षकारटकारावादिश्य 'अग्निष्टोमः' इति वैदिका आचक्षते। वर्णान्तरेण व्यवहितत्वात् शीघ्रप्रतीतिरहितं नाम परोक्षमित्युच्यते। यस्माल्लोके 'देवाः' पूज्या आचार्यादयः परोक्षनामप्रिया एव, तस्मात् क्रतोरपि तद्युक्तम् ॥

iii. ४३ [xiv. ५] जो अग्निष्टोम है वह साक्षात् अग्नि ही है; उस [क्रतु रूप अग्नि की देवों ने स्तोम से स्तुति की, इसीलिए उसका 'अग्निस्तोम' नाम हुआ। अग्निस्तोम होते हुए उस [नाम से युक्त क्रतु] को परोक्ष रूप से [व्यवहार के लिए वैदिक सकार-तकार का षकार-टकार रूप वर्णान्तर करके] 'अग्निष्टोम' नाम से पुकारते हैं; क्योंकि देव तो परोक्षप्रिय ही होते हैं।

नामान्तरस्य निर्वचनं दर्शयति—

**तं यच्चतुष्टया देवाश्चतुर्भिः स्तोमैरस्तुवंस्तस्माच्चतुस्तोमस्तं चतुस्तोमं सन्तं चतुष्टोम इत्याचक्षते परोक्षेण, परोक्षप्रिया इव हि देवाः ॥** इति।

'चतुष्टयाः' चतुर्विधाः,—वसवो रुद्रा आदित्या विश्वे देवाश्चेति। स्तोमाश्च त्रिवृत्-पञ्चदशः सप्तदश एकविंश इत्येवं चत्वारः। चतुष्टोमनामनिर्वचनं पूर्ववद् योजनीयम् ॥

चतुर्विध [वसु रुद्र आदि] देवों ने जो [त्रिवृत्; पञ्चदश आदि] चार स्तोमों से स्तुति की, इसीलिए इसका 'चतुः-स्तोम' नाम हुआ। चतुस्तोम होते हुए उसको परोक्ष रूप से 'चतुष्टोम' नाम से पुकारते हैं; क्योंकि देव तो परोक्षप्रिय ही होते हैं।

ज्योतिष्टोमनामनिर्वचनं दर्शयति—

**अथ यदेनमूर्ध्वं सन्तं ज्योतिर्भूतमस्तुवंस्तस्माज्ज्योतिस्तोमस्तं ज्योतिस्तोमं सन्तं ज्योतिष्टोम इत्याचक्षते परोक्षेण, परोक्षप्रिया इव हि देवाः ॥** इति।

'अथ' नामद्वयकथनानन्तरं, तृतीयं नाम कथ्यत इति शेषः। अयम् अग्निर्भूमिमारभ्य द्युलोकपर्यन्तमूर्ध्वावस्थितः, तथा प्रकाशमानत्वाज्ज्योतिर्भूतः। तं तादृशं देवा अस्तुवन्, 'तस्माज्ज्योतिस्तोमः'। ज्योतिषः 'स्तोमः' स्तुतिः यस्मिन् क्रतौ, स क्रतुर्ज्योतिस्तोमः। अन्यत् पूर्ववत् ॥

अब [दो नामों के अनन्तर] जो इस [अग्नि] को [भूमि से लेकर द्युलोक पर्यन्त] ऊर्ध्वावस्थित [तथा प्रकाशमान होने से] ज्योतिर्भूत की देवों ने स्तुति की, इसीलिए उसका 'ज्योतिस्तोम' [अर्थात् ज्योतिःपुञ्ज की स्तुति] नाम हुआ। ज्योतिस्तोम होते हुए उसको परोक्ष रूप से [वर्णान्तर करके] 'ज्योतिष्टोम' नाम से पुकारते हैं; क्योंकि देव तो परोक्षप्रिय ही होते हैं।

नामनिर्वचनेन प्रशस्य पुनरप्याद्यन्तराहित्येन प्रशंसति—

**स वा एषोऽपूर्वोऽनपरो यज्ञक्रतुर्यथा रथचक्रमनन्तमेवं यदग्निष्टोमस्तस्य यथैव प्रायणं तथोदयनम् ॥** इति।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'स एषः' अग्निष्टोमः पूर्वापररहितः, 'पूर्वः' आदिः, 'अपरः' अन्तः, आद्यन्तरहितो यज्ञक्रतुः। यथा लोके 'रथचक्रमनन्तं' पुनः पुनः परिवर्तमानस्य रथचक्रस्य अयमादिरयमन्त इति विभागः कर्तुं न शक्यते, तस्मादिदमन्तरहितम्। आदिरहितस्याप्येतदुपलक्षणम्। एवं क्रतुरपि। ननु प्रायणीयेष्टिरादिः, उदयनीयेष्टिरन्त इति चेत् ? मैवम् - योऽग्निष्टोमोऽस्ति, तस्य यादृशं प्रायणीयं कर्म, तादृशमेवोदयनीयं कर्म; तयोः यागधर्मसाम्यात्। अतो विवेक्तुमशक्यत्वाद् आद्यन्तरहितः क्रतुः॥

वह यह [अग्निष्टोम] पूर्व और पर [आदि और अन्त] से रहित यज्ञ क्रतु है, जैसे रथ का पहिया [बार-बार घूमते रहने से आदि-अन्त के विभाग से रहित होता है वैसे ही यह] आदि अन्तरहित है। जो अग्निष्टोम है उसका जैसा प्रायणीय [प्रारम्भिक] कर्म होता है वैसा ही उदयनीय [अन्तिम] कर्म होता है।

उक्तमर्थं मन्त्रोदाहरणेन द्रढयति—

**तदेषाऽभि यज्ञगाथा गीयते—'यदस्य पूर्वमपरं तदस्य, यद्वस्यापरं तद्वस्य पूर्वम्। अहेरिव सर्पणं शाकलस्य न विजानन्ति यतरत् परस्तादिति॥ इति।**

सर्वैरपि सुभाषितत्वेन गीयत इति 'गाथा', यज्ञविषया गाथा। 'तत्' तस्मिन्नग्निष्टोमस्याद्यन्तयोः प्रायणीयोदयनीययोरेकविधत्वे काचिदेषा 'यज्ञगाथा' 'अभिगीयते' सर्वतः पठ्यते। यदस्येत्यादिगाथा। 'अस्य' अग्निष्टोमस्य यत् 'पूर्वम्' उपक्रमरूपं कर्मास्ति, तदेवास्य 'अपरं' समाप्तिरूपं कर्म। 'यदु' यदेवास्य 'अपरं' समाप्तिरूपम्, 'तदु' तदेवास्य 'पूर्वम्' उपक्रमरूपम्। आदित्यः प्रायणीयश्चरुरादित्य उदयनीयश्चरुरिति द्रव्यदेवतयोरुभयत्रैकविधत्वात् तयोरेकत्वोपचारः। आद्यन्तयोरपरिज्ञाने पूर्वं ब्राह्मणे रथचक्रदृष्टान्तो दर्शितः। मन्त्रे त्वन्यो दृष्टान्त उच्यते।[1] 'शाकल' शब्दः सर्पविशेषवाची। शाकलनाम्नः 'अहेः' सर्पविशेषस्य यथा 'सर्पणं' गमनम्, तथैवायमग्निष्टोमः। स च सर्पणकाले मुखेन पुच्छस्य दंशनं कृत्वा वलयाकारो भवति, तत्र किं मुखं किं वा पुच्छमिति न ज्ञायते; एवमत्राप्यदितिदेवताकस्य चरोः साम्ये सति प्रायणीयोदयनीययोः 'यतरत्' 'परस्तात्' पश्चाद्भावि, यतरच्च पूर्वभावि किमपि न विजानन्ति॥

जैसा कि इसके विषय में एक यज्ञविषयक गाथा गायी जाती है—इस [अग्निष्टोम] का जो पूर्व [उपक्रम] कर्म है वही इसका समाप्ति रूप कर्म है और जो भी इसका समाप्ति रूप कर्म है वही इसका पूर्व कर्म है। शाकल नामक सर्प के गमन के समान

---

1. 'Like the creeping of a snake is the movement of the śakala (ritual)'. इति कीथमहोदयः। द्र० टि० The reference to the शाकल is seen by Weber (Ind. stud. ix, 277), and though not apparently accepted by Aufrecht or others appear to me correct, Rg. Br. by A. B. Keith.

२. उ० आ० १.१.१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[अदिति देवताक चरु के साम्य के कारण प्रायणीय और उदयनीय में] कौन कर्म पूर्व-भावी है और कौन पश्चाद्भावी है - यह नहीं जानते [जैसे शाकल सर्प के सर्पण के समय पूँछ को मुख से पकड़कर वलयाकार रूप में चलने के कारण लोग उसके आदि और अन्त का पता नहीं पाते]।

अस्य गाथायास्तात्पर्यं संक्षिप्य दर्शयति—

**यथा ह्येवास्य प्रायणमेवमुदयनमसदिति, ॥ इति ।**

'अस्य' अग्निष्टोमस्य प्रायणं प्रारम्भो यादृशः, एवम् 'उदयनं' समाप्तिः 'असत्' अस्ति, भवतीत्यर्थः ॥

इस [अग्निष्टोम] का जैसा प्रारम्भिक कृत्य होता है वैसा ही समाप्ति का भी होता है ।

अत्र कंचिदाक्षेपमुद्भावयति—

**तदाहुर्यत्त्रिवृत्प्रायणमेकविंशमुदयनं, केन ते समे इति ॥ इति ।**

पूर्वोदाहृतस्त्रिवृत्स्तोमः प्रातःसवनादौ प्रयोज्यत्वात् 'प्रायणम्' उपक्रमरूपम् । एकविंशस्तोमस्तु तृतीयसवनान्ते प्रयोज्यत्वाद् 'उदयनं' समाप्तिरूपम् । 'केन' कारणेन 'ते' प्रायणोदयने 'समे' भवेतामित्याक्षेपः ॥

इस पर प्रश्न है कि जब [प्रातःसवन के आदि में प्रयुक्त होने वाला] त्रिवृत् (९ मन्त्र) स्तोम उपक्रम रूप है और [सायंसवन में] एकविंश-स्तोम समाप्ति रूप है तो किस कारण वे दोनों समान हैं ?

तत्र परिहारं दर्शयति—

**यो वा एकविंशस्त्रिवृद् वै सोऽथो यदुभौ तृचौ तृचिनाविति ब्रूयात् तेनेति ॥ ४३ ॥ इति ।**

योऽयमेकविंशस्तोमोऽस्ति, स एव त्रिवृदवगन्तव्यः, स्तोमत्वाकारेण तयोरेकविधत्वात् । 'अथो' अपि च 'यत्' यस्मात्कारणात् स्तोमद्वयाश्रयभूतौ 'उभौ' तृचौ 'तृचिनौ' तृचित्व धर्मयुक्तौ । तत्र त्रिवृत्स्तोमाश्रयस्य 'उपास्मै गायता नरः' इति सूक्तस्य तृचत्व-धर्मः प्रसिद्ध एव । एकविंशस्तोमाश्रयस्य 'यज्ञा यज्ञा वो अग्नये' इति सूक्तस्य प्रगाथत्वाद् यद्यपि तस्मिन् द्वे एव ऋचावाम्नायेते, तथाऽपि स्तोत्रकाले प्रग्रथनेन पादानावर्त्यं तृचत्वं संपाद्यते । 'तेन' तृचत्वधर्मोपेतत्वकारणेन द्वयोः स्तोमयोरेकविधत्वमित्युत्तरं ब्रूयात् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीय-पञ्चिकायां चतुर्थाध्याये (चतुर्दशाध्याये) पञ्चमः खण्डः ॥ ५ ॥ ( ४३ ) [११४]

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जो एकविंशस्तोम है वही त्रिवृत्-स्तोम है. और भी, क्योंकि [स्तोमद्वय में रहने वाले] दोनों तृच [दो नवक में त्रिवृत्=९] तृचत्व धर्म से युक्त हैं—उसे ऐसा उत्तर कहना चाहिए।

॥ इस प्रकार चौदहवें अध्याय के पञ्चम खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

पुनरादित्यसाम्येन प्रशंसति—

**यो वा एष तपत्येषोऽग्निष्टोम एष साह्नस्तं सहैवाह्ना संस्थापयेयुः; साह्नो वै नाम ॥ इति ।**

य एव प्रसिद्धः 'एषः' अस्मत्प्रत्यक्ष आदित्यः तपति, 'एषोऽग्निष्टोमः', तयोरादित्याग्निष्टोमयोः सदृशत्वात् । कथं साम्यमिति ? तदुच्यते—'एषः' अग्निष्टोम आदित्यवत् 'साह्नः' यथा आदित्योऽह्ना सह वर्तते, तथाऽयमपि । 'तम्' अग्निष्टोम एकेनाह्ना सहैव 'संस्थापयेयुः' समापयेयुः । तस्मादादित्यस्येव 'साह्नः' इति क्रतोर्नाम संपन्नम् ॥

iii. ४४ [xiv. ६] जो यह [प्रत्यक्षतः आदित्य] प्रकाशित है यह अग्निष्टोम ही है[1] [क्योंकि यह आदित्य के ही समान] साह्न अर्थात् एक दिन में होने वाला है। उस [अग्निष्टोम] को एक दिन में ही समाप्त करना चाहिए। इसलिए इस क्रतु का नाम साह्न [=एकाह्निक] हुआ।

इदानीमग्निष्टोमानुष्ठाने त्वरां निषेधति—

**तेनासंत्वरमाणाश्चरेयुर्यथैव प्रातःसवन एवं माध्यंदिन एवं तृतीयसवन एवमु ह यजमानोऽप्रमायुको भवति ॥ इति ।**

यस्मादेकमहः साकल्येनानुष्ठानाय पर्याप्तं, 'तेन' कारणेन सर्वेऽप्यृत्विजः 'असंत्वरमाणाः' त्वरामकुर्वन्त उत्तरोत्तरानुष्ठानं सम्यक्पर्यालोचयन्तः 'चरेयुः' अनुतिष्ठेयुः । यथैव प्रातःसवने मध्यरात्रादूर्ध्वमारभ्य मध्याह्नात् पूर्वकालस्यानुष्ठानाय पर्याप्तत्वान्नास्ति त्वरा, एवमुत्तरयोरपि सवनयोः । 'एवमु ह' अनेनैव प्रकारेण शनैरनुष्ठाने सति बुद्धिसमाधानेनाङ्गलोपाभावाद् यजमानः 'अप्रमायुकः' अपमृत्युरहितो भवति ॥

इसलिए इसे शीघ्रता से नहीं करना चाहिए। जैसे [मध्य रात्रि के बाद आरम्भ करके मध्याह्न के पूर्व] प्रातःसवन में [अनुष्ठान करते हैं] वैसे ही माध्यंदिन सवन में और वैसे ही सायंसवन में [शीघ्रतारहित कर्म करना चाहिए]। इस प्रकार से धीरे-धीरे अनुष्ठान करने से [अङ्गलोपाभाव से] यजमान अकालमृत्युरहित होता है।

---

१. तु० गो० ब्रा० ९.१० ।　　　　२. उ० आ० १.१.२० ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विपक्षे बाधकं दर्शयति—

**यद्ध वा इदं पूर्वयोः सवनयोरसंत्वरमाणाश्चरन्ति, तस्माद्धेदं प्राच्यो ग्रामता बहुलाविष्टा, अथ यद्धेदं तृतीयसवने संत्वरमाणाश्चरन्ति, तस्माद्धेदं प्रत्यञ्चि दीर्घारण्यानि भवन्ति, तथा ह यजमानः प्रमायुको भवति ॥** इति ।

'यद्ध वै' यदि प्रथमद्वितीययोः सवनयोः कालसंकोचाभावात् असंत्वरमाणाः 'इदं' कर्म 'चरन्ति' अनुतिष्ठेयुः, तदानीं 'तस्माद्ध' तस्मादेवाङ्गलोपाभावात् कारणादिदं दृश्यते। किमिदमिति ? तदुच्यते—'प्राच्यो ग्रामताः' पूर्वदिग्वर्तिनो ग्रामसमूहाः 'बहुलाविष्टाः' बहुभिर्जनैः संपूर्णा भवन्ति। 'अथ' तद्विपर्ययेण 'यद्ध' यदि तृतीयसवने कालसंकोचमाशङ्क्य 'संत्वरमाणाः' अतित्वरया युक्ताः 'इदं' कर्म 'चरन्ति' अनुतिष्ठन्ति, 'तस्माद्ध' तदानीमङ्गवैकल्यसंभवादेवेदं लोके दृश्यते,—'प्रत्यञ्चि' पश्चिमदिग्वर्तीनि 'दीर्घारण्यानि' जनशून्यानि भवन्ति। 'तथा ह' तादृशेन संभाविताङ्गवैकल्ययुक्तेनानुष्ठानेन यजमानः 'प्रमायुको भवति' अपमृत्युना म्रियत इत्यर्थः ॥

यदि प्रातः और माध्यंदिन सवनों में इस कर्म को शीघ्रता में नहीं करता है तो पूर्व की ओर के ग्राम-समूह बहुतजनों से युक्त होते हैं और यदि तृतीय सवन में इसको शीघ्रता से करते हैं तो [अङ्गवैकल्य की संभावना होने से] ऐसा देखा जाता है कि पश्चिमदिक्वर्ती गाँव बड़े जंगल [जन शून्य] हो जाते हैं[1] और उस [अङ्गविकलता वाले अनुष्ठान] से यजमान की अकाल मृत्यु हो जाती है।

विपक्षे बाधकमुक्त्वा स्वपक्षं निगमयति—

**तेनासंत्वरमाणाश्चरेयुर्यथैव प्रातःसवन एवं माध्यंदिन एवं तृतीयसवन एवमु ह यजमानोऽप्रमायुको भवति ॥** इति ।

इसलिए इसे शीघ्रता में नहीं करना चाहिए। जैसे प्रातःसवन में [करें] वैसे ही माध्यंदिन सवन में, वैसे ही तृतीयसवन में [शीघ्रतारहित कर्म करें]। इस प्रकार अनुष्ठान करने से यजमान अकालमृत्यु से रहित होता है।

अथ त्रिषु सवनेषु शस्त्रस्योत्तरोत्तरं ध्वन्याधिक्यं विधत्ते—

**स एतमेव शस्त्रेणानु पर्यावर्त्तेत; यदा वा एष प्रातरुदेत्यथ मन्द्रं तपति, तस्मान्मन्द्रया वाचा प्रातःसवने शंसेद्, अथ यथाऽभ्येत्यथ बलीयस्तपति, तस्माद् बलीयस्या वाचा मध्यंदिने शंसेद्, अथ यदाभितरामेत्यथ बलिष्ठतमं तपति तस्माद् बलिष्ठतमया वाचा तृतीयसवने शंसेद्, एवं शंसेद् यदि वाच ईशीत; वाग्घि शस्त्रं; यया तु वाचोत्तरोत्तरिण्योत्सहेत समापनाय, तया प्रतिपद्येतैतत्सुशस्ततममिव भवति ॥** इति ।

---

१. तु० शत० ब्रा० ९.३.१.१८ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'सः' होता 'एतमेव' आदित्यमनुसृत्य 'शस्त्रेण पर्यावर्त्तेत' यथा यथादित्य उत्तरोत्तराधिक्येन तपति, तथा तथैवोत्तरोत्तरध्वन्याधिक्येन होता शंसेत् । 'यदा वै' इत्यादिना तदेव स्पष्टीक्रियते । यस्मिन्नेव काल 'एषः' आदित्यः 'प्रातरुदेति' प्रातःकालमभिव्यञ्जयितुमुदितो भवति, 'अथ' तदानीं 'मन्द्रम्' अल्पं यथा भवति तथा तपति; तस्मादादित्यमनुवर्तमानो होता प्रातःसवने 'मन्द्रया' स्वल्पध्वन्युपेतया वाचा शंसेत् । 'अथ' प्रातःकालादूर्ध्वं सूर्यो 'यदाऽभ्येति' मध्याह्नकालं निष्पादयितुमाभिमुख्येनोर्ध्वं गच्छति, 'अथ' तदानीं सूर्यो 'बलीयः' प्रबलं यथा भवति तथा तपति, तस्माद्धोताऽपि 'बलीयस्या' प्रबलध्वनियुक्तया वाचा माध्यंदिने सवने शंसेत् । 'अथ' मध्याह्नादूर्ध्वं यदा सूर्यः 'अभितरामेति' पश्चिमाभिमुखानां पुरुषाणामत्यन्तमाभिमुख्येन गच्छति, 'अथ' इदानीमादित्यो 'बलिष्ठतमं तपति' मध्याह्नतापाद् अपि अत्यन्तप्रबलस्तापो भवति; भूमौ दिक्षु चोष्णत्वबाहुल्यात् । तस्मात् तदानीं होता माध्यंदिनसवनध्वनेरप्यधिकध्वनियुक्तया वाचा तृतीयसवने शंसेत् । यद्ययं होता वाचः 'ईशीत' ईश्वरो भवेत् तस्य वाक् यदि श्लेष्मादिदोषेण ध्वनेर्मान्द्यं न प्राप्नुयात्, तदानीं येन ध्वनिना तृतीयसवने प्रारम्भः कृतः, 'एवं' तेनैव ध्वनिना शंसेत् । किमर्थं ध्वन्याधिक्यमिति ? तदुच्यते—यस्माद् 'वागेव शस्त्रं' वाङ्निष्पाद्यत्वात् तस्माद् 'यया तु' यादृशध्वनियुक्तयैव वाचा 'उत्तरोत्तरिण्या' उत्तरोत्तराभिवृद्धिभाजा 'समापनायोत्सहेत' शस्त्रं समापयितुमुत्साहवान् भवेत् । 'तया' तथाविधध्वन्युपेतया वाचा शस्त्रं 'प्रतिपद्येत' प्रारभेत,—न तु श्रान्त्या नीचध्वनिर्भवेत् । तदेतदुक्तलक्षणोपेतं शस्त्रं 'सुशस्ततममिव भवति' श्रुतिवैकल्यराहित्येनात्यन्तं शस्तमेव भवति ॥

वह [होता] इस [आदित्य] का ही अनुसरण करते हुए [उत्तरोत्तर अधिक ध्वनि करता हुआ] शस्त्र के द्वारा शंसन करे । जब यह प्रातःकाल उदित होता है तो मन्दरूप से तपता है; इसलिए प्रातःसवन में मन्द ध्वनि से शंसन करना चाहिए; और जब मध्याह्न की ओर बढ़ता है तो प्रबलरूप से तपता है, इसलिए माध्यंदिन सवन में प्रबल ध्वनि से शंसन करना चाहिए; और जब पश्चिमाभिमुख मनुष्यों के एकदम सामने आता है तो बहुत तेज तपता है; इसलिए तृतीय सवन में बहुत तेज ध्वनि से शंसन करना चाहिए । यदि इस होता को ध्वनि पर [मन्द और तीव्र करने का] अधिकार न हो तो वैसा ही शंसन करें [जैसा वह तृतीयसवन में करता है] । क्योंकि वाणी ही शस्त्र है; अतः जिस ध्वनि से युक्त होकर ध्वनि को उत्तरोत्तर बढ़ाते हुए समाप्त करने में समर्थ होवे, उसी ध्वनि से प्रारम्भ करना चाहिए । इन [लक्षणों से युक्त] शस्त्र का शंसन अत्यन्त सुन्दर ही होता है ।

ननु तृतीयसवने त्वरामन्तरेण शनैः शंसेदिति पूर्वत्रोक्तं, तथा सति कालस्याल्पत्वेन समापनात् प्रागेव सूर्योऽस्तमियात् ? इत्याशङ्क्य वस्तुतोऽस्तमयाभावान्नास्ति दोष इत्यभिप्रेत्याह—

**स वा एष न कदाचनास्तमेति नोदेति ॥** इति ।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'अस्तमयः' सूर्यस्वरूपनाशः, 'उदयः' सूर्योत्पत्तिः; न हि सूर्यस्य कदाचिदपि स्वरूपनाशोत्पत्ती विद्येते ॥

[तृतीयसवन में सूर्यास्त होने की शङ्का से शीघ्रता न करें क्योंकि] वह यह [सूर्य] न तो कभी अस्त होता है और न उदय ही होता है।

कथं तर्हि जनानां सूर्यास्तमयव्यवहारः ? इत्याशङ्क्याह—

**तं यदस्तमेतीति मन्यन्तेऽह्न एव तदन्तमित्वाथात्मानं विपर्यस्यते,—रात्रीमेवावस्तात् कुरुतेऽहः परस्तात् ॥** इति।

'यद्' यदा प्राणिनः सूर्योदयादूर्ध्वं यामचतुष्टयानन्तरं सूर्योऽस्तमेतीति 'तं' सूर्यमस्तमितं मन्यन्ते, 'तद्' तदानीं सूर्यस्तत्प्राणियुक्ते देशे प्रकाशरूपस्याह्न एव 'अन्तमित्वा'[1] समाप्तिं प्राप्य 'अथ' अनन्तरं स्वात्मानं 'विपर्यस्यते' विपर्यस्तं करोति। कथं विपर्यास इति ? तदुच्यते—'अवस्ताद्' अतीते देशे रात्रिमेव कुरुते, 'परस्ताद्' आगामिनि देशेऽहः कुरुते। अयमर्थः—मेरोः प्रदक्षिणं कुर्वन्नादित्यो यद्देशवासिनां प्राणिनां दृष्टिपथमागच्छति, तद्देशवासिभिरयमुदेतीति व्यवह्रियते। यद्देशवासिनां दृष्टिपथमतिक्रम्य सूर्ये गते सति सूर्योऽस्तमेतीति तद्देशवासिभिर्व्यवह्रियते। अतः तस्मिन् देशे रात्रिर्भवति। आदित्येन गन्तव्ये देशान्तरे तद्देशवासिभिः प्राणिभिः सूर्यस्य दृष्टत्वाद् अहर्भवति। एवं च सति सूर्यस्य विनाशरूपोऽस्तमयः कदाचिदपि नास्तीति सिद्धम् ॥

जब प्राणी उसको अस्त होता हुआ मानते हैं तब [सूर्य वस्तुतः उस प्रदेश में प्रकाश रूप] दिन को समाप्त करके वह अपने को विपर्यस्त ही करते हैं [अर्थात् अपने को पुनः लौटा लाते हैं]; इस प्रकार [वह अतीत देश में] रात्रि ही करते हैं और आने वाले प्रदेश में दिन करते हैं।

अनेनैव न्यायेन सूर्यस्य स्वरूपोत्पत्तिलक्षणोदयाभावं दर्शयति—

**अथ यदेनं प्रातरुदेतीति मन्यन्ते, रात्रेरेव तदन्तमित्वाथात्मानं विपर्यस्यतेऽहरेवावस्तात् कुरुते रात्रिं परस्तात् ॥** इति।

पूर्ववद् व्याख्येयम् ॥

और जब इसको प्राणी 'यह प्रातःकाल उदित होता है'—यह मानते हैं, तब वह वस्तुतः रात्रि को समाप्त करके अपने को विपर्यस्त ही करते हैं। इस प्रकार वह [बीते हुए प्रदेश में] दिन ही करते हैं और आने वाले प्रदेश में रात्रि करते हैं।

---

१. 'अह्नो दिनाहैस्त्रिंशन्नाडिकाख्यस्य कालस्यान्ते समाप्तौ। क्त्वादगुणः। इत्वा गत्वा'—इति षड्गुरुशिष्यः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

परमार्थतोऽस्तमयस्याभावं निगमयति—

**स वा एष न कदाचन निम्रोचति ॥ इति ।**

निम्रोचनमस्तमयः । एतस्योपलक्षणत्वान्न कदाचिदुदेतीत्यपि द्रष्टव्यम् ॥

वह यह सूर्य कभी भी अस्त नहीं होता ।

वेदनं प्रशंसति—

**न ह वै कदाचन निम्रोचत्येतस्य ह सायुज्यं सरूपतां सलोकतामश्नुते य एवं वेद, य एवं वेद ॥ ४४ ॥ इति ।**

वेदितुरस्तमयाभावो नामापमृत्युराहित्यम्, इह जन्मनि तादृशो भूत्वा पश्चादेतस्यादित्यस्य सहवास-समानरूपत्व-समानलोकत्वानि प्राप्नोति । न च सहवासेनैव समानलोकत्वं सिध्यतीति वाच्यम् । कदाचिदपि स्वेच्छया पृथगवस्थानेऽपि तल्लोकभ्रंशो नास्तीति विवक्षया समानलोकत्वमुच्यते । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां चतुर्थाध्याये (चतुर्दशाध्याये) षष्ठः खण्डः ॥ ६ ॥ (४४) [११५]

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधर माधवाचार्यादिशतो सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश-नाम भाष्ये
ऐतरेयब्राह्मणस्य कृतौ तृतीयपञ्चिकायाः चतुर्थोऽध्यायः
(चतुर्दशोऽध्यायः) समाप्तः ॥ १४ ॥

वस्तुतः वह कभी भी अस्त नहीं होता।[1] इसलिए जो इस प्रकार जानता है वह इस [आदित्य] के सहवास, समानरूप और समान लोक को प्राप्त करता है।

॥ इस प्रकार ऐतरेय ब्राह्मण की तृतीयपञ्चिका के चतुर्थ (चौदहवें) अध्याय की हिन्दी पूर्ण हुई ॥ ४ ॥

---

१. सूर्यो विराजति सदेत्यर्थमार्यभटोऽब्रवीत्—
उदयो यो लङ्कायां सोऽस्तमयः सवितुरेव सिद्धपुरे ।
मध्याह्नो यवकोटयां लोमकविषयेऽर्धरात्रं स्यात् ॥ (गोलपादे श्लो० १३)
अर्थस्तु—यदा पुरुषो दक्षिणस्यां दिशि लङ्कास्थ उदेतीति मन्यते तदैवोदीच्यां सिद्धपुरसंज्ञके स्थितोऽस्तमेतीति, तदैव च प्राच्यां यवकोटिसंज्ञपुरीस्थो मध्यंदिन इति, तदैव च प्रतीच्यां लोमकराष्ट्रे स्थितोऽर्धरात्रमिति'—इति षड्गुरुशिष्यः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ पञ्चमोऽध्यायः

## प्रथमः खण्डः

—: * :—

## [अथ पञ्चदशोऽध्यायः

## प्रथमः खण्डः]

अग्निष्टोमः सर्वयज्ञक्रतूनां
योनित्वेनास्तूयत प्राक्परश्च ।
देवैः स्तोमैः संस्तुतो यश्चतुर्भि-
र्वाचां मन्द्रैर्मध्यमैरुत्तमैश्च ॥ १ ॥

अथेष्टिसंस्थादिकं वक्तव्यम्; तत्र दीक्षणीयेष्टेः संस्थामाख्यायिकया दर्शयति—

**यज्ञो वै देवेभ्योऽन्नाद्यमुदक्रामत्, ते देवा अब्रुवन्—यज्ञो वै नोऽन्नाद्यमुदक्रमी-दन्विमं यज्ञमन्नमन्विच्छामेति; तेऽब्रुवन्—कथमन्विच्छामेति; ब्राह्मणेन च च्छन्दोभिश्चेत्यब्रुवंस्ते ब्राह्मणं छन्दोभिरदीक्षयंस्तस्यान्तं यज्ञमतन्वतापि पत्नीः समयाजयंस्तस्माद्धाप्येतर्हि दीक्षणीयायामिष्टावान्तमेव यज्ञं तन्वतेऽपि पत्नीः संयाजयन्ति, तमनुन्यायमन्ववायन् ॥ इति ।**

पुरा कदाचिद् 'यज्ञः' ज्योतिष्टोमाख्यः केनापि निमित्तेनापरक्तः सन् 'देवेभ्यः' सकाशाद् 'उदक्रामन्' निष्क्रान्तवान् । तस्मिन्नुत्क्रान्ते तत्फलरूपम् 'अन्नाद्यम्' अप्युद-क्रामत् । ततो देवाः परस्परमिदमब्रुवन्—यदेतदुभयमस्मदीयमुदक्रामीत् तदेतदुभयं सर्वत्र 'अन्विच्छाम' अन्वेषणं करवाम । तत्र कथमन्वेषणमित्युपायं विचार्य, ब्राह्मणमृत्विग्यज-मानरूपं, गायत्र्यादिच्छन्दांसि च तदन्वेषणोपायत्वेन निश्चित्य, तैश्छन्दोभिः 'ब्राह्मणं' यजमानम् 'अदीक्षयन्' दीक्षणीयेष्टया संस्कृतवन्तः । 'तस्य' ब्राह्मणस्य 'यज्ञं' दीक्षणीये-ष्टिरूपम् 'अन्तं' समाप्तिपर्यन्तम् 'अतन्वत' विस्तारितवन्तः । तं यज्ञमनुष्ठाय 'पत्नीः' तन्नामिका देवता अपि[1] 'समयाजयम्' पत्नीसंयाजानुष्ठानमपि कृतवन्त इत्यर्थः । यस्मा-देवं देवैः कृतम्, तस्मादेव कारणादिदानीमपि दीक्षणीयायामिष्टौ चोदकप्राप्तं यज्ञं समाप्ति-पर्यन्तमनुतिष्ठन्ति । पत्नीसंयाजानप्यनुतिष्ठन्ति । उत्तरकालीनाङ्गव्यावृत्तये पत्नीसंयाज-ग्रहणम् । पत्नीसंयाजैरेव समाप्तिरित्यभिप्रेत्य 'आन्तम्' इत्युक्तम् । 'तं' देवैः कृतम् 'अनुन्यायम्' अनुक्रमगतमनुष्ठानम्, 'अनु' पश्चान्मनुष्या अपि 'अन्ववायन्' अवगतवन्तः, अनुष्ठितवन्त इत्यर्थः । 'तमनुन्यायम्'- इति वाक्यमुत्तरशेषत्वेन वा योज्यम् ॥

---

१. निरु० १२.४.१०,११ । निघ० ५,६.३१ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[यज्ञ के प्रकीर्ण तत्त्व]—

iii. ४५ [xv. १] अन्न के रूप में [ज्योतिष्टोम नामक] यज्ञ देवों के बीच से [किसी कारण उपरक्त हो] चला गया। तब देवों ने परस्पर कहा—'यज्ञ अन्न के रूप में हमें छोड़कर चला गया। हम इन दोनों यज्ञ और अन्न को खोजें।' उन्होंने कहा—'हम लोग कैसे खोजेंगे?' '[ऋत्विज यजमान रूप] ब्राह्मण और [गायत्री आदि] छन्दों के द्वारा'—उन्होंने कहा। उन्होंने [यजमान रूप] ब्राह्मण को छन्दों से [दीक्षणीय-इष्टि से] संस्कृत किया। उसके [दीक्षणीयेष्टि रूप] यज्ञ को उन्होंने आदि से अन्त तक विस्तृत किया और 'पत्नी-संयाज' का भी अनुष्ठान किया। [देवों के द्वारा ऐसा किए जाने के कारण] इस दीक्षणीयेष्टि में भी यज्ञ को समाप्तिपर्यन्त अनुष्ठित करते हैं; और पत्नी-संयाज का भी अनुष्ठान करते हैं। उसी नियम के अनुसार मनुष्यों ने भी उसका अनुष्ठान किया।

दीक्षणीयेष्टेः पत्नीसंयाजेषु समाप्तिं दर्शयित्वा प्रायणीयेष्टेः शंयुवाके समाप्तिं दर्शयति—

**ते प्रायणीयमतन्वत, तं प्रायणीयेन नेदीयोऽन्वागच्छंस्ते कर्मभिः समत्वरन्त, तच्छंय्वन्तमकुर्वंस्तस्माद्धाप्येतर्हि प्रायणीयं शंय्वन्तमेव भवति, तमनुन्याय-मन्ववायन् ॥** इति।

'ते' देवाः प्रायणीयाख्यं कर्मानुष्ठितवन्तः। 'प्रायणीयेन' कर्मणा 'तं' पूर्वोक्तं दीक्षणीयेष्टिरूपं ज्योतिष्टोमरूपं वा यज्ञं 'नेदीयः' अत्यन्तसमीपे यथा भवति तथैव 'अन्वगच्छन्' अनुष्ठितवन्तः। दीक्षणीयेष्टेरूर्ध्वं चिरं व्यवधानमकृत्वा प्रायणीयमनुष्ठितवन्त इत्यर्थः। 'ते' देवाः 'कर्मभिः' प्रायणीयाङ्गरूपैः 'समत्वरन्त' सम्यक् त्वरां कृतवन्तः। दीक्षणीयेष्टिवत् पत्नीसंयाजपर्यन्तं नान्वतिष्ठन्, किंतु त्वरां कृत्वा पत्नीसंयाजेभ्यः पूर्वमेव शंयुवाकपर्यन्तं कृत्वोपरताः। तस्माद्धेत्यादि पूर्ववत् ॥

उन देवों ने प्रायणीय-कर्म का अनुष्ठान किया; और प्रायणीय के द्वारा उस [ज्योतिष्टोम रूप यज्ञ] के सामीप्य को प्राप्त किया [अर्थात् दीक्षणीयेष्टि के बाद ही बिना व्यवधान के प्रायणीय का अनुष्ठान किया]। उन देवों ने [प्रायणीय के अङ्ग-रूप] कर्मों के द्वारा जल्दी-जल्दी अनुष्ठान किया और उन्होंने शंयु में उसका उपसंहार किया। इसीलिए अब भी प्रायणीय इष्टि का अन्त शंयु में ही होता है। [देवों द्वारा किए गये] उसी नियम के अनुसार उस [कर्म] का अनुष्ठान मनुष्यों ने भी किया।

अथातिथ्येष्टेरन्तं दर्शयति—

**त आतिथ्यमतन्वत; तमातिथ्येन नेदीयोऽन्वागच्छंस्ते कर्मभिः समत्वरन्त; तदिळान्तमकुर्वंस्तस्माद्धाप्येतर्ह्यातिथ्यमिळान्तमेव भवति, तमनुन्यायमन्व-वायन् ॥** इति।

अनुयाजेभ्यः पूर्वं यदिडोपाह्वानं, तदन्तमेवातिथ्येष्टिरूपं कर्म कृत्वोपरताः। अन्यत् पूर्ववद् व्याख्येयम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उन्होंने आतिथ्येष्टि का अनुष्ठान किया; और आतिथ्येष्टि के द्वारा उस [ज्योतिष्टोम] का सामीप्य प्राप्त किया। उन [देवों] ने [आतिथ्येष्टि के अङ्ग-रूप] कर्मों के द्वारा जल्दी-जल्दी अनुष्ठान किया और इळा में उसका उपसंहार किया। इसीलिए आज भी आतिथ्येष्टि का अन्त इळा में ही होता है। मनुष्यों ने भी उसी नियम के अनुसार उसका अनुष्ठान किया।

अथोपसत्स्वनुष्ठेयं दर्शयति—

**त उपसदोऽतन्वत; तमुपसद्भिर्नेदीयोऽन्वागच्छंस्ते कर्मभिः समत्वरन्त, ते तिस्रः सामिधेनीरनूच्य तिस्रो देवता अयजंस्तस्माद्धाप्येतर्ह्युपसत्सु तिस्र एव सामिधेनीरनूच्य तिस्रो देवता यजन्ति, तमनुन्यायमन्ववायन् ॥ इति ।**

तिस्रः सामिधेन्य आश्वलायनेन दर्शिताः—'उपसद्याय मीह्ळुष इति तिस्र एकैकां त्रिरनवानं ताः सामिधेन्यः'[1] इति । अग्निः सोमो विष्णुश्चेत्येतास्तिस्रो देवताः । स्पष्टमन्यत् ॥

उन्होंने उपसद का अनुष्ठान किया और उपसद के द्वारा उस [यज्ञ] का सामीप्य प्राप्त किया। उन देवों ने [उपसद के अङ्गरूप] कर्मों के द्वारा जल्दी-जल्दी अनुष्ठान किया। उन्होंने तीन सामिधेनियों का पाठ करके तीन देवों [अग्नि, सोम और विष्णु] का यजन किया। इसीलिए आज भी उपसद में तीन सामिधेनियों का पाठ करके तीन देवों का यजन करते हैं। उसी नियम के अनुसार मनुष्यों ने भी उसका अनुष्ठान किया।

अथाग्नीषोमीयपशावनुष्ठेयं दर्शयति—

**त उपवसथमतन्वत; तमुपवसथ्येऽहन्याप्नुवंस्तमाप्त्वान्तं यज्ञमतन्वतापि पत्नीः समयाजयंस्तस्माद्धाप्येतर्ह्युपवसथ आन्तमेव यज्ञं तन्वतेऽपि पत्नीः संयाजयन्ति ॥ इति ।**

उपवसथशब्देन सोमयागसमीपवासितत्वात् पूर्वस्मिन्नहन्यनुष्ठेयोऽग्नीषोमीयपशुर्विवक्षितः । 'तं' पशुं देवा 'उपवसथ्येऽहनि' सोमयागदिनात पूर्वेद्युः 'प्राप्नुवन्' प्राप्तवन्तः । प्राप्य च 'तं यज्ञं' समाप्तिपर्यन्तमनुष्ठितवन्तः । पत्नीसंयाजानप्यन्वतिष्ठन् । दीक्षणीयेष्टिवत् पत्नीसंयाजान्तत्वमेव द्रष्टव्यम् । स्पष्टमन्यत् ॥

उन्होंने उपवसथ [अग्नीषोमीय पशु] का अनुष्ठान किया। उपवसथ के दिन [=सोमयागदिन के पूर्व] ही उन्होंने उस [यज्ञ] को प्राप्त किया। उसे पाकर उस यज्ञ की समाप्ति तक अनुष्ठान किया और पत्नी-संयाज का भी यजन किया। इसीलिए आज भी सोमयाग के एक दिन पहले ही उपवसथ का अनुष्ठान किया जाता है और पत्नी-संयाज का भी यजन करते हैं।

---

१. आश्व० श्रौ० ४.८.५, (६, ११)।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उक्तास्विष्टिषु होतुरनुवचनस्य मन्द्रस्वरं विधत्ते—

**तस्मादेतेषु पूर्वेषु कर्मसु शनैस्तरां शनैस्तरामिवानुब्रूयात् ॥** इति ।

यस्मादग्नीषोमीयात् पूर्वंमाविस्त्वेन उपक्रमरूपा दीक्षणीयादयः, 'तस्मात्' 'एतेषु पूर्वेषु' दीक्षणीयाद्युपसदन्तेषु कर्मसु 'शनैस्तरामिव' अत्यन्तनीचस्वरेणैव होताऽनुब्रूयात् ॥

**इसीलिए इन पूर्व कर्मों में मन्त्रों को अत्यन्त नीच स्वर में बोलना चाहिए।**

अग्नीषोमीयपशौ होतुरनुवचनध्वनेरिच्छानुसारित्वं विधत्ते—

**अनूत्सारमिव हि ते तमायंस्तस्मादुपवसथे यावत्या वाचा कामयीत, तावत्याऽनुब्रूयादाप्तो हि स तर्हि भवतीति ॥** इति ।

'अनूत्सारम्' उत्तरोत्तरभावी सार उत्सारः, तमनुसृत्यानुसृत्येति तस्यार्थः। दीक्षणीयेष्टेः सारभूता प्रायणीयेष्टिः। तदपेक्षया सोमयागस्य समीपवर्तित्वात्। एवमातिथ्यादिषु द्रष्टव्यम्। ईदृशमुत्तरोत्तरसारमनुसृत्य 'ते' देवाः 'तं' सोमयागम् 'आयन्' प्राप्तवन्तः। तस्मादत्यन्तसारे 'उपवसथे' अग्नीषोमीये पशौ होता 'यावत्या' वाचा 'कामयीत' यावन्तमुच्चध्वनिमिच्छेत्, तावता ध्वनिनाऽनुवचनं कुर्यात्। 'तर्हि' तस्मिन्नग्नीषोमीयपशुकाले 'सः' सोमयागः प्राप्तो भवतीति होतुरभिप्रायः। लोकेऽप्यभीष्टे वस्तुनि बन्धौ वा चिरकालेन प्राप्ते जाते हर्षद्योतनायोच्चध्वनिना गानं कुर्वन्ति तद्वदत्रापि द्रष्टव्यम् ॥

**क्योंकि उत्तरोत्तर अनुसरण करके उन देवों ने उस [सोमयाग] को प्राप्त किया। इसलिए उपवसथ [अग्नीषोमीय-पशु] में होता जितनी ऊँची ध्वनि में चाहे उतनी ध्वनि में अनुवचन करे; क्योंकि उस [अग्नीषोमीय पशु के] समय वह [सोमयाग] प्राप्त होता है।**

देवानां यज्ञप्राप्त्युपायमभिधाय अन्नाद्यप्राप्त्युपायं दर्शयति—

**तमाप्त्वाऽब्रुवंस्तिष्ठस्व नोऽन्नाद्यायेति; स नेत्यब्रवीत्, कथं वस्तिष्ठेयेति; तानीक्षतैव; तमब्रुवन्—ब्राह्मणेन च नश्छन्दोभिश्च सयुग् भूत्वाऽन्नाद्याय तिष्ठस्वेति; तथेति; तस्माद्धाप्येतर्हि यज्ञः सयुग् भूत्वा देवेभ्यो हव्यं वहति, ब्राह्मणेन च च्छन्दोभिश्च ॥ ४५ ॥** इति ।

'ते' देवाः 'तं' ज्योतिष्टोमयज्ञं प्राप्येदमब्रुवन्—हे यज्ञ, 'नः' अस्माकम् अन्नाद्यसिद्ध्यर्थं 'तिष्ठस्व' स्थितिं कुर्विति। 'सः' यज्ञस्तद्वाक्यं निराकरोत्, अन्नाद्यनिष्पादकं[1] साधनमन्तरेण 'वः' युष्मदर्थं कथं स्थितः स्यामिति स्वाभिप्रायमब्रवीत्। तेष्वनुग्रहद्योतनाय 'तान्' देवान् 'ईक्षतैव' पश्यन्नेवास्ते, न तूपेक्षां कृतवान्। ततो देवा यज्ञस्याभिप्रायं ज्ञात्वा 'ते' देवास्तं यज्ञमिदमब्रुवन्, हे यज्ञ 'नः' अस्मदर्थं त्वत्साधनेन ऋत्विग्यजमानरूपेण ब्राह्मणेन तत्तन्मन्त्रगतैश्छन्दोभिश्च 'सयुग् भूत्वा' सहावस्थितो भूत्वा पश्चादन्नाद्याय

---

१. 'मम निष्पादकं' इति ऐ० सो० मुद्रितपाठः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'तिष्ठस्व' अङ्गीकुर्विति। तथा यज्ञोऽप्यङ्गीचकार। यस्मादेवं तस्माद् इदानीमपि यज्ञो ब्राह्मणमन्त्रसहितो भूत्वा देवेभ्योऽन्नाद्यरूपं हविर्वहति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीय-पञ्चिकायां पञ्चमाध्याये (पञ्चदशाध्याये) प्रथमः खण्डः ॥१॥ (४५) [११६]

उन देवों ने उस [ज्योतिष्टोम] को प्राप्त करके कहा—'हे यज्ञ हमारे अन्न सिद्धि के लिए ठहरो।' उसने कहा—'नहीं।' तुम्हारे [अन्य कार्य के] लिए क्यों ठहरूँ? अनुग्रह द्योतन के लिए उन देवों ने मात्र देखा ही। [यज्ञ के अभिप्राय को जानकर] उस [यज्ञ] से उन देवों ने कहा—'हे यज्ञ, ब्राह्मण और छन्दों से संयुक्त होकर भोजन के लिए ठहरो।' उसने कहा—'ठीक है।' इसीलिए आज भी यज्ञ ब्राह्मण व मन्त्रों से संयुक्त होकर देवों के लिए अन्न रूप हवि का वहन करता है।

॥ इस प्रकार पन्द्रहवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

दीक्षणीयादिष्वग्नीषोमीयान्तेषु होतुर्व्वनिविशेषं विधायान्ते ब्राह्मणेनर्त्विजा यज्ञ-निष्पत्तिरित्युक्तम्; तत्र वर्ज्यब्राह्मणविशेषं दर्शयितुं प्रस्तौति—

**त्रीणि ह वै यज्ञे क्रियन्ते,—जग्धं गीर्णं वान्तम् ॥ इति।**

'जग्धं'[1] भक्षितावशिष्टं भोजनपात्रे स्थितम्; 'गीर्णम्' उदरे प्रविष्टम्;। 'वान्तं' सकृदुदरे प्रविश्य पुनर्निर्गतम्; तान्येतानि 'त्रीणि' दुर्बुद्धिभिर्यज्ञे क्रियन्ते; जग्धादिस्थानी-यादि त्रीणि वर्ज्यानीत्यर्थः ॥

iii. ४६ [xv. २] [दुर्बुद्धियों के ही द्वारा] यज्ञ में ये तीन वस्तुएँ की जाती हैं—१. जग्ध [अर्थात् भोजन पात्र में अवशिष्ट भोजन को खा लेना], २. गीर्ण [निगल जाना] और ३. वान्त [वमन किया हुआ खा लेना]।

तत्र जग्धस्थानीयं दर्शयित्वा निषेधति—

**तद्धैतदेव जग्धं—यदाशंसमानमार्त्विज्यं कारयत उत वा मे दद्याद् उत वा मा वृणीतेति; तद्ध तत्पराङेव यथा जग्धं, न हैव तद् यजमानं भुनक्ति ॥इति।**

कश्चिद्ब्राह्मण आर्त्विज्यम् 'आशंसते' कामयते। केनाभिप्रायेणेति? तदुच्यते—आर्त्विज्यार्थं यज्ञशालां मयि गते सति यजमानो 'मे' मह्यम् 'उत वा दद्यात्' किंचिद्धनं वा प्रयच्छेत्, 'उत वा मा वृणीत' अथवा प्रयोगाभिज्ञं मां दृष्ट्वा त्वमार्त्विज्यं कुर्विति वृणीते 'इति' एवं धनार्जनलम्पटः सन्ननुष्ठानतात्पर्यरहितो निरन्तरमार्त्विज्यं कामयते।

---

१. जग्धमास्ये तु विक्षिप्तं गीर्णं स्याज्जठरे गतम्।
उदरस्थं छर्दितेन निष्क्रान्तं वान्तमुच्यते ॥ —इति षड्गुरुशिष्यः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तादृशं कामयमानं पुरुषं यजमान आर्त्विज्यं कारयत इति यदस्ति, तदेव 'जग्धम्',—यथा लोके 'जग्धं' पात्रस्थितं भक्षितावशिष्टमुच्छिष्टत्वादितरैरस्पृश्यम्, तथा । 'तद्ध' तस्मिन्नेव यागे 'तत्' लम्पटस्यार्त्विज्यं 'पराङेव' निकृष्टमेव, 'तत्' तादृशमार्त्विज्यं यजमानं 'न भुनक्ति' न पालयति, यज्ञो विकलो भवतीत्यर्थः ॥

जग्ध वह है जब यदि कोई ऋत्विज यह सोचकर अपने को स्वयं ही अर्पण करे कि 'यजमान मुझे कुछ धन देगा अथवा यजमान मुझ प्रयोगाभिज्ञ को वरण करेगा ।' तब उसको उस याग में ऋत्विज बनाना उच्छिष्ट भोजन करने के समान ही निकृष्ट है; क्योंकि उस प्रकार के ऋत्विज का वरण यजमान की भलाई के लिए नहीं होता ।

गीर्णमुदाहृत्य निषेधति—

**अथ हैतदेव गीर्णं,—यद् बिभ्यदार्त्विज्यं कारयत उत वा मा न बाधेतोत वा मे न यज्ञवेशसं कुर्यादिति; तद्ध तत्पराङेव यथा गीर्णं, न हैव तद् यजमानं भुनक्ति ॥** इति ।

यजमानो यस्मिन् ग्रामे यजते, तत्र कश्चिद् ब्राह्मणो 'ग्रामणीः' प्रभुर्भूत्वा प्रयोग-कौशलरहितोऽवतिष्ठते । तमार्त्विज्ये वर्जयितुमयं यजमानो बिभेति । केनाभिप्रायेणेति ? तदुच्यते—अयमत्र प्रभुर्मयि द्वेषं कृत्वा कालान्तरे मां बाधेत । अथवेदानीमेव 'यज्ञवेशसं' यज्ञविघातं कुर्यात् । तदुभयं मा भूदित्यनेनाभिप्रायेण तस्माद्भीतिं प्राप्नुवन्नार्त्विज्यं तेन प्रभुणा कारयत इति यदस्ति, तदेतद् 'गीर्णम्'—यथा लोके 'गीर्णम्' उदरस्थं पुनर्भोग-योग्यं न भवति, तथा । 'तद्ध' तस्मिन् यागे तद् गीर्णं भीतिमात्रप्रयुक्तमार्त्विज्यं 'पराङेव' निकृष्टमेव । 'तत्' तादृशं प्रयोगकौशलरहितेन प्रभुणा कृतमार्त्विज्यं यजमानं न पालयति ॥

और, गीर्ण वह है जब, यदि कोई [प्रयोग कौशलरहित ग्राम के मुखिया को] डर के मारे ऋत्विज बनाए कि 'यह मुझे मार डालेगा अथवा मेरे यज्ञ में विघ्न डालेगा' तब उसको उस याग में ऋत्विज बनाना उदरस्थ भोजन को पुनः खाने के समान ही निकृष्ट है; क्योंकि उस प्रकार के ऋत्विज का वरण यजमान के भलाई के लिए नहीं होता ।

वान्तं दर्शयित्वा निषेधति—

**अथ हैतदेव वान्तं,—यदभिशस्यमानमार्त्विज्यं कारयते; यथा ह वा इदं वान्तान् मनुष्या बीभत्सन्त, एवं तस्माद् देवास्तद्ध तत्पराङेव यथा वान्तं, न हैव तद् यजमानं भुनक्ति ॥** इति ।

कश्चित्पुरुषः प्रयोगकुशलोऽपि केनचित्पातित्यापवादेन सर्वैर्निन्द्यते, तादृशम् 'अभि-शस्यमानं' यजमानः स्वकीयबन्धुत्वादिदाक्षिण्याभिमानेनापवादपरिहारार्थमार्त्विज्यं कार-यत इति यदस्ति, तदेतद् 'वान्तम्' । तत्रेदं निदर्शनमुच्यते—यथा लोके मनुष्या

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'वान्ताद्'[1] 'बीभत्सन्ते' वान्तं दृष्ट्वा कश्मलमेतदिति निष्ठीवनं कुर्युः, एवं देवाः 'तस्माद्' अभिशस्यमानकृतादार्त्विज्यात् सर्वे बीभत्सन्ते। ततो यथा लोके 'वान्तम्' अतिनिकृष्टं, तथा तस्मिन् यज्ञे तदार्त्विज्यं निकृष्टम्। तच्च यजमानं सर्वथा न पालयति ॥

और, वान्त [=वमन] वह है जब यदि कोई [प्रयोगकुशल भी, किन्तु किसी पाप के कारण सभी से निंदित] अभिशस्त को ऋत्विज बनाता है तो उससे देव उसी प्रकार घृणा करते हैं जैसे लोक में उल्टी किए से अन्य मनुष्य घृणा करते हैं। तब उसको उस याग में ऋत्विज बनाना वमन के ही समान घृणित है; क्योंकि उस प्रकार के ऋत्विज का वरण यजमान की भलाई के लिए नहीं होता।

वर्ज्यत्वेनोक्तं त्रिविधमुपसंहरति—

**स एतेषां त्रयाणामाशां नेयात् ॥ इति।**

'सः' यजमान 'एतेषां' पूर्वोक्तानां धनलम्पटभयहेत्वभिशस्तानां त्रयाणामार्त्विज्यार्थं मनस्यपेक्षामपि न कुर्यात् ॥

वह [यजमान] इन [पूर्वोक्त] तीनों [के ऋत्विज कर्म] की आशा भी न करें।

अथ प्रमादकृतस्य प्रायश्चित्तं दर्शयति—

**तं यद् एतेषां त्रयाणामेकंचिदकाममभ्याभवेत् तस्यास्ति वामदेव्यस्य स्तोत्रे प्रायश्चित्तिः ॥ इति।**

यदि कदाचित् 'एतेषां' धनलम्पटादीनां त्रयाणां मध्ये वर्तमानं तं पुरुषम् 'एकंचित्' एकमपि 'अकामम्' अबुद्धिपूर्वम् 'अभ्याभवेत् अभिलक्ष्यार्त्विज्यं भवेत्, तदानीं 'तस्य' वैकल्यस्य प्रायश्चित्तिरस्ति। कुत्रास्तीति, तदुच्यते—'वामदेव्यस्य स्तोत्रे' वामदेवमहर्षिणा दृष्टं साम वामदेव्यं[2] कया नश्चित्र आभुवत्[3] इत्येतस्यामृच्युत्पन्नम्[4]। तच्च साम तृचे गायन्त उद्गातारः पृष्ठस्तोत्रमनुतिष्ठन्ति[5]। तत्र कश्चित्प्रयोगविशेषः प्रायश्चित्तिः ॥

यदि किसी प्रकार भूल से इन तीनों में से ऋत्विज का वरण हो भी जाय, तो उसका वामदेव के स्तोत्र में प्रायश्चित्त है।

उक्तं साम प्रशंसति—

**इदं वा इदं वामदेव्यं, यजमानलोकोऽमृतलोकः स्वर्गो लोकः ॥ इति।**

---

१. 'जुगुप्साविराम·····' पा० सू० १.४.२४ वा, इत्यपादानत्वम्।

२. 'वामदेवाड्ड्यड्ड्यौ' इति पा० ४.२.९.।

३. ऋ० ४.३१.१।

४. छ० आ० २.२.३.५; गे० गा० ५.१.२५।

५. उ० आ० १.१.१२.१–३; ऊ० गा० १.१.५। 'यो वै सत्रस्य सद्वेद सद्भवति वामदेव्यं वै साम्नां सद्'—इत्यादीनि च तद्ब्राह्मणवचनानि (ता०ब्रा० ४.८.१०)।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'यजमानस्य लोकः' पृथिवी। 'अमृतलोकः' मुक्तिपदम्। 'स्वर्गो' देवलोकः। 'इदं वै' उक्तलोकत्रयमिदं सर्वमपीदं 'वामदेव्यम्'। 'कया नश्चित्रः' इत्यस्यामृच्युत्पन्नमिदं सामगानां प्रसिद्धं वामदेव्याख्यं साम[1]॥

क्योंकि यजमान का लोक [पृथिवी], अमृतलोक और स्वर्गलोक ये तीनों लोक ही वामदेव्य साम हैं।

तस्मिन् साम्नि कर्तव्यं प्रायश्चित्तप्रकारं दर्शयति—

**तत् त्रिभिरक्षरैर्न्यूनं, तस्य स्तोत्र उपसृप्य त्रेधात्मानं विगृह्णीयात् पुरुष इति॥ इति।**

'तद्' वामदेव्यं साम 'त्रिभिरक्षरैर्न्यूनम्'—'कया नश्चित्र' इत्यादिकस्तृचो गायत्रीछन्दस्कः; तस्य च च्छन्दसस्त्रिषु पादेषु प्रत्येकमष्टावक्षराण्यपेक्षितानि। 'अभी षु णः'[2], इत्येतस्यां तृतीयस्यामृचि यस्मात् प्रतिपादं सप्तैवाक्षराणि, अतस्त्रिभिरक्षरैर्न्यूनत्वम्[3]। 'तस्य' वामदेव्यस्य साम्नः संबन्धिनि 'स्तोत्रे' 'उपसृप्य' समीपं[4] प्रक्रम्य 'आत्मानं' स्ववाचकं 'पुरुषः' इति शब्दं 'त्रेधा विगृह्णीयात्' प्रत्यक्षरं विभज्यैकैकस्मिन् पादे प्रक्षिपेत्। तद्यथा—'अभी षु णः सखीनः पु, अविता जरितॄणां रु; शतं भवास्यूतिभिः षः' इति प्रक्षिप्य गायेत्॥[5]

वह [साम] तीन अक्षरों से न्यून है; उस [साम] के गान के समय वहाँ पहुँचकर आत्म-वाचक 'पुरुष'-शब्द को तीन टुकड़ों में कर लें [पु-रु-ष] [अर्थात् प्रत्येक अक्षर को अलग-अलग एक-एक पाद में प्रक्षिप्त करके पढ़ें]।

उक्तप्रकारेणाऽऽर्त्विज्ये वैकल्यपरिहारं दर्शयति—

**स एतेषु लोकेष्वात्मानं दधात्यस्मिन् यजमानलोकेऽस्मिन्नमृतलोकेऽस्मिन् स्वर्गे लोके सर्वां दुरिष्टिमत्येति॥ इति।**

'सः' कृतप्रायश्चित्तो यजमानः 'एतेषु' लोकेषु स्वात्मानं स्थापयति। त एव त्रयो लोका अस्मिन्नित्यादिना स्पष्टीक्रियन्ते। 'सः' यजमानः सर्वां दुरिष्टिं[6] दोषोपेतं यज्ञम् 'अत्येति' अतिक्रामति।

---

१. गे० गा० ५.१.२५।
२. ऋ० ४.३१.१–३।
३. तथा च ऋक्सर्वानुक्रमणी परि० ४.४, द्र० ४.३१।
४. 'गानम्' इति ऐ० सो० मुद्रितपाठः।
५. उ० आ० १.१.१२.३।
६. 'दुरिष्टिं दुष्टर्त्विग्गाननिमित्तं दोषम्'—इति षड्गुरुशिष्यः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इस प्रकार वह इन [लोकों] में अपने को अर्थात् इस यजमान के लोक में, इस अमृतलोक में और इस स्वर्गलोक में स्थापित करता है। इस प्रकार वह यजमान सभी दोषों सहित भी यज्ञ का अतिक्रमण करता है।

एवं नैमित्तिकमक्षरत्रयप्रक्षेपं विधाय नित्यप्रयोगेऽपि तं विधत्ते—

**अपि यदि समृद्धा इव ऋत्विजः स्युरिति ह स्माहाथ हैतज्जपेदेवेति ॥ ४६ ॥** इति।

होत्रादयः 'ऋत्विजः' यद्यपि 'समृद्धा इव' धनलाम्पट्याादिपूर्वोक्तवैकल्यरहिता एव स्युः, तथापि 'एतत्' पुरुष इत्यक्षरत्रयं स्तोत्रे जपेदेवेत्यैतरेयो मुनिराह स्म ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां पञ्चमाध्याये (पञ्चदशाध्याये) द्वितीयः खण्डः ॥२॥ (४६) [११७]

ऐतरेय ऋषि का कहना है कि—'यदि ऋत्विज् समृद्ध [धनलम्पट आदि दोषों से रहित] भी हो तो भी इस [वामदेव्य साम] में अक्षरत्रय का प्रक्षेप करके ही जप करे।

॥ इस प्रकार पन्द्रहवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

पूर्वत्र यज्ञो ब्राह्मणेन च्छन्दोभिश्च सयुग् भूत्वा हव्यं वहतीत्युक्तम्; तत्र ब्राह्मणयुक्तो वक्तव्यविशेषोऽभिहितः; अथ च्छन्दःप्रयुक्तं विशेषमाह—

**छन्दांसि वै देवेभ्यो हव्यमूढ्वा श्रान्तानि जघनार्धे यज्ञस्य तिष्ठन्ति, यथाऽश्वो वाऽश्वतरो वोहिवांस्तिष्ठेदेवं तेभ्य एतं मैत्रावरुणं पशुपुरोळाशमनु देविका हवींषि निर्वपेत् ॥** इति।

गायत्र्यादीनि 'च्छन्दांसि' 'देवेभ्यो हव्यमूढ्वा' देवार्थं हव्यवहनं कृत्वा श्रमं प्राप्य यज्ञस्य 'जघनार्धे' पश्चिमभागे क्वचित्तूष्णीं तिष्ठन्ति। यथा लोके कश्चिदश्वो वा, गर्दभाश्वसांकर्येण जातो 'अश्वतरो' वा 'ऊहिवान्' भारवहनं कृतवान् सन् दूरदेशे वहनेन श्रान्तस्तिष्ठेत्, एवमेतानि च्छन्दांस्यपि; 'तेभ्यः' श्रान्तेभ्यः श्रमपरिहारार्थं हवींषि निर्वपेत्।[1] 'देविकाः' इति तेषां हविर्विशेषाणां नाम। कस्मिन् काले निर्वाप इति, तदुच्यते—यज्ञस्यावसाने योऽयं 'पशुः' अनूबन्ध्याख्यः पशुबन्धः तस्य पशोः सम्बन्धी मित्रावरुणदेवताको यः पुरोडाशः, तम् 'अनु' तस्मिन्ननुष्ठिते पश्चान्निर्वपेत् ॥

iii. ४७ [xv. ३] छन्द देवों के लिए हव्य का वहन करते हुए थक जाने पर यज्ञ के पिछले भाग पर वैसे ही ठहर जाते हैं, जैसे घोड़ा या खच्चर भारवहन करते हुए थककर ठहर जाता है। उन [श्रान्तो] के लिए [श्रमपरिहारार्थं यज्ञ के अन्त में अनूबन्ध्य

---

१. 'पशुपुरोडाशमन्वनूबन्ध्यस्य देविका हवींषि निर्वपति यजप्रैषाणि'—इति कात्या० श्रौ० १८,६.२०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नामक] पशु के मित्र और वरुण-देवताक पुरोडाश के वपन के बाद देविका-हवियों का[1] निर्वपन करे।

तत्र प्रथमं हविर्विधत्ते—

**धात्रे पुरोळाशं द्वादशकपालं, यो धाता स वषट्कारः ॥** इति।

धातृनाम्ने देवाय द्वादशसु कपालेषु संस्कृतं 'पुरोळाशं' निर्वपेत्। योऽयं धातृनामको देवः, स वषट्कारस्वरूपः; तेन पुरोळाशेन वषट्कारदेवतायाः श्रमोऽपगच्छति।

धातृ [नामक देव] के लिए द्वादश कपालों में संस्कृत पुरोडाश का निर्वपन करे; क्योंकि जो धातृनामक देव है वह वषट्कार स्वरूप है।

द्वितीयं हविर्विधत्ते—

**अनुमत्यै चरुं याऽनुमतिः सा गायत्री ॥** इति।

'कलाहीने साऽनुमतिः पूर्णे राका निशाकरे'[2] इत्यभिधानाच्चतुर्दशीमिश्रा पूर्णिमा 'अनुमति'-शब्दवाच्या।[3] तदभिमानिन्या देवताया अपि तदेव नाम। तस्याश्चानुमतेर्गायत्रीरूपत्वात् तदीयः श्रमोऽपगच्छति॥

अनुमति [चतुर्दशी मिश्रित पूर्णिमा] के लिए चरु दे; क्योंकि जो अनुमति है वह गायत्री है।

तृतीयं हविर्विधत्ते—

**राकायै चरुम्, या राका सा त्रिष्टुप् ॥** इति।

पूर्ववद् व्याख्येयम्॥

राका के लिए चरु दे; क्योंकि जो राका है वह त्रिष्टुप् है।

चतुर्थपञ्चमे हविषी विधत्ते—

**सिनीवाल्यै चरुं, या सिनीवाली सा जगती; कुह्वै चरुं, या कुहूः साऽनुष्टुप् ॥** इति।

'सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः'[4] इति अमावास्याद्वैविध्यमभिहितम्।[5] तदभिमानिदेवतायास्तदेव नामेति पूर्ववद् योजनीयम्॥

---

१. द्र० आश्व० श्रौ० ६.१४।
२. अमरकोश १.४.८।
३. अनुमती राकेति देवपत्न्याविति नैरुक्ताः, पौर्णमास्याविति याज्ञिकाः। या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राकेति विज्ञायते—इत्यादि निरु० ११.३.१०।
४. अमरकोश १.४.९।
५. 'सिनीवाली कुहूरिति देवपत्न्याविति नैरुक्ताः, अमावास्ये इति याज्ञिकाः। या पूर्वामावास्या सा सिनीवाली, योत्तरा सा कुहूरिति विज्ञायते'—इत्यादि निरु० ११.३.१०। द्र० ऐ० ब्रा० ७.२.१०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सिनीवाली के लिए चरु दे; क्योंकि जो सिनीवाली है, वह जगती है। कुहू के लिए चरु दे; क्योंकि जो कुहू है वह अनुष्टुप् है।

इतरेषां छन्दसां कथं श्रमपरिहार इत्याशङ्क्य सर्वेषामन्येषामुक्तच्छन्दोऽनुवर्तित्वात् तावतैव श्रान्तिपरिहार इत्यभिप्रेत्याह—

**एतानि वाव सर्वाणि च्छन्दांसि,-गायत्रं[1] त्रैष्टुभं जागतमानुष्टुभमन्वन्यान्येतानि हि यज्ञे प्रतमामिव क्रियन्ते ॥ इति ।**

'एतानि' एव गायत्र्यादीनि चत्वारि सर्वच्छन्दोरूपाणि, 'अन्यानि' उष्णिगादीनि गायत्र्यादिकमनुसृत्यैव वर्त्तन्ते। यस्मादेतानि चत्वारि यज्ञप्रयोगे 'प्रतमामिव' प्राचुर्यातिशयेनैव 'क्रियन्ते' प्रयुज्यन्ते, तस्माद् एतदनुसारित्वम् इतरेषां युक्तम् ॥

कुल इतने ही छन्द हैं; क्योंकि अन्य [उष्णिक् आदि छन्द] तो गायत्री, त्रिष्टुभ्, जगती और अनुष्टुप् का ही अनुसरण करते हैं। क्योंकि इतने ही छन्द यज्ञ में अत्यन्त प्रचुरता से प्रयुक्त किए जाते हैं।

उक्तार्थवेदनपूर्वकमनुष्ठानं प्रशंसति—

**एतैर्ह वा अस्य च्छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टं भवति य एवं वेद ॥ इति ।**

'एतैः' गायत्र्यादिभिः 'सर्वैः' उष्णिगादिभिः ॥

जो इस प्रकार जानता है उसका अनुष्ठान इन्हीं छन्दों के द्वारा अनुष्ठित होकर सभी छन्दों से अनुष्ठित होता है।

विद्वत्प्रसिद्धया छन्दांसि प्रशंसति—

**तद्वै यदिदमाहुः,—सुधायां ह वै वाजी सुहितो दधातीति[4] च्छन्दांसि वै तत्सुधायां ह वा एनं छन्दांसि दधति ॥ इति ।**

वाजोऽन्नं हविर्लक्षणम्, तद्युक्तो ज्योतिष्टोमो 'वाजी', स च 'सुहितः' सम्यगनुष्ठितः 'सुधायाम्' अमृते स्वर्गे दधाति यजमानं स्थापयतीति शेषः। अनेन प्रकारेण 'तद्वै' तस्मिन्नेव यज्ञप्रतिपादके शास्त्रे 'यदिदं' वचनमभिज्ञा आहुः तत्तु 'च्छन्दांसि वै' तद्वचनं यथोक्तगायत्र्यादिच्छन्दांस्येवाभिलक्ष्योक्तम्। यस्माच्छन्दांसि 'एनं' यजमानं 'सुधायां' स्वर्गं स्थापयन्ति[3], तस्माच्छन्दोभिप्रायेणैतद्वचनं युक्तम् ॥

---

१. सुधायां ह वै वाजी सुहितो दधातीत्यग्निर्वाव वाजी।

२. छन्दसः प्रत्ययविधाने नपुंसके स्वार्थे उपसंख्यानम्'—इत्यण् (पा० सू० ४.२.५५ वा०) तमेव तत् प्रीणाति; स एनं प्रीतः प्रीणाति वसीयान् भवति'—इति तै० सं० ५.५.१०.७।

३. 'सुधायां मा धेहि परमे व्योमन्'—इति अथर्व० १७.१.७।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इसीलिए जो वे ऐसा कहते हैं कि 'अन्न से युक्त ज्योतिष्टोम सम्यक् रूप से अनुष्ठित होकर यजमान को स्वर्ग में स्थापित करता है'—वे छन्दों को ही लक्ष्य करके कहते हैं; क्योंकि छन्द ही इस [यजमान] को स्वर्ग में स्थापित करते हैं।

वेदनं प्रशंसति—

**अननुध्यायिनं लोकं जयति य एवं वेद ॥** इति ।

मनसाऽनुध्यातुमनर्हमत्यपूर्वसुखोपेतं लोकं प्राप्नोति ॥

जो इस प्रकार जानता है, वह उस लोक को जीतता है जिसका उसने कभी ध्यान भी नहीं किया।

अत्र कंचित्पूर्वपक्षमुद्भावयति—

**तद्धैक आहुर्धातारमेव सर्वासां पुरस्तात् पुरस्तादाज्येन परियजेत् तदासु सर्वासु मिथुनं दधातीति ॥** इति ।

'तद्ध' तस्मिन्नेव च्छन्दसां श्रमपरिहारार्थे हविष्पञ्चके केचित्पूर्वपक्षिण एवमाहुः,—'सर्वासाम्' अनुमत्यादीनां स्त्रीदेवतानां पुरस्तात् पुरुषदेवतारूपं धातारमेवाज्यद्रव्येण परितो यजेत् । सर्वसंग्रहार्थं पुरस्तादिति वीप्सा ।[1] 'तत्' तेन सर्वत्र धातृविषयप्रयोगेण 'आसु' 'सर्वासु' स्त्रीदेवतासु मिथुनं संपादयति ॥

उसी [छन्दों के श्रमपरिहारार्थ देविका के लिए प्रवृत्त हविष्-पञ्चक] के सम्बन्ध में कुछ लोग कहते हैं कि 'इन सभी [अनुमति आदि स्त्रीदेवता] की आहुति के पूर्व-पूर्व में [पुरुष देवता रूप] धाता को ही एक-एक आज्याहुति दें; क्योंकि ऐसा करने से वह सर्वत्र धाता से सभी स्त्री-देवता का मिथुन सम्पादित करता है।

तमिमं पूर्वपक्षं दूषयति—

**तदु वा आहुर्जामि वा एतद् यज्ञे क्रियते, यत्र समानीभ्यामृग्भ्यां समानेऽहन् यजतीति ॥** इति ।

'तदु वै' तत्रैव पूर्वोक्तविषये केचिदभिज्ञा एवमाहुः,—'यत्र' यस्मिन् प्रयोगे 'समानीभ्याम्' एकविधाभ्यामृग्भ्यां 'समानेऽहन्' एकस्मिन्नेवाहनि यजति, 'तदेतत्' अनुष्ठानं यज्ञे 'जामि वै' आलस्यमेव 'क्रियते' संपाद्यते । प्रयुक्तयोरेवर्चोः पुनः प्रयोगस्य चर्वितचर्वणसदृशत्वेनानुचितत्वात् । धातृदेवताके प्रथमे पुरोडाशे 'धाता ददातु दाशुषे' इति पुरोनुवाक्या[2] । 'धाता प्रजानाम्' इति याज्या[3] । तत्र यद् उपरितनानामपि चतुर्णां हविषां पुरस्तादाज्येन धातारं यजेत्, तदानीमिदमृग्द्वयं पुनरपि चतुर्वारम् आवर्तनीयम् । तथा सति नीरसो यज्ञः फलं दातुं समर्थो न भवेदित्यर्थः ॥

---

१. 'नित्यवीप्सयोः'—पा० सू० ८.१.४ इति, द्विर्वचनम् ।

२, ३. इमे ऋचावन्यशाखीये इत्याश्वलायनेन पठिते—द्र० आश्व० श्रौ० ६.१४.१६ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इसी सम्बन्ध में कुछ अभिज्ञजन इस प्रकार कहते हैं कि 'इस यज्ञ में आलस्य ही किया जाता है, जिस यज्ञ प्रयोग में एक ही दिन में ऋचाओं के समान जोड़ें [=याज्या-पुरोनुवाक्या] से यजन करता है।

कथं तर्हि मिथुनसिद्धिः स्यादित्याशङ्क्य लौकिकदृष्टान्तेन तत्सिद्धिमुपपादयति—

**यदि ह वा अपि बह्व्य इव जायाः पतिर्वाव तासां मिथुनं, तद्यदासां धातारं पुरस्ताद् यजति, तदासु सर्वासु मिथुनं दधाति ॥ इति।**

'यदि ह वा' यद्यपि लोके 'जाया बह्व्य इव' बहुसंख्याका एव स्युः, तथाऽपि 'पतिर्वाव' पतिरेक एव सन् तासां मिथुनं संपादयति। तथा सति यदि 'आसाम्' अनुमत्यादीनां पुरस्ताद 'धातारं' सकृदेव यजति, तदानीम् 'आसु सर्वासु' अनुमत्यादिषु स एक एव धाता मिथुनं संपादयति[1]।

यद्यपि लोक में जैसे बहुत सी पत्नियाँ होने पर भी पति उनमें से एक के ही साथ मिथुन संपादन करता है; उसी प्रकार इन अनुमति आदि के पूर्व में जो एक धाता के लिए आहुति देता है वह इन सभी [स्त्री देवताओं] का [एक धाता से] मिथुन ही संपादित करता है।

वक्ष्यमाणैर्हविर्भिः सांकर्यशङ्कां वारयितुमुक्तार्थं विविच्य निगमयति—

**इति नु देविकानाम् ॥ ४७ ॥ इति।**

अनेनोक्तप्रकारेण देविकाभिधानां देवतानां हवींष्युक्तानीति शेषः ॥[2]

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां पञ्चमाध्याये (पञ्चदशाध्याये) तृतीयः खण्डः ॥३॥ (४७) [११८]

इस प्रकार देविका नामक [स्त्री देवताओं की] हवि का वर्णन हुआ।

॥ इस प्रकार पन्द्रहवें अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

---

१. (i) देविका निर्वपेत्'—इत्यादि च तै० सं० ३.४.९।
(ii) पुरुषो बहुभार्योऽपि करोत्यासु हि मैथुनम्।
तद्वद्धातानमृत्यादिचतुष्के मैथुनं चरेत् ॥ इति षड्गुरुशिष्यः।

२. 'यद्यनूबन्ध्ये पशुपुरोडाशमनु देविका हवींषि निर्वपेयुः;—धाताऽनुमती राका सिनीवाली कुहूः'—इति आश्व० श्रौ० ६.१४.१५। 'अनुमतिराकासिनीवालीकुहूभ्यश्चरवो धात्रे द्वादशकपालः सर्वहुतः'—इति कात्या० श्रौ० १८.६.२१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ चतुर्थः खण्डः

हविरन्तराणि प्रतिजानीते—

**अथ देवीनाम्** ॥ इति ।

'अथ' अनन्तरं 'देवीनां' देवीनामिकानां देवतानाम्, हवींषि निर्वपेदिति शेषः ॥

iii. ४८ [xv. ४] इसके बाद देवी नामक देवता की हवि दे ।

तत्र प्रथमं हविर्विधत्ते —

**सूर्याय पुरोळाशमेककपालम्,—यः सूर्यः स धाता, स उ एव वषट्-कारः[1]** ॥ इति ।

'एककपालं' निर्वपेदिति शेषः । सूर्यस्य पूर्वोक्तं धातृस्वरूपत्वम्, तद्द्वारा वषट्कार-रूपत्वं चोपचर्य तदीयश्रमापनयो द्रष्टव्यः ॥

सूर्य के लिए एक कपाल में संस्कृत पुरोडाश का निर्वपन करे; क्योंकि जो सूर्य है वह धाता है और वही वषट्कार है ।

उक्तानि चत्वारि हवींषि विधत्ते—

**दिवे चरुं,-या द्यौः साऽनुमतिः, सो एव गायत्र्युषसे चरुं, योषाः सा राका, सो एव त्रिष्टुब्, गवे चरुं,-या गौः सा सिनीवाली, सो एव जगती; पृथिव्यै चरुं,-या पृथिवी सा कुहूः, सो एवानुष्टुप्** ॥ इति ।

प्रथमहविर्वद् व्याख्येयम्[2] ॥

द्यौ के लिए चरु दे, क्योंकि जो द्यौ है वह अनुमति है; वही गायत्री है । उषा के लिए चरु दे; क्योंकि जो उषा है वह राका है; वही त्रिष्टुप् है; गाय के लिए चरु दे; क्योंकि जो गाय है वह सिनीवाली है; वही जगती है । पृथिवी के लिए चरु दे, क्योंकि जो पृथिवी है, वह कुहू है, वही अनुष्टुप् है ।

एतेषां हविषां प्रशंसार्थं पूर्वोक्तम्[2] एव अर्थवादं पुनरपि पठति—

**एतानि वाव सर्वाणि च्छन्दांसि,-गायत्रं त्रैष्टुभं जागतमानुष्टुभमन्वन्यान्ये-तानि हि यज्ञे प्रतमामिव क्रियन्ते; एतैर्ह वा अस्य च्छन्दोभिर्यजतः सर्वै-श्छन्दोभिरिष्टं भवति य एवं वेद; तद्वै यदिदमाहुः,—सुधायां ह वै वाजी सुहितो दधातीति, च्छन्दांसि वै तत्सुधायां ह वा एनं छन्दांसि**

---

१. तथा च शत० ब्रा०—'ता वा एता देव्यो दिशो ह्येताश्छन्दांसि दव्योऽथ कः प्रजा-पतिस्तद्यद् देव्यश्च कश्च तस्माद् देविकाः'—इति ९.५.१.३९ ।

२. द्र० इतः पूर्वम् ५५८ पृ० ।



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**दधत्यननुध्यायिनं लोकं जयति य एवं वेद; तद्धैक आहुः,—सूर्यमेव सर्वासां पुरस्तात् पुरस्तादाज्येन परियजेत्, तदासु सर्वासु मिथुनं दधातीति, तदु वा आहुः—जामि वा एतद् यज्ञे क्रियते, यत्र समानीभ्यामृग्भ्यां समानेऽहन् यजतीति, यदि ह वा अपि बह्वय इव जायाः पतिर्वाव तासां मिथुनं तद् यदासां सूर्यं पुरस्ताद् यजति, तदासु सर्वासु मिथुनं दधाति ॥ इति ।**

धातारमित्येतस्य स्थाने सूर्यमित्येतावानेव विशेषः । अन्यत् सर्वं पूर्ववत् ॥

कुल इतने ही छन्द हैं, क्योंकि अन्य [उष्णिक् आदि] तो गायत्री त्रिष्टुभ्, जगती तथा अनुष्टुप् के ही अनुयायी हैं; क्योंकि इतने ही छन्द यज्ञ में अत्यन्त प्रचुरता से प्रयुक्त किये जाते हैं। जो इस प्रकार जानता है उसका अनुष्ठान इन्हीं छन्दों से अनुष्ठित होकर सभी छन्दों से अनुष्ठित हो जाता है। इसीलिए जो वे ऐसा कहते हैं कि 'अन्न से युक्त ज्योतिष्टोम सम्यक् रूप से अनुष्ठित होकर यजमान को स्वर्ग में स्थापित करता है'—वे छन्दों को ही लक्ष्य करके कहते हैं; क्योंकि छन्द ही इस [यजमान] को स्वर्ग में स्थापित करते हैं। जो इस प्रकार जानता है वह उस लोक को जीतता है जिसका उसने कभी ध्यान भी नहीं किया। उसी [छन्दों के श्रमपरिहारार्थं देविका के लिए प्रदत्त हविष्-पञ्चक] के सम्बन्ध में कुछ लोग कहते हैं कि 'इन सभी [अनुमति आदि स्त्रीदेवता] की आहुति के पूर्व-पूर्व में [पुरुष देवता रूप] सूर्य को ही एक-एक आज्याहुति दे; क्योंकि ऐसा करने से वह सर्वत्र सूर्य से सभी [स्त्रीदेवता] का मिथुन संपादित करता है। इसी संम्बन्ध में कुछ अभिज्ञजन इस प्रकार कहते हैं कि 'उस यज्ञ में आलस्य ही किया जाता है; जिस यज्ञ प्रयोग में एक ही दिन में ऋचाओं के समान जोड़े [=याज्या-पुरोनुवाक्य] से यजन करता है। यद्यपि लोक में जैसे बहुत सी पत्नियाँ होने पर भी पति उनमें से एक ही के साथ मिथुन संपादन करता है उसी प्रकार इन [अनुमति आदि] के पूर्व में जो एक सूर्य के लिए आहुति देता है वह इन सभी [स्त्री देवताओं] का [एक सूर्य से] मिथुन ही संपादित करता है।

देविकानाम्नां देवीनाम्नां च हविषां तुल्यं सामर्थ्यमभिप्रेत्य विकल्पं दर्शयति—

**ता या इमास्ता अमूर्या अमूस्ता इमा अन्यतराभिर्वाव तं काममाप्नोति य एतासूभयीषु ॥ इति ।**

'ताः' देवीनाम्ना प्रसिद्धाः 'इमाः' इदानीमुक्ताः[1] 'सूर्याय पुरोडाशम्' इत्यादयो याः सन्ति, 'ताः अमूः' प्राक्तनग्रन्थेनोक्ताः[2] 'धात्रे पुरोडाशम्' इत्यादयो देविकाः। एवं देवीरुद्दिश्य देविकातादात्म्यमुक्तम्। अथ देविका उद्दिश्य देवीतादात्म्यमुच्यते—या 'अमूः' पूर्वत्रोक्ता देविकाः सन्ति, ताः 'इमाः' इदानीमुक्ता देव्यः। एवमन्योन्यतादात्म्ये सति यः

१. द्र० इतः पूर्वम् ५६१ पृ०। २. द्र० इतः पूर्वम् ५५७ पृ०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

काम एतासूभयविधासु लभ्यते, 'तं' कामम् 'अन्यतराभिर्वा' एकविधाभिरेव प्राप्नोति। तस्माद् विकल्पेन प्रयोग इत्यर्थः ॥

वे [देवी नाम से प्रसिद्ध] जो ये [कहे गए] हैं वे [पूर्वोक्त] यह [धातृ आदि देविका] हैं और वे जो [पूर्वोक्त देविका] हैं वे ये [कही गई] [देवियाँ] हैं।' इस प्रकार [दोनों के एकत्व से] वह किसी एक से भी उन्हीं कामनाओं को प्राप्त करता है, जो दोनों से प्राप्त होती हैं।

अथ नैमित्तिकं समुच्चयं विधत्ते—

**ता उभयीर्गतश्रियः प्रजातिकामस्य संनिर्वपेत् ॥** इति।

अनूचानादीनां मध्ये कश्चिद् 'गतश्रीः'। तथा च श्रुत्यन्तरे श्रूयते—'त्रयो वै गतश्रियः, - शुश्रुवान्, ग्रामणीः, राजन्यः'[1] इति। तादृशो गतश्रीर्यदि 'प्रजातिं' प्रजोत्पादनसामर्थ्यं कामयते, तदानीं तस्य 'ताः' देविका देवीश्च 'उभयीः' 'संनिर्वपेत् समुच्चित्य निर्वपेत् ॥

[अनूचानों के मध्य] गतश्री व्यक्ति यदि प्रजोत्पादन सामर्थ्य की कामना करे तो वह उन [देवी और देविका] दोनों के लिए निर्वपन करे।

धनकामस्य समुच्चयं निषेधति—

**न त्वेषिष्यमाणस्य ॥** इति।

धनमपेक्षमाणस्य[2] तु नैव संनिर्वपेत्। उभयविधानां समुच्चित्य निर्वापो न कार्यः ॥

किन्तु धन की इच्छा वाला ऐसा न करे।

विपक्षे बाधकं दर्शयति—

**यदेना एषिष्यमाणस्य संनिर्वपेद् ईश्वरो हास्य वित्ते देवा अरन्तोर्यद्वा अयमात्मनेऽलममंस्तेति ॥** इति।

---

१. तै० सं २.५.४.४। (i) 'शुश्रुवान्—वेदतदर्थयोः श्रुतवान्, ग्रामणीः—वैश्य परिवृढः, राजन्यः—श्रोत्रियः'—इति, 'गता प्राप्ता श्रीर्येन स गतश्रीः'—इत्यादि चाह रुद्रदत्तः (आप० श्रौ० १.१४.९) द्र० वृत्तिः। (ii) 'गता प्राप्ता श्रीर्येनासौ गता श्रीर्यमिति वा'—इति च याज्ञिकदेवः (कात्या० श्रौ० ४.१३.५) द्र० वृत्तिः। द्र० शाङ्खा० श्रौ० २.६.५। (iii) 'साङ्गोपाङ्गचतुर्वेदयुक्तो विप्रस्तु शुश्रुवान्। वृत्तवान् कोटिसारश्च ग्रामणीर्वैश्यजातिकः ॥ नृपोऽभिषिक्तो निर्लोभो राजन्य इति ते त्रयः'—इति षड्गुरुशिष्यः।

२. 'एषिष्यमाणः संतोषरहितो धनवानपि। इषेर्लृट्। शतुश्शानच् मुक्। स्य इट्। गुणः'—इति षड्गुरुशिष्यः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वित्तमेषिष्यमाणस्य यदि 'एनाः' उभयीः समुच्चित्य निर्वपेत् तदानीम् 'अस्य' धनकामस्य वित्ते देवाः सर्वेऽपि 'अरन्तोः' ईश्वरः, 'अ-रन्तुम्'[1] अक्रीडितुं समर्था भवन्ति; एतदपेक्षितं वित्तं द्विषन्तीत्यर्थः। तत्र हेतुरुच्यते,—'यद्वै' यस्मादेव कारणादयं धनार्थी 'आत्मने' स्वार्थमेव 'अलममंस्त' संपूर्णं वित्तं मनसा ध्यातवान्, धनलोभेन यागादिषु प्रवृत्तत्वात्; एतदपेक्षिते धने देवानां द्वेषो युज्यते ॥

वित्त चाहने वाला यदि इन दोनों के लिए निर्वपन करता है तो इसके धन में देव रमण करने में समर्थ नहीं होते हैं अर्थात् इसके द्वारा अपेक्षित धन से द्वेष करते हैं क्योंकि यह स्वार्थ के लिए सम्पूर्ण धन चाहता है।

धनकामस्य समुच्चयं निषिध्य प्रजाकामस्य पूर्वत्र विहितं समुच्चयमर्थवादेन प्रशंसति—

**ता ह शुचिवृक्षो गौपालायनो वृद्धद्युम्नस्याभिप्रतारिणस्योभयीर्यज्ञे संनिरुवाप; तस्य ह रथगृत्सं गाहमानं दृष्ट्वोवाचेत्थमहमस्य राजन्यस्य देविकाश्च देवीश्चोभयीर्यज्ञे सममादयं; यदस्येत्थं रथगृत्सो गाहत इति चतुःषष्टिं कवचिनः शश्वद्धास्य ते पुत्रनप्तार आसुः ॥ ४८ ॥ इति।**

'शुचयः' शुद्धाः समीचीनपुष्पफला वृक्षाः यस्य महर्षेराश्रमे सन्ति, सोऽयं शुचिवृक्षनामकः। सम्यक्तृणोदकप्रदानेन गोशुश्रूषां करोतीति गोपालायननामा कश्चिदृषिः, तस्यापत्यं 'गौपालायनः' पूर्वोक्तनामकः शुचिवृक्षः। 'वृद्धं' प्रभूतं 'द्युम्नं' धनं यस्य राज्ञः सोऽयं 'वृद्धद्युम्नः' अभितः शत्रून् प्रकर्षेण 'तरति' निराकरोतीति 'अभिप्रतारी' कश्चिद्राजा, तस्य पुत्र 'आभिप्रतारिणः' पूर्वोक्तो वृद्धद्युम्नः। तस्य राज्ञो यज्ञे देविका देवीश्चोभयीः 'इत्थम्' अनेन शास्त्रोक्तप्रकारेण 'सममादयम्' समुच्चित्य मादितवानस्मि, समुच्चयानुष्ठानेन तत्तद्देवता हर्षितवानस्मि। तत्प्रसादादयं 'रथगृत्सः' राजपुत्रः क्रीडार्थं जले गाहते, इति। न केवलं शुचिवृक्षेण दृष्टो रथगृत्स एवैकः, किन्तु चतुःषष्टिसंख्याकाः 'शश्वत्कवचिनः' सर्वदा युद्धार्थमुद्यताः शूराः। 'अस्य' वृद्धद्युम्नस्य राज्ञः 'ते' तथाविधाः एव पुत्राः पौत्राश्च आसुः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां पञ्चमाध्याये (पञ्चदशाध्याये) चतुर्थः खण्डः ॥४॥ (४८) [११९]

एक बार शुचिवृक्ष [जिसके आश्रम में सुन्दर पुष्प और फल के वृक्षथे] गौपालायन [सुन्दर घास देकर गाय की सेवा करने वाले गोपालायन के पुत्र] ने वृद्धद्युम्न आभिप्रतारिण नामक किसी राजा के यज्ञ में दोनों के लिए पुरोडाश का निर्वपन किया। उस रथगृत्स नामक राजा के पुत्र को जल में तैरते हुए देखकर उन्होंने कहा – ऐसा इसलिए है क्योंकि

---

१. वित्ते धने। अरन्तोः रतिम् अकर्तुम्। 'ईश्वरे तोसुन्' (पा० सू० ३.४ १२)—इति षड्गुरुशिष्यः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मैंने इस राजा के यज्ञ में देवी और देविका दोनों को [शास्त्रोक्त अनुष्ठान से] प्रसन्न कर दिया था। उन्हीं के प्रसाद से यह रथगृत्स राजपुत्र इस प्रकार क्रीडार्थं जल में तैर रहा है। इतना ही नहीं अपितु इस राजा के चौंसठ पुत्र और पौत्र भी उसी के समान आयु वाले ऐसे थे जो सर्वदा कवच पहने [युद्ध के लिए उद्यत] रहते थे।

॥ इस प्रकार पन्द्रहवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

ज्योतिष्टोमस्तावत् 'सप्तसंस्थः' समाप्तिभेदात् सप्तविधः, 'अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त संस्थाः'[1]–इति आश्वलायनेन अभिहितत्वात्। तत्राग्निष्टोमसाम्ना यज्ञायज्ञीयाख्येन यत्र समाप्तिः, सोऽयं प्रथमरूपोऽग्निष्टोमः। स सर्वोऽपि पूर्वत्रोक्तः। अथोक्थ्यसंस्थारूपो ज्योतिष्टोमो वक्तव्यः; तदर्थमाख्यायिकामाह—

**अग्निष्टोमं वै देवा अश्रयन्तोक्थान्यसुरास्ते समावद्वीर्या एवासन् न व्यावर्तन्त, तान् भरद्वाज ऋषीणामपश्यदिमे वा असुरा उक्थेषु श्रितास्तानेषां न कश्चन पश्यतीति सोऽग्निमुदह्वयत् ॥** इति।

यदा देवा अग्निष्टोममाश्रितवन्तः, तदानीमसुरा अप्युक्थनामकानि स्तोत्राणि शस्त्राणि चाश्रित्यावस्थिताः। ततश्च 'ते' देवाश्चासुराश्च यज्ञे तुल्यवीर्या एवासन्, न तु देवाः शौर्याधिक्येन व्यावृत्तिं प्राप्ताः। तदानीमृषीणां मध्ये सूक्ष्मदर्शी भरद्वाजः 'तान्' असुरान् रहस्युक्थपरानपश्यत्। दृष्ट्वा चैवमुवाच—'इमे' रहस्यवस्थिता 'असुरा उक्थेषु' स्तोत्रशस्त्रेष्वाश्रिताः; 'तान्' असुरान् 'एषां' देवानामृषीणां च मध्ये न कोऽपि पश्यतीति। तथोक्तः स भरद्वाजोऽसुरनिराकरणार्थं केनचिन्मन्त्रेणाग्निम् 'उदह्वयद्' उच्चध्वनिनाह्वानं कृतवान् ॥

**[उक्थ्य]—**

iii. ४९ [xv. ५] अग्निष्टोम में देवों ने आश्रय लिया और उक्थ्यों में असुरों ने। दोनों ही तुल्य बल वाले थे, अतः उनमें पार्थक्य न हो सका[2]। ऋषियों में भरद्वाज ने उन्हें देखा। 'ये असुर उक्थ्यों में अवस्थित हैं अतः उन्हें इन [देव एवं ऋषि] के मध्य कोई भी नहीं देखता है।' उन्होंने अग्नि का आह्वान किया।

तमिमं मन्त्रं दर्शयति—

**'एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः'–इति ॥** इति।

हेऽग्न ! एह्यू' आगच्छैव 'ते' तव 'सु ब्रवाणि' शोभनं कार्यं कथयानि। 'इतराः' देववाक्यार्थव्यतिरिक्ताः 'गिरः' असुरवाचः 'इत्था' इत्थमनेन प्रकारेण, श्रुत्यन्तरादिति शेषः ॥

---

१. आश्व० श्रौ० ६.११.१। २. द्र० इतः पूर्वम्, ३३४ पृष्ठे।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'हे अग्नि ! यहाँ आओ। तुमसे कुछ शुभ कार्य कहना है। ये अन्य वाणियाँ इस प्रकार [असुरों की] हैं।

अस्मिन् मन्त्रे[1] इतराशब्दार्थं दर्शयति—

**असुर्या ह वा इतरा गिरः ॥ इति ।**

असुरेभ्यो हिता 'असुर्याः', ताश्च गिरः देववाक्यादितराः, देवविरोधिन्यः—इत्यर्थः ॥

[देव विरोधिनी] दूसरी वाणी तो उन असुरों की है।

तथाऽग्निवाक्यं दर्शयति—

**सोऽग्निरुपोत्तिष्ठन्नब्रवीत् किंस्विदेव मह्यं कृशो दीर्घः पलितो वक्ष्यतीति ॥ इति ।**

भरद्वाजेनाहूतो योऽयमग्निः 'सोऽग्निः' तत्समीपं प्रत्यागन्तुमुत्तिष्ठन्नेवमब्रवीत्—'मह्यम्' अग्नये स ऋषिः 'किंस्विदेव' किंनाम वक्ष्यतीति। 'कृशो दीर्घः पलितः इत्यृषिविशेषणानि ॥

अग्नि ने उठते हुए कहा—'ये दुबले, लम्बे और भूरे बाल वाले [ऋषि] मुझसे क्या कहना चाहते हैं ?'

तानि च स्पष्टीकरोति—

**भरद्वाजो ह वै कृशो दीर्घः पलित आस ॥ इति ।**

स्पष्टोऽर्थः ॥

भरद्वाज ही कृशगात, लम्बे और भूरे बाल वाले थे।

किंस्वित् पलितो वक्ष्यतीत्यग्निना पृष्टस्य भरद्वाजस्योत्तरं दर्शयति—

**सोऽब्रवीदिमे वा असुरा उक्थेषु श्रितास्तान् वो न कश्चन पश्यतीति ॥ इति ।**

'सः' भरद्वाजोऽग्निं प्रत्येवमब्रवीत्,—'इमे वा' इत्यादि पूर्ववद् व्याख्येयम् ॥

[इसी प्रश्न के उत्तर में] उन्होंने [अग्नि से] कहा—'ये असुर उक्थों में अवस्थित हैं जिन्हें तुम में से कोई भी नहीं देखता है।'

अथोक्थस्तोत्रस्य साधनभूतं 'साकमश्व' नामकं साम यदस्ति, तदयं नाम निर्वक्ति—

**तानग्निरश्वो भूत्वाऽभ्यत्यद्रवत्, यदग्निरश्वो भूत्वाऽभ्यत्यद्रवत्, तत्साकमश्वं सामाभवत्, तत्साकमश्वस्य साकमश्वत्वम् ॥ इति ।**

सोऽग्निर्भरद्वाजस्योत्तरं श्रुत्वा तत ऊर्ध्वं स्वयमश्वाकारो भूत्वा 'तान्' असुरान् 'अभि' लक्ष्य अत्यद्रवद् अतिशयेनागच्छत्। असुराणामुपरि वेगवन्तमात्मरूपमश्वं प्रवर्त्या-

---

१. ऋ० ६.१६.१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सुरान् मारितवान् इत्यर्थः । यस्मात् स्वयमश्वाकारो भूत्वा तैरसुरैः साकं युद्धं कृत्वा जितवान्, तस्मादेतद् वृत्तान्तसूचनाय प्रवृत्तायाम् 'एह्यू षु ब्रवाणि ते'—इत्यादिकायामृचि[1] उत्पन्नस्य साम्नः[2] साकमश्वमिति नाम संपन्नम्[3] ।

अग्नि अश्व होकर उनके पीछे दौड़े; क्योंकि अग्नि अश्व होकर उनके पीछे दौड़े; अतः 'साकमश्व' नामक साम हुआ। [क्योंकि अश्व होकर उन असुरों के 'साकं' अर्थात् साथ युद्ध करके जीता, अतः] 'साकमश्व' साम का 'साकमश्व' नाम पड़ा।

तस्य साम्न उक्थस्तोत्रनिष्पादकत्वं विधत्ते—

**तदाहुः साकमश्वेनोक्थानि प्रणयेदप्रणीतानि वाव तान्युक्थानि यान्यन्यत्र साकमश्वादिति ॥ इति ।**

'तत्' तत्र साकमश्वविषये प्रयोगाभिज्ञा एवम् आहुः—साकमश्वनामकेन साम्ना स्तोत्राण्युक्थनामकानि प्रणयेत्[4]. साकमश्वाद् अन्यत्र सामान्तरेण यान्युक्थानि स्तोत्राणि प्रणीयन्ते, तान्यप्रणीतान्येव भवन्ति । तस्मादिदमेव सामोक्थस्तोत्रनिष्पादकम्[5] ॥

इस विषय में कुछ लोग कहते हैं—'साकमश्व' साम से उक्थों का प्रणयन करे। जो 'साकमश्व' के अलावा अन्य [साम] से आरम्भ किए गए हैं वे उक्थ आरम्भ न किए गए ही होते हैं।

पक्षान्तरं विधत्ते—

**प्रमंहिष्ठीयेन प्रणयेदित्याहुः, प्रमंहिष्ठीयेन वै देवा असुरानुक्थेभ्यः प्राणुदन्त ॥ इति ।**

'प्र मंहिष्ठाय गायत' इत्यस्यामृचि[6] उत्पन्नं साम 'प्रमंहिष्ठीयम्'[7]; तेन साम्नोक्थस्तोत्राणि[8] निष्पादयेत् । उक्थेष्वाश्रितानसुरान् देवा एतेन साम्ना उक्थेभ्यो निराकृतवन्तः ॥

'प्र मंहिष्ठीय' से आरम्भ करना चाहिए'—कुछ लोग ऐसा कहते हैं; क्योंकि देवों ने 'प्र मंहिष्ठीय' के द्वारा ही असुरों को उक्थों से निराकृत किया।

उभयोः साम्नोरैच्छिकं विकल्पं दर्शयति—

**तत्प्राहैव प्रमंहिष्ठीयेन नयेत् प्र साकमश्वेन ॥ ४९ ॥ इति ।**

---

१. छ० आ० १.१.१.७ । २. गे० गा० १.१.१४ । ३. नामविधिः आर्षेय ब्रा० १.२१ ! ४. उ० आ० १.१.२१.१–३ । ऊ० गा० १.१.१५ ।
५. 'तस्मात् साकमश्वेनोक्थानि प्रणयन्ति'—इत्यादि विधायकं ब्राह्मणम्, (ता० ब्रा० ८.८) । ६. छ० आ० २.१.२.१ । ७. गे० गा० ३.१.२६ ।
८. उ० आ० २.२.१७.१,२ । ऊ० गा० २.२.५ । नामविधिः—आ० ब्रा० १.१३ । विधायकं ब्राह्मणम्—ता० ब्रा० १२.६ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'अह'—इत्ययं शब्दोऽन्यत्र निषेधार्थोऽप्यत्र विकल्पार्थः, निपातानामनेकार्थत्वात्। तान्युक्थस्तोत्राणि 'प्रमंहिष्ठीयेन' साम्ना प्रणयेत्, 'अहैव' अथवा 'साकमश्वेन' साम्ना प्रणयेत् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां पञ्चमाध्याये (पञ्चदशाध्याये) पञ्चमः खण्डः ॥ ५ ॥ (४९) [१२०]

अतः [ऐतरेय] ऋषि का कहना है कि चाहे 'प्र मंहिष्ठीय' से आरम्भ करे चाहे 'साकमश्व' साम से [दोनों ही पक्ष हैं]।

॥ इस प्रकार पन्द्रहवें अध्याय के पञ्चम खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

उक्थस्तोत्रेषु सामविशेषं विधाय उक्थशस्त्रेषु सूक्तविशेषान् विधातुमादौ मैत्रावरुणशस्त्रे किंचित् सूक्तं विधत्ते—

**ते वा असुरा मैत्रावरुणस्योक्थमश्रयन्त, सोऽब्रवीदिन्द्रः कश्चाहं चेमानितोऽसुरान्नोत्स्यावहा इत्यहं चेत्यब्रवीद् वरुणस्तस्मादैन्द्रावरुणं मैत्रावरुणस्तृतीयसवने शंसतीन्द्रश्च हि तान् वरुणश्च ततो नुदेताम्** ॥ इति।

उक्थ्यस्य क्रतोरग्निष्टोमविकृतित्वात्[1] अतिदिष्टमग्निष्टोमप्रयोगमनुष्ठाय तत ऊर्ध्वमुक्थ्यपर्यायास्त्रयोऽनुष्ठेयाः। तथा च आपस्तम्ब आह—'उक्थ्यश्चेदग्निष्टोम चमसानुन्नयंस्त्रिभ्यश्चमसगणेभ्यो राजानमति रेचयति'[2] इति। तत्र प्रथमे चमसगणे मैत्रावरुणस्य यच्छस्त्रमस्ति, उक्थस्तोत्रेषु साम्ना निराकृतास्त एव असुराः 'इदं' मैत्रावरुणशस्त्रमश्रयन्त 'तत्' तदानीं तत्रावस्थितः स इन्द्र इतर देवान् प्रत्येवमब्रवीत्—असुराणामपनोदने मम सहायोऽपेक्षितः, ततो हे देवाः! युष्माकं मध्ये कश्चाहं च 'इमान्' असुरान् 'इतः' मैत्रावरुणशस्त्रात् 'नोत्स्यावहै' अपनोदं करिष्याव इति। देवेष्ववस्थितो वरुणः 'अहं च' इत्यब्रवीत्; हे इन्द्र, त्वं चाहं चेत्यर्थः। यस्मादेवं तस्मादुभयोर्मेलनेन तेषामसुराणामपनोदनार्थम् 'ऐन्द्रावरुणं' सूक्तं तृतीयसवने 'मैत्रावरुणः' एतन्नामक ऋत्विक् शंसेत्। 'इन्द्रावरुणा युवमध्वराय नः' इत्येतद्दशर्चं सूक्तम्[3] ऐन्द्रावरुणम्; तेन तुष्ट इन्द्रश्च वरुणश्च 'तान्' असुरान् 'ततः' शस्त्रात् 'अपनुदेतां' निराकुर्याताम् ॥

iii. ५० [xv. ६] उन असुरों ने मैत्रावरुण के उक्थ में आश्रय ग्रहण किया। इन्द्र ने कहा—'कौन इन असुरों को इस [मैत्रावरुण शस्त्र] से निकालने के लिए मेरा साथ

१. तदुक्तम् आपस्तम्बेन—'उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामश्चाग्निष्टोमस्य गुणविकाराः, ····तेषाम् अग्निष्टोमवत् कल्पः'—इति १४.१.१,३।

२. आप० श्रौ० १४.१.६।

३. ऋ० ७.८२।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

देगा ?' 'मैं'— ऐसा वरुण ने कहा। इसलिए मैत्रावरुण नामक ऋत्विज तृतीय सवन में इन्द्र और वरुण देवताक सूक्त का शंसन करता है, जिससे कि [प्रसन्न होकर] इन्द्र और वरुण उस [शस्त्र] से उन [असुरों] को निकाल दें।

द्वितीये चमसगणे किंचित्सूक्तद्वयं विधत्ते—

**ते वै ततोऽपहता असुरा ब्राह्मणाच्छंसिन उक्थमश्रयन्त; सोऽब्रवीद्-इन्द्रः कश्चाहं चेमानितोऽसुरान् नोत्स्यावहा इत्यहं चेत्यब्रवीद् बृहस्पतिस्तस्मादैन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसी तृतीयसवने शंसतीन्द्रश्च हि तान् बृहस्पतिश्च ततो नुदेताम् ॥ इति।**

'ततः' मैत्रावरुणशस्त्रान्निराकृता असुरा ब्राह्मणाच्छंसिनः शस्त्रमाश्रितवन्तः। 'उदप्रुतो न वयो रक्षमाणाः' इत्येतद् बृहस्पतिदेवताकं द्वादशर्चं सूक्तम्।[1] 'अच्छा म इन्द्रं मतयः स्वर्विदः' इत्येकादशर्चमैन्द्रं सूक्तम्[2]। तदुभयं मिलितं सदैन्द्राबार्हस्पत्यं संपद्यते। तदेतद् ब्राह्मणाच्छंसी ब्रूयात्[3]। अन्यत् पूर्ववद् व्याख्येयम् ॥

वहाँ से निकाले जाकर उन असुर ने ब्राह्मणाच्छंसिन् के उक्थ में आश्रय ग्रहण किया। इन्द्र ने कहा—'कौन इन असुरों को इस [ब्राह्मणाच्छंसिन् उक्थ] से निकालने के लिए मेरा साथ देगा ?' 'मैं'—ऐसा बृहस्पति ने कहा। इसलिए ब्राह्मणाच्छंसिन् नामक ऋत्विज तृतीय सवन में इन्द्र और बृहस्पति देवताक सूक्त का शंसन करता है, जिससे कि [प्रसन्न होकर] इन्द्र और बृहस्पति उस [उक्थ] से उनको निकाल दें।

तृतीये चमसगणे सूक्तं विधत्ते—

**ते वै ततोऽपहता असुरा अच्छावाकस्योक्थमश्रयन्त; सोऽब्रवीद्—इन्द्रः कश्चाहं चेमानितोऽसुरान् नोत्स्यावहा इत्यहं चेत्यब्रवीद् विष्णुस्तस्मादैन्द्रावैष्णवमच्छावाकस्तृतीयसवने शंसतीन्द्रश्च हि तान् विष्णुश्च ततो नुदेताम् ॥ इति।**

'सं वां कर्मणा समिषा'—इत्यष्टर्चमैन्द्रावैष्णवं सूक्तम्।[3] अन्यत् पूर्ववद् व्याख्येयम् ॥

वहाँ से निकाले जाकर उन असुरों ने अच्छावाक के उक्थ में आश्रय ग्रहण किया। इन्द्र ने कहा—'कौन इन असुरों को इस [अच्छावाक उक्थ] से निकालने में मेरा साथ देगा ?' 'मैं'—विष्णु ने कहा। इसलिए अच्छावाक नामक ऋत्विज तृतीय सवन में इन्द्र और विष्णु देवताक सूक्त का शंसन करता है जिससे कि [प्रसन्न होकर] इन्द्र और विष्णु उस [उक्थ] से उनको निकाल दें।

सूक्तानां द्विदेवताकत्वं प्रशंसति—

**द्वन्द्वम् इन्द्रेण देवताः शस्यन्ते; द्वन्द्वं वै मिथुनं, तस्माद् द्वन्द्वान् मिथुनं प्रजायते, प्रजात्यै ॥ इति।**

---

१. ऋ० १०.६८। २. ऋ० १०.४३। ३. ऋ० ६.६९।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इन्द्रेण सह 'द्वन्द्वं' युग्मं भूत्वा वरुणबृहस्पतिविष्णुदेवताः क्रमेण शस्यन्ते। द्वन्द्वं च लोके स्त्रीपुरुषरूपं 'मिथुनं' तादृशान् मिथुनाद् अपत्यरूपं 'मिथुनं' प्रजायते। ततो द्वन्द्वशंसनं यजमानस्य प्रजात्यै भवति॥

इन्द्र के साथ युग्म होकर [वरुण-बृहस्पति और वरुण आदि] देवताओं का क्रम से शंसन किया जाता है। [लोक में एक स्त्री पुरुष रूप] द्वन्द्व एक मिथुन है। इसलिए द्वन्द्व से [संतान रूप] मिथुन उत्पन्न किए जाते हैं। इसलिए देवता-द्वन्द्व का शंसन यजमान के प्रजोत्पादन के लिए होता है।

वेदन प्रशंसति—

**प्रजायते प्रजया पशुभिर्य एवं वेद॥** इति।

जो इस प्रकार जानता है वह [पुत्र-पौत्र रूप] प्रजा और अश्वादि पशुओं से वृद्धि को प्राप्त होता है।

शस्त्रिणां त्रयाणां होत्रकाणां[1] सूक्तानि विधाय, पोतुर्नेष्टुश्च मन्त्रान्तराणि विधत्ते—

**अथ हैते पोत्रीयाश्च नेष्ट्रीयाश्च चत्वार ऋतुयाजाः षळृचः॥** इति।

प्रैषग्रन्थे पञ्चमे सूक्ते 'होता यक्षत्'—इत्यादिकौ द्वितीयाष्टमौ मन्त्रौ पोतुर्द्वावृतुयाजौ, तथा तत्रैव तृतीयनवमौ मन्त्रौ नेष्टुर्द्वावृतुयाजौ, एवं चत्वार 'ऋतुयाजाः', ते मिलित्वा पोतृसंबन्धान्नेष्टृसंबन्धाच्च 'पोत्रीयाः नेष्ट्रीयाश्च' भवन्ति। तथा प्रस्थितयाज्याः पोतुस्तिस्र ऋचः, नेष्टुश्च तिस्र ऋचः[2], इत्येवं 'षळृचः' भवन्ति[3]॥

---

१. 'प्रशास्ता ब्राह्मणाच्छंस्यच्छावाक इति शस्त्रिणो होत्रकाः'—इति आश्व० श्रौ० ५.१०.१०।

२. तथा चोक्तम्—'मरुतो यस्य हि क्षये (ऋ० १.८६.१) अग्ने पत्नीरिहावह (ऋ० १.२२.९)....इति प्रातःसवनिक्यः प्रस्थितयाज्याः', 'अर्वाङेहि सोमकामं त्वाहुः (ऋ० १.१०४.९) तवायं सोमस्त्वमेह्यर्वाङ् (ऋ० ३.३५.६) इति माध्यंदिन्यः, 'आ वो वहन्तु सप्तयो रघुष्पदं (ऋ० १.८५.६) अमेव नः सुहवा आहिगन्तन (ऋ० २.३६.३) इति तार्तीयसवनिक्यः'—आश्व० श्रौ० ५ ५.१८,१९।

३. उक्थ्यस्याग्निष्टोमविकृतित्वात् अग्निष्टोमे विहितानि प्रायः सर्वाण्येवाङ्गकार्याण्यत्रा-दिश्यन्ते, तदपवादभूता विशेषविधय एवेह पञ्चमषष्ठखण्डयोः समाम्नाताः, तथा आश्वलायनेनापि 'उक्थ्ये तु होत्रकाणाम्'''इत्यन्त उक्थ्यः'–इति (आश्व० श्रौ० ६.१) उक्थाश्रिता विशेषविधय एवोक्ताः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[होत्रकों के उक्थ नामक तीन शस्त्र को कहने के बाद] अब [बतलाते हैं कि] पोत्रीय और नेष्ट्रीय ऋतुयाज चार होते हैं। [पोता की तीन और नेष्टा की तीन प्रस्थित याज्या मिलकर कुल] छः ऋचाएँ होती हैं।

तदेतन्मन्त्रदशकं प्रशंसति—

**सा विराड्दशिनी, तद्विराजि यज्ञं दशिन्यां प्रतिष्ठापयन्ति, प्रतिष्ठापयन्ति ॥ ५० ॥ इति।**

**॥ इति 'ऐतरेयब्राह्मणे' तृतीयपञ्चिकायां पञ्चमोऽध्यायः ॥ ५ ॥**

'सा' पूर्वोक्ता मन्त्रसमष्टिः 'दशिनी' दशसंख्यायुक्ता सती विराट्छन्दः संपद्यते; 'दशाक्षरा विराड्'—इति श्रुत्यन्तरात्। 'तत्' तेन दशसंप्रयोगेण 'दशिन्यां' दशसंख्योपेतायां विराजि यज्ञमृत्विजः प्रतिष्ठापयन्ति।[1] अभ्यासोऽध्यायपरिसमाप्त्यर्थः॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये तृतीयपञ्चिकायां पञ्चमाध्याये (पञ्चदशाध्याये) षष्ठः खण्डः ॥६॥ (५०) [ १२१ ]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधर माधवाचार्यादेशतो सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश-नामभाष्ये एतरेयब्राह्मणस्य कृतौ तृतीयपञ्चिकायाः पञ्चमोध्यायः (पञ्चदशोऽध्यायः) समाप्तः ॥ ५ ॥

वह [पूर्वोक्त मन्त्र] दशक विराट् छन्द रूप हैं। उस [दस संख्या के प्रयोग] से दस संख्या युक्त विराट् में यज्ञ को ऋत्विज प्रतिष्ठित करते हैं।

॥ इस प्रकार ऐतरेय ब्राह्मण के तृतीय पञ्चिका में पांचवें अध्याय की हिन्दी पूर्ण हुई ॥ ५ ॥

**[ ग्रहोक्थमेकादश (१)। देवविशस्त्रयोदश (२) सोमो वै राजामुष्मिंश्चतुर्दश (३)। देवा वा असुरैः षट् (४)। यज्ञो वै देवेभ्यः षट् (५) ॥३॥ ग्रहोक्थं, सौर्या वै, इन्द्रो वै, वैश्वदेवं शंसति, इति नु दश[2] ॥ ३ ॥ ]**

**॥ इति 'ऐतरेयब्राह्मणे' तृतीयपञ्चिका समाप्ता ॥ ३ ॥**

(पञ्चिकाङ्काः—३। अध्यायाङ्काः—१५। खण्डाङ्काः—१२१)

---

१. 'अग्निष्टोमं वै'—इत्याद्यारब्धम् उक्थ्यक्रतुप्रकरणमिहैव समाप्तम् (५६५—५७१ पृ०) 'उक्थ्येन पशुकामो यजेत्'—इति तु आप० श्रौ० १४.१.२।

२. द्र० इतः पूर्वम्, १९० पृष्ठे टिप्पणीद्वयम्।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[तृतीयपञ्चिका में 'प्रहोक्थम्' इत्यादि ग्यारह खण्डों का प्रथम (ग्यारहवाँ) अध्याय है। 'देवविशः' इत्यादि तेरह खण्डों का द्वितीय (बारहवाँ) अध्याय है। 'सोमो वै राजामुष्मिन्' इत्यादि चौदह खण्डों का तृतीय (तेरहवाँ) अध्याय है। 'देवा वा असुरैः' इत्यादि छः खण्डों का चतुर्थ (चौदहवाँ) अध्याय है और 'यज्ञो वै देवेभ्यः' इत्यादि छः खण्डों का पाँचवां (पन्द्रहवाँ) अध्याय है [११ + १३ + १४ + ६ + ६ = ५०]।

इस प्रकार 'प्रहोक्थम्' इत्यादि से आरम्भ करके खण्डों का प्रथम दशक है। 'सौर्या वै' इत्यादि से आरम्भ करके खण्डों का द्वितीय दशक है। 'इन्द्रो वै' इत्यादि से आरम्भ करके खण्डों का तृतीय दशक है। 'वैश्वदेवं शंसति' इत्यादि से आरम्भ करके खण्डों का चतुर्थ दशक है और 'इति नु' इत्यादि से आरम्भ करके खण्डों का पाँचवाँ दशक है अर्थात् तृतीय पञ्चिका में कुल पचास खण्ड हैं।]

॥ इस प्रकार ऐतरेय ब्राह्मण की तृतीय पञ्चिका की हिन्दी पूर्ण हुई ॥ ३ ॥

—:०:—

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ चतुर्थपञ्चिका

## तत्र

### प्रथमाध्यायस्य प्रथमः खण्डः

—: * :—

## [अथ षोडशोऽध्यायः

### प्रथमः खण्डः]

संस्थेष्टीनां वाग्यमर्श्वर्त्विजां च
याग देवीदेवीकानां विशेषाः ॥
संस्थोक्थ्यस्य स्तोत्रशस्त्रप्रक्लृप्तिः
शस्त्राण्याहुः शस्त्रिणां होत्रकाणाम् ॥ १ ॥

ज्योतिष्टोमभेद उक्थ्यः समापितः; अथ षोडश्युच्यते; तद्विषयं शंसनं विधत्ते—

**देवा वै प्रथमेनाह्नेन्द्राय वज्रं समभरंस्तं द्वितीयेनाह्नाऽसिञ्चंस्तं तृतीयेनाह्ना प्रायच्छंस्तं चतुर्थेऽहन् प्राहरत् तस्माच्चतुर्थेऽहन् षोळशिनं शंसति ॥** इति ।

अग्निष्टोमोक्थ्यादिसंस्थाविशेषः स्वतन्त्रः क्रतुत्वाद्[1] यथा पृथगनुष्ठातुं योग्यस्तथा षोडशी न स्वतन्त्रः क्रतुः । तथा च शाखान्तरे पठन्ति—'न वै षोडशी नाम यज्ञोऽस्ति; यद्वाव षोडश ̐ स्तोत्र ̐ षोडश ̐ शस्त्रं तेन षोडशी'[2] इति । तथा सत्ययं संस्थाविशेषः पृष्ठ्यषडहचतुर्थेऽहनि प्रयुज्यते । अतस्तत्रैवैतच्छंसनविधानम् । देवाः पुरा पृष्ठ्यषडहे 'प्रथमेनाह्ना' प्रथमदिवसनिष्पाद्येन सोमप्रयोगेण इन्द्रार्थं वज्रं 'समभरन्' संपादितवन्तः । अत्र सर्वत्राहः शब्दोऽह्ना निष्पाद्यं सोमप्रयोगमभिधत्ते । तत्र संपादितं वज्रं द्वितीयेनाह्ना 'असिञ्चन्' । सेचनं नाम लोहमयानां शङ्कुकुठारादीनां तीक्ष्णत्वाय दार्ढ्याय चाग्नौ प्रताप्य यथोचितं नीरे स्थापनं, तदिदं सेचनं वज्रे कृतवन्तः । कृत्वा च तृतीयेनाह्ना 'तं' वज्रमिन्द्राय 'प्रायच्छन्' दत्तवन्तः । स चेन्द्रस्तं वज्रं चतुर्थेऽहनि शत्रोरुपरि प्राहरत् । तस्मात् पृष्ठ्यषडहस्य चतुर्थाहः प्रयोगे षोळशिनं शस्त्रं शंसेत् । 'असावि सोम इन्द्र ते' इत्यादिकं[3] षोळश्याख्यं शस्त्रम् । तथा च आश्वलायन आह – 'अथ षोळश्यसावि सोम इन्द्र त इति स्तोत्रियानुरूपौ'[4] इति ॥

---

१. 'अग्निष्टोमोक्थ्यादिसंस्था संस्थाविशेषः; स्वतन्त्रः क्रतुत्वात्'—इति वा पाठः ।

२. तै० सं० ६.६.११.१ । ३. ऋ० १.८४.१—२० ।

४. आश्व० श्रौ० ६.२.१, २ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[सोमयाग]—क्रमागत

[षोळशी]—

iv. १ [xvi. १] देवों ने [पृष्ठ्यषडह के] प्रथम दिन [के सोम प्रयोग] से वज्र का संपादन किया, द्वितीय दिन [के प्रयोग] से उसको [तीक्ष्ण करने के लिए] सिंचित किया, तृतीय दिन [के प्रयोग] से उस [वज्र] को [इन्द्र को] दिया, और चौथे दिन [इन्द्र ने] उसका शत्रु पर प्रहार किया। इसलिए [पृष्ठ्यषडह के] चौथे दिन [होता] षोळशी शस्त्र का शंसन करता है।

षोळशिशंसनं प्रशंसति—

**वज्रो वा एष यत्षोळशी; तद् यच्चतुर्थेऽहन् षोळशिनं शंसति, वज्रमेव तत्प्रहरति, द्विषते भ्रातृव्याय वधं, योऽस्य स्तृत्यस्तस्मै स्तर्तवै ॥ इति ।**

षोळशिनो वज्रस्वरूपत्वाद् 'यः' पुमान् 'अस्य' यजमानस्य 'स्तृत्यः' हिंसनीयः 'तस्मै स्तर्तवै' तस्य हिंसार्थं वधहेतुं वज्रमेव भ्रातृव्याय प्रहरति ॥

जो यह षोळशी है वह वज्र है। अतः जो चौथे दिन षोळशी-शस्त्र का शंसन करता है वह वज्र का ही प्रहार करता है, जो शत्रु इस [यजमान] का हिंस्य होता है उसकी हिंसा के लिए [वज्र का ही प्रहार करता है]।

तस्य शस्त्रस्य कालं विधत्ते—

**वज्रो वै षोळशी पशव उक्थानि; तं परस्तादुक्थानां पर्यस्य शंसति ॥ इति ।**

यथा पूर्वत्राग्निष्टोमप्रयुक्तानां द्वादशशस्त्राणामुपरि त्रीण्युक्थ्यशस्त्राणि प्रयुक्तानि, तथात्रापि त्रयाणामुक्थशस्त्राणां 'परस्तात्' उपरि पर्यस्य षोळशिनमेव शंसेत् ॥

षोळशी वज्र है, उक्थ पशु हैं, उस [तीन] उक्थ शस्त्रों के ऊपर रखकर वह शंसन करता है।

उक्थानां पशुरूपत्वात् षोळशिनो वज्ररूपत्वाच्चायं क्रम उपपन्नः; तामेतामुपपत्तिं प्रकटयति—

**तं यत्परस्ताद् उक्थानां पर्यस्य शंसति, वज्रेणैव तत्षोळशिना पशून् परिगच्छति, तस्मात् पशवो वज्रेणैव षोळशिना परिगता मनुष्यानभ्युपावर्तन्ते तस्मादश्वो वा पुरुषो वा गौर्वा हस्ती वा परिगत एव स्वयमात्मनेऽत एव वाचाऽभिषिद्ध उपावर्त्तते, वज्रमेव षोळशिनं पश्यन् वज्रेणैव षोळशिना परिगतो वाग्घि वज्रो वाक्षोळशी ॥ इति ।**

'तं' षोळशिनं 'यद्' यस्मात्कारणाद् उक्थशस्त्राणां परस्तात् पर्यस्य शंसति, 'तत्' तेन शंसनेन षोळशिरूपेण वज्रेणैवोक्तरूपान् पशून् 'परिगच्छति' परितो नियमेन याति। 'तस्मात्' लोकेऽप्यरण्ये संचारार्थं गताः पशवः षोळशिना वज्रेणैव नियमितत्वात्,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सायंकाले मनुष्यान् अभिलक्ष्य तत्तद् गृहेषु उपावर्तन्ते, अन्यथा तस्मादरण्यादरण्यान्तरमेव गच्छेयुः। न केवलं तृणचरणार्थमरण्यगतानां सायंकाले पुनरागमनाय वज्ररूपेण नियमितत्वम्, किं तर्हि ग्रामेष्वपि। तस्मात् षोळशिवज्रनियमितत्वाद् अश्वपुरुषगोहस्त्यादीनामन्यतमः 'स्वयमेव' परप्रेरणामन्तरेणैव 'परिगतः' नियमितः, आत्मना स्वयं बन्धनाय तत्स्थाने समागच्छति। किं च 'अत एव' षोळशिवज्रनियमितत्वादेव 'वाचा' शीघ्रमागच्छेत्यादिवाक्येन 'अभिषिद्धः' अभितो बद्धः पुरुषो वर्तते। यथा रज्ज्वा बद्धो बलीवर्द आनीयमान आगच्छति तद्वद् वाचा बद्धः पुरुषः। अत एवारण्यकाण्डे वक्ष्यति—'तस्य वाक्तन्तिर्नामानि दामानि तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम्'[1] इति। वाङ्मात्रेणाऽऽगमने कारणमुच्यते—षोळशिनं वाग्वज्ररूपमेव पश्यन् षोळशिना वज्रेणैव नियमितो भवति, तद्द्वारा तस्य वज्रत्वम्। षोळशी च वाग्रूपैः सूक्तादिभिर्निष्पन्नत्वात् स्वयमपि वाग्रूपो भवति। वाचश्च वज्रत्वं लोके प्रसिद्धं, राजादीनां भर्त्सनादौ वज्रप्रहारेणैव चित्ते व्यथोदयात्। तदेवं सर्वनियामकत्वात् षोळशिनः प्रशस्तत्वं सिद्धम्॥

यदुक्तं 'पुरस्तादुक्थानां पर्यस्य शंसति'—इति, तत्रोक्थशस्त्रेभ्य उत्तरकालावस्थानमेव 'पर्यस्य' इति शब्देन विवक्षितमिति व्याख्यातम्, अथवोत्तरकालस्य परस्तादिति शब्देनैव सिद्धत्वात् पर्यस्येतिशब्देन शस्त्रगतानामृचामध्ययनपाठाद् विपर्यासोऽभिधीयते। द्विविधं षोळशिशस्त्रम् - विहृतमविहृतं च। तत्राविहृतं नामाध्ययनक्रमेणैव शंसनम्, विहृतं तु ऋचां परस्परव्यतिषङ्गः। स त्वाश्वलायनेन दर्शितः—'ऊर्ध्वं स्तोत्रियानुरूपाभ्यां तदेव शस्यं विहरेत् पादान् व्यवधायार्धर्चशः शंसेत् पूर्वासां पूर्वाणि पदानि, गायत्र्यः पङ्क्तिभिः, पङ्क्तीनां तु द्वे द्वे पदे शिष्येते ताभ्यां प्रणुयात्'[2] इति। तदेतदुदाहृत्य प्रदर्श्यते—'इमा धाना घृतस्नुवो हरी इहोप वक्षतः। इन्द्रं सुखतमे रथे' इत्येषा गायत्री।[3] 'सुसंदृशं त्वा वयं मघवन् वन्दिषीमहि। प्र नूनं पूर्णवन्धुरः स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरी'[4] योऽयमध्ययनपाठः सोऽविहृतः। विहृतपाठस्तूच्यते—'इमा धाना घृतस्नुवः सुसंदृशं त्वा वयम्। हरी इहोपवक्षतो मघवन् वन्दिषीमहीन्द्रं सुखतमे रथे प्र नूनं पूर्णवन्धुरः। स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरोम्' इति। अनेन प्रकारेण विपर्यस्य शंसेत्॥

उस [षोळशी] को जो उक्थों के ऊपर रखकर शंसन करता है, उससे षोळशी रूप वज्र से [उक्थ रूप] पशुओं को घेर लेता है। इसलिए पशु षोळशीरूप वज्र से ही घेरे जाकर मनुष्यों के पास लौट आते हैं। इसलिए अश्व या पुरुष या गौ या हाथी कोई भी हो वह स्वयं ही नियमित होकर अपने से ही लौट आते हैं, जब इन्हें वाणी से आबद्ध करके पुकारा जाता है। वाक् वज्र रूप षोळशी का दर्शन करते हुए ही षोळशीरूप वज्र से ही यह नियमित होता है क्योंकि वाणी वज्र है और षोळशी वाक् है।

---

१. ऐ० आ० २.१.६। २. आश्व० श्रौ० ६.३.२–६। ३. ऋ० १.१६.२। ४. ऋ० १.८२.३।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ प्रश्नोत्तराभ्यां षोळशिशब्दं निर्वक्ति—

**तदाहुः किं षोळशिनः षोळशित्वमिति? षोळशः स्तोत्राणां, षोळशः शस्त्राणां, षोळशभिरक्षरैरादत्ते, षोळशभिः प्रणौति, षोळशपदां निविदं दधाति, तत्षोळशिनः षोळशित्वम् ॥** इति ।

षोळशिशब्दो ग्रहविशेषं स्तोत्रविशेषं शस्त्रविशेषं चाभिधत्ते[1] । तेषामेकैकस्वरूपवताम् । षोळशिशब्दवाच्यत्वमयुक्तम् । तच्छब्दप्रवृत्तौ निमित्तान्तरं तु न पश्याम इति ब्रह्मवादिनामभिप्रायः । षोडशसंख्यायुक्तत्वात् षोळशित्वमित्युत्तरम् । तत्र कथमिति, तदुच्यते— अग्निष्टोमसंस्थो ज्योतिष्टोमः द्वादशस्तोत्रोपेतः । तथा च शाखान्तरे श्रूयते—'द्वादशाग्निष्टोमस्य स्तोत्राणि'[2] इति । तद्गर्भित उक्थ्यसंस्थस्त्रिभिः स्तोत्रैरतिरिच्यते । तस्मात् पञ्चदश स्तोत्राणि भवन्ति । तद्गर्भितः षोळशिसंस्थ एकेन स्तोत्रेणातिरिच्यते; ततः स्तोत्राणां मध्य एतत्स्तोत्रप्रयोगः षोडशसंख्यापूरको भवति । तथा शस्त्राणां मध्येऽप्येतच्छस्त्रप्रयोगः षोडशसंख्यापूरकः । किं चास्मिञ्छस्त्रे होत्रा संपादिताया अनुष्टुभः पूर्वार्धगतानि षोडशाक्षराण्युच्चार्य अवस्यति, उत्तरार्धगतानि षोडशाक्षराण्युच्चार्य 'प्रणौति' प्रणवमुच्चारयति । किं च 'अस्य मदे जरितः' इत्यादिका षोडशपदोपेता निवित्[3] शस्त्रमध्ये प्रक्षिप्यते । अतो बहुधा षोडशसंख्यायोगाद् अयं प्रयोगः षोळशिनामोपेतः ॥

कुछ लोग प्रश्न करते हैं कि षोळशी का 'षोळशी' नाम क्यों पड़ा? वस्तुतः स्तोत्र सोलह होते हैं, शस्त्र सोलह होते हैं, [इस शस्त्र में होता द्वारा प्रतिपादित अनुष्टुभ् के पूर्वार्धगत] सोलह अक्षरों पर ही अवसान करता है और [उत्तरार्धगत] सोलह अक्षरों के प्रणव का उच्चारण करता है। शस्त्र में सोलह पद युक्त निवित् का प्रक्षेप किया जाता है। इसीलिए [बहुत प्रकार से सोलह संख्या युक्त होने से] इसका 'षोळशी' नाम हुआ।

प्रकारान्तरेण षोळशिनं प्रशंसति —

**द्वे वा अक्षरे अतिरिच्येते षोळशिनोऽनुष्टुभमभिसंपन्नस्य वाचो वाव तौ स्तनौ, सत्यानृते वाव ते ॥** इति ।

योऽयं षोळशी, सोऽयं द्व्यक्षराधिकामनुष्टुभं यदा संप्राप्तो भवति, तदानीं द्वे एवाक्षरे अधिके भवतः । तथा हि सूत्रकारः—'विहृतस्य' इत्युपक्रम्य शाखान्तरीया 'इन्द्र जुषस्व' इत्यादिका ऋचः पठितवान् ।[4] तस्याः पूर्वस्मिन्नर्धर्चे षोडशाक्षराणि, उत्तरार्धर्चेऽष्टादश; ततोऽक्षरद्वयाधिक्यम् । 'वाग्वा अनुष्टुप्'[5] इति श्रुत्यन्तरे सा वाचोऽनुष्टुबवयवत्वात् तदात्मि-

१. 'एतत् त्रयं सह क्रियते ग्रहः स्तोत्रं शस्त्रम्'—इति शत० ब्रा० ८.१.३४ ।
२. तै० ब्रा० १.२.२ । तु० ता० ब्रा० ६.३.३ । ३. निवि० ११.१–१६ ।
४. आश्व० श्रौ० ६.३.१ । ५. तै० सं० ६.६.११; तु० ऐ० ब्रा० ३०.१० ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

काया वाग्देवतायाः स्त्रीरूपाया अधिकाक्षररूपौ 'स्तनौ' संपद्येते; यदेतत् लोके सत्यवदनं, यच्चानृतवदनं, तदुभयमपि वाचः स्तनरूपम्; अतोऽधिकाक्षरायाः सत्यानृतरूपत्वम् ॥

दो अक्षर बढ़ जाते हैं क्योंकि षोळशी के अनुष्टुभ ['इन्द्र जुषस्व' के उत्तरार्ध में १८ अक्षर] में ये वाणी रूप वाक् देवता के दो स्तन हैं। ये सच और झूठ हैं।

उक्तार्थवेदनं प्रशंसति—

**अवत्येनं सत्यं नैनमनृतं हिनस्ति य एवं वेद ॥ १ ॥** इति।

'एनं' वेदितारं सत्यवाक् पालयति, सुकृतोत्पादकत्वात्। अनृतवाक् न हिनस्ति, दुरितस्यानुदयात् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां प्रथमाध्याये (षोडशाध्याये) प्रथमः खण्डः ॥१॥ [१२२]

जो इस प्रकार जानता है सत्य वाणी उसका पालन करती है और अनृत-वाक् उसे हानि नहीं पहुँचाती है।

॥ इस प्रकार सोलहवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

षोळशिशस्त्रं विधाय षोळशिस्तोत्रनिष्पादकं सामविशेषं विधत्ते—

**गौरिवीतं षोळशिसाम कुर्वीत तेजस्कामो ब्रह्मवर्चसकामस्तेजो वै ब्रह्मवर्चसं गौरिवीतं, तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् गौरिवीतं षोळशिसाम कुरुते ॥** इति।

केनचिन्महर्षिणा गौरिवीतनाम्ना दृष्टत्वात् सामापि गौरिवीतनामकम्। तत्तु 'अभि प्र गोपतिं गिरा' इत्यस्यामृच्युत्पन्नं[1], तदत्र षोळशिस्तोत्रे साम कुर्वीत।[2] 'तेजः' शरीरकान्तिः। 'ब्रह्मवर्चसं' श्रुताध्ययनसंपत्तिः ॥

iv. २ [xvi. २] तेज और ब्रह्मवर्चस की कामना वाले को षोळशी में गौरिवीत साम का पाठ करना चाहिए। गौरिवीत साम तेज और ब्रह्मवर्चस है; अतः जो इस प्रकार जानते हुए गौरिवीत साम का षोळशी में प्रयोग करता है वह तेजस्वी एवं ब्रह्मवर्चस्वी हो जाता है।

---

१. ऋ० ८.६९.४। छ० आ० २.२.३.४; गे० गा० ५.१.२०।
२. उ० आ० ३.१.२२ १–३; ऊ० गा० ३ १.२; ता० ब्रा० १२.१३.९।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सामान्तरं विधत्ते—

**नानदं षोळशिसाम कर्तव्यमित्याहुरिन्द्रो वै वृत्राय वज्रमुदयच्छत्; तमस्मै प्राहरत्, तमभ्यहनत्, सोऽभिहतो व्यनदत्, यद् व्यनदत् तन्नानदं सामाभवत् तन्नानदस्य नानदत्वम्; अभ्रातृव्यं वा एतद् भ्रातृव्यहा साम यन्नानदम् ॥** इति ।

नानदाख्यं किंचित्साम; तत्तु 'प्रत्यस्मै पिपीषते' इत्यस्यामृच्युत्पन्नं[1]; तदेतत्साम षोळशिस्तोत्रे[2] कर्तव्यमित्यन्ते केचिदाहुः ।[3] तस्य नानदत्वं कथमिति, तदुच्यते—वज्र-प्रहारेणाभिहतो वृत्रो 'व्यनदद्' विशिष्टमुच्चैर्ध्वनिं नादं कृतवान् । स च ध्वनिर्नानदसामा-कारेण संपन्नः । ततो नानदो पन्नत्वान्नानदमिति नाम । तत्साम भ्रातृव्यरहितम्—तत्परि-शीलनवन्तः सर्वेपि मैत्रीमेव प्रतिपद्यन्ते, न तु कश्चिदपि द्वेषम् । किं चैतत्साम 'भ्रातृव्यहा' पूर्वं विद्यमानस्य शत्रोर्घातकम् ॥

'षोळशी-स्तोत्र में नानदाख्य साम का प्रयोग करना चाहिए'—कुछ लोग ऐसा कहते हैं । इन्द्र ने वृत्र के लिए वज्र उठाया, और उसको उस पर फेंका, उसको उसने घायल कर दिया और घायल होकर उसने बड़े जोर की आवाज की । जो उसने तीव्र नाद किया उसी से नानद-साम हुआ । यही नानद नाम का कारण है । जो यह नानद साम है उसे शत्रु का भय नहीं; क्योंकि यह शत्रु को मारने वाला है ।

वेदनं प्रशंसति—

**अभ्रातृव्यो भ्रातृव्यहा भवति य एवं विद्वान्नानदं षोळशिसाम कुरुते ॥** इति ।

जो इस प्रकार जानते हुए षोळशी में नानद साम का प्रयोग करता है उसका शत्रु विनष्ट हो जाता है और वह शत्रुरहित हो जाता है ।

गौरिवीतं नानदं वा सामेत्येवं पक्षद्वयं संपन्नम्[4] । तयोः पक्षयोः शस्त्रविशेष-व्यवस्थां विधत्ते—

**तद् यदि नानदं कुर्युरविहृतः षोळशी शंस्तव्योऽविहृतासु हि तासु स्तुवते; यदि गौरिवीतं विहृतः षोळशी शंस्तव्यो विहृतासु हि तासु स्तुवते ॥** इति ।

अविहृतरूपः परस्परव्यतिषङ्गरहितो यथाधीतपाठः; सोऽयं नानदपक्षे कर्तव्यः । यतः सामगा अपि 'अविहृतासु' व्यतिषङ्गरहितास्वृक्षु नानदसाम्ना स्तुवते, तस्मादविहृत-

---

१. छ० आ० ४.२.२.१ । गे० गा० ९.२.१३ ।
२. उ० आ० १.१.१८.१–३ । ऊ० गा २.२.१८ ।
३. 'गोपालपुत्र उपोदितिर्नाम ऋषिरुवाच'—इति ता० ब्रा० १२.१३.११ सा० भा० ।
४. 'देशभेदेन चानयोर्व्यवस्थेत्यपि ज्ञापिता'—ता० ब्रा० १२.१३.११ सा० भा० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वमेवात्र योग्यम् । 'यथा वाव स्तोत्रमेवं शस्त्रम्'—इति न्यायात् । गौरिवीतपक्षे शस्त्रमपि परस्परव्यतिषङ्गेण विहृतं पठनीयम्, सामगैः 'विहृतासु' व्यतिषक्तास्वृक्षु गौरिवीतसाम्ना स्तूयमानत्वात् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां प्रथमाध्याये (षोडशाध्याये) द्वितीयः खण्डः ॥२॥ [१२३]

उन [दोनों] में, यदि नानद साम का प्रयोग करे तो षोळशी को अविहृतरूप से अर्थात् जैसे पढ़ा है वैसे ही पढ़ना चाहिए [अर्थात् एक मन्त्र के पद दूसरे मन्त्र के पद से न मिलकर व्यतिषङ्गरहित हों]; क्योंकि सामगान करने वालों के द्वारा वे व्यतिषङ्गरहित स्तुत होते हैं; और यदि गौरिवीत-साम का प्रयोग करे तो षोळशी को विहृतरूप से परस्पर व्यतिषङ्ग करके पढ़ना चाहिए; क्योंकि सामगान करने वालों के द्वारा वे ऋचाएँ परस्पर व्यतिषङ्ग करके स्तुत होती हैं।

॥ इस प्रकार सोलहवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

अथ विरहणप्रकारं विधत्ते—

**अथातश्छन्दांस्येव व्यतिषजति; 'आ त्वा वहन्तु हरय', 'उपो षु शृणुही गिर' इति गायत्रीश्च पङ्क्तीश्च व्यतिषजति, गायत्रो वै पुरुषः, पाङ्क्ताः पशवः, पुरुषमेव तत्पशुभिर्व्यतिषजति, पशुषु प्रतिष्ठापयति, यदु गायत्री च पङ्क्तिश्च ते द्वे अनुष्टुभौ, तेनो वाचो रूपादनुष्टुभो रूपाद् वज्ररूपान्नैति ॥ इति ।**

'अथ' सामद्वयविधानानन्तरम् 'अतः' गौरिवीतपक्षे विहृतस्यापेक्षितत्वात् तदुच्यत इति शेषः । स्वस्वस्थानाद् विभज्यान्यत्र नयनं 'विहरणम्' । तच्च समानच्छन्दस्कयोरेव भवति, तद व्यावृत्त्यर्थमुच्यते—'छन्दांस्येव व्यतिषजति'—इति । परस्प विलक्षणानि च्छन्दांस्येव व्यतिषक्तानि कुर्युरिति । तत्र कस्य च्छन्दसः केन छन्दसा सह व्यतिषङ्ग इति, तदेतदुदाहरणपूर्वकं प्रदर्श्यते—'आ त्वा वहन्तु'[1]—इत्यादिकास्तिस्र ऋचः गायत्रीछन्दस्काः, 'उपोषु'[2]—इत्येका 'सुसंदृशम्'[3]—इति द्वे; एतास्तिस्रः पङ्क्तिच्छन्दस्काः, ता उभयीः परस्परं व्यतिषजन् मिश्रयेत् । गायत्र्याः प्रथमपादमुक्त्वा तेन सह पङ्क्तेः प्रथमपादमुच्चारयेत् । सोऽयं प्रकारोऽस्माभिः पूर्वमेवोदाहृतः[4] । लोके 'पुरुषो गायत्रः' उपनीतेन गायत्र्या अनुष्ठेयत्वात्, 'पशवश्च पाङ्क्ताः' चतुर्भिः पादैर्मुखेन च पञ्चसंख्योपेतत्वात् ।

---

१. ऋ० १.१६.१-३ । २. ऋ० १.८२.१ । ३. ऋ० १.८२.३, ४ ।
४. द्र० इतः पूर्वम् ५७५ पृष्ठे ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्र गायत्रीपङ्क्त्योर्मेलनेन पुरुषस्य पशूनां च मेलनं भवति । अतः पुरुषं पशुषु प्रतिष्ठापयति । किं च यद्रूपेणैव कारणेन गायत्री च पङ्क्तिश्च मिलिते सत्येते द्वे अनुष्टुभौ संपद्येते । गायत्र्यास्त्रिपादत्वात्, पङ्क्तेश्च पञ्चपादत्वात्, मिलित्वाऽष्टानां पादानां विद्यमानत्वात् 'तेनो' तेनैव मेलनेन कारणेनायं पुरुषो वाग्रूपादनुष्टुब् रूपाद् वज्ररूपाच्च 'नैति' कदाचिदपि वियुक्तो न भवति । शस्त्रस्याक्षरात्मकत्वेन वाग्रूपत्वम्, अष्टपादसंपत्तावनुष्टुब्द्वयरूपत्वम्, षोडशिनः पश्वादिनियामकत्वेन वज्ररूपत्वम्, अतो नास्ति त्रिविधवियोगम् ॥

iv. ३ [xvi. ३] इसके बाद यदि [गौरिवीत साम का] होता पाठ करता है तो छन्दों को भी परस्पर मिला-जुला देता है। जैसे 'आ त्वा वहन्तु हरयः' आदि तीन ऋचाएँ और 'उपो षु शृणुही गिरः' आदि इन गायत्री और पंक्ति छन्दस्क ऋचाओं को परस्पर मिला देता है। पुरुष गायत्री है और पशु पङ्क्ति है। इस प्रकार वह उससे पुरुष को ही पशुओं से मिलाता है और उनको पशुओं में प्रतिष्ठित करता है। जो गायत्री और पंक्ति हैं वे दो अनुष्टुभ् हैं। इस प्रकार उस [मिश्रण] से यजमान वाणी रूप से, अनुष्टुभ् रूप से और वज्ररूप से वियुक्त नहीं होता।

छन्दोन्तरयोर्विहरणं विधत्ते—

'यदिन्द्र पृतनाज्ये' 'अयं ते अस्तु हर्यतः' इत्युष्णिहश्च बृहतीश्च व्यतिषजत्यौष्णिहो वै पुरुषो, बार्हताः पशवः, पुरुषमेव तत्पशुभिर्व्यतिषजति, पशुषु प्रतिष्ठापयति; यदुष्णिक् च बृहती च ते द्वे अनुष्टुभौ, तेनो वाचो रूपादनुष्टुभो रूपाद् वज्ररूपान्नैति ॥ इति ।

'यदिन्द्र'[1] इत्यादिकास्तिस्र उष्णिक्छन्दका ऋचः, 'अयं ते अस्तु'[2]—इत्यादिकास्तिस्रो बृहतीछन्दस्काः । उपनीतः पुरुषो व्याहृत्यक्षरचतुष्टयोपेतां चतुर्विंशत्यक्षरां गायत्रीं व्यतिषजति, उष्णिक् चाष्टाविंशत्यक्षरा; ततः पुरुषस्यौष्णिहत्वम्, पशूनां बार्हतत्वं शाखान्तरे श्रुतम्—'छन्दांसि पशुष्वाजिमयुस्तान् बृहत्युदजयत्, तस्माद् बार्हताः पशव उच्यन्ते'[3] इति । बृहती च षट्त्रिंशदक्षरा, तस्या उष्णिग्योगे सति चतुःषष्ट्यक्षरसंपत्तेरनुष्टुब्द्वयम् ॥

'यदिन्द्र पृतनाज्ये' और 'अयं ते अस्तु हर्यतः' आदि उष्णिक् और बृहती छन्दस्क ऋचाओं को मिलाता है। पुरुष उष्णिक् हैं और पशु बृहती हैं। इस प्रकार वह उससे पुरुष को ही पशुओं से मिलाता है और उनको पशुओं में प्रतिष्ठित करता है; जो उष्णिक् और बृहती हैं वे दो अनुष्टुभ हैं। इस प्रकार उस [मिश्रण] से यजमान वाणी रूप से, अनुष्टुभ रूप से और वज्ररूप से वियुक्त नहीं होता।

---

१. ऋ० ८.१२.२५–२७ । २. ऋ० ३.४४.१–३ ।
३. तै० सं० ५.३.२.३ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

छन्दोन्तरयोर्विहरणं विधत्ते --

**'आ धूर्ष्वस्मै' 'ब्रह्मन् वीर ब्रह्मकृतिं जुषाण' इति द्विपदां च त्रिष्टुभं च व्यतिषजति; द्विपाद् वै पुरुषो वीर्यं त्रिष्टुप्, पुरुषमेव तद्वीर्येण व्यतिषजति, वीर्ये प्रतिष्ठापयति, तस्मात् पुरुषो वीर्ये प्रतिष्ठितः सर्वेषां पशूनां वीर्यवत्तमो यदु द्विपदा च विंशत्यक्षरा त्रिष्टुप् च,ते द्वे अनुष्टुभौ, तेनो वाचोरूपाद् अनुष्टुभोरूपाद् वज्ररूपान्नैति ॥ इति ।**

'आ धूर्ष्वस्मै'[1] इत्येषा पादद्वयोपेता, 'ब्रह्मन् वीर' -इत्येषा त्रिष्टुप्छन्दस्का; पुरुषस्य द्विपात्त्वं प्रसिद्धम्, त्रिष्टुभो वीर्यहेतुत्वाद् वीर्यत्वं, तस्मादुभयमेलनेन पुरुषं वीर्ये प्रतिष्ठापयति । तस्माल्लोकेऽपि सर्वेषां द्विपदां चतुष्पदानां पशूनां मध्ये पुरुषस्य शक्त्याधिक्यात् पुरुषो वीर्ये प्रतिष्ठितः । द्विपदा चेयं विंशत्यक्षरा; अष्टाक्षरे प्रथमे पादे संयुक्ताक्षरयोर्विभागेन पञ्चाक्षरत्वे सति दशसंख्यापूर्तेः । एवं पञ्चाक्षरैस्त्रिष्टुभश्चतुर्णां पदानां संधानम् । त्रिष्टुप्चतुःचत्वारिंशदक्षरा । मिलित्वा चतुःषष्टिसंपत्त्याऽनुष्टुब्द्वयं संभवति ॥

'आ धूर्ष्वस्मै' और 'ब्रह्मन् वीर ब्रह्मकृतिं जुषाण' आदि द्विपदा और त्रिष्टुप् छन्दस्क ऋचाओं को परस्पर मिलाता है। पुरुष द्विपाद हैं और वीर्य त्रिष्टुप् हैं। इस प्रकार वह उससे पुरुष को ही वीर्य से मिलाता है; और उसे वीर्य में प्रतिष्ठित करता है। इसलिए सभी प्राणियों के मध्य पुरुष अधिक शक्तिशाली होने से वीर्य में प्रतिष्ठित है। जो बीस अक्षरों की द्विपदा और त्रिष्टुप् हैं, वे दो अनुष्टुभ हैं। इस प्रकार उस [मेल] से ही यजमान वाणी रूप से, अनुष्टुभ रूप से और वज्ररूप से वियुक्त नहीं होता।

छन्दोन्तरयोर्विहरणं विधत्ते—

**'एष ब्रह्मा', 'प्र ते महे विदथे शंसिषं हरी' इति द्विपदाश्च जगतीश्च व्यतिषजति; द्विपाद् वै पुरुषो जागताः पशवः, पुरुषमेव तत् पशुभिर्व्यतिषजति, पशुषु प्रतिष्ठापयति; तस्मात् पुरुषः पशुषु प्रतिष्ठितः, अत्ति चैनान् अधि च तिष्ठति, वशे चास्य; यदु द्विपदा च षोळशाक्षरा जगती च, ते द्वे अनुष्टुभौ, तेनो वाचो रूपादनुष्टुभो रूपाद् वज्ररूपान्नैति ॥ इति ।**

'एष ब्रह्मा'[3] इत्यादिकास्तिस्रो द्विपदाः, 'प्र ते महे'[4] इत्यादिकास्तिस्रो जगत्यः । पशूनां जागतत्वं शाखान्तरे सोमाहरणकथायां श्रूयते—'सा पशुभिश्च दीक्षया चागच्छत् तस्माज्जगती छन्दसां पशव्यतमा'[5] इति । यस्मान्मेलनेन पुरुषं पशुषु प्रतिष्ठापयति, तस्मादयं पुरुषः पशुषु प्रतिष्ठितः, तस्मिन् क्षीरादिकमत्ति च, 'ऐनान्' पशून् 'अधितिष्ठति'

---

१. ऋ० ७.३४.४ । २. ऋ० ७ २९.२ ।
३. साम० १.४३८, २.११११८ । तै० ब्रा० ३.७.९.५ । आश्व० श्रौ० ६.२.६ ।
४. ऋ० १०.९६;१–३ । ५. तै० सं० ६.१ ६.२ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नियमयति च; तस्माद् 'अस्य' पुरुषस्य वशे सर्वे पशवो वर्तन्ते। 'यदु' यस्मादेव कारणादियं द्विपदा षोडशाक्षरा, जगति चाष्टाचत्वारिंशदक्षरा, ततो मिलित्वा चतुःषष्टित्वादनुष्टुब्द्वयत्वम् ॥

'एष ब्रह्मा' और 'प्र ते महे विदथे शंसिषं हरी' आदि द्विपदा और जगती को परस्पर मिलाता है। पुरुष द्विपद हैं और पशु जगती हैं। इस प्रकार वह उससे पुरुष को ही पशुओं से मिलाता है और उनको पशुओं में प्रतिष्ठित करता है। इसलिए पुरुष पशुओं में प्रतिष्ठित हो, उससे दुग्ध आदि भक्षण करता है; और इन पशुओं का नियमन भी करता है। इसलिए इस [पुरुष] के वश में सभी पशु होते हैं। जो सोलह अक्षरों की द्विपदा और जगती है, वे दो अनुष्टुभ हैं। इस प्रकार उस [मिश्रण] से यजमान वाणी रूप से, अनुष्टुभ रूप से और वज्ररूप से अलग नहीं होता।

छन्दोऽन्तरसंयुक्ताः काश्चिदृचो विधत्ते —

**'त्रिकद्रुकेषु महिषो यवाशिरम्', 'प्रो ष्वस्मै पुरोरथम्' इत्यतिच्छन्दसः शंसति, छन्दसां वै यो रसोऽत्यक्षरत्, सोऽतिच्छन्दसमभ्यत्यक्षरत्, तदतिच्छन्दसोऽतिच्छन्दस्त्वं, सर्वेभ्यो वा एष छन्दोभ्यः संनिर्मितो यत्षोळशी, तद्यदतिच्छन्दसः शंसति, सर्वेभ्य एवैनं तच्छन्दोभ्यः संनिर्मिमीते ॥** इति।

'त्रिकद्रुकेषु'[1] इति तृचे यास्तिस्र ऋचः, ता अतिच्छन्दोयुक्ताः, तथा 'प्रो ष्वस्मै'[2] इति तृचो ऽपि; ता उभयोः शंसेत्। 'छन्दसां' गायत्र्यादीनां यो 'रसः' सारः 'अत्यक्षरद्' अतिशयेन स्रवत्, तदानीं स रसोऽतिच्छन्दसमभिलक्ष्यातिशयेनास्रवत्। 'तत्' तस्माच्छन्दोरसस्यातिशयेन स्रवणादतिच्छन्दस्त्वं नाम संपन्नम्। षोडशी चोक्तप्रकारेण सर्वेभ्यः छन्दोभ्यः सम्यङ्निर्मितः, तस्मादतिच्छन्दसां शंसनेनायं होता 'एनं' यजमानं सर्वेच्छन्दोभ्यो निर्मिमीते ॥

'त्रिकद्रुकेषु' और 'प्रो ष्वस्मै' इत्यादि अतिच्छन्दस्क ऋचाओं का शंसन करता है। छन्दों में से जो रस बहा [=अत्यक्षरत्] वह अतिच्छन्दों में चला गया। इसीलिए उसका [अतिशय स्रवण के कारण] 'अतिच्छन्द' नाम पड़ा। जो यह षोळशी है वह इस प्रकार सभी छन्दों से निर्मित है। इसलिए जो वह अतिच्छन्दस्क ऋचाओं का शंसन करता है, उससे यह होता इस [यजमान] को सभी छन्दों से सम्यक् रूप से निर्मित करता है अर्थात् युक्त करता है।

वेदनं प्रशंसति—

**सर्वेभ्यश्छन्दोभ्यः संनिर्मितेन षोळशिना राध्नोति य एवं वेद ॥ ३ ॥** इति।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां प्रथमाध्याये (षोडशाध्याये) तृतीयः खण्डः ॥ ३ ॥ [ १२४ ]

---

१. ऋ० २.२२.१–३। २. ऋ० १०.१३३.१–३।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जो इस प्रकार जानता है वह सभी छन्दों के द्वारा सम्यक् रूप से निर्मित षोळशी के द्वारा समृद्धि को प्राप्त करता है।

॥ इस प्रकार सोलहवें अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

अथ पूर्वोक्तानामतिच्छन्दसामनुष्टुप्संपादनाय मेलनं विधत्ते—

**महानाम्नीनामुपसर्गानुपसृजति ॥ इति ।**

'विदा मघवन्'—इत्यस्मिन्ननुवाके प्रोक्ता ऋचो 'महानाम्न्यः'[1]; तासां सम्बन्धिन उपसर्गाः पञ्चविधाः। ते च आश्वलायनेन दर्शिताः—'प्र चेतन, प्र चेतया, आयाहि पिब मत्स्व, क्रतुश्छन्द ऋतं बृहत्, सुम्न आधेहि नो वसवित्यनुष्टुप्'[2] इति। तत्र 'प्र चेतन'-इत्येकः प्रथम उपसर्गः', 'प्र चेतय'-इति द्वितीयः, तावुभावपि द्वितीयस्यां महानाम्न्यामाम्नातौ 'आयाहि पिब मत्स्व'—इति तृतीय उपसर्गः, तृतीयस्यां महानाम्न्यामाम्नातः। 'क्रतुश्छन्द ऋतं बृहद्'—इत्ययं चतुर्थ उपसर्गः; स च षष्ठयां महानाम्न्यामाम्नातः। 'सुम्न आ धेहि नो वसविति' पञ्चम उपसर्गः; स चाष्टम्यां महानाम्न्यामाम्नातः। एतेषु पञ्चसूपसर्गेषु मिलित्वा द्वात्रिंशदक्षरसद्भावाद् इयमेकाऽनुष्टुबिति सूत्रस्यार्थः। इयं चानुष्टुबविहृतषोळशिनि तथैव पठनीया, अन्यत्र तु विहृतषोळशिनि पञ्चाप्युपसर्गान् विभज्यातिच्छन्दःसु पञ्चसु योजनीयाः। अत एवोपसृज्यमानत्वाद् उपसर्गा इत्युच्यन्ते। तदेतत्संयोजनमत्र 'उपसृजति' इति शब्देन विधीयते। 'त्रिकद्रुकेषु'—इति येयं प्रथमाऽतिच्छन्दाः तस्याश्चतुःषष्टचक्षरत्वात् न पराण्यपेक्षते सेयमनुष्टुब्द्वयसंपत्तिः शक्येति। द्वितीयस्यामृचि तदनुष्टुब्द्वयं पूरयितुं 'प्र चेतन'—इत्यक्षरचतुष्टयं योजनीयम्, तृतीयस्यामृचि 'प्रचेतय'—इति योजनीयम्। 'प्रो ष्वस्मै'—इत्यादिषु तिसृषु अवशिष्टास्त्रय उपसर्गाः क्रमेण योजनीयाः। सोऽयं प्रकार आश्वलायनेनोक्तः—'साऽनुष्टुभमतिच्छन्दःस्ववदध्याद्, द्वितीयतृतीययोः पादयोरवसानत उपदध्यात्, प्र चेतनेति पूर्वस्यां, प्रचेतयेत्युत्तरस्याम्, उत्तरास्वितरान् पादान् षष्ठान् कृत्वाऽनुष्टुप्कारं शंसेत्'[3] इति ॥

iv. ४ [xvi. ४] [ऐ० आरण्यक में उक्त] महानाम्नी मन्त्रों से उपसर्गों को [जो विभिन्न ऋचाओं के पाँच खण्ड है १. प्रचेतन, २. प्रचेतया, ३. आयाहि पिबमत्स्व, ४. क्रतुश्चछन्द ऋतं बृहत् और ५. सुम्न आधेहि नो वसौ। सब मिलकर ३२ अक्षर होने से यह एक अनुष्टुभ हो जाता है। इन्हें कभी अविहृत अर्थात् लगातार बोलते हैं और कभी विहृत पाठ करना होता है तो विभक्त करके अतिच्छन्दों में] जोड़ते हैं।

---

१. ऐ० आर० ४.१.१–९।　　२. आश्व० श्रौ० ६.२.९।

३. अश्व० श्रौ० ६.३.११, १२।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ महानाम्नीः प्रशंसति—

**अयं वै लोकः प्रथमा महानाम्न्यन्तरिक्षलोको द्वितीयाऽसौ लोकस्तृतीया, सर्वेभ्यो वा एष लोकेभ्यः संनिर्मितो यत्षोळशी, तद् यन्महानाम्नीनामुपसर्गानुपसृजति, सर्वेभ्य एवैनं तल्लोकेभ्यः संनिर्मिमीते ॥ इति ।**

प्रथमत्वादिमाम्येन लोकत्रयरूपत्वं तृचानां द्रष्टव्यं, षोडशिनो लोकत्रये निर्मितत्वात् । महानाम्नीनामुपसर्गैः संयोजने सति तन्निर्माणं सिध्यति ॥

प्रथम महानाम्नी यह [भूः] लोक है, द्वितीय अन्तरिक्षलोक है और यह [स्वर्ग] लोक तृतीय है। जो यह षोळशी है, वह इस प्रकार सभी लोकों से निर्मित है। इसलिए वह जो महानाम्नी मन्त्रों से उपसर्गों को संयोजित करता है, उससे यह होता इस [यजमान] को सभी लोकों से सम्यक् रूप से युक्त करता है।

वेदन प्रशंसति—

**सर्वेभ्यो लोकेभ्यः संनिर्मितेन षोळशिना राध्नोति य एवं वेद ॥ इति ।**

जो इस प्रकार जानता है वह सभी लोकों के द्वारा सम्यक् रूप से निर्मित षोळशी के द्वारा समृद्धि को प्राप्त करता है।

अथ विहरणनैरपेक्ष्येणाध्यापकैः प्रज्ञाताः नवानुष्टुभो विधत्ते—

**प्रप्र वस्त्रिष्टुभमिषमर्चत प्रार्चत, यो व्यतीरँफाणयदिति प्रज्ञाता अनुष्टुभः शंसति, तद् यथेह चेह चापथेन चरित्वा पन्थानं पर्यवेयात् तादृक् तद् यत्प्रज्ञाता अनुष्टुभः शंसति ॥ इति ।**

'प्रप्र वः'[1] इत्येकस्तृचः प्रथमः 'अर्चत'[2]—इति द्वितीयः, 'यो व्यतीन्'[3]—इति तृतीयः। यथा लोके कश्चिन्मार्गानभिज्ञः तत्र केनचिदपथेन चरित्वा पश्चादन्यमुखेन विज्ञाय समीचीनं पन्थानं परिगच्छेत्, एवमत्रापि पूर्वोक्तरीत्या कृत्रिमा अनुष्टुभः शस्त्वा पश्चादेतासां स्वतःसिद्धानामनुष्टुभां शंसनं द्रष्टव्यम् ॥

**'प्रप्र वस्त्रिष्टुभम्', 'अर्चत प्रार्चत' और 'यो व्यतीरँफाणयत्' इत्यादि प्रज्ञात [कृत्रिम नहीं अपितु स्वयंसिद्ध] अनुष्टुभ ऋचाओं का शंसन करता है। जो प्रज्ञात अनुष्टुभ का शंसन करता है वह उसी प्रकार है जैसे कोई मार्ग से अनभिज्ञ अन्य मार्गों पर भ्रमण करके पुनः [दूसरे के मुख से मार्ग जानकर] ठीक मार्ग पर आ जाय।**

---

१. ऋ० ८.६९.१–३। २. ऋ० ८.६९.८–१०।
३. ऋ० ८.६९.१३–१५।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पूर्वत्र सामविशेषमुपजीव्य विहृताविहृतयोः शस्त्रविशेषयोर्व्यवस्था दर्शिता। इदानीं पुरुषविशेषमुपजीव्य तां व्यवस्थां दर्शयति—

**स यो व्याप्तो गतश्रीरिव मन्येताविहृतं षोळशिनं शंसयेन्नेच्छन्दसां कृच्छ्रादवपद्या इत्यथ यः पाप्मानमपजिघांसुः स्याद् विहृतं षोळशिनं शंसयेद्, व्यतिषक्त इव वै पुरुषः पाप्मना व्यतिषक्तमेवास्मै तत्पाप्मानं शमलमपहन्ति ।। इति ।**

'सः' लोकप्रसिद्धः, यः पुरुषः पुत्रपौत्रादिभिः व्याप्तो 'गतश्रीरिव' प्राप्तश्रीवत् समृद्धधन एवाहमिति मन्येत, स पुमान् 'अविहृतं' विहरणरहितं षोळशिनं 'शंसयेत्' अविहृते शस्त्रे होतारं प्रेरयेत्। तस्य कोऽभिप्राय ? इति स उच्यते—'छन्दसां कृच्छ्रात्' पूर्वोक्तानां गायत्र्यादीनां विहरणक्लेशात् 'अवपद्यै', अवपत्तिमापदं प्राप्नुयां तन्मा भूदिति विहरणप्रयुक्तिभीतिद्योतनार्थो 'नेत्'—इति शब्दः। 'अथ यः' पुमान् पुत्रधनराहित्यरूप 'पाप्मानम्' 'अपजिघांसुः' अपहन्तुमिच्छन् स्यात् स पुमान् विहृते शस्त्रे होतारं प्रेरयेत्। अयं पुरुषो दारिद्र्यादिरूपेण 'पाप्मना' 'व्यतिषक्त इव वै' मिश्रित एव। तस्माद् विहृतप्रयोगेण पापरूपं 'शमलं' मालिन्यहेतुं 'व्यतिषक्तं' दारिद्र्यादिसम्बद्धमपहन्ति ।।

वह पुरुष जो [पुत्रपौत्रादि से] व्याप्त होकर अपने को श्रीसम्पन्न अर्थात् समृद्ध समझे वह होता से षोळशी का अविहृत ही शंसन कराए, जिससे छन्दों के विहृत करने से उसकी हुई क्षति में वह न पड़े; और जो [पुत्र-धनविहीन] पाप को नष्ट करने की कामना करे, वह होता से षोळशी का विहृत ही पाठ कराए। वस्तुतः यह पुरुष [दारिद्र्यरूप] पाप से मिश्रित ही है। इसलिए उस [विहृत प्रयोग] से पापरूप मालिन्य को समाप्त कर देता है।

वेदनं प्रशंसति—

**अप पाप्मानं हते य एवं वेद ।।** इति ।

जो इस प्रकार जानता है वह पाप से छूट जाता है।

अथ शस्त्रसमापनीयां कांचिद् ऋचं विधत्ते—

**'उद्यद् ब्रध्नस्य विष्टपम्' इत्युत्तमया परिदधाति, स्वर्गो वै लोको ब्रध्नस्य विष्टपं, स्वर्गमेव तल्लोकं यजमानं गमयति ।। इति ।**

अस्यामृचि 'ब्रध्नस्य विष्टपम्'[1]—इति श्रूयते,—आदित्यो 'ब्रध्न' शब्दवाच्यः, 'असौ वा आदित्यो ब्रध्नः' इति श्रुत्यन्तरात्[2]। तस्य 'विष्टपं' स्थानं स्वर्गलोकः, अतः तत्पाठेन यजमानं स्वर्गं प्रापयति ।।

---

१. ऋ० ८.६९.७। २. तै० सं० ५.३.३.५।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'उद्यद् ब्रध्नस्य विष्टपम्' इस अन्तिम ऋचा से कर्म का समापन करता है। स्वर्ग लोक आदित्य का स्थान है। अतः इस पाठ से वह यजमान को स्वर्ग लोक में ही पहुँचाता है।

शस्त्रयाज्यां विधत्ते—

'अपाः पूर्वेषां हरिवः सुतानाम्'[1]—इति यजति ॥ इति।

'हरिवः' हे, इन्द्र षोळशिनः पूर्वेषां 'सुतानां' सोमानां, रसमिति शेषः। 'अपाः' पीतवानसीति प्रथमपादस्यार्थः ॥

'हे इन्द्र, षोळशी के पूर्व सोम का रस पीते हो'—इससे यजन करता है।

तमिमं पादं प्रशंसति—

**सर्वेभ्यो वा एष सवनेभ्यः संनिर्मितो यत्षोळशी, तद् यद् 'अपाः पूर्वेषां हरिवः सुतानाम्'—इति यजति, पीतवद्वै प्रातःसवनं, प्रातःसवनादेवैनं तत्संनिर्मिमीते ॥ इति।**

यः षोळशी विद्यते, एष सर्वेभ्यः सवनेभ्यः सम्यङ्निर्मित इत्येवं संपादनीयम्। तथा सति तद् यद् 'अपाः पूर्वेषाम्'—इति पादं पठेत्, तदानीं तत्र प्रातःसवनं 'पीतवत्' इन्द्रेण पीतमेवेत्ययमर्थः प्रतीयते। तस्मात् 'एनं' षोडशिनं प्रातःसवनादेव निर्मितवान् भवति ॥

जो यह षोळशी है वह सभी सवनों से सम्यक् रूप से निर्मित है। वह जो 'अपाः पूर्वेषाम्' इत्यादि से यजन करता है तो प्रातःसवन पीतवत् अर्थात् इन्द्र से पीया गया हो जाता है। इस प्रकार उस पाठ से वह इस [षोळशी] को प्रातःसवन से निर्मित ही करता है।

तस्या ऋचो द्वितीयपादमनूद्य व्याचष्टे—

**'अथो इदं सवनं केवलं त' इति, माध्यंदिनं वै सवनं केवलं, माध्यंदिनादेवैनं तत्सवनात् संनिर्मिमीते ॥ इति।**

'अथो' अपि च हे इन्द्र, 'इदं' माध्यदिनं सवनं 'ते केवलं' तवैव सर्वम्। अस्मिन् पादे केवलं सवनमपीन्द्रस्येत्येतदुपपन्नम्, इन्द्रेण पुरो द्वारं वृण्वता माहेन्द्रं ग्रहं माध्यंदिनं सवनानां निष्केवल्यादीनां स्वार्थमेव कृतत्वात्। अत एतत्पादपाठेन माध्यंदिनसवनात् षोडशी निर्मितो भवति ॥

'और भी, हे इन्द्र माध्यन्दिन सवन तुम्हारा ही है' इसका अर्थ है माध्यन्दिन सवन मात्र तुम्हारा है। इस प्रकार उस पाठ से वह इस [षोडशी] को मध्यन्दिन से निर्मित ही करता है।

---

1. ऋ० १०.९६.१३।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तृतीयपादमनूद्य व्याचष्टे—

**'ममद्धि सोमं मधुमन्तमिन्द्रेति' मद्वद्वै तृतीयसवनम्, तृतीयसवनादेवैनं तत्संनिर्मिमीते ॥इति ।**

हे इन्द्र, 'मधुमन्तं' माधुर्यरसोपेतं सोमं पीत्वा 'ममद्धि' मदं हर्षं प्राप्नुहि । अस्मिन् पादे मदिधात्वर्थः श्रूयते । तृतीयसवनमपि 'मद्वद्वै' मदिधातूपेतम्' निवित्पदेषु[1] मदिधातोर्विद्यमानत्वात् । तस्मादेतत्पादपाठेन षोडशी तृतीयसवनान्निर्मितो भवति ॥

'हे इन्द्र माधुर्यरस युक्त सोम पीकर हर्ष को प्राप्त करो'—इसमें तृतीयसवन मद् धातु युक्त होता है । इस प्रकार उस पाठ से वह इस [षोडशी] को तृतीयसवन से निर्मित ही करता है ।

चतुर्थपादमनूद्य व्याचष्टे—

**'सत्रा वृषञ्जठर आ वृषस्व' इति वृषण्वद्वै षोळशिनो रूपम्, सर्वेभ्यो वा एष सवनेभ्यः संनिर्मितो यत्षोळशी; तद् यद् 'अपाः पूर्वेषां हरिवः सुतानाम्' इति यजति, सर्वेभ्य एवैनं तत्सवनेभ्यः संनिर्मिमीते ॥ इति ।**

हे 'वृषन्' वर्षणसमर्थ ! 'सत्रा' सोमयागरूपे सत्रे 'जठरे' स्वकीय उदरे 'आ वृषस्व' समन्तात् सोमरसवृष्टिं कुरु । अत्र चतुर्थपादे 'वृषन्'-शब्दो विद्यते, षोडशिस्वरूपमपि 'वृषण्वद् वर्षणोपेतम्, तृप्तिहेतुत्वात् । यः षोडशी विद्यते, सोऽयमुक्तेन प्रकारेण सर्वेभ्यः सवनेभ्यो हि निर्मितः, तस्माद् 'अपाः पूर्वेषाम्'-इति याज्यापाठेन सर्वसवनेभ्य एवैनं निर्मितवान् भवति ॥

'हे वर्षणसमर्थ, सोमयाग रूप सत्र में अपने उदर में सोमरस की वृष्टि करो'—इस चतुर्थ पाद में वृषन् शब्द होने से षोळशी का स्वरूप भी वर्षणयुक्त हो जाता है । इस प्रकार जो यह षोडशी है वह सभी सवनों से सम्यक्रूप से निर्मित है क्योंकि जो वह 'अपाः पूर्वेषाम्' इत्यादि से यजन करता है तो वह उससे सभी सवनों से ही इस [षोळशी] को सम्यक्रूप से निर्मित करता है ।

वेदनं प्रशंसति—

**सर्वेभ्यः सवनेभ्य. संनिर्मितेन षोळशिना राध्नोति य एवं वेद ॥ इति ।**

जो इस प्रकार जानता है वह सभी सवनों से सम्यक्रूप से निर्मित षोळशी के द्वारा समृद्धि को प्राप्त करता है ।

अस्या याज्यायाः पादेषु पूर्ववदुपसर्गान् विधत्ते—

**महानाम्नीनां पञ्चाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषु पादेषु; सर्वेभ्यो वा एष च्छन्दोभ्यः संनिर्मितो यत्षोळशी; तद् यन्महानाम्नीनां पञ्चाक्षरानुप-**

---

१. 'अस्य मदे'-इत्यादिषु (निवि० ११.१-१६) ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**सर्गानुपसृजत्येकादशाक्षरेषु पादेषु, सर्वेभ्य एवैनं तच्छन्दोभ्यः संनिर्मिमीते ॥ इति ।**

महानाम्नीनामृचां संबन्धिनस्तदीयानुवाके समाम्नाताः 'एवा ह्येवा'–इत्यादयः पञ्चाक्षरा उपसर्गाः[1], तानेकादशाक्षरेषु चतुर्ष्वपि पादेषु संयोजयेत्; तथा सति चतुःषष्ट्यक्षरत्वाद् अनुष्टुब्द्वयं संपद्यते। एवं सति यः षोळशी सर्वेभ्यश्छन्दोभ्यो निर्मातव्यः, सोऽयमेतत् संयोजनेन तथैव निर्मितो भवति ॥

[इस याज्या के पादों में पहले की ही तरह] ग्यारह अक्षरों के पादों में महानाम्नी मन्त्रों में से पाँच अक्षरों का उपसर्ग जोड़ता है। इस प्रकार यह जो षोळशी है वह सभी छन्दों से सम्यक्रूप से निर्मित होती है। इस प्रकार जो वह ग्यारह अक्षरों के पादों में महानाम्नी मन्त्रों में से पाँच अक्षर का उपसर्ग जोड़ता है तो वह उससे इस [षोळशी] को सभी छन्दों से सम्यक्रूपेण निर्मित करता है।

वेदनं प्रशंसति—

**सर्वेभ्यश्छन्दोभ्यः संनिर्मितेन षोळशिना राध्नोति य एवं वेद[2] ॥ ४ ॥** इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां प्रथमाध्याये (षोडशाध्याये) चतुर्थः खण्डः ॥ ४ ॥ [१२५]

जो इस प्रकार जानता है वह सभी छन्दों से सम्यक्रूपेण निर्मित षोळशी के द्वारा समृद्धि को प्राप्त होता है।

॥ इस प्रकार सोलहवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

षोडशी समाप्तः, अथातिरात्रो वक्तव्यः; तत्रेन्द्रस्य च्छन्दसां च प्राधान्यं कथयितुमितिहासमाह—

**अहर्वै देवा अश्रयन्त रात्रीमसुरास्ते समावद्वीर्या एवासन्न व्यावर्तन्त, सोऽब्रवीद् इन्द्रः–कश्चाहं चेमानितो असुरान् रात्रीमन्ववेष्याव इति; स**

---

१. आर० ४.१.१०–१५ ।

२. षोडशिसंस्थस्य ज्योतिष्टोमस्य विशेषविधय एवेषु प्रथमादिचतुःखण्डेषु विहिताः, एभ्योऽग्निष्टोमवत्, द्र० पृष्ठे ५६८ टि० १ । आश्वलायनेनापि 'अथ षोळशी'—इत्यारभ्य 'भजजपः'–इत्यन्तेन ग्रन्थेन (६.२.३) तथैवोक्तः । 'षोडशिना वीर्यकामः' इति च आपस्तम्बीय विधिसूत्रम् (१४.१.२) ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**देवेषु न प्रत्यविन्ददबिभयू रात्रेस्तमसो मृत्योस्तस्माद्धाप्येतर्हि नक्तं यावन्मात्रमिवैवापक्रम्य बिभेति; तम इव हि रात्रिर्मृत्युरिव ॥** इति ।

पुरा कदाचिदहोरात्रयोर्मध्ये देवा अहरेवाश्रितवन्तः, असुराश्च रात्रिमाश्रितवन्तः । 'ते' देवाश्च असुराश्च समानबला एवासन्; बलाधिक्येन वर्गान्तराद् व्यावृत्तमितरवर्गस्थानं प्राप्नुवन् । तदानीम् इन्द्रो देवान् प्रत्यब्रवीत्—मम सहायोऽपेक्षितः, हे देवाः ! भवतां मध्ये कश्चाहं च 'इमान्' असुरान् रात्रीमनुगतान् 'इतः' रात्र्या 'अवेष्यावः' अपसारयिष्यावः ? इति । ततो विचार्य स इन्द्रो देवेषु मध्ये तादृशं शूरं कमपि प्रतीक्ष्य 'नाविन्दत्' न लब्धवान् । रात्रेः संबन्धि यत्तमो मृत्युसदृशं, तस्मात्तमसो मृत्योरिव सर्वे देवाः 'अबिभयुः' भीता अभवन् । यस्माद्देवानां भीतिः, तस्माद् इदानीमपि 'यावन्मात्रमिवैव' यत्किंचिदपि वा दूरं रात्रौ गृहादपक्रम्य सर्वः पुरुषो 'बिभेति' 'तम इव हि' तमोरूपैव रात्रिः, तस्मान्मृत्युरिव भयहेतुः ॥

[अतिरात्र]—

iv. ५ [xvi. ५] देवों ने दिन का आश्रय लिया और असुरों ने रात का । वे दोनों ही तुल्यबल होने से अलग न किए जा सके । तब इन्द्र ने देवों से कहा—हे देवों इन असुरों को रात्रि से निकालने में मेरा कौन साथ देगा ? उन्होंने देवों में किसी को न पाया । रात्रि के मृत्यु सदृश अन्धकार से सभी देव डर गए । इसीलिए आज भी रात्रि के समय [घर से] थोड़ा सा भी दूर जाने में लोग डरते हैं; क्योंकि रात्रि अन्धकार रूप है, [अतः] मृत्यु के समान है ।

अथ च्छन्दसामिन्द्रसहकारित्वं दर्शयति—

**तं वै छन्दांस्येवान्ववायंस्तं यच्छन्दांस्येवान्ववायंस्तस्मादिन्द्रश्चैव च्छन्दांसि च रात्रीं वहन्ति; न निविच्छस्यते, न पुरोरुङ्, न धाय्या, नान्या देवतेन्द्रश्च; ह्येव च्छन्दांसि च रात्रीं वहन्ति ॥** इति ।

'तं वै' असुरनिराकरणाय प्रवृत्तं तमेवेन्द्रमेकं गायत्र्यादिच्छन्दांस्येव 'अन्ववायन्' अनुगम्य निराकर्तुं गताः । यस्मादेवं तस्मादिन्द्रच्छन्दांस्येवाङ्गतया अतिरात्रप्रयोगे 'रात्रीं वहन्ति' रात्रिप्रयोगस्य निर्वाहकाणि भवन्ति । इन्द्रविषयच्छन्दांस्येव तत्र शस्यन्ते, न तु निविद्वा, पुरोरुग्वा, धाय्या वा, देवतान्तरं वा, किंचिच्छस्यते । तस्मादिन्द्रः छन्दांसि चेत्येतावन्त एव निर्वाहकाः ॥

[असुरों के निराकरणार्थ गायत्री आदि] छन्दों ने उन [इन्द्र] का अनुगमन किया । जो छन्दों ने उनका अनुगमन किया, इसीलिए [अतिरात्रप्रयोग में] इन्द्र और छन्द ही रात्रिप्रयोग के निर्वाहक होते हैं । [वहाँ इन्द्र विषयक छन्दों का ही शंसन होता है] न निविद् का, न पुरोरुक् का, न धाय्या का और न तो इन्द्र से भिन्न किसी अन्य देवता का शंसन किया जाता है । इसलिए इन्द्र और छन्द ही रात्रिप्रयोग के निर्वाहक होते हैं ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तेषामिन्द्रच्छन्दसाम् असुरान् निराकरणसाधनं दर्शयति—

**तान् वै पर्यायैरेव पर्यायमनुदन्त; यत्पर्यायैः पर्यायमनुदन्त, तत्पर्यायाणां पर्यायत्वम् ॥ इति ।**

'तान्' वै रात्रिमाश्रितान् असुरान् पर्यायैः चमसगणानां क्रमानुष्ठानैरेव पर्यायैः, तत्र तत्र यतमाना यागभूमौ परीत्य 'अनुदन्त' निराकृतवन्तः । यत्र यत्रासुराः सुप्ता अवस्थिताः तत्र तत्र प्रयत्नेनावेक्ष्य निःसारितवन्तः । द्वादशानां चमसगणानामनुष्ठानाय त्रयः पर्यायाः; एकैकस्मिन् पर्याये चत्वारो गणा अनुष्ठीयन्ते । यस्मात् परितो गत्वा गत्वा चमसपर्यायै-र्निराकृतवन्तः, तस्मात् परिगम्य निराकरणसाधत्वात् पर्यायत्वं संपन्नम् ॥

**[रात्रि में आश्रित] उन [असुरों] को पर्यायों [अर्थात् चमसों के क्रमानुष्ठान] से ही [यज्ञभूमि में] घूम-घूम कर निकाल दिया । जो उन्होंने पर्यायों से घूम-घूमकर निराकृत किया, इसीलिए इसका नाम 'पर्याय' पड़ा ।**

क्रमेण निराकरणप्रकारं दर्शयति—

**तान् वै प्रथमेनैव पर्यायेण पूर्वरात्रादनुदन्त, मध्यमेन मध्यरात्राद् उत्तमेना-परराात्रात् ॥ इति ।**

दश दश घटिका एकैको भागः, इत्येवं रात्रेस्त्रयो भागाः, चत्वारश्चमसगणा एकः पर्यायः, इत्येवं द्वादशानां चमसगणानां त्रयः पर्यायाः; तैः क्रमेण रात्रिभागत्रयाद् असुरान् अपानुदन्त ॥

**उनको प्रथम पर्याय के द्वारा रात्रि के पूर्वभाग से निकाल दिया, मध्यम पर्याय से मध्य रात्रि से और तृतीय पर्याय से रात्रि के पिछले प्रहर से ।**

तस्मिन्निराकरणे छन्दसां सौकर्याधिक्येन प्रशंसां दर्शयति—

**अपिशर्वर्या अनुस्मसीत्यब्रुवन्नपिशर्वराणि खलु वा एतानि छन्दांसीति ह स्माहैतानि हीन्द्रं रात्रेस्तमसो मृत्योर्बिभ्यतमत्यपारयंस्तदपिशर्वराणाम-पिशर्वरत्वम् ॥ ५ ॥ इति ।**

हे, इन्द्र वयमपि 'शर्वर्याः' कृत्स्नाया रात्रेः सकाशाद् असुरान् अपसारयितुं त्वामनुगम्य 'स्मसि' तिष्ठामः, इत्येवं छन्दांस्यब्रुवन् । तदेतद् वाक्यमैतरेयः श्रुत्वा तदानीमेवैतानि च्छदांसि 'अपिशर्वराणि' एवेति नाम्ना व्यवहृतवान्[1] । एतच्च युक्तम्—यस्मात् मृत्योरिव रात्रेस्तमसो बिभ्यतमिन्द्रम् 'एतानि' च्छन्दांसि अत्यपारयन्, यस्माद्धेतो रात्रिमतीत्य

---

१. 'अपिशर्वरे—शर्वरीमुखेऽग्निविहरणकाले'—इति ऋ० ३.९.७ । अपिशर्वरे—शर्वरीं रात्रिमपिगतः कालः अपिशर्वरः'–इति च (ऋ० ८.१.२९) सा० भा० ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नीतवन्ति, तस्मात् कारणाच्छर्वर्याः सर्वस्मादपि पारनयनं द्योतयितुम् 'अपिशर्वराणि'—इति नाम च्छन्दसां युक्तम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थ-पञ्चिकायां प्रथमाध्याये (षोडशाध्याये) पञ्चमः खण्डः ॥ ५ ॥ [१२६]

छन्दों ने कहा—'हे इन्द्र, केवल हमीं पूरी रात [असुरों को निराकृत करने के लिए] तुम्हारा अनुगमन करते हैं।' [ऐसा सुनकर ऐतरेय] ऋषि ने इन छन्दों का 'अपिशर्वराणि' नाम व्यवहृत किया। क्योंकि मृत्यु रूप रात्रि के अन्धकार से डरते हुए इन्द्र को इन [छन्दों] ने पार लगाया, इसीलिए इनका नाम 'अपिशर्वर' हुआ।

॥ इस प्रकार सोलहवें अध्याय के पञ्चम खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

इन्द्रस्य च्छन्दसां च प्राधान्यमभिहितम्; अथ शस्त्रं विधातव्यम्। षोडशिपर्यन्तं पूर्ववदनुष्ठाय षोडशिन ऊर्ध्वं रात्रिपर्यायाः शंसनीयाः। तत्र त्रयः पर्यायाः। तत्रैकपर्यायश्चतुःशस्त्रोपेतः। होतुरेकं शस्त्रं, होत्रकाणां च त्रयाणामेकैकमिति चतुष्टयम् ॥

अत्र प्रथमपर्याये होतुः शस्त्रं विधत्ते—

**पान्त मा वो अन्धस इत्यन्धस्वत्याऽनुष्टुभा रात्रीं प्रतिपद्यते ॥ इति।**

'अन्धः' शब्दो यस्यामृच्यस्ति, सेयमन्धस्वती। सा चात्राष्टुप्छन्दस्का, तया 'रात्रीं' रात्रिशस्त्रं 'प्रतिपद्यते' प्रारभेत ॥

iv. ६ [xvi. ६] 'सोमरस का पान करो'—इस अन्धस्वती [अन्धशब्द युक्त] अनुष्टुप् छन्दस्क ऋचा से रात्रि के शस्त्र का प्रारम्भ करे।

तस्यामृचि च्छन्दः प्रशंसति—

**आनुष्टुभी वै रात्रिरेतद् रात्रिरूपम् ॥ इति।**

गायत्रीत्रिष्टुब्जगत्यनुष्टुभां मध्ये गायत्र्यादीनां त्रयाणां सवनत्रयगतानाम् अहनि प्रयुक्तत्वाद् अनुष्टुभः प्रयोगाय रात्रिरेव कालः परिशिष्यते। तस्माद् रात्रेरनुष्टुप्संबद्धत्वाद् इयमनुष्टुब्रात्रेः स्वरूपम् ॥

रात्रि अनुष्टुभ् से सम्बन्धित है, यह रात्रि का रूप है।

अथ त्रिषु पर्यायेषु शस्त्रयाज्या विधत्ते—

**अन्धस्वत्यः पीतवत्यो मद्वत्यस्त्रिष्टुभो याज्या भवन्त्यभिरूपा, यद् यज्ञेऽभिरूपं तत्समृद्धम् ॥ इति।**

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'अन्धः' शब्दो यास्वृक्ष्वस्ति, ताः 'अन्धस्वत्यः'; तादृश्यश्चतस्र ऋचः प्रथमपर्याये होत्रादीनां चतुर्णां शस्त्रयाज्याः कर्तव्याः; ताश्च त्रिष्टुप्छन्दस्का एव। तत्र 'अध्वर्यवो भरतेन्द्राय सोमम्'[1] इत्येषा होतुः शस्त्रयाज्या। सा चान्धस्वतो त्रिष्टुप्छन्दस्का च। तस्या द्वितीयपादे 'सिञ्चता मद्यमन्धः'—इति 'अन्धः' शब्दः श्रूयते। एवमितरेषां त्रयाणां शस्त्रयाज्या उदाहरणीयाः। पिबतिधातुर्यास्वृक्ष्वस्ति, ताः 'पीतवत्यः'; तादृश्यो मध्यमपर्याये याज्याः कर्तव्याः। 'अपाय्यस्यान्धसो मदाय'[2]—इति। होतुः शस्त्रयाज्या। तत्र 'अपायि'—इति 'पिबति'-धातुः श्रूयते। मदिधातुर्यास्वृक्ष्वस्ति, ताः 'मद्वत्यः'। तादृश्यस्तृतीयपर्याये याज्याः कर्तव्याः। 'तिष्ठा हरी'[3] इत्येषा होतुः शस्त्रयाज्या। तस्या अवसाने 'ररिमा ते मदाय' इति मदिधातुः श्रूयते। एवं सर्वमुदाहार्यम्। रात्रावन्नभोजनादन्धस्वतीनामानुरूप्यम्, क्षीरपानात् पीतवतीनाम्; तत ऊर्ध्वं हर्षात् मद्वतीनाम्। एवमानुरूप्ये सति तत्तत्कर्म समृद्धं भवति॥

[तीन पर्यायों में शस्त्र की] याज्या अन्धस्वती, पीतवती और मद्वती ऋचाएँ होती हैं। इस प्रकार वे [रात्रि में भोजन होने से अन्धस्वती, दुग्धपान होने से पीतवती और हर्ष होने से मद्वती ऋचाएँ कर्म के] अनुरूप हैं। जो यज्ञ के अनुरूप है, वही उसकी समृद्धि है।

प्रथमपर्याये प्रयोगविशेषं विधत्ते—

**प्रथमेन पर्यायेण स्तुवते, प्रथमान्येव पदानि पुनराददते, यदेवैषामश्वा गाव आसंस्तदेवैषां तेनाददते॥** इति।

यदा सामगाः प्रथमेन पर्यायेण स्तुवते, तदानीं स्तोत्रियाणां प्रथमपादान् द्विरभ्यस्यन्ति[4]। एव शस्त्रेऽपि 'पुरुहूतं पुरुष्टुतम्'—इत्यादिकाः प्रथमपादा द्विरभ्यसनीयाः, 'यथा वाव स्तोत्रमेवं शस्त्रम्'—इत्युक्तत्वात्। एवं सति 'एषाम् असुराणाम् अश्वा गाव आसन्' इति यदस्ति, तत्सर्वमसुराणां धनम्, 'तेन' प्रथमपादाभ्यासेन स्वीकुर्वन्ति॥

[जब साम गान करने वाले] प्रथम पर्याय से स्तुति करते हैं [तब स्तोत्रियों के] प्रथम पदों को ही दुहरा देते हैं। इन [असुरों] के जो अश्व और गौएँ हैं उसको वे इस [प्रथम पाद के अभ्यास] से उनसे ले लेते हैं।

---

१. ऋ० २.१४.१। २. ऋ० २.१९.१। ३. ऋ० ३.३५.१।

४. सामब्राह्मणे देवा वा इति पान्त मा वो अन्धस इति च द्वाभ्यां खण्डाभ्यां रात्रिपर्याया विहिताः (ता० ब्रा० ९.१.२)। तत्रैव 'तान् समन्तं पर्यायं प्राणुदन्त, यत् पर्यायं प्राणुदन्त तत् पर्यायाणां पर्यायत्वम्—इति पर्यायनिरुक्तिरुक्ताः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

द्वितीयपर्याये विशेषं विधत्ते—

**मध्यमेन पर्यायेण स्तुवते, मध्यमान्येव पदानि पुनराददते; यदेवैषामनो रथा आसंस्तदेवैषां तेनाददते ॥ इति ।**

'अयं त इन्द्र सोमः'[1] इत्यस्यामृचि निपूतो अधि बर्हिषि, निपूतो अधि बर्हिषि—इत्येवं मध्यमः पादो द्विरभ्यसनीयः । 'एषाम्' असुराणाम् 'अनः' शकटं यदस्ति, ये च 'रथाः', तत्सर्वं 'तेन' अभ्यासेन स्वीकृतं भवति ॥

**मध्यम पर्याय के द्वारा स्तुति करते हैं तब मध्यम पदों को ही दुहरा देते हैं । इस प्रकार इन [असुरों] के जो गाड़ी और रथ हैं उसको वे इस [मध्यम पाद के अभ्यास] से उनसे ले लेते हैं ।**

तृतीयपर्याये विशेषं विधत्ते—

**उत्तमेन पर्यायेण स्तुवते, उत्तमान्येव पदानि पुनराददते; यदेवैषां वासो हिरण्यं मणिरध्यात्ममासीत्, तदेवैषां तेनाददते ॥ इति ।**

'इदं ह्यन्वोजसा सुतम्'[2] इत्यस्यामृचि 'पिबा त्वस्य गिर्वणः' 'पिबा त्वस्य गिर्वणः' इत्युत्तमस्य पादस्य द्विरभ्यासः । आत्मानं शरीरमधिकृत्य वर्तत इति 'अध्यात्मम्', असुराणां शरीरेऽवस्थितं वासः 'हिरण्यं' 'मणिः'—इत्येवमादिकम्, सर्वं गृहीतं भवति ॥

**तृतीय पर्याय के द्वारा स्तुति करते हैं । तब तृतीय पदों को ही दुहरा देते हैं । इस प्रकार इन [असुरों] के जो शरीरावस्थित वस्त्र, स्वर्ण या रत्न हैं; उसको वे इस [अभ्यास] से उनसे ले लेते हैं ।**

वेदनं प्रशंसति—

**आ द्विषतो वसु दत्ते निरेनमेभ्यः सर्वेभ्यो लोकेभ्यो नुदते, य एवं वेद ॥ इति ।**

'द्विषतः' शत्रोः सकाशात् तदीयं धनमादत्ते, 'एनं' शत्रुं सर्वेभ्यो लोकेभ्यो 'निर्णुदते' निराकरोति ॥

**जो इस प्रकार जानता है वह शत्रु से उनके धन को ले लेता है और इस [शत्रु] को सभी लोकों से निकाल देता है ।**

अत्र कंचित्प्रश्नमुत्थापयति—

**पवमानवदहरित्याहुर्न रात्रिः पवमानवती; कथमुभे पवमानवती भवतः ? केन ते समावद्भाजौ भवतः ? इति ॥ इति ।**

---

१. ऋ० ८.१७.११ । २. ऋ० ३.५१.१० ।



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

बहिष्पवमानः, माध्यंदिनः पवमानः, आर्भवः पवमानश्चेत्येवमहनि पवमानस्तोत्र-त्रयं विद्यते[1], न तु रात्रौ तदस्ति, अत उभयोः पवमानत्वं कथं सिध्यति ? तदसिद्धौ च केनोपायेनाहश्च रात्रिश्चेत्येते 'समावद्भाजौ भवतः' समानभागयुक्ते भवतः ? इति प्रश्नावादिन आहुः ॥

कुछ लोग प्रश्न करते हैं कि पवमान स्तोत्र दिन का है, और रात का पवमान स्तोत्र नहीं है। तब वे दोनों कैसे पवमान हैं, और किस प्रकार वे दोनों समानभाग से युक्त होते हैं ?

तत्रोत्त माह—

**यदेवेन्द्राय मद्वने सुतमिदं वसो सुतमन्ध इदं ह्यन्वोजसा सुतमिति स्तुवन्ति च शंसन्ति च, तेन रात्रिः पवमानवती, तेनोभे पवमानवती भवतः, तेन ते समावद्भाजौ भवतः ॥ इति।**

यदेव 'इन्द्राय मद्वने सुतम्', 'इदं वसो सुतमन्धः', 'इदं ह्यन्वोजसा सुतम्'[2] इति, ताभिरेताभिस्तिसृभिः उद्‌गातारः स्तुवन्ति, होतारः शंसन्ति। अहनि यथा त्रिष्वपि पवमानस्तोत्रनामसु पवमानशब्दोऽनुवृत्तः, एवमत्रापि तिसृषु ऋक्षु सुतशब्दोऽनुवृत्तः; अतः पवमानसाम्याद् रात्रिः पवमानवती; 'तेन' प्रकारेण उभयोः पवमानवत्त्वे साम्ये सति तुल्यभागत्वं सिध्यति ॥

'इन्द्राय मद्वने सुतं', 'इदं वसो सुतमन्धः' और 'इदं ह्यन्वोजसा सुतं' इन तीन मन्त्रों से उद्‌गाता स्तुति करते हैं और होता शंसन करते हैं। [जैसे तीनों पवमान स्तोत्र में 'पवमान' शब्द की अनुवृत्ति है वैसे ही इन तीनों में 'सुत' शब्द अनुवृत्त है अतः] उस [पवमान साम्य] से रात्रि पवमान युक्त होती है। उसीसे दोनों का पवमान युक्त होना सिद्ध होता है और उसीसे उन दोनों के समानभाग होते हैं।

पुनरपि प्रश्नान्तरमुत्थापयति—

**पञ्चदशस्तोत्रमहरित्याहुर्न रात्रिः पञ्चदशस्तोत्रा; कथमुभे पञ्चदशस्तोत्रे भवतः, केन ते समावद्भाजौ भवतः ? इति ॥ इति।**

अग्निष्टोमस्तोत्राणि द्वादश, उक्थ्यस्तोत्राणि त्रीणि; एतान्यहनि प्रयुज्यन्ते। तस्मादहः पञ्चदशस्तोत्रोपेतम्, रात्रौ तु न तानि विद्यन्ते, कथं पञ्चदशस्तोत्रसाम्येन तयोर्भागसाम्यं सिध्यति ? इति प्रश्नः ॥

---

१. ता० ब्रा०—बहिष्पवमानः (६.७–१०) ७.१,२; माध्यन्दिनपवमानः ३–५; आर्भवपवमानः ८.४,५। २. ऋ० ८.९२.१९; ८.२.१; ३.५१.१०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कुछ लोग पुनः प्रश्न करते हैं कि 'दिन पञ्चदशस्तोत्र से युक्त होता है और रात्रि पञ्चदशस्तोत्र से युक्त नहीं होती। तब वे दोनों कैसे पञ्चदशस्तोत्र से युक्त होते हैं और किस प्रकार वे दोनों समानभाग से युक्त होते हैं ?'

तत्रोत्तरमाह—

**द्वादश स्तोत्राण्यपिशर्वराणि तिसृभिर्देवताभिः संधिना राथन्तरेण स्तुवते; तेन रात्रिः पञ्चदशस्तोत्रा, तेनोभे पञ्चदशस्तोत्रे भवतः, तेन ते समावद्भाजौ भवतः ॥ इति।**

द्वादशसु चमसगणपर्यायेषु द्वादश स्तोत्राणि विद्यन्ते, तानि 'अपिशर्वराणि' रात्रावनुष्ठेयानां छन्दसाम् 'अपिशर्वर'संज्ञा पूर्वमुक्ता[1]। तैश्छन्दोभिर्निष्पाद्यत्वात् स्तोत्राण्यपि तन्नामकानि, रथंतरसाम्ना निष्पाद्यं यत्संधिस्तोत्रं[2], तत्र तिस्रो देवताः श्रूयन्ते।[3] ताभिः स्तोतव्याभिस्तिसृभिर्देवताभिः स्तोत्रमपि त्रेधा भिद्यते। 'तेन' कारणेन ताभिः पञ्चदशस्तोत्रा संपन्ना। तथा सत्युभयोरहोरात्रयोः स्तोत्रसंख्यासाम्यात् समानभागोपेतत्वं सिध्यति॥

वस्तुतः 'अपिशर्वर' में बारह स्तोत्र होते हैं और तीन देवों से युक्त रथन्तर साम में निष्पन्न सन्धि स्तोत्र से स्तुति करते हैं। इसलिए रात्रि उनसे पञ्चदशस्तोत्र से सम्पन्न होती है और उसी से दोनों में पञ्चदशस्तोत्र हो जाते हैं और उसीसे उनके एक से भाग होते हैं।

शस्त्रबाहुल्यं प्रशंसति —

**परिमितं स्तुवन्त्यपरिमितमनुशंसति; परिमितं वै भूतमपरिमितं भव्यमपरिमितस्यावरुद्ध्या इति ॥ इति।**

उद्गातारः 'परिमितं' यथा भवति तथा स्तुवन्ति। त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंश इत्येवं चतुर्भिरेव स्तोमैरत्र सर्वस्तोत्रनिष्पत्तेः[4]। होता त्वपरिमितं यथा भवति तथा अनुशंसति; शंसनीया ऋच एतावत्य एवेति सर्वत्रानुगतस्य संख्यानियमस्य कस्यचिदभावात्। पूर्वभाविनः स्तोत्रस्य परिमितत्वमुत्तरभाविनः शस्त्रस्यापरिमितत्वं च लौकिकन्यायानुसारि, लोके 'भूतं' पूर्वं संपादितं धनम् 'परिमितम्' इयदेवेति नियतिरस्ति; 'भव्यम्' इतः परं संपादनीयं धनम् 'अपरिमितं' तृष्णायाः निरवधिकत्वेनैतावदेव

---

१. द्र० इतः पूर्वम्, ५९० पृष्ठे।

२. रथन्तरं प्रतिष्ठाकामाय सन्धि कुर्यात्—इति ता० ब्रा० ९.१.२८।

३. 'त्रीण्युक्थानि त्रिदेवत्यः सन्धिः'—इति ता० ब्रा० ९.१.२६।

४. ता० ब्रा० ६.२.२।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

संपादयिष्यामि, न त्वधिकमिति नियतेरभावात् । तस्मादुपरितनशंसनबाहुल्यमपरिमित-धनप्राप्त्यै भवतीत्यभिप्रेत्य होतुरपरिमितमनुशंसनम् ॥

[उद्गाता] परिमित [निश्चित] स्तुति करते हैं और होता अपरिमित [मन्त्रों का] अनुशंसन करता है [जैसे लोक में] भूत परिमित है और भविष्य अपरिमित है । अतः अपरिमित [धन] की प्राप्ति के लिए [वह अपरिमित शंसन करता है] ।

प्रकारान्तरेण शस्त्रबाहुल्यं प्रशंसति—

**अति शंसति स्तोत्रमति वै प्रजात्मानमति पशवस्तद् यत् स्तोत्रमति शंसति यदेवास्यात्यात्मानं तदेवास्यैतेनावरुन्धेऽवरुन्धे[1] ॥ ६ ॥** इति ।

स्तोत्रगतामृक्संख्यामतिलङ्घ्य होता शंसतीति यदस्ति तद्युक्तमेव; लोके ह्यात्मान-मतिलङ्घ्य प्रजानां चावस्थितत्वात् । स्वयमेक एव, पुत्रादयस्तु बहवः, गवाश्वादिपशवश्च बहवः तस्मादात्मस्थानीयं स्तोत्रम्, प्रजापशुस्थानीयशस्त्राधिक्येन 'यदेव' प्रजापश्वादि धनं, तस्य यजमानस्य स्वात्मानमतिक्रम्याधिकमभीष्टम्, तत्सर्वम् 'अस्य' यजमानस्य होता संपादयति । पदाभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थ-पञ्चिकायां प्रथमाध्याये (षोडशाध्याये) षष्ठः खण्डः ॥ ६ ॥ [१२७

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थं महेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधर-माधवाचार्यादिशतो सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनाम-भाष्ये ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायाः प्रथमोऽध्यायः (षोडशोऽध्यायः) समाप्तः ॥ १६ ॥

स्तोत्र की अपेक्षा होता अधिक शंसन करता है [वह युक्त ही है क्योंकि पुत्र पौत्रादि] प्रजा अपने से अधिक होती है और पशु भी अधिक होते है । अतः जो वह स्तोत्र से अधिक शंसन करता है उससे वह जो [प्रजा पशु आदि धन] उस [यजमान] का अपने से अधिक पाना अभीष्ट है वह सब इस [यजमान] का होता इसीसे सम्पादित करता है ।

॥ इस प्रकार ऐतरेय ब्राह्मण की चतुर्थपञ्चिका के प्रथम (सोलहवें) अध्याय की हिन्दी पूर्ण हुई ॥ १ ॥

—०—

१. अतिरात्रे चत्वारः सवनीयाः, षोडश्यन्ते रात्रिपर्यायास्त्रयः, ततः सन्धिस्तोत्रम्, तत्राश्विनं शस्त्रम्, ततोऽनुयाजादि । तदिह खण्डे सन्धिस्तोत्रान्तं विहितम्, शिष्टं परस्ताद् वक्ष्यति ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ द्वितीयोऽध्यायः

## प्रथमः खण्डः

—: * :—

## [अथ सप्तदशोऽध्यायः

## प्रथमः खण्डः]

पृष्ठे षोडश्यह्नि संस्थाचतुर्थे
सर्वच्छन्दोविक्रियाऽनुष्टुबाख्ये ॥
पर्यायाणां स्याच्चतुःशस्त्रकाणां
रात्रौ संघेः संख्यया पाञ्चदश्यम् ॥ १ ॥

अथातिरात्रक्रतावेव रात्रिपर्यायेभ्य ऊर्ध्वमाश्विनं शस्त्रमाख्यायिकामुखेन विधत्ते—

**प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् सूर्यां सावित्रीं; तस्यै सर्वे देवा वरा आगच्छंस्तस्या एतत्सहस्रं वहतुमन्वाकरोद्,—यदेतदाश्विनमित्याचक्षतेऽनाश्विनं हैव, तद्यदर्वाक्सहस्रम्; तस्मात् तत्सहस्रं वैव शंसेद् भूयो वा ॥** इति ।

पुरा कदाचित् प्रजापतिः कांचिद् दुहितरं सोमाय राज्ञे 'प्रायच्छत्' विवाहार्थं दातुमुद्युक्तवान् । कीदृशीं दुहितरम्? 'सूर्याम्' इत्येतन्नामधेययुक्तां 'सावित्रीं' सवित्रा लब्धाम् । यद्यप्येषा सवितुः पुत्री, तथाऽपि स्नेहातिशयेन प्रजापतेर्दुहितेत्युच्यते । 'तस्यै' दुहित्रे तल्लाभार्थं सर्वे देवा वरा भूत्वा प्रजापतेः सकाशमागमन् । स च प्रजापतिः 'तस्यै' दुहितृलाभार्थम् 'एतद्' वक्ष्यमाणमृचां सहस्रं 'वहतुमन्वाकरोत्' । वहनस्य विवाहस्यालंकारार्थं माङ्गल्यार्थं च वरस्य पुरतो वहनीयो हरिद्रागुडादिमङ्गलद्रव्यसंघो 'वहतुः' यदेतदृक्सहस्रं याज्ञिका आश्विनसहस्रमित्याचक्षते, तत्सहस्रमेव वहतुरूपेण प्रत्यभिज्ञातवान् । स देवानां मध्ये यो वरः आश्विनशस्त्रमन्त्रानेक एव पठति, तस्मै दास्यामीति प्रतिज्ञातवानित्यर्थः । सहस्रादर्वाचीना ऋचो यस्मिञ्शस्त्रे, तद् 'अर्वाक्सहस्रम्' तादृशं यदस्ति, तद् 'अनाश्विनमेव' । यस्मादाश्विनं सहस्रं प्रजापतिरङ्गीकृतवान्; तस्माद्धोता सहस्रमेव शंसेत् । ततोऽप्यधिकं वा शंसेत्, न तु न्यूनम्[1] ॥

---

१. प्रातरनुवाकन्यायेन तस्यैव समाम्नायस्य सहस्रावममोदेतोः शंसेत्'—इति० आश्व० श्रौ० ६.५.८ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[आश्विनशस्त्र]

iv. ७ [xvii. १] प्रजापति सविता के प्रसाद से प्राप्त अपनी लड़की सूर्या को सोम राजा को देने के लिए उद्युक्त हुए; उसके लिए सभी देवता अतिथि होकर आए। प्रजापति ने उसके लिए यह जो सहस्र ऋचाओं का शस्त्र 'वहतु' [अर्थात् वर के सामने रक्खा जाने वाला हल्दी गुड़ आदि रूप मङ्गल द्रव्य] रूप में तैयार किया; उसे ही याज्ञिक जन आश्विनशस्त्र के नाम से पुकारते हैं। जो हजार की अपेक्षा कम है वह आश्विन नहीं है। इसलिए होता को सहस्र ऋचाओं का ही शंसन करना चाहिए अथवा उससे भी अधिक।

शंसनस्येतिकर्तव्यतां विधत्ते—

**प्राश्य घृतं शंसेत्, यथा ह वा इदमनो वा रथो वाऽक्तो वर्तत एवं हैवाक्तो वर्त्तते ॥** इति।

प्रथमतो घृतं प्राश्य पश्चाच्छंसेत्। यथा लोके किंचिदिदं निदर्शनं तद्वत्। किं निदर्शनमिति? तदुच्यते—'अनः' स्वल्पशकटं वा प्रौढो 'रथः' वा यदा प्रवर्त्यते, तदानीमस्य चक्रस्य भ्रमणस्थाने मषीमिश्रेण तैलेनाञ्जने कृते पश्चात् स्वल्पं शकटं रथो वा सहसा प्रवर्तते। एवमसौ होता घृतेनाक्तः शस्त्रे प्रवर्तते ॥

घृत का प्राशन करके शंसन करना चाहिए। क्योंकि जैसे यहाँ छोटी गाड़ी या रथ के पहियों में तेल लगाने से वे अच्छे चलते हैं वैसे ही घृताक्त [वाणी] भी शस्त्र में [अच्छी चलती] है।

इतिकर्तव्यतान्तरं विधत्ते—

**शकुनिरिवोत्पतिष्यन्नाह्वयीत ॥** इति।

यथा लोके 'शकुनिः' कश्चित्पक्षी पद्भ्यां भूमिं दृढमवष्टभ्य 'उत्पतिष्यन्' ऊर्ध्वमुखोत्पतनं कर्तुमिच्छन् पक्ष्यन्तरमभिलक्ष्य ध्वनिं करोति, एवमसौ होता तदाकारं घटनं कुर्वन्नाहावं पठेत्। तदेतद् आश्वलायनाचार्यैः स्पष्टीकृतम् 'प्राश्य प्रतिप्रसृप्य पश्चात् स्वस्य धिष्ण्यस्योपविशेत् समस्तजङ्घोरुररत्निभ्यां जानुभ्यां चोपस्थं कृत्वा यथा शकुनिरुत्पतिष्यन्नुपस्थकृतस्त्वेवाश्विनं शंसेत्'[1] इति ॥

उड़ने के लिए उद्युक्त श्येन पक्षी के समान बैठकर आहाव पढ़े।

आश्विनशस्त्रस्य प्रतिपदमाख्यायिकामुखेन विधत्ते—

**तस्मिन् देवा न समजानत,—ममेदमस्तु ममेदमस्त्विति; ते संजानाना अब्रुवन्नाजिमस्यायामहै, स यो न उज्जेष्यति, तस्येदं भविष्यतीति; तेऽग्नेरेवाधि गृहपतेरादित्यं काष्ठामकुर्वत, तस्मादाग्नेयी प्रतिपद्भवत्याश्विनस्य 'अग्निर्होता गृहपतिः स राजा'[2] इति ॥** इति।

---

१. आश्व० श्रौ० ६.५.४। २. ऋ० ६.१५.१३।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'तस्मिन्' आश्विनशस्त्रे देवाः परस्परं 'न समजानत' संज्ञानं प्रतिपत्तिं नाकुर्वन्। कीदृशी तदीया प्रतिपत्तिः? इति, सोच्यते—'ममैवेदमाश्विनमस्त्विति' सर्वेषामभिप्रायः। सर्वविषयत्वं द्योतयितुमियं वीप्सा। 'ते' विप्रतिपन्ना देवाः 'संजानानाः' संप्रतिपत्तिं कर्तुमुद्युक्ताः परस्परमिदमब्रुवन्—'अस्य' आश्विनशस्त्रस्य लाभाय वयं सर्वे कांचिद् 'आजिम् आयामहै' समयबन्धपुरःसरा धावनरूपा गतिः 'आजिः' तां प्राप्नवामः। तस्मिन्नाजिधावने 'नः' अस्माकं मध्ये च यः प्रबलः, यः कोऽपि प्रथममुत्कर्षेण जेष्यति, तस्य 'इदम्' आश्विनं भविष्यतीति समयबन्धः ते कृतसमया देवाः 'गृहपतेरग्नेरेवाधि' गार्हपत्यस्योपरि द्युलोकवर्तिनमादित्यं 'काष्ठां' धावनसमाप्तिमकुर्वत,—गार्हपत्यमारभ्यादित्यपर्यन्तं धावेदिति तदीया मर्यादा। यस्मादग्निराश्विनप्राप्तिहेतोर्धावनस्योपक्रमस्थानम्, तस्मादाग्नेयी काचिदृगाश्विनस्य 'प्रतिपद्भवति' प्रारम्भरूपा कर्तव्या। 'अग्निर्होता'[1] इति तस्याः प्रतीकम्॥

उस [आश्विनशस्त्र] में देवता परस्पर एक मत न हुए। सभी ने कहा—'यह मेरा हो, यह मेरा हो।' तब परस्पर समझौता करके उन्होंने कहा—हम लोग इसके लिए बाजी लगाकर दौड़ें; हम लोगों में से जो जीतेगा उसका यह [आश्विनशस्त्र] होगा। उन्होंने गार्हपत्य अग्नि से भी ऊपर अर्थात् वहाँ से आरम्भ करके आदित्य तक दौड़ने की शर्त बनाई। इसलिए अग्नि देवताक ऋचा ही आश्विनशस्त्र की प्रारम्भिक ऋचा होती है—'अग्नि होता है, वह गृह का पालक है, वह राजा' इत्यादि ऋचा का प्रतीक है।

अत्र कंचित्पूर्वपक्षमुद्भावयति—

**तद्धैक आहुः—'अग्निं मन्ये पितरमग्निमापिम्'[2] इत्येतया प्रतिपद्येत॥ इति।**

प्रारभेतेत्यर्थः॥

कुछ लोग कहते हैं कि 'हे अग्नि, हे प्रिय पिता, मित्र अग्नि' इत्यादि इस ऋचा से आरम्भ करना चाहिए।

तत्रोपपत्तिं पूर्वपक्ष्यभिप्रेतां दर्शयति—

**'दिवि शुक्रं यजतं सूर्यस्य' इति प्रथमयैव ऋचा काष्ठामाप्नोतीति॥ इति।**

तस्याश्चतुर्थपादे 'सूर्यस्य यजतं' यस्मादग्निविशेषणं पठ्यते, तथा सति प्रथमयैवर्चा सूर्यरूपा काष्ठा धावनाभिरूपाप्ता भवतीति तेषामभिप्रायः॥

[क्योंकि अग्नि का विशेषण 'सूर्यस्य यजतं' इसके चतुर्थ पाद में है अतः] 'दिवि शुक्रं यजतं सूर्यस्य' इसी प्रारम्भक ऋचा के द्वारा [सूर्यरूप दौड़ की] सीमा प्राप्त होती है।

तमिमं पक्षं दूषयति—

**तत्तन्नादृत्यम्, य एनं तत्र ब्रूयाद् अग्निमिति वै प्रत्यपाद्यग्निमापत्स्यतीति, शश्वत् तथा स्यात्॥ इति।**

---

१. ऋ० ६.१५.१३। २. ऋ० १०.७.३।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्मिन् शस्त्रोपक्रमे 'तत्' मतम्, 'अग्निं मन्ये पितरम्'[1] इत्यादिकं नादरणीयम्। अनादरणे हेतुरुच्यते—'तत्राग्निं मन्ये'–इत्येतयोपक्रमपक्षे, यः कोऽपि विरोधी समागत्य 'एनं' होतारं 'ब्रूयात्' शपेत्। कथं शाप इति, तदुच्यते—अनेन होत्रा 'अग्निमग्निमिति' एव 'प्रत्यपादि' प्रारब्धम्, तस्यामृचि 'अग्निं पितरमग्निं भ्रातरम्'–इत्येवमसकृदग्नि-स्वरूपम्, पित्राद्यभिधानादग्निमसौ होता प्राप्नोतीति दग्धो भविष्यतीति यदि शपेत्, तदानीं 'शश्वत्' अवश्यं तथा स्यात्॥

किन्तु यह मत ठीक नहीं है क्योंकि यदि इस होता को वहाँ कोई शाप दे कि 'इस होता ने 'अग्नि' कहकर प्रारम्भ किया अतः वह अग्नि में गिरेगा' तो वह अवश्य ही होता है।

परमतं दूषयित्वा स्वमतं निगमयति—

**तस्माद् 'अग्निर्होता गृहपतिः स राजा' इत्येतयैव प्रतिपद्येत, गृहपतिवती प्रजातिमती शान्ता; सर्वायुः सर्वायुत्वाय॥ इति।**

अस्यामृचि[2] गृहपतिशब्दः स्पष्टं दृश्यते, तस्मादियं 'गृहपतिवती'। तथा द्वितीयपादे 'विश्वा वेद जनिमा'–इति सर्वप्राणिजननाभिज्ञानकथनादियं 'प्रजातिमती'। बहुकृत्वोऽग्निशब्दस्याभावादियं 'शान्ता'। तस्मादेतया प्रतिपद्यमानो होता सर्वायुर्भवति, तच्च यजमानस्य सर्वायुत्वाय संपद्यते॥

इसलिए 'अग्निर्होता' आदि इसी ऋचा से ही प्रारम्भ करे; क्योंकि यह 'गृहपति' शब्द से और सभी प्राणिजात के जनन के कथन से युक्त और [अग्नि शब्दाभाव से] शान्त है। [इसलिए इससे प्रारम्भ करने वाले होता की] पूर्णायु होती है और [वह यजमान के लिए] पूर्णायु के लिए होती है।

वेदनं प्रशंसति—

**सर्वमायुरेति य एवं वेद॥ ७॥ इति।**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थ-पञ्चिकायां द्वितीयाध्याये सप्तदशाध्याये) प्रथमः खण्डः॥ १॥ (७) [१२८]

**जो इस प्रकार जानता है वह सम्पूर्ण आयु प्राप्त करता है।**

**॥ इस प्रकार सत्रहवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई॥ १॥**

## अथ द्वितीयः खण्डः

अथाग्नेयकाण्डं विधत्ते—

**तासां वै देवतानामाजिं धावन्तीनामभिसृष्टानामग्निर्मुखं प्रथमः प्रत्यपद्यत, तमश्विनावन्वागच्छतां, तमब्रूतामपोदिह्यावां वा इदं जेष्याव इति; स**

---

१. ऋ० १०,७३। २. ऋ० ६.१५.१३।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**तथेत्यब्रवीत् तस्य वै ममेहाप्यस्त्विति; तथेति; तस्मा अप्यत्राकुरुताम्; तस्मादाग्नेयमाश्विने शस्यते ।। इति ।**

देवताः सर्वा गार्हपत्याग्निसमीपात् निर्गत्य सूर्यपर्यन्तामाजिमुद्दिश्य धावन्त्यो 'अभिसृष्टाः' अभितः प्रवृत्ताः,—एका देवतैकस्यां दिशि धावत्यन्या परस्यां दिशीत्येवं सर्वतो धावन्ति । 'तासां' देवतानां मध्ये अग्निः मुखं यथा भवति तथा, मुख्यो भविष्यामीत्यभिप्रायेण प्रथमः 'प्रत्यपद्यत' पुरोगामी धावनं कृतवान् । 'तम्' अग्निम् 'अनु' पश्चादश्विनावागच्छताम्, समीपं गत्वा 'तम् अग्निम् अब्रूताम्'—हे अग्ने, त्वं शान्तो भविष्यसि, तस्माद् 'अपोदिहि' उत्कर्षेणापेहि, दूरेऽपसर । 'आवाम्' उभावेव 'इदम्' आश्विनमुद्दिश्य जेष्याव इति । सोऽग्निरङ्गीकृत्य 'तस्य' अपगच्छतो ममापि 'इह' शस्त्रे भागोऽस्त्विति अङ्गीकृतवान् । आश्विनावङ्गीकृत्य 'तस्मै' अग्नये विभागं दत्तवन्तौ । यस्मादेवं 'तस्मादाग्नेयं' बहूनामृचां समूहरूपं काण्डम् 'आश्विने' शस्त्रे होत्रा 'शस्यते' । शंसनीयं तच्च काण्डं सर्वं सूत्रे द्रष्टव्यम्[1] ।।

iv. ८ [xvii. २] **उन देवताओं के दौड़ में दौड़ते हुए आगे बढ़ने पर उनमें अग्नि प्रथम आए । उन अग्नि के पश्चात् अश्विन आए । उन [अग्नि] से उन्होंने कहा-हट जाओ, हम दोनों ही इसे जीतेंगे ।' उन्होंने कहा—'ठीक है ।' 'मेरा भी इसमें भाग होवे ।' उसने कहा—ठीक है, और उस [अग्नि] के लिए भी इसमें भाग प्रदान किया । इसलिए आश्विनशस्त्र में अग्नि देवताक ऋचाएँ होता द्वारा पढ़ी जाती हैं ।**

अथोषस्यं काण्डं विधत्ते—

**ता उषसमन्वागच्छताम्, तामब्रूतामपोदिह्यावां वा इदं जेष्याव इति; सा तथेत्यब्रवीत् तस्यै वै ममेहाप्यस्त्विति; तथेति; तस्या अप्यत्राकुरुतां तस्मादुषस्यमाश्विने शस्यते ।। इति ।**

'तौ' अश्विनौ 'उषसम्' एतन्नामयुक्तां देवताम् । अन्यत् पूर्ववद् व्याख्येयम् ।।

**वे दोनों [अश्विन] उषा देवता के पीछे थे । उससे उन्होंने कहा—हट जाओ, हम दोनों ही इसे जीतेंगे । उसने कहा—ठीक है । किन्तु मेरा भी इसमें भाग होवे । उन्होंने कहा–ठीक है और उस [उषा] के लिए भी इसमें भाग प्रदान किया । इसीलिए आश्विनशस्त्र में होता द्वारा उषा देवताक ऋचाएँ पढ़ी जाती हैं ।**

---

१. 'आश्विनं शंसेत् । अग्निर्होता गृहपतिः स राजेति प्रतिपदेकपातिनो पच्छः । एतयाग्नेयं गायत्रमुपसन्तनुयात् । प्रातरनुवाकन्यायेन'–इत्यादि आश्व० श्रौ० ६.५.५–८ । 'प्रातरनुवाकमनुब्रूयान्मन्द्रेण'–इत्यादिः; 'इत्याग्नेयः क्रतुः' इत्यन्तश्च ४.१३.६–८ द्रष्टव्यः । 'त्रीणि षष्टिशतन्याश्विनम्'–इति च ६.६.१० ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ऐन्द्रं काण्डं विधत्ते—

**ताविन्द्रमन्वागच्छताम्, तमब्रूतामावां वा इदं मघवञ्जेष्याव इति, न ह तं दधृषतुरपोदिहीति वक्तुं; स तथेत्यब्रवीत् तस्य वै ममेहाप्यस्त्विति; तथेति, तस्मा अप्यत्राकुरुतां, तस्मादैन्द्रमाश्विने शस्यते ।। इति ।**

हे मघवन्, आवां जेष्याव इत्येव अब्रूताम्; इन्द्रस्य स्वामित्वात् 'तम्' इन्द्रमुद्दिश्य 'अपोदिहि' इति वक्तुं न दधृषतुः, धाष्टर्यं नाकुरुताम् । अन्यत् पूर्ववत् ।।

वे दोनों इन्द्र के पीछे थे । उन [इन्द्र] से उन्होंने कहा—'हे मघवन्, हम दोनों ही इसे जीतेंगे ।' किन्तु उसका, उन [इन्द्र] से 'हट जाओ' यह कहने का साहस न हुआ । उन्होंने कहा—ठीक है । किन्तु मेरा भी इसमें भाग होवे । उन्होंने कहा—ठीक है और उन [इन्द्र] के लिए भी इसमें भाग प्रदान किया । इसीलिए आश्विनशस्त्र में इन्द्रदेवताक मन्त्र होता द्वारा पढ़े जाते हैं ।

अथाश्विनं काण्डं विधत्ते—

**तदश्विना उदजयतामश्विनावाश्नुवाताम्, यदश्विना उदजयतामश्विनावाश्नुवाताम्; तस्मादेतदाश्विनमित्याचक्षते ।। इति ।**

'तत्' तस्यामाजौ सहसा सूर्यपर्यन्तं गत्वा तावश्विनावुत्कर्षेणाजयताम् । ततस्तावेव शस्त्रम् 'अश्नुवातां' व्याप्तवन्तौ । 'यद्' यस्मादश्विनौ जयपूर्वकं शस्त्रं व्याप्तवन्तौ, तस्माद् 'एतत्' शस्त्रमाश्विनमिति याज्ञिका आचक्षते । आश्विनं काण्डं शंसेदित्यभिप्रायः ।।

इस प्रकार उस दौड़ में अश्विन जीत गए और अश्विनों ने ही इसे प्राप्त किया । जो अश्विन जीत गए और अश्विनों ने ही प्राप्त किया; इसीलिए इसे 'आश्विनशस्त्र' कहते हैं ।

वेदनं प्रशंसति—

**अश्नुते यद् यत्कामयते य एवं वेद ।। इति ।**

इस प्रकार जो जानता है, वह जो भी कामना करता है, उसे प्राप्त कर लेता है ।

प्रश्नोत्तराभ्यां शस्त्रस्याश्विनत्वमुपपादयति—

**तदाहुर्यच्छस्यत आग्नेयं शस्यत उषस्यं शस्यत ऐन्द्रमथ कस्मादेतदाश्विनमित्याचक्षत इत्यश्विनौ हि तदुदजयतामश्विनावाश्नुवाताम्, यदश्विना उदजयतामश्विनावाश्नुवाताम्; तस्मादेतदाश्विनमित्याचक्षते ।। इति ।**

आश्विनकाण्डवत् आग्नेयोषस्यैन्द्रकाण्डानामपि शस्यमानत्वाच्छस्त्रस्याग्नेयादिनाम-परित्यागेनाश्विननाम्नि कः पक्षपात इति प्रश्नः ? अग्निरुषा इन्द्रश्चैते परतोऽपसृप्ताः, न तु सूर्यपर्यन्तमधावन्, अश्विनौ तु धावन्तौ जयपूर्वकं शस्त्रं प्राप्तवन्ताविति तदीयत्व-प्रसिद्धिः शस्त्रस्य युक्ता ।।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कुछ लोग प्रश्न करते हैं कि जब इस शस्त्र में अग्नि के मन्त्र पढ़े जाते हैं, उषा के मन्त्र पढ़े जाते हैं और इन्द्र के मन्त्र पढ़े जाते हैं तो यह क्यों 'आश्विनशस्त्र' कहलाता है। क्योंकि अश्विनों ने उसे जीता और अश्विनों ने उसे प्राप्त किया। जो अश्विनों ने इसे जीता और अश्विनों ने प्राप्त किया इसीलिए इसे 'आश्विनशास्त्र' कहते हैं।

वेदनं प्रशंसति—

**अश्नुते यद् यत्कामयते य एवं वेद ॥ ८ ॥** इति।

पूर्वमाश्विनसंबन्धमात्रवेदनम्, इह त्वग्न्यादिसंबन्धराहित्यवेदनं चेति विशेषः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां द्वितीयाध्याये (सप्तदशाध्याये) द्वितीयः खण्डः ॥२॥ (८) [१२९]

जो इस प्रकार जानता है, वह सब कुछ प्राप्त करता है, जो चाहता है।

॥ इस प्रकार सत्रहवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

अथाश्विनशस्त्रप्रशंसार्थं देवानामाजिधावनकथा पूर्वमुपन्यस्ता; तमेव कथाशेषमाश्विनशस्त्रप्रशंसार्थमेव पुनरप्यनुवर्तयति—

**अश्वतरीरथेनाग्निराजिमधावत्, तासां प्राजमानो योनिमकूलयत्; तस्मात् ता न विजायन्ते ॥** इति।

अश्वगर्दभसांकर्येण जाताः स्त्रीव्यक्तयोऽश्वतर्यः। तद्युक्तेन रथेनायमग्निराजिमुद्दिश्य धावनं कृतवान्। तदानीं 'प्राजमानः' प्रकर्षेणाश्वतरीः प्रेरयन्। 'अज पशुप्रेरणे' इति धातुजन्योऽयं शब्दः। तत्प्रेरणकाले तासां पूर्वपुच्छभागमुपस्पृश्य योनिम् 'अकूलयत्' दग्धवान्। तस्माद् दग्धयोनित्वात् 'ताः' अश्वतर्यो 'न विजायन्ते' विजननम् अपत्योत्पादनं न कुर्वन्ति ॥

iv. ९ [xvii. ३] अग्नि खच्चरी के रथ से दौड़ में दौड़े। उन्हें हाँकते हुए उनकी योनियाँ अग्नि ने जला दी। इसीलिए वे प्रजोत्पादन नहीं करती।

अग्नेराजिधावनमुक्त्वोषसो धावनं दर्शयति—

**गोभिररुणैरुषा आजिमधावत्, तस्मादुषस्यागतायामरुणमिवैव प्रभात्युषसो रूपम् ॥** इति।

'अरुणैर्गोभिः' ईषद् रक्तवर्णैर्बलीवर्दैर्युक्तेन रथेन यस्माद् उषसो धावनम्, तस्माल्लोकेऽपि रात्रेरवसाने समागतायामुषसि; तस्या उषसो रूपं प्राच्यां दिशि 'अरुणमिवैव' रक्तवर्णमेव भूत्वा 'प्रभाति' प्रभायुक्तं भवति ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उषा लाल बलीवर्द युक्त रथ से दौड़ में दौड़ी। इसलिए उषा के आने पर लाल वर्ण की प्रभा आ जाती है; यही उषा का रूप है।

इन्द्रस्याजिधावनं दर्शयति—

**अश्वरथेनेन्द्र आजिमधावत्; तस्मात् स उच्चैर्घोष उपब्दिमान् क्षत्त्रस्य रूपमैन्द्रो हि सः ॥** इति।

यस्मादश्वयुक्तेन रथेनेन्द्रोऽधावत्, तस्माल्लोकेऽपि सोऽश्वयुक्तो रथः 'उच्चैर्घोषः' बहुलध्वनिर्दृश्यते, तथा क्षत्त्रस्य रूपम् 'उपब्दिमान्' शब्दोपेतं दृश्यते। यदा क्षत्रियो निर्गच्छति, तदीया याष्टिका अन्ये सेवकाः अश्वपुरतः शब्दं कुर्वन्त एव गच्छन्ति। स च शब्द 'ऐन्द्रो हि' असुरयुद्धेषु तद्भीत्यर्थमिन्द्रेण कृतत्वाद् ऐन्द्रत्वम् ॥

इन्द्र अश्व के रथ से दौड़ में दौड़े। इसीलिए वह [अश्वयुक्त रथ लोक में भी] अत्यन्त कोलाहल युक्त दिखता है। क्योंकि यह क्षत्रिय का रूप है जो इन्द्र से सम्बन्धित है।

अश्विनोर्धावनं दर्शयति—

**गर्दभरथेनाश्विना उदजयतामश्विनावाश्नुवातां; यदश्विना उदजयतामश्विनाश्नुवातां; तस्मात् स सृतजवो दुग्धदोहः सर्वेषामेतर्हि वाहनानामनाशिष्ठो रेतसस्त्वस्य वीर्यं नाहरतां; तस्मात् स द्विरेता वाजी ॥** इति।

अश्विनौ गर्दभयुक्तेन रथेन शीघ्रं गत्वा जयपूर्वकमश्विनौ व्याप्तवन्तौ। 'यत्' यस्मादुभौ रथमारुह्यातिवेगेन गत्वा व्याप्तवन्तौ; तस्मात् 'सः' गर्दभो भारातिशयेन तीव्रधावनेन च लोके 'सृतजीवः' गतवेगः 'दुग्धदोहः' गतक्षीररसश्चाभवत्। तस्माद् इदानीमपि गजाश्वादिवाहनानां सर्वेषां मध्ये गर्दभः 'अनाशिष्ठः' अत्यन्तवेगरहितो[1] दृश्यते। तदीयस्य रेतसस्तु 'वीर्यं' सामर्थ्यम् अश्विनौ 'नाहरतां' न विनाशितवन्तौ। तस्माद् वेगेन पानयोग्यक्षीरेण च राहित्येऽपि 'सः' गर्दभो 'द्विरेताः' गर्दभाश्वतरजातिद्वयोत्पादको 'वाजी' गमनवान् दृश्यते ॥

अश्विनों ने गर्दभ-रथ से दौड़ जीत ली और अश्विनों ने [वह शस्त्र] प्राप्त कर लिया। जो अश्विनों ने जीता और अश्विनों ने [उसे] प्राप्त किया; इसलिए वह [गर्दभ तीव्रता में दौड़ने के कारण] वेगरहित और दुग्धविहिन हो गया तथा सभी भारवाहक पशुओं में वेगरहित हो गया। किन्तु उनकी वीर्य की शक्ति को उन्होंने नष्ट नहीं किया। इसीलिए वह दो प्रकार के [गर्दभ और खच्चर को उत्पन्न करने वाले] वीर्य से युक्त गमनशील हुआ।

एवं शस्त्रप्रशंसार्थमवशिष्टमुपाख्यानशेषमभिधाय सौर्याणां मन्त्रसमूहानां संख्यां विधातुं पूर्वपक्षम् उद्भावयति—

**तदाहुः सप्त सौर्याणि च्छन्दांसि शंसेद् यथैवाग्नेयं यथोषस्यं यथाश्विनम्; सप्त वै देवलोकाः; सर्वेषु देवलोकेषु राध्नोतीति ॥** इति।

---

१. 'अनाशिष्ठः अतिशयेनाल्पभक्षी'—इति षड्गुरुशिष्यः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

आग्नेयोषस्याश्विनकाण्डानि यथा प्रत्येकं गायत्र्यादिभिः सप्तच्छन्दोभिर्युक्तानि,[1] एवमत्र सौर्येऽपि काण्डे सप्त च्छन्दांसि शंसनीयानि। तथा सति भोगस्थानरूपाणां देवलोकानामवान्तरभेदेन सप्तविधत्वात् तत्समृद्धिः सिध्यतीति पूर्वपक्षिण आहुः ॥

कुछ लोगों का कथन है कि जैसे अग्नि, उषा और अश्विनों के लिए वह शंसन करता है वैसे ही उसे सूर्या के लिए भी सप्त छन्दों का प्रयोग करना चाहिए। वस्तुतः सात ही देवों के लोक हैं; इस प्रकार करके वह सभी देवलोकों में समृद्धि को प्राप्त करता है।

तं पक्षं निराकृत्य च्छन्दस्त्रयपक्षं विधत्ते—

**तत्तन्नादृत्यम्; त्रीण्येव शंसेत्, त्रयो वा इमे त्रिवृतो लोका एषामेव लोकानामभिजित्यै ॥** इति।

पृथिव्यन्तरिक्षद्युलोकास्त्रय एव 'त्रिवृतः' सत्त्वरजस्तमोगुणैस्त्रिविधः; अतः त्रयाणामभिजयाय त्रीण्येव च्छन्दांसि शंसेत् ॥

किन्तु यह मत ठीक नहीं है। तीन ही छन्दों से शंसन करना चाहिए। ये तीन [पृथिवी, अन्तरिक्ष और द्यु] लोक [सत्त्व, रज और तम से] त्रिविध हैं। इन्हीं लोकों को जीतने के लिए [तीन छन्दों में शंसन करना चाहिए]।

त्रयाणां छन्दसां प्रारम्भं निश्चेतुं पूर्वपक्षमाह—

**तदाहु 'उदुत्यं जातवेदसम्' इति सौर्याणि प्रतिपद्येतेति ॥** इति।

यानि 'सौर्याणि' त्रीणि च्छन्दांसि, तेषां प्रारम्भ 'उदुत्यम्'[2] इति शंसेदिति पूर्वः पक्षः ॥

कुछ लोगों का कहना हैं कि सूर्या के लिए बोले जाने वाले [तीन] छन्दों के आरम्भ में 'उदुत्यं जातवेदसम्' से शंसन करना चाहिए।

तमेतं दूषयति—

**तत्तन्नादृत्यम्; यथैव गत्वा काष्ठामपराध्नुयात्, तादृक् तत् ॥** इति।

लोके कश्चिद्भाषापूर्वकमप्रमादेन धावनं कृत्वा 'काष्ठाम्' अवधिस्थानं प्राप्य 'अपराध्नुयात्' तत्रावसाने स्खलनपतनादिरूपमपराधं कुर्यात्, तादृगेव तद्भवति। आग्नेयकाण्डमारभ्य सूर्यकाण्डपर्यन्तमस्खलन् होता समाप्तौ सूर्यकाण्डे स्खलति; तस्माद् 'उदु त्यं' न शंसेत् ॥

किन्तु यह मत ठीक नहीं है। यह तो उसी तरह है जैसे कोई अपने धावन लक्ष्य पर जाकर अन्त में [लड़खड़ाकर या गिरकर] अपराध कर दे।

---

१. आश्व० श्रौ० ४.१३, १४, १५ कण्डिका द्रष्टव्याः। २. ऋ० १.५०.१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इदानीं सिद्धान्तमाह—

**'सूर्यो नो दिवस्पात्वित्येतेनैव'[1] प्रतिपद्येत; यथैव गत्वा काष्ठामभिपद्येत तादृक् तत् ॥** इति ।

यथा लोके कश्चिद् अवधिं प्राप्य स्खलनरहितः स्वाभीष्टं प्राप्नुयात्, तादृगेव तद् द्रष्टव्यम् । 'सूर्यो नः' इत्यस्मिन् मन्त्रे सूर्यवाय्वग्नीनां लोकत्रयाद्[2] रक्षणं प्रार्थयतो रक्षित(तृ)त्वादेवापराधं न प्राप्नोति; पूर्वत्रैवं नास्तीति विशेषः ॥

**'सूर्यो नो दिवस्पातु' आदि इस ऋचा से ही प्रारम्भ करना चाहिए। यह उसी प्रकार है जैसे कोई अपने उद्दिष्ट लक्ष्य पर [स्खलनरहित हो] ठीक से पहुँच जाय ।**

प्रथमसूक्तं विधाय नवर्चं[3] सूक्तान्तरं विधत्ते—

**'उदु त्यं जातवेदसम्'[4] इति द्वितीयं शंसति ॥** इति ।

तदेतदुभयं गायत्रीछन्दस्कम् ॥

**'उदु त्यं जातवेदसम्' को द्वितीय ऋचा के रूप में शंसन करता है ।**

अथ त्रैष्टुभं सूक्तं विधत्ते—

**'चित्रं देवानामुदगादनीकम्'[5] इति त्रैष्टुभमसौ वाव चित्रं देवानामुदेति, तस्मादेतच्छंसति ॥** इति ।

अस्मिन् मन्त्रे देवानां संबन्धि किंचित् 'चित्रं' रूपम् 'उद्गात्' उदयं प्राप्नोतीति श्रूयते, असौ वा आदित्य एव देवानां संबन्धि चित्रं रूपमुदेति; कालभेदेन वर्णभेद-दर्शनात् । तस्मादेतत् सूक्तं प्रशस्तत्वाद् अत्र शंसनीयम् ॥

**'चित्रं देवानामुदगादनीकम्' इत्यादि त्रिष्टुभ छन्दस्क सूक्त है। [इसमें जो 'देवों में चित्र रूप उदय होना' कहा है वह] यह आदित्य ही देवों में चित्र रूप से उदित होता है इसीलिए [प्रशस्त होने से] इस सूक्त का शंसन करना चाहिए ।**

तृतीयं छन्दो विधत्ते—

**'नमो मित्रस्य वरुणस्य चक्षसे'[6] इति जागतं; तद्वाशीःपदमाशिषमेवैतेना-शास्त आत्मने च यजमानाय च ॥ ९ ॥** इति ।

---

१. ऋ० १०.१५८.१–५ ।

२. 'सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् । अग्निर्नः पार्थिवेभ्यः'—इति ।

३. उदुत्यमिति सूक्तं तु त्रयोदशर्चम्; तत्रादौ नव गायत्र्यः, ता एवेह शंसनीया भवन्ति; 'उदु त्यं जातवेदसम्'. इति नव—इति सूत्रकारोक्तेः (आश्व० श्रौ० ६.५.१८) ।

४. ऋ० १.५०.१-९ । ५. ऋ० १.११५.१–६ । ६. ऋ० १०.३७.१–१२ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'तदु' तदस्य 'नमो मित्रस्य' इत्यादिकम् 'आशीःपदम्' आशिषः प्रतिपादकम्, द्वितीयचतुर्थपादयोः 'सपर्यत शंसत' इत्याशीरर्थस्य लोडन्तस्य पदद्वयस्य प्रयुक्तत्वात् तच्छंसनेन होता स्वस्य यजमानस्य चाशिषं प्रार्थयते[1] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थ-पञ्चिकायां द्वितीयाध्याये (सप्तदशाध्याये) तृतीयः खण्डः ॥३॥ (९) [१३०]

'नमो मित्रस्य' इत्यादि जगती छन्दस्क सूक्त है। इसमें जो ['नमो मित्रस्य' इत्यादि] आशीर्वाद का प्रतिपादक पद है उससे होता स्वयं अपने लिए और यजमान के लिए आशीर्वाद की प्रार्थना करता है।

॥ इस प्रकार सत्रहवें अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

ऐन्द्रादिप्रगाथान् विधातुं प्रस्तौति—

**तदाहुः सूर्यो नातिशस्यो, बृहती नातिशस्या, यत्सूर्यमतिशंसेद् ब्रह्मवर्चस-मतिपद्येत; यद्बृहतीमतिशंसेत् प्राणानतिपद्येतेति** ॥ इति।

'तत्' तस्मिन्नाश्विनशस्त्रे केचिदभिज्ञा एवमाहुः। देवानां मध्ये यः सूर्योऽस्ति, सः 'नातिशस्यः' सूर्यमतिलङ्घ्य शंसनं न कर्तव्यम्। तथा छन्दसां मध्ये बृहतीमतिलङ्घ्य शंसनं न कर्तव्यम्; सूर्यस्योपासकेषु ब्रह्मवर्चसप्रदत्वात् तदमिलङ्घने ब्रह्मवर्चसं नश्येत्; बृहत्याः प्राणरूपत्वात् तदतिलङ्घने प्राणान् विनाशयेदिति तेषामभिप्रायः ॥

iv. १० [xvii. ४] उस [आश्विनशस्त्र] के सम्बन्ध में अभिज्ञजन कहते हैं कि [देवों में] सूर्य का अतिक्रमण करके शंसन नहीं करना चाहिए। [छन्दों में] बृहती का अतिक्रमण करके शंसन नहीं करना चाहिए। जो सूर्य का अतिक्रमण करके शंसन करे वह मानो ब्रह्मवर्चस का अतिक्रमण करे और जो बृहती का अतिक्रमण करके शंसन करे वह मानो प्राणों को ही विनष्ट कर दे।

इदानीमेकं प्रगाथं विधत्ते—

**'इन्द्र क्रतुं न आ भर' इत्यैन्द्रं प्रगाथं[2] शंसति** ॥ इति।

हे इन्द्र 'नः' अस्माकं 'क्रतुम्' अतिरात्राख्यम् 'आभर' आनयेति-अस्य पादस्यार्थः ॥

'हे इन्द्र, हमारे अतिरात्र याग का वहन करो' इस इन्द्र-देवताक प्रगाथ का शंसन करता है।

---

१. 'सूर्यो न', 'उदु त्यं', 'चित्रं', 'नमो मित्रस्य'—इति चत्वारि सूक्तानि सौर्याणि। 'उदिते सौर्याणि प्रतिपद्यते'—इति आश्व० श्रौ० ६.५.१७। २. ऋ० ७.३२.२६।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

द्वितीयमर्धर्चं पठति—

**शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहीति ॥** इति ।

'पुरुषु' बहुषु यागेष्वाहूयमान, हे इन्द्र, 'नः' अस्मान् 'अस्मिन्' अतिरात्रयागरूपे 'यामनि' नियमविशेषे 'शिक्ष' उपदेशेन प्रवर्तय । 'जीवाः' त्वत्प्रसादेन जीवन्तो वयं 'ज्योतिः' आदित्यमण्डलरूपम् 'अशीमहि' प्राप्नुयाम ॥

**'बहुत यागों में हूयमान हे इन्द्र, हमारे इस अतिरात्र याग रूप नियमविशेष में उपदेश करो जिससे जीवित रहते हुए हम ज्योति को प्राप्त करें ।'**

अत्र ज्योतिःशब्दस्यादित्यपरत्वात् प्रगाथस्यैन्द्रत्वेऽपि सूर्यमतिक्रम्य शंसनं न भविष्यतीत्येतद् दर्शयति—

**असौ वाव ज्योतिस्तेन सूर्यं नातिशंसति ॥** इति ।

**यह सूर्य ही 'ज्योति' है । उससे सूर्य का अतिक्रमण करके शंसन नहीं करता है ।**

अत्रोत्तरस्या ऋचो विष्टारपङ्क्तित्वेऽपि प्रग्रथनेन बृहतीत्वसंपादनाद् बृहतीमतिलङ्घ्य शंसनं न भविष्यतीत्येतद् दर्शयति—

**यद् बार्हतः प्रगाथस्तेन बृहतीं नातिशंसति ॥** इति ।

अस्मिन् प्रगाथे पूर्वस्या ऋचः षट्त्रिंशदक्षरत्वात् पादचतुष्टयोपेतत्वाच्च सा स्वभावत एव बृहती; पुनरपि तस्याश्चतुर्थपादष्टाक्षरं द्विरावर्त्य इतरस्या ऋचः प्रथमार्धेन विंशत्यक्षरेण सह प्रग्रथ्य षट्त्रिंशदक्षरा द्वितीया बृहती संपादनीया; तत्राप्यन्तिमं पादमष्टाक्षरं द्विरावर्त्य उत्तरार्धेन विंशत्यक्षरेण सह प्रग्रथ्य तृतीया बृहती संपादनीया; एवं सति बृहत्या अतिक्रमो न भवति ॥

**जो बार्हत-प्रगाथ है उससे 'बृहती' का अतिक्रमण करके शंसन नही करता है ।**

प्रगाथान्तरं विधत्ते—

**'अभि त्वा शूर नोनुम'[1] इति राथंतरीं योनिं शंसति; राथंतरेण वै संधिनाश्विनाय स्तुवते; तद् यद् राथंतरीं योनिं शंसति रथंतरस्यैव सयोनित्वाय ॥** इति ।

रथंतराख्यं साम 'अभि त्वा शूर' इत्यत्रोत्पन्नं[2] तस्माद् रथंतरयोनित्वम् । उद्गातारो ह्यतिरात्रे रथंतरसामसाध्येनान्तिमेन संधिना स्तोत्रेण आश्विनशस्त्रप्रदर्शनार्थमेव स्तुवते[3] । अतो रथंतरयोनिशंसने सति स्तोत्रगतस्य रथंतरस्यैव साम्नः 'सयोनित्वं' समानस्थानत्वं संपद्यते ॥

---

१. ऋ० ७.३२.२२ ।

२. छ० आ० ३.१५.१ । आर० गा० २.१.२१ । आर्षेय ब्रा० ३.१३ ।

३. ता० ब्रा० ९.१.२०–३८ द्रष्टव्याणि ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'अभि त्वा शूर नोनुमः' इस रथन्तर नामक साम में उत्पन्न [प्रगाथ] का शंसन करता है। [उद्गाता अतिरात्र याग में] रथन्तरसामसाध्य-अन्तिम संधि [स्तोत्र] के द्वारा आश्विनशस्त्र के [प्रदर्शन के] लिए स्तुति करते हैं। अतः इस प्रकार जो रथन्तर में उत्पन्न साम का शंसन करता है उससे [स्तोत्रगत] रथन्तर साम का ही समानस्थानत्व संपादित करता है।

अत्र सूर्यातिक्रमाभावं दर्शयति—

**ईशानमस्य जगतः स्वर्दृशमित्यसौ वाव स्वर्दृक् तेन सूर्यं नातिशंसति ॥ इति ।**

ईशानमित्यादिकः प्रथमाया ऋचस्तृतीयपादः। 'अस्य' सर्वस्य जगतः 'ईशानं' स्वामिनं 'स्वर्दृशं' स्वर्गलोके दृश्यमानम् 'अभिनोनुमः' इति प्रथमपादगतेनान्वयः। अत्र स्वर्दृक्शब्देनासावादित्य एवोच्यते। तेन सूर्यातिक्रमो नास्ति ॥

[प्रथम ऋचा के तृतीय पाद में उक्त] 'इस सम्पूर्ण जगत् के स्वामी स्वर्ग लोक में दिखाई देने वाले [सूर्य] के लिए [हम स्तुति करते हैं]'—यह आदित्य ही 'स्वर्दृक्' शब्द से कहा गया है। उससे वह सूर्य का अतिक्रमण करके शंसन नहीं करता है।

पूर्ववद् बृहत्यतिक्रमाभावं दर्शयति—

**यद्वु बार्हतः प्रगाथस्तेन बृहतीं नातिशंसति ॥ इति ।**

और, जो बार्हत-प्रगाथ है, उससे 'बृहती' का अतिक्रमण करके शंसन नहीं करता है।

प्रगाथान्तरं विधत्ते—

**'बहवः सूरचक्षसः'[1] इति मैत्रावरुणं प्रगाथं शंसत्यहर्वै मित्रो रात्रिर्वरुण उभे वा एषोऽहोरात्रे आरभते योऽतिरात्रमुपैति; तद् यन्मैत्रावरुणं प्रगाथं शंसत्यहोरात्रयोरेवैनं तत्प्रतिष्ठापयति ॥ इति ।**

अह्नो 'मित्रः' स्वामी; रात्रेश्च 'वरुणः' तस्मात् तयोस्तद्रूपत्वम्। 'यः' यजमानः 'अतिरात्रं' क्रतुम् अनुतिष्ठति; 'एषः' पुमान् 'अहोरात्रे' 'उभे',अप्युद्दिश्य क्रतुं प्रारभते; उभयोः कालयोरनुध्येयविशेषसद्भावात्। अतो मैत्रावरुणप्रगाथशंसनेनाहोरात्रयोरेव कालयोः 'एनं' यजमानं प्रतिष्ठितं करोति ॥[2]

'बहवः सूरचक्षसः' आदि मित्र और वरुण देवताक प्रगाथ का शंसन करता है। मित्र दिन हैं और वरुण रात्रि। जो [यजमान] अतिरात्र क्रतु का अनुष्ठान करता है वह

---

१. ऋ० ७.६६.१०।

२. 'इन्द्र क्रतुं', 'अभि त्वा', 'बहवः सूरचक्षसः'—इति त्रयः प्रगाथाः (आश्व० श्रौ० ६.५.१८)।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इस दिन और रात दोनों के ही उद्देश्य से यज्ञ प्रारम्भ करता है। जो मैत्रावरुण प्रगाथ का शंसन करता है उससे वह इस [यजमान] को दिन और रात में ही प्रतिष्ठित करता है।

पूर्ववदनतिक्रमं दर्शयति—

**'सूरचक्षसः' इति तेन सूर्यं नातिशंसति; यद्ु बार्हतः प्रगाथस्तेन बृहतीं नातिशंसति ॥ इति ।**

'सूरचक्षसः' इति श्रूयमाणं सूरपदं सूर्यवाचि; अतस्तस्य नातिक्रमः ॥

'सूरचक्षसः' में 'सूर' पद है। अतः उससे सूर्य का अतिक्रमण करके शंसन नहीं करता है। जो बार्हत-प्रगाथ है उससे बृहती का अतिक्रमण करके शंसन नहीं करता है।

पुनरप्यन्ये द्वे ऋचौ विधत्ते—

**'मही द्यौः पृथिवी च नः' 'ते हि द्यावापृथिवी विश्वशंभुवेति' द्यावापृथिवीये शंसति द्यावापृथिवी वै प्रतिष्ठे इयमेवेह प्रतिष्ठाऽसावमुत्र तद् यद् द्यावापृथिवीये शंसति प्रतिष्ठयोरेवैनं तत्प्रतिष्ठापयति ॥ इति ।**

'मही द्यौः'[1] इत्येका 'ते हि'[2]—इति द्वितीया; उभे अप्यृचौ द्यावापृथिवीदेवताके। ते च द्यावापृथिव्यौ सर्वेषां प्राणिनामाधारभूते 'इह' मनुष्यजन्मनि 'इयम्' 'एव' पृथिवी प्राणिनामाश्रयः। 'अमुत्र' जन्मान्तरे 'असौ' द्युलोक आश्रयः। तथा सति द्यावापृथिवीययोर्ऋचोः शंसनेनोभयोरपि प्रतिष्ठारूपयोर्लोकयोः 'एनं' यजमानं प्रतिष्ठापयति ॥

'मही द्यौः' और 'ते हि द्यावापृथिवी' आदि दो द्यावापृथिवी देवताक ऋचाओं का शंसन करता है; द्यावापृथिवी सभी प्राणियों का आधार है। [इस मनुष्य जन्म में] यहाँ यही प्राणियों का आश्रय है और जन्मान्तर में वहाँ यह द्युलोक आश्रय है। अतः जो द्यावापृथिवी-देवताक ऋचा का शंसन करता है; उससे दोनों ही प्रतिष्ठा रूप लोकों को वह इस [यजमान] में स्थापित करता है।

अत्र सूर्यस्यानतिक्रमं दर्शयति—

**'देवो देवी धर्मणा सूर्यः शुचिः' इति तेन सूर्यं नातिशंसति ॥ इति ।**

उत्तरस्यामृचि 'देवो देवी' इत्यस्मिन् पादे सूर्यस्य श्रूयमाणत्वात् तदतिक्रमो नास्ति ॥

'देवो देवी धर्मणा सूर्यः शुचिः' आदि ऋचा में 'सूर्यः' पद है। अतः उससे सूर्य का अतिक्रमण करके शंसन नहीं करता।

बृहत्या अनतिक्रमं दर्शयति—

**यद्ु गायत्री च जगती च ते द्वे बृहत्यौ; तेन बृहतीं नातिशंसति ॥ इति ।**

१. ऋ० १.२२.१३ । २. ऋ० १.१६०.१ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रथमा गायत्रीछन्दस्काचतुर्विंशत्यक्षरा । द्वितीया जगतीच्छन्दस्काऽष्टाचत्वारिंशदक्षरा मिलित्वा द्वासप्ततिरक्षराणि संपद्यन्ते; तेषां द्वेधा विभागे सति षट्त्रिंशदक्षरे द्वे बृहत्यौ भवतः । तेन बृहत्या अनतिक्रमः ॥

जो एक गायत्री छन्दस्क और दूसरी जगती छन्दस्क ऋचा है वे [दोनों मिलकर २४+४८=७२ अक्षर हैं अतः] दो बृहती हो जाती हैं । अतः उससे बृहती का अतिक्रमण करके शंसन नहीं करता है ।

अथान्यामेकामृचं विधत्ते—

**'विश्वस्य देवी मृचयस्य जन्मनो न या रोषाति न ग्रभत्'—इति द्विपदां शंसति ॥ इति ।**

इयमृक्पादद्वयोपेता[1] अस्मिन् ब्राह्मणे एवोक्ता । 'मृचि' धातुर्गत्यर्थः । मर्चयति गच्छतीति गतिमान् प्राणी[2] । 'विश्वस्य' सर्वस्य 'मृचयस्य' गतिमतः प्राणिनो यज्जन्म, तस्य 'जन्मनः' 'देवी' स्वामिनी काचिन्निर्ऋतिरूपा मृत्युदेवता विद्यते । 'या' मृत्युदेवताऽस्मासु 'न रोषाति' न कुप्यति, 'न ग्रभत्' नैव गृह्णातीति द्विपदाया ऋचोऽर्थः । तामेतां द्विपदां शंसेत् ॥

'सभी जङ्गम प्राणी की स्वामिनी निर्ऋति [=मृत्यु की देवता] हम पर न क्रोधित हो और न [नाश के लिए] ग्रहण करे'—इस द्विपदा का शंसन करता है ।

एतामृचं प्रशंसति—

**चितैधमुक्थमिति ह स्म वा एतदाचक्षते, यदेतदाश्विनम्; निर्ऋतिर्ह स्म पाशिन्युपास्ते, यदैव होता परिधास्यति; अथ पाशान् प्रतिमोक्ष्यामीति; ततो वा एतां बृहस्पतिर्द्विपदामपश्यन्न या रोषाति न ग्रभदिति; तया निर्ऋत्याः पाशिन्या अधराचः पाशानपास्यत् तद् यदेतां द्विपदां होता शंसति निर्ऋत्या एव तत्पाशिन्या अधराचः पाशानपास्यति स्वस्त्येव होतोन्मुच्यते सर्वायुः सर्वायुत्वाय ॥ इति ।**

यदेतत् 'आश्विनं' शस्त्रमस्ति, तदेतच्चितैधमुक्थमिति रहस्याभिज्ञा आचक्षते । चिता एधाः काष्ठसमूहा मनुष्यं दग्धुं यस्मिञ्छ्मशाने स्थाने, तत् स्थानं 'चितैधम्'; तत्सदृश-

---

१. आश्वलायनेनाप्यनूक्ता—'विश्वस्य···ग्रभदिति द्विपदा'—इति ६ ५.१८ ।

२. मृचिर्हिंसाकर्मा; 'यत् क्षुरेण मर्चयता सुपेशसा'—इत्यादिषु (अथर्व० ८.२.१७; आश्व० गृ० १.१७.१६; पार० गृ० २.१) तथा दृष्टत्वात्'—इति, 'मर्चयात्-मर्चयति-हिंसाकर्मा, हिंस्यात्'—इति च ऋग्भाष्ये सायणः (८.६७.९, २.२३.७) । 'मर्च च (शब्दार्थः)'—इति चु० प ११६ । 'मर्च ग्रहणे' सौत्रः; उणा० ३.४३ । 'मर्चयतेर्मर्कः' पा० १.१.५८ वा० ३ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मिदम् 'उक्थं' शस्त्रम्, यथा श्मशानं दृष्ट्वा जीवनार्थिनो बिभ्यति, तद्वदाश्विनं शस्त्रं भयहेतुरित्यर्थः। तत्कथमिति ? तदेवोच्यते—'निर्ऋतिः' मृत्युदेवता, सा च 'पाशिनी' पाशहस्ता सती 'उपास्ते' होतुः समीपे निवसति। केनाभिप्रायेणेति ? सोऽभिधीयते,— यदैवायं होता 'परिधास्यति' शस्त्रसमाप्तिं करिष्यति, तदैव बन्धनार्थं पाशान् अस्मिन् होतरि 'प्रतिमोक्ष्यामि' प्रजेष्यामि 'इति' तस्या अभिप्रायः। 'ततो वै' तस्मादेव निर्ऋत्याः परिहरणीयत्वकारणात् तदपाकरणार्थं बृहस्पतिः 'एतां' द्विपदां तत्परिहारहेतुत्वेनापश्यत्। काऽसौ द्विपदेति वीक्षायां तदीयो द्वितीयः पादो 'न या'-इत्यादिकः प्रदर्शनार्थमुपादीयते। 'तया' द्विपदया पाशहस्ताया निर्ऋत्या. सकाशाद् 'अधराचः' अधो लम्बमानान् पाशान् बृहस्पतिः 'अपास्यत्' द्विपदायां पठ्यमानायां तद्धस्तात् पाशाः पतिता इत्यर्थः। तद्वद्धोताऽपि द्विपदायाः शंसनेन पाशान् 'अपास्यति' निराकरोति। 'स्वस्त्येव' क्षेमेणैवायं होता निर्ऋतिपाशात् मुच्यते। ततः सर्वायुर्भवति, यजमानस्यापि सर्वायुत्वाय शंसनं संपद्यते॥

यह जो आश्विनशस्त्र है इसे अभिज्ञजन चिता का इन्धन सदृश शस्त्र [=चितैध-मुक्थम्] कहते हैं [अर्थात् श्मशान के समान आश्विनशस्त्र भी भय का हेतुभूत है]। क्योंकि मृत्युदेवता निर्ऋति हाथ में पाश लिए हुए होता के समीप में रहती है कि जैसे ही होता शस्त्र की समाप्ति करे वैसे ही पाशों को होता के ऊपर डाल दे। तभी से [इसे हटाने के लिए] बृहस्पति ने इस द्विपदा का दर्शन किया। 'जो न रोष करती है और न ग्रहण करती है' इससे पाशहस्त निर्ऋति से पाशों को बृहस्पति ने नीचे करके छीन लिया। अतः जो होता इस द्विपदा का शंसन करता है; उससे पाशहस्त निर्ऋति से ही नीचे रखकर पाशों को निराकृत करता है। क्षेम के न्ही द्वारा होता [निर्ऋति के पाश से] छुड़ाता है; जिससे वह पूर्णायु होता है और यजमान के लिए भी सम्पूर्ण आयु प्राप्त्यर्थ होता है।

वेदनं प्रशंसति—

**सर्वमायुरेति य एवं वेद॥** इति।

जो इस प्रकार जानता है वह सम्पूर्ण आयु प्राप्त करता है।

तत्र सूर्यस्यानतिक्रमं दर्शयति—

**मृचयस्य जन्मन इत्यसौ वाव मर्चयतीव; तेन सूर्यं नातिशंसति॥** इति।

द्विपदायां गतिवाची 'मृचय' शब्दोऽस्ति 'असौ वाव' आदित्योऽपि मर्चयतीव सर्वदा गच्छत्येव; 'तेन' सूर्याभिधानान्नास्त्यतिक्रमः॥

'मृचयस्य जन्मनः' में गत्यर्थक 'मृचय' शब्द है। यह आदित्य सर्वदा गतिशील ही है। उससे सूर्य का अतिक्रमण करके शंसन नहीं करता है।

बृहत्या अनतिक्रमं दर्शयति—

**यद्वु द्विपदा, पुरुषच्छन्दसं सा सर्वाणि च्छन्दांस्यभ्याप्ता; तेन बृहतीं नाति शंसति॥ १०॥** इति।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'यद्' यस्मादेव कारणादियं द्विपदा, तस्मादेव पुरुषसादृश्यात् पुरुषसम्बन्धच्छन्दो भवति। पुरुषश्च सर्वच्छन्दसां प्रयोक्तेति पुरुषद्वारा 'सा' द्विपदा सर्वाणि च्छन्दांस्यभितो व्याप्नोति। 'तेन' बृहत्या अपि व्याप्तत्वान्नास्त्यतिक्रमः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां द्वितीयाध्याये (सप्तदशाध्याये) चतुर्थः खण्डः ॥ ४ ॥ (१०) [१३१]

क्योंकि यह द्विपदा है, अतः पुरुष के [दो पैर होने से] सादृश्यतः पुरुष सम्बन्धी छन्द है। क्योंकि प्रयोग करने वाले पुरुष के द्वारा वह द्विपदा सभी छन्दों को व्याप्त कर लेती है। अतः उससे बृहती का अतिक्रमण करके शंसन नहीं करता है।

॥ इस प्रकार सत्रहवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

अथाश्विनस्य समाप्त्यर्थमेकामृचं विधत्ते—

**ब्राह्मणस्पत्यया परिदधाति; ब्रह्म वै बृहस्पतिर्ब्रह्मण्येवैनं तदन्ततः प्रतिष्ठापयति ॥ इति ।**

'बृहस्पते अति यदर्यः'[1] इत्येषा 'ब्राह्मणस्पत्या' बृहस्पतेर्देवेषु ब्राह्मणजातिस्वरूपत्वात्। तेन परिधानेनैतच्छस्त्रं 'ब्रह्मण्येव' ब्राह्मणरूपे बृहस्पतावेव प्रतिष्ठितं भवति ॥

iv. ११ [xvii. ५] ब्रह्मणस्पति देवताक ऋचा से कर्म की समाप्ति करता है। ब्रह्म ही बृहस्पति है। इस प्रकार उस [उपसंहार] से वह अन्ततः ब्राह्मण रूप बृहस्पति में ही इस [शस्त्र] को स्थापित करता है।

नित्यप्रयोगार्थं परिधानीयां विधाय काम्यप्रयोगं विधत्ते—

**'एवा पित्रे विश्वदेवाय वृष्णे'[2] इत्येतया परिदध्यात् प्रजाकामः पशुकामः ॥ इति ।**

जिसे पुत्रादि प्रजा और पशु की कामना हो, वह "एवा पित्रे' इत्यादि से कर्म को समाप्त करे।

तस्या ऋचस्तृतीयपादमनूद्य व्याचष्टे—

**'बृहस्पते सुप्रजा वीरवन्तः' इति प्रजया वै सुप्रजा वीरवान् ॥ इति ।**

पुत्रादिरूपया 'प्रजया' पिता 'सुप्रजाः' शोभनापत्यः 'वीरवान्' शूरभृत्ययुक्तश्च। तेन तृतीयपादोक्तं 'सुप्रजा वीरवन्तः' इत्येतदुपपन्नम् ॥

क्योंकि 'बृहस्पते सुप्रजा वीरवन्तः' में पुत्रादि रूप प्रजा से पिता का शोभन सन्तान से और शूर भृत्य से युक्त होना उपपन्न है।

---

१. ऋ० २.२३.१५। २. ऋ० ४.५०.६।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चतुर्थपादमनुवदति—

**'वयं स्याम पतयो रयीणाम्' इति ॥** इति ।

हे बृहस्पते, त्वत्प्रसादाद् वयं 'रयीणां' धनानां पतयः स्याम ॥

'हे बृहस्पति, तुम्हारे प्रसाद से हम धनों के स्वामी होवें ।'

अस्यार्थस्य स्पष्टत्वाद् व्याख्यानमुपेक्ष्य ज्ञानपूर्वकानुष्ठानं प्रशंसति—

**प्रजावान् पशुमान् रयिमान् वीरवान् भवति, यत्रैवं विद्वान् एतया परिदधाति ॥** इति ।

जिस कर्म में इस प्रकार जानते हुए जो इस ऋचा से कर्म की समाप्ति करता है वह प्रजा युक्त, पशु युक्त, धन युक्त और वीरवान् होता है ।

फलान्तरार्थम्[1] अन्यामृचं विधत्ते—

**'बृहस्पते अति यदर्यो अर्हाद्' इत्येतया[2] परिदध्यात्, तेजस्कामो ब्रह्मवर्चसकामोऽतीव वाऽन्यान् ब्रह्मवर्चसमर्हति ॥** इति ।

अत्र पादे योऽयमतिशब्दस्तत्प्रसादादनुष्ठाताऽन्यपुरुषान् 'अतीव' अतिक्रम्यैवाधिकं ब्रह्मवर्चसम् 'अर्हति' प्राप्नोतीत्यर्थः ॥

जिसे तेज और ब्रह्मवर्चस् की कामना हो, वह 'बृहस्पते अति' आदि इस ऋचा से उपसंहार करे । [इस पाद में 'अति' शब्द है उसके प्रसाद से अनुष्ठाता] अन्य पुरुषों की अपेक्षा अधिक ब्रह्मवर्चस को प्राप्त करता है ।

द्वितीयपादे प्रथमपदमनूद्य व्याचष्टे—

**द्युमदिति द्युमदिव वै ब्रह्मवर्चसं विभातीति, वीव वै ब्रह्मवर्चसं भाति ॥**इति।

'द्युमद् विभाति क्रतुमज्जनेषु'—इति द्वितीयः पादः । ब्रह्मवर्चसविशेषणत्वेन द्युतिमत्पर्यायो 'द्युमदिति' शब्दः प्रयुज्यते । श्रुताध्ययनसंपत्तिरूपं 'ब्रह्मवर्चसं' विद्वत्सभायां 'द्युमदिव वै' प्रकाशयुक्तमेव भूत्वा 'विभाति' सर्वेषामेव भासत 'इति' तस्य पदस्य तात्पर्यम् । एतत्पादशंसने ब्रह्मवर्चसं 'वीव वै' विशेषेणैव भाति ॥

इसमें 'द्युमत्' शब्द है । अतः विद्वत्सभा में ब्रह्मवर्चस् से 'प्रकाशयुक्त होकर वह सभी के बीच शोभित होता है'—इस पाद के शंसन से वह ब्रह्मवर्चस् से शोभित होता है ।

तृतीयपादमनूद्य व्याचष्टे—

**'यद् दीदयच्छवस ऋतप्रजात' इति, दीदायेव वै ब्रह्मवर्चसम् ॥** इति ।

अस्मिन्नपि पादे ब्रह्मवर्चसविशेषणत्वेन दीप्यमानत्ववाचकं दीदयदिति पदमस्ति; ब्रह्मवर्चसं 'दीदायेव वै' ब्राह्मणेषु दीप्यत एवेति तस्य पादस्यार्थः ॥

---

१. द्र० 'नित्यप्रयोगार्थञ्च' आश्व० श्रौ० ६.५.१९ । २. ऋ० २.२३.१५ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'यद् दीदयत् शवस ऋतप्रजात' में दीप्यमानत्व का वाचक 'दीदयत्' शब्द है। [ब्राह्मणों में] ब्रह्मवर्चस् प्रकाशित ही होता है।

चतुर्थपादमनूद्य व्याचष्टे—

**'तदस्मासु द्रविणं धेहि चित्रम्' इति, चित्रमिव वै ब्रह्मवर्चसम् ।।** इति।

अस्मिन् पादे यच्चित्रविशेषणं तद्युक्तमेव ब्रह्मवर्चसस्य वेदेन शास्त्रेणाऽऽचारेण च विचित्रत्वात् ।।

'तदस्मासु द्रविणं धेहि चित्रम्' इसमें 'चित्र' शब्द है। [वस्तुतः शास्त्र और आचार के ज्ञान से] ब्रह्मवर्चस् विचित्र ही है।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

**ब्रह्मवर्चसी ब्रह्मयशसी भवति, यत्रैवं विद्वानेतया परिदधाति ।।** इति।

'ब्रह्मवर्चसी' वृत्तसंपन्नः। 'ब्रह्मयशसी' तन्निमित्तकीर्तियुक्तः ।।

जो इस प्रकार जानते हुए इससे उपसंहार करता है वह ब्रह्मवर्चस्वी और ब्रह्मयशसी [=उससे प्राप्त कीर्ति वाला] होता है।

उक्तमर्थं निगमयति—

**तस्मादेवं विद्वानेतया परिदध्यात् ।।** इति।

इसलिए इस प्रकार जानकर इससे उपसंहार करना चाहिए।

सूर्यस्यानतिक्रमं दर्शयति—

**ब्राह्मणस्पत्या; तेन सूर्यं नाति शंसति ।।** इति।

यस्माद् इयमृक् ब्रह्मणस्पतिदेवताका, सूर्यश्च संध्योपासनादौ ब्राह्मणानां स्वामी, तस्मान्नातिक्रमः ।।

क्योंकि [सन्ध्यावन्दन में ब्राह्मणों के स्वामी सूर्य हैं और] यह ऋचा ब्रह्मणस्पति देवताक है। अतः उससे सूर्य का अतिक्रमण करके शंसन नहीं करता है।

बृहत्या अनतिक्रमं दर्शयति—

**यद्वु त्रिष्टुभं त्रिः शंसति; सा सर्वाणि च्छन्दांस्यभ्याप्ता; तेन बृहतीं नाति शंसति ।।** इति।

'त्रिः प्रथमां त्रिरुत्तमाम्'-इति न्यायेन[1] परिधानीयायास्त्रिरावृत्तिरस्ति; इयं त्रिष्टुप् त्रिरावर्त्यमाना द्वात्रिंशदधिकशताक्षरा संपद्यते। तेष्वक्षरेषु सर्वच्छन्दसामन्तर्भावयितुं शक्यत्वाद् इयं सर्वाणि च्छन्दांस्यभितो व्याप्नोति; अतो बृहत्या अपि तद् व्याप्तत्वान्नास्त्यतिक्रमः। यदुक्तं सूत्रकारेण—'आश्विनेन ग्रहेण सपुरोळाशेन चरन्ति'[2] इति ।।

---

१. द्र० इतः पूर्वम् ८९ पृष्ठे।　　　　२. आश्व० श्रौ० ६.५.२३।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जो त्रिष्टुभ छन्दस्क [परिधानीया] ऋचा का तीन बार शंसन है; [१३२ अक्षर होने के कारण सभी छन्दों का उसमें अन्तर्भाव होने से] वह सभी छन्दों को व्याप्त कर लेता है। उससे बृहती छन्द का अतिक्रमण करके शंसन नहीं करता है।

तत्रोभयार्थं द्वे याज्ये विधत्ते—

**गायत्र्या च त्रिष्टुभा च वषट्कुर्यात् ॥** इति ।

'उभा पिबतमश्विना'[1]—इति गायत्री। 'अश्विना वायुना'[2]—इति त्रिष्टुप्। ताभ्यां 'वषट्कुर्यात्' याज्यात्वेन तदुभयं पठेद् इत्यर्थः ॥

गायत्री और त्रिष्टुभ छन्दस्क ऋचा से वषट्कार करना चाहिए।

तदेतदुभयं प्रशंसति—

**ब्रह्म वै गायत्री, वीर्यं त्रिष्टुब्; ब्रह्मणैव तद्वीर्यं संदधाति ॥** इति ।

गायत्र्या ब्राह्मणस्य च प्रजापतिमुखजत्वसाम्यादेकत्वं[3] त्रिष्टुभो वीर्यहेतुत्वात् तद्रूपत्वम्[4]। तदुभयपाठे सति ब्राह्मण्येन सह वीर्यं संपादयति ॥

[ब्राह्मण व प्रजापति के मुख से उत्पन्न होने के कारण] ब्रह्म ही गायत्री है और वीर्य त्रिष्टुभ है। उन [दोनों के पाठ] से वह ब्रह्म के साथ वीर्य को जोड़ता है।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

**ब्रह्मवर्चसी ब्रह्मयशसी वीर्यवान् भवति, यत्रैवं विद्वान् गायत्र्या च त्रिष्टुभा च वषट्करोति ॥** इति ।

जो इस प्रकार जानते हुए गायत्री और त्रिष्टुभ छन्दस्क ऋचा से वषट्कार करता है; वह ब्रह्मवर्चस्वी, ब्रह्मयशसी और वीर्यवान् होता है।

तदुक्तयोर्गायत्रीत्रिष्टुभोः प्रतीकद्वयं दर्शयति —

**अश्विना वायुना युवं सुदक्षोभा पिबतमश्विनेति ॥** इति ।

'अश्विना'—इत्यादिकं त्रिष्टुभः प्रतीकम्, 'उभा पिबतम्'—इत्यादिकं गायत्र्याः प्रतीकम्। एते त्रिष्टुब्गायत्र्यौ याज्ये इत्येकः पक्षः ॥

'अश्विना वायुना' और 'उभा पिबत' क्रमशः त्रिष्टुप् और गायत्री छन्दस्का याज्या हैं।

पक्षान्तरं विधत्ते—

**गायत्र्या च विराजा च वषट्कुर्याद्, ब्रह्म वै गायत्र्यन्नं विराड्; ब्रह्मणैव तदन्नाद्यं संदधाति ॥** इति ।

गायत्र्या ब्रह्मत्वं पूर्वमुक्तम्; विराजोऽन्नसाधनत्वादन्नत्वम्। अतस्तदुभयपाठे सत्यन्नाद्यम् 'आद्यम्' अन्नं ब्राह्मणजात्या संयोजयति ॥

---

१. ऋ० १.४६.१५।  २. ऋ० ३.५८.७।

३. ४. द्र० इतः पूर्वम्, पृ० १७, पं० ३, पृ० २२, पं० १७।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[द्वितीय पक्ष है कि] गायत्री और विराज से वषट्कार करना चाहिए। गायत्री ब्रह्म है और विराट् अन्न है। इस प्रकार वह ब्रह्म के साथ अन्न को मिलाता है।

वेदनपूर्वकमनुष्ठानं प्रशंसति---

**ब्रह्मवर्चसी ब्रह्मयशसी भवति, ब्रह्माद्यमन्नमत्ति, यत्रैवं विद्वान् गायत्र्या च विराजा च वषट्करोति ॥ इति ।**

ब्राह्मणेनात्तुं योग्यं पवित्रीभूतं 'ब्रह्माद्यम्' ॥

जो इस प्रकार जानकर गायत्री और विराज से वषट्कार करता है, वह ब्रह्मवर्चस्वी और ब्रह्मयशसी होता है; तथा [ब्राह्मण के द्वारा भोजन के योग्य] पवित्र अन्न का भोजन करता है।

तयोर्गायत्रीविराजोः प्रतीकप्रदर्शनपुरःसरमेतं पक्षं निगमयति---

**तस्मादेवं विद्वान् गायत्र्या चैव विराजा च वषट्कुर्यात् प्र वामन्धांसि मद्यान्यस्थुरुभा पिबतमश्विनेत्येताभ्याम् ॥ ११ ॥ इति ।**

'प्र वामन्धांसि'[1]–इति विराट् । 'उभा पिबतम्'[2]–इति गायत्री । गायत्र्या चैव विराजा चैवेत्येवकारेण पूर्वोक्तस्य त्रिष्टुप्पक्षस्य व्यावृत्तिः । तस्मादपि विराट्पक्षः प्रशस्त इत्यर्थः[3] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां द्वितीयाध्याये (सप्तदशाध्याये) पञ्चमः खण्डः ॥ ५ ॥ (११) [१३२]

इसलिए इस प्रकार जानकर गायत्री और विराज से ही वषट्कार करना चाहिए। 'प्र वामन्धांसि' और 'उभा पिबतम्' [क्रमशः विराट् और गायत्री हैं] इनसे [वषट्कार करे]।

॥ इस प्रकार सत्रहवें अध्याय के पञ्चम खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

अग्निष्टोम उक्थ्यः षोडश्यतिरात्रश्चेत्येवं चतुःसंस्थो ज्योतिष्टोमः सार्धेनाध्यायषोडशकेनाभिहितः । अथैतच्चतुष्टयमुपजीव्य प्रवर्तमानं 'गवामयनं' नामकं संवत्सरसत्रमभि-

---

१. ऋ० ७.३८.२ ।　　　　२. ऋ० १.४६.१५ ।

३. 'अहर्वै'---इत्यारभ्य ५८८ पृ० एतदन्ता उक्ता अतिरात्रविधयः; आश्व० श्रौ० सूत्रेऽप्येवम् 'अतिरात्रे'–इत्यारभ्य कण्डिकाद्वये (६.४.५); 'अतिरात्रेण प्रजाकामः पशुकामो वा'–इति आपस्तम्बीयविधिसूत्रम् (१४.१.२) । यथोक्तं सायणीयमुपक्रमे 'चतुःसंस्थो ज्योतिष्टोमः प्रथमं विधीयते'–इति ९ पृष्ठे, अग्निष्टोम···'वक्ष्यन्ते' इति च ९–१० पृष्ठे; तत्सर्वमेतदन्तं ज्ञातव्यम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

धातव्यम्[1] । संवत्सरगतेषु षष्ट्यधिकशतत्रयदिवसेष्वेकैकस्मिन् दिवसे पूर्वोक्तानां चतसृणां संस्थानां मध्ये कयाचित्संस्थया युक्तः सोमप्रयोगः सर्वोऽप्यनुष्ठेयः । सोऽयमेकैकदिनसाध्यः सोमप्रयोगो वेदेष्वहःशब्देन व्यवह्रियते । संवत्सरसत्रस्याद्ये दिवसे कश्चिदतिरात्रसंस्थः सोमप्रयोगोऽनुष्ठेयः । तदनन्तरभाविनि द्वितीयदिवसेऽनुष्ठेयं सोमप्रयोगं विधत्ते—

**चतुर्विंशमेतदहरुपयन्त्यारम्भणीयम्** ॥ इति ।

'चतुर्विंश' नामकः कश्चित्सोमविशेषः । स च च्छन्दोगैरेवमाम्नायते—'अष्टाभ्यो हिंकरोति, स तिसृभिः स चतसृभिः स एकया । अष्टाभ्यो हिंकरोति, स एकया स तिसृभिः स चतसृभिः । अष्टाभ्यो हिंकरोति, स चतसृभिः स एकया स तिसृभिः'[2] इति । अस्यायमर्थः—स्तोत्रस्याधारभूते तृचे विद्यमानास्तिस्र ऋच आवृत्तिविशेषेण चतुर्विंशति-संख्याका ऋचः कर्तव्याः । सा चावृत्तिस्त्रिभिः पर्यायैः संपद्यते । तत्र प्रथमे पर्याये प्रथमामृचं त्रिरभ्यस्य 'सः' उद्गाता ताभिस्तिसृभिर्गायेत् । द्वितीयामृचं चतुर्वारमभ्यस्य ताभिश्चतसृभिर्गायेत् । तृतीयाया ऋचः सकृदेव पाठो न चावृत्तिः एवं प्रथमपर्यायेऽष्टौ ऋचः संपद्यन्ते । ताभिः 'हिंकरोति' उद्गायेत् । द्वितीयपर्याये प्रथमायाः सकृत्पाठः, द्वितीयायास्त्रिरावृत्तिः । तृतीयायाश्चतुरावृत्तिः, इत्येवमत्राप्यष्टौ संपद्यन्ते । तृतीयपर्याये प्रथमायाश्चतुरावृत्तिः, द्वितीयायाः सकृत्पाठः, तृतीयायास्त्रिरावृत्तिः, इत्येवमत्राप्यष्टौ संपद्यन्ते । तत्सर्वं मिलित्वा चतुर्विंशतिसंख्या ऋचो भवन्ति । सोऽयं चतुर्विंशतिस्तोमोऽनेन स्तोत्राणि यस्मिन्नहनि निष्पाद्यन्ते, तदहः 'चतुर्विंशम्' तादृशमेतदहः 'उपयन्ति' अनुतिष्ठेयुः । अत्र सत्रेषु सर्वत्रोपयन्त्यासत इति शब्दावनुष्ठानपरौ; एताभ्यां विधानमेव सत्र-त्वलिङ्गम् । 'तत्र ये यजमानास्त ऋत्विजः' इति श्रुत्यन्तरादृत्विजां सर्वेषां यजमानत्वेनो-पयन्तीति बहुवचनम् । तस्यैतस्याह्न 'आरम्भणीयम्'–इति नामधेयम् ॥

**[चतुर्विंश और महाव्रत दिन]—**

**iv. १२ [xvii. ६] अब चतुर्विंश दिन [जिस दिन २४ ऋचा से कृत्य होता है] का अनुष्ठान करते हैं । यह आरम्भणीय दिन है ।**

तस्यैतस्य नाम्नो निर्वचनं दर्शयति—

**एतेन वै संवत्सरमारभन्ते, एतेन स्तोमांश्च च्छन्दांसि चैतेन सर्वा देवताः; अनारब्धं वै तच्छन्दोऽनारब्धा सा देवता, यदेतस्मिन्नहनि नारभन्ते; तदारम्भणीयस्यारम्भणीयत्वम्** ॥ इति ।

एतेनैव चतुर्विंशेनाह्ना सत्रिणः 'संवत्सरं' सत्रमारभन्ते । तत्र सामगैः प्रयोक्तव्या ये स्तोमाः, बह्वृचैः प्रयोक्तव्यानि यानि च्छन्दांसि, याश्च तत्तन्मन्त्रप्रतिपाद्याः सर्वा देवताः,

---

१. सामब्राह्मणे चैतत् चतुर्थपञ्चमप्रपाठकयोराम्नातम् ।

२. ता० ब्रा० ३.८ । पृष्ठ्यषडहस्य त्रिवृदादयः षट्स्तोमाः, ततश्छन्दोमानां चतुर्विंशा-दयस्त्रयः स्तोमा आम्नाताः; तेष्वयं प्रथमः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्सर्वमनेनैवाह्नारभन्ते । यदि कथंचिदेतस्मिन्नहनि च्छन्दो वा देवतान्तरं वा नारभेरन्, तदनीमन्यस्मिन्नहन्यारब्धमपि च्छन्दोदेवतादिकमनारब्धसदृशमेव भवति । तस्मात् अस्मिन्नेवाहनि सर्वस्य मुख्यः प्रारम्भः । तथा सत्यारभ्यते सर्वस्मिन्नहनीति व्युत्पत्त्या 'आरम्भणीयं' नाम संपन्नम् । यद्यप्येतस्मादह्नः पूर्वभाविनी प्रायणीयाख्येऽह्नि सत्रं प्रारब्धम्, तथाऽपि तस्य प्रायणीयस्यातिरात्रसंयुक्तस्य संवत्सरोपक्रमसाधारणत्वात् अस्य सत्रस्य विशेषेण प्रारम्भोऽस्मिन्नेव भवतीत्यभिप्रेत्यैतस्यारम्भणीयत्वमेव युक्तम् ॥

इसी से संवत्सर सत्र का आरम्भ किया जाता है। इसीसे [सामगान करने वालों के] स्तोमों का, इसीसे [ऋग्वेदियों के] छन्दों का और इसीसे [उन-उन मन्त्र प्रतिपादित] सभी देवों का आरम्भ किया जाता है। यदि किसी प्रकार इस दिन आरम्भ नहीं किया जाता है तो [दूसरे दिन का आरम्भ हुआ] वह छन्द आरम्भ न किए हुए के समान है और वह देवता भी आरम्भ न किए हुए के समान है। इसीलिए इस [दिन] का नाम 'आरम्भणीय' पड़ा।

अस्मिन्नहनि स्तोमविशेषं विधत्ते—

**चतुर्विंशस्तोमो भवति; तच्चतुर्विंशस्य चतुर्विंशत्वम् ॥** इति ।

यान्यत्र स्तोत्राणि सन्ति, तेषु सर्वेषु यः पूर्वमुदाहृतश्चतुर्विंशत्व संख्यासंपादनरूपः स्तोमः, स एव कर्तव्यः । ईदृशस्तोमयोगादेवाह्नोऽपि चतुर्विंशं नाम संपन्नम् ॥

इस दिन चौविस स्तोम [कर्तव्य] होता है इसीलिए [चौबिस स्तोम से युक्त] इस दिन का] 'चतुर्विंश' नाम पड़ा।

तं स्तोमं प्रशंसति—

**चतुर्विंशतिर्वा अर्धमासा, अर्धमासश एव तत्संवत्सरमारभन्ते ॥** इति ।

द्वादशसु मासेषु विद्यमाना अर्धमासाश्चतुर्विंशतिसंख्याकाः । तथा सत्यर्धमासशब्द एकमर्धमासं समाप्य पुनरप्यपरोऽर्धमास इत्येवं क्रमेण चतुर्विंशतिसंपत्तौ संवत्सरसत्रप्रारम्भो भवति । तस्माच्चतुर्विंशस्तोमः प्रशस्तः ॥

अथवा [१२ मास में] चौवीस पक्ष [अर्धमास] होते हैं। इस प्रकार आधे-आधे मास करके [क्रमशः चौबीस अर्धमासों में] उस संवत्सरसत्र का प्रारम्भ करते हैं।

एतस्मिन्नहनि सोमयागस्य संस्थाविशेषं विधत्ते—

**उक्थ्यो भवति; पशवो वा उक्थानि, पशूनामवरुद्ध्यै ॥** इति ।

अग्निष्टोमाद् ऊर्ध्वभावी योऽयमुक्थ्योऽस्ति[1], सोऽस्मिन्नहनि प्रयोक्तव्यः । तत्र द्वादशस्तोत्रेभ्य उत्तराणि त्रीण्युक्थनामकानि स्तोत्राणि; तेषां पशुप्राप्तिहेतुत्वात् पशुत्वम् । अत उक्थ्यानुष्ठानं पशुप्राप्तये भवति ॥

---

१. द्र० इतः पूर्वम्, ५६५–५७१ पृ० ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'उक्थ्य' [भी उसी दिन] होता है। उक्थ्य पशु हैं। [अतः उक्थ्य का अनुष्ठान] पशुओं की प्राप्ति के लिए होता है।

तस्मिन्नहनि चोदकप्राप्तस्तोत्रशस्त्रसंख्यां प्रशंसति—

**तस्य पञ्चदश स्तोत्राणि भवन्ति, पञ्चदश शस्त्राणि; स मासो, मासश एव तत्संवत्सरमारभन्ते ॥** इति।

मासगतानां दिवसानां त्रिंशत्त्वात् स्तोत्रशस्त्रसंख्यायाश्च तथात्वान्मासत्वसंपत्तिः। 'मासशः' एकैकमासक्रमेणेत्यर्थः ॥

उस [उक्थ्य] के पन्द्रह स्तोत्र होते हैं और पन्द्रह शस्त्र। इस प्रकार [मास में ३० दिन होने से] एक-एक मास करके ही उस संवत्सर सत्र का आरम्भ करते हैं।

स्तोत्रगतानामृचां संख्यां प्रशंसति—

**तस्य षष्टिश्च त्रीणि च शतानि स्तोत्रियास्तावन्ति संवत्सरस्याहान्यहःश एव तत्संवत्सरमारभन्ते ॥** इति।

एकैकस्य स्तोत्रस्य चतुर्विंशतिसंख्याया वृत्तत्वात् तत्रत्यः स्तोत्रयोग्या ऋचश्चतुर्विंशतिः संपद्यन्ते। तथा सति दशसु स्तोत्रेषु चत्वारिंशदधिकं शतद्वयम्, पञ्चसु स्तोत्रेषु विंशत्यधिकमेकं शतम्, एतदुभयं मिलित्वा षष्ट्यधिकशतत्रयसंख्याकाः स्तोत्रियाः संपद्यन्ते। संवत्सरसम्बन्धीन्यहान्यपि तत्संख्याकानि; तथा सति 'अहःशः' अहःक्रमेणैव संवत्सरसत्रमारभन्ते। तदेवमुक्तपक्ष उपपादितः[1] ॥

उस [उक्थ्य] के तीन सौ साठ स्तोत्रिय मन्त्र होते हैं। एक वर्ष में उतने ही दिन होते हैं। इस प्रकार अहः क्रम से ही संवत्सर सत्र आरम्भ किए जाते हैं।

अथ पक्षान्तरं[2] विधत्ते—

**अग्निष्टोम एतदहः स्यादित्याहुरग्निष्टोमो वै संवत्सरो; न वा एतदन्योऽग्निष्टोमादहर्दाधार; न विव्याचेति ॥** इति।

यदिदं द्वितीयमहः, सोऽग्निष्टोमः कर्तव्यः। अग्निष्टोमस्य संवत्सरसत्ररूपत्वात्। कथमिति चेत्, तदुच्यते—'अग्निष्टोमादन्यः' उक्थ्यादिरूपः कश्चिदपि क्रतुः संवत्सरसत्रावयवभूतः, एतदहः 'नैव दाधार' नैव धारयितुं शक्तः। अनुपदिष्टान्यङ्गानि सर्वाण्यग्निष्टोमादतिदिश्यन्ते; तदेतदग्निष्टोमस्य धारयितृत्वम्। तस्मादग्निष्टोमव्यतिरिक्तः क्रतुरेतदहः 'न विव्याच' विवेक्तुमनुष्ठापयितुं न शक्तः। 'इति' एवं पक्षान्तरवादिनामभिप्रायः ॥

---

१. 'चतुर्विंशं भवति'·'प्रतितिष्ठन्ति'—इति च ता० ब्रा० ४.२.४–१०।

२. सामब्राह्मणेपि एवमेव पक्षान्तरं द्रष्टव्यम् (ता० ब्रा० ४.२.११, १२)।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[दूसरा पक्ष है कि] 'इस दिन अग्निष्टोम होना चाहिए'—ऐसा कुछ लोग कहते हैं। क्योंकि अग्निष्टोम संवत्सर है और इस अग्निष्टोम को छोड़कर कोई अन्य [उक्थ्यादि क्रतु] इस दिन को धारण करने में समर्थ नहीं है।

अस्मिन् पक्षे स्तोमविशेषं विधत्ते—

**स यद्यग्निष्टोमः स्यादष्टाचत्वारिंशास्त्रयः पवमानाः स्युश्चतुर्विंशानीतराणि स्तोत्राणि; तदु षष्टिश्चैव त्रीणि च शतानि स्तोत्रियास्तावन्ति संवत्सरस्याहान्यहःश एव तत्संवत्सरमारभन्ते ॥** इति ।

अग्निष्टोमपक्षे बहिष्पवमानमाध्यंदिनपवमानार्भवपवमानेषु त्रिषु स्तोत्रेष्वष्टाचत्वारिंशनामकः स्तोमः कर्तव्यः । स च च्छन्दोगैरेवमाम्नातः—'षोडशभ्यो हिंकरोति, स तिसृभिः स द्वादशभिः स एकया, षोडशभ्यो हिंकरोति, स एकया स तिसृभिः स द्वादशभिः, षोडशभ्यो हिंकरोति, स द्वादशभिः स एकया स तिसृभिः'[1] इति । प्रथमे पर्याये प्रथमाया ऋचस्त्रिरावृत्तिः, द्वितीयाया द्वादशकृत्व आवृत्तिः, तृतीयायाः सकृत्पाठः; द्वितीयपर्याये प्रथमायाः सकृत्पाठः, द्वितीयायास्त्रिरावृत्तिः, तृतीयाया द्वादशकृत्व आवृत्तिः । तृतीयपर्याये प्रथमाया द्वादशकृत्व आवृत्तिः, द्वितीयायाः सकृत्पाठः तृतीयायास्त्रिरावृत्तिः, मिलित्वाऽष्टाचत्वारिंशत् स्तोत्रीयाः संपद्यन्ते । सोऽयमष्टाचत्वारिंशः स्तोमः । तमेतं पवमानेषु त्रिषु कृत्वा शिष्टेषु नवसु स्तोत्रेषु चतुर्विंशस्तोमं कुर्यात् । तथा सति पवमानस्तोत्रेषु चतुश्चत्वारिंशदधिकशतसंख्याकाः स्तोत्रियाः संपद्यन्ते । इतरस्तोत्रेषु षोडशाधिकशतद्वयसंख्याकाः, ततो मिलित्वा षष्ट्यधिकशतत्रयसंख्याका भवन्ति । संवत्सरगतानामह्नामपि तावत्त्वादहः क्रमेणैव संवत्सरमारभन्ते ॥

यदि इस दिन अग्निष्टोम करे तो [बहिः, माध्यन्दिन और आर्भव] तीनों पवमानों में अष्टाचत्वारिंश [४८ स्तोत्रों में] स्तोम करना चाहिए और दूसरे [शेष नौ] स्तोत्रों में चतुर्विंशस्तोम करना चाहिए। इस प्रकार [पवमानस्तोत्रों में ३ × ४८ = १४४ स्तोत्रिय मन्त्र और अन्य स्तोत्रों में ९ × २४ = २१६ मन्त्र मिलकर कुल] तीन सौ साठ स्तोत्रिय मन्त्र होते हैं। एक वर्ष में उतने ही दिन होते हैं। इस प्रकार अहः क्रम से ही संवत्सर सत्र प्रारम्भ किए जाते हैं।

एवं पक्षद्वयमुपन्यस्य तयोः समविकल्पत्वमभिप्रेत्य पुनरपि पूर्वोक्तम् उक्थ्यम् उपन्यस्यति—

**उक्थ्य एव स्यात् पशुसमृद्धो यज्ञः, पशुसमृद्धं सत्रं, सर्वाणि चतुर्विंशानि स्तोत्राणि प्रत्यक्षाद्ध्येतदहश्चतुर्विंशं; तस्मादुक्थ्य एव स्यात् ॥ १२ ॥** इति ।

---

१ एषाष्टाविंशस्य 'प्रतिष्ठिता' विष्टुतिः (ता० ब्रा० ३.१२) आम्नाता चापरा ततस्तत्रैव 'नेदीयःसङ्क्रमा'-इति (३.१३)।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उक्थ्यस्तोत्राणां पशुसाधनत्वात् उक्थ्यो यज्ञः पशुसमृद्धः, सत्रं च पशुसमृद्धं कर्तव्यम् । किंच उक्थ्यपक्षे सर्वाणि स्तोत्राणि चतुर्विंशस्तोमकानि; सत्यग्निष्टोमपक्षे पवमानव्यतिरिक्तान्येव । तथा सति प्रत्यक्षात् मुख्यवृत्त्यैवैतदहश्चतुर्विंशं भवति; संख्यान्तरस्य कुत्राप्यप्रविष्टत्वात् । 'तस्मादुक्थ्य एव' कार्यः[१] । एवशब्दो विकल्पार्थः; 'अग्निष्टोम इदमहरुक्थ्यो वा'—इति सूत्रकारवचनात्[२] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां द्वितीयाध्याये (सप्तदशाध्याये) षष्ठः खण्डः ॥६॥ (१२) [१३३]

किन्तु उक्थ्य को ही करना चाहिए क्योंकि [उक्थ्यस्तोत्र पशु का साधन है अतः] यज्ञ पशु [याग] से समृद्ध होता है और पशु [याग] से सत्र समृद्ध होता है। सभी स्तोत्र चतुर्विंश होते हैं; क्योंकि यह प्रत्यक्षरूप से चतुर्विंश दिन होता है । इसीलिए यह उक्थ्य ही होवे ।

॥ इस प्रकार सत्रहवें अध्याय के षष्ठ खण्ड की हिन्दी पूर्ण हुई ॥ ६ ॥

## अथ सप्तमः खण्डः

पृष्ठस्तोत्रे चोदकप्राप्तं विकल्पितं[३] सामद्वयमनूद्य प्रशंसति—

**बृहद्रथंतरे सामनी भवत; एते वै यज्ञस्य नावौ संपारिण्यौ यद्बृहद्रथंतरे; ताभ्यामेव तत्संवत्सरं तरन्ति ॥** इति ।

'त्वामिद्धि हवामहे' इत्यस्यामृच्युत्पन्नं साम 'बृहत्'[४] । 'अभि त्वा शूर नोनुमः' इत्यस्यामृच्युत्पन्नं 'रथन्तरम्'[५] । एते उभे अपि यज्ञाख्यस्य समुद्रस्य सम्यक्परतीरप्राप्तिसाधनभूते नावौ । संवत्सरसत्रस्य समुद्ररूपत्वं शाखान्तरे दर्शितम्—'समुद्रं वा एते प्लवन्ते, ये संवत्सरमुपयन्ति'[६] इति । तथा सति तत्पारनयनहेत्वोः साम्नोर्नौरूपत्वं युक्तम् । अतो बृहद्रथंतररूपाभ्यां नौभ्यामेव संवत्सरसत्ररूपं समुद्रं 'तरन्ति' गवामयनस्य पारं गच्छन्तीत्यर्थः ॥

---

१. सामब्राह्मणेऽपि एवं द्रष्टव्यम् ( ता० ब्रा० ४.२.१३, १४ ) ।
२. आश्व० श्रौ० ७.४.१४, १५ ।
३. 'रथन्तरसाम्ना बृहत्साम्नोऽन्यसाम्ना वा प्रथमं यजेत'— इति आप० श्रौ० १०.२.६ ।
४. छ० आ० ३.१.५.२ ऋचि आर० ग्रा० १.१.२७ बृहत् ( योनिसाम ); उ० आ० २.१.१२.१, २ ऋचोः प्रगाथतृचे ऊह्य० ग्रा० १.१.५ बृहत् ( स्तोत्रम् ) ।
५. छ० आ० ३.१.५.१ ऋचि आर० गा० २.१.२१ रथन्तरं ( योनिसाम ); उ० आ० १.१.११.१, २ ऋचोः प्रगाथतृचे ऊह्य० गा० १.१.१ रथन्तरं ( स्तोत्रम् ) ।
६. तै० सं० ७.५.१.२ । एवमेव ता० ब्रा० ५.८.४.६ ( प्लवसाम ) गे० गा० १४.१.३४ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

iv. १३ [xvii. ७] [संवत्सर सत्र के] बृहद् और रथन्तर नामक दो साम होते हैं। ये दोनों जो बृहद् और रथन्तर हैं; वे यज्ञ की दो नावें हैं; जो यज्ञ समुद्र के उस पार पहुँचाने वाली हैं। इन्हीं दोनों के द्वारा वे उस संवत्सर [सत्र रूप समुद्र] को पार करते हैं।

प्रकारान्तरेण प्रशंसति—

**पादौ वै बृहद्रथंतरे; शिर एतद् अहः, पादाभ्यामेव तच्छ्रियं शिरोऽभ्यायन्ति ।। इति ।**

यथा मनुष्यस्य पादौ, तथा सत्रस्य 'बृहद्रथन्तरे' सामनी। 'एतत्' आरम्भणीयमहः शिरःस्थानीयम्। ततो यथा लोके पुरुषाः पादाभ्यामेव देशान्तरात् स्वगृहे गत्वा, तत्र शिरोऽभिलक्ष्याभ्यङ्गकर्णाभरणादिरूपां 'श्रियमायन्ति' प्राप्नुवन्ति, एवमेते सत्रिणः सामभ्यामेतदहः प्राप्नुवन्ति ।।

अथवा, बृहद् और रथन्तर [इस सत्र के] पैर हैं और यह [आरम्भणीय] दिन शिरस्थानीय है। वस्तुतः इस प्रकार दो पैरों से ही शिरस्थानीय श्री को प्राप्त करते हैं।

पुनरपि प्रकारान्तरेण प्रशंसति—

**पक्षौ वै बृहद्रथंतरे, शिर एतद् अहः; पक्षाभ्यामेव तच्छ्रियं शिरोऽभ्यायुवते ।। इति ।**

यथा लोके पक्षी पक्षाभ्यामेवाकाशे संचरन्, शिरोऽभिलक्ष्य नानाविधदिग्दर्शनरूपां 'श्रियं' मिश्रयति; एवमत्रापि सामभ्यामेतस्मिन्नहनि 'श्रियम्' अनुष्ठानरूपां सत्रिणो 'युवते' मिश्रयन्ति ।।

अथवा, बृहद् और रथन्तर [इस सत्र के] दो पङ्ख हैं; यह दिन सिर है; वस्तुतः इस प्रकार पङ्खों के द्वारा वे शिरस्थानीय अनुष्ठानरूप श्री से मिलाते हैं।

सामद्वयस्य परित्यागं निषेधति—

**ते उभे न समवसृज्ये; य उभे समवसृजेयुर्यथैव च्छिन्ना नौर्बन्धनात् तीरं तीरम् ऋच्छन्ती प्लवेतैवमेव ते सत्रिणस्तीरं तीरम् ऋच्छन्तः प्लवेरन्, य उभे समवसृजेयुः ।। इति ।**

'उभे' सामनी 'न समवसृज्ये' न परित्याज्ये; एकस्याप्यननुष्ठानमुभयपरित्यागः। 'ये' सत्रिणोऽनभिज्ञाः सन्त उभयं परित्यजन्ति, तेषां छिन्ननौसादृश्यं प्रसज्येत। लोके हि नाविकः सायंकाले नावं कयाचिद्रज्ज्वा तीरस्थे स्थाणौ बध्नाति; यदा प्रवाहवेगाद् रात्रौ सा रज्जुस्त्रुटचति, तदानीं बन्धनस्थाणोश्छिन्ना नौः प्रवाहवेगेनेतस्ततो नीयमाना परतीरम् अर्वाक् तीरं च पुनः पुनः प्राप्नुवती रक्षकाभावात् 'प्लवेत' यत्र क्वापि गच्छेत्। एवमेव ते सत्रिणः सामद्वयाभावे तत्तत्तीरसदृशानहर्विशेषान् 'ऋच्छन्तः' अनुतिष्ठन्तोऽपि 'प्लवेरन्' विनश्येयुरित्यर्थः। ये सामद्वयमपि परित्यजन्ति, तेषामेवायं दोष इति 'दर्शयितुं' 'य उभे समवसृजेयुः'—इति पुनरभिधानम् ।।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इन दोनों सामों को एक साथ नहीं छोड़ना चाहिए। जो [अनभिज्ञ] दोनों को ही छोड़ देते हैं उनका सत्र खुली हुई उस नाव के समान हो जाता है, जो बन्धन से विच्छिन्न होकर इस तीर से उस तीर जहाँ-कहीं भी जाती हुई उतराती रहती है; उसी प्रकार वे सत्र कर्ता भी तट-तट पर अनुष्ठान करते हुए भी उतराते रहते हैं [यज्ञ के किनारे पर नहीं पहुँचते]। अतः जो दोनों को छोड़ देते हैं [वह उनका दोष है]।

उभयोः साम्नोर्विकल्पितत्वादेकपरित्यागे दोषो नास्तीत्येतद् दर्शयति—

**तद् यदि रथंतरमवसृजेयुर्बृहतैवोभे अनवसृष्टे; अथ यदि बृहदवसृजेयू रथंतरेणैवोभे अनवसृष्टे ॥ इति ।**

'तत्' तयोः साम्नोर्मध्ये यदा रथंतरं परित्यजेयुः,—बृहदेवानुतिष्ठेयुः, तदा बृहतैव प्रयोगसंपूर्तेः फलत उभयमप्यपरित्यक्तमेव भवति। एवं बृहत्परित्यागपक्षेऽपि रथंतरेणैव संपूर्तिः ॥

यदि वे रथन्तर को [एक] किनारे पर रख देते हैं, तो बृहद् से ही दोनों [किनारे] अपरित्यक्त होते हैं और यदि बृहद् को किनारे पर कर देते हैं तो रथन्तर से ही दोनों परित्यक्त नहीं होते हैं।

प्रकारान्तरेण सामद्वयं प्रशंसति—

**यद्वै रथंतरं तद् वैरूपं, यद्बृहत् तद् वैराजं, यद्रथंतरं तच्छाक्वरं, यद्बृहत् तद् रैवतम्; एवमेते उभे अनवसृष्टे भवतः ॥ इति ।**

पृष्ठ्यषडहे[1] षट्स्वपि दिवसेषु क्रमेण पृष्ठस्तोत्रनिष्पादकानि षट्सामानि,—रथंतरं, बृहद्, वैरूपं, वैराजं, शाक्वरं, रैवतमिति। तत्र रथंतरस्य बृहतश्चोत्पत्तिस्थानं पूर्वमुक्तम्[2]। 'यद्द्याव इन्द्र ते शतम्' इत्यस्यामृच्युत्पन्नं वैरूपं साम[3]। 'पिबा सोममिन्द्र मन्दतु त्वा' इत्यस्यामृच्युत्पन्नं वैराजं साम[4]। 'प्रोष्वस्मै पुरोरथम्' इत्यस्यां गीयमानं

---

१. 'पृष्ठ्यः षडहो भवति'—इति तै० सं० ७.२.६.२। पृष्ठानां समूहः पृष्ठ्यः पा० सू० ४.२.४२ वा०। 'अग्निप्लवं पूर्वं पुरस्ताद् विषुवत उपयन्ति पृष्ठमुत्तरम्'—इति शत० ब्रा० १२.२.३.४। इतः पदस्तात् ६१८, पृ० द्रष्टव्यम् टि०।

२. द्र० इतः पूर्वम् ६१२ पृ०।

३. ऋ० ८.७०.५। छ० आ० ३.२.४.६ ऋचि आर० गा० १.१.३; वैरूपं (योनिसाम); उ० आ० २.२.११.१,२ ऋचोः प्रगाथतृचे ऊह्य० गा० १.१.७ वैरूपं (स्तोत्रम्)।

४. ऋ० ७.२३.१। छ० आ० ५ १.१.८ ऋचि आर० गा० २.१.३१, वैराजं (योनिसाम); उ० आ० ३.१.१३.१–३ तृचे ऊह्य० गा० १.१.१०; वैराजं (स्तोत्रम्)।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शाक्वरं साम[1]। 'रेवतीर्नः सधमादे' इत्यस्यां गीयमानं रैवतं साम[2]। तत्र बृहद्रथंतरयोरेवात्रोत्तरस्थानीयत्वादशेषसामफलसिद्धयर्थमेते उभे अपरित्यक्ते एव भवतः, उभयपरित्यागः सर्वथा न योग्य इत्यर्थः ॥

जो रथन्तर है, वह वैरूप-साम हैं और जो बृहत् है, वह वैराज-साम है। जो रथन्तर है, वह शाक्वर-साम है और जो बृहत् है, वह रैवत-साम हैं। इस प्रकार ये दोनों परित्यक्त नहीं होते हैं।

उक्तस्याह्नोऽनुष्ठानं प्रशंसति —

**ये वा एवं विद्वांस एतदहरुपयन्त्याप्त्वा वै तेऽहःशः संवत्सरमाप्त्वाऽर्धमासश आप्त्वा मासश आप्त्वा स्तोमांश्च च्छन्दांसि च आप्त्वा सर्वा देवतास्तप एव तप्यमानाः सोमपीथं भक्षयन्तः संवत्सरमभिषुण्वन्त आसते ॥** इति।

'ये' सत्रिणः पूर्वोक्तप्रकारेणैतस्याह्नो महिमानं विद्वांस एतदहरनुतिष्ठन्ति, ते सत्रिणः संवत्सरसत्रमहर्द्वारेण, अर्धमासद्वारेण, मासद्वारेण, स्तोमच्छन्दोद्वारेण, सर्वदेवताद्वारेण प्राप्य तपश्चरन्तो निर्विघ्नं सोमपानं कुर्वन्तः संवत्सरमपि नैरन्तर्येण सोममभिषुण्वन्त आसते; विघ्नः कोऽपि न भवतीत्यर्थः ॥

जो इस प्रकार जानते हुए इस 'अहः' का अनुष्ठान करते हैं, वे अहः के द्वारा संवत्सरसत्र को प्राप्त करके, अर्धमास के द्वारा इसे प्राप्त कर, मास के द्वारा इसे प्राप्त कर और स्तोमों और छन्दों को प्राप्त कर तथा सभी देवों को प्राप्त कर तप करते हुएं ही निर्विघ्न सोमपान करते हुए संवत्सरपर्यन्त अभिषव करते हुए रहते हैं।

अथ सत्रगतस्योत्तरपक्षस्य प्रत्यवरोहं विधत्ते—

**ये वा अत ऊर्ध्वं संवत्सरमुपयन्ति, गुरुं वै ते भारमभिनिदधते; स वै गुरुर्भारः शृणात्यथ य एनं परस्तात् कर्मभिराप्त्वाऽवस्तादुपैति, स वै स्वस्ति संवत्सरस्य पारमश्नुते ॥ १३ ॥** इति।

'ये वै' केचन मन्दबुद्धयः सत्रिणः 'अतः' आरम्भणीयं चतुर्विंशमहः प्रारभ्योर्ध्वमानुलोम्येनैतत् संवत्सरसत्रम् 'उपयन्ति' अनुतिष्ठन्ति, ते सत्रिणो 'गुरुं वै' प्रौढमेव भारम् 'अभिनिदधते' स्वस्योपरि स्थापयन्ति; 'स वै' स एव 'गुरुर्भारः' 'शृणाति' भारवाहकान् सत्रिणो विनाशयति। 'अथ' पूर्वोक्तवैलक्षण्येन 'ये' सत्रिणः 'एनं' संवत्सरं 'परस्ताद्' आदित आरभ्य विहितैः 'कर्मभिः' पूर्वपक्षगतैः 'आप्त्वा' अनुष्ठायोत्तरपक्षे 'अवस्तात्' प्रत्यवरोहक्रमेण 'उपैति' उपयन्ति, अनुतिष्ठन्ति। 'स वै' स एव सत्रिणः 'स्वस्ति' क्षेमेण संवत्सरसत्रस्य 'पारं' समाप्तिम् 'अश्नुते' अश्नुवते, प्राप्नुवन्ति।

---

१. ऋ० १०.१३३.१। उ० आ० ९ १.१४.१।

२. ऋ० १.३०.१३। छ० आ० २.२.१.९ ऋचि आर० गा० २.१.१७ रैवतं (योनिसाम); उ० आ० ४.१.१४ १–३ तृचे ऊह्य० गा० २.२.७ रैवतं (स्तोत्रम्)।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अयमर्थः—अस्ति किंचिद् विषुवनामकं संवत्सरसत्रस्य मध्ये प्रधानमहः, तस्याधस्तात् षण्मासाः; सोऽयं प्रथमः पक्षः, उपरिष्टादपि षण्मासाः, सोऽयमुत्तरः पक्षः। यथा लोके कस्याश्चिच्छालायाः स्तम्भयोः पूर्वं दीर्घं वंशं प्रौढं प्रसार्योभयोः पार्श्वयोः पक्षद्वयं कुर्वन्ति, एवं संवत्सरसत्रस्यापि। तथा च शाखान्तरे श्रूयते—'यथा शालायै पक्षसी मध्यमं वँशमभिसमायच्छति, एवँ संवत्सरस्य पक्षसी दिवाकीर्त्यमभिसंतन्वन्ति'[1] इति। दिवैव मन्त्राणां कीर्तनीयत्वाद् विषुवनामकमेकं दिवाकीर्त्यम्। तत्र पूर्वपक्षरूपे मासषट्के यः प्रयोगक्रमः, एवमुत्तरपक्षे मासषट्केऽपि। तेनैव क्रमेण स प्रयोगो यद्यनुष्ठीयेत, तदानीमतिभारः स्यात्। नूतनानुष्ठानविशेषाभावेनालस्ये सति वैकल्यं भवति; स एव भार इत्युच्यते। अतस्तत्परिहारार्थं पूर्वेषु षट्सु मासेषु यानि कर्माणि येनानुपूर्व्येणानुष्ठितानि, तानि कर्माण्युत्तरेषु मासेषु तद् विपरीतक्रमेणानुष्ठेयानि[2]। तथा सत्यालस्याभावाद् अविघ्नेनैव संवत्सरसत्रं समाप्यत इति॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां द्वितीयाध्याये (सप्तदशाध्याये) सप्तमः खण्डः ॥७॥ (१३) [१३४]

जो [मन्द बुद्धि] इस संवत्सर सत्र का अनुष्ठान चतुर्विंशदिन के आरम्भ के बाद करते हैं; वे अपने ऊपर भारी बोझ ही लाद लेते हैं। वह भारी बोझ ही उन

---

१. तै० सं १.२.२.१,२।

२. द्वादशमासनिर्वर्त्यस्य गवामयनस्य प्रायणीयोऽतिरात्रः प्रथममहः, ततश्चतुर्विंश उक्थ आरम्भणीयः। ते उभे अहनी अनुष्ठाय, ज्योतिर्गौरायुर्गौरायुर्ज्योतिरित्याभिप्लविकः षडहः; स चतुर्वारमावर्त्तनीयः' ततस्त्रिवृदादिस्तोमषट्कसाध्यः पृष्ठ्यः षडहः; एवं पञ्चभिः षडहैरेको मासः पूर्यते। एतस्यैवावर्त्तनेन पञ्च मासाः सम्पाद्याः। ततः षष्ठे मास्यादौ त्रयोऽभिप्लवाः षडहाः कार्याः; तत एकः पृष्ठ्यः षडहः; ततोऽभिजिदेकमहः; ततस्त्रयः स्वरसामानः, इत्येवमष्टाविंशत्यहानि। आद्याभ्यां प्रायणीय-चतुर्विंशाभ्यां षष्ठमासपूरणम्। इत्थं पूर्वपक्षे अशीत्युत्तरशतसङ्ख्यान्यहानि सम्पन्नानि। ततो विषुवदेकमहः। तदस्य सत्रस्य प्रधानभूतम्। सप्तमे मास्यादौ त्रयः स्वरसामानः प्रतिलोमाः कार्याः, ततो विश्वजिदावृत्तः पृष्ठ्य. षडहस्त्रयस्त्रिंशारम्भस्त्रिवृदुत्तमः; ततस्त्रयोऽभिप्लवाः षडहा आवृत्ताः; एवमष्टाविंशत्यहानि स्युः (सर्वान्तेऽनुष्ठीयमानौ महाव्रतातिरात्रौ चास्य मासस्य पूरकौ)। ततः पृष्ठ्यः षडहः; पूर्वकैश्चतुर्भिराभिप्लवकैः प्रतिलोमक्रमेणानुष्ठितैरष्टमो मासः। तथैवावृत्त्या नवमदशमैकादशा अपि मासाः सम्पाद्याः। द्वादशमासस्यादौ त्रयोऽभिप्लवाः षडहा, ततो गोरायुषी द्वे अहनी, द्वादशाहस्य दशाहानि चेति त्रिंशदहानि; स द्वादशो मासः। ततो महाव्रतमुपान्त्यमहः; तेन उदयनीयोऽतिरात्र इत्यपि सप्तममासस्य पूरकाविति। तदेतत् सर्वमिहैव क्रमात् स्फुटीभविष्यति।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[भारवहन करने वाले] को विनष्ट करता है। वह जो इस [संवत्सरसत्र] को आदि से आरम्भ करके पूर्वार्ध तक विहित कर्मों के द्वारा इसे प्राप्त कर, अनुष्ठान के उत्तरार्ध में प्रत्यवरोहक्रम से अनुष्ठान करते हैं; वे ही क्षेम के साथ [संवत्सरसत्र के] समाप्ति को प्राप्त करते हैं।

॥ इस प्रकार सत्रहवें अध्याय के सातवें खण्ड की हिन्दी पूर्ण हुई ॥ ७ ॥

## अथ अष्टमः खण्डः

अथास्मिन्नारम्भणीये चतुर्विंशेऽहनि निष्केवल्यशस्त्रे कंचिद् विशेषं विधत्ते—

**यद्वै चतुर्विंशं तन्महाव्रतं बृहद्दिवेनात्र होता रेतः सिञ्चति; तददो महाव्रतीयेनाह्ना प्रजनयति; संवत्सरे संवत्सरे वै रेतः सिक्तं जायते, तस्मात् समानं बृहद्दिवो निष्केवल्यं भवति, एष ह वा एतं परस्तात् कर्मभिराप्त्वाऽवस्तादुपैति य एवं विद्वानेतदहरुपैति ॥ इति ।**

यदेतद् द्वितीयं चतुर्विंशमहः तदेव संवत्सरसत्रस्योपान्त्यं महाव्रताख्यमहर्भवति। आरोहक्रमेण चतुर्विंशाख्यं पूर्वपक्षगतं द्वितीयमहः, अवरोहक्रमेण महाव्रताख्यमुपान्त्यत्वाद् द्वितीयमहर्भवति। अनेन द्वितीयत्वसाम्येन तयोः परस्परमैक्यमुपचर्यते। किंचोभयत्र बृहद्दिवसाम्यमस्ति। 'तदिदास भुवनेषु ज्येष्ठम्' इत्येतत्सूक्तं[1] बृहद्दिवशब्देन विवक्षितम्, प्रौढस्य द्युलोकस्य प्राप्तिहेतुत्वात्। एतदेवोभयत्र निष्केवल्यशस्त्रे क्रियते। तथा सत्यस्मिन् द्वितीयेऽह्नि चतुर्विंशनामके बृहद्दिवनाम्ना तदिदासेत्यादिना निष्केवल्यशस्त्रगतसूक्तेन होता रेतः सिञ्चति। तदहः। 'तत्' एतत् सिक्तं रेतो 'महाव्रतीयेन' उपान्त्येन अह्ना बृहद्दिवाख्यनिष्केवल्यसूक्तयुक्तेन 'प्रजनयति'। अत्र सत्रसंवत्सरमध्य एव रेतःसेकः प्रजननं च द्वितीयोपान्त्यदिवसयोः संपन्नम्। ततो लोकेऽप्येकैकस्मिन् संवत्सरे रेतःसेक उत्पत्तिश्चेत्युभयं संपद्यते। यस्माद् द्वितीयोपान्त्ययोरह्नोरुभयोरपि मिलित्वा प्राणिनो जन्मरूपमेकं कार्यमपेक्षितम्। 'तस्माद्' बृहद्दिवनामकेन सूक्तेनोभयत्र निष्केवल्यं शस्त्रं 'समानम्' एकरूपं कर्तव्यम्। 'यः' पुमान् 'एवं' महाव्रताहः साम्येनात्र सत्रार्थं निष्केवल्यस्य कर्तव्यतां विद्वान् 'एतद्' द्वितीयमहरनुतिष्ठति, स पुमान् परस्तात् सत्रस्य प्रथमभागे आनुलोम्येन क्रियमाणैः कर्मभिः 'आप्त्वा' प्राप्य 'अवस्तात्' अपरभागे प्रातिलोम्येनैव संवत्सरमनुतिष्ठति ॥

iv. १४ [xvii. ८] यह जो चतुर्विंश है वह महाव्रत है। बृहद्दिव-सूक्त से होता इस [दिन] पर वीर्य का सींचन करता है; और उसी [सिक्त रेत] महाव्रत नामक दिन [के कृत्य] से वह सन्तान उत्पन्न कराता है। लोक में भी एक वर्ष में सिक्त वीर्य उत्पन्न

---

1. ऋ० १०.१२०.१–९।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हो जाता है। इसलिए 'बृहद्दिव' नामक सूक्त [दोनों में] एक समान निष्केवल्यशस्त्र होता है। जो इस प्रकार जानकर इस दिन का अनुष्ठान करता है; वह सत्र के प्रथमभाग में [अनुलोमतः विहित] कर्मों के द्वारा इसे प्राप्त कर, द्वितीयभाग में [प्रतिलोमतः] अनुष्ठान करते हैं।

वेदनं प्रशंसति—

**स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद ॥** इति।

जो इस प्रकार जानता है वही क्षेमपूर्वक संवत्सरसत्र के समाप्ति को प्राप्त करता है।

अथ संवत्सरसत्रस्याद्यन्ते द्वे अहनी विधत्ते—

**यो वै संवत्सरस्यावारं च पारं च वेद, स वै स्वस्ति संवत्सरस्य पारमश्नुते; अतिरात्रो वा अस्य प्रायणीयोऽवारमुदयनीयः पारम् ॥** इति।

'यः' पुमान् संवत्सरसत्रस्य समुद्रस्थानीयस्य 'अवारम्' अर्वाक् तीरस्थानीयं प्रथममहः, 'पारं' परतीरस्थानीयमन्तिममहः; 'वेद' तयोरह्नोरनुष्ठेयं कर्तव्यं निश्चिनोति; 'सः' पुमानविघ्नेनैव संवत्सरसत्रस्य 'पारं' समाप्तिं प्राप्नोति। योऽयमतिरात्रसंस्थः, स एवास्य 'प्रायणीयः' आरम्भेऽनुष्ठेयत्वाद् अर्वाक् तीरस्थानीयः। स एवातिरात्रः पुनः 'उदयनीयः' समाप्तावनुष्ठेयत्वात् परतीरस्थानीयः ॥

जो संवत्सरसत्र के इस पार [के तीरस्थानीय प्रथम दिन] को और उस पार [के तीरस्थानीय अन्तिम दिन] को जानता है, वही क्षेमपूर्वक संवत्सरसत्र के समाप्ति को प्राप्त करता है। [आरम्भ में अनुष्ठेय होने से] अतिरात्र प्रायणीय इसका इस पार का तट है और [समाप्ति में अनुष्ठेय होने से] उदयनीय अतिरात्र इसका उस पार का तट है।

वेदनं प्रशंसति—

**स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद ॥** इति।

जो इस प्रकार जानता है वही क्षेमपूर्वक संवत्सरसत्र के समाप्ति को प्राप्त करता है।

उक्तावाद्यन्तावतिरात्रौ प्रशंसति—

**यो वै संवत्सरस्यावरोधनं चोद्रोधनं च वेद, स वै स्वस्ति संवत्सरस्य पारमश्नुते; अतिरात्रो वा अस्य प्रायणीयोऽवरोधनमुदयनीय उद्रोधनम् ॥** इति।

अवरुध्यते स्वाधीनं क्रियते येन प्रारम्भरूपेण कर्मणा तत्कर्म 'अवरोधनम्'। उद्रुध्यते समाप्यते येन कर्मणा तत् 'उद्रोधनम्'। अन्यत्पूर्ववत् ॥

जो संवत्सरसत्र के अवरोधन [जिस प्रारम्भिक कर्म से स्वाधीन किया जाता है वह कर्म] और उद्रोधन [जिस कर्म से उपसंहार किया जाता है] को जानता है वह क्षेमपूर्वक संवत्सरसत्र के समाप्ति को प्राप्त करता है। प्रारम्भिक अतिरात्र इसका अवरोधन है, और उदयनीय अतिरात्र उद्रोधन है।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदनं प्रशंसति—

**स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद ॥ इति ।**

जो इस प्रकार जानता है वह क्षेमपूर्वक संवत्सरसत्र के समाप्ति को प्राप्त करता है ।

पुनरपि प्रकारान्तरेण प्रशंसति—

**यो वै संवत्सरस्य प्राणोदानौ वेद, स वै स्वस्ति संवत्सरस्य पारमश्नुते; अतिरात्रो वा अस्य प्रायणीयः प्राण, उदान उदयनीयः ॥ इति ।**

'प्रायणीयः' अतिरात्रः 'प्र' शब्दसामान्यात् 'प्राणः' इत्युच्यते । उच्छब्दसामान्याद् 'उदयनीयः' अतिरात्रः 'उदानः' ॥

जो संवत्सरसत्र के प्राण और उदान को जानता है वही क्षेमपूर्वक संवत्सरसत्र के समाप्ति को प्राप्त करता है। प्रारम्भिक अतिरात्र इसका प्राण है और उदयनीय अतिरात्र उदान है ।

वेदनं प्रशंसति—

**स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद, य एवं वेद ॥ १४ ॥ इति ।**

अभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थ-पञ्चिकायां द्वितीयाध्याये (सप्तदशाध्याये) अष्टमः खण्डः ॥ ८ ॥ ( १४ ) [ १३५ ]

वेदार्थस्यप्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकवीरबुक्कभूपालसाम्राज्यधुरंधर-माधवाचार्यदेशतो सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश' नामभाष्ये ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायाः द्वितीयोऽध्यायः (सप्तदशोऽध्यायः) समाप्तः ॥ २ ॥

जो इस प्रकार जानता है वह निर्विघ्न संवत्सरसत्र के समाप्ति को प्राप्त करता है ।

॥ इस प्रकार ऐतरेय ब्राह्मण के चतुर्थ पञ्चिका के द्वितीय ( सत्रहवें ) अध्याय की हिन्दी पूर्ण हुई ॥ २ ॥

—०—

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ तृतीयोऽध्यायः

## प्रथमः खण्डः

—: * :—

# [अथ अष्टादशोऽध्यायः

## प्रथमः खण्डः]

आश्विनस्य विधिः प्रातरनुवाक उदीरितः ॥
संख्याप्रतिपदावन्ये सौर्यादीन्यधिकानि तु[1] ॥ १ ॥

तत्र गवामयनस्य प्रायणीयोदयनीयावाद्यन्तावतिरात्रावुक्तौ; अत्र मासक्लृप्तिविधानायाभिप्लवषडहे पूर्वभागरूपाणि त्रीण्यहानि विधत्ते—

**ज्योतिर्गौरायुरिति स्तोमैर्भिर्यन्त्ययं वै लोको ज्योतिरन्तरिक्षं गौरसौ लोक आयुः ॥ इति ।**

स्तोमशब्दो ज्योतिरादिभिः प्रत्येकमभिसंबध्यते । तथा सति ज्योतिष्टोमः, गोष्टोमः, आयुष्टोम इत्येतैरहोभिः 'यन्ति' अनुतिष्ठेयुरित्यर्थः । तदेतदहस्त्रयं त्रित्वसाम्यात् क्रमेण लोकत्रयरूपम् । शाखान्तरेऽप्येतद्दर्शितम्—'ज्योतिष्टोमं प्रथममुपयन्त्यस्मिन्नेव तेन लोके प्रतितिष्ठन्ति; गोष्टोमं द्वितीयमुपयन्त्यन्तरिक्ष एव तेन प्रतितिष्ठन्ति; आयुष्टोमं तृतीयमुपयन्त्यमुष्मिन्नेव लोके प्रतितिष्ठन्ति'[2] इति ॥

**[षडह और विषुवन्त]**

**iv. १५ [xviii. १] वे ज्योतिष्टोम, गोष्टोम और आयुष्टोम से अनुष्ठान करते हैं। यह लोक ज्योतिः है, अन्तरिक्ष गौ है, और वह लोक आयु है।**

षडहे पूर्वभागं त्र्यहमुक्त्वा तदुत्तरभागं विधत्ते—

**स एवैष उत्तरस्त्र्यहः ॥ इति ।**

त्रयाणां पूर्वोक्तानामेवाह्नां समूहः पुनरनुष्ठीयमान उत्तरस्त्र्यहो भवति ॥

**उत्तरार्ध के तीन दिनों में वही स्तोम अनुष्ठित होते हैं [जो पहले तीन दिनों में]।**

तत्र षडहे षण्णामप्यह्नां क्रमं दर्शयति—

**ज्योतिर्गौरायुरिति त्रीण्यहानि, गौरायुर्ज्योतिरिति त्रीणि ॥ इति ।**

---

१. प्रथमादिषु पञ्चखण्डेष्वित्येव बोध्यम् (५९७–६१७ पृ०)।
२. तै० सं० ७.४.११.१ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ज्योतिष्टोमादीनामेव ज्योतिरित्यादीनि नामानि; तैर्नामभिर्धर्मा अतिदिश्यन्ते। ज्योतिरादिनामकाः ये स्वतन्त्रा एकाहाः सन्ति, तदीयधर्मा अत्रानुष्ठेया इत्यर्थः ॥

[षडह के छः दिनों में] प्रथम तीन दिन [का अनुष्ठान क्रम] है—ज्योतिः, गौ= और आयुः और उत्तरार्ध के तीन दिन का क्रम है—गौ, आयुः और ज्योतिः।

योऽयमुभयोस्त्र्यहयोः क्रमव्यत्यासस्तमिमं प्रशंसति—

**अयं वै लोको ज्योतिरसौ लोको ज्योतिस्ते एते ज्योतिषी उभयतः संलोकेते ॥ इति।**

प्रथमस्य त्र्यहस्यादौ ज्योतिर्नामकमहर्यदस्ति, तत्प्राथम्यसाम्याद् भूलोकस्वरूपम्। यच्चोत्तरस्य त्र्यहस्यावसाने ज्योतिर्नामकमहः, तदुत्तमत्वसाम्याद् द्युलोकस्वरूपम्। 'ते एते' षडहस्याद्यन्तयोर्वर्तमाने 'ज्योतिषी' उभयतोऽवस्थाय परस्परं 'संलोकेते' संमुखत्वेनेक्षेते ॥

ज्योति [दोनों भागों में प्रथम और अन्तिम होने से] यह लोक भी है और वह लोक भी ज्योतिः है। इस प्रकार वे ये दोनों [षडह के आदि और अन्त में वर्तमान] ज्योतिः परस्पर एक दूसरे के आमने-सामने हैं।

अहर्विशेषांस्तत्क्रमं चोक्त्वा समष्टिरूपं षडहं विधत्ते—

**तेनैतेनोभयतोज्योतिषा षळहेन यन्ति; तद्यदेतेनोभयतोज्योतिषा षळहेन यन्त्यनयोरेव तल्लोकयोरुभयतः प्रतितिष्ठन्तो यन्त्यस्मिंश्च लोकेऽमुष्मिंश्चोभयोः ॥ इति।**

'उभयतः' आद्यन्तयोर्ज्योतिर्नामकमहर्यस्मिन् षडहे तदेतत् 'उभयतोज्योतिः' तेनैतेन षडहेनानुतिष्ठेयुः। तदनुष्ठानेनोभयतो वर्तमानयोः प्रतिष्ठां प्रापयन्तो वर्तन्ते। 'लोकयोरुभयतः' इत्यस्यैव विवरणम्—'अस्मिंश्च लोकेऽमुष्मिंश्चोभयोः'—इति। अथवोत्तरशेषत्वेनास्मिंश्चेत्यादिकमन्वेतव्यम् ॥

उस इस दोनों ओर विद्यमान ज्योतिः [नामक अहः] वाले षडह से वे अनुष्ठान करते हैं। उसमें वे दोनों ओर विद्यमान ज्योतिः युक्त षडह से अनुष्ठान करते हैं। वस्तुतः वे इस प्रकार उस अनुष्ठान से इन दोनों लोकों में दोनों ओर वर्तमान प्रतिष्ठा को प्राप्त करते हुए ही आगे बढ़ते हैं, इस लोक में और उस [स्वर्ग] लोक, दोनों ही में।

अस्मिन्नभिप्लवषडहे संस्थाविशेषान् विधत्ते—

**परियद्वा एतद्देवचक्रं यदभिप्लवः षळहस्तस्य यावभितोऽग्निष्टोमौ तौ प्रधी, ये चत्वारो मध्य उक्थ्यास्तन्नभ्यम् ॥ इति।**

योऽयमभिप्लवः षडहः, तदेतदस्मिंश्चामुष्मिंश्चोभयोर्लोकयोः 'परियद्' परिवर्तमानमेव 'देवचक्रम्',—यथा लोके रथस्य चक्रं पुनः पुनः परिवर्तते, तद्वदिदं देवचक्रम्; असकृत्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

षडहं परिवर्तनस्य वक्ष्यमाणत्वात् । रथचक्रस्य हि निष्पादकानि त्रीणि फलकानि; तत्र मध्यमफलकेऽरुं प्रवेशयितुं प्रौढं नामिच्छिद्रं क्रियते । तस्य फलकस्योभयोः पार्श्वयोर्वर्तुलत्वाय फलकद्वयं कीलितं भवति । एवमस्मिन्नपि षडहे ज्योतिर्गावाद्यन्तवर्तिनावग्निष्टोमसंस्थौ 'प्रधी' भवतः, प्रकर्षेणोभयतो धीयेते स्थाप्येते इति प्रधी, फलकद्वयस्थानीयावित्यर्थः । एतस्मिन् 'ये' तु मध्ये 'चत्वारः' अहर्विशेषा उक्थ्यसंस्थाः; तदेतत् 'नभ्यं' नाभियोग्यस्थानम् उक्थ्यसंस्थाः कर्तव्या इत्यर्थः ॥

यह जो 'अभिप्लव-षडह' है यह देवों का चक्र है; और इसके दोनों ओर जो दो अग्निष्टोम हैं वे दो नेमि हैं, जो मध्य में चार उक्थ्य हैं, वे नाभि हैं ।

वेदनं प्रशंसति—

**गच्छति वै वर्तमानेन यत्र कामयते, तत्स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद ॥** इति ।

वेदिता 'यत्र' यस्मिंल्लोके गन्तुं कामयते, तत्रानेनैव परिवर्तमानेन देवचक्रेण गच्छति । 'तत्' तेन देवचक्रेण निर्विघ्नमेव संवत्सरसत्रसमाप्तिं गच्छति ॥

[इसको जानने वाला जिस लोक में] जहाँ चाहता है वह इसी परिवर्तमान देवचक्र से चला जाता है । जो इस प्रकार जानता है, वह इस तरह उस [ देव चक्र ] से निर्विघ्न संवत्सरसत्र की समाप्ति को प्राप्त करता है ।

उक्तस्याभिप्लवषडहस्यैकस्मिन् मासि पञ्चकृत्व आवृत्तिं विधत्ते—

**यो वै तद्वेद यत्प्रथमः षळहः; स वै स्वस्ति संवत्सरस्य पारमश्नुते; यस्तद्वेद यद्द्वितीयो, यस्तद्वेद यत्तृतीयो, यस्तद्वेद यच्चतुर्थो, यस्तद्वेद यत्पञ्चमः ॥ १५ ॥** इति ।

'प्रथमः षडहः' इति यदस्ति, तद् यो वेद, 'सः' पुमान्निर्विघ्नेन सत्रपारं प्राप्नोति । तथा 'द्वितीयः' षडह इति यदस्ति, तद् यो वेद, स वै स्वस्तीत्यादिकमनुवर्तनीयम् । एवमुत्तरेष्वपि त्रिषु पर्यायेषु द्रष्टव्यम् । षडहे पञ्चकृत्व आवर्तमाने सति त्रिंशदहानि भूत्वा मासः संपद्यते ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां तृतीयाध्याये (अष्टादशाध्याये) प्रथमः खण्डः ॥ १ ॥ (१५) [ १३६ ]

प्रथम षडह जो है उसे जो जानता है वह निर्विघ्न संवत्सरसत्र की समाप्ति को प्राप्त कर लेता है और जो द्वितीय है जो उसे जानता है, जो तृतीय है जो उसे जानता है, जो चतुर्थ है, जो उसे जानता है और जो पञ्चम है जो उसे जानता है [वह भी संवत्सरसत्र की समाप्ति पर पहुँच जाता है] [इस प्रकार छः दिन का षडह होता है और इस प्रकार पांच षडह की आवृत्ति से तीस दिन होकर एक मास सम्पादित होता है] ।

॥ इस प्रकार अठारहवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ द्वितीयः खण्डः

उक्तेषु पञ्चसु षडहेषु प्रथममनूद्य प्रशंसति—

**प्रथमं षळहमुपयन्ति; षळहानि भवन्ति; षड्वा ऋतव ऋतुश एव तत्संवत्सरमाप्नुवन्त्यृतुशः संवत्सरे प्रतितिष्ठन्तो यन्ति ॥** इति ।

अनुष्ठिते षडहे षट्संख्याकान्यहानि भवन्ति । ततः संख्यासाम्यादृतुद्वारा संवत्सरं प्राप्य तत्र प्रतिष्ठिताः सन्तो वर्तन्ते ॥

**iv. १६ [xviii. २] वे प्रथम षडह का अनुष्ठान करते हैं [इसके अनुष्ठित होने पर छः दिन होते हैं। छः ऋतुएँ होती हैं। इस प्रकार वे ऋतुओं से ही उस संवत्सर को प्राप्त करते हैं और ऋतुओं के द्वारा ही संवत्सर में प्रतिष्ठित होते हुए वे अनुष्ठान करते हैं।**

पूर्वेण षडहेन सहितं द्वितीयं षडहं प्रशंसति—

**द्वितीयं षळहमुपयन्ति; द्वादशाहानि भवन्ति; द्वादश वै मासा, मासश एव तत्संवत्सरमाप्नुवन्ति; मासशः संवत्सरे प्रतितिष्ठन्तो यन्ति ॥** इति ।

पूर्ववद् व्याख्येयम् ॥

**वे द्वितीय षडह का अनुष्ठान करते हैं। [इसके अनुष्ठित होने पर दोनों षडह मिलकर] बारह दिन होते हैं। बारह महीने होते हैं। वे मासों के ही द्वारा उस संवत्सर को प्राप्त करते हैं। मासों के ही द्वारा संवत्सर में प्रतिष्ठित होते हुए वे अनुष्ठान करते हैं।**

उक्ताभ्यां षडहाभ्यां सहितं तृतीयं षडहं प्रशंसति—

**तृतीयं षळहमुपयन्त्यष्टादशाहानि भवन्ति; तानि द्वेधा नवान्यानि नवान्यानि; नव वै प्राणा, नव स्वर्गा लोकाः, प्राणांश्चैव तत्स्वर्गांश्च लोकानाप्नुवन्ति, प्राणेषु चैव तत्स्वर्गेषु च लोकेषु प्रतितिष्ठन्तो यन्ति ॥** इति ।

त्रिषु षडहेषु यान्यष्टादशाहानि, तेषां द्वेधा विभागे सति प्रत्येकं 'नव'संख्या संपद्यते । 'प्राणाः' सप्तसु ऊर्ध्वच्छिद्रेषु द्वयोरधश्छिद्रयोर्नवसंख्याकाः,—स्वर्गलोकाश्च नवभोगस्थान-भेदेन[1] नवविधाः । अतः संख्यासाम्यात् प्राणान् स्वर्गलोकांश्च प्राप्य तत्र प्रतिष्ठिता वर्तन्ते ॥

**वे तृतीय षडह का अनुष्ठान करते हैं [ इसके अनुष्ठित होने पर तीनों षडह मिलकर अट्ठारह दिन होते हैं। उनका द्विविध विभाग नौ-नौ का समूह होता है। नौ प्राण हैं और नौ स्वर्ग लोक हैं। इस प्रकार वे उनसे प्राणों और स्वर्ग आदि लोकों को प्राप्त करते**

---

१. 'अष्टाभिर्लोकपालैः परिपालिता अष्टसंख्याकाः स्वर्गा लोकाः, तेषां मध्ये कश्चिदूर्ध्व-गामी स्वर्ग इत्येव नवसंख्याकाः स्वर्गाः' इति तै० सं० १.२.२.१ सा० भा० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हैं। इस प्रकार वस्तुतः वे उन प्राणों और स्वर्गलोकों में ही प्रतिष्ठित होते हुए अनुष्ठान करते हैं।

पूर्वैस्त्रिभिः षडहैश्चतुर्थं षडहं प्रशंसति—

**चतुर्थं षळहमुपयन्ति; चतुर्विंशतिरहानि भवन्ति; चतुर्विंशतिर्वा अर्धमासा, अर्धमासश एव तत्संवत्सरमाप्नुवन्त्यर्धमासशः संवत्सरे प्रतितिष्ठन्तो यन्ति ॥** इति।

अतः संख्यासाम्याद् अर्धमासद्वारा संवत्सरे प्रतिष्ठिताः ॥

वे चतुर्थ षडह का अनुष्ठान करते हैं। [चार षडह मिलकर] चौबीस दिन होते हैं। चौबीस ही अर्धमास हैं। इस प्रकार वे अर्धमासों के द्वारा ही उस संवत्सर को प्राप्त करते हैं; और अर्धमासों के द्वारा संवत्सर में प्रतिष्ठित होते हुए अनुष्ठान करते हैं।

पूर्वैश्चतुर्भिः षडहैः सहितं पञ्चमं षडहं प्रशंसति—

**पञ्चमं षळहमुपयन्ति; त्रिंशदहानि भवन्ति; त्रिंशदक्षरा वै विराड्; विराळन्नाद्यं, विराजमेव तन्मासि मास्यभिसंपादयन्तो यन्ति ॥** इति।

अहःसंख्याया विराट्साम्याद् विराजश्चान्नाद्यहेतुत्वात् प्रतिमासं विराड्द्वारा अन्नाद्यं प्राप्नुवन्ति ॥

वे पाँचवें षडह का अनुष्ठान करते हैं। [पाँचों षडह मिलकर ] तीस दिन होते हैं। तीस अक्षरों का ही विराट् छन्द होता है। भोजन योग्य अन्न ही विराज है। वस्तुतः इस प्रकार वे उस विराज को ही प्रत्येक मासों के द्वारा सम्पादित करते हुए अनुष्ठान करते हैं।

पुनरपि षडहपञ्चकं प्रशंसति—

**अन्नाद्यकामाः खलु वै सत्रमासत; तद् यद्विराजं मासि मास्यभिसंपादयन्तो यन्त्यन्नाद्यमेव तन्मासि मास्यवरुन्धाना यन्त्यस्मै च लोकायामुष्मै चोभाभ्याम् ॥ १६ ॥** इति।

ये सत्रस्यानुष्ठातारः, ते हि 'अन्नाद्यकामाः' अनुतिष्ठन्ति। तथा सति पूर्वोक्तरीत्या संख्यासाम्यात् पञ्चसु षडहेषु त्रिंशदक्षररूपां विराजं प्रतिमासं संपादयन्तो वर्तन्ते। प्रतिमासमन्नाद्यं प्राप्नुवन्तो लोकद्वयार्थं गच्छन्ति। प्रतिमासं षडहपञ्चकमनुतिष्ठेयुरिति तात्पर्यार्थः। तत्र चत्वारोऽभिप्लवाः षडहाः, पञ्चमस्तु पृष्ठ्यः षडह इति सूत्रकारैरभिधानादयं विशेषः शाखान्तरे द्रष्टव्यः[1] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां तृतीयाध्याये (अष्टादशाध्याये) द्वितीयः खण्डः ॥ २ ॥ (१६) [१३७]

१. 'चत्वारोऽभिप्लवाः पृष्ठ्यश्च मासः'—इति च कात्या० श्रौ० १३.२.३; तथा 'चतुरभिप्लवान् पृष्ठ्यपञ्चमान् पञ्च मासानुपयन्ति' इति च आश्व० श्रौ० ११.७.२।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

भोजन योग्य अन्न की कामना करते हुए वे यज्ञ सत्र का अनुष्ठान करते हैं। उस [पूर्वोक्त रीति] से जो विराज को मास-मास के द्वारा सम्पादित करते हुए अनुष्ठान करते हैं; उससे वे मास-मास भोजन योग्य अन्न ही प्राप्त करते हुए [दोनों लोकों] को जाते हैं। इस [भू] लोक में और उस [स्वर्ग] लोक दोनों को ही प्राप्त करने के लिए [अनुष्ठान करते हैं]।

॥ इस प्रकार अट्ठारहवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

संवत्सरसत्रस्यावयवान् मासानभिधाय सत्रं विधत्ते—

**गवामयनेन यन्ति; गावो वा आदित्या; आदित्यानामेव तदयनेन यन्ति ॥** इति ।

संवत्सरसत्राणां प्रकृतिभूतस्यैतस्य सत्रस्य 'गवामयनम्' इति नामधेयम्। तेन 'यन्ति' अनुतिष्ठेयुः। गमनसाम्याद् गवामादित्यत्वम्। तथा सत्यादित्यानामेवायनेनानुष्ठानं कृतं भवति ॥

iv. १७ [xviii.३] [संवत्सरसत्र के प्रकृतिभूत] 'गवामयन' नामक कर्म से अनुष्ठान करते हैं। [गमन साम्य के कारण] गौ आदित्य हैं। इस प्रकार उस [गवामयन] से 'आदित्य-अयन' से ही वे अनुष्ठान करते हैं।

तदेतद् गवामयनं प्रशंसति—

**गावो वै सत्रमासत, शफाञ्शृङ्गाणि सिषासत्यस्तासां दशमे मासि शफाः शृङ्गाण्यजायन्त; ता अब्रुवन् यस्मै कामायादीक्षामह्यापाम तमुत्तिष्ठामेति; ता या उदतिष्ठंस्ता एताः शृङ्गिण्यः ॥** इति ।

पुरा कदाचिद् गवाभिमानिन्यो देवताः स्वकीयानां गोदेहानां पादगतान् 'शफान्' शिरोगतानि 'शृङ्गाणि' च 'सिषासत्यः' प्राप्तुमिच्छन्त्यः सत्रमन्वतिष्ठन्। तासां दशमे मासि तदुभयं संपन्नम्। ततः 'ताः' गावः परस्परमिदमब्रुवन्,—यस्मै कामाय वयम् 'अदीक्षामहि' सत्रदीक्षामाप्तवत्यः, 'तं' कामम् 'आपाम' वयं प्राप्तवत्यः। ततोऽस्मात् सत्रादुत्तिष्ठामेति विचार्योत्थाय गताः। 'ताः' प्रसिद्धा या गाव उदतिष्ठन्; ता इमाः शृङ्गिण्यो दृश्यन्ते। अनेन दशसु मासेष्वनुष्ठेयं गवामयनं प्रशस्तम् ॥

गायों [की अभिमानिनी देवता] ने एक बार खुर और सींगों की अभिलाषा से सत्र किया। दसवें माह उनके खुर और सींग निकल आए। उन्होंने कहा जिस कामना से हम लोगों ने सत्र की दीक्षा ली थी वह प्राप्त हो गई है। अब हम [इस सत्र से] उठें वे [गायें] जो उठ खड़ी हुईं, वे सींग से युक्त थीं।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

द्वादशसु मासेष्वनुष्ठेयं यद् गवामयनमस्ति, तदिदानीं प्रशंसति—

**अथ याः समापयिष्यामः संवत्सरमित्यासत, तासामश्रद्धया शृङ्गाणि प्रावर्तन्त; ता एतास्तूपरा ऊर्जं त्वसुन्वंस्तस्मादु ताः सर्वानृतून् प्राप्त्वोत्तरमुत्तिष्ठन्त्यूर्जं ह्यसुन्वन् सर्वस्य वै गावः प्रेमाणं सर्वस्य चारुतां गताः ॥** इति ।

सत्रमनुतिष्ठन्तीनां गवां मध्ये शफश्शृङ्गार्थिनीनां दशभिर्मासैः सिद्धिर्जाता । यासां तु गवां शृङ्गापेक्षा नास्ति, किन्तु ऊर्गपेक्षैव; तादृश्यो या गाव ऊर्जसिद्धयर्थं द्वादशमासात्मकं संवत्सरं समापयिष्याम इत्यभिप्रेत्य, तथैवान्वतिष्ठन् । 'तासां' गवां शृङ्गेष्वश्रद्धया शृङ्गाणि 'प्रावर्त्तन्त' नोत्पन्नानीत्यर्थः । 'ता एताः' गावो लोके 'तूपराः' शृङ्गरहिता दृश्यन्ते । तास्तु शृङ्गरहिता अपि सत्रानुष्ठानेन 'ऊर्जं' बलाधिक्यम् 'असुन्वन्' संपादितवत्यः । 'तस्मादु' बलाधिक्यलक्षणस्य फलस्य सद्भावादेव 'ताः' गावः 'सर्वानृतून्' षट्संख्याकानपि तस्मिन् सत्रानुष्ठाने प्राप्य 'उत्तरम्' ऊर्ध्वंकाले सत्रादुत्तिष्ठन्ति । 'हि' यस्माद् 'ऊर्जं' बलातिशयम् 'असुन्वन्' प्राप्तवत्यः, तस्माद् द्वादशमासानुष्ठानं युक्तम् । 'ताः' शृङ्गरहिता गावः प्रहारभयाभावात् 'सर्वस्य' जगतः 'प्रेमाणं' प्रियत्वं गताः । तथा बलाधिक्येन शरीरपुष्ट्या च 'सर्वस्य' भारवहनादिकार्यस्य नेत्रदर्शनस्य चात्यन्तं 'चारुतां' रमणीयतां गताः ॥

और जिन्होंने यह सोंचते हुए कि 'संवत्सर पर समाप्त करेंगे' सत्र किया; उनकी अश्रद्धा के कारण उन्हें सींग नहीं निकली । वे ही [गायें आज लोक में] सींग विहीन हुईं । किन्तु उन्होंने बल प्राप्त किया । इसीलिए [बलाधिक्य के कारण] वे गाएँ सभी [छः] ऋतुओं को [उस अनुष्ठान में] प्राप्त करके बाद में सत्र से उठीं । क्योंकि उन्होंने ऊर्जस् प्राप्त किया था; इसलिए वे [शृङ्गविहीन गाएँ] सभी की प्रिय हुईं और [पुष्ट शरीर होने से] सभी की [दर्शन जन्य] रमणीयता को प्राप्त हुईं ।

वेदनं प्रशंसति—

**सर्वस्य प्रेमाणं सर्वस्य चारुतां गच्छति य एवं वेद ॥** इति ।

जो इस प्रकार जानता है वह सभी का प्रिय होता है; और सभी की चारुता को प्राप्त करता है ।

अथादित्यानामयनमङ्गिरसामयनं च गवामयनविकृतिरूपमुभयं वक्तुं प्रस्तौति—

**आदित्याश्च ह वा अङ्गिरसश्च स्वर्गे लोकेऽस्पर्धन्त वयं पूर्व एष्यामो वयमिति; ते हादित्याः पूर्वे स्वर्गं लोकं जग्मुः; पश्चेवाङ्गिरसः षष्ट्यां वा वर्षेषु ॥** इति ।

आदित्याख्याश्च ये देवाः, ये चाङ्गिरस नामका ऋषयः, तदुभये स्वर्गे लोके परस्परं स्वर्गप्राप्तौ 'अस्पर्धन्त' अस्माकमेव प्रथमं गमनमिति आदित्याः, अङ्गिरसोऽपि तथैव;

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्रादित्याः सहसा प्रथमं स्वर्गं प्रापुः। अङ्गिरसस्तु 'पश्चेव' विलम्बेनैव षष्टिसंख्याकेषु वर्षेष्वतीतेषु स्वर्गं प्राप्ताः। 'वा' शब्देन पक्षान्तरं द्योत्यते। अङ्गिरसां मध्ये तत्तच्छक्त्य-नुसारेण केचित् षष्टेः पूर्वं वा गता इत्यर्थः॥

आदित्यों और अङ्गिरसों ने परस्पर स्वर्गप्राप्ति के लिए स्पर्धा की। [सभी ने कहा–] हम पहले पहुँचेंगे, हम पहले···। वे आदित्यगण पहले स्वर्गलोक में पहुँच गए। उनके बाद अङ्गिरस साठ वर्षों के बाद पहुँचे।

अथादित्यानामयनेऽहःक्लृप्तिं विधत्ते—

**यथा वा प्रायणीयोऽतिरात्रश्चतुर्विंश उक्थ्यः, सर्वेऽभिप्लवाः षळहा, आक्ष्यन्त्यन्यान्यहानि; तदादित्यानामयनम्॥** इति।

अत्र 'वा' शब्दो न विकल्पार्थः, किंतु गवामयनप्रकारव्यावृत्त्यर्थः। गवामयने प्रायणीयाख्यं प्रथममहः, अतिरात्रसंस्थं चतुर्विंशमुक्थ्यमहर्द्वितीयम्, तदुभयं तत्र 'यथा' तथैव आदित्यानामयनेऽपि; तत् ऊर्ध्वं विशेषोऽस्ति। सर्वेऽभिप्लवाः षडहाः पूर्वोक्ताभ्यां प्रथमद्वितीयाभ्यामहोभ्यामन्यानि सर्वाण्यहानि 'आक्ष्यन्ति' व्याप्तिं करिष्यन्ति। गवामयने त्वेकैकस्मिन् मासि चत्वार एवाभिप्लवषडहाः। अत इदं वैषम्यम्। तदिदम् 'आदित्यानामयनम्'॥

जैसे [गवामयन में] प्रायणीयाख्य प्रथम दिन होता है; और अतिरात्रिसंस्था रूप चतु-र्विंश-उक्थ्य दिन [द्वितीय दिन] होता है; [उसी प्रकार आदित्यों के अयन में भी होता है किन्तु विशेषता यह है कि] सभी पूर्वोक्त अभिप्लव षडह [प्रथम-द्वितीय आदि दिनों से] अन्य सभी दिनों को व्याप्त करेंगे। यही आदित्यों का अयन है।

अथाङ्गिरसामयनस्य क्लृप्तिं दर्शयति—

**प्रायणीयोऽतिरात्रश्चतुर्विंश उक्थ्यः, सर्वे पृष्ठ्याः षळहा, आक्ष्यन्त्यन्यान्य-हानि; तदङ्गिरसामयनम्॥** इति।

प्रथमद्वितीयव्यतिरिक्तानि सर्वाण्यहानि पृष्ठ्यषडहैर्व्याप्तानि, इत्येतावानत्र विशेषः। अथवा 'आक्ष्यन्ति' शब्दोऽहर्विशेषनामधेयम्। तथा च बौधायन आह—'अभिजिद्विषुवान् विश्वजिद्दशममहर्महाव्रतमुदयनीयोऽतिरात्र इत्येतान्यक्ष्यन्ति भवन्ति' इति। तदेतद् बौधायनस्य मतम्। अन्यदपि यान्यन्यानि पृष्ठ्याभिप्लवेभ्य इति शालिकिराचार्यो मेने। यानि चान्यानि पृष्ठ्याभिप्लवेभ्यो दशमाच्चेत्यौपमन्यव इति। तथा सति प्रायणीयारम्भणीया-भ्यामभिप्लवषडहेभ्यश्चान्यानि यान्यहानि सन्ति, तानि 'आक्ष्यन्ति' एतन्नामकानीत्युभयत्र व्याख्येयम्। सर्वथाऽप्यस्त्येनयोरुभयोरपि गवामयनाद् विशेषः। गवामयने त्वेकस्मिन् मासि चत्वारोऽभिप्लवाः षडहाः, पञ्चमः पृष्ठ्यः षडहः। तथा च आश्वलायन आह— 'अथ गवामयनं सर्वकामाः। प्रायणीयचतुर्विंशे उपेत्य चतुरभिप्लवान् पृष्ठ्यपञ्चमान्

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पञ्च मासानुपयन्ति'[1] इति। आदित्यानामयने पृष्ठ्यः षडहो नास्ति -- इति[2], अङ्गिरसामयनेऽभिप्लवः षडहो नास्तीति[3] वैषम्यम्॥

[अङ्गिरसों के अयन में] प्रायणीय-अतिरात्र, चतुर्विंश-उक्थ्य और सभी पृष्ठ्य-षडह होते हैं। [पृष्ठ्य-अभिप्लव से] अन्य दिनों को वे व्याप्त करेंगे। यही अङ्गिरसों का अयन है। [इस प्रकार गवामयन में एक मास में चार अभिप्लव-षडह और पाँचवां पृष्ठ्य-षडह होता है। आदित्यों के अयन में पृष्ठ्य-षडह नहीं होता और अङ्गिरसों के अयन में अभिप्लव-षडह नहीं होता]।

अयनद्वयगतमभिप्लवषडहं पृष्ठ्यषडहं च दर्शयति—

**सा यथा स्रुतिरञ्जसायन्येवमभिप्लवः षळहः स्वर्गस्य लोकस्याथ यथा महापथः पर्याण एवं पृष्ठ्यः षळहः स्वर्गस्य लोकस्य; तद्यदुभाभ्यां यन्त्युभाभ्यां वै यन्न रिष्यत्युभयोः कामयोरुपाप्त्यै,—यश्चाभिप्लवे षळहे, यश्च पृष्ठ्ये॥ १७॥ इति।**

यथा लोकस्य प्रसिद्धा 'स्रुतिः' राजमार्गरूपा 'अञ्जसायनी' दुःखहेतूनां कण्टकपाषाणादीनामभावाद् अञ्जसा सम्यगयनस्य गमनस्य साधनभूता, एवमभिप्लवः षडहः स्वर्गस्य लोकस्य अञ्जसा प्राप्तिहेतुः[4]। अथ पृष्ठ्यषडहस्य दृष्टान्त उच्यते,—यथा लोके 'महापथः' प्रौढमार्गः नगरद्वयमध्यवर्ती 'पर्याणः' परितोऽयनस्य गमनस्य साधनभूतः, नगरसमीपेऽरण्यपर्वताद्यभावाद् यस्यां दिशि गन्तुमपेक्षा तत्र गन्तुं शक्यते, एवमयं पृष्ठ्यः षडहः स्वर्गस्य लोकस्य प्राप्तिहेतुः[5]। तथा सत्यनयोरुभयोः 'उभाभ्यां' षडहाभ्यां यन्तीति यदस्ति, तेन

---

१. आश्व० श्रौ० ११.७.१,२। आश्वलायनो हि 'अथ गवामयनम्' इत्यारभ्य 'इति गवामयनम्'—इत्यन्तं ग्रन्थमुक्त्वापि पुनरुवाच 'सर्वे वा षडहा अभिप्लवाः स्युः' —इति (११.७.२१)। ततो ज्ञायते केषाञ्चिन्मते गवामयनादित्यानामयनयोर्न षडहकृतं वैषम्यमपि त्वन्यथैवेति। तच्च वैषम्य तत्र तदुत्तरमेव स्फुटीकृतं द्रष्टव्यम्।

२. 'गवामयनेनादित्यानामयनं व्याख्यातम्। सर्वे त्वभिप्लवास्त्रिवृत्पञ्चदशाः'—इत्यादि आश्व० श्रौ० १२.१.१–७। तथा च सर्वेऽभिप्लवाः पर्यायतस्त्रिवृत्पञ्चदशस्तोमकृता एव तत्र भवन्तीति प्रधानं वैषम्यं द्योतितम्।

३. 'आदित्यानामयनेनाङ्गिरसामयनं व्याख्यातम्। त्रिवृतस्त्वभिप्लवाः सर्वे'—इत्यादि आश्व० श्रौ० १२.२.१–६। तथा चात्र सर्वं एवाभिप्लवास्त्रिवृदेकसाध्या इति प्रधानं वैषम्यम्।

४. 'स्वर्गं लोकमभ्यप्लवन्त, यदभ्यप्लवन्त तस्मादभिप्लवाः'—इति शत० ब्रा० १२.२.२.१०।

५. 'स्वर्गं लोकमस्पृशंस्तस्मात् पृष्ठ्यः'—इति शत० ब्रा० १२.२.२.११।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'उभाभ्यां' पादद्वयस्थानीयाभ्यां 'यन्' गच्छन् पुरुषो 'न रिष्यति' न विनश्यति, योऽभिप्लवे कामोऽस्ति, यश्च पृष्ठ्यषडहे; तयोरुभयोः कामयोः प्राप्त्यै षडहद्वयं संपद्यते[1] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां तृतीयाध्याये (अष्टादशाध्याये) तृतीयः खण्डः ॥ ३ ॥ (१७) [१३८]

वह [कंकड़-पत्थरों व काँटों से विहीन] राजमार्ग के समान अभिप्लव षडह स्वर्ग लोक का सीधा मार्ग है; और [दो नगरों के मध्य मुख्य मार्ग रूप चारों ओर जाने के लिए महा पथ के समान यह पृष्ठ्य षडह स्वर्ग लोक की प्राप्ति का हेतु है। इसलिए जो दोनों [षडहों] से आगे जाते हैं वे [पादद्वय रूप] दोनों से जाते हुए अरिष्ट को नहीं प्राप्त करते हैं; और जो अभिप्लव षडह में और जो पृष्ठ्य षडह में कामनाएँ होती हैं उन दोनों कामनाओं की प्राप्ति के लिए षडह-द्वय संपादित होते हैं।

॥ इस प्रकार अट्ठारहवें अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

इत्थं गवामयनमादित्यानामयनमङ्गिरसामयनं चैते संवत्सरसत्रविशेषा उक्ताः। तत्र सर्वत्र पूर्वोत्तरयोर्मासषट्कयोर्मध्यवर्ति यत्प्रधानमहरस्ति, तदेतद् विधत्ते—

**एकविंशमेतदहरुपयन्ति विषुवन्तं मध्ये संवत्सरस्य ॥** इति।

छन्दोगब्राह्मणे—'सप्तभ्यो हिंकरोति'—इत्यादिना[2] विहितो योऽयमेकविंशः स्तोमः, तेनैव स्तोमेनास्य सर्वस्तोत्रप्रवृत्तेरिदमहः 'एकविंशम्' इत्युच्यते। तत्र विषुवन्नामकम्, संवत्सरसत्रस्य ये पूर्वे षण्मासाः, ये चोत्तरे, तयोर्मासषट्कयोरुभयतो वर्तमानयोर्मध्ये तदेतदहरनुष्ठेयम्। एतच्च नोभयोर्मासषट्कयोरन्तर्भवति। किन्त्वतिरिक्तमेकम्। तथा च आश्वलायन आह—'अथ विषुवानेकविंशो न पूर्वस्य पक्षसो नोत्तरस्येति[3] ॥

iv. १८ [xviii. ४] संवत्सर सत्र के [पहले छः मास और बाद के छः मास के] मध्य 'विषुवन्त' नामक इस 'एकविंश-दिन' का अनुष्ठान करते हैं।

तदेतदहः प्रशंसति—

**एतेन वै देवा एकविंशेनादित्यं स्वर्गाय लोकायोदयच्छन् ॥** इति।

---

१. 'गावो वै सत्रमासत'—इत्याख्यायिका (६३५ पृ०) सामयजुषोरपि प्राय एवमेव ता० ब्रा० ४.१; तै० सं० ७.५.१। 'स्तुतयो ह्येताः सत्रस्य'—इत्यादि जै० सू० १.१.३२ शाबर भा०।

२. ता० ब्रा० २.१४–१७ ख०।

३. आश्व० श्रौ० ११.७.७, ८।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पुरा देवाः 'एतेन' अह्ना स्वर्गलोकाख्यम् 'आदित्यमुदयच्छन्' इत ऊर्ध्वं प्रापितवन्तः। तथा च शाखान्तरे पठ्यते—'एकवि ँ्श एष भवति। एतेन वै देवा एकवि ँ्शेना दित्यमित उत्तम ँ् सुवर्गं लोकमारोहयन्'[1] इति ॥

इसी 'एकविंश' के द्वारा देवों ने सूर्य को स्वर्ग लोक तक ऊपर उठाया।

आदित्यस्य तेनाह्ना साम्यं दर्शयति—

**स एष इत एकविंशः ॥ इति।**

योऽयमादित्योऽस्ति, स एष 'इतः' भूलोकादारभ्य गण्यमान एकविंशतिसंख्यापूरको भवति। तथा चान्यत्राम्नायते—'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः'[2] इति। अथवाऽत्रैव विषुवतः पुरस्तात् पश्चाच्च वक्ष्यमाणमहर्दशकद्वयमपेक्ष्य 'विषुवान्' 'एकविंश' इत्युच्यते। अस्मिन् पक्षे इदं वाक्यमुत्तरशेषत्वेन योजनीयम् ॥

वह यह [आदित्य] इस [भूलोक] से [आरम्भ करके बारह मास, पाँच ऋतु, तीन लोक और एक सूर्य ही ] एकविंश है।

इदानीमुभयतो दशकद्वयं विधत्ते—

**तस्य दशावस्तादहानि दिवाकीर्त्यस्य भवन्ति; दश परस्तात्, मध्य एष एकविंश उभयतो विराजि प्रतिष्ठितः, उभयतो हि वा एष विराजि प्रतिष्ठितः; स्तस्मादेषोऽन्तरेमाँल्लोकान् यन् न व्यथते ॥ इति।**

दिवैव कीर्तनीयं मन्त्रजातं यस्मिन् विषुवत्यहनि तदहः 'दिवाकीर्त्यम्'। तस्याह्नः 'अवस्तात्' अधोभागे दशाहानि भवन्ति। 'परस्तात्' ऊर्ध्वभागेऽपि दशाहानि भवन्ति। तयोर्दशकयोर्मध्य 'एष एकविंशः' विषुवान् वर्तते। 'तस्य' विषुवतः 'अधस्तात्' पूर्वपक्षे षष्ठे मासे 'स्वरसामानः' अहर्विशेषास्त्रयः, तेभ्यः पूर्वमभिजिदाख्यमेकाहः, पूर्वं पृष्ठ्यः षडह इति 'दशाहानि'। विषुवदूर्ध्वं तु प्रत्यवरोहक्रमेण त्रयः स्वरसामानः, ततो विश्वजिदाख्यमेकाहः, तत ऊर्ध्वं पृष्ठ्यः षडह इति 'दशः' अहानि। एवमुभयोः पार्श्वयोरह्नां दशसंख्योपेतत्वात् विराट्त्वम्, एतस्यामुभयतोऽवस्थितायां 'विराजि' अयमेकविंशः प्रतिष्ठितः। यथोक्तगणनया विराजि प्रतिष्ठामेव 'हि'शब्दोपेतेन वाक्येन स्पष्टीकरोति।[3] 'तस्मात्' उभयतो विराड्द्वयेन रक्षितत्वात् 'एषः' आदित्यो विषुवदहःस्थानीयः। 'इमाँल्लोकानन्तरा' एषां लोकानां सर्वेषां मध्ये 'यन्' गच्छन्नपि 'न व्यथते' व्यथां न प्राप्नोति। विषुवानप्येकविंश आदित्योऽप्येकविंशः, तस्मादुभयोरेकत्वे सति

---

१. तै० ब्रा० १.२.४.१। 'एष एवैकविंशो य एष तपति'—इति च शत० ब्रा० १.३.५.११। २. तै० सं० ५.१.१०.३।
३. 'विराजि हि वा एष उभयतः प्रतिष्ठितः'—इति तै० ब्रा० पाठः (१.२.४.१)।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विषुवतो यद्विराड्द्वयोपेतत्वम्' तदेवादित्यस्योभयतोविराट्त्वं भवति। आदित्यस्य व्यथाराहित्ये विषुवतो वैकल्यराहित्यं सिध्यति। अथवा विषुवतो यथा विराड्द्वयमुभयतो रक्षकम्, एवमादित्यस्याप्यधस्तादुपरिष्टाच्च वर्तमानं लोकद्वयम्। एतदेवाभिप्रेत्य शाखान्तरे श्रूयते—'तस्मादन्तरेमौ लोकौ यन् सर्वेषु सुवर्गेषु लोकेषु अभितपन्नेति'[1] इति॥

उस दिवाकीर्त्य [विषुवत् में दिन में कहे जाने वाले मन्त्र] के अधो भाग में दस दिन होते हैं और ऊर्ध्वभाग में भी दस दिन [३ स्वरसाम १ अभिजित् और षडह] होते हैं। दोनों [दशक] के मध्य यह एकविंश [विषुवान्] है। इस प्रकार यह दोनों ओर अवस्थित विराट् के मध्य में प्रतिष्ठित है। क्योंकि यह दोनों ओर अवस्थित विराट् के मध्य प्रतिष्ठित है इसलिए इन लोकों के बीच में जाते हुए वह व्यथित नहीं होता।

अथ विषुवत उभयतः समीपवर्तिनः स्वरसामाख्यानहर्विशेषान् प्रशंसति—

**तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैरवस्तात् प्रत्युत्तभ्नुवन् स्तोमा वै त्रयः स्वर्गा लोकास्तस्य पराचोऽतिपातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैः परस्तात् प्रत्यस्तभ्नुवन् स्तोमा वै त्रयः स्वर्गा लोकास्तत्त्रयोऽवस्तात् सप्तदशा भवन्ति, त्रयः परस्तान्मध्य एष एकविंश, उभयतः स्वरसामभिर्धृत, उभयतो हि वा एष स्वरसामभिर्धृतस्तस्मादेषोऽन्तरेमाँल्लोकान् यन्न व्यथते॥ इति।**

योऽयमादित्योऽस्ति, 'तस्य' आदित्यस्य स्वर्गलोकात् 'अवपातः' आधाराभावाद् अधःपतनम्, तस्माद्देवा 'अबिभयुः' आदित्योऽधः पतिष्यतीति भीताः सन्तः 'तम्' आदित्यम् 'अवस्तात्' मण्डलस्याधोभागे 'त्रिभिः स्वर्गैर्लोकैः' स्वर्गशब्दोपलक्षितैर्भूरादिभिः 'प्रत्युत्तभ्नुवन्' अधःपातप्रतिबन्धार्थमुत्तम्भनमाधाररूपमकुर्वन्। यथा गृहगतवंशादीनामधःपातनिवारणाय स्तम्भेनोत्तम्भनं कुर्वन्ति, तद्वदिति। वर्तमानस्यादित्यस्य यथा त्रयो लोका उत्तम्भकाः, तथैवादित्यस्थानीयस्य विषुवतोऽह्नः स्वर्गलोकसदृशास्त्रयः स्तोमा एवोत्तम्भकाः। सप्तदशस्तोमयुक्ताः स्वरसामानोऽहर्विशेषाः स्तोमशब्देनात्र विवक्षिताः। पुनरपि देवास्तस्यादित्यस्य 'पराचोऽतिपातात्' मण्डलात् पराभूतेषूर्ध्ववर्तिषु लोकेषु योऽयम् 'अतिपातः' दृष्टिगोचरं देशमुल्लङ्घ्य यत्र क्वापि दूरदेशगमनम्, तस्मादतिपाताद्भीताः सन्तः 'परस्तात्' आदित्यमण्डलस्योपरि त्रिभिर्जनतपःसत्यशब्दाभिधेयैः 'त्रिभिः स्वर्गैर्लोकैः' 'तम्' आदित्यं 'प्रत्यस्तभ्नुवन्'। यथा पूर्वत्राधःपतननिवृत्त्यर्थमुत्तम्भनं कृतम्, एवमुपरिष्टादतिपातनिवृत्त्यर्थं 'प्रतिस्तम्भनं' प्रतिबन्धकस्तम्भमकुर्वन्। आदित्यस्थानीयस्य तु विषुवतोऽह्न उत्तरपक्षगताः स्तोमशब्दोपलक्षिताः स्वरसामाख्यास्त्रयोऽहर्विशेषा एव प्रतिस्तम्भकाः। 'तत्' तथा सति ये विषुवतोऽह्नः 'अवस्तात्' अधोवर्तिनस्त्रयोऽहर्विशेषास्ते सप्तदशस्तोमयुक्ताः कार्याः। ये च 'परस्तात्' उपरिवर्तिनस्त्रयोऽह-

१. तै० ब्रा० १.२.४.१।



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विशेषास्तेऽपि सप्तदशस्तोमयुक्ताः कार्याः। एवं च सति मध्येऽवस्थित एकविंशाख्योऽहर्विशेषः 'उभयतः' अधस्तादुपरिष्टाच्च स्वरसामनामकैस्त्रिभिस्त्रिभिरहोभिर्धृतः। अयमेवार्थः—शाखान्तरप्रसिद्धद्योतकेन 'हि'शब्दयुक्तेन वाक्येन पुनर्दृढीकृतः। यस्मात् विषुवदहःस्थानीय आदित्यः, स्वरसामस्थानीयैरुभयतोऽवस्थितैस्त्रिभिस्त्रिभिर्लोकैर्धृतः, 'तस्मात्' कारणादप्यादित्यः 'अन्तरा' मध्येऽवस्थित इमाँल्लोकान् सर्वान् सर्वदा 'यन्' गच्छन्नपि 'न व्यथते' व्यथां न प्राप्नोति। अत्रार्थवादेन पूर्वेषूत्तरेषु च त्रिष्वहस्सु सप्तदशस्तोमविधिरुन्नेयः। तथा च शाखान्तरे श्रूयते—'उक्थ्या एव सप्तदशाः परःसामानः कार्याः'[1] इति। स्वरसामाख्यानामह्नामेव परःसामेति नामान्तरम्॥

उस स्वर्गलोक से आदित्य के गिरने के भय से देव डर गए। उन्होंने [भूः, भुवः, स्वः आदि] तीन स्वर्गलोकों के द्वारा मण्डल के अधोभाग में आधार कर दिया। तीन स्वर्ग लोक स्तोम ही हैं। तब उस [सूर्य] के मण्डल के ऊर्ध्वभाग में पतन के भय से वे डर गए। उन्होंने तीन स्वर्गलोकों के द्वारा मण्डल के ऊपर से रोक लगा दी। तीन स्वर्ग लोक स्तोम ही हैं। इस प्रकार अधोवर्ती तीन अहः-विशेष भी सप्तदश स्तोम युक्त होते हैं और ऊपरिवर्ती तीन अहः विशेष भी। उन दोनों के मध्य 'एकविंश' नामक यह अहः है जो दोनों ओर से स्वरसामों के द्वारा धृत रहता है। क्योंकि यह [सूर्य] दोनों ओर से अवस्थित स्वरसामों से धृत होता है; इसलिए इन लोकों के बीच में जाते हुए वह व्यथित नहीं होता।

अथ विहितानेतान् पूर्वोत्तरान् सप्तदश स्तोमान् प्रकारान्तरेण पुनः प्रशंसति—

**तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तं परमैः स्वर्गैर्लोकैरवस्तात् प्रत्युत्तभ्नुवन् स्तोमा वै परमाः स्वर्गा लोकास्तस्य पराचोऽतिपातादबिभयुस्तं परमैः स्वर्गैर्लोकैः परस्तात् प्रत्यस्तभ्नुवन् स्तोमा वै परमाः स्वर्गा लोकास्तत्त्रयोऽवस्तात् सप्तदशा भवन्ति त्रयः परस्तात् ते द्वौ द्वौ संपद्य त्रयश्चतुस्त्रिंशा[2] भवन्ति, चतुस्त्रिंशो वै स्तोमानामुत्तमस्तेषु वा एष एतदध्याहितस्तपति तेषु हि वा एष एतदध्याहितस्तपति॥** इति।

तेषु हि लोकेषु वर्तमानो य आदित्यस्तस्य स्वर्गलोकादवपातः स्यादिति देवा भीताः सन्तः, तमित्यादि पूर्ववत्। स्तोमानामादित्यस्य स्तम्भनत्वरूपं परमत्वं; तेनोभयतो वर्तमानाः षट्संख्याकाः सप्तदशस्तोमकाः द्वौ द्वौ एकीभूय त्रिसंख्याकाश्चतुस्त्रिंशस्तोमा भवन्ति। त्रिवृत्-पञ्चदश-सप्तदशै-कविंश-त्रिनवत्रयस्त्रिंशाख्याश्छन्दोगैराम्नाता ये स्तोमाः सन्ति,[3]

---

१. तै० ब्रा० १ २.२.१।

२. 'सम्पद्यत्त्रय०'—इत्येव पाठः। तदत्र तकारस्य द्विवर्चनम् 'अनचि च'—इति (पा० सू० ८.४.४७), प्रातिशाख्यसम्मतं वेति।

३. ता० ब्रा० २.१–७ खण्डेषु क्रमात् द्रष्टव्याः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तेषामयं चतुस्त्रिंशस्तोम उत्तमः पूर्वापेक्षया संख्याधिक्यात्। 'तेषु' स्तोमस्थानीयेषूभयतः स्थितेषु स्वर्गेषु 'एषः' आदित्यो 'अध्याहितः' जगत्स्रष्टा स्थापितः सन् 'एतत्' प्रत्यक्षं यथा भवति तथा 'तपति' संतापं करोति 'तेषु हि'—इति वाक्येन तदेव दृढीक्रियते ॥

उस आदित्य के स्वर्गलोक से गिरने के भय से देव डर गए। उन्होंने परम-स्वर्गलोकों से अधोगभाग में रोक लगा दी। स्तोम ही परम-स्वर्गलोक हैं। उस [सूर्य] के मण्डल के ऊर्ध्वभाग में पतन के भय से वे डर गए। उन्होंने परम-स्वर्ग लोकों से ऊर्ध्वभाग में रोक लगा दी। स्तोम ही परम-स्वर्ग-लोक हैं। इस प्रकार अधोवर्ती तीन अहः विशेष भी सप्तदशस्तोम युक्त होते हैं और ऊपरिवर्ती तीन अहः-विशेष भी। वे [उभयतः वर्तमान षट्संख्याक सप्तदशस्तोम] दो-दो मिलकर तीन चतुस्त्रिंश-स्तोम होते हैं। [त्रिवृत् पञ्चदश आदि स्तोमों में यह चतुस्त्रिंश स्तोम [संख्याधिक्य के कारण] उत्तम हैं। उन स्तोमों के बीच यह प्रत्यक्ष दृश्यमान सूर्य अवस्थित होकर तपता है, क्योंकि यह प्रत्यक्ष दृश्यमान सूर्य उन स्तोमों के बीच अवस्थित होकर तपता है।

विषुवत एवं प्रशंसामभिप्रेत्य तद्रूपत्वेनोपचरितमादित्यं पुनः प्रशंसति—

**स वा एष उत्तरोऽस्मात् सर्वस्माद् भूताद् भविष्यतः—सर्वमेवेदमतिरोचते यदिदं किञ्चोत्तरो भवति ॥** इति।

योऽयमादित्योऽभिहितः, स एवैष भूताद्भविष्यतश्च 'सर्वस्मात्' अस्माज्जगतः, 'उत्तरः' उत्कृष्टः—'यदिदं किंच' जगदस्ति, इदं सर्वमेव, 'अति'क्रम्य 'रोचते' दीप्यते; तद्वदयं विषुवानप्यन्येभ्यः सर्वेभ्योऽहोभ्य 'उत्तरः' उत्कृष्टो भवति ॥

जो यह सूर्य है वही यह भूत और भविष्य सभी में उत्कृष्ट है और इस जगत् में जो कुछ भी है उनमें सबसे अधिक देदीप्यमान है [अतः यह विषुवान् अहः भी सभी दिनों से उत्कृष्ट होता है]।

वेदनं प्रशंसति—

**यस्मादुत्तरो बुभूषति, तस्मादुत्तरो भवति य एवं वेद ॥ १८ ॥** इति।

एतद् वेदनादुत्कृष्टो भूत्वा प्रतिष्ठयाऽधिकं शोभते, तस्मादुत्कृष्टतरो भवति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थ-पञ्चिकायां तृतीयाध्याये (अष्टादशाध्याये) चतुर्थः खण्डः ॥ ४ ॥ (१८) [१३९]

जो इस प्रकार जानता है, वह क्योंकि उत्कृष्ट होकर [अधिक प्रतिष्ठा से] शोभित होता है इसलिए वह उत्कृष्टतर होता है।

॥ इस प्रकार अट्ठारहवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ पञ्चमः खण्डः

स्वरसामाख्येष्वहस्सु सप्तदशस्तोमाः पूर्वं विहिताः; इदानीं तान्यहानि विधत्ते—

**स्वरसाम्न उपयन्तीमे वै लोकाः स्वरसामान इमान् वै लोकान् स्वरसामभिरस्पृण्वंस्तत् स्वरसाम्नां स्वरसामत्वम्; तद्यत् स्वरसाम्न उपयन्त्येष्वेवैनं तल्लोकेष्वाभजन्ति ॥** इति ।

स्वरसामाख्यान् षट्संख्याकान् अहर्विशेषाननुतिष्ठेयुः । आदित्यस्याधस्तादुपरिष्टाच्च वर्तमाना इम एव लोकाः स्वरसामरूपाः तस्मादनुष्ठितैरेतैः स्वरसामभिरिमाँल्लोकान् 'अस्पृण्वन्' प्रीतानकुर्वन् । तस्मादेतेषामह्नां स्वरोपेतसामवत् प्रीतिहेतुत्वात् स्वरसामेति नाम संपन्नम् । एतेषामनुष्ठातारो लोकेषु सर्वेषु 'आभजन्ति' भोगभाजो भवन्ति ॥

iv. १९ [xviii. ५] **वे स्वरसामों का अनुष्ठान करते हैं। ये लोक ही स्वरसाम हैं। इन लोकों को स्वरसामों के द्वारा प्रसन्न किया गया इसीलिए इसका नाम 'स्वरसाम' पड़ा। इस प्रकार जो स्वरसामों का अनुष्ठान करते हैं उससे ही वे इसको इन लोकों में भाग प्रदान करते हैं।**

अथ स्वरसामभ्यः सर्वेभ्योऽधस्ताद् उपरिष्टाच्च द्वे अहनी विधत्ते—

**तेषां वै देवाः सप्तदशानां प्रव्लयादबिभयुः समा इव वै स्तोमा अविगूह्ळा इवेमे ह न प्रव्लियेरन्निति तान् सर्वैः स्तोमैरवस्तात् पर्यार्षन् सर्वैः पृष्ठैः परस्तात् तद्यदभिजित् सर्वस्तोमोऽवस्ताद् भवति विश्वजित् सर्वपृष्ठः परस्तात्, तत्सप्तदशानुभयतः पर्यृषन्ति, धृत्या अप्रव्लयाय ॥** इति ।

ये स्वरसामानः सप्तदशस्तोमयुक्ताः 'तेषां' 'प्रव्लयात्' प्रकर्षेण विशरणाद् देवा अबिभयुः । 'व्ली विशरणे' इति धातोरिदं रूपम् । विशरणशङ्का कथमिति, तदुच्यते— षट्स्वहस्सु प्रयोक्तव्या एते सप्तदशस्तोमाः 'समा इव वै' सदृशा एव; तस्मात् 'अविगूह्ळा इव' गूहनस्य गोपनस्याभावाच्छिथिला एव,—एकबन्धत्वे सति नूतनत्वचमत्काराभावादनादरेण विशीर्णा भवन्ति । तस्मादिमे स्तोमाः 'न प्रव्लियेरन्' प्रकर्षेण विशीर्णा मा भूवन्निति विचार्य 'तान्' सप्तदशस्तोमान् 'अवस्तात्' अधोभागे सर्वैः स्तोमैस्त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिनवत्रयस्त्रिंशाख्यैः 'पर्यार्षन्' परितो गताः, रक्षणाय परितो वेष्टनं कृतवन्त इत्यर्थः । तथा 'परस्तात्' सप्तदशस्तोमानामुपरिभागे 'सर्वैः पृष्ठैः' रथंतर-बृहद्-वैरूप-वैराज-शाक्वर-रैवतसामाख्यैः पृष्ठस्तोत्रैः 'पर्यार्षन्' । तस्मात् स्वरसाम्नाम् 'अधस्तात्' पूर्वस्मिन् दिवसे सर्वस्तोमयुक्तम् 'अभिजिद्' आख्यमहरनुष्ठेयम् । तथा तेषामुपरिष्टात् सर्वपृष्ठस्तोत्रयुक्तं 'विश्वजिद्'आख्यमहरनुष्ठेयम् । यदेतद् द्विविधमनुष्ठानं तेन सप्तदशस्तोमानुभयतः 'पर्यृषन्ति' परिरक्षन्ति तच्च रक्षणं 'धृत्यै' दार्ढ्याय 'अप्रव्लयाय' शैथिल्याभावाय संपद्यते ॥

**उन सप्तदश स्तोमों [से युक्त स्वरसामों] की प्रच्युति के भय से देव डर गए कि कहीं [छः दिनों में प्रयुक्त होने वाले] स्तोम सम होने के कारण एवं [अन्य स्तोमों से]**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सुरक्षित न होने के कारण प्रच्युत न हो जायें। उन्होंने उन [सप्तदशस्तोमों] को नीचे से सभी स्तोमों के द्वारा और ऊपर से सभी पृष्ठ्यों के द्वारा सुरक्षित किया। इस लिए उस [स्वरसाम] के अधोभाग [पूर्व दिवस] में सभी स्तोमों से युक्त 'अभिजित्' [नामक अहः अनुष्ठित] होता है; और उसके बाद सभी पृष्ठ स्तोत्रों से युक्त 'विश्वजित्' [नामक अहः अनुष्ठित] होता है। इस प्रकार वे उन सप्तदश स्तोमों को दोनों ओर से उसकी दृढ़ता और शैथिल्य के अभाव के लिए परिरक्षित करते हैं।

अथ विषुवत्यहनि पञ्च सामानि विधत्ते—

**तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तं पञ्चभी रश्मिभिरुदवयन्, रश्मयो वै दिवाकीर्त्यानि, महादिवाकीर्त्यं पृष्ठं भवति, विकर्णं ब्रह्मसाम भासमग्निष्टोमसामोभे बृहद्रथंतरे पवमानयोर्भवतस्तदादित्यं पञ्चभी रश्मिभिरुद्वयन्ति धृत्या अनवपाताय ॥** इति।

देवाः पुनरपि 'तस्य' आदित्यस्य स्वर्गलोकादधःपातमाशङ्क्य तस्माद् भीताः। यद्यपि पृथिव्यादिलोकत्रयमुत्तम्भकमुक्तं, तथाऽप्युपरि रज्जुभिरिव दृढबन्धनस्याभावादिति ततश्चलने सति पार्श्वयोः पतनमाशङ्क्यते तन्मा भूदिति देवाः तमादित्यं 'पञ्चभी रश्मिभिः' प्रग्रहैः 'उदवयन्' ऊर्ध्वमुत्कृष्य वयनं कृतवन्तः, दृढं बद्धवन्त इत्यर्थः। ये बन्धनहेतवो रश्मयः, तत्स्थानीयानि अस्मिन् विषुवति 'दिवाकीर्त्यानि' दिवैव पठनीयानि पञ्च सामानि तेषु मध्ये महादिवाकीर्त्यनामकमेकं साम। तच्च 'विभ्राड् बृहत् पिबतु सोम्यं मधु' इत्यस्यामृच्युत्पन्नम्[1]। तत्सामयुक्तं पृष्ठस्तोत्रं कर्तव्यम्। तथा विकर्णाख्यमेकं साम, तच्च 'पृक्षस्य वृष्णो अरुषस्य नू सहः' इत्यस्यामृच्युत्पन्नम्[2]। तदेतद् ब्रह्मसाम कर्तव्यम्। ब्राह्मणाच्छंसिनमभिलक्ष्य गीयमानं साम 'ब्रह्मसाम'; तथा भासाख्यमपरं साम। तदपि 'पृक्षस्य' इत्यस्यामेवोत्पन्नम्[3]। तच्चाग्निष्टोमसाम कर्तव्यम्। येन साम्नाऽग्निष्टोमसंस्था समाप्यते, 'तत्' 'अग्निष्टोमसाम'। बृहद्रथंतरे प्रसिद्धे भवतः[4]। माध्यंदिनपवमानार्भवपवमानयोः

---

१. ऋ० १०.१७०.१। आर० आ० ५.२; आर० गा० ६.१.१५ महादिवाकीर्त्यं (योनिसाम); उ० आ० ६.३.५.१–३ तृचे ऊह्य० गा० २.१.१२ महादिवाकीर्त्यम् (स्तोत्रम्)।

२. ऋ० ६.८.१; 'पृक्षस्य'—इत्यस्याम् (आर० आ० २.८) ऋचि विकर्णं नावगम्यते, अपि तु 'विभ्राड् बृहत्'—इत्यस्यामेव (आर० आ० ५.२ ऋचि) योनिगानमुत्पन्नं आर० गा० ६.१.७ श्रूयते। 'इन्द्र क्रतुं नः'—इत्यत्र (उ० आ० ६.३.६.१, २) प्रगाथे गीतं (ऊह्य० २.१.१७) स्तोत्रमेवेह विहितमिति च गम्यते; ताण्ड्यभाष्युदर्शनादितः (ता० ब्रा० ४.६.१५ सा० भा०)।

३. आर० आ० ३.८ ऋचि आर० गा० ६.१.८ उ० आ० नास्ति, तस्माद् इदं योनिसामैव स्तोत्रम्। एतदेव दशस्तोममित्युच्यते।

४. द्र० इतः पूर्वम् पृ० ६२२, टी० ४, ५।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कर्तव्यत्वात् ।[१] पञ्चसामप्रयोगेण आदित्यं पञ्चभिः सामरज्जुभिरूर्ध्वं बध्नन्ति । तच्चादित्यस्य धारणाय भवति । तेन धारणेनाधःपातो न भवति ॥

उस आदित्य के स्वर्गलोक से गिरने के भय से देव डर गए । उन्होंने उनको पाँच रज्जुओं से कसकर बाँध दिया । वे रश्मियाँ दिवाकीर्त्य साम हैं; और पृष्ठ महादिवाकीर्त्य । ब्राह्मणाच्छसिन का साम 'विकर्ण' है और अग्निष्टोम का साम 'भास' है । दोनों बृहद् और रथन्तर साम उन [माध्यन्दिन और आर्भव] पवमान में से होते हैं । इस प्रकार उस आदित्य को वे पाँच [साम रूप] रज्जुओं से उसकी धृति के लिए और गिरने न देने के लिए कसकर बाँधते हैं ।

अथ प्रातरनुवाकस्य चोदकप्राप्तकालं बाधितुं कालान्तरं विधत्ते—

**उदित आदित्ये प्रातरनुवाकमनुब्रूयात्, सर्वं ह्येवैतदहर्दिवाकीर्त्यं भवति ॥ इति ।**

प्रकृतावादित्योदयात् प्रागेव प्रातरनुवाकः पठ्यते ।[२] अत्र तु सर्वस्याह्नो दिवाकीर्त्यत्वसिद्ध्यर्थमुदयादूर्ध्वमनुब्रूयात् ॥

सूर्य के उदित होने पर प्रातरनुवाक बोले, क्योंकि यह सभी दिन [का अनुष्ठान] 'दिवाकीर्त्य' होता है ।

सवनीयपशौ कंचिद् विशेषं विधत्ते—

**सौर्यं पशुमन्यङ्गश्वेतं सवनीयस्योपालम्भ्यमालभेरन् सूर्यदेवत्यं ह्येतदहः ॥ इति ।**

सूर्यो देवता यस्य पशोः, सोऽयं 'सौर्यः'; 'न्यङ्गं' वर्णान्तरेण संपादितं चिह्नम्, तन्नास्ति यत्र सः 'अन्यङ्गः', तादृशश्चासौ श्वेतश्च सोऽयम् 'अन्यङ्गश्वेतः' वर्णान्तरेणामिश्रितः, सर्वश्वेत इत्यर्थः[३] । तादृशः पशुरत्र सवनीयस्थान उपालम्भ्यः[४]; अतस्तमालभेरन् । यस्मादेतदहः सूर्यदेवत्यम्, तस्माद्युक्तः सूर्यदेवत्यः पशुः ॥

---

१. 'दिवाकीर्त्यसामा भवति' इत्यादि ( ता० ब्रा० ४.६.१२-१६ ) ।

२. 'महति रात्र्यामनूच्यः पुरा शकुनिवादात्'—ऐ० ब्रा० ७.५, पृ० २६७; द्र० आश्व० श्रौ० ८.६.२ ।

३. ( i ) 'जातवेदोन्यङ्गा'—द्र० इतः पूर्वम्, ३६७ पृ० । 'मैत्रावरुणो न्यङ्गः' इति, 'एष वै सोमस्य न्यङ्गो यदरुणपुष्पाणि फाल्गुनानि' इति शत० ब्रा० १.८.१.१७; ४.५.१०.२ ।

( ii ) 'न्यङ्गश्चिह्नमन्यवर्णः श्वेतो यस्य न विद्यते । तं सर्वश्वेतमित्यर्थं 'आङो योनेति च नुं लभेः' इति षड्गुरुशिष्यः ।

४. 'उपात् प्रशंसायाम्'—इति पा० सू० ७.१.६६; नुमि रूपम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जिस सूर्य-पशु का सवनीय स्थान में लाकर आलम्भन करे, वह वर्णान्तर से मिश्रित न होकर सम्पूर्ण रूप से सफेद होना चाहिए; क्योंकि यह दिन सूर्य देवता का है।

सामिधेनीषु विशेषं विधत्ते—

**एकविंशतिं सामिधेनीरनुब्रूयात् प्रत्यक्षाद्ध्येतदहरेकविंशम् ॥** इति।

'एतद्' विषुवन्नामकमहरेकविंशस्तोमयुक्तत्वात् 'प्रत्यक्षाद्धि' साक्षादेव मुख्यमेवैकविंशं तस्मात् सामिधेनीनामेकविंशतिसंख्या युक्ता। अत्र चोदकप्राप्ताः पञ्चदश, धाय्याः षट् संख्याका इत्येकविंशतिः। तथा च आश्वलायन आह—'विषुवान् दिवाकीर्त्यः, उदिते प्रातरनुवाकः, 'पृथुपाजा अमर्त्य' इति षड् धाय्याः सामिधेनीनां, सौर्यः सवनीयस्योपालम्भ्यः'[1] इति॥

इक्कीस सामिधेनियों का पाठ करना चाहिए क्योंकि यह ['विषुवत्' नामक अहः एकविंश स्तोम से युक्त होने के कारण] साक्षात् रूप से 'एकविंश' है।

निष्केवल्यशस्त्रे निविद्धानं विधत्ते—

**एकपञ्चाशतं द्विपञ्चाशतं वा शस्त्वा मध्ये निविदं दधाति; तावतीरुत्तराः शंसति; शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रिय आयुष्येवैनं तद्वीर्य इन्द्रिये दधाति ॥ १९ ॥** इति।

तस्मिन् शस्त्रे स्तोत्रियानुरूपयोस्तृचयोः षड् ऋचः[2] 'यद्वावान'—इत्येका[3] धाय्या बृहद्रथंतरयोर्योनी द्वे,[4] उत्तमसामप्रगाथस्य प्रग्रथनेन तिस्रः,[5] 'नृणामु त्वा नृतमम्'[6]—इति तिस्रः, 'यस्तिग्मशृङ्गः'[7] इत्येकादशर्चः, 'अभित्यम्'[8] इति पञ्चदशर्चः, इत्येवमेकचत्वारिंशत्। तत्र प्रथमया त्रिरभ्यस्तया सह त्रिचत्वारिंशत्। 'इन्द्रस्य नु वीर्याणि'[9]—इत्यस्मिन् पञ्चदशर्चे सूक्तेऽष्टौ नव वा शंसनीयाः। तत्राष्टत्वपक्षे—एकपञ्चाशद् भवन्ति। नवपक्षे द्विपञ्चाशत्। तच्छंसनादूर्ध्वम् 'इन्द्रस्य नु वीर्याणि'—इत्यस्य सूक्तस्य मध्य ऐन्द्रीं 'निविदम्' दध्यात्[10]। तत ऊर्ध्वं पुनरपि 'तावतीः' ऋचः शंसेत्। तथा सति शतसंख्यासंपत्त्या पुरुषायुःसाम्यं भवति। इन्द्रियाणि च शतसंख्यासु नाडीषु संचाराच्छतं भवन्ति। तदीयव्यापाराश्च तथा शतसंख्याकाः। एवं सति यजमानं सम्पूर्णं आयुषि वीर्यं इन्द्रियेष्ववस्थापयति॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां तृतीयाध्याये (अष्टादशाध्याये) पञ्चमः खण्डः ॥५॥ (१९) [ ४० ]

---

१. आश्व० श्रौ० ८.६.१–४।
२. विभ्राड् बृहत् पिबतु, नमो मित्रस्य—ऋ० १०.१७०.१–३, १०.३७.१–३=६।
३. ऋ० १०.७४.६।
४. बृहद् रथन्तरयोर्योनी—ऋ० ६.४६.१, ७.३२.२२=छ० आ० ३.१.५.२, ५.१:
५. इन्दुमिद् देवतातये—ऋ० ८.३.५, ६=उ० आ० ७.३.८.१, २=३।
६. ऋ० ३.५१.४।
७. ऋ० ७.१९.१–११।
८. ऋ० १.५१.१–१५।
९. ऋ० १.३२.१–१५।
१०. द्र० आश्व० श्रौ० ८.६.११–१३।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इक्यावन अथवा बावन ऋचाओं का शंसन करके ['इन्द्रस्य नु' आदि ऋचा के] मध्य में निविद् रक्खे। उसके बाद पुनः उतनी ही ऋचाओं का शंसन करे। मनुष्य की आयु सौ वर्ष है। वह शत-वीर्य, और [नाड़ी रूप से] शत-इन्द्रिय है। इस प्रकार इस [यजमान] को [होता] आयु, वीर्य और इन्द्रियों में स्थापित करता है।

॥ इस प्रकार अट्ठारहवें अध्याय के पाँचवें खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

अथ कस्याश्चिद्दचः शंसनं विधत्ते—

**दूरोहणं रोहति; स्वर्गो वै लोको दूरोहणम् ॥ इति।**

दुःशकं रोहणं यस्मिन्नादित्यमण्डले तद् 'दूरोहणं', तत्रारोहणस्य साधनत्वान्मन्त्रस्वरूपमपि 'दूरोहणम्'—इत्युच्यते। तद् 'रोहति' आरोहणार्थं शंसेदित्यर्थः। यद्वा, मन्त्रस्य दुःशक उच्चारणविशेषो 'दूरोहणं', स च विशेषः सूत्रेऽवगन्तव्यः।[1] तं 'रोहति' विशिष्टमुच्चारणं कुर्यादित्यर्थः। योऽयं स्वर्गलोकः, तस्यारोहणं दुःशकमिति दूरोहणत्वम्। तादृशं स्वर्गं लोकं प्रापयतीत्यर्थः॥

iv. २० [xviii. ६] जहाँ आरोहण दुःसाध्य है, उस आदित्य मण्डल में आरोहण के लिए साधन स्वरूप दूरोहण मन्त्र का जप करे, अथवा उच्चारण में क्लिष्ट मन्त्र का उच्चारण करता है अर्थात् कठिन चढ़ाई चढ़ता है। यह स्वर्ग लोक ही दूरोहण [=कठिन चढ़ाई] है।

वेदनं प्रशंसति—

**स्वर्गमेवं तल्लोकं रोहति य एवं वेद ॥ इति।**

जो इस प्रकार जानता है वह इस प्रकार उससे स्वर्ग लोक को चढ़ता है।

विहितमर्थं प्रशंसति—

**यदेव दूरोहणा३म्, असौ वै दूरोहो योऽसौ तपति; कश्चिद्वा अत्र गच्छति, स यद् दूरोहणं रोहत्येतमेव तद् रोहति ॥ इति।**

दूरोहणमिति यदुक्तं तत्किमिति शेषः। प्रश्नार्था प्लुतिः। असावित्यत्रोत्तरमुच्यते। 'योऽसौ' आदित्यस्तपति, असावेव 'दूरोहः' दुःशकारोहणस्थानावस्थितत्वात्। अथवा यः 'कश्चिद्' यजमानः सम्यगनुष्ठायात्रादित्यलोके गच्छति, सोऽपि 'दूरोहः' दुःशकस्थानारोहणत्वात्। एवं सति 'यद्' यदि 'दूरोहणं'[2] मन्त्रं रोहति शंसेत्, 'तत्' तेन शंसनेन 'एतमेव' आदित्यं लोकं 'रोहति' प्राप्नोति॥

---

१. द्र० आश्व० श्रौ० ८.२.१३–१५।

२. 'दूरोहणं सप्तरूपं यत्तत्पूज्यमिति प्लुतः'—इति षड्गुरुशिष्यः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जो यह दूरोहण है वह क्या है ? यही [सूर्य] दूरोह [=कठिन अरोहण स्थान] है जो यह तपता है; और जो कोई वहाँ [आदित्य लोक में] जाता है, वह कठिन चढ़ाई ही चढ़ता है। इस प्रकार उससे वह इस [आदित्यलोक] को ही प्राप्त करता है।

मन्त्रविशेषं विधत्ते—

**हंसवत्या रोहति ॥ इति ।**

हंसशब्दो यस्यामृच्यस्ति, सेयं 'हंसवती'[1] तया रोहेत्, तामुच्चारयेदित्यर्थः ॥

हंसवती ['हंस'—शब्द से युक्त] ऋचा से आरोहण करता है अर्थात् शंसन करे।

तस्या ऋचः प्रथमपादे पूर्वभागमनूद्य व्याचष्टे—

**'हंसः शुचिषद्' इत्येष वै शुचिषत् ॥ इति ।**

हन्ति सर्वदा गच्छतीति 'हंसः'। शुचौ शुद्धे द्युलोके सीदति तिष्ठतीति 'शुचिषत्'। अस्मिन् भागे यः प्रतिपाद्यते, स 'एष वै' मण्डले दृश्यमान एव,—स च सर्वदा गतिमत्वाद्धंसो भवति, द्युलोकेऽवस्थानाच्छुचिषदपि भवति ॥

'पवित्र द्युलोक में रहते हुए जो सर्वदा चलता रहता है'—इसमें प्रतिपादित गतिमान 'हंस' सूर्य ही है जो द्युलोक में अवस्थित होने से 'शुचिषत्' है।

उत्तरभागमनूद्य व्याचष्टे—

**'वसुरन्तरिक्षसद्' इत्येष वै वसुरन्तरिक्षसत् ॥ इति ।**

वसति सर्वदेति 'वसुः' वायुः, न हि वायोरहनि रात्रौ वा कदाचिदस्तमयोऽस्ति; तादृशो वायुरन्तरिक्षे सीदति—इति 'अन्तरिक्षसत्'। आदित्यस्य परमात्मरूपत्वेन सर्वात्मकत्वाद् अन्तरिक्षसद् वायुरप्येष एवेत्युच्यते ॥

'अन्तरिक्ष में रहते हुए [वायु] सर्वदा वर्तमान है'—इसमें प्रतिपादित आदित्य का परमात्मरूप सर्वात्मक होने से अन्तरिक्ष में रहने वाला वायु यह ही है।

द्वितीयपादस्य पूर्वभागमनूद्य व्याचष्टे—

**'होता वेदिषद्' इत्येष वै होता वेदिषत् ॥ इति ।**

'होता' होमस्य कर्ता; यागवेद्यां सीदतीति 'वेदिषत्'। आदित्यस्य तद्रूपत्वं पूर्ववत् ॥

'यागवेदि में वर्तमान होता'—इसमें प्रतिपादित 'होता वेदिषद्' भी आदित्य ही है।

उत्तरभागमनूद्य व्याचष्टे—

**'अतिथिर्दुरोणसद्' इत्येष वा अतिथिर्दुरोणसत् ॥ इति ।**

न विद्यते तिथिविशेषनियमो याचार्थे यस्य, सोऽयम् 'अतिथिः' सन् दुरोणेषु तत्तद् गृहेषु सीदति याचितुं प्रविशतीति 'दुरोणसत्'। आदित्यस्य तद्रूपत्वमपि द्रष्टव्यम् ॥

---

१. 'हंसः शुचिषद्'—ऋ० ४.४०.५। तै०सं० १.८.१५.२। शत०ब्रा० ६.५.३.१२। निरु० १३.४.१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'गृहों में रहते हुए माँगने वाला अतिथि है'—इसमें प्रतिपादित 'दुरोणसत्' अतिथि [जिसकी यात्रा में कोई विशेष नियम न हो वह सूर्य] भी यही है।

तृतीयपादं चतुर्धा विभज्य प्रथमभागमनूद्य व्याचष्टे—

**नृषदित्येष वै नृषत् ।। इति ।**

नृषु मनुष्येषु दृष्टिरूपेण सीदतीति 'नृषत्'। तथा च अरण्यकाण्डे वक्ष्यति—'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्'[1] इति। तस्मादेष आदित्य एव नृषच्छब्दवाच्यः ।।

'मनुष्यों में दृष्टि रूप से विद्यमान्'—इसमें प्रतिपादित 'नृषत्' भी यही आदित्य है।

द्वितीयभागमनूद्य व्याचष्टे—

**'वरसद्' इत्येष वै वरसद्, वरं वा एतत् सद्मनां यस्मिन्नेष आसन्नस्तपति ।। इति ।**

वरे श्रेष्ठे मण्डले सीदतीति 'वरसत्'। एतस्यादित्यस्य मण्डलेऽवस्थानं प्रसिद्धम्। यानि 'सद्मानि' निवासस्थानानि सन्ति, तेषां मध्ये 'यस्मिन्' मण्डले 'एषः' आदित्यः 'आसन्नः' उपविष्टः सन् तपति 'एतत्' मण्डलं 'वरं' श्रेष्ठं सद्म ।।

'श्रेष्ठ मण्डल में वर्तमान'—इसमें प्रतिपादित 'वरसत्' भी यही है। जिस मण्डल में विद्यमान रहकर यह आदित्य तपता है; यह मण्डल ही श्रेष्ठ सद्म है।

तृतीयभागमनूद्य व्याचष्टे—

**'ऋतसद्' इत्येष वै सत्यसत् ।। इति ।**

ऋतं सत्यवदनं वेदवाक्यं तत्र सीदति प्रतिपाद्यते—इति 'ऋतसत्'। आदित्यस्य सत्येन वेदवाक्येन प्रतिपाद्यत्वमनेकमन्त्रेषु प्रसिद्धम् ।।

'सत्यवाक् [वेद] में विद्यमान'—इसमें प्रतिपादित 'ऋतसत्' भी आदित्य ही है [जो वेद मन्त्रों में प्रतिपादित सत्य रूप से प्रसिद्ध है]।

चतुर्थभागमनूद्य व्याचष्टे—

**'व्योमसद्' इत्येष वै व्योमसद्; व्योम वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपति ।। इति ।**

व्योम्न्याकाशमार्गे सीदतीति 'व्योमसत्'। आदित्यस्य तथाविधत्वं प्रसिद्धम्। 'यस्मिन्' व्योमस्थाने 'एषः' आदित्यः प्रत्यासन्नस्तपति, तत् 'एतत्' स्थानं 'सद्मनां' निवासस्थानानां मध्ये 'व्योम' गृहाद्यावरणशून्यमाकाशम् ।।

'आकाश मार्ग में विद्यमान'—यही 'व्योमसत्' है। जिस आकाशस्थान में यह आदित्य रहकर तपता है; वह निवासस्थानों में 'व्योम' है।

---

१. ऐ० आ० ४.२.४।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चतुर्थं पादं पञ्चधा विभज्य प्रथमभागमनूद्य व्याचष्टे—

**'अब्जा' इत्येष वा अब्जा, अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति ॥ इति ।**

अद्भ्यो जायते योऽयं मकरादिः, सोऽयम् 'अब्जा' तद्रूपत्वमस्य सर्वात्मकत्वाद् अवगन्तव्यम् । किंचायमादित्योऽस्मद् दृष्ट्या प्रातःकाले पूर्वसमुद्रगताभ्योऽद्भ्य उदेति, सायंकाले पश्चिमसमुद्रगता अतः प्रविशतीव लक्ष्यते; तस्माद् अब्जाः ॥

**'जल से उत्पन्न'—इसमें प्रतिपादित 'अब्जा' भी यही है । [समुद्र रूप] जल से यह प्रातःकाल उदित होता है और सायंकाल जल में ही प्रविष्ट हो जाता है ।**

द्वितीयभागमनूद्य व्याचष्टे—

**'गोजा' इत्येष वै गोजाः ॥ इति ।**

गोभ्यो जायते जीवादिः, स 'गोजाः', अस्य तद्रूपत्वं पूर्ववत् ॥

**'गो आदि जीवों से उत्पन्न'—इसमें प्रतिपादित 'गोजाः' भी यही है ।**

तृतीयभागमनूद्य व्याचष्टे—

**'ऋतजा' इत्येष वै सत्यजाः ॥ इति ।**

ऋतं सत्यं वैदिकमन्त्रजातम्, तस्माज्जायत इति 'ऋतजाः' । वैदिकानुष्ठानेन हि देवलोकादौ जायत इति प्रसिद्धम् । आदित्यस्य तद्रूपत्वं पूर्ववत् ॥

**'सत्य [वैदिक मन्त्र] से उत्पन्न'—इसमें प्रतिपादित 'ऋतजा' भी यही है ।**

चतुर्थभागमनूद्य व्याचष्टे—

**'अद्रिजा' इत्येष वा अद्रिजाः ॥ इति ।**

अद्रावुदयगिरावुत्पद्यत इति 'अद्रिजाः' । आदित्यस्य तथात्वं पुराणादौ प्रसिद्धम् ॥

**'उदयगिरि से उत्पन्न'—इसमें प्रतिपादित 'अद्रिजाः' का अर्थ आदित्य का उदयाचल से निकलना है ।**

पञ्चमभागमनूद्य व्याचष्टे—

**'ऋतम्' इत्येष वै सत्यम् ॥ इति ।**

ऋतशब्दः सत्यवाची । सत्यं च द्विविधम्,—व्यावहारिकं पारमार्थिकं च । तत्र 'व्यावहारिकं' वाचा सत्यभाषणम्, 'पारमार्थिकं' परं ब्रह्म । 'सत्यं ज्ञानमनन्तं ब्रह्म'[1]—इति श्रुतेः । तदिदमृतशब्देन विवक्षितम् । अयं चादित्यो ब्रह्मरूपं सत्यम् । अत एव शाखान्तरे 'बृहत्'[2]—इति मन्त्रशेषं पठन्ति । मन्त्रान्तरे चैवं श्रूयते—'असौ वा आदित्यो ब्रह्म'[3] इति ॥

---

१. तै० आ० ८.१ ।

२. वा० सं० १०.२४ । तै० सं० १.८.१५.२ । कात्या० श्रौ० १५.६.२६ । कठ० उ० ५.२ ।

३. शत० ब्रा० ७.४.१.१४ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'ब्रह्मरूप से सत्य' —यह आदित्य ही सत्य है।

कृत्स्नस्य मन्त्रस्य तात्पर्यं दर्शयति—

**एष एतानि सर्वाण्येषा ह वा अस्य च्छन्दःसु प्रत्यक्षतमादिव रूपम् ॥ इति।**

शुचिषदित्यादिशब्दैर्यानि रूपाण्यभिहितानि, तानि सर्वाण्येष एव; अस्य परब्रह्मत्वेन सर्वात्मकत्वात्। 'छन्दःसु' वेदेषु मध्य 'एषा ह वै' हंसवती ऋक्। सैव 'अस्य' आदित्यस्य सर्वात्मकं 'रूपं' 'प्रत्यक्षतमादिव' अतिशयेन प्रत्यक्षं विस्पष्टं यथा भवति तथा प्रतिपादयतीति शेषः॥

[शुचिषत् इत्यादि शब्दों में अभिहित सभी रूप इन्हीं आदित्य का है। वेद में जो यह हंसवती ऋचा है वही इस आदित्य का प्रत्यक्षतम [सर्वात्मक] रूप है।

मन्त्रतात्पर्यं दर्शयन्नेव विधिं निगमयति—

**तस्माद् यत्र क्व च दूरोहणं रोहेद्धंसवत्यैव रोहेत्॥ इति।**

यत्र क्वापि कर्मणि दूरोहणविधानमस्ति, तत्र सर्वत्र हंसवत्यैव विज्ञेयम्॥

इसलिए जहाँ कहीं भी याग में 'दूरोहण' के शंसन का विधान है वहाँ हंसवती ऋचा को ही समझना चाहिए।

फलभेदेन सूक्तान्तरं विधत्ते—

**तार्क्ष्ये स्वर्गकामस्य रोहेत्॥ इति।**

तार्क्ष्याख्येन महर्षिणा दृष्टं तार्क्ष्यम्[1]। तस्मिन् सूक्ते स्वर्गकामस्य यजमानस्य दूरोहणं रोहेत् न तु हंसवत्या॥

स्वर्ग की कामना वाले को तार्क्ष्य-सूक्त में [दूरोहण का] शंसन करना चाहिए।

तदेतत्प्रशंसति—

**तार्क्ष्यो ह वा एतं पूर्वोऽध्वानमैत्, यत्रादो गायत्री सुपर्णो भूत्वा सोममाहरत्, तद् यथा क्षेत्रज्ञमध्वनः पुर एतारं कुर्वीत, तादृक् तद् यदेव तार्क्ष्ये; अयं वै तार्क्ष्यो योऽयं पवते, एष स्वर्गस्य लोकस्याभिवोढा॥ इति।**

अत्रैव वक्ष्यमाणं कार्यं संपन्नम्। तत्र 'तार्क्ष्यो ह वै' गरुड एव 'पूर्वः' प्रथमगामी सन् 'एतम्' अध्वानम् 'ऐत्' प्राप्तवान्। किं वक्ष्यमाणमिति, तदुच्यते—गायत्री 'सुपर्णः' पक्षी भूत्वा सोममाहरत्। एतच्च पूर्वमेव प्रतिपादितम्।[2] एवं सति 'तार्क्ष्ये' सूक्ते 'यदेव'

१. ऋ० १०.१७८.१–३। अस्य सूक्तस्य ऋषिस्तार्क्ष्यः, देवोऽपि तार्क्ष्य एव। तत्र ऋषिपक्षे तृक्षस्य गोत्रापत्यमित्येव व्युत्पत्तिः स्यात् साधीयसी, गर्गादिषु तृक्षशब्दस्य पाठात् (पा० सू० ४.१.१०५)। देवपक्षे तु निर्वचनान्तरं निरुक्ते द्रष्टव्यम् (१०.३.३)।

२. द्र० इतः पूर्वम्, ४७३ पृ०।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शंसनं 'तत्' तत्र शंसने दृष्टान्तः कथ्यते—यथा लोके 'क्षेत्रज्ञं' मार्गविशेषाभिज्ञं तद्देश-वासिनं कञ्चित्पुरुषम् 'अध्वनः' मार्गस्य 'पुर एतारं' पुरतो गन्तारं मार्गप्रदर्शकं कुर्वीत, तादृक् 'तत्' तार्क्ष्यशंसनम् । यः 'अयं' वायुरन्तरिक्षे पवते अयमेव तार्क्ष्यस्वरूपः[1] । एष च स्वर्गस्य लोकस्य 'अभिवोळ्हा' नेता भवति । तस्मात् तार्क्ष्यसूक्तेनैव दूरोहणं रोहेत् ॥

तार्क्ष्य [गरुड़] ही प्रथमगामी होकर मार्ग में चला था, जब गायत्री ने सुपर्ण होकर सोम का आहरण किया । जैसे [लोक में] मार्गविशेषज्ञ को कोई मार्ग में पथप्रदर्शक बनाता है उसी प्रकार वह तार्क्ष्य-सूक्त में [दूरोहण का] शंसन करता है । जो यह [वायु अन्तरिक्ष में] बहता है, यही तार्क्ष्य स्वरूप है । यही स्वर्गलोक को ले जाने वाला है ।

तस्य सूक्तस्य प्रथमायामृचि प्रथमपादमनूद्य व्याचष्टे—

**'त्य मू षु वाजिनं देवजूतम्' इत्येष वै वाजी देवजूतः ॥** इति ।

चतुर्थपादे तार्क्ष्यमिति वक्ष्यति । कीदृशं तार्क्ष्यम् ? 'त्य मू षु' । त्यच्छब्दः सर्व-नामत्वात् प्रसिद्धवाची । उशब्द एवकारार्थः—पुराणादिषु प्रसिद्धमेव । 'वाजिनम्' अन्न-वन्तं, 'देवजूतं' देवानां मध्ये वेगवन्तम् । अस्मिन् पादेऽभिधीयमानः 'एष वै' तार्क्ष्य एव, तस्यान्नवत्त्वाद् देवेषु मध्ये वेगवत्त्वाच्च ॥

'यही अन्नवान् और देवों के मध्य वेगवान् हैं'—इस पाद में यही [तार्क्ष्य] अभिहित हैं जो अन्नवान् और देवों के मध्य वेगवान् हैं ।

द्वितीयपादमनूद्य व्याचष्टे—

**'सहावानं तरुतारं रथानाम्' इत्येष वै सहावांस्तरुतैष हीमाँल्लोकान् सद्य-स्तरति ॥** इति ।

पुनरपि कीदृशं तार्क्ष्यम् ? 'सहावानं' सहाः सहनं सर्वाहीनामभिभवस्तद्वन्तम् । रथानां 'तरुतारम्' उल्लङ्घयितारम् । 'एषं वै' तार्क्ष्य एवास्मिन् पादेऽभिहितः, 'सहावान्' अभिभवक्षमः, 'तरुता' उल्लङ्घयिता भवति; यस्माद् 'एष इमाँल्लोकान् सद्यः' तदानीमेव तरितुं क्षमः ॥

'सभी [सर्पादिकों] के अभिभविता और रथों का भी उल्लङ्घन करने वाले हैं'—यह [तार्क्ष्य] ही अभिभविता और लाँघने वाले हैं; क्योंकि यही इन लोकों को शीघ्र ही तारने में समर्थ होते हैं ।

तृतीयपादमनूद्य व्याचष्टे—

**'अरिष्टनेमिं पृतनाजमाशुम्' इत्येष वा अरिष्टनेमिः पृतनाजिदाशुः ॥** इति ।

पुनरपि कीदृशं तार्क्ष्यम् ? 'अरिष्टनेमिं' रिष्टं हिंसा, तद्राहित्यम् अरिष्टम् । तस्य च नेमिस्थानीयम्—यथा रथचक्रस्य नेमिः परितो रक्षिका भवति तादृशम् । 'पृतना' पर-

---

१. 'कमन्यं मध्यमःदेवमवक्ष्यत्'—इति निरुक्त १०.३.४ । मध्यमः वायुः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कीयसेना, तां जयतीति 'पृतनाजम्'। 'आशुं' वेगवन्तम्। अस्मिन् पादेऽभिहितानां गुणानां तार्क्ष्ये सद्भावादेष एवात्र प्रतिपाद्यः ॥

[जैसे रथचक्र का 'नेमि' रक्षक होता है वैसे ही] 'अहिंसितों के नेमिस्थानीय और परकीयसेना का जय करने वाले एवं शीघ्रगामी'—यही [तार्क्ष्य] अरिष्टनेमि और परकीयसेना का जय करने वाले एवं शीघ्रगामी हैं।

चतुर्थपादे प्रथमभागमनूद्य व्याचष्टे—

**स्वस्तय इति स्वस्तितामाशास्ते ॥ इति।**

'स्वस्तये' क्षेमार्थमनेन पादेन क्षेमः प्रार्थितो भवति ॥

'कल्याण के लिए'—इस पाद से क्षेम की आशंसा की जाती है।

उत्तरभागमनूद्य व्याचष्टे—

**तार्क्ष्यमिहा हुवेमेति ह्वयत्येवैनमेतत् ॥ इति।**

'तार्क्ष्यं' गरुडम् 'इह' कर्मणि 'हुवेम' आह्वयामः।' एतेन भागेन तार्क्ष्यमाह्वयत्येव[1] ॥

'इस कर्म में हम तार्क्ष्य का आह्वान करते हैं'—इस भाग के पाठ से वह इन [तार्क्ष्य] का ही आह्वान करता है।

तार्क्ष्यसूक्ते द्वितीयस्या ऋचः पूर्वार्धे प्रथमभागमनूद्य व्याचष्टे—

**'इन्द्रस्येव रातिमाजोहुवानाः स्वस्तये'–इति स्वस्तितामेवाशास्ते ॥ इति।**

यथेन्द्रस्य दातव्यं हविः प्रयच्छामः, तथैवास्य तार्क्ष्यस्य 'रातिं' दातव्यं वसु 'आजोहुवानाः'[1] समन्तात् पुनः पुनर्ददाना वयमारुहेमेति वक्ष्यमाणेन संबन्धः। किमर्थम्? 'स्वस्तये' क्षेमार्थम्— एतत्पाठेन 'स्वस्तितामेव' क्षेममेव 'आशास्ते' प्रार्थयते ॥

'जैसे इन्द्र को प्रदेय हवि देते हैं; वैसे ही इस तार्क्ष्य को प्रदेय वसु पुनः-पुनः देते हुए कल्याण के लिए [हम चढ़ते हैं]'—इसके पाठ से क्षेम की ही आशंसा की जाती है।

उत्तरभागमनूद्य व्याचष्टे —

**नावमिवारुहेमेति, समेवैनमेतदधिरोहति, स्वर्गस्य लोकस्य समष्ट्यै, संपत्त्यै संगत्यै ॥ इति।**

यथा लोके नद्युत्तरणाय नावमारोहति, एवं स्वर्गं प्राप्तुं दूरोहणमारुहेम। एतद्भागपाठेन 'एनं' दूरोहणं स्वर्गं 'समेव' सम्यगेव 'अधिरोहति'। अतस्तच्छसनं स्वर्गस्य 'समष्ट्यै' प्राप्त्यै भवति। सा च प्राप्तिः 'संपत्त्यै' भोगाय, भोग्यवस्तुसंपादनाय भवति। संपादनं 'संगत्यै' भोगसंबन्धाय भवति ॥

जैसे [लोक में नदी पार करने के लिए] नाव पर चढ़ते हैं उसी प्रकार [स्वर्ग प्राप्ति के लिए दूरोहण पर] चढ़ता हूँ। इस [भाग] के पाठ से इस [दूरोहण स्वर्ग] पर

---

१. ऋ० १०.१७८.१। द्र० निरु० १०.३.४।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सम्यक् रूप से चढ़ता है। अतः वह शंसन स्वर्ग लोक की प्राप्ति के लिए, वहाँ के भोग के लिए और भोग से सम्बन्ध के लिए होता है।

उत्तरार्धमनूद्य व्याचष्टे—

**'उर्वी न पृथ्वी बहुले गभीरे मा वामेतौ मा परेतौ रिषाम'—इतीमे एवैतदनुमन्त्रयत आ च परा च मेष्यन् ॥ इति ।**

नकारः समुच्चयार्थः। 'उर्वी न' भूमिश्च 'पृथ्वी' विस्तीर्णा द्यौश्च, 'बहुले' उभे अप्यतिदीर्घे, 'गभीरे' अत्यन्तगाम्भीर्येण युक्ते उभयोरियत्ता निश्चेतुमशक्येत्यर्थः। तादृश्यौ हे द्यावापृथिव्यौ, वयम् 'एतौ' आगमनवेलायां 'परेतौ' पुनर्गमनवेलायां च 'वाम्' उभे 'मा रिषाम' हिंसायुक्ते मा करवाम[1]। एतत्पाठेन होता 'आमेष्यंश्च' आगमिष्यन्नपि, 'परामेष्यंश्च'[2] पुनरपि परावृत्य गमिष्यन्नपि 'इमे एव' द्यावापृथिव्यावेव अनुमन्त्रयते ॥

'हे विस्तीर्ण पृथिवी, दोनों ही अत्यन्त दीर्घ, और अत्यन्त गम्भीर हे द्यावा-पृथ्वी! तुमसे सम्बन्धित इस तार्क्ष्य की आगमन वेला में और जाने की वेला में हम हिंसित न होवें'—इसके पाठ से होता इसके आने के समय और जाने के समय द्यावा-पृथिवी का ही अनुमन्त्रण करता है।

तृतीयस्या ऋचः पूर्वार्धमनूद्य व्याचष्टे—

**'सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषाऽपस्ततान'—इति प्रत्यक्षं सूर्यमभिवदति ॥ इति ।**

'यः' तार्क्ष्यः 'सद्यश्चित्' तस्मिन्नेव क्षणे 'शवसा' बलेन 'पञ्च कृष्टीः' पञ्चविधान् पुरुषजातिविशेषान् देवमनुष्यासुर-राक्षस-गन्धर्वान् अतिविस्तारितवान्,—यथा सूर्यो 'ज्योतिषा' स्वकीयरश्मिसमूहेन 'अपः' वृष्ट्युदकं 'ततान' विस्तारयति, तद्वत्। एतत्पाठेन तार्क्ष्यदेवं सूर्यं 'प्रत्यक्षं' मुख्यं कृत्वा 'अभिवदति' प्रशंसति ॥

'जिस तार्क्ष्य ने उसी समय अपने बल से पञ्चविध पुरुष जाति [देव, मनुष्य, असुर राक्षस एवं गन्धर्वों] का विस्तार किया, जैसे सूर्य अपनी रश्मियों से वृष्टिरूप जल का विस्तार करते हैं वैसे ही'—इस [पाठ] से [तार्क्ष्य देव स्वरूप] प्रत्यक्षतः सूर्य की ही प्रशंसा करता है।

उत्तरार्धमनूद्य व्याचष्टे—

**'सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम्'—इत्याशिषमेवैतेनाशास्त आत्मने च यजमानेभ्यश्च ॥ २० ॥ इति ।**

'अस्य' तार्क्ष्यस्य 'रंहिः' गतिः 'सहस्रसाः' सहस्रभेदयुक्ताः, 'शतसाः' शतभेदयुक्ताः। 'वन षण संभक्तौ'—इति धातुः। सहस्रं सनुते संभजतीति 'सहस्रसाः' सहस्रभेदयुक्ताः तां

---

१. ऋ० १०.१७८.२।  २. निघण्टौ गतिकर्मसु 'मिष्यति' २.१४.२३।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

गतिं केऽपि 'न स्मा वरन्ते' न वारयन्ति। यथा लोके 'शर्यां' शरकाष्ठनिर्मितां 'युवतिं' शत्रुशरीरमिश्रणयोग्यां युवतिं न वरते, तद्वत्। नकार उपमार्थः। यथाऽतिशूरेण धानुष्केण प्रयुक्तो बाणः केनाऽपि न निवार्यते, तथा त्वदीयगतिरित्यर्थः।[1] 'एतेन' अर्धर्चपाठेनायं होता 'आत्मने च' स्वार्थमपि 'यजमानेभ्यश्च' सत्रानुष्ठातृबहुयजमानार्थमप्याशिषमेव प्रार्थयते रक्षार्थाय; ताक्ष्यंगतेरनिवार्यत्वाभिधानात्[2] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां तृतीयाध्याये (अष्टादशाध्याये) षष्ठः खण्डः ॥ ६ ॥ (२०) [ १४१ ]

'इस [ताक्ष्यं] की सहस्र-भेद युक्त और शत-भेद युक्त गति का कोई भी उसी प्रकार वारण नहीं कर सकता जिस प्रकार अत्यन्त शूरवीर के द्वारा चलाए गऐ वाण को भी नहीं रोक सकता है'—इस [अर्धर्च] के पाठ से होता अपने लिए और यजमानों के लिए भी आशीर्वाद की ही प्रार्थना करता है।

॥ इस प्रकार अट्ठारहवें अध्याय के षष्ठ खण्ड की हिन्दी पूर्ण हुई ॥ ६ ॥

## अथ सप्तमः खण्डः

अथ दूरोहणसूक्तशंसनस्य प्रकारान्तरं विधत्ते—

**आहूय दूरोहणं रोहति, स्वर्गो वै लोको दूरोहणम्, वागाहावो, ब्रह्म वै वाक्, स यदाह्वयते तद् ब्रह्मणाहावेन स्वर्गं लोकं रोहति ॥ इति।**

'शोंसावोम्' इत्यध्वर्योराह्वानं कृत्वा तदनन्तरं 'त्य मू षु'—इत्यादिकं दूरोहणं सूक्तं 'रोहेत्' रोहणक्रमेण पठेत्। दूरोहणस्य स्वर्गरूपत्वात्, आहावस्य वाग्रूपत्वात्, वाचश्च वेदात्मिकाया ब्रह्मत्वात्, प्रथममाह्वाने सति ब्रह्मरूपेण आहावेन स्वर्गमारोहति ॥

iv. २१ [xviii. ७] ['शोंसावोम्' रूप] आह्वान करके 'दूरोहण' सूक्त का [आरोहण क्रम से] पाठ करता है। स्वर्गलोक ही दूरोहण है, वाक् 'आहाव' है और [वेदात्मक] वाणी ही ब्रह्म है। वह जो आह्वान करता है, उस ब्रह्म रूप आह्वान से स्वर्गलोक पर आरोहण करता है।

अपरं प्रकारविशेषं विधत्ते—

**स पच्छः प्रथमं रोहतीमं तं लोकमाप्नोत्यथार्धर्चशोऽन्तरिक्षं तदाप्नोत्यथ त्रिपद्याऽमुं तं लोकमाप्नोत्यथ केवल्या; तदेतस्मिन् प्रतितिष्ठति य एष तपति ॥ इति।**

---

1. ऋ० १०.१७८.३। द्र० निरु० १०.३.५।
2. अहर्गणेषु द्वितीयादिष्वहस्सु निष्केवल्यसूक्तानां पुरस्तादिदं सूक्तं शंसनीयं भवति; विषुवति तु निष्केवल्यसूक्तानामन्त एव। द्र० आश्व० श्रौ० ७.१.१३; ८.६.१४।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

द्वेधा सूक्तस्य शंसनम्, रोहक्रमेणावरोहक्रमेण चेति। तं चारोहे चतुर्वारमावर्तनीयम्। प्रथमावृत्तौ 'पच्छः' पादशः पठेत्। एकैकस्मिन् पादेऽवसानं कृत्वा शंसेत्। द्वितीयस्यामावृत्तौ 'अर्धर्चशः' एकैकस्मिन्नर्धेऽवसानं कृत्वा पठेत्। तृतीयस्यामावृत्तौ 'त्रिपद्या' आवृत्त्यां पादत्रयेऽवसानं कृत्वा पठेत्। चतुर्थ्यामावृत्ताववसानरहितया संपूर्णया शंसेत्। 'तत्' एताभिश्चतसृभिरावृत्तिभिर्लोकत्रयं प्राप्य, पश्चात् 'एतस्मिन्' प्रकाशमाने सूर्यमण्डले प्रतितिष्ठति ॥

वह प्रथम आवृत्ति में पादशः आरोहण करता है। इस प्रकार वह इस लोक को प्राप्त करता है; और अर्धर्चशः पाठ करके उससे अन्तरिक्ष लोक को प्राप्त करता है। फिर तीन-तीन पद के अवसान पर पाठ करता है। इससे वह उस लोक को प्राप्त करता है। चतुर्थ आवृत्ति में अवसानरहित सम्पूर्ण ऋचा का शंसन करता है। इन [चारों आवृत्तियों] से [तीन लोकों को प्राप्त करके] जो यह तपता है उस [सूर्य] के इस [प्रकाशमान सूर्यमण्डल] में प्रतिष्ठित हो जाता है।

आरोहप्रकारविशेषं विधाय प्रत्यवरोहणं विधत्ते—

**त्रिपद्या प्रत्यवरोहति,—यथा शाखां धारयमाणस्तदमुष्मिँल्लोके प्रतितिष्ठत्यर्धर्चशोऽन्तरिक्षे पच्छोऽस्मिँल्लोक आप्त्वैव तत्स्वर्गं लोकं यजमाना अस्मिँल्लोके प्रतितिष्ठन्ति ॥** इति।

प्रत्यवरोहक्रमे प्रथमावृत्तौ पादत्रयेऽवसानम्; द्वितीयावृत्तार्धर्चेऽवसानं; तृतीयावृत्तौ पादेऽवसानम्। तथा सति यथा लोके वृक्षाग्रमारुह्य पुरुषः प्रत्यवरोहन् हस्तेन शाखां दृढमवलम्ब्य स्थिरो भवति, एवमयं प्रथमतः स्वर्गे प्रतिष्ठाय पश्चादन्तरिक्षे भूलोके च प्रतितिष्ठति। यथा होतुः प्रतिष्ठा, तथा यजमानानामपि। ते च स्वर्गं प्राप्य पुनरागत्यास्मिँल्लोके प्रतितिष्ठन्ति। तावेतावारोहप्रत्यवरोहौ हंसवतीपक्षे तार्क्ष्यपक्षेऽपि समानौ। एवमुच्चारणस्य दुःशकत्वाद् अस्य शंसनस्य 'दूरोहणसंज्ञा' ॥

[प्रत्यवरोह क्रम में] तीन-तीन पादों के अवसान पर उतरता है, जैसे [लोक में वृक्ष के ऊपर चढ़कर पुरुष] शाखा पकड़कर उतरता है। इस प्रकार उससे वह स्वर्गलोक में प्रतिष्ठित होता है, अर्धर्चशः पाठ से अन्तरिक्षलोक में और पादशः पाठ से इस लोक में प्रतिष्ठित होता है। इस प्रकार उससे स्वर्गलोक को पाकर होता जैसे प्रतिष्ठित होता है वैसे ही यजमान भी इस लोक में प्रतिष्ठित होते हैं।

कामनाभेदेन प्रकारान्तरं विधत्ते—

**अथ य एककामाः स्युः, स्वर्गकामाः पराञ्चमेव तेषां रोहेत्, ते जयेयुर्हैव स्वर्गं लोकम् ॥** इति।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एकस्मिन्नेव लोके कामो येषां त 'एककामाः' स्वर्गं लोकमेव कामयन्ते, न त्वेनं लोकम्, तेषां 'पराञ्चमेव' प्रत्यवरोहरहितमेव 'रोहेत्' शस्त्रं पठेत्। तावता ते स्वर्गं लोकं 'जयेयुर्हैव' प्राप्नुवन्त्येव ॥

और, जो एक ही कामना करें अर्थात् स्वर्ग की कामना करें उन्हें प्रत्यवरोहक्रम-रहित ही शंसन करना चाहिए। तब वे स्वर्गलोक को प्राप्त ही कर लेते हैं।

अस्मिन् पक्षे कंचिद्दोषं दर्शयति—

**नेत्त्वेवास्मिँल्लोके ज्योगिव वसेयुः ॥** इति।

ते स्वर्गं प्राप्नुवन्त्येव, किंत्वत्र दोषोऽस्त्येव;—ते यजमाना अस्मिन्नेव लोके 'ज्योगिव' चिरकालमेव 'नेद्वसेयुः' सर्वथा न तिष्ठेयुः। परिभव द्योतकेन नेदित्यनेनाऽऽयुःक्षयहेतुरयं पक्षो दूषितः ॥

किन्तु वे इस लोक में चिरकाल तक सर्वथा न रह सकेंगे।

सूक्तान्तराणि विधत्ते—

**मिथुनानि सूक्तानि शस्यन्ते,—त्रैष्टुभानि च जागतानि च; मिथुनं वै पशवः पशवश्छन्दांसि, पशूनामवरुद्ध्यै ॥ २१ ॥** इति।

मिथुनशब्द एकत्वनिवारकः; ततो 'बहूनि' इत्युक्तं भवति। 'यस्तिग्मशृङ्गः' इत्यादीनि 'त्रैष्टुभानि'[1], 'दिवश्चिदस्य वरिमा' इत्यादीनि 'जागतानि'[2] उदेतच्छन्दोद्वयं मिथुनसदृशम्। पशवोऽपि मिथुनात्मकाः; छन्दांसि च पशुसाधनत्वात् पशवः; अतस्तेषां शंसनं पशुप्राप्त्यै भवति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थ-पञ्चिकायां तृतीयाध्याये (अष्टादशाध्याये) सप्तमः खण्डः ॥७॥ (२१) [१४२]

मिथुन [जोड़े] सूक्तों का शंसन करते हैं—त्रिष्टुभ और जगती के जोड़े। पशु भी मिथुनात्मक हैं; और [पशु प्राप्त होने से] छन्द पशु हैं। [अतः उनका शंसन] पशुओं की प्राप्ति के लिए होता है।

॥ इस प्रकार अट्ठारहवें अध्याय के सातवें खण्ड की हिन्दी पूर्ण हुई ॥ ७ ॥

---

१. 'तस्य (तार्क्ष्यस्य) एकाम् (ऋचं) शस्त्वाहूय (आहावं पठित्वा) दूरोहणं रोहेत्'—इति आश्व० श्रौ० ८.६.१५।

२. यस्तिग्मशृङ्गो (ऋ० ७.१९), ऽभित्यं मेषम् (ऋ० १.५१), इन्द्रस्य नु वीर्याणि (ऋ० १.३२) इति"—इति आश्व० श्रौ० ८.६.१२।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ अष्टमः खण्डः

अथ विषुवन्नामकमहर्विशेषं मनुष्यसाम्येन प्रशंसति—

**यथा वै पुरुष एवं विषुवांस्तस्य यथा दक्षिणोऽर्ध एवं पूर्वोऽर्धो विषुवतो यथोत्तरोऽर्ध एवमुत्तरोऽर्धो विषुवतस्तस्मादुत्तर इत्याचक्षते, प्रबाहुक्सतः शिर एव विषुवान् बिदलसंहित इव वै पुरुषस्तद्धापि स्यूमेव मध्ये शीर्ष्णो विज्ञायते ॥ इति ।**

यथा लोके पुरुषो दक्षिणवामभागाभ्यां भागद्वयमध्ये शिरसा च युक्तः, तस्य विषुवतः षण्मासात्मकः पूर्वभागः, पुरुषसंबन्धिदक्षिणभागस्थानीयः, तत्रावरोहरूपमासषट्कात्मक उत्तरार्धो वामभागस्थानीयः 'तस्माद्' वामभागसादृश्यादुत्तर इत्याचक्षते, न त्वनुष्ठानाधिक्यविवक्षया । 'प्रबाहुक् सतः', वामदक्षिणभागौ समौ कृत्वा अवस्थितस्य पुरुषस्य शिरो यथोन्नतं सन् मध्येऽवतिष्ठते, एवं मासषट्कयोर्मध्ये 'विषुवान्' उत्कृष्टोऽवतिष्ठते । 'बिदलं' भागः, ताभ्यां बिदलाभ्यां दक्षिणवामभागाभ्यां 'संहितः' संयोजित एव लोके भवति । 'तद्धापि' तस्मादेव भागद्वयसंधानरूपात् कारणात् 'शीर्ष्णो मध्ये स्यूमेव विज्ञायते' । 'स्यूम' स्यूतम्,—यथा वस्त्रयोः संधिः सूच्या 'स्यूतः' संयोजितो भवति, एवं शिरसि दक्षिणोत्तरकपालयोः संधौ स्यूतेव काचिद् रेखा दृश्यते । एतच्च भूमौ पतिते शुष्के मांसरहिते शिरः कपालद्वयसमूहरूपेऽस्थिनि विस्पष्टमुपलभ्यते । अतः सर्वात्मना पुरुषसादृश्यात् प्रशस्तोऽयं विषुवान् ॥

iv. २२ [xviii. ८] **जैसे लोक में पुरुष [दक्षिण-वाम भाग के मध्य सिर से युक्त] है वैसे ही विषुवत् है । विषुवत् का पूर्वार्ध पुरुष के दक्षिण भाग के समान है । विषुवत् का उत्तरार्ध पुरुष के वाम भाग के समान है । इसीलिए उस [विषुवत् के बाद के छः मास के कृत्य] को 'उत्तर' कहते हैं । विषुवत् वाम एवं दक्षिण भाग के सम-अवस्था में स्थित पुरुष के सिर के समान है । पुरुष [दक्षिण एवं वाम भाग रूप दो] भागों से संयोजित है । इसलिए [भागद्वय के संधान के कारण] सिर के मध्य सिली हुई-सी [संधिरेखा] दृष्टिगोचर होती है ।**

अत्र कंचित् पूर्वपक्षमुत्थापयति—

**तदाहुर्विषुवत्येवैतदहः शंसेत्, विषुवान् वा एतदुक्थानामुक्थम्, विषुवान् विषुवानिति ह विषुवन्तो भवन्ति, श्रेष्ठतामश्नुवत इति ॥ इति ।**

विषुवन्नामके मुख्येऽहनि यच्छस्त्रं विहितम्, 'तत्' तस्मिञ्शस्त्रे पूर्वपक्षिण एवमाहुः—दक्षिणायनस्योत्तरायणस्य च मध्ये विषुवन्नामकः तुलामेषसंक्रान्तिद्वयरूपो यः कालविशेषः, सोऽयं विषुवच्छब्दाभिधेयः । स च व्यवहारः स्मृतिषु प्रचुरः । अस्मिन्नेव 'विषुवति' काल 'एतदहः' शंसेत् । एतस्मिन्नहनि विहितं शस्त्रमहःशब्देनोपलक्ष्यते । 'एतत्'

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

संक्रान्तिद्वययुक्तमहः 'उक्थानाम्' अह्नां मध्ये 'उक्थम्' उक्थशस्त्रोपेतशस्त्रयोग्यमित्यर्थः। अतएव 'विषुवान्' विषुवन्नामकशस्त्रवानेव संक्रान्तिकालविशेषः। तत्कथमित्युच्यते—तं संक्रान्तिकालं विषुवान् विषुवान् इत्येव सर्वे व्यवहरन्ति। अतस्तस्मिन् काले शस्त्रपाठे सति यजमाना 'विषुवन्तः' योग्यशस्त्रयुक्ता भवन्ति। सर्वेष्वनुष्ठातृषु श्रेष्ठतां प्राप्नुवन्तीति पूर्वपक्षिणामाशयः॥

कुछ लोग [विषुवत् के शस्त्र के सम्बन्ध में] प्रश्न करते हैं कि मात्र विषुवत् काल [दक्षिणायन-उत्तरायण के मध्य 'विषुवत्' नामक तुला और मेष की संक्रान्ति द्वय रूप काल विशेष] में इस अहः [के शस्त्रों] का शंसन करना चाहिए। यह विषुवत् उक्थों के मध्य उक्थ है अर्थात् शस्त्र से युक्त शस्त्रयोग्य है। अतः विषुवत् [नामक शस्त्र] से युक्त [संक्रान्ति काल विशेष] विषुवत् है। इसलिए उस समय शस्त्र पाठ से यजमान योग्यशस्त्र से युक्त होते हैं, और वे [सभी अनुष्ठान करने वालों में] श्रेष्ठता प्राप्त करते हैं।

तं पक्षं निराकरोति—

**तत्तन्नादृत्यम्, संवत्सर एव शंसेत्, रेतो वा एतत्संवत्सरं दधतो यन्ति॥ इति।**

कर्मान्तरेष्वपि विषुवाख्यसंक्रान्तियुक्ते काले समागते सति शस्त्रमेतच्छंसनीयमिति यत्पूर्वपक्षिणां मतम्, तस्मिञ्शस्त्रे 'तत्' मतं नादरणीयम्। किंतु 'संवत्सरे' सत्रे एव गवामयने तत्पूर्वोक्तं शस्त्रं शंसेत्। एवं सति यजमाना अत्यन्तसंयोगेन संवत्सरकालमेतद् रेतो धारयन्तो 'यन्ति' अनुतिष्ठन्ति॥

किन्तु यह मत आदरणीय नहीं है। संवत्सर सत्र में ही [गवामयन में उस पूर्वोक्त शस्त्र का] शंसन करना चाहिए। इस प्रकार यजमान संवत्सर पर्यन्त वीर्य धारण करते हुए अनुष्ठान करते हैं।

विपक्षे बाधकं दर्शयति—

**यानि वै पुरा संवत्सराद् रेतांसि जायन्ते, यानि पञ्चमास्यानि, यानि षण्मास्यानि, स्रीव्यन्ति वै तानि, न वै तैर्भुञ्जते॥ इति।**

संवत्सरधारणात् पुरैव कतिपयमासधारणेन यानि रेतांसि जायन्ते, पञ्चमाससंबन्धीनि वा, षण्माससंबन्धीनि वा, तानि 'स्रीव्यन्ति वै' स्रवन्त्येव, गर्भस्रावो भवति। न तु 'तैः' अल्पमासधृतैः रेतोभिः पुत्रादिशरीरं 'भुञ्जते' अनुभवन्ति॥

संवत्सर के पूर्व [समय के पहले] जो कुछ भी वीर्य उत्पन्न होता है; जो कुछ पाँच महीनों में अथवा जो कुछ छः महीनों में उत्पन्न होता है वे गर्भस्राव ही होते हैं और [कतिपय मास धृत] उन वीर्यों के द्वारा पुत्रादि शरीर नहीं हो पाते।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

गुणकथनपूर्वकं स्वपक्षमुपसंहरति—

**अथ यान्येव दशमास्यानि जायन्ते, यानि सांवत्सरिकाणि, तैर्भुञ्जते; तस्मात् संवत्सर एवैतदहः शंसेत् ।। इति ।**

'अथ' पूर्वोक्तवैपरीत्येन 'यान्येव' रेतांसि 'दशमास्यानि' दशसु मासेषु धृतानि च भूत्वा पश्चाज्जायन्ते, यानि च संवत्सरे धृतानि, तैः सर्वैः पुत्रादिशरीरमनुभवन्ति । 'तस्मात्' गुणसद्भावात् संवत्सरसत्र एव तस्मिन् विषुवत्यह्नि यथोक्तं शस्त्रं शंसेत् ।।

और, जो भी वीर्य दस माह धृत होकर उत्पन्न होते हैं और जो संवत्सर पर्यन्त धृत होते हैं; उन सभी से पुत्रादि शरीर उत्पन्न होते हैं। इसलिए संवत्सर सत्र में ही जिसमें विषुवत्—अहः होता है उक्त शस्त्र का शंसन करना चाहिए।

पुनरपि प्रकारान्तरेण प्रशंसति—

**संवत्सरो ह्येतदहराप्नोति, संवत्सरं ह्येतदहराप्नुवन्त्येष ह वै संवत्सरेण पाप्मानमपहत एष विषुवताऽङ्गेभ्यो हैव मासैः पाप्मानमपहते शीर्ष्णो विषुवता ।। इति ।**

योऽयं संवत्सरसत्ररूपः कर्मविशेषः, यच्चैतद्विषुवदाख्यमह उभयोः परस्परं संप्राप्तिरस्ति । तत्र 'संवत्सरः' कर्ता सन् अहराप्नोति । 'अहश्च' कर्तृ भूत्वा संवत्सरमाप्नोति । व्यत्ययेनात्र बहुवचनम् । तयोः परस्परमविनाभावे सति 'एष' यजमानः संवत्सरेण पाप्मानम् 'अपहते' विनाशयति । तथैव 'एष' यजमानो 'विषुवता' संवत्सरमध्यगतेनाह्ना पाप्मानं विनाशयति । तद्विविच्यते, संवत्सरावयवैर्मासैर्हस्तपादाद्यङ्गेभ्यः सकाशात् पाप्मानं नाशयति । 'विषुवता' मुख्येनाह्ना 'शीर्ष्णः' शिरसः सकाशात् पाप्मानं नाशयति ।।

क्योंकि वे संवत्सर से ही इस दिन को प्राप्त करते हैं और क्योंकि वे अहः से संवत्सर को प्राप्त करते हैं। [दोनों के परस्पर अविनाभाव होने से] यह [यजमान] संवत्सर के द्वारा पापों को विनष्ट करता है, और यह [संवत्सर मध्यगत] विषुवत् अहः से [पापों को नष्ट करता है]। [संवत्सर के अवयवभूत] मासों के द्वारा यह [अपने हस्त पादादि] अङ्गों से पापों को नष्ट करता है और प्रधान विषुवत् अहः के द्वारा सिर से पापों को दूर करता है।

वेदनं प्रशंसति—

**अप संवत्सरेण पाप्मानं हतेऽप[1] विषुवता य एवं वेद ।। इति ।**

जो इस प्रकार जानता है वह संवत्सर के द्वारा और विषुवत के द्वारा पापों को नष्ट करता है।

---

१. विषुवताऽपहते इति वाक्यं संभवेदिति ज्ञेयम् ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ प्रशस्तस्य विषुवतः प्रसङ्गाद् बुद्धिस्थे प्रशस्ते महाव्रताख्येऽहनि कंचित्पशुं विधत्ते—

**वैश्वकर्मणमृषभं सवनीयस्योपालम्भ्यमालभेरन्, द्विरूपमुभयत एतं महाव्रतीयेऽहनि ॥** इति ।

'वैश्वकर्मणं' विश्वकर्मदेवताकम् 'ऋषभं' पुंगवं 'सवनीयस्य' चोदकप्राप्तस्य पशोः स्थान[1] उपालम्भनीयं 'द्विरूपं' वर्णद्वयोपेतम् 'उभयत एतं' दक्षिणोत्तरपार्श्वयोर्विलक्षणवर्णेन लाञ्छितं पशुं महाव्रतप्रयोगयुक्ते सत्रस्योपान्त्येऽहन्यालभेरन् ॥

महाव्रत प्रयोग के दिन सवनीय पशु के स्थान में विश्वकर्मा के लिए उपालम्भनीय वृषभ का आलम्भन करना चाहिए जो दोनों ओर दो रंगों का हो ।

तत्र देवतां प्रशंसति —

**इन्द्रो वै वृत्रं हत्वा विश्वकर्माऽभवत्, प्रजापतिः प्रजाः सृष्ट्वा विश्वकर्माऽभवत्, संवत्सरो विश्वकर्मेन्द्रमेव तदात्मानं प्रजापतिं संवत्सरं विश्वकर्माणमाप्नुवन्तीन्द्र एव तदात्मनि प्रजापतौ संवत्सरे विश्वकर्मण्यन्ततः प्रतितिष्ठन्ति; प्रतितिष्ठति य एवं वेद; य एवं वेद[2] ॥ २२ ॥** इति ।

---

१. 'सुत्याधिकारादेव सवनीयत्वे सिद्धे सवनीयग्रहणं सवनीयस्योपालम्भनं कृत्वा पश्चात् सौर्यं आलभ्य इत्येवमर्थम्'—एवं नारायणेन ( आश्व० श्रौ० ८.६.४ ) न विकल्पो दर्शितः ।

२. "चतुर्विंशमेतदहः"—इत्यारभ्य ( ६१८ पृ० ) एतदन्ता गवामयनादित्यानामयनाङ्गिरसामयनानां संवत्सरसत्राणां हौत्रविधय उक्ताः । कल्पेऽप्येवं 'सत्राणाम्'—इत्यधिकृत्य 'एतावत् सात्रं होतृकर्मान्यत्र महाव्रतात्' इत्यन्तैः (७.१.१–८.१३.३०) सत्रसाधारणविधय उक्ताः । ततस्तत्रैव प्रदर्शितैषा यज्ञगाथेति—"प्रायणीयश्चतुर्विंशः पृष्ठ्योऽभिप्लव एव च । अभिजित् स्वरसामानो विषुवान् विश्वजित्तथा । छन्दोमा दशमं चाह उत्तमं तु महाव्रतम् । अहीनैकाहः सत्राणां प्रकृतिः समुदाहृता'—इत्यादिः । इत उत्तरं यानि त्रीणि सूत्राण्यभिहितानि; तानि विशेषतः सर्वत्र स्मर्तव्यानि । तत उत्तरं क्रमात् गवामयनादीनामेषां विशेषविधय उपदिष्टाः ( ११.७.१—१२.२.६ ) । शत० ब्रा० १२.१–३ । कात्या० श्रौ० १३ अ० । "गावो वा एतत् सत्रमासत"—इत्यादि तै० सं० ७.५.१ । सामब्राह्मणे चैवं "गावो वा एतत् सत्रमासत"— इत्यारभ्य प्रपाठकद्वयेन ( ४, ५ प्र० ) गवामयनसत्रस्यौद्गात्रं विहितम्, तत उपरिष्टात् ( २५ प्र० ) आदित्यानामयनस्याङ्गिरसामयनस्य च ( १, २ ख० ) ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इन्द्रो वृत्रवधादूर्ध्वं विघ्नकर्तुरभावाद् 'विश्वकर्मा' जगत्पालनरूपकर्मयुक्तोऽभवत् । प्रजापतिश्च 'प्रजाः' सर्वाः 'सृष्ट्वा' उत्पाद्य कृत्स्नं जगत्सृष्टिरूपकर्मयुक्तोऽभवत् । स उभयविधो 'विश्वकर्मा' देवः संवत्सरात्मकः । अतः संवत्सरसत्रे द्विरूपपश्वालम्भनेन 'तदात्मानं' संवत्सरात्मानमिन्द्रमेव, तथा संवत्सररूपं 'प्रजापतिम्' इत्युभयविधं 'विश्वकर्माणं' यजमानाः प्राप्नुवन्ति । प्राप्य च 'तदात्मनि' संवत्सरात्मनि 'इन्द्रे', संवत्सररूपे 'प्रजापतौ', द्विविधेऽपि 'विश्वकर्मणि' 'अन्ततः' संवत्सरसत्रस्यान्ते प्रतितिष्ठन्त्येव । यः पुनरेवं वेद, सोऽपि प्रतितिष्ठति । अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां तृतीयाध्याये (अष्टादशाध्याये) अष्टमः खण्डः ॥ ८ ॥ ( २२ ) [ ४३]

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयात् विद्यातीर्थं महेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यदिष्टतो सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनाम भाष्ये ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायाः तृतीयोऽध्यायः (अष्टादशोऽध्यायः) समाप्तः ॥३॥

इन्द्र वृत्र को मार कर [विघ्नकर्ता के अभाव के कारण] विश्वकर्मा [जगत्पालक] हो गए । प्रजापति प्रजा का सृजन कर विश्वकर्मा हो गए । [उभयविध] विश्वकर्मा संवत्सर हैं । वस्तुतः इस प्रकार वे [द्विरूप पशु के आलम्भन के द्वारा] उस संवत्सरात्मक इन्द्र को ही तथा संवत्सररूप प्रजापति रूप में उभयविध विश्वकर्मा को यजमान प्राप्त करते हैं । इस प्रकार संवत्सरात्मक रूप इन्द्र और संवत्सररूप प्रजापति दोनों ही विश्वकर्मा में [संवत्सर सत्र के] अन्त में प्रतिष्ठित ही करते हैं । जो इस प्रकार जानता है वही प्रतिष्ठित होता है ।

॥ इस प्रकार ऐतरेय ब्राह्मण की चतुर्थ पञ्चिका के तृतीय (अट्ठारहवें) अध्याय की हिन्दी पूर्ण हुई ॥ ३ ॥

—:o:—

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ चतुर्थोऽध्यायः

## प्रथमः खण्डः

—: * :—

# [अथ एकोनविंशोऽध्यायः

## प्रथमः खण्डः]

अभिप्लवः स्यात् षडहोऽथ मासस्त्र्यहोऽथ पूर्वस्वरसामनामा ॥
गवां च शस्त्रस्य ततः प्रशंसा मध्ये दिवाकीर्त्यमहश्च तस्य ॥ १ ॥

अथ द्वादशाहो वक्तव्यः । तदर्थमाख्यायिकामाह—

**प्रजापतिरकामयत प्रजायेय भूयान् स्यामिति; स तपोऽतप्यत; स तपस्तप्त्वेमं द्वादशाहमपश्यदात्मन एवाङ्गेषु च प्राणेषु च, तमात्मान एवाङ्गेभ्यश्च प्राणेभ्यश्च द्वादशधा निरमिमीत; तमाहरत्; तेनायजत; ततो वै सोऽभवदात्मना प्र प्रजया पशुभिरजायत ॥ इति ।**

प्रजापतिः प्रजोत्पादनेनातिप्रभूतः स्यामिति कामयित्वा, तत्साधनं निर्णेतुं चित्तैकाग्र्यलक्षणं 'तपः' कृत्वा, स्वाभीष्टसाधनत्वेन स्वकीयेषु हस्तपादाद्यङ्गेषु प्राणादिवायुषु चावस्थितं द्वादशाहं दृष्ट्वा तं स्वाङ्गेभ्यः प्राणेभ्यश्च निःसार्य द्वादशधा कृत्वा निर्मितवान् । ततो निर्मितमाहृत्य तेनेष्ट्वा स प्रजापतिः 'अभवत्' भूतिं प्राप्तवान् । 'आत्मना' स्वेनैव रूपेण सर्वाधिको भूत्वा प्रजापशुरूपेण बहुलं प्राजायत ॥

[द्वादशाह]—

iv. २३ [xix. १] प्रजापति ने कामना की कि मैं प्रजोत्पादन के द्वारा अतिप्रभूत होऊँ । उन्होंने तप किया । उन्होंने तप करके इस द्वादशाह [कर्म] को अपने ही हस्त पादादि अङ्गों में और प्राणवायु में देखा । उसे अपने अङ्गों से और प्राणों से निकालकर बारह करके निर्मित किया । उसे प्राप्त किया और उससे यजन किया । तब वह [प्रजापति] हुए । इस प्रकार अपने ही रूप से सर्वाधिक होकर प्रजाओं और पशुओं के द्वारा उत्पन्न हुए ।

वेदनं प्रशंसति—

**भवत्यात्मना प्र प्रजया पशुभिर्जायते य एवं वेद ॥ इति ।**

अनेनार्थवादेन द्वादशाहयागविधिरुन्नेयः । तथा च शाखान्तरे विधिः श्रूयते—'यः कामयेत तत्प्रजायेयेति, स द्वादशरात्रेण यजेत, प्रैव जायते' इति ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जो इस प्रकार जानता है वह प्रजाओं और पशुओं से अपने को समृद्ध करता है।

**सोऽकामयत,—कथं नु गायत्र्या सर्वतो द्वादशाहं परिभूय सर्वामृद्धिमृध्नुयामिति; तं वै तेजसैव पुरस्तात् पर्यभवच्छन्दोभिर्मध्यतोऽक्षरैरुपरिष्टाद् गायत्र्या सर्वतो, द्वादशाहं परिभूय सर्वामृद्धिमार्ध्नोत् ॥ इति।**

'सः' प्रजापतिः पुनरेवमकामयत,—'कथं नु' केन खलु प्रकारेण, गायत्र्या सर्वतो द्वादशाहं व्याप्य, 'सर्वां' भोग्यवस्तुसमृद्धिमाप्नुयामिति ? विचार्य, गायत्रीं त्रेधा व्यभजत्—ध्वनिरूपं तेज एको भागः, अक्षरसंख्ययाऽभिव्यज्यमानं छन्दो द्वितीयो भागः, अक्षराणि तृतीयो भागः। तैस्त्रिभिर्भागैरादिमध्यावसानेषु सर्वतो द्वादशाहं गायत्र्या व्याप्य समृद्धिं प्राप्तवान्। छन्दोभिरिति बहुवचनं पूजार्थम् ॥

उन्होंने कामना की—'किस प्रकार गायत्री के द्वारा सभी ओर से द्वादशाह को व्याप्त करके सभी भोग्य वस्तु और समृद्धि को प्राप्त करूँ ?' [उन्होंने तीन भाग में गायत्री को विभक्त कर] सामने उस [द्वादशाह] को तेज से व्याप्त किया, मध्य में छन्दों से और अन्त में अक्षरों से। इस प्रकार गायत्री के द्वारा सभी ओर से द्वादशाह [कर्म] को व्याप्त करके सभी समृद्धि को प्राप्त किया।

वेदनं प्रशंसति—

**सर्वामृद्धिमृध्नोति य एवं वेद ॥ इति।**

जो इस प्रकार जानता है वह सभी प्रकार की समृद्धि को प्राप्त करता है।

अथ द्वादशाहस्याहःक्लृप्तिमुपकल्पनामुखेन दर्शयति—

**यो वै गायत्रीं पक्षिणीं चक्षुष्मतीं, ज्योतिष्मतीं भास्वतीं वेद, गायत्र्या पक्षिण्या चक्षुष्मत्या ज्योतिष्मत्या भास्वत्या स्वर्गं लोकमेत्येषा वै गायत्री पक्षिणी चक्षुष्मती ज्योतिष्मती भास्वती; यद् द्वादशाहस्तस्य यावभितोऽतिरात्रौ, तौ पक्षौ; यावन्तराऽग्निष्टोमौ, ते चक्षुषी; येऽष्टौ मध्य उक्थ्याः, स आत्मा ॥ इति।**

आदिमध्यावसानेषु द्वादशाहस्य गायत्र्या व्याप्तत्वात् अभेदमभिप्रेत्य द्वादशाहमेव गायत्रीशब्देन व्यवहरति। सा च गायत्री पक्षद्वयोपेता, चक्षुर्द्वयोपेता, ज्योतिःशब्दोपलक्षितमध्यशरीरोपेता। तत एव सा 'भास्वती' प्रकाशवती। अहीनसत्राणां सर्वेषां प्रकृतित्वेन भासकत्वाद् भास्वत्त्वम्। ईदृशीं गायत्रीं यो वेद, स तामनुष्ठाय यथोक्तगुणवत्त्वविशिष्टया गायत्र्या स्वर्गं लोकं प्राप्नोति। गूढाभिप्रायेण रूपकं परिकल्प्य 'एषा वै' इत्यादिना स्वाभिप्रायः प्रकटीक्रियते। द्वादशाह एव यथोक्तगुणविशिष्टा गायत्री तस्येत्यादिना द्वादशाहे ते गुणाः प्रदर्श्यन्ते। 'तस्य' द्वादशाहस्य आद्यन्तावहर्विशेषावतिरात्रसंस्थौ। तावेव पक्षस्थानीयौ; तयोरन्तर्भाविनौ द्वितीयैकादशाहविशेषावग्निष्टोमसंस्थौ;

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तौ चक्षुःस्वरूपौ, ये च तृतीयमारभ्य दशमपर्यन्ता अष्टावहर्विशेषा मध्ये वर्तन्ते, ते सर्वेऽप्युक्थ्यसंस्थाः । सोऽष्टाहसमूह 'आत्मा' मध्यशरीरम् ॥

जो गायत्री को [दो] पङ्खों वाली, [दो] आँखों वाली, ज्योतिः वाली और प्रकाशवती जानता है वह [उसका अनुष्ठान करके] पङ्खों वाली, आँखों वाली, ज्योतिः वाली, और प्रकाशवाली गायत्री के द्वारा स्वर्गलोक को प्राप्त करता है। जो द्वादशाह [कर्म] है यही गायत्री है जो पङ्खों वाली, आखों वाली, ज्योतिः वाली और प्रकाश वाली है उस [द्वादशाह] की जो दो अतिरात्रसस्थाएँ [आदि और अन्त की अहः विशेष] हैं वे दोनों पङ्ख हैं; उन दोनों के मध्य में रहने वाले जो दो अग्निष्टोम हैं वे आँखें हैं, और [तीन से दस दिन के मध्य] जो आठ अहः विशेष हैं वे सभी उक्थ्य हैं और वह [अष्टसमूह] आत्मा है।

वेदनं प्रशंसति—

**गायत्र्या पक्षिण्या चक्षुष्मत्या ज्योतिष्मत्या भास्वत्या स्वर्गं लोकमेति य एवं वेद ॥ २३ ॥** इति ।

यथोक्ताहःक्लृप्तिः आश्वलायनाचार्यैः दर्शिता—'अथ भरतद्वादशाह इममेवैकाहं पृथक्संस्थाभिरुपेयुरतिरात्रमग्रेऽथाग्निष्टोममथाष्टा उक्थ्यानथाग्निष्टोममथातिरात्रम्'[1] इति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां चतुर्थाध्याये (एकोनविंशाध्याये) प्रथमः खण्डः ॥१॥ (२३) [१४४]

जो इस प्रकार जानता है वह पङ्खों वाली, आँखों वाली, ज्योतिः वाली और प्रकाश वाली गायत्री के द्वारा स्वर्ग लोक को प्राप्त करता है।

॥ इस प्रकार उन्नसवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

भरतद्वादशाहं विधाय व्यूढद्वादशाहं विधत्ते—

**त्रयश्च वा एते त्र्यहा आदशममहरा द्वावतिरात्रौ यद् द्वादशाहः ॥** इति ।

योऽयं व्यूढद्वादशाहोऽस्ति, सोऽयमेतादृशः,—तत्राद्यन्तौ यौ 'द्वावतिरात्रौ' प्रथमद्वादशौ, यच्च दशममहः, तत्परित्यज्यावशिष्टेष्वहःसु नवसंख्याकेषु 'त्रयस्त्र्यहाः' कर्तव्याः । त्रिरात्रः कश्चित्कर्मविशेषः, सोऽयं त्रिवारमावर्तनीयः । 'आ' दशमम् इत्यत्र योऽयमाकारः, स वर्जनार्थः, निपातानामनेकार्थत्वात् । यद्वा, मर्यादायामयम् आङ् भविष्यति,—आद्यन्तावतिरात्रौ दशममहश्च मर्यादां कृत्वाऽवशिष्टो नवरात्रस्त्रिरावृत्तस्त्र्यहात्मक इत्यर्थः ॥

---

१. आश्व० श्रौ० १०.५.८–१० ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

iv. २४ [xix. २] जो यह व्यूढ द्वादशाह है उसके [आदि और अन्त के दिन] दो अतिरात्र हैं, दसवें दिन को मर्यादा मानकर अवशिष्ट ३ × ३ जो नौ रात्र हैं उन्हें त्र्यहात्मक करना चाहिए।

तत्र चोदकेन दीक्षादिसंख्याविकल्पः प्राप्तः, 'एका दीक्षा, तिस्रो दीक्षाः' इत्यादि-विकल्पस्य प्रकृतौ श्रुतत्वात्[1]। तं विकल्पमपवदितुं नियमविशेषं विधत्ते—

**द्वादशाहानि दीक्षितो भवति, यज्ञिय एव तैर्भवति ॥** इति।

द्वादशसु दिनेषु दीक्षाख्यनियमेऽनुष्ठिते सति तैर्द्वादशभिर्दीक्षाविशेषैरयं पुरुषः यज्ञ-योग्य एव भवति[2] ॥

**बारह दिनों में दीक्षाख्य नियम के अनुष्ठान से उन [द्वादश-दीक्षा विशिष्ट अनुष्ठान] से दीक्षित होकर यह पुरुष यज्ञ के योग्य ही हो जाता है।**

उपसत्सु विशेषं विधत्ते—

**द्वादश रात्रीरुपसद उपैति, शरीरमेव ताभिर्धूनुते ॥** इति।

प्रकृतौ तिस्र एवोपसदः,[3] ताश्चैकैकां चतुर्षु दिनेष्वावर्त्य, द्वादशसु दिनेषूपसदोऽनुष्ठिते सति 'ताभिः' द्वादशभिरुपसद्भिः शरीरमेव 'धूनुते' कम्पयति, शरीरगतमांसादिधातु-शोषणेन पापक्षयो भवति। तथा च सूत्रकारेणोपसंहृतम्—'यदा वै दीक्षितः कृशो भवति, अथ मेध्यो भवति' इति। उपसद्दिनेष्वस्य क्षीरमात्राहारत्वाद् भवत्येव कार्श्यम्, तदिदं सर्वं धूनुत इत्यनेन विवक्षितम्[4] ॥

**द्वादश रात्रियों में वह उपसदों का अनुष्ठान करता है और इस प्रकार वह उन [बारह उपसदों] से शरीर को ही कंपाता है [अर्थात् कृशगात करके शरीरगत मांसादि के शोषण से पाप क्षय ही करता है]।**

अथ द्वादशसु दिनेषु सोमाभिषवं विधत्ते—

**द्वादशाहं प्रसुतः ॥** इति।

भवेदिति शेषः[5]। दीक्षोपसदावङ्गकर्मणी; अभिषवस्तु प्रधानकर्म ॥

**द्वादशाह में सोमाभिषव करना चाहिए।**

---

१. "एका तिस्रो वा दीक्षा"—इति आश्व० श्रौ० ४.२.१७।
२. "दीक्षणादिरात्रिसंख्यानेन दीक्षाः"—इति च आश्व० श्रौ० ४.२.१३।
३. "तिस्र उपसदः"—इति आश्व० श्रौ० ४.२.१७।
४. द्वादशाहतापश्चितेषु यथासुत्योपसदः"—इति आश्व० श्रौ० ४.२.१५।
५. "सुत्यमहरुत्तमम्"—इति आश्व० श्रौ० ४.२.१७।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदनं प्रशंसति—

भूत्वा, शरीरं धूत्वा, शुद्धः, पूतो देवता अप्येति य एवं वेद ॥ इति ।

'द्वादशाहं प्रसुतः' इति पदद्वयमनुवर्तनीयम् । वेदिता द्वादशसु दिनेषु सोमाभिषवयुक्तो भूत्वा पूर्वोक्ताभिरुपसद्भिः 'शरीरं धूत्वा' शरीरगतं पापं परित्यज्य, अत एव शुद्ध इह लोके भूत्वा, परलोकेऽपि पूतः सर्वा देवताः प्राप्नोति । अथवा शुद्ध इत्यन्तो विधिवाक्यशेषः, पूत इत्यादिका वेदनप्रशंसा द्रष्टव्या ॥

जो इस प्रकार जानता है वह [बारह दिनों में सोमाभिषव से युक्त] होकर [पूर्वोक्त उपसदों से] शरीर के पापों का क्षय करके, अतः [इस लोक में] शुद्ध होकर और [परलोक में] पवित्र होकर सभी देवताओं को प्राप्त करता है ।

यथोक्तदीक्षोपसत्सुत्यादिनसंख्याः प्रशंसति—

षट्त्रिंशदहो वा एष य द्वादशाहः, षट्त्रिंशदक्षरा वै बृहती, बृहत्या वा एतदयनं य द्वादशाहो, बृहत्या वै देवा इमाँल्लोकानाश्नुवत,—ते वै दशभिरेवाक्षरैरिमं लोकमाश्नुवत, दशभिरन्तरिक्षं, दशभिर्दिवं, चतुर्भिश्चतस्रो दिशो, द्वाभ्यामेवास्मिँल्लोके प्रत्यतिष्ठन् ॥ इति ।

यो द्वादशाहोऽस्ति, एष पूर्वोक्तरीत्या षट्त्रिंशद्दिनात्मकः । बृहतीछन्दश्च षट्त्रिंशदक्षरम् । तस्माद् यो द्वादशाहोऽस्ति, एतद्बृहत्या 'अयनम्' अयनस्थानमित्यर्थः । देवाश्च बृहत्या सर्वाँल्लोकान् 'आश्नुवत' प्राप्नुवन्,—दशभिर्दशभिरक्षरैः प्रत्येकं लोकत्रयप्राप्तिः । चतुर्भिरक्षरैर्दिक्चतुष्टयप्राप्तिः, द्वाभ्यामक्षराभ्यामस्मिँल्लोके प्रतिष्ठां प्राप्तः । तथाविधबृहतीसाम्याद्दिनगता षट्त्रिंशत् संख्या प्रशस्ता ॥

जो यह द्वादशाह है वह [पूर्वोक्त रीति से] छत्तिस दिन का होता है । बृहती छत्तिस अक्षरों वाली होती है । जो यह द्वादशाह है वह बृहती का अयन अर्थात् स्थान है । बृहती से ही देवों ने इन सभी लोकों को प्राप्त किया । उन्होंने दस अक्षरों से इस लोक को प्राप्त किया, दस से अन्तरिक्ष को, दस से स्वर्ग को, चार से चारों दिशाओं को और दो [अक्षरों] से इस लोक में प्रतिष्ठा प्राप्त की ।

वेदनं प्रशंसति—

प्रतितिष्ठति य एवं वेद ॥ इति ।

जो इस प्रकार जानता है वह प्रतिष्ठित हो जाता है ।

अत्र किंचिच्चोद्यमुद्भावयति—

तदाहुर्यदन्यानि च्छन्दांसि वर्षीयांसि भूयोक्षरतराण्यथ कस्मादेतां बृहतीत्याचक्षत इति ॥ इति ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यस्मात् कारणाद् बृहत्याः 'अन्यान्युत्तराणि' पङ्क्तित्रिष्टुब्जगतीछन्दांस्युत्तरोत्तरं चतुरक्षराधिकानि, अतो 'वर्षीयांसि'। तस्यैव व्याख्यानं 'भूयोऽक्षरतराणि' इति। 'अथ' एवं सति पङ्क्त्यादीनि च्छन्दांस्युपेक्ष्य कस्मात् कारणात् 'एतां' षट्त्रिंशदक्षरमात्रयुक्तां वैदिका बृहतीत्याचक्षते ? इति चोद्यम् ॥

इस सम्बन्ध में कुछ लोग प्रश्न करते हैं कि 'जब अन्य [पङ्क्ति आदि] छन्द इससे [चार-चार अक्षरों से] बड़े हैं और इस प्रकार अधिक अक्षरों वाले हैं तो इसे 'बृहती' क्यों कहते हैं ?'

पूर्वोक्तमेवार्थवादमुपजीव्य परिहारमाह—

**एतया हि देवा इमाँल्लोकानाश्नुवत,—ते वै दशभिरेवाक्षरैरिमं लोकमाश्नुवत, दशभिरन्तरिक्षं, दशभिर्दिवं, चतुर्भिश्चतस्रो दिशो, द्वाभ्यामेवास्मिँल्लोके प्रत्यतिष्ठंस्तस्मादेतां बृहतीत्याचक्षते ॥ इति।**

अक्षरसंख्यान्यूनत्वेऽपि लोकत्रयप्राप्तिहेतुत्वात् प्रौढत्वमभिप्रेत्य बृहतीत्यभिधानम् ॥

[उत्तर] क्योंकि देवों ने इससे इन सब लोकों को प्राप्त किया, उन्होंने दस अक्षरों से इस लोक को प्राप्त किया, दस से अन्तरिक्ष को, दस से स्वर्ग को चार से चारों दिशाओं को और दो से इस लोक में प्रतिष्ठा प्राप्त की। इसलिए इसे 'बृहती' कहते हैं।

उक्तार्थवेदनं प्रशंसति—

**अश्नुते यद्यत्कामयते य एवं वेद ॥ २४ ॥**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां चतुर्थाध्याये (एकोनविंशाध्याये) द्वितीयः खण्डः ॥२॥ (२४) [१४५]

जो इस प्रकार जानता है, वह जो-जो चाहता है, उसे प्राप्त करता है।

॥ इस प्रकार उन्नीसवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

अस्मिन् कर्मणि यजनयाजनयोरधिकारिविशेषौ दर्शयति—

**प्रजापतियज्ञो वा एष य द्वादशाहः; प्रजापतिर्वा एतेनाग्रेऽयजत द्वादशाहेन; सोऽब्रवीद् ऋतूंश्च मासांश्च,—याजयत मा द्वादशाहेनेति; तं दीक्षयित्वाऽनपक्रमं गमयित्वाऽब्रुवन्—देहि नु नोऽथ त्वा याजयिष्याम इति; तेभ्य इषमूर्जं प्रायच्छत्; सैषोर्गृतुषु च मासेषु च निहिता; ददतं वै ते तमयाजयंस्तस्माद् ददद् याज्यः; प्रतिगृह्णन्तो वै ते तमयाजयंस्तस्मात्प्रतिगृह्णता याज्यम् ॥ इति।**

यो द्वादशाहः, स प्रजापतेर्यज्ञः। कथमिति, तदुच्यते। प्रजापतिरेव 'अग्रे' सर्वेभ्यः पूर्वमेतेन द्वादशाहेनायजत, तस्मादयं प्रजापतियज्ञ इति। तद् यजनप्रकार उच्यते—'सः'

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रजापतिः वसन्ताद्यृतुदेवांश्चैत्रादिमासदेवांश्चाब्रवीत्। हे देवाः, यूयमृत्विजो भूत्वा मां द्वादशाहक्रतुना याजयतेति। ते च मासर्तुदेवा ऋत्विजो भूत्वा 'तं' प्रजापतिं दीक्षयित्वा, तत्राध्वानम् 'अनपक्रमं' निर्गमनरहितं गमयित्वाऽब्रुवन्। न हि यज्ञं संकल्प्य दीक्षां कृत्वा तदनुष्ठानमन्तरेण देवयजनदेशान्निर्गन्तुं शक्यते। हे प्रजापते, 'नु' क्षिप्रमेव 'नः' अस्माकं 'देहि' अपेक्षितं प्रयच्छ। 'अथ' अनन्तरं त्वां याजयिष्याम इति ऋतुभिर्मासैश्चोक्तः प्रजापतिः 'तेभ्यः' ऋतुभ्यो मासेभ्य 'इषम्' अन्नम् 'ऊर्जं' क्षीरादिरसं प्रायच्छत्। सैषा 'ऊर्ग्' रसरूपा, ऋतुषु च मासेषु चेदानीमपि 'निहिता' अतश्च स्वस्वकालोचितप्रकारेण ऋतुषु मासेषु च प्रवर्तमानेषु गोक्षीरादिबाहुल्यं भवति। ततोऽन्नपाने 'ददतं तं' प्रजापतिं 'ते' ऋतवश्च मासाश्च अयाजयन्। तस्माद् 'ददत्' पुरुषो 'याज्यः' यष्टुं योग्यः। न हि दानहीनस्याधिकारोऽस्ति। तथा 'ते' मासाश्चर्तवश्च 'प्रतिगृह्णन्तो वै' प्रजापतिदत्ते अन्नपाने स्वीकुर्वन्तः सन्तः प्रजापतिमयाजयन्। तस्माद् इदानीमप्यृत्विजा दक्षिणां प्रतिगृह्णता 'याज्यं' यजनं कर्तव्यम्॥

iv. २५ [xix. ३] जो यह द्वादशाह है वह प्रजापति का यज्ञ है। इस द्वादशाह के द्वारा प्रजापति ने सर्वप्रथम यजन किया था। उन्होंने ऋतुओं और महीनों से कहा—'मेरे लिए द्वादशाह [कर्म] के द्वारा यजन कराओ।' [उन मास और ऋतु देवों ने ऋत्विज होकर] उन [प्रजापति] को दीक्षित करके [यागभूमि से] निकलकर जाने में निर्गमनरहित बनाकर कहा—'हे प्रजापति, शीघ्र हमें [अपेक्षित सामग्री] दो। तब हम तुम्हारे लिए यजन करेंगे।' प्रजापति ने उनके लिए अन्न [=इष] और रस [=ऊर्ज] दिया। वही रस ऋतुओं और महीनों में निहित है। तब उन देने वाले प्रजापति के लिए उन्होंने यजन किया। इसलिए देने वाला पुरुष यजन के लिए योग्य होता है [अर्थात् दान-हीन मनुष्य अधिकारी नहीं होता]। उन [मास और ऋतुओं] ने प्रजापति द्वारा प्रदत्त अन्नपान को स्वीकार करके उनके लिए यजन किया। इसलिए प्रतिग्रह [दक्षिणा या दान] लेकर ही यजन करना चाहिए।

यजमानानामृत्विजां च वेदनं प्रशंसति—

**उभये राध्नुवन्ति य एवं विद्वांसो यजन्ते च याजयन्ति च॥** इति।

जो इस प्रकार जानकर यजन करते हैं और यजन कराते हैं वे दोनों ही समृद्धि को प्राप्त करते हैं।

द्वादशाहे दीक्षां प्राप्नुवत्सु यजमानेषु दीक्षाप्राप्तिं प्रशंसति—

**ते वा इम ऋतवश्च मासाश्च गुरव इवामन्यन्त द्वादशाहे प्रतिगृह्य; तेऽब्रुवन् प्रजापतिं याजाय नो द्वादशाहेनेति; स तथेत्यब्रवीत्; ते वै दीक्षध्वमिति; ते पूर्वपक्षाः पूर्वेऽदीक्षन्त; ते पाप्मानमपाहत[1], तस्मात् ते दिवेव,—दिवेव ह्यप-**

---

१. अत्र व्यत्ययेनैकवचनम्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**हतपाप्मानोऽपरपक्षा अपरेऽदीक्षन्त, ते न तरां पाप्मानमपाहत तस्मात् ते तम इव,—तम इव ह्यनपहतपाप्मानस्तस्मादेवं विद्वान् दीक्षमाणेषु पूर्वः पूर्व एव दिदीक्षिषेत ॥ इति ।**

ये पूर्वमृत्विक्त्वेन व्यवस्थिताः 'ऋतवश्च मासाश्च ते वा इमे' द्विविधा अपि द्वादशाहे दक्षिणां प्रतिगृह्य 'गुरव इव' पापभारगौरवेणाक्रान्ता एव वयमित्यमन्यन्त। ततस्ते पाप-परिहाराय 'द्वादशाहेन' क्रतुना 'नः' अस्मान् याजयेति प्रजापतिमब्रुवन्। प्रजापतिरङ्गी-कृत्य ते यूयं दीक्षां कुरुध्वमित्यब्रवीत्। तेषु मासेषु 'पूर्वपक्षाः' शुक्लपक्षाभिमानिनो देवा ये सन्ति, ते 'पूर्वे' प्रथमभाविनः सन्तो दीक्षामकुर्वत। तादृशाः 'ते' पूर्वपक्षाः स्वकीयं पाप्मानम् 'अपाहत' नाशितवन्तः। 'तस्मात्' पापराहित्यात् 'ते' शुक्लपक्षाः 'दिवेव' दिवसा इव प्रकाशयुक्ताः। लोकेऽपि 'अपहतपाप्मानः' पुरुषा 'दिवेव हि' दिवसा इव, पुण्यरूपेण तेजसा युक्ता भवन्ति। अथ 'अपरपक्षाः' कृष्णपक्षाभिमानिनो देवा ये सन्ति, ते तु 'अपरे' पश्चात् प्रवर्तमाना दीक्षां कृतवन्तः। ते मालिन्यदोषेण पाप्मानं 'न' 'तरां' अतराम् अपाहतातिशयेन विनाशं न कृतवन्तः। 'तस्मात्' कृत्स्नपापविनाशाभावात् 'ते' कृष्णपक्षाः 'तम इव' कृष्णवर्णा दृश्यन्ते; तदीयरात्रिषु चन्द्रप्रकाशस्याभावात्। लोकेऽपि 'अनपहत-पाप्मानः' पापविनाशरहिताः पुरुषाः 'तम इव हि' पापरूपान्धकारलिप्तत्वेन निन्द्या भवन्ति। 'तस्मात्' कारणादेव पूर्वापरकालवैषम्यं 'विद्वान्' पुरुषो 'दीक्षमाणेषु' यजमानेष्वेकैकस्मात्' पूर्वः पूर्व एव' पूर्वपक्षे 'दिदीक्षिषेत' दीक्षितुमिच्छेत् ॥

**उन मास और ऋतुओं ने द्वादशाह [क्रतु] में दक्षिणा पाकर अपने को [पाप के भार से] बोझिल अनुभव किया। उन्होंने प्रजापति से कहा—'हम लोगों के लिए द्वाद-शाह क्रतु के द्वारा यजन कराओ।' उन्होंने कहा 'ठीक है।' 'तुम लोग दीक्षित होओ।' उन पूर्वपक्षों [शुक्लपक्ष के अभिमानी देवों] ने पहले दीक्षा ली। उन्होंने अपने पापों को नष्ट कर दिया। इसलिए वे [शुक्लपक्ष के देव] दिन के समान प्रकाशयुक्त हैं। [लोक में भी] दिन के समान पापरहित पुरुष [पुण्यरूप] तेज से युक्त होते हैं। उसके बाद दूसरे पक्षों [कृष्ण"क्ष के अभिमानी देवों] ने दीक्षा ली। किन्तु वे [मालिन्य दोष के कारण] पापों से अत्यन्त न छुट सके। इसीलिए वे [कृष्णपक्ष के देव] कृष्ण वर्ण के दिखते हैं। [लोक में भी] पापविनाश से रहित पुरुष पाप रूप अन्धकार से लिप्त [होने से निन्द्य ही] होते हैं। इस लिए इस प्रकार जानते हुए पुरुष को दीक्षित होने वाले यजमानों में पहले ही दीक्षित होने की इच्छा करनी चाहिए।**

वेदनं प्रशंसति—

**अप पाप्मानं हते य एवं वेद ॥ इति ।**

**जो इस प्रकार जानता है वह पापरहित होता है।**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यजमानपापविनाशहेतुत्वाद् ऋत्विजं प्रशंसति—

**स वा अयं प्रजापतिः संवत्सर ऋतुषु च मासेषु च प्रत्यतिष्ठत्, ते वा इम ऋतवश्च मासाश्च प्रजापतावेव संवत्सरे प्रत्यतिष्ठंस्त एतेऽन्योऽन्यस्मिन् प्रतिष्ठिता; एवं ह वाव स ऋत्विजि प्रतितिष्ठति यो द्वादशाहेन यजते; तस्मादाहुर्न पापः पुरुषो याज्यो द्वादशाहेन—नेदयं मयि प्रतितिष्ठादिति ॥ इति ।**

यः प्रजापतिर्द्वादशाहेनायष्ट, 'स प्रजापतिः' संवत्सरकालात्मको भूत्वा ऋतुषु च मासेषु च 'प्रत्यतिष्ठत्' प्रतिष्ठितोऽभवत् । तदार्त्विज्यबलात् प्रजापतेरुत्कर्षात् । 'ते वै इमे' ऋतवश्च मासाश्च प्रजापतिरूपे संवत्सरे प्रतिष्ठिता अभवन् । प्रजापतिप्रसादेन तत्पापविनाशात् । 'त एते' प्रजापतिर्ऋतवो मासाश्चान्योन्यपापविनाशाद् अन्योन्यस्मिन् प्रतिष्ठिताः । एवमेवेदानीमपि यो द्वादशाहेन यजते, सोऽयमृत्विजि प्रतितिष्ठति । ऋत्विक्प्रसादेन यजमानस्य पापविनाशात् । यस्मादेवं 'तस्मात्' अभिज्ञा एवमाहुः,—'पापपुरुषो द्वादशाहेन ऋत्विग्भिर्न याज्यः' तस्य कर्मण्यार्त्विज्यं न कार्यमिति । 'अयं' पापो 'मयि' ऋत्विजि 'न प्रतितिष्ठात्' सर्वथा मा प्रविशत्वेवमभिजानामीत्यभिप्रायः ॥

[जो प्रजापति द्वादशाह से अनुष्ठित हुए] वह यह प्रजापति संवत्सर रूप होकर ऋतुओं और मासों में प्रतिष्ठित हुए, और वे ये ऋतुएँ और महीने प्रजापति रूप संवत्सर में प्रतिष्ठित हुए । वे ये दोनों [प्रजापति तथा ऋतुएँ और महीने एक दूसरे के पाप विनाश से] एक दूसरे में प्रतिष्ठित हुए । इसी प्रकार वह भी इस ऋत्विज में प्रतिष्ठित होता है जो द्वादशाह से यजन करता है । इसीलिए अभिज्ञजन कहते हैं कि 'पापात्मा पुरुष द्वादशाह से याज्य नहीं है' [अर्थात्-उसके कर्म में ऋत्विज कर्म नहीं करना चाहिए] क्योंकि यह [पापात्मा] मुझ [ऋत्विज] में प्रतिष्ठित होने के योग्य नहीं है ।'

द्वादशाहं प्रकारान्तरेण प्रशंसति—

**ज्येष्ठयज्ञो वा एष य द्वादशाहः—स वै देवानां ज्येष्ठो य एतेनाग्रेऽयजत; श्रेष्ठयज्ञो वा एष य द्वादशाहः—स वै देवानां श्रेष्ठो य एतेनाग्रेऽयजत ॥ इति ।**

यो द्वादशाहोऽस्ति, असौ ज्येष्ठस्य यज्ञः । कथमिति, तदुच्यते—यः पुमान् 'एतेन' द्वादशाहेन 'अग्रे' प्रथममयजत, स एव देवानां मध्ये 'ज्येष्ठः' वयसा प्रवृद्धो भवति । किं चायं द्वादशाहः श्रेष्ठस्य यज्ञः; यः 'एतेन' प्रथममयजत, स देवेषु मध्ये गुणतः श्रेष्ठो भवति ॥

जो यह द्वादशाह है वह ज्येष्ठ का यज्ञ है, क्योंकि जिस पुरुष ने इस [द्वादशाह] से प्रथमतः यजन किया, वही देवों के मध्य ज्येष्ठ [आयु में वृद्ध] हुआ । जो यह द्वादशाह है वह श्रेष्ठ का यज्ञ है; क्योंकि जिसने इस [द्वादशाह] से प्रथमतः यजन किया, वही देवों के मध्य [गुण से] श्रेष्ठ हुआ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एतां द्वादशाहप्रशंसामुपजीव्याधिकारिविशेषं दर्शयति—

**ज्येष्ठः श्रेष्ठो यजेत—कल्याणीह समा भवति; न पापः पुरुषो याज्यो द्वादशाहेन—नेदयं मयि प्रतितिष्ठादिति ॥ इति ।**

यः पुमान् भ्रातॄणां मध्ये वयसा ज्येष्ठो गुणैः श्रेष्ठश्च, तादृशोऽनेन 'यजेत'। यस्मिन् देशे तथाविधकर्तृको यागः, 'इह' अस्मिन् देशे 'समा कल्याणी भवति' संवत्सरः सर्वोपद्रवरहितः सुखकरो भवति। यस्माज्ज्येष्ठस्य श्रेष्ठस्य चाधिकारः, तस्मात्पापः कनिष्ठो गुणहीनश्च पुरुषो न तेन याजनीयः। 'मयि' ऋत्विजि 'अयं' पापो नैव प्रतितिष्ठत्विति तस्यर्त्विजोऽभिप्रायः ॥

जो [भाइयों में] ज्येष्ठ हो और [गुणों में] श्रेष्ठ हो वह इससे यजन करे। जिस प्रदेश में ऐसा याग होता है, उस प्रदेश में संवत्सर सभी उपद्रवों से रहित और सुखकर होता है। [क्योंकि ज्येष्ठ और श्रेष्ठ को यजन का अधिकार है] इसलिए पापात्मा [कनिष्ठ और गुणविहीन] पुरुष उससे याज्य नहीं है; क्योंकि यह [पापात्मा] मुझ [ऋत्विज] में प्रतिष्ठित होने के योग्य नहीं है।

प्रकारान्तरेण द्वादशाहं ज्यैष्ठ्यश्रैष्ठ्यहेतुतया प्रशंसति—

**इन्द्राय वै देवा ज्यैष्ठ्याय श्रैष्ठ्याय नातिष्ठन्त; सोऽब्रवीद् बृहस्पतिं याजय मा द्वादशाहेनेति, तमयाजयत् ततो वै तस्मै देवा ज्यैष्ठ्याय श्रैष्ठ्यायातिष्ठन्त ॥ इति ।**

इन्द्रस्य वयसा ज्येष्ठत्वं गुणैः श्रेष्ठत्वं च देवा नाङ्गीकृतवन्तः। ततः सोऽङ्गीकारो द्वादशाहेन लब्धः ॥

देवों ने इन्द्र के ज्येष्ठत्व और [गुणों में] श्रेष्ठत्व को अङ्गीकार नहीं किया, उन्होंने बृहस्पति से कहा—'मुझे द्वादशाह याग से यजन कराओ।' उनके लिए उन्होंने याग कराया। तब से देवों ने उन [इन्द्र] के ज्येष्ठत्व और श्रेष्ठत्व को स्वीकार किया।

वेदनं प्रशंसति—

**तिष्ठन्तेऽस्मै स्वा ज्यैष्ठ्याय श्रैष्ठ्याय, सम् अस्मिन् स्वाः श्रेष्ठतायां जानते य एवं वेद ॥ इति ।**

'अस्मै' अस्य वेदितुः 'स्वाः' ज्ञातयो 'ज्यैष्ठ्याय श्रैष्ठ्याय तिष्ठन्ते' ज्यैष्ठ्यं श्रैष्ठ्यं चाङ्गीकुर्वन्ति। किंच 'अस्मिन्' वेदितरि येयं श्रेष्ठता, तस्यां ज्ञातयः 'संजानते' ऐकमत्यं प्राप्नुवन्ति ॥

इसी प्रकार इसके जानने वाले को इसके ज्ञातिजन ज्येष्ठ और श्रेष्ठ रूप में अङ्गीकार करते हैं और इसकी श्रेष्ठता में वे ज्ञातिजन एकमत होते हैं।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ व्यूह्ले द्वादशाहे प्रथमदशमद्वादशदिनव्यतिरिक्तो यो नवरात्रस्तत्र ये त्र्यस्त्र्यहाः पूर्वमुक्ताः, तान्[1] प्रशंसति—

**ऊर्ध्वो वै प्रथमस्त्र्यहस्तिर्यङ्मध्यमोऽर्वाङुत्तमः; स यदूर्ध्वः। प्रथमस्त्र्यहस्तस्मादयमग्निरूर्ध्वं उद्दीप्यत—ऊर्ध्वा ह्येतस्य दिक्; यत्तिर्यङ्मध्यमस्तस्मादयं वायुस्तिर्यङ्पवते—तिरश्चीरापो वहन्ति; तिरश्चीह्येतस्य दिक्; यदर्वाङुत्तमस्तस्मादसावर्वाङ्तपत्यर्वाङ्वर्षत्यर्वाञ्चि नक्षत्राण्यर्वाची ह्येतस्य दिक्, सम्यञ्चो वा इमे लोकाः; सम्यञ्च एते त्र्यहाः॥ इति।**

योऽयं नवरात्रे प्रथमस्त्र्यहः, सोऽयम् 'ऊर्ध्वो वै' आरोहप्रकार एव। तद्यथा—गायत्रं प्रातःसवनं, त्रैष्टुभं माध्यंदिनं सवनं, जागतं तृतीयसवनमित्ययं स्वभावसिद्धः क्रमः; तस्य व्यत्यासभावादूर्ध्वं इत्युच्यते। यस्तु मध्यमस्त्र्यहः सोऽयं 'तिर्यङ्' वर्तते। तद्यथा—जागतं प्रातःसवनं, गायत्रं माध्यंदिनं, त्रैष्टुभं तृतीयमित्यत्र नात्यन्तमनुक्रमो नाप्यत्यन्तं व्युत्क्रमः। तस्मादयं तिर्यङ्। य उत्तमस्त्र्यहः, 'सोऽर्वाङ्' अधोमुखः। तद्यथा—त्रैष्टुभं प्रातःसवनं, जागतं माध्यंदिनं, गायत्रं तृतीयसवनमित्येतदहरर्वाक्त्वम्। प्रथमो जागतान्तो द्वितीयस्त्रैष्टुभान्तस्तृतीयो गायत्रान्त इत्येवमूर्ध्वतिर्यक्त्वार्वाक्त्वानि त्रिष्वपि त्र्यहेषु द्रष्टव्यानि। यस्मात् 'सः' प्रथमस्त्र्यह ऊर्ध्वस्तस्मात् तदात्मकोऽयमग्निरूर्ध्वाभिमुखो दीप्यते। 'एतस्य' चाग्नेरूर्ध्वादिक् प्रिया। मध्यमस्य त्र्यहस्य तिर्यक्त्वात् तद्रूपो वायुस्तिर्यङ् वर्तते—वायुना हि प्रेरिता आपः तिरश्चीः तिर्यग्भूताः प्रवहन्ति। 'एतस्य' वायोस्तिर्यक्त्वात्तिरश्चो दिक् प्रिया। उत्तमस्य त्र्यहस्यार्वाक्त्वात्तद्रूपः 'असौ' आदित्योऽधोमुखस्तपति,—आदित्यप्रेरितः पर्जन्योऽधोमुखो वर्षति,—आदित्यवन्नक्षत्राण्यपि 'अर्वाञ्चि' अधोमुखानि प्रकाशन्ते। 'एतस्य' आदित्यस्यार्वाची दिक् प्रिया। किं चेमे त्रयो लोकास्तत्तद्वासिनां सुखहेतुत्वात् 'सम्यञ्चः'। एते च त्र्यहाः लोकत्रयसाम्येनानुष्ठातॄणां सुखहेतुत्वात् सम्यञ्चः॥

[नवरात्र में] प्रथम त्र्यह [तीन दिन] ऊर्ध्व हैं [अर्थात् उनमें आरोहण क्रम है; जैसे प्रातःसवन गायत्री का, माध्यन्दिनसवन त्रिष्टुप् का और सायंसवन जगती छन्द का है। अतः प्रातःसवन से सायंसवन तक अक्षरों के बढ़ने से उन त्र्यह में आरोहण क्रम है], मध्यम त्र्यह [बीच के तीन दिन] तिर्यक् [अनुक्रम और व्युत्क्रमरहित] हैं [अर्थात् छन्दों का क्रम जगती, गायत्री और त्रिष्टुप् है], उत्तम त्र्यह [अन्तिम तीन दिन] अर्वाङ् [अधोमुख-क्रम] हैं; [जैसे प्रातःसवन त्रिष्टुप् छन्द का, माध्यन्दिन सवन जगती का और सायंसवन गायत्री का है।] वह प्रथम त्र्यह जो ऊर्ध्व है, इसीलिए यह अग्नि ऊपर को दीप्त होती है। इसलिए इस [अग्नि] की दिशा ऊर्ध्व है। मध्यम त्र्यह जो तिर्यक

१. द्र० इतः पूर्वम्, ६६६ पृ०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

है, इसलिए यह वायु तिर्यक् चलती है और [वायु से प्रेरित] पानी तिर्यक्भूत होकर बहता है। इसलिए इस [वायु] की तिर्यक् दिक् है। उत्तम त्र्यह जो अर्वाङ है, इसीलिए यह [सूर्य] अधोमुख हो तपता है और [आदित्य से प्रेरित] पर्जन्य नीचे की ओर बरसता है तथा नक्षत्र नीचे की ओर प्रकाशित होते हैं। इसलिए इस [आदित्य] की अर्वाची दिक् है। ये तीनों लोक [सुख के हेतु होने से] मिले-जुले हैं। ये तीन त्र्यह भी मिले जुले हैं।

वेदनं प्रशंसति—

**सम्यञ्चोऽस्मा इमे लोकाः श्रियै दीद्यति य एवं वेद ॥ २५ ॥ इति ।**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थ-पञ्चिकायां चतुर्थाध्याये (एकोनविंशाध्याये) तृतीयः खण्डः ॥३॥ (२५) [१४६]

जो इस प्रकार जानता है उसके लिए ये तीनों लोक समृद्धि के साथ प्रकाशित होते हैं।

॥ इस प्रकार उन्नीसवें अध्याय के तीसरे खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

अथ द्वादशाहे दीक्षायाः कालविशेषं विधातुं प्रस्तौति—

**दीक्षा वै देवेभ्योऽपाक्रामत्, तां वासन्तिकाभ्यां मासाभ्यामन्वयुञ्जत, तां वासन्तिकाभ्यां मासाभ्यां नोदाप्नुवंस्तां ग्रैष्माभ्यां तां वार्षिकाभ्यां तां शारदाभ्यां तां हैमन्तिकाभ्यां मासाभ्यामन्वयुञ्जत, तां हैमन्तिकाभ्यां मासाभ्यां नोदाप्नुवंस्तां शैशिराभ्यां मासाभ्यामन्वयुञ्जत; तां शैशिराभ्यां मासाभ्यामाप्नुवन् ॥ इति ।**

पुरा कदाचिद् 'दीक्षा' स्त्रीमूर्तिरूपा सती देवेष्वपरक्ता, तेभ्यो देवेभ्यो निर्गता। देवाश्च 'वासन्तिकाभ्यां' चैत्रवैशाखमासाभ्यां 'तां' दीक्षामनुगताभ्यां दीक्षाम् 'अनु' गम्य 'अयुञ्जत' तद्युक्ता भवाम इत्येवमपेक्षितवन्तः। ततस्त्वरया गच्छन्तीं 'तां' दीक्षां ताभ्यां मासाभ्यामुत्कर्षेण नोदाप्नुवन्, नाप्तुमशक्नुवन्। एवं ग्रैष्म-वार्षिक-शारदेषु मासेषु यथा-योगं पदान्यध्याहृत्य व्याख्येयम्। अध्याहारविवक्षां दर्शयितुमेव हैमन्तिके पर्याये संपूर्णं वाक्यमाम्नातम्। यथोक्तपञ्चर्तुगतैर्मासैस्तत्प्राप्त्यभावेऽपि शैशिरमासाभ्यां तत्प्राप्तिर्जाता ॥

iv. २६ [xix. ४] [किसी समय स्त्रीरूपा] दीक्षा देवों के पास से उपरक्त हो चली गई। वसन्त के दो महीनों [चैत्र और वैसाख से अनुगत उस [दीक्षा] को उन्होंने फिर से पाने की अपेक्षा की। [किन्तु शीघ्रता से जाने वाली] उस [दीक्षा] को उन वसन्त के दो महीनों से वे न प्राप्त कर सके। उसको उन्होंने ग्रीष्म के दो महीनों से, उसको उन्होंने वर्षा के दो महीनों से, उसको उन्होंने शरद के दो महीनों से और उसको उन्होंने हेमन्त

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

के दो महीनों से प्राप्त करना चाहा। उसको वे हेमन्त [आदि] के दो महीनों से न प्राप्त कर सके। उसको इन्होंने शिशिर के दो महीनों से प्राप्त करना चाहा और उसको शिशिर के दो महीनों से प्राप्त किया।

वेदनं प्रशंसति—

**आप्नोति यमीप्सति; नैनं द्विषन्नाप्नोति य एवं वेद ॥ इति।**

वेदिता पुरुषः 'यं' काममाप्तुमिच्छति, तमाप्नोति। किं च 'एनं' वेदितारं 'द्विषन्' वैरी न प्राप्नोति ॥

जो इस प्रकार जानता है वह जो चाहता है, प्राप्त कर लेता हैं और इसका द्वेषी पुरुष उसे नहीं प्राप्त करता है।

इदानीं कालं विधत्ते—

**तस्माद् यं सत्त्रिया दीक्षोपनमेदेतयोरेव शैशिरयोर्मासयोरागतयोर्दीक्षेत; साक्षादेव तद्दीक्षायामागतायां दीक्षते,—प्रत्यक्षाद्दीक्षां परिगृह्णाति; तस्मादेतयोरेव शैशिरयोर्मासयोरागतयोर्ये चैव ग्राम्याः पशवो ये चारण्या अणिमाणमेव तत्परुषिमाणं नियन्ति; दीक्षारूपमेव तदुपनिप्लवन्ते ॥ इति।**

यस्माच्छैशिराभ्यां मासाभ्यां देवानां दीक्षाप्राप्तिः, 'तस्माद्' 'यं' पुरुषं द्वादशाहादिसत्रसम्बन्धिनी दीक्षां प्राप्नुयात्। दीक्षां तत्र करिष्यामीति यस्येच्छा जायते, स पुमान् 'एतयोरेव' शिशिरसम्बन्धिमाघफाल्गुनयोर्मासयोः प्राप्तयोः सतोः दीक्षां कुर्यात्। तथा सति दीक्षायां साक्षादेवागतायां बलात्कारमन्तरेण स्वप्रिये काले स्वमेव 'समागतायां' सत्यामयं दीक्षितो भवति। अतः 'प्रत्यक्षात्' प्रत्यक्षेण दृश्यमानामिव मुख्यां दीक्षां परिगृह्णाति। यस्मादुक्तमासद्वयागमे दीक्षा, 'तस्मात्' तयोर्मासयोरागतयोः सतोः 'ग्राम्यः' गवादिपशवः, 'आरण्याः' द्विखुरादिपशवश्च 'अणिमाणं' कृशत्वं 'परुषिमाणं' पारुष्यं च 'नियन्ति' नितरां प्राप्नुवन्ति। वर्षाशरद्धेमन्तेष्वृतुषु संतापराहित्यात् सर्वत्र हरिततृणं भक्षयित्वा पशवः पुष्टाङ्गाः स्निग्धाश्चावभासन्ते। शैशिरे तु ऋतौ तृणस्य शोषणोपक्रमत्वात् संपूर्णभक्षणाभावेन पशवः कृशा भवन्ति। अत एवास्थिदर्शनात् परुषा दृश्यन्ते। एतच्च युक्तमेव। 'तत्' तस्मिञ्शिशिरर्तौ दीक्षारूपमेवोपेत्य नितरां 'प्लवन्ते' संचरन्ति। दीक्षितोऽपि नियमविशेषैः पीडितः कृशः परुषश्च भवति। अतः पशूनां कृशत्वं पारुष्यं च दीक्षाकाललिङ्गम् ॥

इसलिए जो [द्वादशाह आदि] सत्र की दीक्षा पाना चाहें; वह इन शिशिर के दो महीनों [माघ-फाल्गुन] के आने पर दीक्षा लें। इस प्रकार साक्षात् रूप से अपने से आई हुई उस दीक्षा में वह दीक्षित होता है—प्रत्यक्ष रूप से दीक्षा प्राप्त करता है। [क्योंकि उक्त दो मास के आगमन पर दीक्षा होती है] इसलिए शिशिर के उन दो महीनों के आगमन पर [गौ आदि] जो ग्राम्य पशु हैं और [दो खुर वाले] जो जङ्गली पशु हैं वे

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[हरी घास के अभाव के कारण] कृशगात ही हो जाते हैं और उस [हड्डियों के निकल आने] से निरन्तर रूक्ष से दिखाई पड़ते हैं। वस्तुतः इस प्रकार उस शिशिर ऋतु में उनका दीक्षा का सा रूप ही हो जाता है। [जैसे दीक्षित यजमान का शरीर नियमों के पालन के कारण कृश और रुक्ष हो जाता है]।

दीक्षार्थिनः कंचित्पशुं विधत्ते—

**स पुरस्ताद्दीक्षायां प्राजापत्यं पशुमालभते ॥** इति।

यो दीक्षां वाञ्छति, 'सः' पुमान् दीक्षोपक्रमात् पुरा प्रजापतिदेवताकं पशुमालभेत[1]। द्विविधो हि द्वादशाहः,—साग्निचित्यो निरग्निचित्यश्च[2]। तत्राग्निचयनयुक्ते पशुरयमवगन्तव्यः ॥

**वह दीक्षा से पहले प्रजापति के लिए पशु का आलम्भन करता है।**

सामिधेनीषु चोदकप्राप्तं[3] पाञ्चदश्यमपवदितुं विशेषं विधत्ते—

**तस्य सप्तदश सामिधेनीरनुब्रूयात्—सप्तदशो वै प्रजापतिः, प्रजापतेराप्त्यै ॥** इति।

द्वयोर्धाय्ययोः[4] प्रक्षेपेण सप्तदशसंख्या संपद्यते। सप्तदशत्वं 'द्वादशमासाः' इत्यादिना पूर्वमेवोक्तम्[5]। अतः सप्तदशसंख्या प्रजापतेः प्राप्त्यै संपद्यते ॥

**उसके लिए सत्रह सामिधेनी ऋचाओं का पाठ करना चाहिए। क्योंकि प्रजापति सत्रह संख्या वाले हैं अतः [सत्रह संख्या] प्रजापति की प्राप्ति के लिए सम्पादित है।**

आप्रीयाज्यासु विशेषं विधत्ते—

**तस्याप्रियो जामदग्न्यो भवन्ति ॥** ।इति।

पशोः प्राप्तिहेतुत्वात् प्रयाजा आप्रिय इत्युच्यन्ते[6]। तदत्र जमदग्निना दृष्टाः 'समिद्धो अद्य मनुषः' इत्यादिसूक्ते[7] समाम्नाताः द्रष्टव्याः[8] ॥

---

१. अथ सप्तदश प्राजापत्यान् पशूनालभते। ते वै सर्वे तूपरा भवन्ति, सर्वे श्यामाः, सर्वे मुष्कराः ·······तूपरोऽविषाण ······· द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च·······प्रजननं वै मुष्करः'—इत्यादि शत० ब्रा० ५.१.३.७–१०। 'प्राजापत्यो वा अश्वः'—इति च शत० ब्रा० ६.५.३.९; तै० ब्रा० २.७.१.३; म० सं० ११.३८; वा० सं० २४।

२. 'साग्निचित्यावग्ने स्तोमौ सर्वजिद्दीक्षौ'—इति कात्या० श्रौ० २२.१०.३३। सर्वजित् स महाव्रतः संवत्सरदीक्षः'—इत्यादि च १.४४। आश्व० श्रौ० ४.१.२१; ८.२७; १०.१०। ३. ४. द्र० इतः पूर्वम्, २० पृ० १,७ टि०।

५. द्र० इतः पूर्वम्, २१ पृ०।

६. द्र० इतः पूर्वम्, २१२,२१३ पृ०, तत्र टि० च द्रष्टव्या।

७. ऋ० १०.११०.१–११। ८. निरु० ८.२.२–८.३.६।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उसके लिए आप्री ऋचाएँ जमदग्नि ऋषि द्वारा दृष्ट होती हैं।

अत्र चोद्यमुद्भावयति—

**तदाहुर्यदन्येषु पशुषु यथ ऋष्याप्रियो भवन्त्यथ कस्माद् अस्मिन् सर्वेषां जामदग्न्य एवेति ॥ इति ।**

उक्तप्राजापत्यपशुव्यतिरिक्तेषु सर्वेषु पशुषु 'आप्रियो यथ ऋषि भवन्ति' यस्य यजमानस्य गोत्रप्रवर्तको य ऋषिर्भवति, तमनतिक्रम्य तेन दृष्टा एवाप्रियो भवन्ति। एवं सत्यत्रापि जमदग्निगोत्रजानामेव—'समिद्धो अद्य'—इत्याप्रिय ऋचा युक्ताः, न त्वन्येषाम्। अथैवं सति 'कस्मात्' कारणाद् 'अस्मिन्' पशौ 'सर्वेषां' जगदग्निगोत्रजानामन्येषां चैता एवाप्रियः क्रियन्ते ? इति चोद्यम् ॥

इस सम्बन्ध में प्रश्न है कि [प्राजापत्य पशु से] अन्य पशु यागों में जब आप्री मन्त्र यजमान के गोत्र प्रवर्तक ऋषि [द्वारा दृष्ट मन्त्र] के अनुसार होते हैं तो यहाँ कैसे मात्र जमदग्नि ऋषि द्वारा दृष्ट मन्त्र ही सभी के लिए प्रतिपादित हैं ?

तस्योत्तरमाह—

**सर्वरूपा वै जामदग्न्यः सर्वसमृद्धाः; सर्वरूप एष पशुः सर्वसमृद्धस्तद् यज्जामदग्न्यो भवन्ति सर्वरूपतायै सर्वसमृद्धयै ॥ इति ।**

जमदग्निना दृष्टा ऋचो 'जामदग्न्यः', 'सर्वरूपा वै' सर्वासामृचां स्वरूपभूता एव, 'सर्वसमृद्धाः सर्वसमृद्धिफलहेतुत्वात्। 'एषः' प्रजापतिदेवताकः पशुरपि 'सर्वरूपः' प्रजापतेः सर्वदेवतात्मकत्वेन तदीयपशोरपि सर्वपश्वात्मकत्वम्। अतोऽयं पशुरपि सर्वफलसमृद्धिहेतुत्वात् सर्वैः फलैः समृद्धः। 'तत्' तथा सति यज्जामदग्न्यानामनुष्ठानम्, तत्सर्वानुष्ठानसिद्धयर्थं सर्वफलसमृद्धयर्थं च भवति ॥

[उत्तर है कि] जमदग्नि द्वारा दृष्ट मन्त्र सर्वरूप [सभी ऋचाओं का स्वरूपभूत] और सर्वसमृद्ध हैं। यह [प्रजापति-देवताक] पशु भी सर्वरूप और सर्वसमृद्ध है। इस प्रकार जो जमदग्नि के मन्त्रों से [अनुष्ठान] होते हैं वह सभी [अनुष्ठानों] की सिद्धि और सभी [फल] की समृद्धि के लिए होते हैं।

पश्वङ्गे पशुपुरोडाशे विशेषं विधत्ते—

**तस्य वायव्यः पशुपुरोळाशो भवति ॥ इति ।**

'तस्य' प्राजापत्यस्य पशोर्वायुर्देवता यस्य पुरोडाशस्य सोऽयं 'वायव्यः' ॥

उस [प्रजापति देवताक पशु] के लिए वायुदेवताक पशु-पुरोडाश होता है।

अत्र चोद्यमुद्भावयति—

**तदाहुर्यदन्यदेवत्य उत पशुर्भवत्यथ कस्माद् वायव्यः पशुपुरोळाशः क्रियत इति ॥ इति ।**

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'यद्' यस्मात् कारणात् 'अन्यदेवत्य उत' वायुव्यतिरिक्त-प्रजापतिदेवताक एवायं पशुर्भवति, तस्मात् पुरोडाशोऽपि प्रजापतिदेवताक एव युक्तः। यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशः' इत्यभिधानात्। अथैवं सति प्रजापतिं परित्यज्य 'कस्मात्' कारणात् पुरोडाशो वायुदेवताकः क्रियते ? इति चोद्यम् ॥

इस सम्बन्ध में प्रश्न है कि जब [वायु से अतिरिक्त] अन्य [प्रजापति] देवताक पशु होता है तो कैसे पशु पुरोडाश [प्रजापति देवताक न होकर] वायु देवताक होता है ?

तस्योत्तरमाह—

**प्रजापतिर्वै यज्ञो, यज्ञस्यायातयामताया इति ब्रूयाद्; यदु वायव्यस्तेन प्रजापतेर्नैति; वायुर्ह्येव प्रजापतिः ॥** इति।

पशुरूपस्य यज्ञस्य प्रजापतिदेवतात्मकत्वेन प्रजापतिरूपत्वम्। तादृशस्यास्य यज्ञस्य पशुहंविषि पुरोडाशे तद्देवतैक्ये सति 'यातयामत्वम्' असारत्वमालस्यकारणं भवेत्,—सति हि भेदे भिन्नदेवताकं कर्माऽऽलस्यरहितं भवति। तस्माद् 'अयातयामतायै' निःसारत्वरूपालस्यपरिहाराय देवतान्तरं युक्तम् 'इति' उत्तरं ब्रूयात्। न च वायुदेवताकत्वे प्रजापतेः सकाशात् पुरोडाशोऽपगच्छतीति शङ्कनीयम्। वायुप्रजापत्योः कार्यकारणाभावेनैकत्वे सति वायव्यस्यैव प्राजापत्यत्वात्। तदिदमुच्यते—'यदु वायव्यस्तेन प्रजापतेर्नैति'-इति। नापगच्छतीत्यर्थः ॥

यज्ञ प्रजापति है। [पशुरूप यज्ञ प्रजापतिदेवतात्मक होने से] यज्ञ के [पशु पुरोडाश रूप हवि के एकत्व से] निःसारत्व रूप आलस्य के परिहार के लिए देवतान्तर युक्त है—ऐसा उत्तर देना चाहिए। फिर जो वायु देवताक पशु पुरोडाश है तो उसका यह अर्थ नहीं है कि वह प्रजापति का नहीं है क्योंकि वायु ही प्रजापति है।

वायुप्रजापत्योरेकत्वं मन्त्रसंवादेन द्रढयति—

**तदुक्तमृषिणा—पवमानः प्रजापतिरिति ॥** इति।

'त्वष्टारमग्रजां गोपाम्' इत्यस्या ऋचश्चतुर्थपादे यः 'पवमानः' वायुः, स प्रजापतिरिति तादात्म्यं सामानाधिकरण्येन दर्शितम्[1] ॥

ऐसा ही ऋषि के द्वारा कहा भी गया है—'जो पवमान [=बहने वाला वायु] है वह प्रजापति है।'

पूर्वं भरतद्वादशाहो व्यूढ्द्वादशाहश्चेति द्वौ द्वादशाहभेदावुक्तौ। प्रकारान्तरेणापि सत्ररूपोऽहीनरूपश्चेत्येवं द्विविधो द्वादशाहः। तत्र सत्रपक्षे विशेषान् विधत्ते—

**सत्रमु चेत् संन्युप्याग्नीन् यजेरन् सर्वे दीक्षेरन् सर्वे सुनुयुर्वसन्तमभ्युदवस्यत्यूर्ग्वै वसन्त इषमेव तदुर्जमभ्युदवस्यति ॥ २६ ॥** इति।

---

१. त्वष्टारमग्रजां गोपां पुरोयावान मा हुवे।
इन्दुरिन्द्रो वृषा हरिः पवमानः प्रजापतिः ॥ ( ऋ० ९.५.९ )

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'सत्रमु चेत्' यद्ययं द्वादशाहः सत्ररूपो भवेत्, तदानीं सत्रस्य बहुयजमानत्वात् सर्वेषां यजमानानामग्नीन् 'संन्युप्य' संभूयैकत्वेनावस्थाप्य, तस्मिन् सर्वे यजेरन् । यजमानत्वादेव सर्वेऽपि 'दीक्षेरन्' दीक्षां कुर्युः । 'य एव यजमानास्त एव ऋत्विजः'—इत्युक्तत्वेन 'सर्वे' यजमानाः 'सुनुयुः' ऋत्विक्कार्यमभिषवं कुर्युः । वसन्तर्तुमभिलक्ष्य 'उदवस्यति' उदवसानीयां समाप्तिकालीनामिष्टिमनुतिष्ठेत्, वसन्तर्तौ समापयेदित्यर्थः । वसन्तकाले सति फलानां गृहेष्वागमनेन रसबाहुल्यात् 'ऊर्ग्वै' रस एव वसन्तः । तथा सत्येतस्मिन्नेतत् समापनेन 'इषम्' अन्नम्, 'ऊर्जं' रसं वाऽभिलक्ष्य 'उदवस्यति' यजमानसंघो द्वादशाहं समापयति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां चतुर्थाध्याये (एकोनविंशाध्याये) चतुर्थः खण्डः ॥४॥ (२६) [१४७]

यदि [यह द्वादशाह] सत्र के रूप में किया जाय तो यजमानों की सभी अग्नियों को एक जगह इकट्ठी करके उसमें सभी को यजन करना चाहिए । सभी को दीक्षा लेनी चाहिए [जो यजमान हैं वही ऋत्विज है; अतः] सभी [यजमानों] को [ऋत्विज का कार्य] अभिषव करना चाहिए और वसन्त ऋतु को देखकर उदवसानीय [=समाप्तिकालीन] इष्टि करना चाहिए [अर्थात् सत्र की समाप्ति वसन्त ऋतु में करे]; क्योंकि [वसन्त में घरों में फलागमन से रसबाहुल्य के कारण] वसन्त ही रस है । इस प्रकार उस [वसन्त ऋतु में समाप्ति] से अन्न और रस से ही वे समापन करते हैं ।

॥ इस प्रकार उन्नीसवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

अथ व्यूळ्हद्वादशाहे यदेतद्व्यूळ्हत्वम्, तदेतत् प्रशंसितुमाख्यायिकामाह—

**छन्दांसि वा अन्योन्यस्यायतनमभ्यध्यायन्—गायत्री त्रिष्टुभश्च जगत्यै चायतनमभ्यध्यायत्, त्रिष्टुब्गायत्र्यै च जगत्यै च, जगती गायत्र्यै च त्रिष्टुभश्च, ततो वा एतं प्रजापतिर्व्यूळ्हच्छन्दसं द्वादशाहमपश्यत्; तमाहरत्, तेनायजत तेन स सर्वान् कामांश्छन्दांस्यगमयत् ॥ इति ।**

गायत्री त्रिष्टुब्जगतीत्येतानि त्रीणि च्छन्दांसि, अन्योन्यस्यायतनम् 'अभि' आप्तुम् 'अध्यायन्' स्वस्वमनस्यचिन्तयन् । तेषां च त्रयाणां छन्दसां क्रमेण सवनत्रयं स्थानम् । तत्र गायत्री त्रिष्टुब्जगत्योः स्थाने माध्यंदिनसवनतृतीयसवने ध्यातवती । त्रिष्टुप्स्वस्थानव्यतिरिक्तं स्थानद्वयमभ्यध्यायत् । तथा जगत्यपि । 'ततः' प्रजापतिश्छन्दसामभिलाषं दृष्ट्वा, तत्सम्पादनक्रमेण 'एतं व्यूळ्हच्छन्दसं द्वादशाहमपश्यत्' । स्वस्वस्थानविपरीतत्वेनोढानि स्थानान्तरे प्रक्षिप्तानि च्छन्दांसि यस्मिन् द्वादशाहे, सोऽयं 'व्यूळ्हच्छन्दाः' ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तादृशं द्वादशाहं दृष्ट्वा, तत्साधनान्याहृत्य, तेनेष्ट्वा, 'सः' प्रजापतिस्तेषामपेक्षितान् स्थानविपर्यासलक्षणान् 'सर्वान्' 'कामान्' गायत्र्यादिच्छन्दांसि प्रापितवान् ॥

iv. २७ [xix. ५] छन्दों ने एक दूसरे का स्थान ग्रहण करना चाहा। गायत्री ने त्रिष्टुभ् और जगती के [माध्यन्दिन और तृतीयसवन रूप] स्थान को प्राप्त करना चाहा; त्रिष्टुप् ने गायत्री और जगती के [प्रातः और सायं सवनरूप] स्थान को और जगती ने गायत्री और त्रिष्टुप् के [प्रातः और माध्यन्दिन सवनरूप] स्थान को [प्राप्त करना चाहा]। तब प्रजापति ने [छन्दों की अभिलाषा देखकर] इस व्यूह्ळ [=तितर-बितर हुए] छन्दों वाले द्वादशाह को देखा। उन्होंने उसको लिया और उससे यजन किया। उससे उस [प्रजापति] ने [स्थानविपर्यास रूप] छन्दों की सभी कामनाओं को प्राप्त कराया।

वेदनं प्रशंसति—

**सर्वान् कामान् गच्छति य एवं वेद ॥** इति ।

जो इस प्रकार जानता है उसकी सभी कामना पूर्ण होती है।

इदानीं व्यूहनं विधत्ते—

**छन्दांसि व्यूहत्ययातयामतायै ॥** इति ।

'छन्दांसि' गायत्र्यादीनि 'व्यूहति' तत्तदायतनविपर्यासेनावस्थापयेत्। तच्च व्यूहनम् 'अयातयामतायै' असारत्वप्रयुक्तालस्यपरिहाराय भवति ॥

वह [गायत्री आदि] छन्दों को निःसारत्व रूप आलस्य के परिहार के लिए स्थानविपर्यासपूर्वक रखता है।

उक्तव्यूहनमनूद्य प्रशंसति—

**छन्दांस्येव व्यूहति; तद्यथाऽदोऽश्वैर्वाऽनड्वद्भिर्वाऽन्यैरन्यैरश्रान्ततरैरश्रान्ततरैरुपविमोकं यान्त्येवमेवैतच्छन्दोभिरन्यैरन्यैरश्रान्ततरैरश्रान्ततरैरुपविमोकं स्वर्गं लोकं यन्ति; यच्छन्दांसि व्यूहति ॥** इति ।

गायत्र्यादीनि 'छन्दांसि' अस्मिन् द्वादशाहविशेषे 'व्यूहत्येव' न त्वत्र संदेहः कार्यः। 'तत्' तस्मिन् व्यूहने 'यथा' लोके 'अदः' निदर्शनं तन्न्यायो द्रष्टव्यः। किं निदर्शनमिति ? तदुच्यते—ये राजानो रथमारुह्य तत्रत्यैरश्वैर्दूरदेशं गच्छन्ति, ते राजानो योजने योजने 'उपविमोकं' श्रान्तानश्वान् उपविमुच्योपविमुच्य 'अन्यैरन्यैः' पुनः पुनर्नूतनैर्दूरदेशं यान्ति। तत्रोपपत्तिः 'अश्रान्ततरैः'—इति, अतिशयेन श्रमरहितैः, पौनःपुन्यं द्योतयितुं वावृत्तिश्च। लाङ्गले घटीयन्त्रे वा तदा तदा श्रान्तानश्वाननड्हो वा विमुच्य विमुच्य नूतनैरनड्द्भिः प्रवर्तन्त एवमेवात्रापि च्छन्दसां स्थानविपर्यासे सति स्वस्वस्थाने श्रान्तानि च्छन्दांसि पुनः पुनरुपविमुच्य, तदा तदा नूतनैश्छन्दोभिः सत्रिणः स्वर्गं लोकं गच्छन्ति। यदा छन्दांसि व्यूहति, तदानीमेतदिति द्रष्टव्यम् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[गायत्री आदि] छन्दों का [इस द्वादशाह में] व्यूहन हो करता है [इसमें सन्देह नहीं है]। जैसे लोक में कोई राजा रथ पर चढ़कर जब दूर देश को जाता है तो वह योजन-योजन के बाद श्रान्त अश्वों को हटाकर दूसरे-दूसरे अत्यन्त श्रमरहित अश्वों या बैलों को जोतता हुआ जाता है; उसी प्रकार जो छन्दों का व्यूहन [=स्थान विपर्यास] करता है वह मानो [श्रान्त छन्दों को हटाकर] दूसरे-दूसरे अत्यन्त श्रमरहित नूतन छन्दों से स्वर्गलोक को जाते हैं।

अथ बृहद्रथंतरसामनी उपाख्याने प्रशंसति—

**इमौ वै लोकौ सहाऽऽस्ताम्; तौ व्यैताम्, नावर्षन्न समतपत्, ते पञ्चजना न समजानत, तौ देवाः समनयंस्तौ संयन्तावेतं देवविवाहं व्यवहेतां, रथंतरेणैवेयममूं जिन्वति, बृहताऽसाविमाम् ॥ इति।**

'इमौ' भूलोकस्वर्गलोकौ पूर्वस्मिन् काले 'सहैवास्ताम्' अत्यन्तं प्रीतियुक्तावेकत्रैवावस्थितौ। कदाचित् तावुभौ केनापि निमित्तेन 'व्यैतां' वियोगं प्राप्तवन्तौ परस्परविरोधेन सहवासं परित्यज्य दूरदेशेऽवस्थितौ। तदानीं द्युलोकवर्ती पर्जन्यो 'नावर्षत्' वृष्टिं न संपादितवान्। आदित्यश्च द्युलोकवर्ती 'न समतपत्' आतपरूपं प्रकाशं न कृतवान्। तदानीं 'ते पञ्चजनाः' पूर्वोक्ताः[1] देवमनुष्यादयः पञ्चविधाः प्राणिनः 'न समजानत' अन्धकारग्रस्ताः सन्तः कमपि मार्गमज्ञात्वा परस्परैकमत्यरहिता अभवन्। तदानीं तादृशान्[2] प्राणिनो दृष्ट्वा 'तौ' उभौ लोकौ 'समनयन्' परस्परं संगतिं प्रापितवन्तः। 'तौ' उभौ लोकौ 'संयन्तौ' परस्परं संगमं प्राप्तवन्तौ। 'एतं' परस्परोपकाररूपं 'देवविवाहं' देवानामुचितं विवाहं 'व्यवहेतां' विविधत्वेन कृतवन्तौ। लोकेऽपि विवाहो नाम परस्परविपर्यासेन सम्बन्धप्रापणम्। तथाहि—वरस्य पिता स्वपुत्रं कन्यापितुर्जामातृत्वेन सम्बन्धयति। कन्यापिता च स्वपुत्रीं वरपितुः स्नुषात्वेन सम्बन्धयति। तदिदं विपर्यासेन सम्बन्धनयनं 'विवाहः'। तयोश्च विवाहे परस्परं गृहभोजनं वस्त्रप्रदानाद्युपचारं च कुर्वन्ति। एवमेतौ लोकौ परस्परमुपकुरुतः। तत्र 'इयं' भूमिः साम्ना 'रथंतरेण' तन्नामकेनैव 'अमूं' दिवं 'जिन्वति' प्रीणयति। 'असौ' द्यौश्च 'इमां' भूमिं 'बृहता' साम्ना जिन्वति। तत एव सर्वत्रेयं वै रथंतरमसौ बृहदिति लोकद्वयरूपेण सामद्वयं स्तूयते॥

ये दोनों [भू और स्वर्ग] लोक पहले [अत्यन्त प्रीति से] एक साथ अवस्थित थे। कभी वे दोनों [किसी कारण] अलग हो गये। द्युलोकवर्ती पर्जन्य न बरसा और सूर्य ने आतपरूप प्रकाश न किया। तब वे [देव मनुष्य आदि] पञ्चजन [अन्धकारग्रस्त हो] परस्पर एक दूसरे को न जान सके। उन दोनों लोकों को देवों ने परस्पर मिला दिया।

---

१. द्र० इतः पूर्वम्, ४८९, ४९० पृ०; तत्र टि० च द्रष्टव्या।

२. 'तादृशः, तादृशाः'—इति आन० मु० पाठः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इन दोनों ने देवविवाह अर्थात् उचित विवाह कर लिया। वहाँ यह भूमि रथन्तर साम से इस [द्यौ] को प्रसन्न करती है और यह [द्यौ] इस [भूमि] को बृहत् साम से।

द्वादशाहे बृहद्रथंन्तरयोरपेक्षितत्वेन प्रशंसां कृत्वा तत्प्रसङ्गाल्लोकद्वयस्यान्यानपि परस्परोपकारान् दर्शयति—

**नौधसेनैवेयममूं जिन्वति, श्यैतेनासाविमां; धूमेनैवेयममूं जिन्वति, वृष्ट्याऽसाविमां; देवयजनमेवेयममुष्यामदधात्, पशूनसावस्याम् ॥** इति।

'इममिन्द्र सुतं पिब' इत्यस्यामृच्युत्पन्नं साम 'नौधसम्'[1]। 'त्वामिदा ह्यो नरः' इत्यस्यामृच्युत्पन्नं साम 'श्यैतम्'[2]। ताभ्यां लोकयोः परस्परं प्रीतिः। भूमावग्निजन्यो धूमो दिवि गच्छति। द्युलोकात् समुत्पन्ना वृष्टिरुर्व्यां गच्छति। सोऽयं धूमवृष्टिभ्यां परस्परोपकारः। 'देवयजनं' देवयागयोग्यं कंचिद्देशम् 'इयं' भूमिः 'अमुष्यां' दिवि 'अदधात्'। 'असौ' च द्यौः पशून् 'अस्यां' भूमावदधात्। अतो देवयजनपशुभ्यां परस्परोपकारः ॥[3]

यह [भूमि] नौधस साम से इस [द्यौ] को प्रसन्न करती है और यह [द्यौ] इस [पृथ्वी] को श्यैत साम से। यह [भूमि] धूम से इस [द्यौ] को उपकृत करती है और यह [द्यौ] इस [पृथ्वी] को वृष्टि से। इस [पृथ्वी] ने स्वर्ग में देवों के यज्ञ के योग्य स्थान बनाया, और इस [द्यौ] ने पशुओं को इस [भूमि] पर बनाया।

तत्र देवयजनशब्देन विवक्षितमर्थं व्याचष्टे—

**एतद्वा इयममुष्यां देवयजनमदधाद् यदेतच्चन्द्रमसि कृष्णमिव ॥** इति।

चन्द्रमण्डले शशमृगादिशब्देन लोके व्यवह्रियमाणं यदेतत् 'कृष्णमिव' कृष्णवर्णमिव रूपं दृश्यते, एतदेव 'देवयजनं' देवयागयोग्यं वस्तु, 'इयं' भूमिः 'अमुष्यां' दिवि स्थापितवती।

यह जो इस [पृथ्वी] ने स्वर्ग में देवयजन योग्य भूमि बनाई यह [शशमृगरूप] चन्द्रमा का काला दाग है।

---

१. ऋ० १.८४.४। छ० आ० ३.१.५.४ ऋचि गे० गा० ६.१.३७ नौधसं (योनिसाम); उ० आ० १.१.१३.१–२ ऋचोः प्रगाथतृचे ऊ० गा० १.१.६ नौधसं (स्तोत्रम्)।

२. ऋ० ८.९९.१। 'त्वामिदा'—छ० आ० ४.१.१.१० नात्र श्यैतमुपलभ्यते। अभि प्र वः'—इति छ० आ० ३.१.५.३ ऋचि गे० गा० ६.१.३ श्यैतं (योनिसाम); उ० आ० २.१.५; १३.२ ऋचोः प्रगाथतृचे ऊ० गा० २.१.३ श्यैतं (स्तोत्रम्)। 'मानं त्विह'—आ० ब्रा० १.२६। ता० ब्रा० ११.९.५ सा० आ० अपि द्रष्टव्यम्।

३. सामब्राह्मणेऽपि एवमेव। ता० ब्रा० ७.१०.१–४; ११.९५।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चन्द्रमसि कृष्णरूपप्रसङ्गाद् यागेषु मुख्यत्वेन शुक्लपक्षं विधत्ते—

**तस्मादापूर्यमाणपक्षेषु यजन्त एतदेवोपेप्सन्ते[1] ॥** इति ।

यस्माद् यागयोग्यं कृष्णं चन्द्रमसि स्थितम्, 'तस्मात्' कारणाच्छुक्लपक्षेषु यागं कुर्वन्तो यजमानाः 'एतदेव' चन्द्रमण्डलमुपाप्तुमिच्छन्ति । दिने दिने वर्धमानया कलया सर्वतः पूर्यमाणं चन्द्रमण्डलमेषु शुक्लपक्षेषु, तेन 'आपूर्यमाणपक्षाः' । कर्मिणां दक्षिण-मार्गेण चन्द्रमण्डलप्राप्तिः सर्वासूपनिषत्सु प्रसिद्धा[2] ॥

[क्योंकि यागयोग्य काला दाग चन्द्रमा में है] इसीलिए शुक्लपक्षों में ही याग करते हुए यजमान इस [चन्द्रमण्डल] को ही प्राप्त करना चाहते हैं ।

देवयजनशब्दं व्याख्याय पशुशब्दं व्याचष्टे—

**ऊषानसावस्यां तद्धापि तुरः कावषेय उवाचोषः पोषो जनमेजय केति; तस्माद्धाप्येतर्हि गव्यं मीमांसमानाः पृच्छन्ति,—सन्ति तत्रोषाः३ इति । ऊषो हि पोषोऽसौ वै लोक इमं लोकमभिपर्यावर्त्तते ॥** इति ।

'असौ' द्युलोकः 'अस्यां' भूमौ 'ऊषान्'[3] आदधातीत्यध्याहारः । देशान्तरप्रसिद्धि-मुपजीव्य पशुशब्दस्योषशब्दो व्याख्यानम् । 'वश कान्तौ'—इत्यस्माद्धातोरूषशब्दो निष्पन्नः । 'ऊषाः' कमनीयाः, पशूनां चमरादीनां कमनीयत्वं प्रसिद्धम् । ऊषशब्दव्यवहार एव 'तद्धापि'—इत्यादिना प्रदर्श्यते । यस्मादूषः पशुरिति देशविशेषे पर्यायत्वेन प्रसिद्धौ, 'तद्धापि' तस्मादेव कारणात् तुरनामकः कश्चिन्महर्षिः कवषस्य पुत्रः, जनमेजयनामानं राजानं संबोध्यैवमुवाच,—हे जनमेजय क 'ऊषः पोषः' पोषशब्दाभिधेयः, पुष्टिहेतुः पशु-रिति । यस्मात्तु ऊषशब्दं पशुषु व्याजहार, 'तस्माद्धि' तस्मादेव कारणादिदानीमपि 'गव्यं' 'मीमांसमानाः' केचिद्देशविशेषेषु गोरसं क्षीरादिकं विचारयन्त एवं पृच्छन्ति— 'तत्र' तेषु देशेषु, 'किमूषा३ः सन्तीति' गोविषयः प्रश्नस्तेषामभिप्रेतः । प्रश्नार्था प्लुतिः । यस्मादूषशब्दवाच्यः पोषहेतुर्गवादिरूपः पशुः, तस्मादूषशब्देन पशुशब्दव्याख्यानमुचितम् । 'असौ' द्युलोकः 'इमं' भूलोकमभिलक्ष्य पर्यावर्त्तते, तेन पशुनोपकृतवानित्यर्थः ॥

उस [द्युलोक] ने इस [भूमि] पर ऊषों [=पशुओं] को बनाया; जैसा कि महर्षि तुरकावषेय ने [देशविशेष में 'ऊष' शब्द पशु के पर्यायरूप में प्रसिद्ध होने के कारण] भी इसीलिए [राजा जनमेजय से] कहा—'हे जनमेजय ! क्या 'ऊष' [शब्द का अर्थ] पोष अर्थात् पुष्टि का हेतुभूत पशु] है ? [क्योंकि 'ऊष' शब्द पशुओं में व्यवहृत हुआ] इसीलिए [किसी देशविशेष में दुग्ध आदि] गो रस को ही ध्यान में रखकर पूछते हैं—'वहाँ क्या

---

१. यजन्ते उपेप्सन्तः'—इति चैतदधिकरणसङ्गृहीतमूलमातृकासु पाठः ।

२. छ० उप० ५.१०.४; बृ० उप० ५.१.९; ६.२.१६ ।

३. Yonder ( Sky ) placed salt in the ( earth )—इति कीथमहोदयः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ऊष [=पशु] हैं ?' [इस प्रकार क्योंकि 'ऊष' शब्द का अर्थ पुष्टि का हेतुभूत गवादि रूप पशु है] इसलिए ऊष [शब्द का व्याख्यान] पशु है। यह [द्युलोक] इस [भूलोक] के प्रति पर्यावर्तित होता है [अतः पशु से उपकृत हुआ]।

इत्थं बृहद्-रथंतरप्रसङ्गेन द्यावापृथिव्योः परस्परमुपकारं बहुधा प्रपञ्च्योपसंहरति—

**ततो वै द्यावापृथिवी अभवतां न द्यावाऽन्तरिक्षान्नान्तरिक्षाद् भूमिः ॥ २७ ॥** इति।

'ततो वै' तस्मादेव परस्परोपकारकत्वकारणाद् द्यावापृथिव्यौ वियुक्ते अपि परस्परैकमत्येन प्राण्युपकारिण्यावभवताम्। न च तत्रान्तरिक्षलोकः कुत्र वर्तत इति शङ्कनीयम्। 'द्यावा' द्युलोको नान्तरिक्षलोकादन्य इति शेषः। भूमिर्नान्तरिक्षादन्या। उभयोर्द्यावापृथिव्योरन्तरिक्षेण संबध्यैवावस्थानात्। तस्माद् वर्णितयोर्द्यावापृथिव्योरेवान्तरिक्षस्यान्तर्भाव इत्यभिप्रायः[1] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां चतुर्थाध्याये (एकोनविंशाध्याये) पञ्चमः खण्डः ॥५॥ (२७) [१४८]

[परस्पर उपकारक होने के कारण] तब द्यु और पृथ्वी [वियुक्त होकर भी परस्पर एकमत होकर प्राणियों के उपकारक] हुए। इस प्रकार द्युलोक अन्तरिक्ष से भिन्न नहीं है और न अन्तरिक्ष से भूमि [अर्थात् दोनों में ही अन्तरिक्ष का अन्तर्भाव है]।

॥ इस प्रकार उन्नीसवें अध्याय के पाँचवें खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

अथास्मिन् द्वादशाहमध्ये पृष्ठ्यषडहे पृष्ठस्तोत्रोपयुक्तानि[2] सामानि विधातुमाख्यायिकामाह—

**बृहच्च वा इदमग्रे रथंतरं चास्तां; वाक्च वै तन्मनश्चाऽऽस्तां; वाग्वै रथंतरं; मनो बृहत्, तद्बृहत् पूर्वं ससृजानं रथंतरमत्यमन्यत; तद्रथंतरं गर्भमधत्त, तद्वैरूपमसृजत ॥** इति।

ये बृहद्रथंतरे पूर्वम् 'इमौ वै लोकौ' इत्यादिना संस्तुते[3] ते उभे एव 'इदं' वैरूपादि सामजातमन्तर्भाव्य तदुत्पत्तेः पूर्वमास्ताम्। 'इदं' वैरूपादि सामजातमुत्पत्तेः 'अग्रे' पूर्वं नासीत्। ते च सामनी मनोवाग्रूपे अभवताम्। तत्र वागेव रथंतरं साम, मनो बृहत्साम। तदेतन्मनोरूपं बृहत्साम 'ससृजानं' सृष्टिं कर्तुमुद्युक्तम्। 'तत्' तस्मा एव सृष्टिसिद्धये 'पूर्वं'

---

१. न चेत्यादिग्रन्थो मूलाभिप्रायविरुद्ध एव गम्यते।

२. द्र० इतः पूर्वम्, ६२४ पृ०।　　३. द्र० इतः पूर्वम्; ६८२ पृ०।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रथमं वाग्रूपं 'रथंतरं' साम 'अत्यमन्यत'। वाग्रूपत्वादेव स्त्रीरूपत्वम्। मनोरूपत्वात् स्वस्य पुरुषरूपत्वम्। तस्मादतिशयितं तत्स्वरूपम्; तत्र बृहत् साम स्वस्य पुरुषत्वाभिमानेन रथंतरसाम्नि स्त्रीत्वभावनया सङ्गमकरोदित्यर्थः। ततः स्त्रीस्थानीयं 'तद्रथंतरं' साम स्वोदरमध्ये गर्भमधत्त; धृत्वा च वैरूपाख्यं पुत्रस्थानीयं सामान्तरमसृजत॥

iv. २८ [xix. ६] इस [वैरूपादि साम] से पहले बृहत् और रथन्तर थे। वे दोनों साम मन और वाक् रूप हुए। उनमें वाक् ही रथन्तर साम है; और मन बृहत् साम है। इनमें [मन रूप होने से पुरुष] बृहत् साम ने सृष्टि करने के लिए उद्युक्त होते हुए [वाक् रूप होने से स्त्री] रथन्तर को न्यून समझा [अर्थात् स्त्रीत्वभावना से बृहत् ने रथन्तर के साथ संगम किया]। तब उस रथन्तर ने गर्भ धारण किया और वैरूप साम को पैदा किया।

वैरूपस्योत्पत्तिमभिधाय वैराजसाम्न उत्पत्तिं दर्शयति—

**ते द्वे भूत्वा रथंतरं च वैरूपं च बृहदत्यमन्येताम्, तद्बृहद्गर्भमधत्त, तद्वैराजमसृजत॥ इति।**

मातृस्थानीयं रथंतरं, पुत्रस्थानीयं वैरूपं चेति, 'ते' सामनी 'द्वे भूत्वा' यद्बृहत्सामैकाकित्वेन वर्तमानमस्ति, तदत्यमन्येतां, तस्माद् बृहतोऽप्येकाकिनोऽतिशयेन मन्येतां न्यूनत्वेन बृहत्साम्नि स्त्रीत्वबुद्धिं कृत्वा संयोगमकुरुताम्। तत्र बृहत्साम गर्भं धृत्वा वैराजाख्यं सामान्तरमसृजत॥

वे रथन्तर और वैरूप दो होकर बृहत् को न्यून समझने लगे। उस बृहत् साम [में स्त्रीत्वबुद्धि करके उसने संयोग किया और उसने] गर्भ धारण किया और उसने वैराज को पैदा किया।

शाक्वरसाम्न उत्पत्तिं दर्शयति—

**ते द्वे भूत्वा बृहच्च वैराजं च, रथंतरं च वैरूपं चात्यमन्येतां तद्रथंतरं गर्भमधत्त, तच्छाक्वरमसृजत॥ इति।**

वैराजसाम्नः सृष्टेरूर्ध्वं तद्युक्तस्य बृहत्साम्नो न्यूनत्वेऽपगते सति 'ते' सामनी 'द्वे भूत्वा' मिलित्वा वैरूपसहितस्य रथंतरस्य वाग्रूपत्वेन स्त्रीत्वमभिप्रेत्य स्त्रीत्वम् 'अत्यमन्येतां' स्वाधिकारं मत्वा संयोगमकुरुताम्। ततो रथंतरं साम गर्भं धृत्वा शाक्वराख्यं सामान्तरमसृजत॥

वे बृहत् और वैराज दो होकर [स्त्रीत्व के कारण] रथन्तर और वैरूप को न्यून समझने लगे [और अपना अधिकार समझकर संयोग किया] तब रथन्तर ने गर्भ धारण किया और उसने शाक्कर साम को उत्पन्न किया।

रैवतं साम्न उत्पत्तिं दर्शयति—

**तानि त्रीणि भूत्वा रथंतरं च वैरूपं च शाक्वरं च, बृहच्च वैराजं चात्यमन्यन्त तद्, बृहद्गर्भमधत्त, तद्रैवतमसृजत॥ इति।**

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मातृस्थानीयं 'रथन्तरं' पुत्रस्थानीये 'वैरूपं' 'शाक्करं' चेति; एवं त्रीणि भूत्वा वैराजेन युक्तस्य बृहत्साम्नो न्यूनत्वबुद्ध्या 'तदत्यमन्यन्त'। तस्मादतिशयं पुरुषस्थानीयं स्वपक्षे मत्वा संयोगमकुर्वत। ततो बृहद्गर्भमधत्त। गर्भं धृत्वा रैवताख्यं सामन्तरमसृजत॥

वे रथन्तर, वैरूप और शाक्कर तीन होकर बृहत् और वैराज को न्यून समझने लगे [और अपने पक्ष को पुरुष मानकर संयोग किया] तब बृहद् ने गर्भ धारण किया और उसने रैवत साम को उत्पन्न किया।

उक्तानां षण्णां साम्नां पृष्ठस्तोत्रसाधनत्वं दर्शयति—

**तानि त्रीण्यन्यानि त्रीण्यन्यानि षट्पृष्ठान्यासन्॥** इति।

'तानि' पूर्वोक्तानि रथन्तरवैरूपशाक्वराणि 'त्रीणि' सामानि, 'अन्यानि' इतरेभ्यो विलक्षणानि, पृष्ठ्याख्ये षडहे प्रथमतृतीयपञ्चमेष्वयुग्मेष्वहःसु पृष्ठस्तोत्रनिष्पादकान्यासन्। तथा बृहद्-वैराज-रैवतरूपाणि 'त्रीणि' सामानि, 'अन्यानि' रथन्तरादिभ्यो विलक्षणानि भूत्वा, द्वितीयचतुर्थषष्ठेषु युग्मरूपेष्वहःसु पृष्ठस्तोत्रनिष्पादकान्यासन्[1]॥

वे तीन [रथन्तर, वैरूप और शाक्कर] साम दूसरे से विलक्षण होकर [पृष्ठ्य षडह के प्रथम, तृतीय और पञ्चम अयुग्म दिनों में तथा [बृहद् वैराज और रैवत रूप] अन्य तीन साम दूसरे [रथन्तरादि सामों] से विलक्षण होकर [द्वितीय, चतुर्थ और षष्ठ युग्म दिनों में पृष्ठस्तोत्र निष्पादक होने से] छः पृष्ठ हुए।

अथ षड्विधपृष्ठस्तोत्रसामाधारत्वेन षड्विधानि च्छन्दांसि दर्शयति—

**तानि ह तर्हि त्रीणि च्छन्दांसि, षट्पृष्ठानि नोदाप्नुवन् सा गायत्री गर्भमधत्त, साऽनुष्टुभमसृजत; त्रिष्टुब् गर्भमधत्त, सा पङ्क्तिमसृजत; जगती गर्भमधत्त, साऽतिच्छन्दसमसृजत, तानि त्रीण्यन्यानि त्रीण्यन्यानि षट् छन्दांस्यासन् षट्पृष्ठानि तानि तथाऽकल्पन्त; कल्पते यज्ञोऽपि॥** इति।

'तर्हि' तस्मिन्, षट्सामसम्पत्तिकाले गायत्री-त्रिष्टुब्-जगतीरूपाणि 'च्छन्दांसि' त्रिणि भूत्वा, 'तानि' पूर्वोक्तानि षट्पृष्ठसामानि 'नोदाप्नुवन्' पृष्ठानां निष्पत्तिं कर्तुं नाशक्नुवन्। ततो गायत्र्यादीनि त्रीण्यपि गर्भं धृत्वा पुनरन्यान्यनुष्टुप्पङ्क्त्यतिच्छन्दोरूपाणि च्छन्दांस्यसृजन्त। ततः 'तानि' सिद्धानि गायत्र्यादीनि 'त्रीणि', 'अन्यानि' पूर्वसिद्धत्वेनैव पृथग्भावात् तान्यासन्। तथैवानुष्टुबादीनि 'त्रीणि', 'अन्यानि' च्छदांसि तदानीमुत्पन्नानीति मिलित्वा षट्छन्दांस्यासन्। ततः षट्संख्याकानि पृष्ठसामानि धारयितुं 'तानि' षट्छन्दांसि 'तथाऽकल्पन्त' तेनैव क्रमेण समर्थान्यभवन्। प्रथमद्वितीयतृतीयेष्वहःसु गायत्रीत्रिष्टुब्जगत्यः पृष्ठस्तोत्रनिष्पादकाश्चतुर्थपञ्चमषष्ठेष्वहःस्वनुष्टुप्पङ्क्त्यतिच्छन्दांसि

---

१. 'रथन्तरपृष्ठान्ययुजानि। बृहत्पृष्ठानीतराणि। तृतीयादिषु पृष्ठ्यस्यान्वहं द्वितीयानि वैरूपवैराजशाक्वररैवतानि'—इति आश्व० श्रौ० ७.५.२–४।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्तोत्रनिष्पादकानि। एवं सति यज्ञोऽपि पृष्ठषडहाख्यः[1] कल्पते स्वप्रयोजनाय समर्थो भवति ॥

तब [छः सामों के होने पर गायत्री, त्रिष्टुप् और जगती रूप] तीन छन्द छः पृष्ठों के निष्पादक न हो सके। उस गायत्री ने गर्भ धारण किया और उसने अनुष्टुभ् को पैदा किया। त्रिष्टुप् ने गर्भ धारण किया और उसने पंक्ति को पैदा किया। जगती ने गर्भ धारण किया और अतिछन्दों को उत्पन्न किया। इस प्रकार वे तीन अन्य और तीन अन्य मिलकर छः छन्द हुए। तब वे छः पृष्ठों को धारण करने में उन्हीं क्रम से समर्थ हुए। इस प्रकार [पृष्ठ्य षडह नामक] यज्ञ भी [स्वप्रयोजन में] समर्थ होता है।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

**तस्यै जनतायै कल्पते, यत्रैवमेतां छन्दसां च पृष्ठानां च क्लृप्तिं विद्वान् दीक्षते, दीक्षते ॥ २८ ॥ इति।**

'यत्र' यस्यां जनतायाम्, 'एवम्' उक्तप्रकारेण गायत्र्यादि'च्छन्दसां' रथन्तरादि 'पृष्ठानां' चैतां 'क्लृप्तिं' कल्पनाप्रकारं जानीते, स दीक्षां प्राप्नोति। स पुमान् 'तस्यै जनतायै' तस्यां यज्ञसभायां 'कल्पते' समर्थो भवति। अभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थ-पञ्चिकायां चतुर्थाध्याये (एकोनविंशाध्याये) षष्ठः खण्डः ॥ ६ ॥ (२८) [१४९]

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ महेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'-नाम भाष्ये ऐतरेयब्राह्मण-भाष्ये चतुर्थपञ्चिकायाः चतुर्थोऽध्यायः (एकोनविंशोऽध्यायः) समाप्तः ॥ ४ ॥

जिस यज्ञ सभा में इस प्रकार [गायत्री आदि] छन्दों और [रथन्तर आदि] पृष्ठों के इस कल्पना प्रकार [क्रम] को जानते हुए जो अपने को दीक्षित करता है वह उस यज्ञ सभा में समर्थ होता है।

॥ इस प्रकार ऐतरेय ब्राह्मण के चतुर्थ पञ्चिका के चतुर्थ (उन्नीसवें) अध्याय की हिन्दी पूर्ण हुई ॥ ४ ॥

—:o:—

---

१. जै० सू० २.१.५.१३-२९ सू०।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ पञ्चमोऽध्यायः

## प्रथमः खण्डः

—: * :—

# [अथ विंशोऽध्यायः

## प्रथमः खण्डः]

ज्योतिष्मत्यो भारतो द्वादशाहो दीक्षाकालो याजनं पाशुकं च ॥
व्यूढच्छन्दोद्वादशाहप्रशंसा पृष्ठादीनां छन्दसां तत्र क्लृप्तिः ॥ १ ॥

इदानीं द्वादशाहक्रतौ प्रायणीयोदयनीयावतिरात्रौ, यच्च दशममहः, तत् त्रितयं वर्जयित्वा मध्यगतो यो नवरात्रः, तं विधातुमुपक्रमते—

**अग्निर्वै देवता प्रथममहर्वहति त्रिवृत्स्तोमो रथंतरं साम गायत्री छन्दः ॥इति।**

देवतानामग्र्यो योऽयमग्निरस्ति, सोऽयमत्र देवता भूत्वा नवरात्रस्य प्रथममहः 'वहति' निष्पादयति । तथा स्तोमानां मध्ये त्रिवृत्स्तोमः प्रथमस्याह्नो निर्वाहकः; साम्नां मध्ये रथन्तराख्यं साम प्रथमस्याह्नः पृष्ठसामनिर्वाहकम्, छन्दसां मध्ये गायत्रीछन्दः प्रथमस्याह्नो निर्वाहकम् ॥

**[पृष्ठ्यषडह]—**

**iv. २९ [xx. १] [नवरात्र के] प्रथम दिन का निर्वाहक अग्नि देवता है, त्रिवृत्-स्तोम है, रथन्तर साम है और गायत्री छन्द है ।**

उक्तार्थवेदनं प्रशंसति—

**यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद ॥ 'ति।**

'यः' पुमान् 'एवम्' अग्नित्रिवृद्रथंतरगायत्रीछन्दसां प्रथमेऽहनि देवतात्वं स्तोमत्वं पृष्ठसामत्वं छन्दस्त्वं च क्रमेण वेद, स पुमान् 'एनेन' वेदनेन 'यथादेवतं' तस्याह्न उचितां देवतामनतिक्रम्य, तथा स्तोमसामच्छन्दांस्यप्युचितान्यनतिक्रम्य समृद्धो भवति ॥

**जो इस प्रकार जानता है वह देवता, स्तोम, साम और छन्द का अतिक्रमण कर समृद्ध होता है ।**

प्रथमेऽह्नि विनियोज्यान् मन्त्रविशेषानादौ तावल्लक्षणमुखेन संक्षिप्य दर्शयति—

**यद्वा एति च प्रेति च, तत्प्रथमस्याह्नो रूपम्; यद्युक्तवद् यद्रथवद् यदाशुमद्, यत्पिबवद् यत्प्रथमे पदे देवता निरुच्यते, यदयं लोकोऽभ्युदितो, तद्राथन्तरं, यद्गायत्रं, यत्करिष्यदेतानि वै प्रथमस्याह्नो रूपाणि ॥ इति ।**



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'यद्वै' यस्मिन्नेव मन्त्रे 'एति च' आकारस्वरनिर्देशार्थमिति चशब्द उपरि प्रयुक्तः। उपसर्गेषु मध्ये योऽयमाङ् अस्ति, सोऽयमेतिपरो निर्दिश्यते। तथा प्रेत्युपसर्गनिर्देशः। आ प्रेत्यनयोरुपसर्गयोरन्यतर उपसर्गो यस्मिन् मन्त्रेऽस्ति, 'तत्' मन्त्रस्वरूपं प्रथमस्याह्नो 'रूपं' लक्षणमित्यर्थः। तथा 'यत्' मन्त्रस्वरूपं 'युक्तवत्' युजिधातूपेतं; 'रथवत्' रथशब्दोपेतम्, 'आशुमत्' आशुशब्दोपेतं, 'पिबवत्' पिबतिधातूपेतम्। तथा यस्य मन्त्रस्य प्रथमे पादे देवता 'निरुच्यते' निर्दिश्यते, तथा 'अयं लोकः' भूलोकः 'अभ्युदितः' कथितो भवति। तथा 'यद्' 'राथंतरं' रथंतरसामसंबन्धि, 'गायत्रं' गायत्रीछन्दसः संबन्धि, गायत्रं साम वा। 'करिष्यत्' करोतेर्धातोर्भविष्यत्प्रत्ययान्तम्, ईदृशं 'यद्' यस्मिन्। एतानि वै सर्वाण्यपि 'प्रथमस्याह्नो रूपाणि' निरूपकाणि, लक्षणानीत्यर्थः ॥

जिस मन्त्र में 'आङ्' और 'प्र' उपसर्ग हों वह मन्त्र प्रथम दिन का रूप [=निरूपक] है। जो मन्त्र 'युक्त', 'रथ' तथा 'आशु' शब्द और पानार्थक 'पा' धातु से युक्त हो और जिस मन्त्र के प्रथम पाद में देवता निर्दिष्ट हो, यह [भू] लोक उक्त हो और जो मन्त्र रथन्तर साम सम्बन्धी एवं गायत्री छन्द सम्बन्धी हो और कृ धातु का भविष्य काल का रूप जिसमें हो—ये प्रथम दिन के निरूपक [=लक्षक] हैं।

एवं लक्षणमुखेन मन्त्रविशेषान् विधाय प्रतीकोदाहरणेन विस्पष्टं विधत्ते—

**'उप प्रयन्तो अध्वरमिति' प्रथमस्याह्न आज्यं भवति ॥ इति।**

प्रकृतौ 'प्र वो देवायाग्नये'—इत्यादिशस्त्रम्, तद् बाधित्वा नवरात्रस्य प्रथमेऽहनि 'उप प्रयन्तः' इति सूक्तेन[1] आज्यशस्त्रं शंसनीयम् ॥

'उप प्रयन्तः' आदि सूक्त पहले दिन का आज्यशस्त्र है।

तस्मिन् सूक्ते पूर्वोक्तलक्षणेषु एकं लक्षणं योजयित्वा दर्शयति—

**प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम् ॥ इति।**

प्रशब्दरूपोऽयमुपसर्गः, सोऽयं सूक्तगते 'प्रयन्त'-इति पदे दृश्यते। अतः प्रथमेऽहनि विनियोक्तुं योग्यत्वात् प्रथमस्याह्नोऽनुकूलम् ॥

[वस्तुतः इसमें पूर्वोक्त] 'प्र' होने से प्रथम दिन [विनियोग के योग्य होने से] यह प्रथम दिन के अनुकूल है।

मन्त्रान्तरे लक्षणान्तरं दर्शयति—

**'वायवा याहि दर्शतेति' प्रउगमेति प्रथमेऽहनि प्रथमस्याह्नो रूपम् ॥ इति।**

यद्यपि 'वायवा याहि' इत्यादिकस्य[2] 'प्र' उपसर्गस्य प्राकृतत्वाच्चोदकेनैव तत्प्राप्तिः, तथाऽपि लक्षणं दर्शयितुमयमुपन्यासः। एत्याकाररूपं पदमत्रास्ति; आयाहीति श्रुतत्वात्। अतः प्रथमेऽहनि विनियोक्तुं योग्यत्वात् प्रथमस्याह्नो रूपम् ॥

---

१. ऋ० १.७४।     २. ऋ० १.२।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'वायवा याहि' आदि प्रउग शस्त्र है। इसमें 'आ' होने से प्रथम दिन [विनियुक्त होने के कारण] यह प्रथम दिन का निरूपक है।

अथ तृचद्वये लक्षणद्वयं दर्शयति—

**'आ त्वा रथं यथोतये', 'इदं वसो सुतमन्धः' इति मरुत्वतीयस्य प्रतिपदनुचरौ, रथवच्च पिबवच्च प्रथमेऽहनि प्रथमस्याह्नो रूपम् ॥ इति ।**

'आ त्वा रथम्'[1]—इति तृचो मरुत्वतीय शस्त्रस्य प्रतिपत्; तच्च रथशब्दोपेतम्, 'इदंवसो सुतम्'[2]—इति तस्य शस्त्रस्यानुचरः; तच्च पिबवत् पिबासुपूर्णमिति द्वितीयपादे श्रुतत्वात् प्रथमेऽहनीत्यादिकं पूर्ववत् ॥

'आ त्वा रथम्' और 'इदं वसो' आदि मन्त्र मरुत्वतीय शस्त्र के प्रतिपद् और अनुचर हैं। ये 'रथ' शब्द से युक्त और पानार्थक 'पा' धातु से युक्त होने से पहले दिन [विनियुक्त होने के कारण] प्रथम दिन के लक्षक हैं।

मन्त्रान्तरं लक्षणान्तरं च दर्शयति—

**इन्द्र नेदीय एदिहीतीन्द्रनिहवः प्रगाथः; प्रथमे पदे देवता निरुच्यते प्रथमेऽहनि प्रथमस्याह्नो रूपम् ॥ इति ।**

'इन्द्र नेदीय' इत्ययमृग्द्वयरूपत्वात् प्रगाथः[3]। इन्द्रो नितरामाहूयते यस्मिन् प्रगाथे सोऽयम् 'इन्द्रनिहवः'। एदिहीत्येवमाह्वानमत्र श्रूयते। अस्य प्रगाथस्य प्रथमे पाद इन्द्रेति च देवता निर्दिश्यते। तदेतत् प्रथमस्याह्नो 'रूपं' लक्षणम् ॥

'इन्द्र नेदीयः' आदि इन्द्रनिहव [=जिसमें निरन्तर इन्द्र का आह्वान हो] प्रगाथ है। इस प्रगाथ के प्रथम पाद में पहले दिन के देवता का निर्देश होने से यह प्रथम दिन का लक्षक है।

मन्त्रान्तरे लक्षणान्तरं दर्शयति—

**'प्रैतु ब्रह्मणस्पतिः' इति ब्राह्मणस्पत्यः; प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम् ॥ इति ।**

'ब्राह्मणस्पत्यः[4]', प्रगाथ इत्यनुवर्तते। अत्र 'प्र' शब्दो लक्षणम् ॥

'प्रैतु ब्रह्मणस्पतिः' आदि ब्रह्मणस्पति देवताक प्रगाथ है। इसमें प्रथम दिन का लक्षक 'प्र' होने से यह प्रथम दिन का रूप है।

अथ मन्त्रत्रये लक्षणं दर्शयति—

**'अग्निर्नेता, त्वं सोम क्रतुभिः, पिन्वन्त्यपः' इति धाय्याः; प्रथमेषु पदेषु देवता निरुच्यन्ते प्रथमेऽहनि प्रथमस्याह्नो रूपम् ॥ इति ।**

---

१. ऋ० ८.६८.१–३। २. ऋ० ८.२.१–३। ३. ऋ० ८.५३.५, ६। ४. ऋ० १.४०.३,४।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शस्त्रमध्ये प्रक्षेपणीया ऋचो धाय्याः। 'अग्निर्नेता'[1] इति प्रथमा धाय्या, 'त्वं सोम'-[2] इति द्वितीया, 'पिन्वन्त्यपः'[3] इति तृतीया। एतासां तिसृणामृचां प्रथमेषु पादेष्वग्निसोम-मरुद्देवता निर्दिश्यन्ते। 'पिन्वन्त्यपो मरुतः सुदानवः' इति श्रवणात्।[4] सोऽयं देवता-निर्देशो लक्षणम्॥

'अग्निर्नेता', 'त्वं सोम क्रतुभिः' और 'पिन्वन्त्यपः' आदि ऋचाएँ [शस्त्र के मध्य प्रक्षेपणीय] धाय्या हैं। इन तीनों के प्रथम पाद में प्रथम दिन के लक्षक देवता का निर्देश होने से यह प्रथम दिन का रूप है।

मन्त्रान्तरे 'प्र'-शब्दरूपं लक्षणं दर्शयति —

**'प्र व इन्द्राय बृहत'[5] इति मरुत्वतीयः प्रगाथः; प्रेति प्रथमेऽहनि प्रथम-स्याह्नो रूपम्॥ इति।**

'प्र व इन्द्राय बृहते' यह मरुत्वतीय प्रगाथ है। इसमें प्रथम दिन का सूचक 'प्र' शब्द होने से यह प्रथम दिन का लक्षक है।

मन्त्रान्तर आकाररूपं लक्षणं दर्शयति—

**'आ यात्विन्द्रो वस उप न'[6] इति सूक्तमेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्॥ इति।**

'आ यात्विन्द्रः' आदि सूक्त में प्रथम दिन का सूचक 'आ' होने से यह प्रथम दिन का निरूपक है।

अथ निष्केवल्यशस्त्रगतस्य मन्त्रस्य रथंतरसम्बन्धरूपं लक्षणं दर्शयति—

**'अभि त्वा शूर नोनुमो, ऽभि त्वा पूर्वपीतये' इति रथंतरं पृष्ठं भवति, राथंतरेऽहनि प्रथमेऽहनि प्रथमस्याह्नो रूपम्॥ इति।**

'अभि त्वा शूर'[7]-इति रथंतरसाम्नो योनिभूतः। 'अभि त्वा पूर्वपीतये'[8]—इति तस्यानुचरः। अतः 'अभि त्वा शूर' इत्यत्र रथंतरसामसाध्यं पृष्ठं भवति। इदं प्रगाथद्वयं रथंतरसामसम्बन्धिन्यहनि योग्यम्। अतो रथंतरसम्बन्धस्य रूपस्य लक्षणस्य सद्भावात् प्रथमेऽहनि प्रयुज्यते॥

'अभि त्वा शूर' और 'अभि त्वा पूर्वपीतये' आदि में रथन्तरसामसाध्य पृष्ठ होता है। ये दोनों प्रगाथ प्रथम दिन के सूचक रथन्तर साम से सम्बन्धित होने से प्रथम दिन के लक्षक हैं।

---

१. ऋ० ३.२०.४। २. ऋ० १.९१२। ३. ऋ० १.६४.६।

४ प्रथमद्वितीययोस्तु ऋचोः मूले प्रतीकग्रहणमात्रत एव देवताश्रवणं स्फुटम्; तृतीय-स्या अपि प्रथमे एव पादे देवताश्रुतिरिति प्रकटयितुं दर्श्यते 'पिन्वन्त्यपः' इत्यादि।

५. ऋ० ८.८९.३.४। ६. ऋ० ४.२१।

७. ऋ० ७.३२.२२,२३। ८. ऋ० ८.३.७,८।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मन्त्रान्तरे त्वाकाररूपं लक्षणं दर्शयति—

**यद्वावान् पुरुतमं पुराषाळिति धाय्या, आ वृत्रहेन्द्रो नामान्यप्रा इत्येति प्रथमेऽहनि प्रथमस्याह्नो रूपम् ॥ इति ।**

'यद्वावान्'[1]—इति शस्त्रमध्ये प्रक्षेपणीया। तस्या द्वितीयपादादौ आ वृत्रहेत्याकारः श्रुतः ॥

'यद्वावान्' इत्यादि धाय्या है। इसके 'आ वृत्रहेन्द्रो' आदि द्वितीय पाद में प्रथम दिन का रूप 'आ' होने से यह प्रथम दिन का लक्षक है।

मन्त्रान्तरे पिबतिधातुरूपं लक्षणं दर्शयति—

**'पिबा सुतस्य रसिन' इति साभप्रगाथः पिबवान् प्रथमेऽहनि प्रथमस्याह्नो रूपम् ॥ इति ।**

'पिबा सुतस्य' इत्ययं कस्यचित्सामविशेषस्य आधारभूतः प्रगाथः[2] ॥

'पिबा सुतस्य' आदि ऋचा किसी साम विशेष का आधारभूत प्रगाथ है। यह प्रथम दिन के लक्षक पानार्थक 'पा' धातु से युक्त है अतः यह प्रथम दिन का रूप है।

अथ निविद्धानीयस्य सूक्तस्यादौ किंचित्सूक्तान्तरं विधत्ते—

**'त्यमू षु वाजिनं देवजूतम्'[3] इति तार्क्ष्यं पुरस्तात् सूक्तस्य शंसति; स्वस्त्ययनं वै तार्क्ष्यः स्वस्तितायै ॥ इति ।**

तार्क्ष्यो देवता अस्य 'तार्क्ष्यं' 'स्वस्त्ययनं' क्षेमप्राप्तिरूपम्। अतो निविद्धानीयसूक्तस्य पुरस्तात् तार्क्ष्यसूक्तशंसनं 'स्वस्तितायै' यजमानस्य क्षेमाय भवति ॥

'त्यमू षु' आदि तार्क्ष्य देवताक सूक्त का [निविद्धानीय सूक्त के] आदि में शंसन करता है। यह तार्क्ष्य देवताक सूक्त स्वस्ति वाचन है अतः यह यजमान के कल्याण के लिए होता है।

वेदनं प्रशंसति—

**स्वस्त्ययनमेव तत्कुरुते स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद ॥ २९ ॥ इति ।**

---

१. ऋ० १०.७४.६ ।

२. ऋ० ८.३.१,२ । छ० आ० ३.१.५.७ ऋचि गे० गा० ६.२.१२ पृष्ठं (योनिसाम); उ० आ० ६.२.५.१,२ ऋचोः प्रगाथतृचे ऊ० गा० १६.२.१२ पृष्ठं (स्तोत्रम्)। अत्रान्यान्यपि सामानि सन्ति, ततश्च 'केषाञ्चित् साम्नामाधारभूतः प्रगाथः'—इति वक्तव्यं स्यात्। ३. ऋ० १०.१७८ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदिताऽनेन वेदनेन 'स्वस्त्ययनमेव' क्षेमप्राप्तिमेव संपादयति। यथा द्वादशाहद्वारा संवत्सरसत्रस्य 'पारमश्नुते' समाप्तिं प्राप्नोति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां पञ्चमाध्याये (विंशाध्याये) प्रथमः खण्डः ॥ १ ॥ (२९) [१५०]

इस प्रकार जो जानता है वह उससे क्षेम प्राप्ति का ही संपादन करता है और कल्याणपूर्वक [द्वादशाह द्वारा] संवत्सर सत्र के पार पहुँच जाता है।

॥ इस प्रकार बीसवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

यस्य सूक्तस्य पुरस्तात् तार्क्ष्यशंसनं विहितं तस्मिन्निविद्धानसूक्ते आकाररूपं लक्षणं दर्शयति—

**'आ न इन्द्रो दूरादा न आसादिति'[1] सूक्तमेति प्रथमेऽहनि प्रथमस्याह्नो रूपम् ॥ इति ।**

iv. ३० [xx. २] 'आ न इन्द्रः' इत्यादि [निष्केवल्य शस्त्र के निविद्] सूक्त में प्रथम दिन का लक्षक 'आ' होने से यह प्रथम दिन का रूप है।

इदानीं निष्केवल्यमरुत्वतीययोः शस्त्रयोर्निविद्धाने सूक्ते स्तोतुमाह—

**संपातौ भवतो निष्केवल्यमरुत्वतीययोर्निविद्धाने; वामदेवो वा इमाँल्लोकानपश्यत्, तान् संपातैः समपतद्; यत्संपातैः समपतत् तत्संपातानां संपातत्वं, तद्यत्संपातौ प्रथमेऽहनि शंसति, स्वर्गस्य लोकस्य समष्ट्यै संपत्त्यै संगत्यै ॥ इति ।**

संपत्तिं प्राप्नुवन्त्याभ्यां यजमानाः सर्वांल्लोकानिति 'संपातौ'। निष्केवल्यमरुत्वतीयनिविद्धानयोः सूक्तयोर्वैकृतयोः संपात इति संज्ञा। 'आ यात्विन्द्रो वसः'[2] इति मरुत्वतीयशस्त्रस्य निविद्धानं सूक्तम्। 'आ न इन्द्रः'[3] इति निष्केवल्यस्य निविद्धानं सूक्तम्। एतयोः संपात इति संज्ञा प्रतिपाद्यते।[4] पुरा कदाचिद्वामदेवः 'इमान्' भूरादींल्लोकान् दृष्ट्वा तत्प्राप्त्युपायं विचार्य संपातसूक्तैस्तान् प्राप्तवान्। अतः 'संपतति' सम्यक्प्राप्नोति लोकानेतैरिति 'संपातत्वं' नाम संपन्नम्। तथा सत्यत्र प्रथमेऽहनि निष्केवल्यमरुत्वतीययोः संपातनामकसूक्ते यदि शंसेत् तदानीं तच्छंसनं स्वर्गलोकप्राप्ति-भोग्यवस्तुसंपत्ति-तद्भोगसम्बन्धार्थं सपद्यते ॥

---

१. ऋ० ४.२०। २. ऋ० ४.२१। ३. ऋ० ४.२०।
४. 'आ न इन्द्रो दूरादा न आसादिति सम्पातः'—इति ऐ० आर० ५.१.२.३।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

निष्केवल्य और मरुत्वतीय शस्त्र के निविद्धान [=वह सूक्त जिसमें निविदों का प्रक्षेप होता है] 'संपात' कहलाते हैं। ऋषि वामदेव ने इन लोकों को देखा और इन्हीं संपातों के द्वारा उन्हें प्राप्त किया। क्योंकि इनसे सम्यक् रूप से लोकों को प्राप्त किया है इसलिए इनका नाम 'संपात' पड़ा। इस प्रकार यदि वह दो संपात सूक्तों का प्रथम दिन शंसन करता है तो वह [शंसन] स्वर्गलोक की प्राप्ति के लिए, [भोग्य वस्तु की] संपत्ति के लिए और उसकी संगति के लिए होता है।

अथ द्वयोस्तृचयो रथन्तरसम्बन्धरूपं लक्षणं दर्शयति—

**तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ राथन्तरेऽहनि प्रथमेऽहनि प्रथमस्याह्नो रूपम् ॥ इति ।**

'तत्सवितुः'[1] —इति तृचो रथन्तरसाम्ना सह प्रयुज्यमानो वैश्वदेवशस्त्रस्य प्रतिपत्; 'अद्या न'[2] इति तृचस्तस्यानुचरः; अत उभयोरपि रथन्तरसम्बन्धोऽस्ति रथन्तरसम्बद्धेऽहनि योग्यताऽस्ति ॥

'तत्सवितुः' और 'अद्या नः' इत्यादि दोनों तृच वैश्वदेव शस्त्र के प्रतिपत् और अनुचर हैं। [दोनों ही रथन्तर साम से सम्बन्धित हैं] अतः रथन्तर साम से सम्बद्ध दिन प्रथम दिन का प्रतीक होने से यह प्रथम दिन का रूप है।

सूक्तान्तरे युजिधातुरूपं लक्षणं दर्शयति—

**'युञ्जते मन उत युञ्जते धिय' इति सावित्रं युक्तवत्प्रथमेऽहनि प्रथमस्याह्नो रूपम् ॥ इति ।**

प्रथमाया ऋचोऽवसाने 'देवस्य सवितुः परिष्टुतिः'—इति श्रुतत्वात् इदं सवितृदेवताकम् । इह युजिधातुस्तु विस्पष्टः ॥

'युञ्जते मनः' इत्यादि सवितृदेवताक सूक्त प्रथम दिन के प्रतीक 'युज्' धातु से युक्त होने से प्रथम दिन का लक्षक है।

सूक्तान्तरे प्रशब्दरूपं लक्षणं दर्शयति—

**'प्र द्यावा यज्ञैः पृथिवी ऋतावृधेति'[4] द्यावापृथिवीयं प्रथमेऽहनि प्रथमस्याह्नो रूपम् ॥ इति ।**

'प्र द्यावा' इत्यादि द्यावापृथिवी देवताक सूक्त प्रथम दिन के प्रतीक 'प्र' से युक्त होने से प्रथम दिन का रूप है।

अस्मिन् वैश्वदेवशस्त्रे सूक्तान्तरं विधत्ते—

**इहेह वो मनसा बन्धुता नर इत्यार्भवं, यद्वा एति च प्रेति च तत्प्रथमस्याह्नो रूपं, तद्यत्प्रेति सर्वमभविष्यत् प्रैष्यन्नेवास्माल्लोकाद् यजमाना इति; तद्यद्**

---

१. ऋ० ५.८२.१–३ । 'तत्सवितुः…प्रतिपत्'—इति आन० मु० संस्करणे नास्ति ।
२. ऋ० ५.८२.४–६ । ३. ऋ० ५.८१ । ४. ऋ० १.१५९ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**इहेह वो मनसा बन्धुता नर इत्याभवं प्रथमेऽहनि शंसत्ययं वै लोक इहेहास्मिन्नेवैनांस्तल्लोके रमयति ।। इति ।**

'इहेह वः' इत्येतत् सूक्तम्[1] ऋभुदेवताकम्; द्वितीयाया ऋचोऽन्ते 'तेन देवत्वमृभवः समानश'—इति श्रवणात् । आकार-प्रशब्दादिकं लक्षणं मन्त्रे नास्तीत्याशङ्क्य 'यद्वै' इत्यादिना तत्सद्भावे बाध उपन्यस्यते । यदेतदेति च प्रेति चेति, तदेतत्प्रथमस्याह्नो 'रूपं' लक्षणमिति पूर्वमुक्तं;[2] 'तत्' तथा सति यदि प्रेत्यनेन लक्षणेन युक्तं 'सर्वं' सूक्तजातम् अभविष्यत्, तदानीं यजमाना अस्माल्लोकात् 'प्रैष्यन्' प्रैष्यन्ति मरिष्यन्त्येवेति बाधोपन्यासः । 'तद्यद्' इत्यादिना समाधानमुपन्यस्ते । यस्मात् प्रशब्दयोगे बाधोऽस्ति, तस्मात् कारणाद् इहेहेति सूक्तं यदि प्रथमेऽहनि शंसेत्, तदानीमिहेहशब्देनास्य भूलोकस्य विवक्षितत्वाद् अस्मिन्नेव' भूलोके एव तत्सूक्तपाठेन 'एनान्' यजमानान् 'रमयति' चिरं क्रीडयति । ततः प्रशब्दप्रयुक्तो मरणबाधोऽपि परिहृतो भवति ।।

**'इहेह वः मनसा' इत्यादि ऋभु देवताक सूक्त है। जो 'आ' और 'प्र' हैं वही प्रथम दिन के प्रतीक हैं [यह पहले कहा गया है]। इस प्रकार यदि 'प्र' से सम्पूर्ण सूक्त ही युक्त होता तो यजमान इस लोक से चला ही जाता। इसलिए 'इहेह वः' इत्यादि ऋभुदेवताक सूक्त का यदि प्रथम दिन शंसन करता है तो इस भूलोक के वाचक 'इह' शब्द के कारण उस [सूक्त के पाठ] से इन यजमानों को वह इस लोक में ही रमण कराता है।**

सूक्तान्तरस्य प्रथमपादे देवताभिधानं लक्षणं दर्शयति—

**'देवान् हुवे बृहच्छ्रवसः स्वस्तये' इति वैश्वदेवं प्रथमे पदे देवता निरुच्यन्ते; प्रथमेऽहनि प्रथमस्याह्नो रूपम् ।। इति ।**

'देवान्'—इत्यादिके सूक्ते बहुवचनान्तस्य देवशब्दस्य श्रवणाद् देवताबाहुल्येनेदं सूक्तं[3] वैश्वदेवम् । प्रथमपादे देवशब्दस्तु विस्पष्टः ।।

**'देवान् हुवे' इत्यादि विश्वदेव देवताक सूक्त है क्योंकि इसके प्रथम पद में [बहुवचनान्त देव शब्द होने से] बहुत से देवता कहे गये हैं। यह प्रथम दिन का सूचक होने से प्रथम दिन का रूप है।**

तत्र स्वस्तिशब्दस्य तात्पर्यं दर्शयति—

**महान्त वा एतेऽध्वानमेष्यन्तो भवन्ति, ये संवत्सरं वा द्वादशाहं वाऽऽसते तद्यद्देवान् हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं प्रथमेऽहनि शंसति, स्वस्तितायै ।। इति ।**

'ये' यजमानाः संवत्सरसत्रं द्वादशाहं वाऽनुतिष्ठन्ति, दीर्घमध्वानं गन्तुमुद्युक्ता भवन्ति । प्रयोगबाहुल्येनैकाहवत् सहसा समाप्त्यभावात् । अतो देवानित्यादिसूक्ते 'स्वस्तये' इत्येतस्य पदस्य शंसनं 'स्वस्तितायै', क्षेमार्थं भवति ।।

---

१. ऋ० ३.६० । २. द्र० इतः पूर्वम्, पृ० ६८९ । ३. ऋ० १०.६६ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जो संवत्सर सत्र या द्वादशाह का अनुष्ठान करते हैं मानो ये दूरगामी यात्रा के लिए उद्युक्त होते हैं। इसलिए जो वह 'देवान् हुवे' आदि विश्वदेव देवताक सूक्त का प्रथम दिन शंसन करता है [उसमें 'स्वस्ति' पद का शंसन] कल्याण के लिए होता है।

वेदनं प्रशंसति—

**स्वस्त्ययनमेव तत्कुरुते स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद, येषां चैवं विद्वानेतद्धोता देवान् हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं प्रथमेऽहनि शंसति ॥ इति।**

उक्तार्थस्य वेदिता तेन 'स्वस्त्ययनमेव' द्वादशाहस्य क्षेमप्राप्तिमेव कुरुते,—क्षेमेणैव संवत्सरसत्रस्य समाप्तिं प्राप्नोति। किञ्च 'येषां' यजमानानामुक्तार्थवेदी होता शंसति तेऽपि यजमाना द्वादशाहं क्षेमेणैव प्राप्नुवन्ति, संवत्सरसत्रं च समापयन्ति ॥

जो इस प्रकार जानता है वह उससे क्षेम को ही प्राप्त करता है और संवत्सर सत्र के पार पहुँच जाता है; और इस प्रकार जानने वाला होता 'देवान् हुवे' आदि विश्वदेव देवताक सूक्त का प्रथम दिन शंसन करता है [वे यजमान भी द्वादशाह को क्षेमपूर्वक ही प्राप्त करते हैं और संवत्सर सत्र का समापन करते हैं]।

सूक्तान्तरस्य प्रथमे पादे देवताभिधानलक्षणं दर्शयति –

**'वैश्वानराय पृथुपाजसे विप' इत्याग्निमारुतस्य प्रतिपद; प्रथमे पदे देवता निरुच्यते, प्रथमेऽहनि प्रथमस्याह्नो रूपम् ॥ इति।**

आग्निमारुतशस्त्रस्य 'वैश्वानराय'[1]—इति सूक्तं प्रतिपत् कर्तव्यम्। स एव शब्दो विस्पष्टं देवतामभिधत्ते ॥

'वैश्वानराय' इत्यादि सूक्त आग्निमरुत शस्त्र की प्रतिपत् है। इसके प्रथम पद में देवता का अभिधान किया गया है। यह प्रथम दिन का सूचक होने से प्रथम दिन का रूप है।

सूक्तान्तरे प्रशब्दरूपं लिङ्गं दर्शयति –

**'प्रत्वक्षसः प्रतवसो विरप्शिन' इति मारुतम्; प्रति प्रथमेऽहनि प्रथमस्याह्नो रूपम् ॥ इति।**

'प्रत्वक्षसः'[2] इति सूक्ते द्वितीयस्या ऋचो द्वितीयपादे 'वय इव मरुतः' इति श्रवणात् इदं सूक्तं मरुद्देवताकं शंसेत्। अत्र 'प्र'शब्दो विस्पष्टः ॥

'प्रत्वक्षसः' आदि सूक्त मरुद्देवताक है। इसमें 'प्र' प्रथम दिन का सूचक है अतः यह प्रथम दिन का रूप है।

---

१. ऋ० ३.३।　　२. ऋ० १.८७।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वक्ष्यमाणस्य जातवेदस्य सूक्तस्य पुरस्तादेतामृचं विधत्ते—

**'जातवेदसे सुनवाम सोममिति' जातवेदस्यां पुरस्तात् सूक्तस्य शंसति; स्वस्त्ययनं वै जातवेदस्याः[1] स्वस्तितायै ॥ इति ।**

जातवेदा देवता यस्या ऋचः सेयं जातवेदस्या[2]। तद्देवताकत्वं प्रथमपादे देवताभिधानं लिङ्गं च विस्पष्टम् । अस्यामृचि 'अरातीयतो नि दहाति'—इति शत्रुदाहश्रवणात् 'नावेव सिन्धुम्' इति नौदृष्टान्तेन दुरितात्ययश्रवणाच्च 'स्वस्त्ययनं' क्षेमगमनमत्र विद्यते । तस्मादियं क्षेमप्राप्तये भवति ॥

**[वक्ष्यमाण] जातवेद देवताक सूक्त के पहले 'जातवेदसे' इत्यादि ऋचा का शंसन करता है। जातवेद देवताक मन्त्र कल्याणपूर्वक गमन के लिए होते हैं। अतः यह यजमान की क्षेमप्राप्ति के लिए होता है।**

वेदनं प्रशंसति—

**स्वस्त्ययनमेव तत्कुरुते, स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद ॥ इति ।**

**जो इस प्रकार जानता है वह [द्वादशाह को] क्षेमपूर्वक प्राप्त करता है और संवत्सर सत्र के पार पहुँचता है।**

सूक्तान्तरे प्रशब्दलिङ्गं दर्शयति—

**'प्रतव्यसीं नव्यसीं धीतिमग्नय' इति जातवेदस्यम्; प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम् ॥ इति ।**

यद्यप्यस्मिन् सूक्ते जातवेदःशब्दो न श्रुतः; तथाऽपि तदर्थवाची शब्दः श्रूयते । जातमुत्पन्नं विश्वं तद्वेत्तीति 'जातवेदाः', तत्पर्यायो विश्ववेदःशब्दः । स च 'यमेरिरे भृगवो विश्ववेदसम्' इति चतुर्थ्यामृचि श्रूयते । तस्मादिदं सूक्तं[3] 'जातवेदस्यं' निविद्धानीयं शंसेत् । अत्र 'प्रतव्यसीम्' इति प्रशब्दो विस्पष्टः ॥

**'प्रतव्यसीं' आदि जातवेद देवताक सूक्त है। इसमें प्रथम दिन का सूचक 'प्र' है अतः यह प्रथम दिन का रूप है।**

वैश्वानरायेत्यादिकं यदाग्निमारुतं शस्त्रमुक्तं, तदेतत्प्रशंसति—

**समानमाग्निमारुतं भवति, यच्चाग्निष्टोमे यद्वै यज्ञे समानं क्रियते, तत्प्रजा अनु समनन्ति; तस्मात् समानमाग्निमारुतं भवति ॥ ३० ॥ इति ।**

---

१. 'जातवेदसे सुनवाम सोममित्याग्निमारुते जातवेदस्यानाम्'—इति आश्व० श्रौ० ७.१.१४ । जातवेदस्य निवित्सम्बन्धिसूक्तसम्भवात् जातवेदस्यानामिति बहुवचनं जात्याभिप्रायम्'—इति च तत्र वृत्तिर्नारायणीया ।

२. ऋ० १.९९.१ ।   ३. ऋ० १.१४३ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्मिन् प्रथमेऽहनि यदाग्निमारुतं शस्त्रमुक्तं, यच्चाग्निष्टोमे पूर्वं निरूपितमाग्निमारुतं शस्त्रं तदुभयं 'समानम्' एकविधं न्यूनाधिकमन्त्राणामभावात्। यज्ञे यदेवाङ्गं समानं क्रियते, 'तत्' अङ्गम् 'अनु' पश्चात् 'प्रजाः' ऋत्विग्रूपाः पुत्रादिरूपाश्च 'समनन्ति' सम्यक् चेष्टन्ते, सुखेन जीवन्तीत्यर्थः। तस्मात् 'समानं' तुल्यमाग्निमारुतशस्त्रं कर्तव्यम्। अत्र प्रथमस्याह्नो लिङ्गेषु 'आशुमद्', 'गायत्रं', 'करिष्यत्', 'अयं लोकोऽभ्युदितः' इति लिङ्गचतुष्टयमत्र नोदाहृतम्, तद्यथासम्भवमन्वेष्टव्यम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां पञ्चमाऽध्याये (एकोनविंशाध्याये) द्वितीयः खण्डः ॥२॥ (३०) [१५१]

[इस प्रथम दिन में और जो अग्निष्टोम में निरूपित है वह] आग्निमारुत शस्त्र एक ही होता है। वस्तुतः यज्ञ में जो अङ्ग एकविध किया जाता है उस अङ्ग के अनुसार [ऋत्विज् और पुत्रादि रूप] प्रजा सम्यक् रूप से चेष्टा करती है अर्थात् सुख से रहती है। इसलिए आग्निमारुत शस्त्र समान होता है।

॥ इस प्रकार बीसवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

द्वादशाहगतनवरात्रे प्रथममहर्निरूप्य द्वितीयमहर्निरूपयति—

**इन्द्रो वै देवता द्वितीयमहर्वहति, पञ्चदशस्तोमो बृहत्साम त्रिष्टुप्छन्दः ॥इति।**

देवतानां मध्ये इन्द्रो देवता, स्तोमानां मध्ये पञ्चदशस्तोमः, साम्नां मध्ये बृहत्साम, च्छन्दसां मध्ये त्रिष्टुप्छन्दः, इत्येतच्चतुष्टयं द्वितीयस्याह्नो निर्वाहकम् ॥

iv. ३१ [xx. ३] [द्वादशाहगत नवरात्र के] द्वितीय दिन के इन्द्र निर्वाहक देवता हैं, पञ्चदशस्तोम, बृहत्साम और त्रिष्टुप् छन्द है।

वेदनं प्रशंसति —

**यथादेवतमेनेन यथास्तोमं यथासाम यथा छन्दसं राध्नोति य एवं वेद ॥इति।**

वेदिता स्वकीयवेदनेन यथोक्तदेवतास्तोमसामच्छदांस्यनतिक्रम्य तत्प्रसादेन समृद्धो भवति ॥

जो इस प्रकार जानता है वह इससे देवता, स्तोम, साम और छन्द का अनतिक्रमण कर समृद्ध होता है।

अथ द्वितीयस्याह्नो गमकानि मन्त्रगतानि लिङ्गानि निर्दिशति —

**यद्वै नेति न प्रेति, यत्स्थितं, तद्द्वितीयस्याह्नो रूपम्; यदूर्ध्ववद्यत्प्रतिवद्यदन्तर्वद्यद्वृषण्वद्यद्वृधन्वद्, यन्मध्यमे पदे देवता निरुच्यते; यदन्तरिक्षमभ्युदितं, यद्धार्हतं, यत्त्रैष्टुभं, यत्कुर्वदेतानि वै द्वितीयस्याह्नो रूपाणि ॥ इति।**

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रथमस्याह्न एति प्रेति लिङ्गद्वयं 'यद्वै' यदेवोक्तं, तदत्र द्वितीयस्याह्नो लिङ्गं न भवतीति नकारद्वयेनोभयं निषिध्यते। 'यत्स्थितं' तिष्ठतिधातुरूपवद् बहुषु स्थानेष्वप्रच्युतत्वेनावस्थितं च मन्त्रे दृश्यते, तद्द्वितीयस्याह्नो 'रूपं' लिङ्गम्। तथैवोर्ध्वशब्दोपेतं, प्रतिशब्दोपेतम्, अन्तःशब्दोपेतं, वृषन्शब्दोपेतं वृधन्शब्दोपेतं च यदाम्नातं, तत्सर्वं द्वितीयस्याह्नो रूपम्। तत्र साक्षाच्छब्दो न श्रूयते, तत्र तदर्थो द्रष्टव्यः। मध्यमे पदे देवताभिधानम्, अन्तरिक्षलोकाभिधानं, बृहत्सामसम्बन्धं, त्रिष्टुप्छन्दःसम्बद्धं, वर्तमानार्थप्रत्यययुक्तकरोतिधातुरूपमित्येतानि सर्वाणि द्वितीयस्याह्नो 'रूपाणि' निरूपकाणि लिङ्गानि द्रष्टव्यानि॥

जो [प्रथम दिन के सूचक] 'आ' और 'प्र' पहले कहे गये हैं वे [द्वितीय दिन के] सूचक नहीं हैं बल्कि जो 'स्था' धातु के रूप से युक्त है वह द्वितीय दिन का लक्षक है। जो 'ऊर्ध्व' शब्द से युक्त, जो 'प्रति' शब्द से युक्त, जो 'अन्तः' शब्द से युक्त, जो 'वृषन्' शब्द से युक्त और जो 'वृधन्' शब्द से युक्त आम्नात हैं; और जिसके मध्यम पद में देवता का अभिधान किया गया हो, जहाँ अन्तरिक्ष की ओर संकेत हो, जो बृहत् साम से एवं जो त्रिष्टुप् छन्द से सम्बद्ध हो और जो वर्तमानकालिक क्रिया से युक्त हो—ये सब द्वितीय दिन के निरूपक चिह्न हैं।

अस्मिन् द्वितीयेऽहन् आज्यशस्त्रं विधत्ते—

**'अग्निं दूतं वृणीमहे'[1] इति द्वितीयस्याह्न आज्यं भवति; कुर्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्॥ इति।**

अत्र कुर्वदिति लिङ्गोपन्यासः। यद्यप्यग्निं दूतमित्यादौ साक्षात् कुर्वच्छब्दो न श्रूयते, तथाऽपि करोत्यर्थस्य सर्वधातुगतसामान्यत्वात् वर्तमानार्थवाचिप्रत्ययान्तं धातुमात्रं कुर्वच्छब्देन विवक्षितम्। अत्रापि 'वृणीमहे'–इति वर्तमानार्थवाचिप्रत्ययान्तो धातुः श्रूयते। तस्माद् द्वितीयेऽहन्येतत्सूक्तं विनियोक्तुं योग्यम्। ततो द्वितीयस्याह्नो लिङ्गम्॥

'अग्निं दूतं वृणीमहे' इत्यादि सूक्त द्वितीय दिन का आज्यशस्त्र है। यह वर्तमान-कालिक क्रिया से युक्त है, जो द्वितीय दिन का सूचक होने से द्वितीय दिन का रूप है।

आज्यशस्त्रं विधाय प्रउगशस्त्रं विधत्ते—

**'वायो ये ते सहस्रिण'[2] इति प्रउगम्; 'सुतः सोम ऋतावृधेति' वृधन्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्॥ इति।**

'वायो ये ते' इत्यादिकं शस्त्रं कुर्यात्। एतस्मिन् सूक्ते चतुर्थ्या ऋचो द्वितीयः पादः 'सुतः सोम ऋतावृधेति', अस्य पादस्यान्ते वृधेति श्रवणात् इदं प्रउगं 'वृधन्वद्' वृधिधातुयुक्तम्। द्वितीयेऽहनि—इत्यादिकं पूर्ववत्॥

---

१. ऋ० १.१२। २. ऋ० २.४१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'वायो ये ते' इत्यादि सूक्त प्रउगशस्त्र है। इस सूक्त की चौथी ऋचा का दूसरा पाद 'सुतः सोम ऋतावृधा' वृधि धातु से युक्त है। यह द्वितीय दिन का सूचक है, अतः यह द्वितीय दिन का रूप है।

अथ मरुत्वतीयं शस्त्रं विधत्ते—

**'विश्वानरस्य वस्पतिम्', 'इन्द्र इत्सोमपा एकः' इति मरुत्वतीयस्य प्रतिपदनुचरौ; वृधन्वच्चान्तर्वच्च द्वितीयेऽहनि द्वितीयस्याह्नो रूपम् ॥ इति ।**

'विश्वानरस्य'—इत्ययं तृचः[1] शस्त्रस्य प्रतिपत्, तस्मिन् तृचे द्वितीयस्या ऋचः प्रथमपादे 'वृधन्वद्' वृधिधातुयुक्तं लिङ्गमस्ति। 'अभिष्टये सदावृधम्'— इति श्रवणात्। 'इन्द्रः' इत्ययं [2]तृचोऽनुरूपः। तत्रान्तः शब्दयुक्तं लिङ्गमस्ति। प्रथमाया ऋचस्तृतीयपादे'—'अन्तर्देवान्—इति श्रवणात् ॥

'विश्वानरस्य' और 'इन्द्र इत्' इत्यादि तृच मरुत्वीय शस्त्र की प्रतिपत् ऋचा और अनुचर ऋचा है। यह 'वृधि' धातु से युक्त और 'अन्तः' शब्द से युक्त है। यह द्वितीय दिन का सूचक है। अतः यह द्वितीय दिन का रूप है।

अथ प्रगाथद्वये लिङ्गद्वयं दर्शयति—

**इन्द्र नेदीय एदिहीत्यच्युतः प्रगाथ, उत्तिष्ठ ब्रह्मणस्पत इति ब्राह्मणस्पत्य ऊर्ध्ववान्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम् ॥ इति ।**

'इन्द्र नेदीयः' इत्यादिकः प्रगाथः[3] प्रथमेऽहन्यपि विहितः, उत्तरत्रापि विधास्यते। तस्मादत्र विधीयमानोऽच्युतो भवति, प्रच्युतेरभावात्। तदिदमच्युतत्वं स्थितशब्दार्थत्वात् स्थितवल्लिङ्गम्। 'उत्तिष्ठ' इत्ययं प्रगाथः[4] ऊर्ध्वलिङ्गवान्। ऊर्ध्ववाचिन उच्छब्दस्य श्रवणात् ॥

'इन्द्र नेदीयः' इत्यादि अच्युत [=जो प्रथम दिन में है और जिसका आगे भी विधान होगा। अतः स्था के अर्थ से युक्त] 'उत्तिष्ठ ब्रह्मणस्पते' आदि ब्रह्मणस्पति देवताक प्रगाथ ऊर्ध्ववाची 'उत्' शब्द से युक्त है। यह द्वितीय दिन का लक्षक है। अतः यह द्वितीय दिन का रूप है।

अथ तिसृषु धाय्यास्वच्युतत्वं लिङ्गं दर्शयति—

**'अग्निर्नेता, त्व सोम क्रतुभिः, पिन्वन्त्यपः' इति धाय्या अच्युताः ॥ इति ।**

'अग्निर्नेता'[5] इति प्रथमा धाय्या, 'त्वं सोम'[6] इति द्वितीया, 'पिन्वन्त्यपः'[7] इति तृतीया। प्रथमेऽहन्यप्येतासां विहितत्वात् अच्युतत्वम् ॥

---

१. ऋ० ८.६८.४–६। २. ऋ० ८.२.४–६।
३. ऋ० ८.५३.५, ६। ४. ऋ० १.४०.१, २।
५. ऋ० ३.२०.४। ६. ऋ० १.९१.२। ७. ऋ० १.६४.६।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'अग्निर्नेता', 'त्वं सोम क्रतुभिः' और 'पिन्वन्त्यपः' इत्यादि धाय्या [प्रथम दिन भी विहित होने से] अच्युत हैं।

प्रगाथान्तरे लिङ्गं दर्शयति—

**'बृहदिन्द्राय गायतेति' मरुत्वतीयः प्रगाथो, येन ज्योतिरजनयन्नृतावृध इति वृधन्वान् द्वितीयेऽहनि द्वितीयस्याह्नो रूपम् ॥** इति ।

'बृहदिन्द्राय' इत्येष मरुद्देवताकः,[1] 'मरुतो वृत्रहन्तमम्' इति द्वितीयपादे मरुतां श्रवणात् । तस्य 'येन ज्योतिः' इति तृतीयः पादः; तत्र 'ऋतावृधः' इति श्रवणात् अयं प्रगाथो वृधिधातुरूपलिङ्गवान् ॥

'बृहद् इन्द्राय' इत्यादि मरुत्वतीय प्रगाथ है। इसका 'येन ज्योतिः' आदि तृतीय पाद 'वृधि' धातु से युक्त है। यह द्वितीय दिन का सूचक होने से द्वितीय दिन का रूप है।

लिङ्गदर्शनद्वारा सूक्तं विधत्ते—

**'इन्द्र सोमं सोमपते पिबेममिति' सूक्तं; 'सजोषा रुद्रैस्तृपदा वृषस्वेति' वृषण्वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूपम् ॥** इति ।

'इन्द्र सोमम'[2] इत्यस्मिन् सूक्ते 'सजोषाः' इत्यादिको द्वितीयस्या ऋचश्चतुर्थः पादः; तत्र वृषस्वेति श्रवणाद् वृषण्वल्लिङ्गमस्ति ॥

'इन्द्र सोमम्' आदि सूक्त में 'सजोषा' आदि द्वितीय ऋचा का चौथा पाद है जो 'वृषन्' शब्द से युक्त है। यह द्वितीय दिन का सूचक है। अतः यह द्वितीय दिन का रूप है।

अथ निष्केवल्यशस्त्रस्य स्तोत्रियानुरूपयोः प्रगाथयोः बृहत्सामसंबन्धरूपं लिङ्गं दर्शयति—

**'त्वामिद्धि हवामहे' 'त्वं ह्येहि चेरवे' इति बृहत्पृष्ठं भवति; बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपम् ॥** इति ।

'त्वामिद्धि' इति[3] बृहत्साम्न आधारभूतः स्तोत्रियः प्रगाथः; 'त्वं ह्येहि' इत्यनुचरः प्रगाथः[4] । प्रथमे प्रगाथे बृहत्सामयुक्तं पृष्ठस्तोत्रं भवति । अत्र प्रगाथद्वयस्य बृहत्सामसंबन्धात् 'बार्हते' बृहत्सामसंबन्धिन्यहनि तदुभयं योग्यम् । द्वितीयस्य चाह्नो बृहत्सामसंबन्धित्वात् तस्मिन्नहनि विनियोक्तव्यम् । अयं च बृहत्सामसंबन्धो द्वितीयस्याह्नो लिङ्गम् ॥

---

१. ऋ० ८.८९.१, २। २. ऋ० ३.३२। ३. ऋ० ६.४६.१, २।
४. ऋ० ८.६१.७, ८।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'त्वामिद्धि' और 'त्वं ह्येहि' इत्यादि [स्तोत्रिय और अनुचर प्रगाथ] बृहत् साम युक्त पृष्ठस्तोत्र होता है, जो बृहत् साम सम्बन्धी दिन अर्थात् द्वितीय दिन का सूचक है। अतः यह द्वितीय दिन का रूप है।

अथैकस्यामृच्यच्युतत्वं लिङ्गं दर्शयति—

**'यद्वावानेति'[1] धाय्याऽच्युता ॥ इति।**

प्रथमेऽहन्यप्यस्या ऋचो विहितत्वात् अच्युतत्वम् ॥

'यद्वावान्' इत्यादि धाय्या [प्रथम दिन विहित होने से] अच्युत है।

अथ प्रगाथान्तरे बृहत्सामसम्बन्धिरूपं लिङ्गं दर्शयति—

**उभयं शृणवच्च न इति सामप्रगाथो, यच्चेदमद्य यदु च ह्य आसीदिति बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपम् ॥ इति।**

'उभयम्'—इत्यादिको बृहत्साम्ना सह प्रयुज्यमानः प्रगाथः[2]। उभयशब्दस्य कोऽर्थः सोऽभिधीयते—'अद्य' अस्मिन् दिने 'यत्' कार्यमासीत्, 'इदं च' कार्यमेकं, 'यदु च' यदपि 'ह्यः' पूर्वेद्युः कार्यमासीत्, तदपीत्येवं कार्यद्वयम् 'शृणवत्' श्रुतमासीत्। इति मन्त्रगतस्योभयं शृणवदित्यस्यार्थः। बार्हत इत्यादि पूर्ववत् ॥

'उभयम्' इत्यादि साम प्रगाथ है। 'उभय' शब्द का अर्थ है जो कार्य आज है और जो कार्य कल था—ये दोनों कार्य श्रुत थे, जो बृहत् साम सम्बन्धी दिन अर्थात् द्वितीय दिन का सूचक होने से द्वितीय दिन का रूप है।

सूक्तान्तरे पूर्ववत् अच्युतत्वलिङ्गं दर्शयति—

**'त्य मू षु वाजिनं देवजूतम्'[3]—इति तार्क्ष्योऽच्युतः ॥ ३१ ॥ इति।**

तार्क्ष्यदेवताकस्य सूक्तविशेषस्य प्रथमेऽहनि विहितत्वाद् उत्तरोत्तरोपयोक्ष्यमाणत्वाद् अच्युतत्वम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां पञ्चमाऽध्याये (विंशाध्याये) तृतीयः खण्डः ॥ ३ ॥ (३१) [१५२]

'त्य मू षु' इत्यादि तार्क्ष्य देवताक सूक्त [प्रथम दिन विहित होने से और आगे भी विनियुक्त होने के कारण] अच्युत है।

॥ इस प्रकार बीसवें अध्याय के तीसरे खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

सूक्तान्तरे वृषन्शब्दोपेतं लिङ्गं दर्शयति—

**'या त ऊतिरवमा या परमेति' सूक्तं 'जहि वृष्ण्यानि कृणुही पराच' इति वृषण्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम् ॥ इति।**

---

१. ऋ० १०.७४.६। २. ऋ० ८.६१.१,२। ३. ऋ० १०.१७८।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'या त ऊतिः' इत्यस्मिन् सूक्ते[1] 'जहि वृष्ण्यानि'–इति तृतीयस्या ऋचश्चतुर्थः पादः तत्र वृषशब्दादुक्तं लिङ्गं दृश्यते ॥

iv. ३२ [xx. ४] 'या त ऊतिः' इत्यादि सूक्त में 'जहि' इत्यादि तृतीय ऋचा का चौथा पाद है जो वृषन् शब्द से युक्त है। यह द्वितीय दिन का सूचक होने से द्वितीय दिन का रूप है।

अथ वैश्वदेवशस्त्रगतयोस्तृचयोर्बृहत्सामसम्बन्धरूपं लिङ्गं दर्शयति—

**'विश्वो देवस्य नेतुस्तत्सवितुर्वरेण्यमा विश्वदेवं सत्पतिमिति' वैश्वदेवस्य प्रतिपदनुचरौ, बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपम् ॥ इति ।**

'विश्वो देवस्य'–इत्येका ऋक्[2] 'तत्सवितुः'–इति द्वे ऋचौ[3]। सोऽयमेकस्तृचो बृहत्सामसम्बन्धभूतो वैश्वदेवशस्त्रस्य प्रतिपद्भवति। 'आ विश्वदेवम्'–इत्येष तृचः[4] तस्यानुचरः। अत उभयोर्बृहत्सामसम्बन्धः ॥

'विश्वो देवस्य', 'तत्सवितुर्वरेण्यम्' और 'आ विश्वदेवम्' आदि वैश्वदेवशस्त्र की प्रतिपद् और अनुचर ऋचाएँ हैं। जो बृहत् साम सम्बन्धी दिन अर्थात् द्वितीय दिन का सूचक है। अतः यह द्वितीय दिन का रूप है।

सूक्तान्तरे लिङ्गं दर्शयति—

**'उदु ष्य देवः सविता हिरण्ययेति' सावित्रमूर्ध्ववद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम् ॥ इति ।**

अस्मिन् तृचात्मके सावित्रसूक्ते[5] ऊर्ध्ववाचिन उच्छब्दस्य श्रवणात् ऊर्ध्ववल्लिङ्गमस्ति ॥

'उदु ष्य देवः' इत्यादि सवितृ देवताक सूक्त ऊर्ध्ववाची 'उत्' शब्द से युक्त है। यह द्वितीय दिन का सूचक होने से द्वितीय दिन का रूप है।

सूक्तान्तरे लिङ्गं दर्शयति—

**'ते हि द्यावापृथिवी विश्वशंभुव'–इति द्यावापृथिवीयम्; 'सुजन्मनी धिषणे अन्तरीयते' इत्यन्तवद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम् ॥ इति ।**

अस्मिन् द्यावापृथिवीये सूक्ते[6] 'सुजन्मनी' इत्येषः प्रथमाया ऋचस्तृतीयः पादः। तत्रान्तःपदस्य श्रूयमाणत्वादन्तर्वल्लिङ्गम् ॥

'ते हि द्यावापृथिवी' इत्यादि द्यावापृथिवी देवताक सूक्त की 'सुजन्मनी' आदि प्रथम ऋचा का तृतीय पाद 'अन्तः' पद से युक्त है, जो द्वितीय दिन का रूप है। अतः यह द्वितीय दिन का लक्षक है।

---

१. ऋ० ६.२५। २. ऋ० ५.५०.१। ३. ऋ० ३.६२.१०,११।
४. ऋ० ५.८२.७–९। ५. ऋ० ६.७१। ६. ऋ० १.१६०।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सूक्तान्तरे लिङ्गं दर्शयति—

**'तक्षन् रथं सुवृतं विद्मनापस' इत्यार्भवं, 'तक्षन् हरी इन्द्रवाहा वृषण्वसू' इति वृषण्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम् ॥ इति ।**

'तक्षन् रथम्'–इति सूक्तमृभुदेवताकम्[1] । प्रथमाया ऋचस्तृतीयपादे 'तक्षन् पितृभ्यामृभवः' इति श्रवणात् । तत्रैव 'तक्षन् हरी' इत्यादिको द्वितीयः पादः; तस्मिन् वृषण्वसू' इति वृषण्वल्लिङ्गम् दृश्यते ॥

'तक्षन् रथम्' इत्यादि ऋभुदेवताक सूक्त की प्रथम ऋचा का 'तक्षन् हरी इन्द्र' आदि द्वितीय पाद 'वृषन्' शब्द से युक्त है जो द्वितीय दिन का चिह्न है, अतः यह द्वितीय दिन का रूप है।

सूक्तान्तरे लिङ्गं दर्शयति—

**'यज्ञस्य वो रथ्यं विश्पतिं विशाम्'—इति वैश्वदेवं वृषाकेतुर्यजतो द्यामशायत इति वृषण्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम् ॥ इति ।**

'यज्ञस्य' इत्यादिसूक्ते[2] 'इन्द्रो मित्रो वरुणः' इत्येवं बहुदेवताश्रवणात् इदं वैश्वदेवम् । 'वृषाकेतुः'– त्येष प्रथमायाश्चतुर्थः पादः । तत्र वृषण्वल्लिङ्गमस्ति ॥

'यज्ञस्य वः' इत्यादि विश्वदेव देवताक सूक्त की प्रथम ऋचा का 'वृषा केतुः' आदि चतुर्थ पाद 'वृषन्' शब्द से युक्त होने से द्वितीय दिन का सूचक है। अतः यह द्वितीय दिन का रूप है।

तदेतत् सूक्तं प्रशंसति—

**तदु शार्यातमङ्गिरसो वै स्वर्गाय लोकाय सत्रमासत; ते ह स्म द्वितीयं द्वितीयमवाहरागत्य मुह्यन्ति; तान् वा एतच्छार्यातो मानवो द्वितीयेऽहनि सूक्तमशंसयत्; ततो वै ते प्र यज्ञमजानन् प्र स्वर्गं लोकम्; तद् यदेतत् सूक्तं द्वितीयेऽहनि शंसति, यज्ञस्य प्रज्ञात्यै, स्वर्गस्य लोकस्यानुख्यात्यै ॥ इति ।**

तदु 'यज्ञस्य वो रथ्यम्' इत्यादिकं सूक्तं[3] 'शार्यातम्' शार्यातस्य कस्यचिन्महर्षेः सम्बन्धादित्यवगन्तव्यम् । कथं सम्बन्धम् इति, तदुच्यते-पुरा कदाचिदङ्गिरसो वै महर्षयः स्वर्गार्थं सत्रमनुष्ठातुमुद्युक्ताः; ते महर्षयो यस्मिन् यस्मिन् सत्रे पृष्ठ्यषडहस्य द्वितीयमहरनुतिष्ठन्ति, तत्र सर्वत्र द्वितीये द्वितीयेऽहनि शस्त्रबाहुल्यात् कुत्र किं शस्त्रं पठितव्यमित्यज्ञात्वा मुह्यन्ति । तदानीं शार्यातनामकः कश्चिन्मानव ऋत्विग्भूत्वा 'तान्' अङ्गिरसो महर्षीन् 'यज्ञस्य वः' इत्यादिकं सूक्तं द्वितीयेऽहन्यशंसयत् । 'ततः' सूक्तप्रभावादेव 'ते' महर्षयो 'यज्ञं प्रजानन्' यज्ञं प्रकर्षेण ज्ञातवन्तः । तद्यज्ञसाध्यं स्वर्गं लोकं च प्रजानन् ।

---

१. ऋ० १.१११ । २. ऋ० १०.९२ । ३. ऋ० १०.९२ ।



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्माद् द्वितीयेऽह्न्येतस्य सूक्तस्य शंसनेन व्यामोहमन्तरेण यज्ञः प्रज्ञातो भवति, स्वर्गश्चावगम्यते ॥

वह ['यज्ञस्य वः' इत्यादि] सूक्त शार्यात महर्षि द्वारा दृष्ट है। प्राचीन काल में कभी अङ्गिरसों ने स्वर्ग लोक के लिए सत्र का अनुष्ठान करना प्रारम्भ किया। उन महर्षियों ने जिस-जिस सत्र में पृष्ठ्य षडह के द्वितीय दिन का अनुष्ठान किया उस-उस दिन शस्त्र बाहुल्य के कारण 'कहाँ किसे पढ़ा जाय ?' यह न जानकर गलती की। तब मनु के पुत्र शार्यात ने उन्हें द्वितीय दिन इस ['यज्ञस्य' आदि] सूक्त का शंसन कराया। तब उन महर्षियों ने यज्ञ को प्रकृष्ट रूप से जाना और [उस यज्ञसाध्य] स्वर्ग लोक को प्रकृष्ट रूप से जाना। इसलिए इस सूक्त का जो द्वितीय दिन शंसन करता है; उससे [व्यामोह के बिना] यज्ञ प्रकृष्ट रूप से ज्ञात होता है तथा वह स्वर्ग लोक की प्राप्ति के लिए होता है।

शस्त्रान्तरस्य प्रतिपदि लिङ्गं दर्शयति—

**पृक्षस्य वृष्णो अरुषस्य नू सह इत्याग्निमारुतस्य प्रतिपद्; वृषण्वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूपम् ॥ इति ।**

तत्र[1] 'वृष्णः' इति श्रवणाद् वृषण्वल्लिङ्गम् ॥

'पृक्षस्य' इत्यादि ऋचा आग्निमारुत शस्त्र की प्रतिपद् है। यह 'वृषन्' शब्द से युक्त है जो द्वितीय दिन का सूचक है। अतः यह द्वितीय दिन का रूप है।

मारुतसूक्ते लिङ्गं दर्शयति—

**'वृष्णे शर्धाय सुमखाय वेधस'[2] इति मारुतम्; वृषण्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम् ॥ इति ।**

अत्र प्रथमाया ऋचो द्वितीयपादे 'प्र भरा मरुद्भ्यः' इति श्रवणात् इदं सूक्तं मारुतम्। वृषण्वल्लिङ्गं स्पष्टम् ॥

'वृष्णे शर्धाय' इत्यादि मरुद्देवताक सूक्त है। यह 'वृषन्' शब्द से युक्त है जो द्वितीय दिन का सूचक है। अतः यह द्वितीय दिन का रूप है।

जातवेदस्यायामृच्यच्युतत्वलिङ्गं दर्शयति—

**'जातवेदसे सुनवाम सोममिति'[3] जातवेदस्याऽच्युता ॥ इति ।**

प्रथमेऽह्न्यस्या ऋचो विहितत्वाद् अच्युतत्वम् ॥

'जातवेदसे' इत्यादि ऋचा [प्रथम दिन विहित होने से] अच्युत है।

---

१. ऋ० ६.८.१-३। २. ऋ० १.६४। ३. ऋ० १.९९.१।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सूक्तान्तरे लिङ्गं दर्शयति—

**'यज्ञेन वर्धत जातवेदसमिति' जातवेदस्यं, वृधन्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपमह्नो रूपम् ॥ ३२ ॥** इति ।

जातवेदोदेवताकत्वं वृधन्वल्लिङ्गं चात्र[1] विस्पष्टम् । अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायां पञ्चमाध्याये (विंशाध्याये) चतुर्थः खण्डः ॥ ४ ॥ (३२) [१५३]

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थं महेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यदिशतो सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश-नामभाष्ये ऐतरेयब्राह्मणभाष्ये चतुर्थपञ्चिकायाः पञ्चमोऽध्यायः (विंशोऽध्यायः) समाप्तः ॥ ५ ॥

'यज्ञेन वर्धत' इत्यादि जातवेद देवताक सूक्त है। यह वृधि धातु से युक्त होने से द्वितीय दिन का सूचक है। अतः यह द्वितीय दिन का रूप है।

॥ इस प्रकार ऐतरेय ब्राह्मण की चतुर्थ पञ्चिका के पांचवें ( बीसवें ) अध्याय की हिन्दी पूर्ण हुई ॥ ५ ॥

**[ देवा वै षट् (१) । प्रजापतिर्वै सोमाय राज्ञेऽष्टौ (२) । ज्योतिर्गौरायुरष्टौ (३) । प्रजापतिः षट् (४) । अग्निर्वै चत्वारि (५) ॥ ४ ॥[2]**

**देवा वै, ब्राह्मणस्पत्यया, आहूय दूरोहणं द्वादश ॥ ४ ॥[3] ]**

**॥ इति 'ऐतरेयब्राह्मणे' चतुर्थपञ्चिका समाप्ता ॥ ४ ॥**

(पञ्चिकाङ्काः—४ । अध्यायाङ्काः—२० । खण्डाङ्काः—१५३)

[चतुर्थ पञ्चिका में 'देवा वै' इत्यादि छः खण्डों का प्रथम (सोलहवां) अध्याय है। 'प्रजापतिर्वै' इत्यादि आठ खण्डों का द्वितीय (सत्रहवां) अध्याय है। 'ज्योतिर्गौः' इत्यादि आठ खण्डों का तृतीय (अठारहवां) अध्याय है। 'प्रजापतिः' इत्यादि छः खण्डों का चतुर्थ

---

१. ऋ० २.२ ।

२. ५७३, ५९७, ६३०, ६६४, ६८९ पृ०; (६+८+८+६+४=३२)।

३. ५७३, ६१३, ६१६ पृ०; (१०+१०+१२=३२); द्र० इतः पूर्वम्, १९० पृ० टि० ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

(उन्नीसवाँ) अध्याय है, और 'अग्निर्वै' इत्यादि चार खण्डों का पञ्चम ( बीसवाँ ) अध्याय है।

इस प्रकार 'देवा वै' इत्यादि खण्डों का प्रथम दशक है। 'ब्राह्मणस्पत्यया' इत्यादि खण्डों का द्वितीय दशक है। 'दूरोहणम्' इत्यादि खण्डों का तृतीय द्वादशक है, अर्थात् चतुर्थ पञ्चिका में कुल बत्तीस खण्ड हैं।]

॥ इस प्रकार ऐतरेय ब्राह्मण की चतुर्थ पञ्चिका की हिन्दी पूर्ण हुई ॥ ४ ॥

यज्ञरूपं परं विष्णुं नमस्कृत्य श्रियं तथा।
भागीरथ्यास्तटे काश्यां लङ्काक्षेत्रे सुशोभने ॥ १ ॥
श्रीमद्रामकुबेरस्य मालवीयस्य सूनुना।
सुधाकरेण रचिता व्याख्या हिन्दी सुसंगता ॥ २ ॥
सायणार्यैर्ब्राह्मणार्थे व्याख्यातेऽन्यो वदेत् कथम्।
समुद्धते महावातैर्मुखवातः करोति किम् ॥ ३ ॥
तथापि गुरुपद्मोक्तेरेषा भाषा प्रवर्तिता।
यथाश्रुतं यथाज्ञातं यथामति यथास्मृतम् ॥ ४ ॥
ब्राह्मणारण्यकद्रष्ट्रे मातृशोकौघहारिणे।
महिदासैतरेयाय नमो भूयो नमो नमः ॥ ५ ॥

॥ इस प्रकार 'ऐतरेयब्राह्मण' के प्रथमभाग की महाकवि पं० रामकुबेर मालवीय ( भूतपूर्व साहित्यविभागाध्यक्ष, काशी हिन्दू विश्वविद्यालय एवं सम्पूर्णानन्द संस्कृत विश्वविद्यालय ) के आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी व्याख्या पूर्ण हुई ॥

—०—

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

